सत्यध्यान विद्यापीठात्
प्रकाश्यमानायां सिद्धान्तमञ्जुलमणिमालायां

## द्वादशो मणिः

## तत्त्वोद्योतव्याख्यानम्

# द्वैतद्युमणिः

( श्रीहुलगीश्रीपत्याचार्यविरचितः )

प्रकाशक –श्रीगलगली रामाचार्याः

मूल्यम्:—पञ्चदशरूप्याणि

[illegible] सत्यध्यानविद्यापीठेन [illegible] )

॥ श्रीः ॥

सत्यध्यान विद्यापीठस्य

प्रकाश्यमानायां सिद्धान्तमञ्जुलमणिमालायां



# द्वादशो मणिः

# तत्त्वोद्योतव्याख्यानम्

# द्वैतद्युमणिः

( श्रीहुलगीश्रीपत्याचार्यविरचितः )

प्रकाशकः-श्रीगलगली रामाचार्याः

मूल्यम्:-पञ्चदशरूप्याणि

॥ श्रीबादरायणश्शरणम् ॥

# किञ्चित्प्रास्ताविकम्



जगति त एव किल जन्मभाजः, ये महात्मानो विश्वविश्रुतादूष्यवैदुष्येण विशेषेण वा न केवलमात्मानं न कुलमात्रमपि तु निखिलमेव वसुधातलं पावयता तपोमहिम्ना वा कर्ण–रन्तिदेवादिविस्मारणधुर्येण महौदार्येण वा समावर्जितशारदसुधांशुभासुरयशोविसरेण दिगङ्गनामुखमुज्ज्वलयन्ति। तेष्वेव निरलतमेषु महानुभावेषु प्रधानतया परिगणनीया विचक्षणाग्रण्य **द्वैतद्युमणि**ग्रन्थमणिप्रणेतारः श्रीपतिपरमानुग्रहश्रीसमाश्रयाः प्रतिवादिगोमायु-शार्दुलाः सुगृहीतनामधेयाः **श्रीहुलगीश्रियःपत्याचार्या** नाम।

अमी किल महाभागाः श्रीमदुत्तरादिमठाधीशतैकलभ्ययथार्थसर्वतन्त्रस्वातन्त्र्याणां **श्रीसत्यनाथतीर्थश्रीचरणानां** पूर्वाश्रमीयदौहित्रवंशमुक्तामणिषु कण्ठपल्लीद्विजकुलकण्ठभूषणेषु प्रतिपक्षीमृगकण्ठीरवेषु अकुण्ठधिषणेषु वैकुण्ठपतिदर्शनसमुत्कण्ठेषु अपरोक्षज्ञानामृतसरोवरोपकण्ठचरेषु श्रीरघूत्तमाचार्येषु प्रधानान्तेवासिताभाग्यभाजां श्रीहूलगीवासुदेवाचार्याणां तनुजन्मानःअतनुप्रज्ञावैभवाः पितृपादसमधिगताशेषविद्यानवद्यवैशारद्यविशेषाः।

एतेषां **द्वैतद्युमणि**ग्रन्थप्रणयनकारणप्रणालिकेयमाकर्ण्यते विद्वज्जनपरम्परामुखतः।

प्रमाणपरिशुद्धतायामद्वितीये द्वैतमते मुनित्रयत्वेन सर्वमान्यतमेषु द्वितीयैरद्वितीय-महामहिममहसामहीमण्डलमहितैः परमतनिवारणरणे विजयश्रीवरणैरवारणीयापारविद्वत्तावित्त-वितैः **श्रीमज्जयतीर्थचरणैः**प्राणायि **वादावली**नाम प्रबन्धाग्रणीः। या किल प्रथमद्वितीयाक्षरव्यत्यासेन परिज्ञायते परमतीयैर्निजमनःशुष्कतरुवने दावावालीति। तस्या ईषद्विवरणरूपा श्री**विष्णुदासाचार्य**विरचिता **वादरत्नावली** प्रकाशते मुद्रणरूपेणाप्रकाशिताऽपि। तदुत्तरं तृतीयमुनितया प्रथितश्रीमद्व्यासराजप्रणीतः अमृतरुचिरुचिरो **न्यायाऽमृत**नाम निबन्धः यत्र तत्पूर्वकालीनेष्वद्वैतग्रन्थेषु प्रदर्शिता अद्वैतमतप्रक्रियाः सर्वा अपि पराकृताः। अथ च तासामद्वैतप्रक्रियाणां संस्थापनाय प्रयतितं मधुसूदनसरस्वतीभिः अद्वैतसिद्धिप्रणयनेन मधुसूदनद्विषा-शिशुपालेनेव धर्मराजराजसूयसभायां स्वीयकुमतपुष्टये बहुप्रलापेन। तदनु सहदेवेनेव व्यासानु-ग्रहाभिरामैः श्रीव्यासोपाह्वयरामाचार्यैःतरङ्गिणीग्रन्थे मधुसूदनसरस्वतीनां विफलमनोरथत्वमुपदर्शितम्। तदसहमानैः चैद्यानुयायिभिरिव ब्रह्मानन्दसरस्वतीभिः स्वयं पुरुषैरपि [illegible]कृतया अन्तेस्त्रीनामधारिभिः लघ्वर्थतया बहुशब्दतया च लघुचन्द्रिका–गुरुचन्द्रिका–ग्रन्थकरणेन वृथा [illegible]नाय। तदनन्तरं च सात्यकिनेव

वनमालिभक्तैः श्रीवनमालिमिश्रमहोदयैः ब्रह्मानन्दसरस्वतीनां व्यर्थोद्यमत्वं प्रदर्शितम् । दन्तवक्त्रेणेव तदमर्षमाणैः श्रीविठ्ठलेशोपाध्यायैः ब्रह्मानन्दीव्याख्यानव्याजेन वनमालिमिश्रकृतन्यायामृतसौगन्ध्यदूषणाय प्रयतितुमारब्धम् । परं जरया प्रबलेन रोगेण च समाक्रान्तानां ब्रह्मानन्दीव्याख्यां समापयितुमपारयता **विठ्ठलेशोपाध्यायानां** न्याय–वेदान्त–व्याकरणाध्ययनमिषेण ब्रह्मानन्दीव्याख्यां संग्रहीतुं शिष्यतामुपगतैः भीकसगविठ्ठमैः हुलगीश्रीपत्याचार्यैः गुरूणामाज्ञया गुरूदक्षिणात्वेन ब्रह्मानन्दीव्याख्यापूर्णतासंपादनमङ्गीकृत्य श्री**मदानन्दतीर्थप्रणीततत्त्वोद्योतस्य** टीकायाः श्रीमज्जयतीर्थविरचितायाः व्याख्यानव्याजेन **द्वैतद्युमणि**नामा प्रबन्धो निर्मितः। प्रबन्धेऽस्मिन् यथा **तत्त्वोद्योत**टीकायाः पदच्छेदाद्यन्यतमव्याख्या तत्समर्थनं च व्यधायि, तथा **ब्रह्मानन्दीय**ग्रन्थस्यापि वाक्ययोजनादिरूप व्याख्यान विधाय, आक्षेपसमाधानरूप खण्डनात्मकमपि भवतीति न्यायामृत**सौगन्ध्य**समर्थनं निहितम् । यथाचैतत**द्वैतद्युमणि**ग्रन्थदर्शनेन सुविशदं ज्ञायेत तथा सौगन्ध्यविमर्शकाराणा **अनन्तकृष्णशास्त्रीणां** घ्राणेन्द्रियविकलानां सौगन्ध्यविमर्शविडम्बननामिव **नामगतानन्तकृष्णतां** मुखे समुल्लासयन्ती नूनमविमृश्यकारिताऽपि अवगम्येत सुस्पष्टम् ।

महाग्रन्थस्यास्य मुद्रापणं श्री**हुलगीश्रीपत्याचार्याणा** दौहित्राणां पूर्वाश्रमे कण्ठपल्ली जयाचार्याणां सुगृहीतनामधेयानां श्रीमदुत्तरादमठाधीश्वराणां **श्रीमत्सत्यधीरतीर्थश्रीचरणानां** पूर्वाश्रमतनयैः पूर्वाश्रमे **सेतुरामाचार्य**: इति प्रथिततमैः प्रातस्स्मरणीयमङ्गलतमनामधेयैः **अप्रतिमहा-महावैदुष्य–वैराग्यौदार्यादिगुणमणिगणाकरैः श्रीमत्सत्यध्यानतीर्थश्रीमच्चरणैः** स्वयं स्वान्तेवासिविद्वज्जनैः संशोध्य, समारब्धमवसितप्रायं च । सोऽयं ग्रन्थः ग्रन्थरक्षकेभ्यः सद्रव्यदानं संपाद्य श्री**मत्सत्यध्यानविद्यापीठ**संचालकैः श्रीमत्सत्यध्यानतीर्थपीठाधिरूढानां १०८ **श्रीमत्सत्यप्रमोदतीर्थानां द्वादशवार्षिकपट्टाभिषेकोत्सव**प्रसङ्गे प्रकाशितः । अद्याऽपि मुद्रणीयो भागः शतपत्रात्मकोऽवशिष्ट आस्ते । अचिरादेव तं संपाद्य प्रकाशयिष्यामः । तेन समं सूचीपत्र–शुद्धिपत्रादिकमपि प्रकटयिष्यामो वयम् । एतत्प्रबन्धविषये विस्तृतमुपोद्घातमपि तस्मिन्नवसरे प्रकाशपदवीमुपनेष्याम इति ।

**श्रीवरखेडनरसिंहाचार्याः**

भक्तिज्ञान—विरक्तिपूर्वसुगुणैस्सर्वज्ञसिंहासना—
रोहे दक्षतमस्य भासुरयतश्श्रुत्यन्तसम्राट्पदम् ॥
**सत्यामोदगुरोस्सुमङ्गलगले** वाणीविलासालये
मालेयं **मणिमञ्जुला** विलसतात्सद्ध्यानपीठार्पिता ॥१॥



सद्ध्यानतीर्थपदधिष्ठित—तद्गुणाढ्य—
**सत्यप्रमोदगुरुराजमुनीन्द्रकण्ठे** ॥
वाणीविलासनिलयेऽद्य मुदाऽर्प्यतेऽसौ
सिद्धान्तसूत्रघटिता **मणिमञ्जुमाला** ॥२॥

श्रीरामचंद्रो विजयते

श्रीतत्वोद्योतस्य टीकाया विवृतिः

# द्वैतद्युमणिः

---

॥ श्रीगुरुभ्यो नमः ॥ श्रीलक्ष्मीनृसिंहाय नमः ॥ हरिः ॐ ॥

श्रीमंतं जगदुदयस्थितिप्रणाशान् कुर्वंतं गुणगणपूर्णमीशितारं ॥
मुक्तानामपि सकलैरवद्यगंधैरस्पृष्टं हरिमनिशं नमामि भक्त्या ॥ १ ॥

श्रीमदानंदतीर्थार्यान् जयराजमुनीनपि ॥
तद्गुरून्मद्गुरूंश्चापि प्रणमाम्यहमंजसा ॥ २ ॥

माध्वागमार्थविशदीकरणप्रवीणो
दुर्वादिगर्वगिरिवज्रवचो विनोदी ॥
श्रीसत्यधर्मगुरुराड् मयि सुप्रसन्नो
भूयाद्दयास्यवरतः सकलार्थवेदी ॥ ३ ॥

रघुपतिपदपाथोजातगंधाभिनंदी
निखिलनिगमचर्चासल्लिलासैकशौंडः ॥
जयति यमिकुलेशः सत्यसंकल्पनामा
गुरुरखिलबुधानां भक्तिवैराग्यरागः ॥ ४ ॥

दुर्वादिव्रातमाद्यत्करिवरदमनोद्दामपंचास्यलीला
मातन्वन् मोदतीर्थागमगहनपयोराशिमंथाचलश्रीः ॥
विख्यातः कंठपल्लीस्थलवरवसतिः श्रीरघूत्तंसनामा
दद्याद्वागर्थबोधं मम परमगुरुर्ग्रंथमेनं विधातुं ॥ ५ ॥

श्रीमद्वेदांतशास्त्रप्रवचनमहिमा त्रस्तपदशास्त्रमुख्य
स्तातः श्रीवासुदेवाभिधगुरुतिलकः सर्वविद्याश्रिरस्य ॥
ग्रंथस्यैतस्य पारं कलयतु कमलानाथपादावलंबी
यस्मान्मध्वागमार्थानमलमपि मनुं प्राप्तवानस्मि हृद्यात् ॥ ६ ॥

अस्मद्गुरुहृदब्जस्थरमाप्राणेशतुष्टये ॥
तत्वोद्योतस्य टीकाया विवृतिं करवाण्यहं ॥ ७ ॥

तत्वोद्योतस्य टीकाया विकासो मत्कृतेः फलं ॥
मध्युक्तदूषणाभासनिरासोऽथैत इष्यते ॥ ८ ॥

क्व टीकाकृद्वाग्विलासः क्वाहं जडधीपतिः ॥
तथापि तत्कृपालेशो न कुर्यात्किमलौकिकं ॥ ९ ॥

(टीका) विश्वोत्पत्तिस्थितिध्वंसकारणं रमणं श्रियः ॥
अभिवंद्य यथाबोधं तत्वोद्योतं विवृण्महे ॥ १ ॥

इहाविद्यातिमिरनिरंतरे संसारकांतारे परिखिन्नानामल्पास्थिरसुखखद्योतिकासु

---

निर्विघ्नपरिसमाप्त्याद्यर्थं ग्रंथादावनुष्ठेयत्वेन शिष्टाचारपरंपरयावगतं मंगलं ग्रंथादावनुष्ठाय शिष्यान् ग्राहयितुं निबध्नन् स्वचिकीर्षितं प्रतिजानीते । विश्वेति । उत्तमपुरुषप्रयोगाद्वयमिति कर्ता लभ्यते । अतो न न्यूनता। सकलवाङ्मनसदेवतायाः श्रियो नमनस्याप्यावश्यकत्वात् भगवद्विशेषणतया तन्नमनस्य च 'विष्णुना सहिता ध्याता सापि तुष्टिं परां व्रजेत्' इत्यादिमानैस्तदत्यंतप्रीतिहेतुतया श्रियो रमणमित्युक्तं । लक्ष्मीपतित्वोक्त्या तदभिमन्यमानजडप्रकृत्यादिनियामकत्वप्राप्त्या प्रकृतिबंधादिप्रयुक्तदोषराहित्यं ध्वनितं । विश्वोत्पत्यादिकारणत्वं तु गुणपूर्णत्वोपपादनद्वारा नम्यताप्रयोजकविशिष्टत्वस्योपपादनाय। जगद्व्यापारवर्जमित्यादिना जगद्विषयकव्यापाराराहित्येन प्रमितमुक्तव्यावर्तकधर्मप्रतिपादनद्वारा प्रकृतग्रंथप्रतिपाद्यस्य मुक्तभेदस्येश्वरे प्रतिपादनायेति टिप्पण्यां प्राहुः । अभीत्यनेन वंदनस्य भक्त्याद्यतिशयसाहित्यं समाप्त्यादिप्रयोजकतावच्छेदकमाह । बोधपदस्य मुख्यार्थकत्वेन संप्रदायसिद्धयथार्थज्ञानस्य लाभेन यथापदेन अनतिक्रमार्थकेन तदनुसारित्वस्यैव प्राप्त्या ग्रंथस्य स्वोत्प्रेक्षादिमूलकत्वप्रयुक्तानुपादेयत्वव्यवच्छेदः । तत्त्वस्य मुख्यस्वतंत्रतत्वात्मकनारायणस्य उत्कृष्टद्योतः मुक्तामुक्तसकलनियंतृत्वादिना ज्ञानं यस्मादिति व्युत्पत्त्या ग्रंथस्य तत्साधनत्वलाभः । यद्यपि ग्रंथनाम्नैव तस्य विषयसंबंधो लभ्यते तथापि निष्प्रयोजनत्वेनानुपादेयत्वशंकामपाकर्तुं वा अनधिगततत्वमात्रं न प्रतिपाद्यताप्रयोजकं किंतु सप्रयोजनज्ञानविषयकत्वमित्यन्यत्रोक्तत्वात् ईश्वरस्य तथात्वाभावात्तस्य विषयत्वाभावादस्य निर्विषयत्वादिनानुपादेयत्वशंकामपाकर्तुं वा विषयादिकं निरूपयन् तथात्वेपि निष्प्रयोजनकाद्यपद्यघटितत्वात्पुनरस्यानुपादेयत्वमिति शंकाव्युदासायाद्यपद्यमवतारयति । इहेति । इदं चेतनवर्गं इत्यर्थकमधिकारिणामित्यनेन संबध्यं । कांतारविशेषणीभूतानुभवसिद्धार्थकमित्यन्ये । अविद्येति । विद्याविरोधित्वेन त्रिगुणात्मकप्रकृतिकामकर्मादिकं ग्राह्यं । तत्वेन तदुत्कीर्तनं तु ज्ञानस्य तन्नाशार्थमवश्यापेक्षणीयतालाभाय । तेषां तिमिरत्वं तु मोक्षमार्गप्रवृत्तिहेतुभूतज्ञानप्रतिबंधकत्वेन । संसारो नाम प्रकृते सुरनरतिर्यगादिनानादेहाः । मनुष्यदेहादिमात्रे विरक्तस्य सुरादिदेहादाविच्छया प्रवर्तमानस्य विरक्त्यभावेन ज्ञानानुदयेन ऐहिकामुष्मिकसकलभोगविरक्तिलाभाय परीत्युक्तं । सर्वयोनिपुद्धेषवतामित्यर्थः । तत्र द्वेषेण तद्विरोधिनि ज्ञान इच्छोदयद्वारा ज्ञानोत्पत्तिरितिभावः । ननु मुख्येच्छाविषयत्वं यथा सुखस्य तत्साधनतया चान्येषामिच्छाविषयत्वं तथा दुःखस्यैव मुख्यद्वेषविषयत्वं तत्साधनतयान्येषां । एवं च सुखसाधनेषु शरीरेषु कथं द्वेषः । नच दुःखसाधनत्वात् द्वेषोपि स्यादिति वाच्यं । सुखासाधने दुःखसाधन एव लोकानां द्वेषदर्शनात् । अन्यथा नांतरीयकदुःखसाधनत्वात्प्रायेण सर्वक्रियाणां सर्वत्र प्रवृत्त्युच्छेदप्रसंगादित्याभिप्रायपूर्विकामाशंकामप्यंतेन सूचयन् तन्निराकरणपूर्वकं परिखेदमुपपादयति । अल्पेत्यादिनाऽनासादयतामित्यंतेन । सुखेऽल्पत्वास्थिरत्वयोः समाधानोपयोगित्वेनाभिधानं नतु शंकोपयोगेन । द्योतमानासु । साक्षात्क्रियमाणासु । मनःप्रसादं तज्जातीयान्यसुखेच्छानुत्पत्तिपूर्विकां तज्जातीयविषयकोत्कटेच्छां । शंकायां सुखे साक्षात्क्रियमाणत्वकथनं त्वनुभवसिद्धसुखसाधनत्वा-

(टीका) द्योतमानास्वपि मनःप्रसादमनासादयताम्

त्कथमत्र शरीरादौ द्वेष इति शंकोत्थापनाय । नन्वनासादयतामित्यनेन कथमुक्तशंकापरिहारः। इत्थं । सुखासाधनत्वसमानाधिकरणदुःखसाधनत्वं न द्वेषविषयत्वप्रयोजकं तात्कालिकतृप्तिसाधने विषसंपृक्तमधुभक्षणादौ द्वेषानुदयप्रसंगात् । किंतु स्वसाध्यदुःखन्यूनमनधिकं वा यत्सुखं तत्साधनत्वं केवलं दुःखसाधनत्वं च लोकानां तथैवानुभवात् । तथा च सांसारिकसुखापेक्षया दुःखस्याधिकत्वज्ञानवतां विवेकिनां संसारे द्वेषोदय इति। ननु अविरलस्रसुखधाराया एव 'यन्न दुःखेन संभिन्नं' इत्यादिना स्वर्गपदार्थत्वावगमात्कथं तत्साधने दुःखासाधने तच्छरीरादौ द्वेष इत्यतः अस्थिर इत्युक्तं। तेषामप्यस्थिरत्वात् स्थिरसुखरूपमोक्षविरोधिनि तत्सुखसाधने शरीरे द्वेषादया युक्त इति भावः । अल्पपदस्य स्वकारणजन्यदुःखापेक्षयाल्पत्वार्थत्वं विहाय मोक्षापेक्षयाल्पत्वार्थकत्वे स्वर्गसुखस्यापि तथात्वमेव । अस्थिरत्वं तु सर्वत्रापि द्वेषाधिक्यसूचनाय अभ्युच्चयत्वेनोक्तं । यद्वा संसारे परिखिन्नानामित्यस्य सांसारिकबहुदुःखानुभववतामित्यर्थः । तस्य वैषयिकसुखविषयकेच्छाभावरूपवैराग्येऽनास्वादयतामित्यंतनोक्ते हेतुत्वं 'विविधसांसारिकदुःखदर्शनेन विरक्तस्य' इत्यन्यत्रोक्तेरिति ध्येयं । अत्र यद्यपि पूर्वोक्तार्थाक्षेपसूचकापिपदवैयर्थ्यं पूर्वोक्तपरिखेदस्याक्षेपपूर्वमसमर्थनात् तमेव हेतूकृत्य वैराग्यमात्रस्य कथनादिति भाति । तथापि परिखेदसद्भावेऽपि तत्काले साक्षात्क्रियमाणेषु तज्जातीयेषु सत्सु मोक्षरूपकालांतरीणसुखविषयकोत्कटेच्छया न वैराग्यमित्याशंकासूचकं द्योतमानपदसमभिव्याहृतमपिपदमिति न तस्य वैयर्थ्यं । सुखेष्वल्पत्वाद्युक्त्या तच्छंकापरिहारः पूर्वोक्तरीत्या द्रष्टव्यः। ननु मोक्षसुखस्य विषयसुखवैलक्षण्यायानंतत्वाभिधानात्तस्य यथायोग्यं पूर्णत्वनाशराहित्यरूपत्वात्त द्विरुद्धधर्मयोरल्पत्वास्थिरत्वयोर्वैषयिकसुखेषु कथनं युक्तं। तस्य खद्योतिकोपमा तु न संगता । न हि मोक्षसुखस्य सूर्यस्थानीयतया तमोनिवर्तकत्वमुच्यते । युक्तं वा, तन्निवृत्त्युत्तरकालीनत्वात्तदभिव्यक्तेः। किंतु आचार्यस्य सूर्यस्थानीयत्वं तदुपदेशजन्यत्वेन तदधीनपरमपुरुषतत्वोद्योतस्य तत्प्रकाशस्थानीयत्वं । तस्याविद्यादिरूपतमोनिवृत्तिद्वारानंतानंदाभिव्यक्तिहेतुत्वात् । तथा च सूर्यस्थानीयाचार्येण प्रकाशकत्वेनासजातीयं प्रत्युत स्वयंप्रकाशकर्माभूते वैषयिकसुखे तमोनिवर्तकत्वासामर्थ्यसूचनाय खद्योतिकासाम्योपादानं कथमिति चेन्न । यतः वैषयिकसुखेषु तमोनिवर्तकत्वासामर्थ्यसूचनाय न खद्योतिकोपमोपादानं किंतु तस्य प्रयोजनांतरमेव वर्तते । कथं । इत्थं। ननु संसारानिवृत्तीच्छया परमपुरुषज्ञानसंपादनमयुक्तं । संसारसद्भाव एव स्त्रीपुत्रादिनानासुखसंभवात् । परमपुरुषज्ञानस्य तु विद्यमानसुखनाशकतयानपेक्षितत्वेन तत्संपादकाचार्यसूर्योऽप्यनपेक्षित इत्याशंकापरिहारायेदमभिहितं । तेन च यथा तमःसंबंधकाल एव खद्योतिका द्योत्यंते न सूर्यप्रकाशवेलायामित्येतावता खद्योतिकाप्रकाशनिर्वाहाय तमस्येवेच्छा प्रेक्षावतां न सूर्यप्रकाश इति न युज्यते तद्वत् खद्योतिकास्थानीयसुखप्रकाशकतमोनिबिडसंसारे इच्छा आचार्यसूर्यप्रकाशादौ तु नेच्छेति न युज्यत इति । श्रीपादास्तु आचार्यसूर्य इत्यत्र न सूर्यपदं रूढ्या सूर्यपरं सदाचार्यस्य तमोनिवर्तकत्वादिसामर्थ्यबोधनपरमपि तु लोकानां दुःखादिमत्वेपि कुत आचार्याणामेतन्निर्माणे प्रवृत्तिस्तेषां उपदेशानिच्छुत्वात् । तान्प्रत्युपदेशे स्ववाक्यस्यानुपादेयत्वापत्तिरित्याशंकापरिहाराय योगेन ज्ञानिगम्यार्थकं 'सूर्यः स सूरिगम्यत्वात्

**सर्वत्राखिलसच्छक्तिः स्वतंत्रोऽशेषदर्शनः ॥**
**नित्याताद्दृशचिच्चेत्ययंतेष्टो नो रमापतिः ॥ १ ॥**

( टीका ) अधिकारिणामनंतानंदनिदानस्य परमपुरुषतत्वोद्योतस्य सिद्धये समीहमानो भगवानाचार्यसूर्यः स्वयमंतरायविधुरोपि निरंतरायप्रारिप्सितपरिसमाप्त्यादेरंगमिष्टदेवताभिपूजनं शिष्यान् ग्राहयितुं प्रकारणादौ निबध्नाति ॥ देवतास्तुतिमात्रपरत्वात्

---

इतीशावास्यभाष्योक्तेः । तथा च संसारबाधावाद्भिः ज्ञानिभिः शरणतया स्वस्य गम्यत्वात् तान्प्रत्युपदेशरूपे ग्रंथे प्रवृत्तिर्युक्तैव । 'ते वायवे मनवे बाधिताय' इत्यत्र बाधितायेति शब्दस्य संसारबाधावाद्भिः शरणं प्राप्तायेत्यर्थस्य टीकाकृताभिहितत्वात् उक्तं युक्तमिति प्राहुः । वैराग्यादिसद्भावेऽपि ज्ञानोत्पत्तौ स्वरूपयोग्यताख्याधिकारोऽपेक्षित इत्याशयेनाधिकारिणामित्युक्तं । अत्र निदानेति । परमपुरुषज्ञानस्यानंदाविर्भावं प्रति मूलकारणत्वोक्त्या मध्ये अपेक्षितं किंचिदस्तीति गम्यते । तच्च प्रकृत्यादीनां विद्याविरोधित्वकथनेनाविद्यानिवृत्यादिरूपमेवेति लभ्यते । तदपि न परमतरीत्या साक्षादेव ज्ञानेन । स्वविषयकापरोक्षज्ञानं यदि बंधनिवर्तकं स्यात् तदा तस्य स्वसमानविषयकस्वस्वरूपाज्ञाननिवर्तकता संभाव्येत । किंतु ज्ञानं स्वापेक्षया पारम्येण स्वान्यस्य परमपुरुषस्यैव । तस्य च कथं जीवस्वरूपावरकाज्ञानबंधनिवर्तकत्वं साक्षाद्घटते किंतु निगडमोचकराजसाक्षात्कारस्येव प्रसादद्वारेति सूचनाय परमपुरुषेत्याद्यभिहितं । अत्रानंतानंदाय परमपुरुषतत्त्वोद्योतस्य सिध्यय इति अनंतानंदस्योद्देश्यत्वमनभिधाय वस्तुतस्तज्जनकज्ञानस्यैव सिध्यय इति उद्देश्यत्वाभिधानं एतद्ग्रंथस्योत्तमाधिकारिसाधारण्यं सूचयितुं । उत्तमाधिकारिणां भगवज्ज्ञानमवोद्देश्य आनंदावाप्तिस्तु तत्स्वाभाव्यात् । अन्येषां तु आनंदार्थं तदुद्देश्यमिति बोध्यं । अस्य शास्त्रैकदेशत्वरूपप्रकरणत्वेन शास्त्रीयविषयादिकमेव परमपुरुषादिकमस्य विषयादिकमिति मायावादखंडनटीकादावुक्तदिशा द्रष्टव्यं । मायावादखंडनटीकादौ स्फुटतया तथोक्तिस्त्वत्रानुक्तिश्च तत्र परपक्षमात्रस्यादित एव निराकृतत्वेन विषयादीनां स्फुटमप्रतिभासादत्र मुक्तभेदरूपस्वपक्षस्थापनेन मुक्तभेदवत्तया तन्नियामकत्वरूपपारम्यविशिष्टस्वरूपविषयादिप्रतिभासादिति द्रष्टव्यं। अतएवास्यापि शास्त्रैकदेशत्वलाभाय प्रकरणादावित्युक्तं। अभिपूजनस्य स्तुतिरूपत्वे सर्वत्रेत्यादिवाक्यरूपस्य तस्य विषयीभूतस्वप्रत्यक्षनिर्वाहकत्वान्मंगलप्रकाशकवाक्यरूपनिबंधनत्वं सर्वत्रेत्यादिश्लोकेन बाधितं । टीकायां मूलपाठोत्तरमितिशब्दोऽध्याहार्यः। तस्य स्वरूपार्थत्वेन निबंधने अभेदेनान्वयः । एतत्स्वरूपाभिन्ननिबंधनकर्तेति बोधः । एवमुत्तरत्र सर्वत्र मूलपाठोत्तरमितिशब्दमध्याहार्यवतारिकोक्तक्रियायामन्वयो द्रष्टव्यः । ननु मूले रमापतिरित्येवोद्देश्यसमर्पकं, झडिति व्यक्तिविशेषोपस्थापकत्वात् तत्पूर्ववर्तिनां पदानां तूद्देश्यतावच्छेदकसमर्पकत्वं । नीलश्चैत्रीयो घटः सुंदर इत्यादौ तथा दर्शनात् । तथा च विधेयवाचकक्रियापदाभावान्न्यूनता । न चास्तेः सार्वत्रिकत्वेन सिद्धत्वादनुक्तमिति वाच्यं । तत्कथनस्यास्तितायाः रमापतित्वादिरूपधर्मान्यथानुपपत्त्यैव सिद्धत्वेन वैयर्थ्यात् । तत्कथनस्य मंगलनिबंधनरूपत्वाभावाच्चेत्यत आह । देवतेति । स्तुतिः उत्कर्षबोधानुकूलधर्मप्रतिपादनं । 'तन्मात्रपरत्वात्' उक्तविशेषणविशिष्टरमापत्युद्देश्यकक्रियापदार्थाविधेयक-

(टीका) अस्य श्लोकस्य क्रियाभिसंबंधाभावो नदोषाय। किंतु रमापतिः सर्वत्राखिलसच्छक्तिरित्यादिरूपैव योजना। यद्यप्यत्र न विशेषणानां परस्परसंगत्यपेक्षा। विशेष्यप्रशंसामात्रपरत्वेन निराकांक्षत्वात्। तथाप्येतैरेव स्तवने किमपि प्रयोजनमभिधीयते। अत एव च न वाक्यभेददोषः।

---

बोधे तात्पर्याभावो मात्रपदार्थः। क्रियाभिसंबंधाभावः। क्रियेत्युपलक्षणं। विशिष्टरमापतौ विधेयसमर्पकपदमात्रं ग्राह्यं। नीलमिदं नतु रक्तमित्यादौ क्रियापदाभावेपि वाक्यपरिसमाप्तेस्तात्रिकैरुक्तत्वेपि 'एकतिङ्‌ वाक्यम्' इति वार्तिकानुसारेण वा क्रियापदार्थविधेयकबोधेन वाक्यसमाप्तेर्बाहुल्यकत्वेन वा क्रियापदस्य कंठतोऽग्रहणं। तथाच विशिष्टरमापत्युद्देश्यकविधेयांतरविषयकबोधानुकूलपदसमभिव्याहाराभाव इत्यर्थः। न दोषाय। स्वतात्पर्यविषयीभूतबोधानुकूलपदाघटितत्वरूपन्यूनतादोषाय नेत्यर्थः। विशिष्टरमापतौ विधेयांतरबोधे ग्रंथकृतस्तात्पर्यसत्वे हि पदविशेषस्य अध्याहारादौ विनिगमकाभावादिना स्फुटज्ञापकाभावे हि तद्बोधकपदाप्रयोगो ग्रंथकृतां तदघटितत्वं च वाक्यस्य दोषः। न चैवं प्रकृते। ग्रंथकृतस्तादृशबोधे तात्पर्यस्यैवाभावात्। ननु प्रीत्याशासनादिक्रियार्थबोधे तात्पर्याभावे कथमस्य वाक्यस्य वाचनिकमंगलात्मकत्वं। वाचनिकमंगलात्मके नारायणोऽगण्यगुण इत्यादिश्लोके प्रीयतामित्यादिक्रियासत्वेन तद्भावस्य तादृशमंगलत्वव्यापकत्वावगमात्। व्यापकाभावे च व्याप्यमंगलात्मकत्वमप्यनुपपन्नमित्याशंकापरिहाराय देवतास्तुतीत्याद्यभिहितं। उत्कर्षप्रतिपत्त्यनुकूलधर्मप्रतिपादकत्वादेव हि मंगलरूपत्वं नतु प्रीत्याशासनादिक्रियासाहित्यनियमः। विष्णुसहस्रनामादौ तदभावेपि मंगलरूपताया दृष्टत्वादिति हृदयं। मनुष्यस्तुतौ मंगलरूपताया असंप्रतिपत्तेर्देवतेत्युक्तं। मंगलात्मकत्वाभावादिदोषोऽपि नास्तीति सूचनाय न दोषायेति सामान्येनोक्तं। देवतापदमप्यत एव सार्थकमन्यथा स्तुतिमात्रपरत्वादित्येवोच्येत। ननु क्रियापदादिरूपविधेयसमर्पकपदाभावे पदानां स्वार्थमात्रोपस्थापकताप्रसक्त्या रमापतावुत्कर्षनिर्वाहकधर्मप्रतिपादकतया स्तुतिरूपता न निर्वहतीत्याशयेन शंकते। किंत्विति। उत्तरमाह। रमापतिरित्यादि। एवकारस्तेषामुद्देश्यतावच्छेदकसमर्पकतया योजनाव्यवच्छेदकः। स्वयं क्रियमाणस्य श्लोकस्थपदानां तन्निवर्तनीयाकांक्षोत्थापकत्वतदुत्थाप्याकांक्षानिवर्तकत्वान्यतररूपसंगतिप्रदर्शनस्य वैयर्थ्यमाशंक्य तत्परिहारपूर्वकं तां संगतिं दर्शयति। यद्यपीत्यादिना। विशेष्यप्रशंसापरत्वेन। तन्निष्ठोत्कर्षाधिक्यप्रतिपत्तिप्रयोजनकतया निश्चितत्वेन। निराकांक्षत्वात्। प्रयोजनविशेषवत्तयाऽजिज्ञासितत्वात् तथा च भवतां तत्कथनमजिज्ञासिताभिधानरूपतयानुपादेयं स्यादिति भावः। किमपि। अपिः संभावनायां। सामान्यतः संभावितं श्रोतृभिर्विशेषरूपेणानिश्चिततया जिज्ञासितं प्रयोजनमस्माभिरभिधीयते। अतोऽस्मदुक्तेर्न निराकांक्षिताभिधानरूपत्वमिति भावः। यद्यपि विशेषणांतराण्यनुपादाय एतैरेव स्तवने स्वतंत्रेच्छैव नियामिकेति वक्तुं शक्यत्वेन न तावता पदानां प्रयोजनांतरसंभावनाप्रसक्तिः। अन्यथा विशेषणांतरोपादाने तत्राप्येतादृशशंकाया अनुच्छेदापत्तेः। तथापि प्रयोजनांतरबाधनिर्णयोत्तरमेवेच्छारूपसमाधानप्रसक्तिः। नच प्रकृते बाधो निश्चेतुं शक्यः। आचार्यवचसामतिगंभीरार्थत्वस्य बहुशो दृष्टत्वेन तदुपायाभावात्। अतःप्रयोजनांतरसंभावना युक्तैवेति ज्ञातव्यं। वाक्यभेददोषः। तदुत्थाप्याकांक्षानिवर्तकत्वतन्निवर्तनीयाकांक्षोत्थापकत्वान्यतराभावरूपो वाक्यदोषः। अत एव वक्ष्यमाणरीत्यावा-

(टीका) तत्र विद्योपदेशावसरे सकलवाङ्मनसदेवतया रमया युतस्यैव हरेः स्तुतिरुचिता। अतो रमापतिरिति विशेष्यं निरदिक्षत्। नन्वीश्वर एव किं प्रमाणं। आगमं तावद्ब्रूमः। श्रूयते हि "द्यावाभूमी जनयन् देव एकः" इत्यादि। केवल-सिद्धार्थबोधकस्य प्रवृत्याद्यनंगतया वैयर्थ्यप्रसंगात्

---

तरवाक्यानामन्यतरसत्वादेव नेत्यर्थः। अन्यतराभावात्मकवाक्यदोषत्वावच्छिन्नाभावत्वेन साध्यत्वं तादृशान्यतरत्वेन हेतुत्वमिति न साध्यावैशिष्ट्यमत्र शंक्यं। वाक्यभेदपदस्य विशिष्टैकार्थविषयकसमूहालंबनानात्मकशाब्दाजनकत्वं नार्थः। तस्य वक्ष्यमाणरीत्या संगतिसद्भावेपि पदानां पूर्वोक्तयोजनायां तादृशदोषस्य दुर्वारत्वात्। ननु तर्हि तद्दोष-णाप्यस्य दुष्टत्वमेव श्लोकस्य स्यादिति वाच्यं। वाक्यानां परस्परासंगतिरेव दोषः ननु सर्वेषां विशिष्टैकार्थशाब्दधीजनकत्वाभावः। महाग्रंथस्थानामवांतरवाक्यानां तादृशानां बहुलमु-पलंभादित्यभिप्रायात्। अत एवेत्यस्य यत एतैरेव स्तवने किमपि प्रयोजनमभिधीयते अत एवेत्यर्थः। तथा च पंचानामप्येषां ईश्वरप्रमाणरूपैकार्थप्रतीतिपरत्वान्न वाक्यभेद इति टिप्पण्यां व्याख्यातं। तत्र यद्यपि विशेष्यप्रशंसारूपैकविशिष्टार्थप्रतीतिपरत्वेन तद्दोष-त्वस्व पूर्वमपि सत्वात् अतएवेत्युपष्टंभासंगतिरिति प्रतिभाति तथापि नैकार्थप्रतीतिपरत्व-मात्रत्वमेकवाक्यत्वं विभिन्नकर्तृकयोरेकेनैव कालभेदेनोच्चारितयोर्वा घटोऽस्तीति वाक्ययोरपि तथात्वापत्तेः। किंतु परस्परसाकांक्षतयैकविशिष्टार्थपरत्वं 'अर्थैकत्वादेकं वाक्यं साकांक्षं चेद्विभागे स्यात्' इति जैमिन्युक्तेः। तच्च प्रशंसापरत्वपक्षे विशेषणपदानां परस्परापेक्षाविभुरा णामेवोत्कर्षरूपप्रशंसापरत्वान्नैकवाक्यत्वनिर्वाहः। इदानीं तु वक्ष्यमाणरीत्या परस्परसाकां-क्षाणामेव प्रामाणिकत्वेनेश्वरबोधपरत्वमनुमानस्याप्यागमासहकृतस्येश्वरे प्रामाण्यायोगादन्त-स्यापि तत्साकांक्षत्वमेवेति तत्सूचकवाक्यानामपि परस्परसाकांक्षत्वमेवेत्येतत्पक्ष उपष्टंभ संगतिरिति टिप्पण्यभिप्रायः। साकांक्षत्वं चास्मदुक्तान्यतरात्मकत्वमेवेति टिप्पण्या अन्यत्रैव पर्यवसानादन्यतरसत्वादेवेत्यस्माभिर्व्याख्यातमतस्तद्विरोधोऽत्र न शंक्य इति ज्ञेयं। प्रसिद्धस्व-नामानि विहाय भार्यानामपूर्वकग्रहणप्रयुक्तापकर्षं तस्य बीजांतरं वदन् परिहरति। तत्रेति। असन्नेव स भवतीत्यादिना जीवविलक्षणेश्वरमजाननतां जानतां निंदास्तुत्योः श्रवणात्तत्प्रा-माणिकत्वेन ज्ञानस्यैव तज्ज्ञानदार्ढ्यसंपादकत्वात् प्रमाणज्ञानपूर्वकं ईश्वरानुसंधानस्य विशे-षप्रसादहेतुत्वसूचनाय पदानां प्रमाणसूचकत्वमाचार्याभिप्रेतमित्याशयेन प्रमाणसूचकतया पदानि व्याख्यातुं शंकते। नन्विति। एतेनैतत्श्लोकस्य मंगलाचरणं ग्रंथारंभे कर्तव्यमिति शिष्यान् बोधयितुं प्रवृत्तत्वेन तेषामीश्वरसद्भावे संशयाद्यभावेन संशयसत्वे वा एतावन्मा त्रेणानिरासेन तान् प्रति प्रमाणसूचनमकिंचित्करमित्युक्तव्याख्यानमसंगतमिति शंकान-वकाशः। उक्तरीत्या प्रामाणिकत्वेनानुसंधानं ग्रंथारंभे कर्तव्यमिति सूचनार्थमित्युक्तत्वात् 'पृष्टेनागम एवादौ वक्तव्यः साध्यसिद्धये' इत्युक्तेरागममेवादावाह। आगमंमिति। मंगलसमा प्तिकरणताबोधकश्रुतिरिव नानुमेयमित्याह। श्रूयते हीति। वैयर्थ्यप्रसंगादिति। पदानां कार्या-न्वित एव शक्तत्वे अबोधकत्वप्रसंगात् सिद्धे शक्तत्वेपीश्वरप्रधानकत्वे सफलत्वघटितप्रा-माण्याभावप्रसंगादित्यर्थः। प्रवृत्याद्यनंगत्वं तु बालव्युत्पत्तिप्रयोजकप्रयोज्यवृद्धप्रवृत्यभाव संपादनेन कार्यातिरिक्तार्थे व्युत्पत्यभावे तत्सत्वेपि सफलत्वघटितप्रामाण्याभावे चेत्युभयत्र हे तुत्वेनाभिमतं। अत एव सुधायां सिद्धार्थबोधकत्वे वाक्यपर्यवसानरूपप्रामाण्याभावमभिधाय कार्यातिरिक्तार्थे व्युत्पत्यभावः पूर्वपक्षे किंचेत्यादिना पृथगभिहितः। समाधानेपि सिद्धार्थ-

(टीका) आगमस्येश्वरे न प्रामाण्यमितिचेत्तत्राह । इष्ट इति । यद्धि यस्येष्टं तत्तंप्रति बोधनीयं नान्यत । तथासत्यनुपादेयताप्रसंगात । इष्टश्च रमापतिरिति युक्तमेव तद्बोधनं ।

कर्त्वेपि प्रामाण्यमुपपाद्य कार्यातिरिक्तार्थे व्युत्पत्त्यभावो निराकृत इत्यवधेयं । ईश्वरे न प्रामाण्यमिति । ननु ईश्वरपरत्वेन प्रतीयमानानामप्यागमानामपौरुषेयत्वेन प्रामाण्यस्य दुर्वारत्तया कार्यशेषतयैतन्मते प्रामाण्यस्य वक्तव्यतया यूपाहवनीयादिवत्कार्यशेषतयैवेश्वर सिद्धिर्दुर्वारै वेतिचेन्न । कार्यशेषतयापि कार्य एव विनियुज्यमान एवार्थे वाक्यस्य तात्पर्याद्यूपाहवनीयादिसिद्धिः।कार्ये अविनियुज्यमाने वाक्यात्प्रतीयमाने वाक्यतात्पर्ये बीजाभावेन तेषां कार्ये विनियुज्यमानजीवपरत्वमेव कथंचिद्वाच्यमतो नेश्वरसिद्धिरित्याशयात्।वाक्यानां पराभिमतकार्यपरत्वेनैव प्रामाण्यमिति नास्त्येव । सिद्धार्थपरादपि व्युत्पत्तेराकरे उपपादितत्वात् । कार्यपरत्वेपि इष्टसाधनान्यतरत्वावच्छिन्नस्येष्टसाधनस्यापीष्टतयेष्टत्वावच्छिन्नस्य वा कार्यरूपत्त्वात्पदानां तदन्वितस्वार्थबोधन एव तात्पर्यं । इत्थं चेष्टरूपेश्वरान्विततया सर्ववेदानां बोधकत्वोपपत्तिः।ईश्वरस्य तु स्वप्रधानतयैव वेदेन सिद्धिरित्याशयेन मूले इष्ट इत्युक्तं। नन्विदमयुक्तं सर्वमपीष्टमेव । चैत्रस्य यथा स्वसुखं भवत्वित्याकारेच्छाविषयीभूतं तथा दुःखमपि मम न भवत्वित्याकारेच्छाविषयीभूतं।एवं चैत्रदुःखस्य चैत्रद्विषन्मैत्रसंबंधिनी चैत्रस्य भवत्वित्याकारा या इच्छा तद्विषयत्वं वर्तत इतीष्टत्वस्य केवलान्वयित्वेनाव्यावर्तकत्वादिष्टान्वित एव पदानां शक्तिरिति नियमो न संगच्छते । न च स्वसंबंधित्वेनेच्छाविषयत्वं तत । सामान्यतः संबंधित्वस्य द्विषद्दुःखेपि सत्वेनोक्तदोषापरिहारात । स्ववृत्तित्वेनेष्टत्वस्य स्वस्मिन्नुत्पद्यमानत्वेनेच्छाविषयत्वस्य वा पुत्रादिसंबंधिसुखादावभावेन तेषामनिष्टत्वापातेन तद्बोधकवाक्यस्यानुपादेयत्वप्रसंगात । ईश्वरे उत्तमाधिकारिवृत्तित्वस्य नित्यत्वेन उत्पद्यमानत्वस्य च बाधितत्वेन तेषां तदिच्छानुत्पत्या तान् प्रतीश्वरस्येष्टत्वोक्तिरयुक्तत्वापाताच्च । तस्मादिष्टत्वस्य दुर्निरूपतया तद्बोधकतया वाक्यानां प्रामाण्योक्तिरयुक्तेत्यत आह । यद्धि यस्येष्टमिति । इष्टं स्नेहविशेषविषयीभूतं। अनुपादेयत्वं तत्पुरुषवृत्तीच्छाविषयत्वाभाववत्स्वतात्पर्यविषयीभूतं बोधकत्वं । तत्प्रसंगात्तत्पूर्वकमप्रामाण्यप्रसंगादित्यर्थः । इष्टश्चेति । इष्टत्वं तु जिज्ञासाजननद्वारा वाक्यस्योपादेयत्वे नियामकं। अयं भावः। सर्वान् प्रति सर्वस्य नेष्टत्वं।एकैकं प्रत्येकैकस्येष्टत्वमिति रीत्येष्टत्वं केवलान्वयीति सत्यं । तथापि वाक्यप्रामाण्यस्य पुरुषकालादिभेदेन व्यवस्थितत्वेन तत्प्रयोजकेष्टत्वमपि व्यवस्थितमेव ।तथा हि। विरक्तं प्रति वाणिज्योपदेशपरवाक्यमप्रमाणं रक्तं प्रति तु प्रमाणं । एकस्यैव पुरुषस्य दशाकालभेदेनापि रक्तताविरक्ततयोः संभवात् कालभेदेनापि व्यवस्थितं । इदं वाक्यमिदानीमेतत्पुरुषं प्रति प्रमाणं न तदेति सर्वसिद्धव्यवहारात् न च तथात्वे वस्तुनोपि पुरुषभेदेन व्यवस्थया विरुद्धधर्माक्रांतत्वं स्यात् । अन्यथा पुरुषांतरं प्रत्यप्रमाणत्वानुपपत्तेरिति वाच्यं । अप्रमाणत्वं न भ्रमजनकत्वरूपं प्रकृते व्यपदिश्यते । किं तु स्वतात्पर्यविषयीभूतयथार्थबोधोपधायकत्वाभावः। व्यपदिश्यमानप्रामाण्यस्यापि तत्प्रतियोगिरूपत्वात् । एतादृशप्रामाण्याप्रामाण्यनिर्वाहाय न वस्तुनो विरुद्धधर्मद्वयालिंगितत्वमपेक्षितं ।किंतु श्रोतुस्तद्वाक्यार्थस्य सामान्यतस्तत्काले बोध्यत्वेनेष्टत्वमनिष्टत्वं । तत्रापि पुरुषविशेषनिष्ठस्नेहविषयत्वं तत्साधनत्वं च प्रयोजकं । लोके तादृशानामेव प्रायो जिज्ञासितत्वेन विषयांतरसंचारराहित्यद्वारा तद्वाक्यार्थबोधानुकूलशक्तितात्पर्यज्ञानादिद्वारा बोधोद-

( टीका ) न च प्रवृत्याद्यनुपपत्तिदोषः । इष्टानुभवस्यैव पुरुषार्थत्वेन

यात् । न चाजिज्ञासितस्वनिंदापरवाक्येन दैवाच्छ्रुतेन बोधस्यानुभवसिद्धत्वेन कथमजिज्ञासिताभिधायकवाक्यस्यार्थबोधोपधायकत्वं नास्तीत्युच्यत इति वाच्यं । यत्किंचिद्वाक्यैकदेशजन्यबोध एव तथा जायते । नानावांतरवाक्यघटितमहावाक्यार्थबोधस्तु नैव जायत इत्यनुभवेनैव तादृशनियमांगीकारात् । प्रकृतेऽनुपादेयत्वप्रसंगोऽतादृशमहावाक्यस्यैवापाद्यत इति । यद्वा सफलयथावस्थितार्थविषयकबोधजनकत्वलक्षणप्रामाण्यलक्षणोपादेयत्वस्याभावप्रसंगादित्यर्थः । वक्ता खलु श्रोतुः स्ववाक्यजन्यबोधेन साक्षाद्वा तद्विषयानुष्ठानद्वारा वा सुखदुःखावाप्तिहान्यादिकं भवत्विति बुध्या वाक्यं प्रयुंक्त इत्यनुभवसिद्धं । प्रतिपाद्यस्य श्रोतृसंबंधिप्रेमविषयत्वरूपतदिष्टत्वाभावे उक्तप्रकारद्वयेन ज्ञानस्य सफलत्वाप्राप्त्या वाक्यस्यानुपादेयत्वं स्यादिति भावः । नन्वेतद्वाक्यस्यानुपादेयत्वापादनं वक्तुर्भ्रांतत्वापादने पर्यवसन्नं । श्रोतुरिष्टबोधजनकत्वबुध्या वक्ता वाक्यस्य प्रयुक्तत्वात् । वेदे तादृशानुपादेयत्वे सत्वे किं बाधकं । तत्र वक्तुरभावादिति चेन्न । तत्रापि पुरुषाभिप्रायनिवेशस्य सिद्धत्वेन तेषामेव भ्रांतत्वापादने पर्यवसानात् तस्य चानिष्टत्वात् । नन्वेतत्कल्पे नानावांतरवाक्यघटितमहावाक्यात्मकस्य स्वानपेक्षितार्थबोधकग्रंथस्यापि स्वं प्रति बोधकत्वमंगीकृतं स्यात् परंतु तदर्थस्यानपेक्षितत्वेनाजिज्ञासिततया तद्बोधस्य साक्षाद्वा विषयानुष्ठानद्वारा वा फलपर्यवसायितया तद्वाक्यजातं तत्पुरुषं प्रत्यनुपादेयमिति वक्तव्यं । तच्चानुभवविरुद्धं । एतद्ग्रंथे किमुक्तं तज्ज्ञानीयामिति तदर्थजिज्ञासया ग्रंथश्रवणे प्रवृत्तेस्तेन बोधस्य चानुभवसिद्धत्वादिति चेत् सत्यं । एवमपि तदनिष्टाभिधायकवाक्यत्वस्य तं प्रत्यनुपादेयत्वव्याप्यत्वे व्यभिचाराभावात् तद्ग्रंथस्यान्योद्देशेन प्रवृत्तत्वेनान्यपुरुषं प्रत्युपादेयत्वेऽपि तत्पुरुषं प्रतिसफलबोधानुपधायकत्वे नानुपादेयत्वस्य सर्वसंमतत्वात् । नन्वेवमपीष्टस्यैव जिज्ञासितत्वमिति नियमे व्यभिचारो दुर्वारः । स्नेहाविषयस्यापि तद्ग्रंथप्रतिपाद्यस्य जिज्ञासितत्वादिति चेन्न । न हीष्टत्वमेव जिज्ञासायां प्रयोजकमिति टीकायामुक्तं येनास्य व्यभिचारप्रसक्तिः किंतु यद्धि यस्येष्टमित्याद्येवोक्तं तत्पर्यवसितस्य पूर्वोक्तनियमस्य व्यभिचाराभाव उपपादित एव । एवं च प्रतिपाद्ये इष्टत्वं तु बाहुलकत्वाभिप्रायेण जिज्ञासासंपादकतयोक्तं । एवं च भवदुक्तस्थले कारणांतरेण जिज्ञासाजननेऽप्यस्मदभिमतार्थे न किंचिद्बाधकमधिकमन्यत्रानुसंधेयमित्यलं । अत्र स्नेहो नाम सिद्धपदार्थेष्वपि एतत्सत्ता सार्वकालिकी भवत्वित्याकारा संवादिविसंवादिसाधारणी इच्छा वा तत्प्रयोजकगुणांतरं वेति न नः काचित्क्षतिः । अनुव्याख्यानसुधयोरपि । एतादृशेष्टेष्टसाधनत्वयोर्वाक्यपर्यवसानोपयोगित्वं स्वरूपसतोरेव जिज्ञासासंपादनद्वाराभिप्रेतं । नतु वाक्यबोध्यतयेति सम्यक् तद्ग्रंथविमर्शे लभ्यते । इष्टत्वस्य स्नेहविषयरूपत्वं तु अनुव्याख्याने प्राणबुद्धीत्यादिस्मृतेः पुत्रात्प्रेय इत्यादिश्रुतेश्चोदाहरणपूर्वकं भगवत इष्टत्वोपपादनेन स्फुटीकृतमतो नोक्तार्थे तद्विरोध इत्यादिकं बहुतरमनुसंधेयमित्यलमप्रस्तुतविचारेण । न च प्रवृत्तीति । ईश्वरमुख्यविशेष्यकबोधस्य प्रवृत्त्याद्यहेतुतया तदभिप्रायकत्वे वाक्यानामबोधकत्वं सफलत्वघटितप्रामाण्याभावश्चेत्येतद्रूपदूषणद्वयं पूर्वपक्ष्यभिहितं नेत्यर्थः । कथमित्यत इष्टपदसूचितमेव वदन् परिहारं स्फुटीकरोति । इष्टानुभवस्यैवेति । अत्रानुभवपदं ज्ञानमात्रपरं परमस्नेहविषयीभूतार्थस्मरणस्याप्यानंदहेतुतया अनुभवसिद्धत्वात् । अनुभवस्यैव । अनुभवत्वरूपसामान्यधर्माक्रांतस्यैव एवकारेण प्रवृत्तिजननयोग्यस्वरूपविशेषणविशेषितस्यैवेति नियमव्यवच्छेदः । पुरुषार्थत्वेन । पुरुषेच्छाविषयत्वेन ।

(टीका)

ततःप्रयोजनानपेक्षणात्। नहि सुखानुभवस्य प्रयोजनमन्विष्यते। तस्यैव स्वरससुंदरत्वात्।

---

ननु सुखमित्यादिस्मरणानां पुरुषार्थत्वापत्तिरिति चेन्न । नह्येतद्ग्रंथे नेष्टज्ञानसामान्यमिच्छाविषयीभूतमिति नियमो बोध्यते । किंतु प्रवृत्याद्यजनकत्वेन निश्चितमपीष्टविशेषविषयकं ज्ञानं प्रवृत्तिहेतुत्वेनानुसंधीयमानमननुसंधीयमानं वा पुरुषेच्छाविषयीभूतं भवतीत्यस्यानुभवसिद्धत्वेन प्रवृत्यादिजनकत्वेनानुसंहितमेव ज्ञानमिच्छाविषय इति परोक्तनियमस्य व्यवच्छेदमात्रं क्रियते । स ( व्यवच्छेदः ) चैकस्यापि वा ज्ञानस्य पुरुषार्थत्वेऽप्युपपादितो भवति । इत्थं च सुखमित्यादिस्मरणानां पुरुषार्थत्वापादनस्य कः प्रसंगः । इष्टविषयकेष्वपि ज्ञानेषु केषांचित्प्रवृत्याद्यजनकानामपीच्छाविषयत्वमन्येषां नेति तु अननुगतकारणकलापात् स्नेहरूपेष्टत्ववत् इति ज्ञेयं । ततः प्रयोजनांतरानपेक्षणादिति । बोधसाध्यप्रवृत्यादेरवश्यमनपेक्षणादित्यर्थः। न प्रवृत्तिमपेक्षत इत्युक्तः । परोक्तनियमस्य व्यभिचारमुपपादयति । नहीति । अनुभवस्य साक्षात्कारस्य प्रयोजनं प्रवृत्यादिजनकं अन्विष्यते सुखसाक्षात्कारेच्छापूर्वकाले गृह्यते । तथा च सुखसाक्षात्कारे परोक्तनियमस्य व्यभिचार इति भावः। हिशब्दो व्यभिचारस्य स्फुटतामाह । नच घटादिज्ञानादौ प्रवृत्यादिजनकत्वाद्यनुसंधानेनैवेच्छोत्पत्तेर्बहुलमुपलंभेन तादृशानुसंधानेच्छयोःकार्यकारणभावावधारणादत्रापि पूर्वं जनकत्वानुसंधानं कल्प्यते । न चोक्तस्थले व्यभिचारस्फूर्त्या कार्यकारणभावग्रह एव न संभवतीति वाच्यं । वस्तुज्ञानत्वाविशेषे घटादिबहुपदार्थज्ञानापेक्षया सुखसाक्षात्कारे विशेषकल्पने गौरवमित्यनुकूलतर्कसाहित्येन व्यभिचारज्ञानस्य विधूननादित्यत आह । तस्यैवेति । सुखस्यैवेत्यर्थः। एवकारेण घटादिव्यवच्छेदः । स्वस्य सुखस्य यो रसोऽसाधारणधर्मः सुखत्वं तेन सुंदरत्वात् तत्प्रयोज्यनिरुपाधिकेष्टत्ववत्वात् अस्य नान्विष्यत इति पूर्वेण संबंधः। अस्य च वक्ष्यमाणरीत्या परंपरया हेतुत्वं । घटादीनां घटत्वादिना ज्ञानमात्रान्न तत्रेच्छा स्नेहो वा किंत्विष्टसाधनत्वेन गृह्यमाणेष्वेवाऽतो न तत्र निरुपाधिकेष्टत्वं । सुखादौ तु सुखत्वग्रहमात्रेण तत्र स्नेह इच्छा वा न तु स्नेहांतरेच्छांतराधीनत्वं तयोः । तथाच घटादिसुखादिरूपविषययोर्निरुपाधिकेष्टत्वाभाववत्वाभ्यां तत्साक्षात्कारयोरुक्तवैचित्र्यात्सुखसाक्षात्कारेच्छापूर्वं तत्साक्षात्कारे प्रवृत्यादिसाधनता न गृह्यत इति भावः । तथाच सुखसाक्षात्कारादौ घटादिसाक्षात्कारादिवैलक्षण्यस्य निरुपाधिकेष्टविषयकसाक्षात्कारत्वादिव्यतिरिक्तहेतुसिद्धत्वेनानुभवसिद्धत्वेन च कल्पनाभावात्तन्मूलककल्पनागौरवरूपतर्कस्यानुत्थितिरेवेति हृदयं । यद्वा सुखसाक्षात्कारे प्रवृत्यादिसाधनत्वज्ञानमंतरा तत्रेच्छा कुत इति तटस्थशंकानिवृत्तये तत्र प्रयोजकमाह। तस्यैवेति । सुखादिसाक्षात्कारत्वावच्छिन्नस्यैव । एवकारेणेष्टसाधनत्वादिविशेषणावच्छिन्नत्वस्य व्यवच्छेदः । स्वरसेन सुखविषयकत्वरूपस्वासाधारणधर्मेण । सुंदरत्वात् घटादिसाक्षात्कारविलक्षणत्वात् तत्रोक्तेच्छोपपन्नेति शेषः । सुखविषयकत्वमेव तत्र बीजमितिभावः । ननु प्रवृत्यादिजनकत्वेनानुसंधीयमानमेव ज्ञानमिच्छाविषय इति नियमः किं निबंधनः परस्य येन तद्दूषणप्रयत्नः भवतां सार्थकः स्यादिति चेन्मैवं । सिद्धार्थबोधकस्य सफलत्वघटितप्रामाण्यं नास्ति किंतु कार्यबोधकस्येति वदता इत्थं वक्तव्यं । सुखदुःखहान्यादिकं फलं । तस्य साक्षाद्वाक्यजन्यत्वाभावात् बोधप्रवृत्यादिद्वारा तत्साध्यं तत् स्वप्रयोजकेच्छांतरानधीनेच्छाविषयः परमफलं, तदिच्छाधीनस्वप्रयोजकेच्छाविषयोऽवांतरफलं । श्रोता हि क्रियाविशेषानुष्ठातुरेव सुखाद्युपलंभात्तूष्णीं स्थितस्य तदनुपलंभात् सुखादिरूपफलसामान्यस्य क्रियासाध्यत्वमधिगत्य सुखविशेषेच्छया तत्साधनभूतं क्रियाविशेषं कामयते क्रियाविशेषो मम भव

( टीका ) स्वाश्रिते सुखे दुःखनिवृत्तौ वा लोकानामिष्टव्यवहारः। न चानयोरन्यतरो रमापतिस्तत्कथमसाविष्ट इत्यत आह।

त्विति। ततस्तन्निर्वाहकप्रवृत्तिजनकक्रियात्वव्याप्यरूपावच्छिन्ने कार्यताबोध इत्यवगत्यैव तादृशकार्यताबोधं कामयते। वक्ता च स्ववाक्येन तादृशबोधसंपादनद्वारा परमफलं संपाद्यत इति कार्यताबोधकस्यैवोक्तविधं प्रामाण्यं। सिद्धार्थबोधस्य वाक्येन जननेपि तेन प्रवृत्यादिद्वारा परमफलानिर्वाहान्न तद्बोधकवाक्यं प्रमाणमिति। एवं वदतः सुखादिसाधनप्रवृत्यादिजनकत्वज्ञानमेव ज्ञानविषयकेच्छाजनकतादृशजनकत्वेन ज्ञायमानमेव ज्ञानमिच्छाविषय इति नियमोऽभिप्रेतः। इतरथा तादृशजनकत्वेनाननुसंहितज्ञानस्येच्छाविषयत्वं नेच्छांतरमंतरेण। तस्य सुखादिरूपत्वाभावात् लोके तस्यैव तथात्वानुभवात्। किंतु प्रवृत्यद्वारा साक्षात्सुखसाधनत्वेन तद्बुध्येति वक्तव्यं। तथा च प्रवृत्याद्यद्वारकसुखादिजनकसिद्धार्थबोधे सुखेच्छया श्रोतुरिच्छासंभवेन वक्ता वाक्येन तादृशबोधे संपादिते श्रोतुः सुखरूपफलसंभवेन सफलत्वघटितप्रामाण्यं सिद्धार्थपरवाक्यस्य नास्तीति सिद्धांतभंग एव स्यात्। अतःप्रवृत्यद्वारा ज्ञानस्य सुखजनकत्वं नास्त्येव। तादृशज्ञाने अन्यथाख्यात्यनभ्युपगमादिच्छापि नोत्पद्यत एवेति नियमोऽवश्यमभ्युपेयः। सिद्धार्थपरवाक्यप्रामाण्यवादिना त्ववश्यं तत्र व्यभिचारव्युत्पादनं कर्तव्यमेव। नच शाब्दज्ञानांतर्भावेन नियमः स्वीक्रियतेऽतो न व्यभिचार इति वाच्यं। स्वेष्टपुत्राद्युत्कर्षश्रवणेच्छाया अनुभवसिद्धत्वेन तादृशनियमेऽपि व्यभिचारस्य दुर्वारत्वादित्यभिप्रायादिति सर्वं समंजसं। अत्रेष्टानुभवे प्रवृत्याद्यजनकेऽपीच्छाविषयत्वोपपादनेन पदानां कार्यान्वित एव शक्तत्वेन कार्यत्वाबोधकत्वादीश्वरपरत्वेन भवदभिमतवाक्यानामबोधकत्वलक्षणाप्रामाण्यप्रसंग इति दूषणांतरमपि निरस्तं भवति। प्रवृत्याद्यजनकेपि मात्रादिरूपस्वेष्टवस्तुविषयकबोधे साक्षात्सुखजनकतयैव बालस्येच्छासंभवेन मात्रादिकमगुंल्या निर्दिश्य स्वेष्टबोधार्थं प्रवृत्तवाक्यस्य तज्जनकत्वानुसंधानपूर्वकमावापोद्वापाभ्यां पदानां कार्यानन्वित एव शक्त्यवधारणात्। एतेन शंकोक्ताबोधकत्वदूषणस्यासमाधानान्न्यूनतेति परास्तं। अन्याश्रितसुखेऽन्यस्येष्टत्वव्यवहाराभावात्। स्वाश्रित इति। लिंगविपरिणामेन दुःखनिवृत्तावप्यन्वेति। व्यवहारादिति। तस्यैव वस्तुव्यवस्थापकत्वादितिभावः। अत्र तत्साधने इत्यपि ग्राह्यं। तत्रापि स्रक्चंदनादौ लोकानामिष्टत्वव्यवहारात्। न चानयोरन्यतर इति। तत्साधनं चेत्यपि ग्राह्यं। अन्यथेष्टत्वस्यैतात्त्रितयसाधारणधर्मतया रमापतौ इष्टसामान्यभेदसाधनाय विशेषभेदद्वयस्यैवेष्टसाधनतयेष्टव्यभिचारेण हेतूकरणायोगात्। ननु रमापतौ दुःखनिवृत्तिसुखभेदयोः सिद्धत्वेऽपि तत्साधनभेदः कथं सिध्यतीतिचेन्न। क्रियाविशेषादीनां तत्सहकारिभूतद्रव्यदेवतादीनां सुखादिसाधनत्वेन भवदभिमतपूर्णकामत्वादिविशिष्टरमापतेः सर्वत्रौदासीन्येन तस्य सुखादिसाधनत्वे मानाभावादित्याशयात्। अत एवेश्वरस्य सर्वनियामकत्वेनेष्टसाधनतासिध्यभिप्रायेण सर्वनियामकत्वेनेश्वरसिद्धिरनुमानेन संपादिता। अतएवागमप्रमाणपरवाक्योत्थेष्टसाधनत्वाकांक्षाशामकतया पूर्वोक्तैकवाक्यत्वमपि तयोर्युक्तं। ननु सुखदुःखनिवृत्तिभेदाभ्यां परमेष्टभेदसाधनमेवैतद्ग्रंथाभिप्रेतमत इष्टसाधनभेदपूरणेन व्याख्यानमयुक्तमिति चेन्न। पूर्वमिष्टमात्रविषयकत्वेनैव पुरुषार्थताया उक्तत्वेन परमेष्टस्याप्रसक्तत्वात्। नच तत्रापि परमेष्टविषयकत्वेनैव परमफलत्वमुक्तमिति वाच्यं। तर्हि यद्धि यस्येष्टमिति प्रक्रमविरोधात्। नच तत्रापीष्टपदेन परमेष्टमेवोच्यत इति वाच्यं। तर्हि यद्यस्य परमेष्टं तं प्रति तदेव वाच्यं नान्यदित्युक्तं स्यात्। लोकरीतेरेवेदानीं

प्रतिपाद्यतया लौकिकानां च सुखदुःखप्राप्तिनिवृत्त्योरेव परमेष्टत्वेन तयोरेव सुखं दुःखनिवृत्तिश्चेत्यादिवाक्येनोपादेयत्वं । तादृशवाक्यस्यैवोपादेयत्वं च स्यात् । ननु यजेत पचेतेत्यादिवैदिकलौकिकवाक्यानां तत्साधनीभूतेष्टबोधकानां तेषां परमेष्टाविषयकत्वात् । नहि तथा कश्चिदंगीकरोति । ननु तत्रेष्टसाधनमपि उपलक्षणया गृह्यते । तथाच यद्धि यस्य परमेष्टं साक्षात्परंपरया वा तत्साधनं तयोरन्यतरदेव बोधनीयं नान्यदित्यर्थः । नचोत्तरत्रेष्टस्यैवोपादानं कुत इति वाच्यं । उभयोर्मध्ये प्रकृते ईश्वरबोधकवाक्यस्य कांश्चित्प्रतीष्टबोधकत्वेन तावदुपादेयत्वं वक्तुं इष्टश्च रमापतिरित्युक्तं । परमेष्ट इत्ययेवार्थः । एवमपि प्रवृत्त्याद्यजनकत्वात्कथं वाक्यस्य साफल्यमिति चोद्यपरिहारायेष्टानुभवस्येत्युक्तं । एतद्वाक्यमेके व्याचक्षते । अत्रानुभवपदेन स्वसंबंधिवर्तमानेष्टविषयकज्ञानमात्रं विवक्षितं । तेनानुभवपदेन स्मृत्यन्यज्ञानविवक्षायां यन्न दुःखेन संभिन्नमित्यादिवाक्यजज्ञानस्यापि पुरुषार्थत्वापत्तिः । साक्षात्कारविवक्षायां वेदजन्येश्वरबोधस्य साक्षात्काररूपत्वाभावेन पुरुषार्थत्वानुपपत्तिरिति दूषणानवकाश इति । तत्रेदं चिंत्यते । एवमपि चैत्रस्य भोजनादिसाध्यसुखोत्पत्तिवेलायां दुःखाभावदशायां च मैत्रेण प्रयुक्तेन चैत्र त्वयि सुखं वर्तते त्वयीदानीं दुःखाभावो वर्तत इति वाक्येन जायमानस्य चैत्रनिष्ठबोधस्य चैत्रं प्रतिपुरुषार्थत्वापत्तिः । नचेष्टापत्तिः । तादृशवाक्यप्रयोक्तरि मैत्रे ममेष्टसंपादकोऽयमिति उपकारांतरकर्तरीव चैत्रस्य अयं चैत्रोपकर्तेति लोकानां च प्रत्ययापत्तेः । नच सोऽस्ति । प्रत्युत त्वया किं वक्तव्यं वर्तत एवेयुपहासकर्तारो भवंति । किंच स्वसंबंधीत्यत्र संबंधत्वेन संबंधनिवेशे परकीयसुखस्य किंचित्परंपरासंबंधतया परसुखादिविषयकज्ञानस्यापि पुरुषार्थत्वापत्तिः । परकीयसुखं न खेष्टमिति वाच्यं । तर्हि तद्व्यावृत्तये स्वसंबंधीत्यस्य वैयर्थ्यापत्तिः । किंच दुःखविशेषात्यताभावस्य स्वस्मिन्नन्यत्र च विद्यमानस्यैकत्वेन चैत्रनिष्ठदुःखाभावानुभवस्य मैत्रं प्रति पुरुषार्थत्वापत्तिः । ज्ञानेऽपि स्वनिष्ठत्वस्य निवेशे मैत्रनिष्ठस्य चैत्रनिष्ठोक्तदुखाभावविषयकशाब्दस्य तथात्वं स्यात् । विशिष्यस्वसमवेतत्वस्य स्वस्वामिकत्वस्य वा निवेशे दुःखाभावसाक्षात्कारासंग्रहः । स्वासमवेतत्वात् स्वास्वामिकत्वाच्च दुःखाभावस्य । सिद्धांते समवायाभावात् समवेतत्वस्य वृत्तित्वमात्ररूपत्वे उक्तदोषाभावेपि यथा श्रुते निष्कर्षे च सुखसाक्षात्कारस्यैवासंग्रहः । सुखादेरंतःकरणधर्मत्वात् स्वस्वामिकत्वकल्पे ईश्वरज्ञानस्यैवासंग्रहः । तस्येतरस्वामिकत्वादिति । वस्तुत इष्टानुभवस्य इष्टपदं परमेष्टपरमेव । एवकारः प्रवृत्त्यादिजनकत्वादिविशेषणविशेषितत्वबोधकः । अनुभवपदं ज्ञानपरमेव पुरुषार्थत्वात् परमफलत्वात् । प्रवृत्त्याद्यजनकस्यापि परमेष्टज्ञानस्य कस्यचित्फलरूपताया दृष्टत्वेनासंभावितत्वाभावादीश्वरानुभवोऽपि फलरूप इति वक्तुमुपक्रांतत्वेन तादृशज्ञानसामान्यस्य फलरूपत्वनियमे एतद्वाक्यतात्पर्यकल्पने बीजाभावेन सुखादिशाब्दबोधादौ व्यभिचारानवकाशः । न हीत्यादिवाक्यद्वयं तस्यैवोपपादकं । तथा च परमेष्टस्यैव प्रक्रांतत्वादत्र सुखदुःखहान्यन्यतरानात्मकत्वेन परमेष्टत्वमेवाक्षिप्यते । न इत्यादिना मूलकृदभिप्रेतं परमेष्टत्वमुपपादयित्वा इष्टसाधनत्वादिना मध्यमभक्तान् प्रति वेदप्रामाण्यमुपपादयिष्यतीति पूर्वोत्तरग्रंथसामंजस्ये किमर्थं इष्टपदस्येष्टसामान्यपरत्वमाश्रित्य पूरणसंवलितं व्याख्यानमितिचेन्न । भवद्व्याख्यानेऽपीष्टसाधनस्य पूरणं प्राप्तमेव । परंतु नानावाक्यस्थेष्टपदस्य परमेष्टलाक्षणिकत्वमधिकं । अपि चेष्टसाधनसमकक्षतया परमेष्टस्य वाक्येन बोधनीयताकथनमयुक्तमेव । लोके स्वसुखसाधनादावेव प्रश्नप्रतिवचनयोरेव दर्शनात् । मत्सुखं कीदृशमिति प्रश्नस्य त्वत्सुखमेतादृशमित्युत्तरस्य चादर्शनात् । किंचोत्तरत्रेष्टानुभवस्येत्यादिवाक्यैरीश्वरशाब्दस्य फलरूपत्वबोधनाय सुखसाक्षात्कारस्य फलरूपत्वकथनमसंगतं । उदासीनतृणादिप्रत्यक्षस्य प्रामाण्यादेः सर्वसि-

( टीका ) नोस्माकमिति । यथा खलु केषांचिदिष्टसाधनतामनासादयंतोऽपि भावाः परेषां तथाभूता दृश्यंते । तथा लौकिकानामिष्टतामभजन्नपि भगवानुत्तमाधिकारिणामिष्टो भवतीति किमनुपपन्नं । संति खलु तेऽपि पुरुषाः येषामपवर्गोऽपि परमपुरुषावबोधनार्थमेवाभ्यर्थनीयः । यथोक्तं । " एकांतानां न कस्यचित् ॥ अर्थे नारायणो देवः सर्वमन्यत्तदर्थकं॥ " इति । इतरान्प्रत्यपीश्वरस्येष्टसाधनत्वान्न तत्परत्वमागमस्यानुपपन्नं । इष्टवदिष्टसाधनस्यापि बुभुत्सितत्वात् ।

---

त्वात्तत्र यथावस्थितार्थबोधकत्वमात्रं प्रामाण्यं । शब्दस्य तु परार्थत्वात्सफलत्वघटितमेव प्रामाण्यमिति प्रत्यक्षवैलक्षण्येन पूर्वपक्षस्य प्रवृत्तत्वेन सुखसाक्षात्कारस्य फलरूपत्वेनेश्वरशाब्दस्य फलरूपत्वासिद्धेः । इष्टज्ञानत्वसाम्यमात्रेण तथात्वे सुखशाब्दस्यापि तथात्वं प्रमेयत्वसाम्येन घटादेरपि तथात्वं स्यात् । सुखशाब्दसाक्षात्कारयोः साक्षात्कारत्वशाब्दत्वाभ्यामेव फलाफलरूपत्वे ईश्वरशाब्दस्यापि कुतो नाफलत्वं । प्रवृत्त्याद्यजनकप्रत्यक्षादेरिच्छाविषयत्वाभावेन प्रवृत्त्याद्यजनकज्ञानसामान्यस्येच्छाविषयत्वाभावनियमे परेण स्वीकृते प्रत्यक्षविशेषादौ व्यभिचारोद्भावनस्य संगतत्वेनास्मदीयैतद्वाक्यव्याख्यायामनुपपत्त्यभावात् । ईश्वरावबोधस्य फलत्वं तु तस्य परमेष्टत्वबलप्रमाणेनैव सिध्यति । किंच भवद्व्याख्याने मूलस्थेष्टपदं परमेष्टपरमेव । तथा च मध्यमभक्तान् प्रति वेदसार्थक्यस्यानुक्तत्वेन मूलस्य न्यूनतापातः । तस्माद्युक्तमेव पूरणसंवलितं व्याख्यानमिष्टपदं च त्विष्टसामान्यपरमेवेति । न इत्यत्रात्मनि बहुमानार्थं न बहुवचनं । किंतु एते च ते चाहं चेति वयं तेषां न इति व्युत्पत्त्या अधिकारिवर्गपरमितिभावेन व्याख्याति । नोस्माकमिति। मूले अयोग्यजनानामिष्टत्वाभावेप्यधिकारिणां प्रमाविषयत्वरूपेष्टत्वमिष्टपदेनोक्तं। तत्र सर्वेषामेकरूपं न भवतीत्याशयेनोत्तमाधिकारिविवक्षया तावन्निरूपयति । यथा खल्विति। भावाः क्षीरादयः । लौकिकानां एकांतभक्तातिरिक्तानां इष्टतां परमेष्टतां । अर्थस्य सोपपत्तिकत्वे लक्षणांगीकारेपि बाधकाभावात् । इष्टः परमेष्टः । एकांतानां न कस्यचित् । अर्थे नारायणो देव इत्यत्रैकांतिप्रयोजनजनकत्वनिषेधो नारायणस्य न क्रियते सर्वकारणत्वहानिप्रसंगात् । किंतु ज्ञेयत्वविशिष्टनारायणपरं नारयणपदं । इत्थं चैकांतिनां ज्ञेयत्वविशिष्टो नारायणः किंचित्प्रयोजनोद्देशेन न भवतीत्यनेन विशेषणीभूतज्ञाने किंचित्प्रयोजनोद्देश्यकत्वं निषिध्यत इति तस्य फलरूपत्वं तद्विषयस्य सुखादिवत्परमेष्टत्वं लभ्यत इति बोध्यं । नारायणबोधस्य फलत्वे तस्य फलांतराभावाद्बोधे सफलत्वघटितप्रामाण्यमागमस्य कथमागतमिति चेन्न। फलनिर्वाहिका या यथार्थज्ञानानुकूलशक्तिः तद्वत्त्वस्यैव लक्षणत्वेन बोधस्य तत्फलत्वे तन्निर्वाहकशक्तिरेव फलनिर्वाहिका । फलस्य बोधसाध्यत्वे बोधानुकूलशक्तेः परंपरया फलनिर्वाहकत्वेन सामंजस्यमित्याशयात् । मूलोक्तेष्टत्वं मध्यमभक्तान् प्रतीष्टसाधनत्वेन तस्यापि बुभुत्साद्वारा वेदोपादेयत्वनिर्वाहकत्वादित्याशयेनाह । इतरान्प्रतीत्यादि । इष्टवत् एकांतिनां परमेष्टत्वविशिष्टवत् । इष्टसाधनस्य इष्टसाधनत्वेनेष्टस्य बुभुत्सितत्वात् । मध्यमभक्तानां इष्टतायाः जिज्ञासाद्वारैव वाक्योपादेयत्वस्य निर्वाहकत्वमिति हृदयं । इष्टवदित्यस्य लोकानां परमेष्टसुखस्यैवेति नार्थः । लोकानां सुखोत्पत्तावेवेच्छासत्वेन स्वसमवेतसुखजिज्ञासा तत्प्रश्नोत्तराद्यभावस्य पूर्वमुपपादितत्वादिति । एवमागमप्रामाण्यमुपपाद्य तस्य सोपपत्तिकत्वेन स्वार्थे तात्पर्यदृढीकरणायानुमानप्रमाणपरतयापि विशेषणानि योज-

(टीका) अनुमानमपि रमापतिं गमयतीत्याशयवानाह । **नित्यातादृशाचिच्चेत्य यंतेति** । अत्र तदिति ' सर्वत्राखिलसच्छक्तिः स्वतंत्रोऽशेषदर्शन ' इत्युक्तं परामृश्यते । चिच्चेतनं-रमाब्रह्मादि । चेत्यं दृश्यं जडं प्रकृत्यादि । ननु चेत्यता चितोप्यस्ति । यद्वक्ष्यति । आत्मनोपि दृश्यत्वादिति । तत्कथमुच्यते चेत्यं दृश्यं जडमिति । सत्यं । चितः पृथगभिधानात्समानोऽपि चेत्यशब्दो जडविषयोऽवगम्यते । चेत्यग्रहणादेवोभयलाभे सति किं चिद्ग्रहणेनेति चेत्सत्यं । कुरुपांडवन्यायेनाऽसाधारणधर्मेण व्यवहारोपपत्तिः । नित्यमतादृशे अपर्याप्तशक्तिनी अस्वतंत्रे असर्वज्ञे चिच्चेत्ये यंतेति विग्रहः ।

---

यितुमाह । अनुमानमपीति । तदितीति । नित्यातादृशेत्यत्रत्यतच्छब्देनेत्यर्थः । दृश्यमिति । चिती संज्ञाने इति धातोः कर्मणि यत्प्रत्ययेन लब्धमक्षरार्थमुक्त्वा तेन रूपेणापि तात्पर्यविषयीभूतमर्थमाह । जडमिति । कुरुपांडवन्यायेनेति । अत्र कुरुपांडवशब्देन तच्छब्दघटितवाक्यविशेषः परामृश्यते । न्यायपदं तद्वाक्यस्य पौनरुक्त्यपरिहारकयुक्तिपरं । असाधारणधर्मेण पदांतरबोध्यधर्मन्यूनवृत्तिधर्मेण । व्यवहारपदं ज्ञानजनकशब्दरूपप्रकृतवाक्यपरं । धर्मेणेति तृतीयार्थः प्रकारकत्वं ज्ञानेऽन्वेति । न्यायेनेति तृतीयार्थो ज्ञाप्यत्वं उपपत्तिपदार्थभूतपौनरुक्त्याभावेनान्वितं । तथा च कुरुपांडवपदघटितवाक्यनिष्ठपौनरुक्त्यपरिहारकयुक्तिज्ञाप्यो असाधारणधर्मप्रकारकज्ञानजनकप्रकृतवाक्यनिष्ठपौनरुक्त्याभावस्तस्मादित्यर्थः। कुरूणामित्युक्तावपि पांडवेषु कुरुत्वाग्रहदशायां पांडवसंतानवीजत्वाभावभ्रमं क्षिप्रमपनेतुं यथा पांडवशब्दप्रयोगस्तथा प्रकृतेपि जडस्य स्वतः शक्तिशून्यत्वात्तस्येश्वरनियम्यतास्तु । चेतनस्य जडनियामकतयोपलभ्यमानस्य ईश्वरवच्चेत्यपदेन ग्रहणाभावात्तदन्यपरमेव चेत्यपदमिति भ्रमेण चिन्नियामकत्वाभावभ्रमः स्यात् । तत्परिहाराय विशेषरूपेणैव तद्ग्रहणमतो न पौनरुक्त्यादीनि भावः । नित्यपदस्य ध्वंसाप्रतियोग्यर्थत्वे केषुचिज्जडेषु व्याप्त्यादसंग्रहापत्तिरित्याशंक्य सार्वदिकार्थकक्रियाविशेषणेन समास इत्याह । नित्यमिति । अत्र नित्यमित्यस्य नातादृशत्वपदार्थेनैवान्वयः । किंतु नियंतृत्वेपि नित्येत्यतादृशत्वस्य नियंतृतायाश्च स्वरूपसंकीर्तनमिति वक्ष्यमाणत्वात् । ननु तंत्रेणैवोभयत्रान्वयः स्वीकार्यः । नच तस्य हेतुकोटौ वा साध्यकोटौ वा प्रयोजनाभावे एकदोच्चरितशब्दस्योपस्थित्यादिद्वयकल्पनारूपतंत्रानुसरणं युक्तं । किंतु स्थितस्य गतिश्चिंतनीयेति न्यायेनातादृशत्वस्वरूपकीर्तनपरमित्येव वक्तव्यं । तथाच नियंतृतायाः स्वरूपकीर्तनत्वकथनस्यैव वक्ष्यमाणस्यायुक्तत्वात्तदनुरोधेनोभयत्रान्वयस्वीकरणमयुक्तमेवेति चेन्न । अत्र केचित् विनिगमकाभावान्नित्यमतादृशे इति नित्यं चिच्चेत्ययंते च योजनाद्वयमप्यभिमतं । नच नित्यातादृशपदयोः सान्निध्यमेव विनिगमकमिति वाच्यं । द्वितीययोजनायां अतादृशाचिच्चेत्ययंतेति विशिष्टपदस्यैव नित्यमिति पदसान्निध्येन तस्याविनिगमकत्वात् । नच नित्यमतादृशे इति एकत्रैव तदन्वयप्रदर्शनं विरुद्धमिति वाच्यं । द्वधान्वयप्रदर्शनं न कृतं । किंत्वेतत्समासघटकं नित्यपदं ध्वंसाप्रतियोग्यर्थकं न भवति किंतु सार्वदिकार्थकमिति सूचनाय शब्दस्वरूपमात्रनिर्देशः कृतः । योजनायां तु स्ववक्ष्यमाणानुसारेणेवेत्यभिप्रायात् । न चैवं विकल्पेन योजनाद्वयस्वीकारे नित्येत्यतादृशत्वस्य नियंतृताया वा इति वक्तव्यं । समुच्चायकचशब्दस्त्वयुक्त इति वाच्यं । योजनाभेदेनेत्यध्याहारेण वा चशब्दस्य वाशब्दार्थत्वेन वोपप

(टीका) इदमुक्तंभवति । चिच्चेत्ये खल्वपर्याप्तशक्त्यादिमत्तया प्रत्यक्षादिसिद्धे । अन्यथा नित्यसुखादिप्रसंगात् । यच्चैवंविधं तत्केनापि नियतमेव प्रवर्तमानमुपलब्धं । यथा रथादि । तदेताभ्यामपि येन केनचिन्नियताभ्यां भवितव्यं। यश्चैतन्नियंता स भगवान् रमापतिरिति । नित्येत्यताद्दशत्वस्य निर्गतृतायाश्च स्वरूपसंकीर्तनम् । चित एव पक्षीकारे प्रकृतिनियततया सांख्यानां, कर्माधीनतया च मीमांसकानां सिद्धसाधनं स्यात् । तत्परिहाराय चेत्यस्यापि परायत्ततया चिन्नियंतृताऽसंभवप्रदर्शनाय पक्षीकरणं । चेत्यमात्रपक्षीकारे च लोकदृष्ट्या पाशुपतादि (स्मृति) रीत्याच चिन्नियंतृतया सिद्धसाधनं स्यात् । तन्निरासाय चितोऽपि पक्षीकारः ।

---

न्तोरित्याहुः । परे तु चिच्चेत्यनिष्ठास्वातंत्र्यादेरसार्वदिकत्वे तस्यैव पर्याप्तशक्त्यादिदशायामितरनियामकत्वसंभवादीश्वरत्वेन भवदभिमतपुरुषनिष्ठनियामकताया अपि राजादिनिष्ठनियामकतावत्कादाचित्कत्वे तत्कालेऽन्यस्य नियामकस्यावश्यकत्वात् । चिच्चेत्ययोरेव कथंचिन्नियम्यनियामकभावेनोपपत्त्या नैतद्विलक्षणेश्वरः सिध्यतीत्यर्थांतरतापरिहारायोभयत्र विशेषणमुपात्तं । तेन च सर्वदान्धपर्याप्तशक्तित्वादंधपंगुन्यायेन प्रवृत्यारंभ एव न घटते । एतन्निष्ठनियामकतायाः सदा संभवान्नात्र तद्दोषोऽतो विलक्षणेश्वरोऽगीकार्य इति सिध्यति । एतदेवाभिप्रेत्य चिच्चेत्य एवांधपंगुन्यायेनेत्याद्याशंक्य समाहितं । नित्यपदस्य हेतुकोटौ साध्यतावच्छेदककोटौ वा निवेशाभावतात्पर्येण स्वरूपसंकीर्तनमित्युक्तं । न तु सर्वथा निरर्थकत्वाभिप्रायेण । अत एव सभित्युक्तं । अन्यथा प्रमेयत्वमपि कुतो न स्वरूपकथनार्थमुक्तं । एवं च तत्रैणैवोभयत्रोपादानं कर्तव्यमेवेति प्राहुः । इदमुक्त भवतीति । ननु नियामकत्वे नैतदनुमानेनेश्वरासिद्धेरेतदनुग्राहकं 'एष त आत्मा अंतर्याम्यमृतः' इत्यादिकमेव वाक्यमीश्वर आगमतयोदाहर्तव्यं | तद्विहाय किमर्थं द्यावाभूमीत्यादिजगत्कर्तृत्वप्रतिपादकागमोदाहरणमिति चेत् । सत्यं । तदपि पूर्वमादिपदेन गृहीतं । नियंतेत्याद्युक्तिः कर्तृत्वादेरुपलक्षणपरा । क्षित्यादिकर्तृत्वेनापीश्वरः सिध्यति । नियामकत्वोक्तिस्तु उत्तरग्रंथोत्थानाय । अतः क्षित्यादिकं सकर्तृकं इत्यनुमानेनेश्वरो न सिध्यतीति न भ्रमयितव्यमिति सूचनाय तदनुग्राहकमेव कंठत उपात्तमित्यदोषः । प्रत्यक्षादिसिद्धे इति। असिद्धिपरिहारायेदं । यथा रथादीति । पक्षस्यापि रूपांतरेण दृष्टांतत्वमविरुद्धं । सामानाधिकरण्येन सिद्धेर्विरोधित्वांगीकारेपि रूपांतरेण सिद्धेः रूपांतरेणानुमितावविरोधित्वादिति भावः । चितोऽपि पक्षीकार इति । ननु किमत्र पक्षतावच्छेदकं । न चित्त्वं नापि जडत्वमन्यतरासंग्रहप्रसंगात् । नापि तदन्यतरत्वं सामानाधिकरण्येन साध्यसाधने सिद्धसाधनतायाः अवच्छेदकावच्छेदेन साधने चांशे बाधस्य चापत्तेः । नापि जीवजडान्यतरत्वं । रमया स्वमतेऽर्थांतरत्वापत्तेः। नापि तद्घटितान्यतमत्वं । ईश्वरवत्तस्या अप्यज्ञातत्वेन तद्घटितपक्षतावच्छेदकाग्रहात् । नापीश्वरान्यत्वं । तस्यासिद्धिकाले तदन्यत्वविशेषणस्यासिद्धेरिति चेन्न । यतोऽत्रास्वतंत्रत्वापर्याप्तशक्तित्वादीनामेकस्य पक्षतावच्छेदकत्वे परस्य हेतुत्वं बोध्यं। ननु किमिदमस्वतंत्रत्वं । न स्वतंत्रभेदः। अपर्याप्तशक्तिमत्वं न पर्याप्तशक्तिमद्भेदः। एतदनुमानात्प्राक्प्रतियोग्यप्रसिद्ध्या ताद्दशविशेषणाप्रसिद्धेः । नापि स्वातंत्र्याभावः पूर्णशक्त्यभावश्च । तस्यापि प्रतियोग्यप्रसि-

त्थ्या मीमांसकादीन् प्रति पक्षतावच्छेदकाप्रसिद्धेः । तान्प्रत्येवेदानीमीश्वरस्य सिसाधयिषितत्वात्। स्वपक्षेऽप्येतादृशानुमानात्प्राक् पूर्णशक्तित्वादिधर्माणामनुपस्थित्या तदभावग्रहासंभवाच्च । नाप्यल्पविषयकशक्तिमत्त्वमपर्याप्तशक्तिमत्वं स्वरूपसत्ताप्रवृत्यादौ परापेक्षत्वमस्वातंत्र्यमिति भावरूपमेवैतदिति । जडे शक्तेरभावेनाल्पशक्तित्वस्य पक्षतावच्छेदकत्वे जडासंग्रहस्य हेतुत्वे भागासिद्धेरापातात् न जडे ऽल्पशक्तेः संभवति । "अल्पशक्तिरसार्वज्ञं पारतंत्र्यमपूर्णता ॥ उपजीवकत्वं जीवत्वं" इति जीवधर्मत्वोक्तेश्च । अस्वातंत्र्यस्य प्रवृत्यादौ परनियम्यत्वघटितस्य साध्यस्वरूपतया तस्य पक्षतावच्छेदकत्वे वा हेतुत्वे वा तत्प्रसिद्ध्यैव कृतार्थतया ऽनुमानवैयर्थ्यात् । नच पराधीनप्रवृत्तिकत्वपराधीनसत्ताकत्वयोरेकस्य साध्यत्वमपरस्य पक्षतावच्छेदकत्वं हेतुत्वं वेति वाच्यं। प्रवृत्तेर्यत्नरूपत्वे जडे तदसंभवः । क्रियारूपत्वेऽप्यव्याकृताकाशकालादिरूपव्याप्तजडासंग्रहः । तथाच यथा संभवं बाधासिद्ध्यादिदोषप्रसंगः । नच सत्ताप्रवृत्याद्यन्यतमेषु परापेक्षत्वमस्वातंत्र्यं पक्षतावच्छेदकं हेतुर्वा, एकमात्राधीनतावदन्यतमकत्वं साध्यमतः साध्यकोटावधिकनिवेशान्नानुमानवैय्यर्थ्यमिति वाच्यं । तादृशसाध्यस्य रथादावभावेन व्यभिचारस्फूर्त्या व्याप्तिग्रहायोगात् । सर्वज्ञभेदरूपस्य सर्वज्ञाभावस्य पूर्ववदप्रसिद्धिः। स्वमते दुर्ग्रहता च। सर्वाविषयकज्ञानत्वं च जडासंग्राहकमिति न तस्यापि पक्षतावच्छेदकत्वादिकं युक्तं। नापि अल्पशक्तिमत्वमेवापर्याप्तशक्तित्वं । जडेऽपि कार्यानुकूलशक्तेरंगीकारेण तस्याल्पशक्तिमत्वे बाधकाभावात् । शक्तावल्पत्वं च किंचित्कार्याननुकूलत्वं । स्वानियम्यधर्यत्किंचित्कत्वं पारतंत्र्यं । ईश्वरस्य रमाऽनियम्यत्वेन रमाया अपि पक्षता युक्तेति । कालस्य प्रकृतेस्तदभिमानिचित्प्रकृतेश्च सर्वकार्यानुकूलत्वेन तेषां पक्षकोटावनिक्षेपप्रसंगेन तदन्यतममादायार्थांतरताप्रसंगः । ईश्वरासिद्धेः प्रागस्वातंत्र्यमपि रमायां दुर्ग्रहमिति तत्परिष्कारोऽप्यनुपपन्न इति चेन्न। अपकर्षाश्रयशक्तिमत्वमल्पशक्तिमत्वं । किंचिन्निष्ठस्वामितानिरूपकत्वं पारतंत्र्यमित्यंगीकारात् । दंडो घटे शक्तः न पटे इति प्रतीतेः जडेऽपि शक्तिरस्त्येवेति न तदसंग्रहः । अन्येतु जडे शक्त्यनंगीकारे अपकर्षानाश्रयत्वशक्तित्वोभयाभाववत्स्ववृत्तिधर्मसामान्यकत्वमेवाल्पशक्तित्वमित्याहुः । नच सर्वत्रोक्तपारतंत्र्यग्रहेणैव कृतार्थत्वादनुमानवैयर्थ्यं । किंचिन्नियम्यसत्तास्वरूपप्रवृत्याद्यन्यतमवत्वरूपसाध्यस्य भिन्नत्वेन तद्ग्रहस्यैव तद्ग्रहरूपत्वाभावात् । उक्तपारतंत्र्यग्रहे साध्यग्रहो भवत्येवेति चेत । सत्यं । तस्य व्याप्त्यादिज्ञानमूलकत्वेनानुमानतया वैय्यर्थ्यशंकानवकाशात् । उक्तपारतंत्र्यस्य साध्यरूपत्वाभावेन तदवच्छिन्नेऽल्पशक्तित्वादिहेतुनापि तात्सिद्धिरविरुद्धेति न कोपि दोषः । अन्येतु स्वातंत्र्याभावः पूर्णशक्तित्वाभावसर्वज्ञत्वाभावादय एव विकल्पेन पक्षतावच्छेदकहेत्वादयः। ननु अपकर्षाश्रयशक्तिमत्वस्वामितानिरूपकत्वादिधर्माणां पुरोवर्तिषु केषुचिदनुभवसिद्धत्वेन तेन सर्वेषामुपस्थित्या ब्रह्मादीनां विशेषरूपेणागमेनाग्रहकालेपि पक्षकोटौ निक्षेपात्सर्वे नियामकतयेश्वरसिद्धिर्भवति। नच सामान्यरूपाभावात्कथमेतदिति वाच्यं। सिद्धांते विशेष बलादनुगतसदृशधर्माणां सामान्यव्यवहारनिर्वाहकत्वांगीकारात् । पुरोवर्तिषु कतिपयधूमेषु गृहीतेषु सकलधूमगोचरव्यवहारवत् प्रकृते बाधकाभावात् । भवतां पक्षे ईश्वरसिद्धेःप्राक् स्वातंत्र्यादेः कुत्राप्यगृहीतत्वेन तदभावस्याऽपि गृहीतुमशक्यतया कथं पक्षतावच्छेदकत्वादिकं । अत एव वक्ष्यति । उक्तहेतूनां पक्षधर्मताबलात् पूर्णशक्तित्वादिनैव सिद्ध इत्यनेन ग्रंथेनानुमानेनैव पूर्णशक्तित्वादिसिद्धिरिति चेन्न । आगमेनैव स्वातंत्र्याभावादेः रमाब्रह्मादिषु सर्वेषु गृहीतुं शक्यत्वात् । न चागमेनैव

(टीका) नच चिच्चेत्ये एवांधपंगुन्यायेनान्योन्यनियते भविष्यतः किमीश्वरेणेति वाच्यं । स्वतः शक्तिमात्रशून्ययोरितरेतराश्रयणे इतरेतरप्रत्यासत्तेरेवायोगात् । प्रयोजनमननुसंदधदयं न नियच्छेत् । तदनुसंधानेचापूर्णः स्यादिति तर्कपराहतिपरिहाराय नियमनशीलत्वात्प्रयोजनानुसंधानाभावेपि तदुपपन्नमिति ज्ञापयितुं यंतेति ताच्छीलिकतृन्नंतप्रयोगः । तथाच श्रुतिः—"देवस्यैष स्वभावोऽयम्" इति । नच रुद्रादीनामिव रमापतेरपि कथं चिच्चेत्ययंतृतोपपत्तिरिति वाच्यं । यतोऽसावपर्याप्तशक्तिमत्वादीनां हेतूनां पक्षधर्मताबलेन सिध्यन् पूर्णशक्त्यादिरूपेणैव सिद्ध इत्याशयवानाह—"सर्वत्राऽखिलसच्छक्तिः स्वतंत्रोऽशेषदर्शनः" इति ।

---

सर्वसित्धेरनुमानवैय्यर्थ्यमिति वाच्यं । आगमेनेश्वरस्वरूपे जगति स्वातंत्र्याभावादौ च प्रतिपादिते च सति भगवत्स्वरूपपराणामागमानां वाद्यंतररीत्या स्वार्थे तात्पर्याभावशंकायां सोपपत्तिकत्वेन स्वार्थे तात्पर्यं समर्थयितुं आगमोपजीवनेनैव आगमोक्तपक्षतावच्छेदकादिकमनुसृत्यानुमानस्य प्रवृत्तत्वेन तद्वैय्यर्थ्यानवकाशात् । सर्वथागमाननुसरणे उपाधिप्रतिपक्षौ तु कनामानिव दुर्वचाविति न्यायेनानुमानेन तत्सित्धेरेवाभावप्रसंग इत्याहुः । ननूक्तपक्षतावछेदकाक्रांतेषु किंचिन्नियम्यत्वसाधने स्वामितानिरूपकाणां सर्वेषां स्वस्वामिनियम्यत्वस्य सित्धत्वात्सित्धसाधनं एकमात्रनियम्यत्वं व्यभिचारान्न साधयितुं शक्यमित्युक्तमिति चेन्न । एकैकस्मिन् तत्तनियम्यत्वस्य प्रत्यक्षसित्धत्वेऽपि स्वामितानिरूपकं सर्वं किंचिन्नियम्यमिति सित्धेरनुमानफलत्वात् । न चैकैकस्यैकं नियामक इति पर्यवसानान्नेश्वरासिद्धिः स्यादिति वाच्यं । स्वामितानिरूपकसामान्ये किंचिन्नियम्यत्वं स्वतो नियामकरूपेश्वरं विना न पर्यवस्यति । इतरनियम्यतयैव सर्वेषां नियामकत्वे 'अनवस्थितेरसंभवाच्च' इति सूत्रभाष्योक्तरीत्याऽनवस्थाप्रसंगेन मूलक्षतिप्रसंगात् । इतरेतराश्रयेण प्रत्यासत्तेरेवायोगादित्यत्रानवस्थाया अप्युपलक्षणत्वेन गृहीतत्वेन उक्तरीत्या ईश्वरापर्यवसानस्यापि टीकाकृता निरस्तत्वादिति सर्वं चतुरस्रं । ताच्छीलिकतृन्नंतप्रयोगइति । स्वभावबोधकतृन्प्रयोग इत्यर्थः । अत एव पूर्वं चिच्चेत्ये यंतेति गम्यादिषूपसंख्यानमभिप्रेत्य द्वितीयया विग्रहः प्रदर्शितः।'न लोकाव्ययनिष्ठाखलर्थतृनां'इति षष्ठीनिषेधादिति भावः। देवस्यैषइति । देवस्य क्रीडादिगुणविशिष्टस्य परमेश्वरस्यैष इच्छारूपोऽयं सृष्ट्यादिव्यापारः स्वभावः नतु प्रयोजनार्थद्यनुसंधानेनागंतुक इति श्रुत्यर्थः । अन्यत्र टीकाकृदुक्तरीत्याऽवसेयः । नच रुद्रादीनामिवेति । तथाच पक्षकोटिनिविष्टेषु अल्पशक्त्यप्रत्यासत्यनुपपत्तिवदेतदतिरिक्तेश्वरपक्षेऽपि तस्यावर्जनीयत्वेन तस्याबाधकत्वांगीकारे चिच्चेत्ययोरेवांधपंगुन्यायेन परस्परनियम्यनियामकभावो युक्त इति अनुमानस्यार्थांतरत्वमप्रयोजकत्वं वेति भावः । हेतूना पक्षधर्मताबलेनेति । व्याप्तिविशिष्टहेतोः पक्षसत्वस्य यद्बलं नियामकं पूर्णशक्त्यादिकं विना स्वसत्वायोगरूपानुपपत्तिप्रतिसंधानविषयत्वं तस्मादित्यर्थः। अयं भावः। व्याप्तिविशिष्टस्य हेतोः पक्षवृत्तित्वं यादृशसाध्यं विनानुपपन्नत्वेन गृह्यते व्यापकतावछेदककोटयप्रविष्टमपि तद्रूपमनुमितौ साध्ये भासते। यथा वन्हिव्याप्यधूमस्य । पर्वते सत्वं महानसीयत्वादिशून्यवन्हिं विना ऽनुपपद्यमानत्वेन गृह्यमाणं महानसीयादिवन्हिभिन्नवन्हिमानिति

(टीका) सर्वत्र सकलचिच्चेत्यनियमनविषये अखिला पर्याप्ता सती, प्रतिबंधादिदोषरहिता शक्तिर्यस्यासौ तथोक्तः । स्वतंत्रः स्वेच्छाधीनप्रवृत्तिः । अशेषविषयत्वादशेषं दर्शनं यस्यासावशेषदर्शन इति । अत्राहुः । भवतु चेत्यं परमेश्वरनियतं । चेतनश्च संसारी । मुक्तस्तु नच केनापि नियतः । नियम्यनियामकभावस्य भेदव्याप्तत्वात् । नच मुक्तस्य कुतोपि भेदोस्ति प्रमाणाभावात् । व्यापकाभावे च व्याप्यनिवृत्तिरवश्यंभाविनीति तत्राह—

---

अनुमितिं संपादयति । एतदेव इतरबाधसहकारेण परामर्शव्यापकतावच्छेदकत्वेनागृहीतधर्मं साध्ये अवगाहमानामनुमितिं जनयतीति नवीना निष्कर्षयंति । तथाल्पशक्तित्वादिविशिष्टनियम्यत्वमनवस्थान्योन्याश्रयादिबाधकेनास्वतंत्रत्वादिरूपपक्षतावच्छेदकावच्छेदेन न घटत इति बाधसहकृतपरामर्शेन पूर्णशक्तित्वादिविशिष्टकिंचिन्नियम्यमित्येवानुमितिर्जायतेऽतो न पूर्वोक्तरीत्या ऽर्थांतराद्यवकाश इति भावः । कृष्णं द्रक्ष्यन्यातीत्यादौ दर्शनेच्छागमनयोः समानकालिकत्ववदत्रापि पक्षधर्मताबलेन सिध्यन् पूर्णशक्त्यादिमानेव सित्ध इत्यत्र सिद्धिद्वयस्य समानकालिकत्वं लब्धं । ज्ञानद्वयस्य यौगपद्यायोगादेकस्यैव स्वसमानकालिकत्वस्य वक्तव्यतयानुमितेरेव पूर्णशक्त्यादिविषयकत्वलाभ इति ज्ञेयं । स्वेच्छाधीनप्रवृत्तिरिति । अभेदेऽपि विशेषबलादधीनत्वं स्वीक्रियते । ' स्वेच्छया विष्णुरव्ययः सृष्ट्यादिकं करोत्यधा ॥' इति प्रमाणानां तृतीयया प्रयोजकत्वबोधकानां प्रामाण्यनिर्वाहायेति भावः। नन्वेवं ब्रह्मादिप्रवृत्तेरपि स्वेछाधीनत्वात्तेष्वतिव्याप्तिः।मात्रार्थांतर्भावे त्वितरांशवैयर्थ्यमिति चेन्न। स्वनिर्वाहकेच्छात्वव्यापकस्वसामानाधिकरण्यका या प्रवृतिस्तद्वत्वं स्वप्रवृत्तिनिर्वाहकेच्छात्वव्यापकस्ववृत्तित्वकत्वं वा लक्षणमित्यभिप्रायात् । मात्रार्थांतर्भावेन तत्वसंख्यानटीकोक्तं मार्गांतरमिति न तद्विरोध इति ज्ञेयं । अशेषविषयत्वादशेषमिति । तथा चाशेषपदं लाक्षणिकं विषयविषयिणोरभेदोपचारो वेति भावः । व्यधिकरणबहुव्रीहेरननुशिष्टत्वाभिप्रायेणाशेषस्य दर्शनं यस्येति विग्रहमुपेक्ष्योक्तरीतिरनुसृतेति संप्रदायविदः । केचित्तु न विद्यते शेषं स्वाविषयीभूतात्मकावशिष्टपदार्थो यस्य ज्ञानस्येति व्युत्पत्या शेषपदमशेषविषयकपरं न लक्षणा नाप्यभेदोपचारः । उक्तरीत्या मुख्यवृत्यैव समानाधिकरणबहुव्रीहेरुपपत्तौ अशेषपदस्य सर्वार्थकत्वमंगीकृत्य सविवादव्यधिकरणबहुव्रीह्याश्रयणमयुक्तमिति तदुपेक्षेत्याहुः। अत्राहुरिति । यथाश्रुतार्थे मायावादिभास्करमतानुयायिन इत्यर्थः । मुक्तस्तु न केनापि नियत इति । तथाच नित्यं नियंतेत्युक्तिरसंगतेत्यभिप्रायः। यद्वा मुक्तिदशायां तत्स्वरूपसत्तादेरितरानियम्यतयैव स्थितिवदन्यदापि(संसारदशायामपि) तथैव स्थितिसंभवाच्चिन्त्यत्ययोरितरनियम्यत्वं मास्त्वित्यनुमानं(चिच्चेत्ये केनचिन्नियते अपर्याप्तशक्त्यादिमत्वात्)अप्रयोजकमिति भावः । न च मुक्तस्य कुतोपि भेदोस्तीति । 'आमुक्तेर्भेद एव स्याज्जीवस्य परमस्य च ॥ मुक्तस्य तु न भेदोस्ति भेदहेतोरभावतः ॥'इत्यादीनां भेदसामान्यनिषेधकप्रमाणानां सत्वादिति भावः । ननु मुक्तौ भेदग्राहकप्रमाणबाधात्तेषां न स्वार्थे प्रामाण्यमित्यत आह। प्रमाणाभावादिति । भेद इति शेषः । अस्य च (प्रमाणाभावस्य) भेदाभावे भेदग्राहकप्रमाणबाधाभावद्वारा हेतुत्वं बोध्यं । यद्वा किं भेदाभावे प्रमाणांतरोपन्यासेन भेदे प्रमाणाभाव एव

**विमतो भिन्नो मुक्तत्वात् यदित्थं तत्तथा यथा संप्रतिपन्नः ।**

(टीका)ननु ग्रंथो हि वादप्रक्रियया प्रवर्तते । शिष्यानुकंपया प्रवर्तनात् । वादे च पृष्टेनागम एवादौ वक्तव्यः साध्यसिद्ध्य इत्यंगीकारः। तत्कथमनुमानमुच्यते । सत्यं - आगमोऽप्यत्रार्थे अभिधास्यते । अनुमानं तु तदर्थावधारणार्थमुपोद्घातप्रक्रिययोपन्यस्तमित्यदोषः । अत्र विमत इति संसारान्मुक्तो विवक्ष्यते ।

---

तदभावसाधक इत्याशयेनाह । प्रमाणाभावादिति । वादप्रक्रियया । वादवृत्तितत्वनिर्णयोद्देश्यकत्वादिधर्मादिना सादृश्येन । कुत इत्यतः । शिष्यानुकंपयेति । उपोद्घातप्रक्रिययेति । पृष्टेनागम एवादौ वक्तव्य इत्यत्र आगमपदस्य चागमोपयुक्तप्रमेयग्राहकतया एवकारेण तदन्यानुमानादेरेव व्यवछेद इति भावः । ननु विमतपदस्य विवादविषयोऽर्थः । भिन्न इत्यादिविशेषसमभिव्याहाराच्च भेदप्रकारकविमतिविषयत्वं पक्षतावछेदकं लभ्यं । तदवछिन्ने साध्यसाधनमयुक्तं । विमतिसाध्यसंशयस्यान्यधर्मितावछेदकत्वेनानुमितेः संशयनिवर्तकत्वाभावापातेनानुमानवैयर्थ्यापत्तेरित्यत आह । अत्रेति । विमतपदं संसारान्मुक्तस्य प्रकृतानुमानपक्षस्य परिचयार्थैव ननु विमतत्वस्य पक्षतावछेदकत्वलाभायेति भावः। ननु न्यायामृते विमतेः पक्षतावछेदकत्वानुसरणं कथमुपपद्यत इति चेत् न । समानधर्मिताकत्वेन प्रतिबंधकतापक्षमाश्रित्याभ्युच्चयवादेन तत्र तथोक्तत्वात् ।

* [ ननु विमतेः पक्षतावच्छेदकत्वानंगीकारे मूले मुक्त इत्यादिपक्षनिर्देशं विहाय विमतमिति पदप्रयोगस्यानर्थक्यं स्यात् । नच विमतिवाक्यस्य सर्वत्रावश्यकताबोधनार्थं तदिति युक्तं। तदावश्यकतायाः विप्रतिपत्तिसाध्यसंशयस्य पक्षतारूपत्वाभावाद्युपपादनेन न्यायामृते निरस्तत्वेन तस्य सिद्धांतत्वाभावात् । यत्तु विप्रतिपत्तिरावश्यक्येव विप्रतिपत्त्या संशयेन तदभावरूपफलेच्छया न्यायवाक्यरूपविचारावसरेण विप्रतिपत्तेर्विचारांगत्वात् । ननु वादिनोः स्व स्वपक्षनिश्चयवत्वध्रौव्येण मध्यस्थादीनामपि विद्वत्त्वात् कुत्र संशयो जायते। किंच मूर्खस्य विचारे नियमने स्वस्याकीर्तिः स्यादिति तत्परिहाराय उभयोः समाविद्यत्वपरीक्षायाः मध्यस्थेन कर्तव्यतया तेन तदुभयनिष्ठान्यतरपक्षनिश्चयस्यापि निश्चिततत्वेन तत्संभावनापि नास्तीति कथं संशयो भवत्विति बुध्या मध्यस्थो विप्रतिपत्तिवाक्यं प्रयुंजतीति चेन्न । तत्काले संशयानुपधानेपि विप्रतिपत्तेः संशयस्वरूपयोग्यत्वरूपकारणत्वेन संबंधितया विप्रतिपत्तिरूपैकसंबंधिज्ञाने सत्यपरसंबंधिरूपसंशयस्मरणे सति प्रतियोगिज्ञानानंतरं तदभावरूपफलज्ञानोदयेन तदिच्छया तन्निर्वाहकविचारे प्रवृत्तिनिर्वाहकतया विप्रतिपत्तेर्विचारांगत्वस्याभिमतत्वात् । नच तत्र संशयाभावस्तदा वर्तत एवेति कथं तदिच्छेति वाच्यं। कालांतरे व्यासंगादिना तदुच्छेदशंकया कालांतरेऽपि संशयाभावोऽनुवर्ततामिति बुध्या स्वजन्यानुभवाधीनसंस्कारदार्ढ्यादिद्वारा तन्निर्वाहकविचार इच्छासंभवात् । नच तत्र निर्णयमात्रफलकवादकथायां विप्रतिपत्तेरनावश्यकत्वं प्रत्यक्षालोकादिग्रंथसंमत्या नैयायिकादिसिद्धमेव । जल्पे तु स्वस्व विजयार्थमेव विचारे प्रवृत्तिसंभवेन फलांतरानुसंधानं नापेक्षितमिति वाच्यं । एवमपि सभ्यसभापत्यादीनां स्वकीयफलानुसंधानं विना तत्र मनः प्रणिधानायोगेनोक्तरीत्या विप्रतिपत्तेस्तदर्थकत्वात् । नच पूर्वोक्तरीत्या कुत्रापि फलानुप-

* १८-१९ पत्रयोर्मध्ये एतादृश [ ] चिन्हयोर्मध्यवर्तितं एकस्मिन् पुस्तकेऽधिकं दृश्यते

(टीका) तस्यात्मेत्येव ग्रहणे सिद्धार्था प्रतिज्ञा स्यात् । अद्वैतवादिनापि संसारिणो भिन्नत्वेनाभ्युपगतत्वात् ।

धाने स्वरूपयोग्यतापि नास्ति कल्पकाभावादिति वाच्यं । सभ्यानां सर्वेषां विद्वत्त्वनियमाभावात्सभाबहिर्भावेन कदाचित्तज्जातीयवाक्येन संशयस्यान्येषां संभवेन च फलानुपधानासिद्धेः । नचैवमज्ञानविपर्ययनिवृत्तिरूपफलप्रतियोग्यज्ञानादिजनकवाक्यमप्यावश्यकं स्यादिति वाच्यं । अज्ञानस्यानादितया तज्जनकवाक्यासिद्धेः । संशयनिवृत्तेरज्ञाननिवृत्तिमूलकत्वेन पृथक्यत्नानपेक्षणाच्च । सर्वेषामेकदर्शननिविष्टत्वनियमाभावेन सर्वनिरसनीयैककोटेरभावेन इदमित्थमेवेत्याकारकस्य विपर्ययवाक्यस्य दर्शयितुमशक्यत्वात् । किंच विप्रतिपत्तेर्नैतावन्मात्रं प्रयोजनं अन्यदपि वर्तते । विप्रतिपत्तिवाक्ये प्रयुक्ते सर्वैः कोटिद्वयस्य श्रुतत्वात्तदपलापपूर्वकं वादिनोरन्यतरेण विषयांतरग्रहणपूर्वकं स्वजयः स्थापितुं नैव शक्यते । अन्यथा जयपराजयव्यवस्थाभावप्रसंगात् । एवं मध्यस्थेन स्वयमेवैकैकं प्रत्येकैकपक्षदाने तत्समर्थनाशक्तेन वादिनान्यतरास्मिन्पक्षपातःस्वस्मिन्नसूयादिकं व्यवह्रियेताऽतो विप्रतिपत्तिवाक्येनोभाभ्यां कोटिश्रवणानंतरं स्वयमेव पक्षविशेष ग्रहणे पक्षांतरसमर्थनाशक्तत्वशंका लोकानां स्यादित्यभिप्रायवद्भ्यां वादिभ्यां त्वयैव कश्चन पक्षो देय इत्युक्त्यनंतरमेव तथाकरणे स्वस्य दोषाभावात् । अत एतदुभयप्रयोजनार्थमपि विप्रतिपत्तिरावश्यकी । एतेन साधारणधर्मादिप्रतिवंदिदानं परास्तं । तस्मात्स्वकर्तव्यनिर्वाहाय समयबंधादिवाद्विप्रतिपातिदर्शनीयैव । परमवयवेषु नाग्रह इति तन्न । शब्दो गुणत्वेन नैयायिकाभ्युपगमाविषयो द्रव्यत्वेन तु मीमांसकानामतो यथाकाममन्यतरपक्षाश्रयणं कार्यमित्याकारकेण संस्कृतेन तत्समानार्थकभाषारूपवाक्येन मध्यस्थोक्तेन पूर्वोक्तसर्वप्रयोजननिर्वाहात् । एकस्मिन्धर्मिणि विरुद्धकोटिद्वयशाब्दधीजननयोग्यत्वादिनाकुसृष्ट्यादियुक्तवाक्यविशेषरूपविप्रतिपत्तेरनावश्यकतायाः न्यायामृतोक्तायाः एतादृशशतोक्तिभिरप्यपरिहारात् । नहि न्यायामृते सर्वथानुपयोग उक्तः । किंत्वनावश्यकत्वमात्रं । नहि कथापूर्वं मध्यस्थादिभिर्भाषया व्यवहारे किंचिद्बाधकं । प्रत्युत प्राकृतादीनामपि सुज्ञानाय तस्यैवोचितत्वं च । अपिच सभापतिप्रेरितेनान्येनैवोक्तरीत्या वादिप्रतिवादिभ्यां पक्षपरिग्रहादिकं कारयित्वा नेतरः मध्यस्थो नियमितः । तत्र मध्यस्थस्य विप्रतिपत्तिदर्शनानवकाशाच्च । यत्र सर्वविषयेषु तत्काले मध्यस्थकल्पितवाक्यस्यान्यदाप्युच्चारनियमाभावात्संशयाजननं तेषु स्वरूपयोग्यत्वकल्पकाभावाच्च । क्वचित्तस्य सत्वेपि ज्ञानस्यैव स्वस्योपयोगेन सर्वेषां तज्ज्ञाननियमाभावेन सर्वेषां संशयस्मारकत्वायोगश्च केषांचित्संभवेऽपि भाविविचारस्य संशयनिवृत्तिनिर्वाहकत्वानुपस्थित्या तत्र सभापत्यादीनां मनःप्रणिधानस्य ततोऽनिर्वाहाच्च । यत्र सभापत्यादीनामन्यतरकोटिनिश्चय एव तत्र स्वकर्तव्यसन्मानोपयोगि तदुत्कर्षज्ञानार्थमेव मनःप्रणिधानोपपत्तेश्च वादिनोः प्रामाणिकत्वे निश्चितेऽसाधकतास्थलीयन्याये उदाहरणप्रयोगस्येव समयविशेषबंधस्याप्यकर्तव्यतया दृष्टांतस्य नियमेन सार्वत्रिकतयाऽसंमतेश्च । वाक्यविशेषस्य क्षेमसाधारणमज्ञाननिर्वाहकत्वमपि भवतीति फलस्मरणोपयोगितामात्रेण तत्प्रदर्शनप्रतिबंधपि युक्तैव । तस्मादवयवेष्विव विप्रतिपत्तावप्यावश्यकत्वाग्रहस्त्याज्य एवेत्यतो विमतं इति निर्देशप्रयोजनमाह ॥ ]

( संसारान्मुक्त इति निर्देशं विहाय विमतपदप्रयोगप्रयोजनमाह तस्येत्यादिना ) । अद्वैतवादिनापीति । आत्मत्वाश्रये शुद्धाचेति आत्मत्वोपहिते वा भेदा-

(टीका)

भेदस्य च पारमार्थिकत्वानौपाधिकत्वाभ्यामविशेषितत्वात्। मुक्त इत्येव तर्ह्युच्यतां। निगडमुक्तेन सिद्धार्थता स्यादिति चेत्। तर्हि संसारान्मुक्त इत्येवं वक्तव्यं।

---

भ्युपगमादिति भावः। पारमार्थिकत्वानौपाधिकत्वाभ्यामिति। अत्यंताबाध्यत्वोपाधिव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वरूपोपाधिकत्वाभावरूपविशेषणाभ्यामित्यर्थः। अविशेषितत्वादिति। विशेषणे मायावादिभास्करयोः साध्याप्रसिद्धिः स्यादिति भावः। मुक्त इत्येवोच्यतामिति। संसारिणि मुक्त इति व्यवहाराभावान्मुक्तत्वं संसारदशाव्यावृत्तं तदाश्रये संसारदशायां भेदसत्वेपि तदुपहिते भेदस्यासत्वात्प्रकृते तथैव साधनान्न सिद्धसाधनतेत्यभिमानः। संसारिणि मुक्त इति शास्त्रीयव्यवहाराद्यभावेपि निगडमुक्तः इदानीमयं मुक्त इत्यादिव्यवहारो वर्तत एवान्यथा (सर्वथा व्यवहाराभावे) मुक्ताः संसारसागरादित्यादौ संसारिव्यावृत्यर्थमवधिपदप्रयोगो व्यर्थः स्यादतत्साधारणं दुःखजनकपदार्थप्रतियोगिकविभागवत्वादिकमेव तदर्थतावच्छेदकं वाच्यं। तस्य संसारदशासाधारणतया तदुपहिते भेदसाधनेऽपि सिद्धसाधनतेत्यभिमाननिरासाभिप्रायेण समाधत्ते। निगडमुक्तेनेति। संसारान्मुक्त इत्येव वक्तव्यमिति। अत्र संसारपदं स्वरूपावरणपरं। मुक्तपदं च विभागावच्छिन्नवाचि। ध्वंसस्य सावधिकत्वाभावेन पंचम्यर्थान्वयस्य बाधितत्वेन तदवच्छिन्न (ध्वंसावच्छिन्न) वाचित्वायोगात्। विभागोपि न गुणः। दुःखाद्विमुक्त इत्यादावतिप्रसंगात्। किंतु संबंधध्वंसरूपापायमात्रं। पंचम्यर्थप्रतियोगित्वस्य संबंध एवान्वयः। स्वरूपावरणसंबंधध्वंसोऽक्षरार्थः। स्वरूपावरणध्वंसवत्वं पक्षतावच्छेदकं फलितं। यदत्राह कश्चित्। विमतो भिन्नो मुक्तत्वात्संप्रतिपन्नवदित्युक्ते शुद्धचिन्मात्रे मुक्ते (संसारदशायामित्यर्थः) भेदस्याभ्युपगमात्सिद्धसाधनं। मुक्तिदशायामिति धर्मिविशेषणत्वे परंप्रत्यसिद्धिर्मुक्तौ कालानभ्युपगमात्। मुक्तिदशायां कालोनाभ्युपगत इति व्याहतमिति चेन्न। तत्वज्ञानस्य स्वसमानाधिकरणस्वसमानविषयकाज्ञानतत्प्रयुक्तदृश्याधिकरणकालपूर्वत्वाभावनियमाभ्युपगमे फलतस्तन्निरासादिति। तत्तुच्छं। विप्रतिपत्तिसाध्यसंशयस्य मध्यस्थादिनिष्ठतादशायामुक्तानुमानप्रवृत्तेर्विमतपदप्रयोगबलेन सूचितत्वेन सिद्धसाधनत्वादिशंकाभावादग्रे ग्रंथकृतैव वक्ष्यमाणतया तदुद्भावने स्वव्याहतत्वस्य स्वप्रतिज्ञातार्थपरित्यागस्य चापत्योद्भावकस्यैव निग्रहप्रसंगात्। ननु किंचिद्धर्मोपहितमात्रे तदुपलक्षिते चैतन्ये सर्वाधिष्ठानभूते वा भेदस्यापि सत्वेन न मन्मते पक्षतावच्छेदकोपहिते वा तदुपलक्षिते वा भेदकोटिकविप्रतिपत्तिः संभवति। नच त्वन्मते घटश्चिन्नेत्यादिप्रतीतिसिद्धभेदस्य घटावच्छिन्नचित्यारोपितत्वेन चिति तादात्म्यसंबंधेन भेदसत्वेपि चिच्चिन्नेति प्रतीतिवारणाय नञुल्लेख्यप्रतीतौ विशेषणतासंबंधो भासते। तेन संबंधेन तु चिति स भेदो (चित्प्रतियोगिकः) नास्तीति वक्तव्यं। एवं च भेदांतराणामपि तादात्म्यसत्वेपि न विशेषणतासंबंधेन वृत्तित्वं। प्रकृते च मुक्तत्वोपलक्षिते तत्संबंधसंसर्गकभेदकोटिकविप्रतिपत्तिर्युक्ता। चिद्घटो नेति प्रतीतिसिद्धभेदो यद्यपि शुद्धचिति विशेषणतासंबंधेन वर्तत इत्यापाततः प्रतिभाति। तथापि स स्वोपहित एव वर्तते। अन्यथा शुद्धत्वहानिप्रसंगादेवं अन्येषामपि भेदानामिति शुद्धचिति भेदस्यासिद्धतया मुक्तत्वोपलक्षितायां चिति भेदकोटिकाविप्रतिपत्तिसंभवेन तत्र तत्साधने कथं सिद्धसाधनतावकाश इति वाच्यं। अनुमितेर्वा विप्रतिपत्तिघटकवाक्यस्य वा यदि मुक्तत्वरूपधर्मपुरस्कारेण विशेष्यावगाहिता तदा मुक्तत्वोपहितस्यैवानुमितौ भानान्न शुद्धचिति भेदसिद्धिः।

विप्रतिपत्तिघटकवाक्येन च तदुपहितभेदस्यांगीकृतत्वात्तन्निषेधरूपकोटिप्रतिपादनानुपपत्तिः।यदि चोपलक्षणभूतधर्मस्य धर्मांतरोपलक्षकत्वं क्वचिच्च स्वरूपोपलक्षकत्वं चांगीकृतं। तस्यायं निष्कर्षः। फलीभूतबोधे भासमानधर्मांतरोपस्थापकः सन् फलीभूतबोधे स्वयमभासमानः क्वचिद्भवति। क्वचिच्च फलीभूतबोधे भासमानस्वरूपमात्रोपस्थापकः सन् तत्र स्वयमभासमानः स्वरूपोपलक्षणमित्युच्यते इति एतदुदाहरणादिकं त्वाकरे व्यक्तं। एवं चेहापि यदि मुक्तत्वं धर्मांतरमुपस्थाप्य स्वयं निवर्तते तदा विप्रतिपत्तिवाक्येन धर्मांतरविशेषितचिति भेदनिषेधः कृतः स्यात्। स चानुपपन्नः। मुक्तत्वोपहित इव धर्मांतरोपहितेपि भेदांगीकारात्। एवं सिद्धार्था प्रतिज्ञा स्यात्। धर्मांतरोपहिते भेदस्याभ्युपगतत्वात्। यदि च स्वरूपमात्रोपलक्षणं स्यात् तदा मुक्तो न भिन्न इति वाक्यं वा नञ्घटितोक्तवाक्यं वा स्वरूपमात्रावगाहिनं (धर्मितावच्छेदकव्यवच्छेदाय मात्रपदं) भेदाभाववान् इत्याकारकं भेदवान् इत्याकारकं बोधं जनयेत्। तथा च कथं तद्वाक्ययोर्विप्रतिपत्तिवाक्यत्वं तदुभयजन्यबोधस्य तदर्थानबोधांतरस्य वा संशयरूपत्वाभावेन तज्जनकत्वाभावान्निर्धर्मितावच्छेदकसंशयाभावात्। अनुमितिरपि कथमुक्तविधमुक्तत्वोपलक्षितचिदवगाहिनी स्यात्। तस्याः निर्धर्मितावच्छेदकत्वाद्यभावात्। अथ मन्यसे। मुक्तत्वोपलक्षिते भानं नाम मुक्तत्वसामानाधिकरण्यमात्रस्य प्रकारांशे भानं प्रकारसंबंधे मुक्तत्वावच्छिन्नत्वभानं तु तदुपहिते भानं। प्रकृते च किंचिदुपहितचित्येव भेदस्य भवदंगीकृतत्वेन मुक्तत्वेनोपलक्षितायां शुद्धचिति भेदाभावकोटिका विप्रतिपत्तिर्युक्तेति। तदप्ययुक्तं। मुक्तत्वाश्रयत्वस्य मुक्तत्वोपहित एव सत्वेन तेन रूपेण शुद्धचितो विप्रतिपत्तिवाक्येन भासमानत्वेन तदुपहितस्यैव भानेन तत्र विप्रतिपत्त्ययोगस्योक्तत्वात्। यदि चोपहितधर्माणां शुद्धवृत्तित्वस्याभ्युपगमान्मुक्तत्वं शुद्धचिति वर्तत इति ब्रवीषि तदा भेदोपि तत्र वर्तत एवेति कथं तत्र तत्कोटिका विमतिः स्यात्। किंच शुद्धचिति कथमपि भेदो नास्तीत्यभ्युपेत्य मुक्तत्वोपलक्षितायां भेदाभावकोटिका विप्रतिपत्तिः मुक्तत्वोपलक्षिते भेदसाधने शुद्धचिति भेदमात्रासिध्यात्मनः कृतार्थतेति यदि मनुषे तर्हि आत्मत्वसंसारित्वादिधर्मेषु कस्यचित्पक्षतावच्छेदकत्वानुसरणे विप्रतिपत्तावपीति भेदसिद्धिसंभवेन सिद्धसाधनतादोषेणैव तन्निराकरणपूर्वकं संसारान्मुक्तत्वस्य पक्षतावच्छेदकत्वानुसरणासंगतिः। यदि च शुद्धत्वादिधर्मा इव शुद्धचित्येव जडानृतादिव्यावृत्तयोपि वर्तत इति विवरणमतमाद्रीयेत तदा शुद्धचित्येव भेदाभ्युपगमान्न विप्रतिपत्तिर्नतत्साधनेऽनुमानस्य कृतार्थत्वं सिद्धसाधनानुद्धारात्। नापि मुक्तत्वविशिष्टे भेदतदभावकोटिका विप्रतिपत्तिः। मन्मते चरमक्षणस्य चरमसाक्षात्कारस्य वाऽऽवरणध्वंसरूपमुक्तितया तद्विशिष्टे भेदस्य निर्विवादत्वात् तदुत्तरावस्थाविशिष्टत्वरूपमुक्तत्वविशिष्टे विप्रतिपत्तिरपि न युक्ता। मन्मते तदुत्तरावस्थाया एवालीकत्वात्। यदि चावरणध्वंसोपलक्षिता चिदेव मुक्तिस्तदाश्रयस्याभावात्तस्याः पक्षतावच्छेदकत्वायोगः। यदि चोभयसिद्धमुक्तत्वाश्रयेऽनवच्छिन्नविशेषणतया भेदकोटिका विप्रतिपत्त्यस्तेनैव संबंधेन भेदस्य साध्यतापि मुक्तौ नश्यमानभेदस्य चित्यनवच्छिन्नविशेषणतया वृत्त्यभावान्न विप्रतिपत्त्ययुक्तिः सिद्धसाधनता वा। नच पक्षनिष्ठाया दृष्टांतनिष्ठाया वा भेदीयविशेषणताया मुक्तत्वनिगडमुक्तत्वादिधर्मावच्छिन्नत्वाद्बाधो दृष्टांतासिद्धिश्चेति शंक्यं। कालविधया या विलक्षणावच्छेदकतातन्निरूपकत्वस्यैव निवेशनीयत्वादिति मन्यसे तदप्ययुक्तमेव। आसंसारं चिन्निष्ठानामनृतादिभेदानां यावत्कालमनुवर्तमानानां विशेषणतायाः कालिकव्याप्यवृत्तितया कालानव-

छिन्नताया एव मदंगीकृतत्वेन विप्रतिपत्त्यनुपपत्तिसित्धसाधनतयोरनुत्धारात् । नच मुक्ति कालासंबंधिनां भेदानां कथं कालिकव्याप्यवृत्तित्वमिति वाच्यं । भेदैः सह ब्रह्मज्ञानेन काल स्यापि निवृत्तत्वेन मुक्तौ कालस्यैवाभावात् । नच मुक्तौ कालानभ्युपगमे व्याहतिः स्यादिति वाच्यं । विप्रतिपत्त्यभावे सित्धसाधनतोद्भावने च परीक्षितापरीक्षितपराभ्युपगममात्रस्य वीजतया तत्सदसत्वविचारस्येदानीमनवसरपराहतत्वात् । किंचैतत्कल्पे आत्मत्वसंसारित्वादिचिद्वृत्तिधर्मसामान्यस्यापि पक्षतावच्छेदकत्वसंभवे तत्परित्यागानुपपत्तिरूपपूर्वोक्तिदोषानिस्तारश्च । ननु भेदस्य मिथ्यात्वसित्धये भेदाभावोपि त्वयांगीकृत इति तस्य कोटिता युक्तेति चेन्न । तस्येदानीमावृतत्वेन लौकिकानां भेदाभ्युपगमविरोधिग्रहाविषयस्य तस्य ज्ञानेन मध्यस्थसंशयाद्यनिर्वाहेण विप्रतिपत्तिकोटित्वायोगात् । भेदसाधनेऽपि तत्कोटेरस्मदभिमताया एव साधितत्वेन सित्धसाधनानुत्धाराच्च । तस्माच्छुत्धभेदकोटिमुक्तधार्मिक विप्रतिपत्तेरेवायोगात् ।कथं तत्काले भेदसाधनेन सित्धसाधनत्वाभाव इति समाधानमिति । अत्रोच्यते । 'मुक्तानां परमागतिः' 'मुक्ताः प्राप्य परं विष्णुं तद्देहं संश्रिता अपि ॥' 'मम साधर्म्यमागताः' । 'सर्गेऽपि नोपजायंते प्रलये न व्यथंति च ॥ ' इत्येवमादीनि कानिचिद्वाक्यानि । तथा 'एतमानंदमयमात्मानमुपसंक्रम्य ' 'परमं साम्यमुपैति' इत्यादिकानि श्रुतिवाक्यानि च मुक्तविषयतयावगम्यमानानि श्रूयंते । तथा 'परमं ब्रह्म वेद ब्रह्मैव भवति' 'ब्रह्मैव सन्ब्रह्माप्येति 'यत्र त्वस्य सर्वमात्मैवाभूत् ' इत्यादीनि श्रुतिवाक्यानि तथा 'आमुक्तेर्भेद एवस्याज्जीवस्य परमस्यच ॥ मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः ॥ विभेदजनकेऽज्ञाने नाशमात्यंतिकं गते ॥ आत्मनो ब्रह्मणो भेदमसंतं कः करिष्यति ॥ यावन्मोक्षं तु भेदः स्याज्जीवस्य परमस्य च ॥ ततः परं न भेदोस्ति भेदहेतोरभावतः ॥ ' इत्यादीनि च स्मृतिवाक्यानि मुक्तविषयतया प्रतीयंते । तत्र पूर्ववाक्येषु बहुवचनश्रवणेन साधर्म्येण प्राप्यप्रापकभावादिश्रवणेन मुक्तानां परस्परं परमात्मना च भेदोऽवगम्यते । यत्र त्वस्येत्यादिवाक्येषु यत्रेत्यनेन मुक्त्यवस्था । नाशमात्यंतिकं गते इत्यनेन ततः परमित्यनेन च परममुक्त्युत्तरः कालः प्रतीयते । तथा सर्वमात्मैवाभूदित्यनेन भेदो नास्तीत्यनेन भेदसामान्यनिषेधः प्रतीयते । तदुभयवाक्यदर्शनेन बलाबलानिर्णयाभावदशायां भेदप्रतिपादकानामर्थांतरपरत्वेन प्रामाण्याभावाद्भेदपराणि प्रमाणानीति त्वदीयेषु भास्करानुसारिषु वदत्सु भेदनिषेधपराणां न स्वार्थपरत्वं किं त्वन्यार्थपरत्वमिति तत्ववादिषु वदत्सु लौकिकानां मध्यस्थप्रभृतीनां वा मुक्तो भिन्नो न वेति संशयो जायते न वा । नेति वदन् सर्वानुभवसित्धापलापी न वैदिको नापि लौकिक इत्युपेक्षणीय एव स्यात् । आद्ये संसारध्वंसविशिष्टस्य तदुत्तरकालविशिष्टस्य च भेदतन्निषेधकवाक्याभ्यां धर्मितया स्फुरणेन तत्रैव संशयोदयेन तत्रैवान्यतरजिज्ञासायां तादृशविमतिविषयतावच्छेदकमुक्तत्वमुक्तिकालावच्छिन्नत्वादिविशिष्टे भेदसाधने सित्धसाधनानवकाशात् । ननु बंधध्वंसविशिष्टे भेदस्तु मयाभ्युपगम्यते । तदुत्तरकालस्यानभ्युपगमात्तदवच्छिन्नस्य पक्षतात्वप्रसित्ध्या न युक्तेत्ययुक्तमेवेति चेन्न । तथात्वे विशिष्टे भेदांगीकारे मम साधर्म्यमागता इति वाक्यस्य परमं साम्यमिति वाक्यस्य च साधर्म्यं परमसाम्यं च अभेद एवेति । एवं 'सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता' इति वाक्यस्य 'सोश्नुते सकलान् कामान् क्रमेण च सुरर्षभाः॥विदितब्रह्मरूपेण जीवन्मुक्तो न संशयः ॥ ' इत्यादिस्कांदवाक्यमुदाहृत्य ब्रह्मस्वरूपेण सर्वभोगानुभवपरतया व्याख्यानं 'आनंदमयमात्मानमुपसंक्रम्य ' इत्यत्र अनतिक्रमार्थकत्वेन उपेत्य अस्य व्याख्यानं व्यर्थमापद्येत । नच भेदांतरांगीकारेऽपि ब्रह्मभेदस्यानंगीकारात् तत्परतया प्रतीयमाना-

नां वाक्यानां युक्तं व्याख्यानमिति वाच्यं। अज्ञानस्यैवात्यंतिकनाशो ब्रह्मभेदस्येव भेदांतरस्यापि स्थित्ययोगात्। भेदांतरविशिष्टस्य ब्रह्मतादात्म्यायोगाच्च। स्वरूपैक्यविवक्षया तु संसारदशायामप्यविशिष्टत्वेन मुक्तौ विशिष्य न घटते। किं चोक्तवाक्ये ब्रह्मभेदप्रतिपादने किं तव गतं। ब्रह्मैव भवतीत्यादिवाक्यानां प्रामाण्यमिति चेत् तर्हि मुक्तस्य तु न भेदोऽस्तीत्यादिवाक्यप्रामाण्यविघातकस्य भेदांतरस्य कथमंगीकारः। नच तद्वाक्यानां भेदनिषेधद्वारा चिन्मात्रे वा स्वसमानविषयकेत्यादिनियमांतरे वा तात्पर्यं। तात्पर्यविषयीभूतार्थो विरोधात्तदंगीकार इति वाच्यं। तर्हि ब्रह्मैव भवतीत्यादिवाक्यानामपि तथैव गतिरिति कुत उक्तश्रुतीनां व्याख्यानांतरं। तस्मान्मुक्तत्वविशिष्टे भेदो नास्तीत्येव यथाश्रुतं तव मतं। यथा नेह नानेत्यादिवाक्यानां द्वैतसामान्याभावप्रतिपादनद्वारा चिन्मात्रपरत्वं तत्वमसीत्यादिवाक्यानां लक्षणया अभेदबोधद्वारा चिन्मात्रपरत्वं तद्द्वारकचिद्बोधस्य द्वैतधीविरोधित्वं स्वीक्रियते। तदर्थं द्वारीभूतबोधेऽपि तद्वाक्यानां तात्पर्यं तद्विषयघटितव्यावहारिकप्रामाण्यं। तेषां तादृशावांतरबोधे तात्पर्यसिद्ध्यर्थे मिथ्यात्वानुमानानां अभेदानुमानानां प्रवृत्तिः। नेह नानेत्यादिश्रुत्यर्थे विवदमानं प्रति साध्यांतरमाहेति त्वदीयोक्तेः तद्वत् मुक्तभेदनिषेधकवाक्यानामपि मुक्तत्वविशिष्टे भेदनिषेधे तात्पर्यं। तद्बोधद्वारा चिद्बोधे वा फलतः सर्वनिषेधकनियमे वा तात्पर्यं स्वीकार्यं। अवांतरतात्पर्यविषयीभूतार्थे व्यावहारिकप्रामाण्यनिर्वाहाय मुक्तत्वविशिष्टे भेदाभावः। यत्र त्वस्येत्युक्तमुक्त्यवस्था ततः परमित्यादिनोक्तः भेदसामान्यानवच्छेदको ज्ञाननिवृत्त्यवच्छेदकश्च कालः सर्वोऽपि बद्धपुरुषाज्ञानकल्पितो व्यवहारदशायामंगीकार्यः। उक्तं चाद्वैतचंद्रिकायां जडत्वहेतुनिरूपणे बद्धपुरुषकल्पितस्य मुक्तिकालस्याभ्युपगमादिति। इत्थं च यथाश्रुत्यवांतरतात्पर्यविषयीभूतानिर्वचनीयत्वरूपमिथ्यात्वसत्यत्वकोटिकविप्रतिपत्त्या त्वया निर्वचनीयत्वेनाभ्युपगते जगति आवयोस्तत्साधनमुपपद्यते। तथा आवरणध्वंसविशिष्टे तदवच्छेदककालावच्छिन्ने तदुत्तरकालावच्छिन्नेवोक्तरीत्या त्वन्मतेनापि सिद्धेः। उक्तयुक्त्या भेदाभेदकोटिका विप्रतिपत्तिर्युक्तैव। परंतु विप्रतिपत्तिविशेष्यीभूतं विशिष्टं वस्तु भवतोऽनिर्वचनीयं मम भास्करस्य वा सत्यं। तत्र भेदसाधनमात्रेणास्मदिष्टसिद्धिः। सोपपत्तिकभेदश्रुतिविरोधेन तन्निषेधकश्रुतीनां मन्मतरीत्या मिथ्यात्वश्रुतीनामिवार्थांतरपरत्वे द्वारीभूतबोधासिद्ध्या त्वदभिमतनिष्कृष्टार्थस्याप्यसिद्ध्या त्वत्पराजयोऽपि जात इति चेतस्ये भेदोऽभ्युपेयते। किंचिद्विशिष्टे मया भेदोऽभ्युपगम्यत इति त्वत्प्रलापस्य कोपयोगः।यद्वा अस्तु भवदभ्युपगमः यथा तथा। तथापि उक्तश्रुतिविगानेन संदेहे त्वन्मतछायामात्रानुसारेण च भेदकोटिविधेधकतया च शंकायां प्राप्तायां भेदनिषेधकश्रुतीनां पराभिमतवाक्यार्थविघटनद्वारा शिष्याणां तत्वनिर्णयाय सामान्यतस्तद्वाक्यस्थनञर्थप्रतियोगिसमर्पकपदघटितन्यायप्रयोगः कृतः। इत्थं च यथाश्रुतश्रुत्यनुरोधेन विप्रतिपत्तौ यथाश्रुतपरमेव विमतो भिन्न इति न्यायवाक्यं। श्रुतीनां त्वदभिमतनिष्कृष्टार्थादरे तु सोऽर्थो यद्युक्तनियमरूपः नियमस्य लोकरीत्या सिद्धत्वेऽपि आत्मसाक्षात्कारआत्माज्ञाननिवृत्त्योः कार्यकारणभावबोधकश्रुतीनामिव लौकिकार्थस्यैवानुवादकत्वसंभवात्। असिद्धत्वे तद्बोधायैव प्रवृत्तिसंभवात्। तदा तत्वज्ञानाधिकरणक्षणः स्ववृत्ति यत्तत्वज्ञानं तत्समानविषयकतत्समानाधिकरणाज्ञानतत्प्रयुक्तदृश्याधिकरणकालपूर्वत्वाभाववानवेत्येव विप्रतिपत्तौ तद्भावकोटिसाधकानुमाने मूलवाक्यस्य तात्पर्यमस्तु।उभयथापि न भवतः सिद्धसाधनतायाः अवकाशः। नच भावरूपाज्ञानस्य त्वन्मतेऽप्रसिद्ध्या अभावकोट्यप्रसिद्धिः। प्रकृतेरेवाज्ञानत्वेन त्वया परिभाषितत्वात्

तदसिद्धिरित्युच्यते। तदपि तस्य स्वविषयकतायाः भवतानंगीकृतत्वाद्भावकोटयप्रसिद्धिरेवेति वाच्यं। नैय्यायिकादीन्प्रति विप्रतिपत्तिवेलायां प्रतियोग्यप्रसिध्या अभावरूपत्वदभिमतकोटयप्रसिद्धिपरिहाराय मां प्रति सिद्धसाधनता परिहाराय च न तत्वज्ञानस्य साक्षात्सविरोधितत्प्रयुक्तदृश्याधिकरणकालपूर्वत्वाभावनियमः स्वीकार्यः। विरोधित्वं स्वजन्यनाशप्रतियोगित्वं। तच्च प्रागभावस्य प्रतियोगिनाश्यत्वमते प्रागभावे प्रसिद्धमित्यादिरीत्या कथंचिन्निर्वाह्यं। तथा च सुलभैव मम भावकोटिप्रसिद्धिः। यद्वा आत्मसाक्षात्कारत्वावछेदेन भेदत्वेन वा दृश्यत्वेन वा भेदं निवेश्य तदधिकरणकालपूर्ववृत्तित्वकोटिका सामानाधिकरण्येन तदभावकोटिका विप्रतिपत्तिः। भावकोटिः तत्ववादिनां अभावकोटिर्मायिवादिनां। कस्मिंश्चित्साक्षात्कारे तत्सिद्धिमात्रेण तदभिमतार्थसिद्धेः। हेतुवाक्यस्यापि दुःखरूपबंधध्वंसाधिकरणकालवृत्तित्वस्य वा ध्वंसाधिकरणकालवृत्तित्वस्य वा स्वध्वंसाधिकरणकालवृत्तित्वसंबंधेन स्वाधिकरणकालवृतित्वसंबंधेन वा बंधस्य ध्वंसस्य वा हेतुत्वे तात्पर्यं। तत्वज्ञानस्य सर्वदृश्योछेदरूपतया तत्वज्ञानक्षणमादाय चरमसाक्षात्कारे अन्यत्र दुःखांतरध्वंसमादाय पक्षतावछेदकावछेदेन हेतुरनपवादः। यदि च चरमतत्वज्ञानस्य स्वातिरिक्तसर्वदृश्योछेदरूपत्वं तद्द्वितीयक्षणस्य तदवछिन्नस्य स्वस्य (तत्वज्ञानस्य) वा तत्वज्ञानध्वंसत्वमिति मतेन तत्वज्ञानस्य क्षणद्वयवृत्तित्वमास्थीयते। तदा दृश्यत्वेन भेदनिवेशघटितसाध्यस्य तत्वज्ञानाद्वितीयक्षणवृत्ति तदेवोपादाय सिद्धसाधनतापरिहाराय स्वाधिकरणकालपूर्ववृत्तितत्वज्ञानाधिकरणक्षणसामान्यकत्वसंबंधेन दृश्यं दृश्याधिकरणक्षणपूर्वक्षणवृत्तित्वं वा साध्यं। यदि च अवछेदकावछेदेन साध्यसिद्धावप्यंशतः सिद्धसाधनतादोष एव। अन्यथा यथाश्रुतरीतौ आत्मत्वावछेदेन मुक्तत्वावछेदेन वा साध्यसिध्या निगडमुक्तत्वादिकमादाय सिद्धसाधनतावारणसंभवे संसारान्मुक्तपर्यंतं पक्षतानुसरणं व्यर्थं स्यात्। तथा च निष्कृष्टकल्पेपि तन्मतानुसरणमेवोचितं। इत्थं चात्मसाक्षात्कारस्य तत्वेनैव निविष्टत्वात् पक्षकोटिनिविष्टैतत्कालिकात्मप्रत्यक्षमादाय सिद्धसाधनतेत्युच्यते तदा स्वसमानाधिकरणदुःखप्रागभावासमानकालीनसाक्षात्कारत्वेन स्वोपादानभूतमनः परिणामप्रागभावसमानकालिकं यद्यत् तत्तद्भेदवत् साक्षात्कारत्वेन चरमसाक्षात्कारस्यैव पक्षत्वान्न सिद्धसाधनतादेरवकाशः। अत्र पूर्वकल्पे एतत्कल्पे वा बहुजीववादेन सिद्धसाधनतावारणाय स्वसामानाधिकरण्यं दृश्ये भेदे वा निवेश्य परिष्कार्यं। स्वसमानाधिकरण्यं च स्वसाक्षिनिष्ठत्वं अतः सिद्धांते आत्मनिष्ठभेदादेः साक्षात्काराश्रयमनस्यवृत्तित्वेऽपि न क्षतिः। एतेनात्मसाक्षात्कारस्यानवछिन्नात्मनिष्ठविषयताकत्वेन पक्षत्वे तत्ववादिना तादृशज्ञानानभ्युपगमात्पक्षासिद्धिः दृष्ट्वैव तं मुच्यत इत्यादिश्रुतितात्पर्यविषयज्ञानत्वेन पक्षत्वेन पक्षत्वे तत्ववादिमते अपरोक्षज्ञानानंतरमपि भगवत्प्रसादविलंबेन मुक्तिविलंबात्संसारकालीनतादृशज्ञाने उक्तसाध्यसत्वेपि मुक्तौ कालस्य भेदस्याप्यसिद्ध्या स्वपक्षासिद्धिरिति परास्तं। मुक्त्यवहितप्राक्क्षणवृत्तीनामेव पक्षत्वात् संसारकालीनस्वरूपाज्ञानवारणाय जन्यत्वमात्रानुपादेयं। यदि चोक्तश्रुतीनां तदनुग्राहकयुक्तीनां चोक्तनियमपरत्वमपि नांगीकुरुषे तर्हि भवान् तासां यादृशार्थे तात्पर्यं यत्प्रयोजनकत्वं मनुतेऽस्मदीयन्यायस्यापि तद्विरोध्यर्थसाधनं तद्विरोधि प्रयोजनकत्वं चानुमतमिति न कथंचिदपि सिद्धसाधनतादेरवकाश इति दिक्। केचित्तु स्वाभ्युपगमेनैव वैय्यात्यात्सिद्धसाधनतां ब्रवीषि तर्हि त्वन्मते तस्या अपि मिथ्यात्वात्तदभावो वर्तत इति संतोष्टव्यं। नच प्रतियोगिव्यधिकरणसिद्धसाधनत्वाभावोऽपेक्षित इति वाच्यं। तस्यापि मंदारोपितस्य सत्वात्। नच तत्र व्यावहारिकत्वं

प्रातिभासिकान्यत्वं वाऽपेक्षितमितिवाच्यं। तस्यापि मद्बुध्धिकल्पितस्य सत्वादित्याहुः। वस्तुतस्तु यथा परमते शुक्तिरूप्यादावनिर्वचनीयसिध्यनंतरमेव विमतं मिथ्येत्यनुमानस्य प्रवृत्तिः। ग्रंथे प्रथमतस्तदनुक्तिपूर्वमेतदनुमानोक्तिस्तु तदसंगतत्वभ्रमनिरासार्थं तदनुमानसंगतत्वप्रदर्शनार्थं तथैव तदनुमानस्याप्यनिर्वचनीयपदार्थस्य जगदनिर्वचनीयत्वस्य च निराकरणोत्तरं मुक्तभेदमात्रे उक्तरीत्या विप्रतिपत्त्या प्रवृत्तिः। उत्तरत्र शिष्यान् प्रति तदपि बोधयितुं कथंचिदेतदनुमानसंगतत्वेनासंगतिशंकापरिहाराय ग्रंथः प्रवृत्तः। परोपि स्वग्रंथेऽनिर्वचनीये सिध्युपसंहारे वक्ष्यति। एवमनिर्वचनीये सिध्धे सिध्धसाधनमिति। ततश्चानिर्वचनीयवादिरीत्या चिन्मात्रे भेदमादाय न सिध्धसाधनतावकाशः। तर्ह्यात्ममात्रपक्षीकरणेपि व्यावहारिकभेदेन परेण सिध्धसाधनोद्भावनस्य कर्तुमशक्यत्वात्पूर्वोक्तासंगतिरिति न शंक्यं। तथात्वेपि मुक्ते भेदे विवादे आत्ममात्रे भेदसाधनस्य नाकांक्षिताभिधानरूपासंगतिः। सिध्धसाधनतापि सिध्धांते तन्मुखेनैव दोष इति युक्तमुत्पश्यामः। केचित्तु विनश्यदवस्थापन्नबंधाधिकरणक्षणावच्छिन्नात्मन्यद्वैतवादिनां चरमक्षणत्वेन योऽभिमतस्तदवच्छिन्नात्मपर्यवसिते स्वाधिकरणकालप्रागभावाधिकरणक्षणावच्छिन्नत्वापेिशिष्टविशेषणतासंबंधेन भेदः साध्यतयाभिमतः। उक्तानुमानं मुक्तौ कालं भेदं च विना न पर्यवस्यतीति कालभेदोभयसिध्धिरित्याहुः। तच्चिंत्यं। अद्वैतवाद्यभिमतचरमक्षणस्यैव स्वाभिमतचरमक्षणत्वे मानाभावादद्वैतवादिनां यदीदानींतनक्षण एव चरमत्वेन ग्रहविषयस्तदा तदवच्छिन्ने उक्तसंबंधेन साध्यसिध्धावपि स्वमते मुक्तौ भेदासिध्धिः। न चेष्टापत्तिः। एतत्कथाया वादरूपत्वस्योक्तत्वेन तत्वनिर्णयाभावे तद्रूपत्वासिध्ध्येष्टापत्तेरयोगात्। अन्यथा वितंडत्वापत्तेः। किंचाद्वैतवादिनापि बध्धपुरुषकल्पितस्योक्तसाध्यस्योक्तपक्षेंगीकारात्सिध्धसाधनस्यापरिहारश्च। यथाश्रुतार्थदशायामेवोक्तपक्षानुसरणे संसारान्मुक्तो विवक्ष्यत इति टीकाविरोधो मुक्तत्वहेतोः कंठत एव मूलोक्तस्य यथाश्रुत एव परित्यागश्च स्फुटः। तस्माद्विमतपदोपरि भारेणैवास्मदुक्तरीत्या सिध्धसाधनता परिहरणीया किं सिध्धांतानभिमतोक्तसंबंधघटितसाध्यादरेणेत्यलं। केचित्तु त्वज्ञानरूपबंधध्वंसरूपमुक्तत्वमेवोपलक्षणविधया पक्षतावच्छेदकं। यथाविशेषणविधयोद्देश्यतावच्छेदकत्वे उद्देश्यतावच्छेदकविधेययोः समानकालिकत्वं भासते। तथोपलक्षणविधयाऽवच्छेदकस्थले उद्देश्यतावच्छेदकोत्तरकालिकत्वं विधेये भासत इत्यभ्युपगम्यते। नच समानकालिकत्वाभानमात्रेण विशिष्टोपलक्षितस्थलयोर्वैलक्षण्यसंभवात्तद्ज्ञानमप्रामाणिकमिति वाच्यं। उपलक्षितस्थले भासमानोत्तरकालिकत्वाभानमात्रेण विशेषणतया भानस्थले वैलक्षण्यसंभवे तत्र समानकालिकत्वभाने मानाभाव इति युक्तेस्तौल्यात्। नच तत्रावच्छेद्यावच्छेदकभावो भासत इति वाच्यं। समानकालिकत्वातिरिक्तावच्छेद्यावच्छेदकभावे मानाभावात्। न चोपलक्षितस्थले धर्मिताचच्छेदकोत्तरकालिकत्वभाने भाविरक्तरूपविवक्षया रक्तोपलक्षितघटबोधतात्पर्येण रक्तो घटस्तिष्ठतीतीदानींतनवाक्यजज्ञानस्याप्रमात्वापत्तिः। इष्टापत्तेः। उक्तंच त्वदीयैरेव 'निवृत्तिरात्मा मोहस्य ज्ञानत्वेनोपलक्षितः॥' इति वार्तिकविवरणावसरे। भाविज्ञानमुपादायात्मन इदानीं अज्ञाननिवृत्तिव्यवहारवारणाय स्वपूर्वकाले स्वस्योपलक्षणत्वं नास्त्येव। नहि पाककरणपूर्वकाले तस्योपलक्षणत्वतात्पर्येण पाचक इति प्रयोग इति। यदि तादृशोपि प्रयोगः प्रामाणिकस्तदासमानकालिकत्वोत्तरकालिकत्वयोरभानमात्रमिति वा तत्र तत्प्रागभावकालीनत्वं रूपमुपलक्षणत्वं वा भासत इत्यभ्युपेयं। नियामकविशेषस्तु शब्दस्थले तथा तथा तात्पर्यग्रहरूपोन्यत्र बाधाद्यभावपरामर्शेंद्रियसन्नि-

कर्षादिरूपः । तथा चोक्तपक्षतावच्छेदकोपलक्षिते भेदावगाहिन्यामनुमितौ मुक्त्युत्तरकालिकत्वं भेदे भासते । अतो न सिद्धसाधनताऽवकाशः । नच तव पूर्वकालिकत्वमेव कुतो न भासत इति वाच्यं । शक्यार्थबाधग्रहोत्तरमेव लक्षणाप्रतिसंधानस्यैवानुभवबलेन सर्वत्रोत्तरकालिकत्वघटितोपलक्षणत्वबाधनिर्णयोत्तरमेव पूर्वकालिकत्वघटितोपलक्षणत्वं भासते । प्रकृते च बाधाभावात्पूर्वकालिकत्वं न भासते । किंतूत्तरकालिकत्वमेव भासत इत्याहुः। यच्च प्रमाणानां पारमार्थिकसत्तावगाहित्वस्वाभाव्याद्भेदे पारमार्थिकत्वं भासतेऽतो न सिद्धसाधनत्वमनुमानस्येति । तत्त्वात्मत्वाद्यवच्छिन्नपक्षपरित्यागे बीजाभावप्रसंगाच्चिंत्यमिति । नापि तत्वज्ञानस्येत्यादिभवदुक्तनियमोऽप्यनुपपन्नः । तथाहि । किं शुक्तिज्ञानादिसाधारणरूपेणायं नियमः किं वोक्तश्रुत्यादिकमवलंब्यात्मतत्वज्ञानमात्रस्य । नाद्यः। किमिदं तत्वज्ञानत्वं प्रमात्वमिति चेत् तदेव निर्वाच्यं तद्वति तदवगाहित्वं तदिति चेत् इदं रजतमित्यादिज्ञानानामपि तादात्म्यसंबंधेन रजतादिमत्स्वेव रजताद्यवगाहित्वात्प्रमात्वापत्त्या तत्र व्याप्यसत्वेन स्वसमानविषयकाज्ञानरूपव्यापकाप्रसिद्ध्या व्यभिचारात् । निष्प्रकारकात्मज्ञानासंग्रहश्च । नाप्यबाधितार्थविषयकत्वं । किंचित्कालाबाधितार्थविषयकत्वस्य शुक्तिरूप्यादिज्ञानसाधारण्यात् । सर्वथाप्यबाधितार्थविषयकत्वस्य शुक्तिज्ञानेऽप्यभावात् । नच व्यवहारकालाबाध्यार्थावगाहित्वं । ब्रह्मज्ञानेतराबाध्यत्वपर्यवसितं तत् सर्वथा बाध्यस्यात्मनो व्यवहारकालाबाध्यत्वमपि वर्तत इति न तज्ज्ञानासंग्रह इति वाच्यं । देहात्मतादात्म्यस्य ब्रह्मसाक्षात्कारपूर्वमसंजातभ्रमविषयस्यापि पदार्थस्य तथात्वापत्त्या तद्भ्रमे व्यभिचारात् । नापि तूलज्ञानजन्यविषयत्वं तत् तूलाज्ञानत्वं यदि ब्रह्मज्ञानेतराबाध्यत्वं पूर्वोक्तभ्रमजनकाज्ञानानामपि तथात्वापत्त्या तज्जन्यपदार्थावगाहिभ्रमेपि प्रमात्वापत्त्या तत्राज्ञाननिवर्तकत्वापातेन व्यभिचारात् । तूलाज्ञानत्वमविद्यात्वव्याप्यजातिरिति चेत् अविद्यात्वजाताविव मानाभावेन तद्व्याप्यजातौ सुतरां मानाभावात् । तूलाज्ञाननिष्ठस्य वैजात्यस्यांगीकारेपि इदं रजतमिति भ्रमोत्तरं यत्र नेदं रजतमिति बाधो जातः पुनर्द्वितीयदिवसे पुनरिदं रजतमिति भ्रमो जायते तत्र प्रथमदिवसोत्पन्नबाधप्रमायां व्यभिचारः । द्वितीयदिवसे जायमानभ्रमानुरोधेन तत्राज्ञानांतरस्यावश्यकत्वात्तस्य स्वसमानविषयकत्वात्स्वसामानाधिकरण्याच्च । एवं स्वाप्नभ्रमोत्तरात्मप्रबोधे द्वितीयदिवसीयस्वप्नभ्रमजनकस्य समानविषयकस्य समानाधिकरणाज्ञानकाले विवर्तमाने व्यभिचारश्च । नहि पूर्वोत्तरदिवसीयस्वाप्नभ्रमजनकाज्ञानानां विषयवैलक्षण्यमस्ति । मानाभावात् दुर्निरूपत्वाच्च । किंच स्वप्ने दत्तमौक्तिकादीनां कदाचित्प्रबोधानंतरमप्युपलभ्यमानत्वेनोक्तनियमे व्यभिचारः। नच तेषां न स्वप्नहेत्वज्ञानप्रयुक्तत्वं । किंतु मूलाज्ञानप्रयुक्तत्वमेवेति वाच्यं । बाह्यसामग्रीनैरपेक्ष्येण जातानां मूलाज्ञानहेतुकत्वे मानाभावात् । किं चाज्ञानस्य ज्ञानसमानविषयकत्वं यदि ज्ञानविषयविषयकत्वं तदाज्ञानं वृत्तिर्वा तत्प्रतिबिंबितचैतन्यं वा । नाद्यः । एतत्पक्षे विषयता किमाकाराख्या गौणी उत तादात्म्यरूपा मुख्या । नाद्यः । शुक्तित्वादिप्रकारकसाक्षात्कारीयाकाराख्यगौणविषयतायाः शुक्त्यादाविव सत्वेन तदवच्छिन्नचिद्विषयकज्ञानीयाकाराख्यविषयतायास्तत्रासत्वेन तयोः समानविषयकत्वानुपपत्तेः । न द्वितीयः । वृत्तितादात्म्यस्य शुक्त्यवच्छिन्नचित्यनंगीकारेण तद्दोषतादवस्थ्यात् । नापि वृत्तिप्रतिबिंबितचिदादिरूपा । तदीयतादात्म्यरूपविषयतायाश्चित्यभावेन चिद्विषयकाज्ञानस्य तत्समानविषयकत्वायोगात् । अथ समानविषयकत्वं स्वप्रकारताविशिष्टा याऽवच्छेदकता तन्निरूपकावच्छेदकताविषयताकत्वं । अवच्छेदकतायां प्रकारतावैशिष्ट्यं च स्वसामानाधिकरण्यस्वजातीयत्वोभयसंबंधेन । साजात्यं च स्ववृत्त्यवच्छिन्नत्वानव

छिन्नत्वान्यतररूपेण । एवं च शुक्तित्वप्रकारकज्ञानीयशुक्तित्वनिष्ठप्रकारतायाः शुक्तिनिष्ठचैतन्यवृत्त्यज्ञानविषयतावच्छेदकतानिरूपितशुक्तित्वनिष्ठावच्छेदकतायामुभयसंबंधेन सत्वाच्छुक्तित्वविशिष्टावच्छिन्नचिन्निष्ठविषयताकाज्ञानशुक्तिज्ञानयोः समानविषयकत्वमिति चेत्। तर्हि ब्रह्मज्ञानस्य निष्प्रकारकत्वेन चिन्निष्ठमूलाज्ञानसंबंधस्यानवच्छिन्नत्वेन च तत्र व्यापकाप्रसित्ध्या व्यभिचारः। व्याप्यकोटौ सप्रकारत्वनिवेशे ब्रह्मज्ञानस्य सोयं देवदत्त इत्यादिवाक्यजन्यबोधानां चासंग्रहः । पर्वतस्तेजस्वीति ज्ञानस्य वन्हित्वविशिष्टवन्हिमत्पर्वतरूपविशिष्टविषयावच्छिन्नचिद्विषयकज्ञानस्योक्तसमानविषयकत्वापत्त्या निवर्त्यनिवर्तकभावप्रसंगः । किंच भानापादकाज्ञानस्य विषयावच्छिन्नचिदाश्रितस्य प्रमात्राश्रितज्ञानसामानाधिकरण्यानुपपत्तिः । चक्षुरादिना बहिर्निर्गतांतःकरणवृत्तेर्विषयावच्छिन्नचिदाश्रितत्वमंगीकृत्य- सामानाधिकरण्यं यदि ब्रूषे तदा चैत्रीयाज्ञानस्य मैत्रज्ञानसामानाधिकरण्यापत्त्या तन्निवेशस्याव्यावर्तकता । ज्ञानस्य चैत्रादिनिरूपितत्वं स्वीकृत्य सामानाधिकरण्यस्थाने स्वाश्रयनिरूपितत्वं निवेश्यते तदा प्रमातृगताज्ञानस्य सामानाधिकरण्येनैवोपपत्त्या निष्प्रामाणिकस्य प्रमातृनिरूपितत्वस्याभावेन तस्य निवृत्त्यसित्धिः । तत्र नियमांतरस्वीकारेपि एकस्यैव पुरुषस्य सजातीयबहुभ्रमजनकनानाज्ञानस्थले पूर्वोक्तदोषो दुर्वारः । एतेन ज्ञानाज्ञानयोराकाराख्यविषयतैक्यैव जडेपि सा स्वीक्रियते । तथाच स्वनिरूपितविषयतानिरूपकत्वमेव समानविषयकत्वमित्यपि परास्तं । उक्तव्यभिचारस्य दुर्वारत्वात् । यत्तु तत्तत्ज्ञानानां तत्तदज्ञाननाशकत्वोपगमात् तत्वज्ञानानां स्वनिवर्त्यत्वमज्ञाने निवेश्य पूर्वोक्तनियमाभ्युपगमान्न कुत्रापि व्यभिचार इति। तदसत्।स्वसामानाधिकरण्यस्वसमानविषयकत्वयोर्वैयर्थ्यापत्तेः । किंच दृश्येषु अज्ञानप्रयुक्तत्वं कीदृशं नियमे निविष्टं तदुपादानकत्वं वा साक्षात्तज्जन्यत्वं वा साक्षात्परंपरासाधारणजन्यत्वं वा स्वरूपसंबधविशेषात्मकं वा । नाद्यः अनादिदृश्यानां कालरूपाविद्याचित्संबंधजीवब्रह्मविभागादीनां मुक्तावभावस्योक्तनियमबलादसित्धेः । अत एव न द्वितीयः । आत्मापरोक्षानंतरमाविद्यकपदार्थविलयेन संस्कारोपादानकपदार्थानामभ्युपगमात्तमादाय मुक्तौ दृश्यसामान्योच्छेदासिध्या पक्षद्वयेऽप्युक्तनियमांगीकारवैयर्थ्यस्य दुर्वारत्वाच्च । द्वितीयपक्षे ज्ञायमानस्य लिंगस्यानुमितिकारणतामते चैत्रीयशुक्त्यज्ञानलिंगकं मैत्रीयानुमिते चैत्रीयशुक्तिसाक्षात्कारोत्तरमिति सत्त्वाद्व्यभिचारश्च । न तृतीयः । पूर्वोक्तदोषानिस्तारात् । सर्पभ्रमोत्थभयादीनां परंपरया रज्ज्वज्ञानजन्यानां रज्जुसाक्षात्कारानंतरमपि सत्त्वाद्व्यभिचाराच्च । नापि चतुर्थः । अनादिदृश्यानां साक्षाद्वा परंपरया वा जन्यत्वाभावेपि स्वरूपसंबंधरूपप्रयुक्तत्वस्यानादिसाधारणस्य कथंचिदभ्युपगमेन तेषां संग्रहेपि तृतीयपक्षोक्तव्यभिचारस्य दुर्वारत्वात्।भयादीनामपि रज्ज्वज्ञानान्ममेदं सर्वमनिष्टमभूदिति प्रतीतिसाक्षिकस्वरूपप्रयुक्तत्वानपायात् । अविद्यासंस्कारोपादानकपदार्थेष्वविद्याप्रयुक्तत्वे मानाभावेन तदुच्छेदासिध्ध्यापत्तेश्च । यत्त्वनादिदृश्यानामविद्याप्रयुक्तत्वमविद्यानाशाधीननाशप्रतियोगित्वं उक्तभयादीनां तन्नास्तीति न व्यभिचार इति । तत्तुच्छं । शुत्धाद्वैतपक्षस्येदानीमादृतनया तत्राविद्यानाशादनादिदृश्यनाशोपगमे नाशस्य नाशानभ्युपगमे द्वैतहानिः। आत्मनस्तद्रूपत्वकल्पनेऽपि तत्र कल्पितनाशत्वानुच्छेदे स एव दोषः । नाशस्य नाशांतरकल्पनेऽप्रामाणिकनाशधाराकल्पनायामनवस्था । आद्यक्षणावच्छिन्नतत्वज्ञानस्याज्ञाननाशत्वं द्वितीयक्षणावच्छिन्नस्य तस्यैव साधनादिसाधारणसर्वदृश्योच्छेदत्वेन जन्यत्वामित्यंगीकारस्य तत्वज्ञानस्याज्ञाननाशकत्वप्रसंगेन हेयत्वामिति स्वयमेवाभिधायोक्तनियमतात्पर्यकत्वस्य श्रुत्यादीनाम

तादृशतया तत्रानादिदृश्यनाशेऽष्वज्ञाननाशकारणत्वं निवेशयितुमशक्यत्वात् । प्रक्रियाया एव त्यक्तत्वात्तादृशनियमशरीरेऽज्ञाननाशप्रयुक्तनाशप्रतियोगित्वरूपं प्रयुक्तत्वस्य निवेशयितुमशक्यत्वात् तस्माल्लोकरीत्यैवात्र नियम इति न युज्यते । नाप्यात्मसाक्षात्कारस्थल एव श्रुत्यादिबलात् नियम इति प्राग्विकल्पितद्वितीयपक्षः साधुः । अत्राप्यविद्यासंस्कारांगीकारपक्षेण नियमवैय्यर्थ्यदोषस्य दुर्वारत्वात् । अपिचायं नियमो नानाज्ञानभेदेन जीवनानात्वपक्ष एव वाच्यः । एकाज्ञानैकजीवपक्षे आत्मसाक्षात्कारक्षणस्य क्षणपूर्वत्वाभावमात्रस्वीकारेण सामंजस्ये नियमस्य तत्र व्यभिचारवारकाणां स्वसमानाधिकरणेत्यादिविशेषणानां च वैय्यर्थ्यात् । एवं च नानाज्ञानपक्षे नानाजीवानामेव जगदुपादानतया शुकस्य तत्त्वसाक्षात्कारेण स्वाज्ञानपरिकल्पितनिखिलजगत्संबंधाभावसिद्धावपि मैत्रादिपरिकल्पितकालादिसंबंधशरीरादिसंबंधानां प्रपंचस्येश्वरमायाकल्पितत्वपक्षे तत्कल्पितानां च तत्रानपगमात्कथं तत्र मुक्तिसिद्धिरुक्तनियमेन । स्वाविद्यैव स्वस्य किंचित्संबंधं संपादयति । तदपगमे तु केनापि स्वस्य संबंधाभावान्मुक्तत्वं घटत इत्युच्यते । यदि तर्हि मुक्ते कथं भेदांगीकारेण तव सिद्धसाधनोद्भावनावकाशः । किंच लोकसाधारणे असाधारणे वा एकजीववादे बहुजीववादे वा सर्वेषु पक्षेषु तत्वसाक्षात्कारक्षणस्य दृश्याधिकरणक्षणपूर्वत्वाभावो नाम दृश्याधिकरणक्षणवृत्तिध्वंसप्रतियोगित्वाभावो वा दृश्याधिकरणक्षणप्रागभावानधिकरणत्वं वा । आद्ये चरमक्षणस्य नित्यतया पर्यवसानं । द्वितीयेपि क्षणांतरानुत्पत्त्या पर्यवसानं । नच तत्वनित्यत्वे तस्य क्षणत्वानुपपत्तिरिति वाच्यं । त्वयापि चरमक्षणस्योत्तरत्र नाशानंगीकारेण तवापि तद्दोषतादवस्थ्यात् । तत्वज्ञानोत्तरं दृश्यानां ब्रह्मवत्कालासंबंधानामेव सत्तासंभवे पक्षद्वयेपि मुक्तौ दृश्यमात्रोच्छेदासिद्धेश्चेत्यन्यत्र विस्तरः । तस्मादुक्तनियमेन मुक्तौ कालानभ्युपगमे व्याहतिपरिहारोऽसंगत एवेति । यदपि परेण प्रलपितं मुक्तिकालावच्छिन्नभेदसाधने उक्तरीत्या साध्याप्रसिद्धिः । पारमार्थिकभेदसाधनमप्यत एवायुक्तं । स्वज्ञानाबाध्यभेदसाधने स्वपदेन पक्षोक्तौ साध्याप्रसिद्धिः। पक्षीभूतशुद्धचिन्मात्रज्ञानाबाध्यभेदाप्रसिद्धिः । दृष्टांतोक्तौ दृष्टांतीभूतनिगडमुक्तज्ञानाबाध्यस्य व्यावहारिकभेदस्य मुक्तंगीकृतत्वात्सिद्धसाधनमेव । मंडनमते चरमदृश्यध्वंसस्य मुक्तिकालत्वसंभवात्तस्य पक्षतावच्छेदकत्वेन तदवच्छिन्ने भेदसाधने न सिद्धसाधनमिति तु न युक्तं । तन्मतेऽनृतादिव्यावृत्तेरपि मुक्तिकाले सत्वात्सिद्धसाधनस्य दुर्वारत्वादिति । तदेतदनुक्तोपालंभनरूपत्वादश्रद्धेयमेव । न चैतेषां पक्षाणां संभावितत्वेन शंकनमित्यपि युक्तं । उक्तसाध्यादेः आत्मत्वावच्छिन्नस्य पक्षत्वेपि सिद्धसाधनत्वप्रसक्त्यभावेन तत्पक्षोपेक्षणस्य निर्बीजत्वापातेन भेदस्य पारमार्थिकत्वानौपाधिकत्वाभ्यामविशेषितत्वादिति टीकावाक्येनान्योपलक्षणपरेणोक्तकल्पानां ग्रंथकृदनभिप्रेतत्वावगमात् । किंच स्वज्ञानाबाध्यभेदस्य साध्यतापक्षे यत्स्वशब्दार्थविकल्पेन दूषणमभिहितं तदयुक्तमेव। तथा हि अनुगतरूपेण साध्यस्यानुपस्थापकत्वेन पक्षदृष्टांतादिसाध्यबाधाभावेन परामर्शद्वारा मध्यस्थानुमितेरनिर्वाहात्तादृशन्यायोऽसंगत इति भवतामभिप्रायः । उक्ततादृशन्यायप्रयोगस्थले अन्यत्र निर्वाहेपि प्रकृतेऽसौऽसंगत इति । नाद्यः तत्वज्ञानस्य स्वसमानाधिकरणेत्यादित्वदीयनियमबोधकवाक्यस्य एकमात्रोपस्थापकतापत्त्या सर्वस्थलीयसाधारणव्याप्तिबोधकत्वाभावेनासंगतत्वापत्तेः । स्वज्ञानाबाध्यदृश्यत्ववत्त्वादिति त्वयैव दृश्यत्वहेतुपरिष्कारस्य कृतत्वेन तत्राप्येकव्यक्तेरेव स्वपदेनोपस्थापनात्तस्यैकव्यक्तावेव सत्वेन भागासिद्ध्यापत्त्या तस्याप्यसंगतत्वापत्तेश्च । स्वप्रागभावातिरिक्तेत्यादिन्याय

( टीका ) तथा कृते गौरवं स्यादिति चेत् न । विमतेरनेकविधत्वेन धर्मिविशेषानिश्चये साध्यविशेषोपादानादिना तन्निश्चयानुसरणेपि गौरवसाम्यात् । तथापि विनिगमनं कुत इति चेत् अर्थप्रतिपत्तिगौरवाच्छब्दगौरवस्य ज्यायस्त्वात् । सत्यं ।

---

प्रयोगस्य स्वान्यूनसत्ताकेत्यादिव्यवहारस्य त्वद्ग्रंथेष्वेव बहुलमुपलंभाच्च । न द्वितीयः । प्रकृत एव तद्वैषम्ये बीजाभावात् । अथ तत्रानुगतरूपावच्छिन्नसाध्यहेत्वादीनां बोधो मानसः । न्यायवाक्याधीनशाब्दबोधोत्तरकाले मध्यस्थस्य जायते । न्यायवाक्यस्यापि तत्रैव तात्पर्यमधिगच्छति । ततः परामर्शद्वारा मध्यस्थानुमितिनिर्वाहो जायत इति यदि ब्रवीषि तदा तद्वाक्यान्मध्यस्थपरामर्शद्वाराऽनुमितिमध्यस्थसंशयोच्छेदादिकं सर्वं संपद्यत इत्यावयोः संमतं । तदुपपत्तिप्रकारस्तु भवतानुगतधर्मं विना व्यवहारानिर्वाहं वदतोक्तरीत्याऽनुगतधर्मस्फूर्त्या निरूपितः। अनुगतधर्मं विना सर्वनिर्वाहवादिना मया त्वन्यथैव निरूप्यते । तथाहि यथा वन्हित्वस्यैवानुगतत्वे वन्हित्वेनैकवन्हिज्ञानानंतरं सकलवन्ह्यादिज्ञानद्वारा सकलधूमनिष्ठव्याप्त्यादिज्ञानद्वारा विशिष्टपरामर्शनिर्वाहस्तथा तदननुगमेपि तत्धर्माभिव्यंग्यलक्षणसादृश्यज्ञानसहकृतेंद्रियेण सकलवन्ह्यादिज्ञानद्वारा विशिष्टपरामर्शनिर्वाहस्त्वाकरे दर्शित एव । यथा वन्हिपदप्रवृत्तिनिमित्तं वन्हित्वं द्रव्यपदनिमित्तं द्रव्यत्वं चैकस्मिन्वर्तते तेषां व्यक्त्यभेदेपि परस्परमसंकीर्णतापि सर्वत्र जात्यादीनां भेदाभेदवादिना यथा भेदेनैव तथास्माकं क्वचिद्भेदेन क्वचिद्विशेषेणेत्यन्यदेतत् । तथा च वस्तुषु स्वशब्दप्रवृत्तिनिमित्तधर्माणां विलक्षणत्वात्तदभिव्यंग्यसादृश्येन सकलसाध्यनिरूपितानां व्याप्तीनां प्रकृतहेतुषु ग्रहेण विशिष्टपरामर्शादिनिर्वाहे कानुपपत्तिः । परंतु अनुगतधर्माग्रहवादिन एव स्वशब्दघटितन्यायप्रयोक्त्रा श्रोत्रा च विविच्य वक्तुमशक्येऽप्रामाणिकसंसर्गताके नानापदार्थघटिते कस्मिंश्चित्पदार्थे संसर्गतां परिकल्प्य तद्घटितसाध्यतावच्छेदकादेः श्रोतुर्मानसबोधविषयकत्वकल्पनं वक्तुस्तत्र तात्पर्यकल्पनमप्रामाणिकमनुभवविरुद्धं गुरु च । यथाश्रुतवाक्यबोध्यधर्मज्ञानद्वारोक्तरीत्याऽनुमितिनिर्वाहप्रकार एव लघियान् । अधिकमन्यत्रानुसंधेयं । एवं च स्वशब्दार्थघटितसाध्यहेत्वादिस्थले स्वार्थानुमितिपरार्थानुमित्योरानुभाविकत्वेन तदुपपादनप्रकारस्य पुरुषमतिवैचित्र्येण वैचित्र्येपि तादृशानुमानप्रयोगः संगत एव । परंतूपपादनक्रमे सोऽयंवाविचारः परमवशिष्यते । स चेदानीमनुपपन्नः विचारांतरत्वापत्तेः । अन्यथा भेदत्वमात्रस्य साध्यत्वेऽप्येतादृशदूषणसंभवेन तत्र तदनुक्त्वा स्वत्वघटितसाध्य एव तदुक्तस्तवासंगतत्वापातात् । अनुगतधर्माग्रहमात्रेण भवदुक्तस्वत्वाविकल्पादेर्दूषणत्वे नैय्यायिकमीमांसकादीनां कथोच्छेदप्रसंगात् । नैय्यायिकेन पर्वतो वन्हिमानित्युक्ते मीमांसकेनोच्यते । किं पर्वतवन्ह्यादिपदानि जातिवाचीनि किं व्यक्तिवाचीनि । आद्ये बाधादिकमपसिद्धांतश्च । द्वितीये तेषां मां प्रत्यबोधकत्वमिति । तदेतावदेव वक्तव्यं उक्तवाक्येन मध्यस्थानुमित्यादेरानुभाविकत्वेनोक्तदूषणमसंगतमिति । तत्सर्वं प्रकृतेप्यवशिष्ट भवति । एतेन न्यायामृतादाहृतस्वशब्दार्थघटितसाध्येषु त्वदाचार्याणां स्वशब्दार्थ विकल्प पूर्वकदूषणान्यसाधून्येव । अपि चान्यत्र यथा भवतानुगमः क्रियते तथा प्रकृतेऽपि शक्यते कर्तुं । तथाहि स्वविषयनाशालिज्ञानबाध्यत्वसंबंधावच्छिन्नस्वनिष्ठप्रतियोगिताकाभाववत्वस्ववृत्तित्वोभयसंबंधेन तादृशाभाववत्वविशिष्टाधेयतासंबंधेन वा किंचिद्विशिष्टभेदवत्वं साध्यं । अतो नाप्रसिद्धविशेषणत्वसिद्धसाधनत्वादयः । तव मते अनुगतधर्मो नास्तीत्यस्य दत्तमुत्तरं पररीत्येत्यपि वक्तुं शक्यत्वाच्चेति सर्वं समंजसं । यत्तु केचित्विति मतांतर-

(टीका) तथाप्यप्रसिद्धविशेष्यत्वाप्रासिद्धविशेषणत्व प्रसिद्धार्थत्वप्रमाणबाधानां प्रतिज्ञादोषाणामुत्थारोप्यनेन संक्षेपतः कृतः स्यादित्येवमर्थं 'विमत' ग्रहणं। तथा हि। यदि विशेष्यो मुक्तात्माऽप्रसिद्धः स्यात् तदा किमाश्रया विमतिः स्यात्। यदि च विशेषणं भेदोऽप्रसिद्धो भवेत्तदा किमुल्लेखिनी विमतिर्भवेत्। यदि वा भेदो मुक्तात्मनि सिद्धो बाधितो वा भवेत्तदाप्यन्यतरपक्षनिश्चयान्न विमतिः स्यात्। अस्ति चेयं। ततो नाप्रसिद्धविशेष्यत्वादीति। एतेनोदाहरणेपि संप्रतिपन्नग्रहणस्य साध्यसाधनवैकल्याद्युद्धारः प्रयोजनं व्याख्यातं। अन्यथा यथा निगडमुक्त इत्यवक्ष्यत्।

---

मुत्थाप्य निगडमुक्तिसाधारणमुक्तिकालावच्छिन्नभेदसाधने सिध्दसाधनतापरमुक्तिकालावच्छिन्नभेदस्त्वप्रसिध्द इति दूषणेन मुक्तिकालावच्छिन्नभेदसाधनदूषणं तदप्यनुक्तदूषणमेवेति नास्माकं काचित्क्षतिरित्यलं। एवमर्थं विमतग्रहणमिति। अप्रसिध्दविशेषणत्वाद्यभावाऽत्रानुमाने वर्तते अतो न तच्छंकयाऽत्रानुमानेऽप्रमाणत्वबुध्दिः कर्तव्येति शिष्यान् प्रतिबोधनार्थमित्यर्थः। यदत्र केनचिदुक्तं विमत इत्युक्तिमात्रेणोक्तशंकानिरासे विमतं मिथ्या दृश्यत्वाद्यदित्थं तत्तथा यथा संप्रतिपन्नमित्युक्तिमात्रेण सकलदोषोत्धारसंभवात्तत्र तवाप्रसिध्दविशेषणत्वाद्युत्थापनासंगतिरिति तद्भावानवबोधात्। नहि अनेन वाक्येन विमतपदेन सर्वदोषनिरासो जायत इत्युच्यते किं त्वेतादृशार्थस्य सूचकतया ग्रंथकारैर्विमतपदं प्रयुज्यत इति तत्र सूचितार्थस्य युक्तत्वे परीक्षकैरादरणीयता। अयुक्तत्वे तु नैव। एवंच विमतं मिथ्येत्यत्रापि भवदाचार्यैरुक्ताभिप्रायेण प्राचां संप्रदायमनुरुध्य विमतपदसंप्रतिपन्नपदे प्रयुक्ते। तत्र यथायोग्यं मिथ्याशब्दार्थविकल्पेन सूचितस्यासाधुता निरूप्यते तत्र भवदभिमतानिर्वचनीयत्वाभावकोटिग्रहणपूर्वकं भावकोटेरप्रसिध्दत्वोद्भावने अप्रामाणिकप्रतियोगिकाभाववादिनो मम न व्याहत्यादिकं। सिध्दसाधनत्वादिकं न निष्कृष्टवाद्यभिमतसाध्ये प्रदर्श्यते वादिनः। सदसत्सामान्यभेदानुसरणबीजं शिष्याहितार्थं ग्रंथे निचर्थं। सत्यत्वग्राहकप्रमाणप्राबल्यविवक्षया बाधाद्युद्भावनं संगच्छते। अत एवात्तत्र मुक्तभेदग्राहकप्रमाणादिप्राबल्यविवक्षया प्रकृतानुमाने प्रमाणबाधशंकादिकं संगच्छते। यत्र कश्चिन्निष्कृष्टसाध्य एव सिध्दसाधनताद्युक्तिः सा विप्रतिपत्तिरेव नास्तीत्यभिप्रायिका। ननु विप्रतिपत्तिमंगीकृत्य सिध्दसाधनतापरा। न चेह प्रकृते संभवति विप्रतिपत्तेर्निपुणतरमुपपादितत्वात्। ननु स्वमते सिध्दिर्नानुमितिविरोधिनी तथैव तर्कतांडवोक्तेः। परार्थानुमाने पुनरनाकांक्षिताभिधानरूपतयाऽसंगतो सिध्दसाधनता पर्यवस्यति। तत्रापि विप्रतिपत्तेरावश्यकत्वेन तत्र सिध्दसाधनतोद्भावनाभावे तस्य दोषतावार्तैवोच्छिद्येतेति चेन्मैवं। सर्वत्र विप्रतिपत्तेरनावश्यकत्वेन वादकथादिषु यत्र परस्यासिध्दत्वाभिमानेन न्यायप्रयोगस्तत्र विप्रतिपत्तिस्थलेऽपि प्रथमसाध्ये हेतुमाभिधाय तत्र वादिनोऽसिध्दत्वभ्रमेण पुनस्तत्साधने तत्र च तदुद्भावनसार्थक्यसंभवान्न कोपि दोषः। अन्यथा निगडमुक्त इत्यवक्ष्यदिति। ननु हेतोरपि स्वरूपासिध्यादिशंकापरिहाराय संप्रतिपन्नादिति कुतो नोच्यते। मैवं। हेतुसाध्ययोर्विशेषरूपेण ग्रहणे तदाश्रयीभूतव्यक्तिः सुग्रहा। संप्रतिपन्नादित्युक्तौ न विशेषरूपेण हेतुः सुग्रह इति विशेषरूपेण तन्निर्देशस्यावश्यकत्वात्। भेदमात्रस्य केवलान्वयितया न भेदमात्रे विप्रतिपत्तिः। किंतु किंचित्प्रतियोगिकभेद एव।

(टीका) नन्वत्र भेदः किं परमात्मप्रतियोगिकः साध्यः । उत जीवप्रतियोगिकः । अथवा जडप्रतियोगिकः, आहोस्वित्सकलप्रतियोगिकः । नाद्यः । परमात्मनि हेतोरनैकांत्यात् । संसाराभावलक्षणमुक्तत्वस्य तत्र सत्वात् । द्वितीयेपि सकलजीवप्रतियोगिकः स्वव्यतिरिक्तजीवप्रतियोगिको वा । न प्रथमः । मुक्तस्यापि जीवत्वेनांशे बाधात् । न द्वितीयः । मुक्तस्य तद्भेदासिध्या विना तेषामेतद्व्यतिरिक्तत्वासिध्याऽप्रसिद्धविशेषणत्वात् । सिध्दौ च सिद्धसाधनत्वात् । जीवभेदसाधनस्य प्रकृतानुपयुक्तत्वेनार्थांतरत्वाच्च । एतेन संसारिभ्यो भेदः साध्यत इत्यपि परास्तं । अत एव न तृतीयः । नापि चतुर्थः । पूर्ववदंशे बाधात् । अप्रसिद्धविशेषणत्वाच्च । मैवं ।

---

अत एव भिन्न इति साध्योपस्थापकं पदमपि किंचित्प्रतियोगिकभेदावच्छिन्नपरमेव । पृथिवी इतरेभ्यो भिद्यत इत्यत्रेतरपदस्य पृथिवीभिन्नलाक्षणिकत्वेपि यथा न दोषः तथा प्रकृते लक्षणाश्रयणेऽपि दोषाभाव इत्यभिमानिनां प्रतियोगिविषयणीमाशंकां निरसितुमनुवदति । नन्विति । एतेन भेदत्वरूपसामान्यधर्मपुरस्कारेण निर्दिष्टे साध्ये विशेषविकल्पेन दूषणमसंगतं । अन्यथा पर्वतो वन्हिमानित्यत्रापि पर्वतीयवन्हिर्वा महानसीयवन्हिर्वा साध्य इति विकल्प्य दूषणप्रसंग इति निरस्तं । सकलप्रतियोगिक इति । यावत्यो व्यक्तयस्तद्व्यक्तिभेदककूटमित्यर्थः । संसाराभावेति । आवरणध्वंसस्य पक्षतावच्छेदकत्वे पक्षतावच्छेदकहेत्वोरैक्यपरिहाराय घटादिदृष्टांते साधनवैकल्पपरिहाराय चावरणरूपसंसारप्रतियोगिकसंसर्गाभावस्यैव हेतूकर्तव्यत्वादिति भावः । सकलजीवप्रतियोगिक इति । यावंतो जीवास्तत्तव्द्यक्तिप्रतियोगिकभेदकूटमित्यर्थः । स्वव्यतिरिक्तेति । स्वभिन्नजीवत्वावच्छिन्नप्रतियोगिकभेद इति वा स्वव्यतिरिक्तत्वेन परिचितजीवव्यक्तीनां भेदकूटमिति वाऽर्थः । जीवत्वावच्छिन्नप्रतियोगिताकभेदपक्षः स्फुटं बाधितत्वान्नाशंकितः । अत एवोक्तकल्पद्वयोत्थानमपि । अंशे बाधादिति । साध्यीभूतकूटघटकस्वभेदांशे पक्षवृत्तित्वस्यैव बाधादित्यर्थः । तज्ज्ञानस्याप्युक्तव्यासज्यवृत्तिधर्मावच्छिन्नसाध्यकानुमितौ विरोधितया तत्राप्रामाण्यग्रहसंपादकतया च तस्य दोषत्वमिति भावः । अप्रसिद्धविशेषणत्वादिति । स्वस्मिन् स्वातिरिक्तजीवभेदासिध्धेः प्राक् तेषु स्वव्यतिरिक्तत्वासिध्या स्वव्यतिरिक्तजीवत्वरूपप्रतियोगितावच्छेदकाप्रसित्ध्या तदवच्छिन्नप्रतियोगिताकभेदरूपसाध्याप्रसित्धिः । भेदकूटपक्षे उक्तरीत्या स्वव्यतिरिक्तजीवरूपप्रतियोग्यपरिचयात्तत्तद्भेदकूटरूपसाध्याप्रसित्धिरित्यर्थः । प्रकृतानुपयोगेनेति । परमात्मनियम्यतायाः मुक्तत्वानिर्वाहकत्वेनेत्यर्थः । दूषणांतरोक्तिबीजं स्वयमेवाह । एतेनेति । अर्थांतरत्वेनेत्यर्थः । संसारिभ्यो भेद इति । उक्तरीत्या पूर्वोक्तसाध्यपरिष्कारेणेति भावः । अत एवेति । अर्थांतरत्वादेवेत्यर्थः । नापीति । सकलप्रतियोगिक इत्यत्र साकल्यावच्छिन्नभेदस्य प्रत्येकं सर्वत्र साध्यत्वेन केवलान्वयित्वान्न विप्रतिपत्तिविषयता । साकल्यनिष्ठस्वरूपसंबंधावच्छिन्नावच्छेदकताकभेदस्त्वप्रसित्धः । अतो यावंतः पदार्थास्तत्तद्व्यक्तिभेदकूटं वा स्वव्यतिरिक्तसकलभेदो वार्थो वाच्यः । तत्र क्रमाद्दूषणे आह । पूर्ववदिति ।

(टीका) अविवक्षितप्रतियोगिविशेषभेदस्य साध्यत्वात्। नचैवमर्थान्तरता। मुक्तस्य भेदमात्रानङ्गीकारेणाक्षिपन्तं प्रति तत्साधनस्य सङ्गतत्वात्। ईश्वराभेदस्त्वागमादिना साधयिष्यते। अथवा प्रागवस्थायां येन भेदेन विशिष्टः तेनैव मोक्षेऽपीत्ययमत्रार्थो विवक्षित इति न कश्चिद्दोषः।

---

अभिप्रायस्तु पूर्ववदेव। अविवक्षितेति। शंककः स्वाभिमानबीजमुद्घाटयति नचैवमर्थांतरतेति। भेदमात्रस्य विप्रतिपत्त्यविषयतया तत्साधनेनाकांक्षिताभिधानमित्यर्थः। भेदमात्रानगीकारेणाक्षिपंतमिति। एतत्प्रकारश्च प्रागेव विवृतः। तेन यदत्रोक्तं यत्तु मुक्तौ भेदमात्रानंगीकारेणाक्षिपंतं प्रति प्रकृतप्रयोगोऽतो न सिध्धसाधनादीति। तदसत्। मुक्ते मुक्त्यन्यदशायां भेदमात्रानंगीकर्तुर्वादिन एवाभावात्। शुध्धाद्वैते मुक्तौ कालानभ्युपगमात्। भावाद्वैते सिध्धसाधनस्य दुर्वारत्वाच्चेति तत्सर्वमपहस्तितं वेदितव्यं। विप्रतिपत्तिप्रकारस्य पूर्वं निपुणतरमुपपादितत्वात्। उक्तानुमानस्य शुध्धाद्वैतपक्ष एव प्रवृत्तत्वाच्च। ननु कैमुत्यन्यायमनुरुध्य भेदमात्राभावेनेश्वरभेदाक्षेपवादिनो भेदमात्रसाधनेन निराकरणेपि ग्रंथस्य तत्वनिर्णयार्थं प्रवृत्तत्वेनैतावन्मात्रेण शिष्याणां मुक्तेश्वरभेदासिध्धेः कथं तेषामीश्वरस्य मुक्तनियामकत्वनिर्णय इत्यत आह। ईश्वराभेदस्त्विति। आदिनाऽनुमानांतरप्रत्यक्षयोर्ग्रहः। तच्चोत्तरत्र स्फुटीभविष्यति। नन्वेतदनुमानेन मुक्तेश्वरयोः भेदासिध्येश्वरे मुक्तनियामकत्वसिध्धौ साक्षादनुपयोगितया प्रथमतस्तदुपन्यासोऽनुचितः। परंपरया कथंचिदुपयोगमात्रेण तदुपन्यासे जगत्सत्यत्वादिसाधनमपि प्रथमतः कुतो न कृतमित्यरुचेराह। अथवेति। यद्वा नानाज्ञानवादे मुक्तस्य तु न भेदोस्तीत्यादीनि मुक्तस्य स्वाविद्याकल्पितभेदसामान्यनिषेधपराण्येव। 'भवत्यभेदी भेदश्च तस्याज्ञानकृतो। भवेत्॥' इत्यादौ भेदस्य मुक्तावभावे तदज्ञानकृतत्वस्य हेतुतया कथनात्। बध्धपुरुषास्तु स्वव्यवहारार्थं स्वाविद्यया भेदं कल्पयंति। तादृशभेदस्तु मुक्तेषु वर्तत एव। सच मुक्तेश्वरयोर्नियम्यनियामकभावानुपयोगी। अतस्तदर्थं मुक्तत्वाविशिष्टे स्वकीयावरणदशाकालीनस्वबृत्तिभेदकूटविषय एव पूर्वोक्तोभयविधप्रमाणानुसारेण विप्रतिपत्तिः। तथाच मुक्तिविशिष्टे भेदमात्रसाधने बध्धपुरुषकल्पितप्रातिभासिकभेदमादाय सिध्धसाधनमर्थांतरं वेत्यत आह। अथवेति। प्रागवस्थायामित्यादि। येन तेनेति च कूटतात्पर्यकं। अन्यथा घटभेदसिध्यापि चरितार्थत्वेनेश्वरनियम्यत्वासिध्धावनुपयोगापत्तेः। भिन्न इत्यत्र क्तप्रत्ययेन भेदे पूर्वकालीनत्वं लभ्यते। तथाच प्रागवस्थायामित्ययमंशोऽक्षरालभ्यः। येन येनेत्यादिकूटलाभस्तु नाक्षरेभ्य इत्यभिप्रेत्य विवक्षित इत्युक्तं। ग्रंथकृतां तात्पर्यविषयीभूत इत्यर्थः। मुक्तभेदनिषेधकवाक्यस्य यादृशार्थकत्वं परस्याभिप्रेतं तद्विरोध्यर्थसमर्पकं न्यायवाक्यं भवत्विति तात्पर्येणैव तत्रत्यनञर्थप्रतियोगिसमर्पकपदघटितन्यायस्य प्रयुक्तत्वादुक्ततात्पर्यं युक्तमेवेति भावः। तथा चैतत्कल्पे ईश्वरस्यापि पक्षकोटावंतर्भाव इष्यमाणत्वात्। ईश्वरे नित्यमुक्तत्वादिबोधकश्रुत्यनुसारेण मुक्तत्वस्येश्वरसाधारणतया मुक्तभेदनिषेधकवाक्येषु मुक्तपदेन तस्यापि गृहीतुं शक्यत्वेन विप्रतिपत्तेस्तत्साधारण्यसंभवादावरणसंसर्गाभाववच्चेतनत्वरूपमुक्तत्वं ईश्वरसाधारणपक्षतावच्छेदकं। साध्यं च स्ववृत्त्यावरण (आवरणत्वं नाम चित्स्वरूपग्रहविरोधित्वं स्ववृत्तित्वस्वग्रहविरोधित्व उभयसंबंधेन विशि-

(टीका) ननु चात्र परमात्मा पक्षः सपक्षो विपक्षो वा ।

---

शिष्टत्वं पर्यवसितं) संसर्गाभावाधिकरणताश्रयक्षणपूर्वकालसंबंधिस्ववृत्तिभेदकूटवत्त्वं पर्यवसितं। अत्र स्वपदेन संसारान्मुक्तग्रहणे स्ववृत्तिर्याऽऽवरणसंसर्गाभावाधिकरणताध्वंसाधिकरणतैव। तदधिकरणक्षणो मुक्तिक्षण एव। मुक्तनिष्ठाधिकरणतायाः क्षणरूपकाले सत्वात्। तत्पूर्व कालसंबंधिनो ये तन्मुक्तत्वाश्रयनिष्ठा भेदा अनादिकालतो विद्यमाना बहव एव। तत्कूटवत्त्वं तत्र मुक्तत्वविशिष्टेनुमानेन सिध्येत् चेत् प्रागवस्थायां तत्र विद्यमानानां ईश्वरजीवांतरजडादिप्रतियोगिकानां सर्वेषां मुक्त्यवस्थायां सिध्या उक्तानुमानेनेश्वरभेदासिध्या प्रथममेतदनुमानोपन्यासायोगदोषः। एवं इदानींतनबद्धपुरुषकल्पितप्रातिभासिकभेदोपादानेनार्थांतरादिदोषश्च नात्र कल्पे पदमादधाति। अत्रेश्वरे साध्योपपादनवेलायां स्वनिष्ठावरणसंसर्गाभावाधिकरणता तदत्यंताभावाधिकरणतैव। तदधिकरणताश्रयणाः अनादितः सर्वेपि तत्पूर्वकाला अपि एकैकस्यैकैक इति क्रमेण सर्व एव भवंति । तत्कालसंबंधीश्वरवृत्तिभेदकूटस्येश्वरे सिध्येश्वरस्य सर्वस्मात्सर्वदाभेदसिध्या न मुक्तेश्वराभेदावकाशः। प्रतियोगिमतीव ध्वंसवति आवरणात्यंताभावो न घटत इति मुक्तजीवासंग्रहः । ध्वंसनिवेशे ईश्वरासंग्रह इति उभयोपादानाय संसर्गाभाववत्वं पक्षतावच्छेदकमनुसृतं। साध्यकोटौ स्वपदेन मुक्तस्येश्वरस्य वा ग्रहणे दोष (आवरणध्वंसत्वेनात्यंताभावत्वेन वा निवेशइत्यर्थः) वारणाय संसर्गाभाववत्वेन निवेशः। आवरणध्वंससततसामान्यात्यंताभावान्यतरत्वेन निवेशात्र पुरुषांतरीयावरणात्यंताभावस्य बद्धपुरुषांतरे सत्वात्तस्य पक्षकुक्षिनिक्षेपः । आवरणत्वावच्छिन्नप्रतियोगिताकत्वेन निवेशे ध्वंसासंग्रह इति दोषानवकाशः। ईश्वरे विक्षेपशक्तिविशिष्टाविद्यायाः परेणांगीकारेपि आवरणशक्तिविशिष्टायास्तस्यास्तत्रानंगीकारेण तत्रावरणाभावः। परस्य सम्मत एवातो न परमते ईश्वरस्य पक्षकोटावनंतर्भावप्रसंगः। भेदकूटस्य निवेशादीश्वरभेदस्यापि सिद्धिः। पुरुषांतरवृत्तिभेदः स्वस्मिन्बाधित इति भेदे स्ववृत्तित्वं निवेशितं। स्वपदेन विशेषभूतव्यक्तेरेव ग्रहणाद्विशिष्टपक्षरूपमुक्तवृत्तित्वस्य पूर्वकालीनभेदेषु परं प्रत्यसिध्धस्त्वेपि न तस्य साध्याप्रसिद्धिः।पूर्वकालीनं विशेष्यवृत्तिसुखमादाय दुःखविशिष्टे सुखावगाहिनो दुःखी सुखीति ज्ञानस्य भ्रमत्वे निर्विवादाद्विशेषणकालासंबंधिविशेष्यवृत्तिधर्मस्य विशिष्टवृत्तित्वस्यांगीकर्तुमशक्यत्वात्। (अर्थांतरानवकाशहेतुः) पूर्वकाल एव मुक्तात्मनि विशेष्यभूते विद्यमानभेदानां मुक्तत्वविशिष्टे सत्वस्याक्षततया साध्योपपत्या मुक्तौ भेदासिध्यार्थांतरतेति शंकानवकाशः । ईश्वरसाधारण्याय स्ववृत्तिसंसारकालीनभेदत्यादिरीत्या साध्यं न परिष्कृतं। आवरणध्वंसाधिकरणकालस्तु पूर्वं समर्थित एवातो न कालाप्रसिद्धिनिबंधनो दोषः। यद्वा स्ववृत्त्यावरणसंसर्गाभावप्रतियोगिकालीन स्ववृत्तिभेदकूटवत्वं साध्यं । अत एवेश्वरे प्रागवस्थाया अभावात्कथं तत्र साध्योपपादनमिति शंकानवकाशः। उक्तरीत्या साध्यद्वयपरिष्करणद्वयादिति दिक् । एतेन यदत्रोक्तं केनाचित् यदपि प्रागवस्थायां येन भेदेन विशिष्टस्तेनैव मोक्षेपीत्ययमर्थो विवक्षितोऽतो न कश्चिद्दोष इति तदविवक्षितविवेचनं दूषितप्रायमिति तत्स्वाज्ञानविजृंभितामिति सुज्ञानं विज्ञानामित्युपेक्षणीयं । तटस्थः शंकते । नन्विति । अत्र उक्तानुमाने परमात्मा सत्यादिपदतात्पर्यविषयीभूतः स च परमते शुद्धः अस्मन्मते जगत्कर्तृत्वादिविशिष्टः। यद्वा जीवब्रह्मेश्वरभेदेन त्रिस्कंधचैतन्याभ्युपगमपक्षादरेण जगत्कर्तृत्वादिविशिष्ट

(टीका) नाद्यः। परेण मुक्तपरमात्मभेदस्यानंगीकृतत्वेन द्वयोः पक्षीकरणासंभवात्। अंगीकृतत्वेचानुभानवैयर्थ्यात्। न द्वितीयः। तत्र परस्य साध्यासम्मतेः। न तृतीयः। भेदाभावस्य वादिना क्वाप्यनभ्युपगतत्वात्।

इत्यर्थः। द्वयोः पक्षीकरणासंभवादिति। आवरणध्वंसरूपमुक्तत्वस्य तत्साधारण्याभावात्तस्य पक्षत्वे द्वित्वेनैव पक्षता वाच्येत्यभिमानः। साध्यासम्मतेरिति। भेदमात्रस्य साध्यतापक्षे यद्यपि सत्यादिपदतात्पर्यविषयीभूते शुद्धे भेदो वर्तते तथापि नासौ तत्समानसत्ताकः। आरोपितवान्हिमादाय ह्रदस्य सपक्षत्ववारणाय स्वसमानसत्ताकसाध्यवत्वप्रकारकनिश्चयविषयस्यैव सपक्षत्वेन तेनांगीकृतत्वात्। द्वितीयकल्पे तस्य प्रागवस्थापि नास्तीति सुतरां सपक्षत्वानुपपत्तिः। यद्युक्तरीत्या साध्यपरिष्कारस्तदा तत्र संसारसंसर्गाभावसत्वात् तमादाय साध्य संभवेपि तस्य स्वसमानसत्ताकत्वाभावादेव सपक्षत्वानुपपत्तिरिति हृदयं। ईश्वरांगिकारपक्षेऽपि मुक्ते आवरणापगमेन भेदसामान्याभाववादिमते स्वतः आवरणशून्ये ईश्वरे भेदाभावः कैमुत्यसिद्ध इति उक्तकल्पद्वयोक्तसाध्यमपि तस्यासम्मतमिति हृदयं। यद्वोक्तकूटत्वावछिन्नाधिकरणतायामेकक्षणावछिन्नत्वस्य वक्ष्यमाणतया तस्येश्वरे वक्ष्यमाणरीत्या भास्करमायावादिनोर्न सम्मतमिति भावः। भेदाभावस्येति। वादिनो मते तस्य केवलान्वयित्वादिति भावः। ननु द्वितीयस्य कथं केवलान्वयित्वं येन तदभावाप्रसिद्धिः स्यात्। घटादीनां प्रागवस्थायाः मोक्षस्य चाभावेन तत्रैव साध्याभावसम्मतेरिति चेन्न। स्ववृत्तिसंसारसंसर्गाभावेत्यादिरीत्या परिष्कृतत्वेन घटादावपि संसारसंसर्गाभावसत्वात्तमादाय साध्यस्योपपादयितुं शक्यत्वेन घटादावपि साध्याक्षतेः। इदानींतनसंसारिष्वपि उत्तरत्र संसाराभावस्यांगीकृतत्वेन तमादायैव तत्र साध्यसत्वेन केवलान्वयित्वाक्षतेः। यद्वा *प्रागवस्थायामित्यनेन स्ववृत्तिभेदप्रतियोगिनो ये ये तत्तत्प्रतियोगिकभेदकूटत्वावछिन्ननिरूपितेकक्षणावछिन्नाधिकरणत्वं वा स्ववृत्तिभेदकूटत्वावछिन्नैकक्षणावछिन्नाधिकरणत्वं वा संसार संसर्गाभावरूपेश्वरसाधारणपक्षतावछेदकविशिष्टे साध्यमित्यभिप्रेयते तावतैव मुक्ते प्राग्दशापन्नवृत्तीनां सर्वेषां भेदानां मुक्तिदशायामपि सिद्धिः। ननु पूर्वरीत्या प्राग्दशाया अपि साध्यतावछेदककोटौ निवेशः। अत एवार्थतः सिध्यतीत्याशयेनायमर्थोत्र विवक्षित इत्युक्तं। अत्र प्रतियोग्यालिंगितत्वेनापि भेदमानार्थं प्रथमसाध्यादरणं तस्यानावश्यकत्वे द्वितीयं। अत्रेश्वरेऽनादितः संसाराभावविशिष्टे एकैकमुक्त्या एकैकजीवभेदापगमेपि तद्वृत्तिभेदानां सर्वेषां तत्रैव सत्वेन तत्कूटाधिकरणताया एकक्षणानवछिन्नायास्तत्रावाधात्तत्र मुक्तभेदासिध्यापत्तिनिवारणायैकक्षणावछिन्नत्वनिवेशः। निवेशिते च तस्मिन् मुक्तेनेश्वरस्याभेदेनानादितः क्रमेण सर्वेषां मुच्यमानत्वादुक्तभेदकूटानां तस्मिन्नेकक्षणे मेलनायोगेन तादृशकूटत्वावछिन्नाधिकरणता एकक्षणावछिन्ना तत्र दुर्मिला भवतीति मुक्तेश्वरभेदसिद्धिः। पूर्वपरिष्कारेपि उक्तदोषपरिहारायैकक्षणावछिन्ना तादृशकूटाधिकरणतैव निवेश्या। वस्तुतस्तु सूचितक्रमेणेश्वरे एकैकभेदापगमपक्षेपि न स्ववृत्तिभेदकूटत्वावछिन्नाधिकरणता कदाचिदपि तस्मिन् संभवति। ईश्वर इदानीं स्ववृत्तिभेदा यावतस्तावत्कूटवानिति कस्मिन्नपि क्षणे प्रत्ययाभावेन प्रत्युत नेदानीं तावत्कूटवानिति प्रत्ययसत्वेन च सर्वेषां क्षणानां कूटत्वावछिन्नाभावाधिकरणतायामेवावछेदकतया प्रतियोग्यधिकरणतावछेदकत्वस्य कस्मिंश्चिदपि काले अभावात्। तथा चैकक्षणावछिन्नत्वस्य साध्यशरीरे अनिवेशेपि नार्थांतर-

* टीप—नित्यसंसारिणामावरणसंसर्गाभावाधिकरणत्वपक्षमनुसृत्य आह। यद्वेति।

(टीका) मैवं । पक्षत्वेऽपि परमात्मनः मुक्तपरमात्मानौ भिन्नावित्यपक्षीकरणात् । अत एव च 'विमतो भिन्नः' इति विमतिविषयो यावानिति सामान्येनोक्तम् । ननु मुक्तत्वं संसारप्रध्वंसो वा तत्संसर्गाभावो वा । नाद्यः । परमात्मन्यसिद्धेः । निगडमुक्तादिदृष्टान्तस्य साधनवैकल्यापत्तेश्च । अत एव न द्वितीयोपीति । मैवं । अविवक्षितविशेषबन्धसंसर्गाभावस्य हेतुत्वात् ।

---

तेति । न चेश्वरवृत्तिभेदकूटाधिकरणं ईश्वर इति सर्वजनीनप्रतीतेः का गतिरिति वाच्यं । कूटत्वोपलक्षितभेदावगाहितया तत्प्रत्ययोपपत्तेः । अथ स्ववृत्तिसर्वधर्माधिकरणं स्वयमेव नान्य इत्याकारा प्रतीतिः सार्वजनीना नापलापमर्हति । तत्र च सर्वत्वोपलक्षिताधिकरणताभावे सर्वेषां प्रत्यधिकरणं भिन्नत्वेपि अत्यंताभावानां भेदाभावेन सर्वत्वोपलक्षिततादृशात्यंताभावानामन्यत्रापि सत्वेन नान्य इति निषेधानुपपत्त्या सर्वत्वावच्छिन्नाधिकरणत्वमेव तत्र भासत इत्युपेयं । क्षणानां च प्रातिस्विकेन तत्तत्क्षणत्वादिना तदधिकरणतानवच्छेदकत्वेपि सर्वक्षणसाधारणान्यतमत्वादिना तदवच्छेदकत्वांगीकारे बाधकाभावः । येन रूपेणाभावाधिकरणतावच्छेदकता तदन्यरूपेण प्रतियोग्यधिकरणतावच्छेदकत्वे विरोधाभावात् । तथा च प्रकृते ईश्वरवृत्तिभेदकूटाधिकरणता एकैकभेदापगमपक्षे संभवत्येवेत्यर्थांतरतायाः दुर्वारत्वमेवेति चेन्न । यतः स्ववृत्तिसर्वधर्मवान् स्वयमेवेत्यस्य स्ववृत्तिधर्मत्वव्यापकस्वाधिकरणताकं स्वयमेवेत्यर्थः । अत एव नान्य इत्यपि संगच्छते । एतदन्यस्मिन्नेतद्वृत्ति तद्व्यक्तित्वादिविरहात् । तथा च स्ववृत्तियादृशधर्मसामान्यस्य मेलनं यदा तदेव तादृशकूटवत्वमिति नियमादीश्वरे एकैकभेदापगमपक्षे स्ववृत्तिभेदकूटवत्वं कदापि नांगीकर्तुं शक्यमिति भेदानपगमसिध्यैव साध्यपर्यवसानान्नार्थांतरता । सर्वेषां क्षणानां क्षणत्वरूपव्याप्यधर्मपुरस्कारेणावच्छेदकत्वेऽन्यतमत्वकालत्वादिरूपव्यापकधर्मेणापि स्ववृत्तिभेदकूटाभावाधिकरणतायां अवच्छेदकत्वे बाधकाभावेनान्यतमत्वेऽभावाधिकरणतानवच्छेदकत्वस्याप्यसंगतत्वात् । अन्यथा ह्रदस्य ह्रदत्वेन वन्ह्यभाववत्वं वन्हिमत्साधारणद्रव्यत्वेन वन्हिमत्वमित्यपि स्यात् । द्रव्यं वन्हिमदिति प्रत्ययाविशेषात् । नच द्रव्यं वन्ह्यभाववदिति प्रत्ययाद्द्रव्यत्वे वन्ह्यभावाधिकरणतायामपि अवच्छेदकतापत्त्या विरुद्धद्वयं कथं सिध्येत् । अतस्तत्रोभयावच्छेदकत्वमपि नास्तीति वाच्यं । तर्ह्यन्यतमत्वकालत्वादिधर्माणां अप्येवमेवास्तु । ईश्वरे अन्यतमक्षणे तादृशकूटं नास्तीति प्रतीतेर्दुरपन्हवत्वात् । ईश्वरे अन्यतमक्षणे तादृशकूटमिति प्रत्ययस्य सविवादत्वात् एकशेषकरणस्याशक्यत्वात् । नचैवं स्ववृत्तिभेदकूटत्वावच्छिन्नाधिकरणत्वस्यैव साध्यत्वे प्रागवस्थायां येन भेदेनेति टीकोक्तिरयुक्ता स्यादिति वाच्यं । स्ववृत्त्यावरणध्वंसतदत्यंताभावान्यतराधिकरणताधिकरणपूर्वक्षणवृत्तित्वस्य तदुक्तिलक्ष्यभेदकूटविशेषणस्यानुमित्युत्तरकालोद्देश्यस्य प्रतीत्यर्थत्वात् । तस्योद्देश्यता च संसारकाले यद्यद्भेदसत्वेन यद्यन्नियामकत्वं तद्भेदानपगमेपि नियम्यसत्वेपि च नियामकत्वाभावे मुक्तावंगीक्रियमाणे संसारेपि नियम्यनियामकभावोच्छेदप्रसंग इत्यनुकूलतर्केण नियामकत्वस्थापनमिति । अतिविवादे तु तुष्यत्विति न्यायेन एकक्षणावच्छिन्नत्वं दत्तमित्यवसेयं । एवं चोक्तसाध्यस्य वादिमते सर्वत्र सत्वात् विपक्षाप्रसिद्धिरित्यर्थः । पक्षत्वेपीति । मुक्तत्वं नावरणध्वंसः किंतु तत्संसर्गाभावः । स चेश्वरसाधारण एव अवच्छेदावच्छेदेन तु साध्यसिद्धिरुद्देश्येति भावः । अविवक्षितेति । विशेषरूपमात्रेणाऽविवक्षितो यो बंधस्तत्संसर्गा-

(टीका) ननु चात्र बन्धाभावाधिकरणत्वं हेतुः। अभावाधिकरणत्वमात्रेणालं। केवलान्वयित्वेन विशेषणव्यावर्त्याभावात्। अपि चाधिकरणत्वमात्रेणालं। किमभावग्रहणेन। किंच अधिकरणं कारकाविशेषः।

---

भावस्येत्यर्थः। तथाच भेदमात्रे साध्ये बंधसंसर्गाभावमात्रं हेतुः। बंधत्वं च स्वसंबंधाधीनदुःखकत्वं। अतो निगडादीनामपि बंधत्वं। प्रागवस्थायामित्यादेः संसारसंसर्गाभाव घटितपूर्वोक्तप्रथमपरिष्कारे हेतुकोटौ संसारत्वबंधत्वोभयरूपेण निवेशः। साध्यकोटावपि स्वनिष्ठसंसाररूपबंधसंसर्गाभावेत्यादिरीत्या निवेशः। इत्थं च यो यद्बंधसंसर्गाभाववान् स स्वनिष्ठतद्बंधसंसर्गाभावाधिकरणतेत्यादिरीत्या परिष्कृतपूर्वोक्तसाध्यवानिति सामान्यमुखी व्याप्तिः। निगडमुक्तो निगडरूपबंधसंसर्गाभाववान् स स्वनिष्ठा या निगडरूपबंधसंसर्गाभावाधिकरणता तत्क्षणपूर्वक्षणवृत्तयो यावंतः स्ववृत्तयो भेदास्तत्कूटत्वावच्छिन्ननिरूपितैकक्षणावच्छिन्नाधिकरणतावान् भवति। पक्षीभूतमुक्तश्च संसाररूपबंधसंसर्गाभाववान्। अतः स्वनिष्ठसंसाररूपबंधसंसर्गाभावाधिकरणतेत्याद्युक्तसाध्यवान् भवत्विति रीत्या अप्रसिद्धसाध्यविधेयकानुमितिर्जायते। इदमनुमानं सिद्धांते सामान्यतो दृष्टमिति गीयते। उक्तं हि पद्धतौ। 'कृषीवलस्य कर्षणादिप्रवृत्तेर्धान्यादिफलकत्वदर्शनेन यज्ञादेः स्वर्गफलत्वानुमानं सामान्यतो दृष्टं' इति। प्रामाण्यवादस्थद्वितीयविप्रतिपत्तिमणिदीधितिव्याख्यायां सिद्धांतलक्षणमणिदीधितिव्याख्यायां च गदाधरेण स्पष्टीकृतश्चायं सामान्यमुखव्याप्तिस्थलीयसामग्रीप्रकारः। यद्यपि संसाररूपबंधसंसर्गाभावादित्यनुक्त्वा बंधसंसर्गाभावादित्येव हेतुं कृत्वा साध्येपि बंधत्वसंसारत्वोभयरूपेणानिवेशेन स्वनिष्ठसंसारसंसर्गाभावेत्यादिरीत्यैव साध्यीकरणे घटादिदृष्टांत एव हेतुसाध्ययोरुपपादनं संभवति। तथापि निगडमुक्ते निगडरूपबंधसंसर्गाभाववति स्वनिष्ठसंसारसंसर्गाभावेत्यादिसाध्याभावाद्व्यभिचारः स्यादित्युक्तरीत्यनुसरणं। यद्यप्युक्तरीतावपि घटादेरेव विशेषव्याप्तौ दृष्टांतता युज्यते तथापि विशेषव्याप्तौ साध्ये बंधत्वसंसारत्वोभयरूपेण निवेशवैयर्थ्ये हेतावपि तस्य वैयर्थ्ये अथवेत्याद्युत्तरकल्पाभेदः स्यादतः सामान्यव्याप्त्यैवोक्तरीत्याऽप्रसिद्धसाध्यकानुमितिनिर्वाहायोक्तरीत्या व्याख्यानं। ननु बंधसंसर्गाभावहेतावप्यनुपदं वैयर्थ्यमाशंक्य व्यभिचारावारकस्यापि कथंचित्सार्थक्यं वक्ष्यति। तथा च बंधत्वसंसारत्वोभयरूपेण निवेशेपि तथैव सार्थक्यसंभवात्कथं वैयर्थ्यमिति चेन्न। तत्र मुक्तपदेन प्रतीयमानार्थे व्यभिचारावारकत्वेपि दोषाभावं वक्ष्यति। तत्पदेन प्रतीयमानार्थस्तु वैदिकप्रयोगानुरोधात्संसाराभावो मुख्यः। लोकेपि रोगादिमुक्ते गौणमुक्तपदप्रयोगाद्बंधाभावेऽपि तदर्थः। स चामुख्यः। बंधत्वसंसारत्वोभयघटितस्तु नार्थो वैयर्थ्यात्। इत्थंच प्रकृत एव पदाप्रतीयमानस्य विवक्षा कर्तव्या। सा च प्रयोजनं विना न युक्तेति विशेषव्याप्तौ वैयर्थ्यमेव। सामान्यव्याप्तौ तु न वैयर्थ्यं। सामान्यरूपघटितसजातीयहेतुसाध्ययोर्व्याप्तिग्रहसहितेन तत्सामान्यघटितप्रकृतहेतोः पक्षे ज्ञानेन तादृशसाध्यसजातीयसाध्यस्यानुपस्थितस्याप्यनुमितेरन्यत्र क्लृप्तत्वादिति न किंचिदसमंजसं। यदा तु प्रागवस्थेत्यादेरुक्तरीत्या स्ववृत्तिभेदकूटेत्यादिकमेव साध्यं तदा बंधसंसर्गाभावमात्रं हेतुः। निगडमुक्तेपि साध्यसत्वेन व्यभिचाराप्रसक्तेः तदा तु विशेषव्याप्तिरेवानुमित्यौपयिकीति ध्येयं। हेतौ व्यभिचारावारकतया वैयर्थ्यमाशंकते। नन्विति। कारकाविशेष इति। कर्त्रादिभिन्नत्वे सति क्रियाजनक इत्यर्थः।

(टीका) ( तत्र किं विशेषग्रहणेन । एवं कारकं कारणविशेषः । तत्र किं विशेषग्रहणेनेति । मैवं । ) कारकत्वमात्रेणालं किंविशेषग्रहणेन । एवं कारकं कारणविशेषः ।कारणत्वमात्रेणालं । तत्किं विशेषेणेति । मैवं । तथासति प्रमेयत्वादीनामपि केवलान्वयित्वभंगप्रसंगात् । प्रमाविषयत्वं प्रमेयत्वं। तत्र विषय ( त्वेनालं ) त्वमात्रेणालं । किं प्रमाग्रहणेनेत्यादेस्तत्रापि सुवचत्वात् । यद्धेतु ( व्यावर्तकत्वे ) व्यवच्छेदकत्वेन पृथगुपादीयते तदेव विशेषणं प्रयोजनांतरमपेक्षते । नपुनस्तन्मात्रांतर्गतमिति चेत् । समं प्रकृतेऽपि ।

---

जनकत्वं च प्रयोजकत्वं । अधिकरणत्वस्याखंडोपाधित्वे मानाभाव इति भावः । अत्र बंधाभावोऽस्मिन् वर्तते बंधध्वंसोत्र जात इति प्रतीतिसित्यक्रियाधिकरणत्वं मुक्तत्वपदार्थशरीरनिविष्टमतोत्र क्रियाभावात्कथं तस्याधिकरणत्वस्य कारकविशेषत्वमुक्तमिति मनःखेदो न कार्य इति ध्येयं । कारणविशेष इति । कालादृष्टादीनां पाकादिक्रियां प्रति कारकत्ववारणाय विशेषपदं असाधारण्यबोधकं वा तद्भिन्नत्वबोधकं वेति भावः । परमुखेनैव समाधिं वाचयितुं प्रतिबंदीं गृण्हाति । प्रमेयत्वादीति । केवलान्वयित्वेति । केवलान्वयिसाध्यकसद्धेतुत्व इत्यर्थः। भंगेति । व्यर्थविशेषणघटितत्वेन दुष्टत्वप्रसंगादित्यर्थः । वाच्यं ज्ञेयत्वादित्यादिहेतुप्रयोगस्य मण्यादिन्यायग्रंथेषु पदार्थत्वादित्यादिहेतूनामद्वैतसिद्धिभेदधिक्काराद्यद्वैतग्रंथेषु बहुलमुपलंभात्तत्रेष्टापत्तिकरणं साहसमात्रमितिभावः । गूढाभिसंधिः समाधानमाशंकते । यद्धेतुव्यवच्छेदकत्वेनेति । हेतुपदं पंचम्यर्थे साक्षाद्विशेषणतापन्नवस्तुपरं तद्व्यवच्छेदकत्वेन तदर्थस्येतरव्यावृत्यादीच्छया विशेषणं । तत्र प्रकारीभूतो धर्मः पृथगुपदीयते । तत्प्रतिपादकातिरिक्तप्रातिपदिकेन बोध्यते । तदेव विशेषणं प्रयोजनांतरमपेक्षते व्यभिचारवारणादिप्रयोजनमपेक्षते । स्वोपरक्तहेतुबोधे हेतौ स्वाभावकोटिकसंशयनिवृत्तिरूपप्रयोजनस्य सिद्धत्वादंतरपदं । यथा गुणकर्मान्यत्वे सति सत्वादार्द्रेंधनप्रभववन्हेरित्यादौ । तत्र विशेष्यांशप्रतिपादकसत्ता वन्ह्यादिप्रातिपदिकातिरिक्तप्रातिपदिकेन विशेषणोपादानात् । तन्मात्रांतर्गतं विशेष्यांशप्रतिपादकप्रातिपदिकवृत्तिमाहिम्नैव यद्विशेषणतया तत्र भासते यथा विशेष्यांशरूपविषयत्वबोधकप्रमेयत्वप्रातिपदिकेनैव प्रमाया अपि भानं केवलत्वप्रत्ययस्याबोधकतया प्रकृतिसाहित्येन भासकत्वात् । प्रमाविनिर्मोकेण भानासंभवात् तद्वाक्तप्रयोजनांतरमपेक्षत इत्यर्थः । एवं वादी भवान् यथा नीलधूमादित्यादीनां प्रयोगानर्हत्वं प्रमेयत्वादीनां च प्रयोगार्हत्वं मनुते तत्प्रकारेऽत्राविशिष्ट इत्याशयेनाह। समं प्रकृतेपीति । अयं भावः । नीलधूमत्वादेर्व्यर्थविशेषणघटितस्य गुरुतया व्याप्यतानवच्छेदकतया तदवच्छिन्नहेतुप्रतिपादकं वचनमसाध्वेव । द्रव्यत्वेन धूमप्रतिपादकवाक्यवत् । द्रव्यत्वनीलधूमत्वयोर्व्याप्यतानवच्छेदकत्वे विशेषाभावात् । प्रमानिरूपितविषयतात्वमपि न व्याप्यतावच्छेदकं व्यर्थविशेषणत्वात् । तथापि प्रमेयत्वादिति हेतुवाक्यं साध्वेव । प्रमात्वरूपजात्यवच्छिन्नस्य ज्ञानत्वावच्छिन्नस्य वा विषयतासंबंधेन व्याप्यत्वबोधतात्पर्येण तादृशान्यायप्रयोगस्य संप्रदायप्राप्तत्वात् । विषयतया प्रमाया इति प्रयोगे पदद्वयप्रयोगाधिक्यप्रयुक्तगौरवप्रसंगेनैकपदस्यैवोक्ततात्पर्येण प्रयोगस्य न्यायप्राप्तत्वात् । संयोगेण धूमादिति प्रयोगे

गौरवप्रसंगेन मतुबर्थतया हेतुतावच्छेदकसंबंधबोधतात्पर्येण धूमवत्वादिति प्रयोगवत्। नीलधूमादित्यादावुक्तरीतेरभावादसाध्वेवेति यद्यभिप्रायः। स च समः प्रकृतेऽपि। अत्रापि विशेष्यांशप्रतिपादकमुक्तत्वप्रातिपदिकमहिम्नैव विशिष्टस्यैव प्रतिपादनात्स्वसंसर्गाभावाधिकरणतासंबंधेन बंधस्यैव हेतुत्वे उक्तवाक्यस्य तात्पर्यात्। अनुयोगितासंबंधेन बंधेनैवरूपेणाभावस्य हेतुत्वं सुवचमित्यसत्। बंधधर्मितावच्छेदकतयाऽभावत्वस्य निवेशेऽभावत्वमात्रस्य व्याप्यतावच्छेदकतयेतरांशस्य वैयर्थ्यात्। तस्यानिवेशे निर्धर्मितावच्छेदकताहशभानस्याव्युत्पन्नत्वात्। अन्यथाऽभावो न घटीय इति बाधकालेपि एकत्र द्वयमितिरीत्या अभावत्वघटयोरवगाहिनो बोधस्य घटो नास्तीत्यादिवाक्यादापत्तेः। अनुयोगितासंसर्गस्थले प्रकारतावच्छेदकधर्मावच्छिन्नप्रतियोगितानिरूपितानुयोगिताया एव संसर्गताभाननियमात्। बंधसामान्यात्यंताभावस्य प्राप्त्या निगडमुक्ते साधनवैकल्यात्। ध्वंसप्रागभावाधिकरणेऽत्यंताभावानंगीकारे ईश्वरातिरिक्तपक्षेषु भागासिध्यापत्तेश्च। नच स्वसंसर्गाभावाधिकरणतासंबंधेन बंधस्य हेतुत्वेऽपि बंधत्वं न जातिर्न वा ऽखंडोपाधिर्मानाभावात्किंतु दुःखप्रयोजकत्वमेव। तत्र प्रयोजकत्वस्यैवोक्तसंबंधेन व्याप्यतावच्छेदकत्वे इतरांशवैय्यर्थ्यमिति वाच्यं। बंध इत्यनुगतप्रतीतिसाक्षिकबंधत्वजात्यंगीकारेऽस्मन्मते बाधकाभावात्। स्वोत्पत्तिप्रयोजकप्रतियोगिकसंसर्गाभाववत्वसंबंधेन दुःखस्य हेतुं कर्तुं शक्यत्वाच्च। ननु पूर्वं सामान्यव्याप्त्यभ्युपगमपक्षे संसाररूपत्वस्य दुःखे विशेषणत्वायोगात्कथं हेतुतेति चेन्न। संसारजन्यदुःखत्वेनैव हेतुत्वात्। साध्यमपि स्ववृत्तिर्या संसारजन्यदुःखसंसर्गाभावाधिकरणतेत्यादिरीत्या निवेश्य परिष्कर्तव्यं। व्याप्तिरपि यो यत्प्रयोज्यदुःखस्य स्वप्रयोजकप्रतियोगिकसंसर्गाभाववत्वसंबंधेन संबंधीत्यादिरीत्या वक्तव्येति न कोपि दोषः। नचैतादृशपरंपरासंबंधस्य ग्रंथकृता कुत्राप्यनुक्तत्वादनभिप्रेतमिदमिति वाच्यं। तत्वप्रकाशिकादौ नारायणपदार्थनिर्वचनप्रस्तावे नाराः वेदाः प्रतिपाद्यतया तदयनत्वाद्वा नारायणः। नारा मुक्ताः प्राप्यतया तदयनत्वाद्वेत्यादिना संबंधत्वेन ग्रहणात्। विषयितादिवद्वृत्त्यनियामकत्वेपि व्याप्यतावच्छेदकत्वे विरोधाभावादुक्तं युक्तमेव। यदिच गुरोरपि धर्मस्य व्याप्यतावच्छेदकत्वमविरुद्धं। स्वरूपसंबंधरूपव्याप्यतावच्छेदकतायां मानाभावाद्दूषितत्वाच्च। किंतु स्वावच्छिन्नसमानाधिकरणेत्यादिरीत्या पारिभाषिकमेव। तच्च नीलधूमत्वादावविरुद्धं। नीलधूमादिति न्याये अप्रयोगस्तु वक्तुर्निग्रहादेव। धूमपदेन बोध्यमाने हेतौ नीलरूपविशेषणबोधेच्छया तत्प्रयोगे तस्य निष्प्रयोजनत्वेनानाकांक्षितबोधनेनाधिक्यात्। वक्तुः प्रयोजनभ्रमं विना तदिच्छासंभवेन तस्य भ्रांत्युन्नायकत्वेन निग्रहस्थानत्वात्। यत्र हेतुबोधकैकपदप्रयोगे कर्तव्ये तत्र प्रमेयत्वादित्युक्तौ विषयत्वादित्युक्तौ वा विशेषाभावात् तत्प्रतिपाद्यस्य च व्याप्यत्वे च विशेषाभावाच्च तत्र न निग्रहः। अतः प्रमेयत्वादिति हेतुवाक्यं साध्वेव। नच काकदंतज्ञानविषयधूमत्वावच्छिन्नबोधतात्पर्यैकप्रातिपदिकात्मकहेतुवाक्यं साधु स्यादिति वाच्यं। तादृशपदसत्वे इष्टापत्तेः। नच पूर्वं तस्य प्रक्रांतत्वे तद्बोधकं तस्मादिति हेतुवाक्यं साधु स्यादिति वाच्यं। सर्वनामपदघटिततादृशन्यायप्रयोगस्यासांप्रदायिकत्वादेव तथा व्यवहाराभावात्। लोके च तस्य पूर्वं बुद्धिस्थत्वे तथा प्रयोगस्येष्टत्वात्। न चैतादृशस्थले लघुशरीरहेतुबोधतात्पर्यं विहाय गुरुशरीरहेतुबोधेच्छा वक्तुरनुचितेति प्रमेयत्वादिति वक्तुर्निग्रहः स्यादिति वाच्यं। एकत्र पक्षे गुरुलघुप्रकाराणां उक्तेः संप्रदायसिद्धत्वात्। अन्यथा धूमप्रागभावादित्यस्याप्यवक्तव्यतापातेन तेषां हेतुत्वांगीकाराभावप्रसंगात्। दीधितिकृत्प्रभृतिभिरंगीकृतत्वेन तत्रेष्टापत्तेः कर्तुमशक्यत्वात्। ननु हेत्वाधिक्यवद्धेतु विशे-

षणाधिक्येपि निग्रहो युक्त इति चेत्सत्यं । हेत्वाधिक्यं नाम हेत्वंतरबोधकशब्दांतरप्रयोग एव वस्तुतो विद्यमानस्य त्यक्तुमशक्यत्वात् । एकप्रातिपदिकेन युगपद्धेतुतावच्छेदकद्वयावच्छिन्नस्य बोधयितुमशक्यत्वाच्च । तथाच हेत्वाधिक्यं नियमेन निग्राहकं । हेतुविशेषणाधिक्यं तु न तथा । विशिष्टवाचकैकप्रातिपदिकप्रयोगे शब्दांतरप्रयोगप्रयुक्ताधिक्यविरहात् । पृथक्पदेनोपादान एव तदाधिक्यप्रसक्तेः । तस्मात्प्रमेयत्वनीलधूमादीनां विशेषो युक्त एवेति यद्यभिप्रायः सोपि मम सम एव । अत्रापि मुक्तत्वपदेनोक्तहेतौ पदांतरेण विशेषणांतरादानेनाधिक्यरूपनिग्रहाभावेनोक्तहेतुवाक्यं युक्तमिति । इदमिहावधेयं । बंधसंसर्गाभावाधिकरणत्वस्य वक्ष्यमाणसंसारसंसर्गाभावाधिकरणत्वस्य वा व्यभिचारावारकविशेषणघटितत्वेपि हेतुत्वं युक्तमेव । विशेषणानामप्रयोजकताशंकानिरासद्वारा व्याप्तिनिश्चयोपयोगित्वेन तद्घटितस्य व्याप्यतावच्छेदकत्वात् । अधिकरणत्वमात्रस्याभावाधिकरणत्वस्य संसर्गाभावाधिकरणत्वस्य वा भेदं विना प्रागवस्थेत्याद्युक्तसाध्यं विनाप्युपपत्तेः । भेदं विना स्वस्वरूपभूतप्रमेयत्वाद्यधिकरणतायाः घटादौ स्वस्वरूपभूतस्वाधिकरणतायाश्च घटसंसर्गाभावादौ दृष्टत्वेन प्रकृते भेदं विना तदभावापादनायोगात् । प्रागवस्थेत्यादि साध्ये तु सुतरामप्रयोजकत्वं । कथंचिद्भेदमात्रांगीकारेणोक्तहेतूपपत्तावुक्तविशेषणसहितभेदांगीकारे बीजाभावात् । बंधरूपस्य वा संसाररूपस्य वा प्रतियोगिनोऽभावांशे विशेषणत्वे तु तस्य स्वप्रतियोगिना सह विरोधस्फूर्त्या विरोधस्यैककाले एकाधिकरणे अवर्तमानत्वरूपस्य तत्कालीनप्रतियोग्यधिकरणस्वाधिकरणयोर्भेदानंगीकारे उच्छेदप्रसंगरूपतर्कस्योत्थानेन व्याप्तिनिश्चयात् । एवं पक्ष ( व्यभि-चारशंकायां ) एव साध्यं मास्त्वित्यप्रयोजकत्वशंकायां वादिरीत्या प्राप्तायां मुक्तामुक्तयोरिति वक्ष्यमाणरीत्याऽनुकूलतर्कं विना तन्निरासा (व्याप्तिनिश्चया) योगेन तादृशानुकूलतर्कोत्थानार्थमपि हेतुविशेषणमावश्यकं । ( एवमपि पक्षांतर्भावेण व्यभिचारानिरासद्वारा व्याप्तिग्रहोपयिकत्वमक्षुण्णमेव ) । भेदमात्रानंगीकारे बद्धाबद्धव्यवस्थानुपपत्त्या बंधाभावसंसाराभावरूपहेतूच्छित्तिवत्संसर्गाभावाधिकरणत्वानुपपत्तौ बीजाभावात् । भेदरहितेपि कस्यचिच्छशविषाणादेः सृष्ट्याद्यकालीनतृणव्यक्त्यादेरभावमादायाप्युपपत्तेः प्रागवस्थीयभेदानंगीकारे भेदनाशस्याभ्युपगंतव्यत्वेन पूर्वं स्वभिन्नैः संसारिभिः सहैक्यप्राप्त्या मुक्तामुक्तव्यवस्थोच्छेदेन मुक्तत्वाभावः । भेदांतरोत्पत्त्यंगीकारे गौरवमित्यनुकूलतर्कः प्रसरत्येव । ननु स्वनिष्ठध्वंसरूपसंसारसंसर्गाभावस्य भेदापगमेनेदानींतनसंसारिभिः सहैक्येनाप्युपपत्त्या संसारिण्यपि संसारांतरसंसर्गाभावमादाय मुक्तत्वव्यवहाराभावेन च तस्य मुक्तत्वरूपत्वाभावेन तदुच्छेदापादानासंभवात्संसारसंसर्गाभावकूटं हेतुः । अत एव उभयाभावादिघटितसंसाराभावकूटस्य भेदं विनाऽप्युपपत्त्या अप्रयोजकत्वं स्यादतः संसर्गेति संसारसंसर्गविरोध्यभावानिवेशलाभाय सार्थकं । अभावकूटं तु न हेतुः । अन्यदीयसंसारध्वंसादीनामपि कूटांतर्गतत्वेन तादृशकूटाधिकरणस्यैवाप्रसिद्ध्यापत्तेः । किंतु यावंतः संसाराः तत्तत्प्रतियोगिकाभावकूटमेव हेतुरिति युक्तं । घटादिहेतौ उक्तकूटसत्त्वात्दृष्टांतस्यापि न साधनवैकल्यं । अविवक्षितबंधाभावपक्षे तु कथं । तत्रापि स्वानिष्टनष्टैकबंधव्यक्तिप्रतियोगिकस्य कस्यचिदभावस्योक्तरीत्या साध्यं विनाऽप्युपपत्त्या प्रयोजकत्वात् । नहि भेदानंगीकारे तादृशबंधव्यक्तितदभावयोर्विरोध उच्छिद्यते न वा साध्याभावे पक्षे तदुच्छेदः प्राप्नोति । बंधसंसर्गाभावकूटस्य तु हेतुता न घटते । निगडमुक्ते अंततः संसाररूपबंधस्य सत्त्वेन तदभावकूटाभावेन साधनवैकल्यापत्तेरिति चेन्न । स्वनिरूपकाभावाविरोधिसत्ताकालीनबंधाभावा-

धिकरणतायाः हेतुत्वेन विवक्षितत्वात्। उक्तहेत्वधिकरणे भेदासत्वे विरोधोच्छेदापत्तिरूपानुकूलतर्कावतरणेन व्याप्तेः सुग्रहत्वात्। पूर्वकालीनभेदनाशेन तयोरैक्येप्यैवानुपपत्तिभेदांतरकल्पने च गौरवमित्यनुकूलतर्कः साध्यांतरे द्रष्टव्यः। न चैवमप्यभावे बंधप्रतियोगिकत्वं व्यर्थं। एतादृशाभावांतराधिकरणताया अपि भेदं विनाऽनुपपद्यमानत्वेन व्याप्तिग्रहसंभवादिति वाच्यं। बंधपदस्य दुःखप्रयोजकजडपरत्वे सर्वस्यापि तथात्वेन चिन्मात्रव्यावृत्तौ बीजाभावेन बंधपदस्यैवोक्तार्थतात्पर्यग्राहकत्वाभ्युपगमात्। यद्वा प्रतियोगिविशेषणाभावस्याविशेषितत्वे तादृशाभावस्वरूपसंदेहेन झडिति हेतुतावच्छेदकविशिष्टहेतुस्वरूपानिश्चयेन व्याप्तिनिश्चयायोगात्तद्विशेषणं। दत्ते च विशेषणेऽभावविशेषस्य झडिति स्फुर्त्या भवत्येव व्याप्तिग्रहः। यथा समवायेन संयोगसामान्याभावे साध्ये संयोगी यथावद्विशेषाभावेषु समवायसंबंधावछिन्नत्वं निवेश्य सामान्यमुखव्याप्तिशरीरे समवायावछिन्नप्रतियोगिकत्वं हेतुकोटौ निवेश्यते। अन्यथा विशेषाभावकूटमात्रस्य समवायसंबंधावछिन्नप्रतियोगिताकसामान्याभावेन व्यभिचाराभावेऽपि विशेषाभावकूटमात्रस्य क्वचिद्धिकरणेऽवृत्तित्वसंदेहेन व्याप्तिनिश्चयानुपपत्तेस्तद्वत्प्रकृतेपि। स्पष्टं चैतत्सिद्धांतलक्षणगदाधरीये। विरोधस्य संबंधविशेषघटितत्वलाभाय संसर्गपदं। पक्षीभूते मुक्ते तादृशहेतुश्च संसारध्वंसो वा तदत्यंताभावो वा। पुरुषांतरनिष्ठसंसारध्वंसस्यापि पुरुषांतरवृत्तिसंसारेण सहैकाधिकरणवृत्तित्वरूपविरोधशालित्वात्। व्यभिचारावारकस्यापि व्याप्तिनिश्चयोपयोगिनो विशेषणस्य सार्थक्यं। परमाणुर्दशभागवान् युगपद्दशदिक्संयोगादित्यनुमाने अन्यथासिद्धिनिरासकतया सौधसमयचरणटिप्पण्यां यादवाचार्यैरुपपादितं। एवमद्वैतचंद्रिकायां गुर्व्यां लघ्व्यां च सत्यतासाधकानुमानभंगे उपपादितं। गदाधरेणापि तर्कग्रंथे संयोगान्यसंबंधावछिन्नवन्हिनिष्ठजनकतानिरूपकत्वे संयोगान्यसंबंधावछिन्नवन्हिनिरूपितजन्यत्वशून्यत्वे च सति संयोगसंबंधावछिन्नवन्हिनिष्ठजनकतानिरूपितजन्यताशून्यः स्यात्। धूमस्तर्हि वन्हिजन्यो न स्यादिति तर्के आपादककोटौ प्रथमसत्वंदलस्य व्यभिचारावारकस्यापि व्याप्तिग्रहौपयिकतया सार्थक्यमभिधाय मिश्रसम्मतिरभिहिता। ग्रंथकारैरपि साध्यसाधनवैकल्यं दृष्टांतस्य विशेषणे वैयर्थ्यमेकासिद्धौ तु विशिष्टासिद्धिरेव हीति भक्तिपादीयान्व्याख्याव्याख्यावसरे व्याप्तिग्रहानौपयिकविशेषणस्यैव वैय्यर्थ्यमभिहितं। न व्यभिचारावारकत्वमात्रेणातो नेदमलौकिकं। इत्थं चोक्तरीत्या विशेषणसार्थक्यसंभवेपि यत्प्रतिबंद्या उत्तरप्रदानं तदुक्तरीत्यैवेतत्समाधानं। मूले वक्ष्यमाणानुकूलतर्कानुरोधेन शिष्यैरेव सुग्रहमित्याशयेन परस्य स्वयमपि प्रमेयत्वादित्यादिहेतुवाक्यं प्रयुज्य परं प्रत्येतदाशंकनमनुचितमिति प्रदर्शनाय वा समाधिसौकर्याय वेति ज्ञेयं। एतेन परीतिमात्रे निर्भरकरणमयुक्तं। स्वयमपि उक्तानुव्याख्यानव्याख्यायां व्यर्थविशेषणस्य व्याप्यत्वासिद्धिसंपादकत्वेनांगीकृतत्वात्। परपक्षे यदा तस्याधिक्येनैव दूषकत्वं तदा तत्पक्ष एव निर्भरकरणे स्वमतपरित्यागे अपसिद्धांतापत्तेः। यद्यपि आधिक्यसंपादकतयापि तत्पदमथवेति व्याख्यातं तथापि तत्पूर्वकल्पापरित्यागेनैव। अन्यथा वस्तुनि विकल्पासंभवेन पूर्वकल्पस्य भ्रममूलकत्वप्रसंगात्। स्वमतनिरूपणप्रस्तावे परीत्या तद्व्याख्यानमित्यस्यायुक्तत्वात्। नहि तन्मात्रांतर्गतविशेषणातिरिक्तविशेषणस्य पदांतरेणोपादाने व्याप्यत्वासिद्धिरिति वक्तुं युक्तं। तथासति नीलधूमस्यैकस्यैव भिन्नपुरुषप्रयुक्ताभ्यां नीलधूमात् तस्मादिति पदाभ्यामेककाले व्याप्यत्वाव्याप्यत्वयोर्विरुद्धयोरापातात्। नच दोषत्वस्य पुरुषकालविशेषघटितत्वाव्द्यवस्थेति वाच्यं। अज्ञानाद्धिक्यादेव

( टीका ) अथवा संसारसंसर्गाभावो मुक्तत्वं तथात्वे घटो दृष्टांतः । परमात्मप्रतियोगिको वा भेदोऽत्र साध्यः । बंधप्रध्वंसाधिकरणत्वं च मुक्तत्वमिति न परमात्मनि व्यभिचारः ।

---

तथात्वात् । अस्य व्याप्यत्वासिद्धित्वपक्षेऽव्याप्तिरूपहेतुविरोधांतर्गततयाऽर्थद्वारा* वचनदोषत्वेन तत्पुरुषं प्रति तादृशस्यैवार्थस्य दुष्टत्वे वक्तव्येऽन्यं प्रति तादृशस्यैवार्थस्यादुष्टत्वे नियामकाभावादिति निरस्तमिति । पूर्वकल्पे उक्तरीत्या बंधादिपदसार्थक्यायासविद्वेषात्कल्पांतरमनुसरति । अथवेति । घटादिरेवेति । यद्यपि घटस्य दृष्टांतत्वं बंधाभावस्य हेतुतापक्षेपि घटते तथापि पुंल्लिंगस्वारस्यलब्धनिगडमुक्तपरित्यागे बीजाभावात्स एवोक्तः । पूर्वमुत्तरत्र पुंल्लिंगप्रयोगेपि मध्ये यादृत्थं तत्तथेति वस्तुमात्रग्राहकनपुंसकलिंगप्रयोगेण घटादीनां दृष्टांतमूलकता सूचितेति ज्ञेयं । अत्र कल्पे बंधसंसर्गाभावकूटस्य वा तत्सामान्याभावस्य वा पक्षतावच्छेदकत्वं संसारसंसर्गाभावकूटस्य हेतुत्वं पूर्वकल्पे चैतद्वैपरीत्यं ज्ञेयं । तेन यत्किंचित्संसाराभावस्यामुक्तसाधारणतया कूटस्य पक्षतावछेदकत्वे पक्षतावछेदकहेत्वोरैक्यं । तद्विशिष्टे तत्सत्तानभ्युपगमे चासिद्धिरित्यादिक्षुद्रोपद्रवाणां नावकाश इति सर्वमनवद्यं । यदत्र केनचिज्जाल्मेन जल्पितं । यत्तु मुक्तत्वादित्यस्य बंधसंसर्गाभाववदित्यर्थ इति तदसत् । अभाववत्वस्यैव हेतुत्वसंभवे इतरांशवैयर्थ्यात् । यदत्र पंडितंमन्येनोक्तं । तथा सति प्रमेयत्वादीनां केवलान्वयित्वभंगप्रसंगः । तत्रापि विषयताया एव केवलान्वयित्वस्य सुवचत्वादिति तदुपहसनीयमेव । स्वसमानाधिकरणव्याप्यतावछेदकधर्मांतराघटितधर्मस्यैव व्याप्यतावछेदकतया प्राचां मते व्याप्यत्वासिद्धेरत्रापि दुर्वारत्वात् । नव्यमतेप्याधिक्येन निग्रहे तस्यानुत्तरत्वात् । अभ्युपगतश्च तांत्रिकैराधिक्येन निग्रहः । स च हेत्वाधिक्यवद्धेतुविशेषणाधिक्येपि तुल्यः । अन्यथा वन्हिमान् काकदंतग्रहाविषयधूमादिति प्रयुंजानो न निगृह्येत । एतेन बंधात्यंताभावहेतुतापक्षोपि प्रत्युक्तः । अनुयोगितासंबंधेन लघोर्बंधस्य हेतुविशेषणत्वं तु कथंचित्सुवचमिति तदप्युक्तरीत्या सम्यक् टीकाविमर्शिभिर्न दुष्परिहरमिति स्वमौर्ख्यख्यापकमेव । लघोर्बंधस्य हेतुत्वं सुवचमिति स्वपांडित्यप्रदर्शनेन टीकाकृतामस्फूर्तिव्यंजनं तदपि स्वाज्ञानव्यंजकमेव । तस्य संभवद्भुक्तिकत्वे समं प्रकृतेपीत्यनेनैवास्यापि लब्धत्वात् । वस्तुतस्तदयुक्तमेवेत्युक्तमेवेति । मुक्तस्य तु न भेदोऽस्तीत्यादिवाक्ये परमात्मन एव प्रक्रांतत्वात्तन्निषेधकवाक्यस्थभेदपदमपि तद्भेदपरमेव । विमतिरपि तत्रैव । तस्यैव मुख्यत आकांक्षितत्वेन कंठतस्तत्साधनमेव युक्तमित्याशयेन तथैव व्याख्याति । परमात्मप्रतियोगिको वेति । जगत्कर्तृत्वाश्रयप्रतियोगिकभेदः सत्यादिपदतात्पर्यविषयप्रतियोगिकभेदो वेत्यर्थः । बंधेति । अविवक्षितबंधेत्यर्थः । अन्यथा दृष्टांते निगडमुक्ते साधनवैकल्यापत्तेः । पक्षतावछेदकं तु संसारध्वंस एवेति भावः । न व्यभिचार इति । घटेश्वरद्वित्वस्येश्वरात्यंतभिन्नत्वाभावात्त-

टिप्पनी—*अर्थद्वारा वचनदोषत्वं नामार्थनिष्ठदोषस्य वचनजन्यबोधेऽप्रामाण्यसंपादकत्वं । यथा धूमवान्वन्हेरित्यत्र हेतुनिष्ठव्यभिचारे हेतुवाक्यजन्यबोधे वन्हौ लिंगत्वप्रकारकत्वांशेऽप्रामाण्यसंपादकत्वं । तथाच नीलधूमादित्यस्य तस्मादित्यस्य च समानाकारबोधसंपादकतया तत्रैव प्रामाण्यमप्रामाण्यं च द्वयं विरुद्धमिति भावः ।

( टीका ) स्यादेतत् ।

त्त्वंसमादायेश्वरे व्यभिचारवारणाय बंधपदं । नच तस्य जीवादृष्टजन्यस्य साक्षात्परंपरया जीवसंबंधिसुखदुःखादिजनकतया बंधरूपत्वाद्व्यभिचारो दुष्परिहर इति वाच्यं । बंधपदस्य स्ववृत्तिदुःखप्रयोजकपरत्वेपि प्रकृते दुःखमात्रपरत्वेन दुःखध्वंसस्य हेतुत्वोररीकरणात् । उक्तव्याख्याने हेतुविशेषणवैय्यर्थ्यशंकाया अप्यभावोप्येतद्व्याख्याने बीजमित्यवधेयं । यत्तु अथ परमात्मप्रतियोगिकभेदो वाऽत्र साध्यः बंधप्रध्वंसाधिकरणत्वं हेतुस्तो न कोपि दोष इति चेन्मैवं । परमात्मशब्देन जगत्कर्तृत्वाविशिष्टविवक्षायां सिद्धसाधनं । सत्यादिपदतात्पर्यविषयाविवक्षायां मुक्ते तद्भेदस्य संदिग्धतया संदिग्धानैकांत्यस्य दुर्वारत्वात् । अनुकूल तर्कास्फूर्तौ संदिग्धव्यभिचारस्यापि दूषकत्वात् । स्पष्टमेतदनुमानदीधितौ । यत्त्वनवच्छिन्नविशेषणतया भेदवत्वं साध्यमिति तदसत् । यावत्कालमनुवर्तमानाया अनृतादिव्यावृत्तेः शुद्धचित्यभ्युपगमेन सिद्धसाधनानुद्धारादिति तत्तुच्छं । उत्तरत्राप्यनुकूलतर्कस्य वक्ष्यमाणतयोक्तदोषासंगतेः । अनुकूलतर्को निराशिष्यत इत्याशामात्रं । यत्त्वित्याद्युक्तिस्त्वनुक्तोपालंभनरूपा । यत्तु तेनैव स्वयमेव सिद्धसाधनपरिहारमाशंक्य समाहितं । नन्वत्र न सिद्ध साधनमुद्भावनार्हं त्वया ब्रह्मातिरिक्तस्य सर्वस्याप्रामाणिकत्वाभ्युपगमात् । न ह्यप्रामाणिक कार्याभ्युपगमेन सिद्धसाधनोपन्यासः प्रेक्षावतां युक्तः । तथासत्यतिप्रसंगादिति चेन्मैवं । सिद्धसाधनतायां पक्षे साध्यतावच्छेदकावच्छिन्नसाध्यस्याभ्युपगतत्वमेव तंत्रं । नतु तस्य प्रामाणिकत्वमपि न चातिप्रसंगः तस्यानिरूपणात् । नच पर्वतो वन्हिमान् धूमादित्यादौ धर्मिज्ञानाबाध्यवन्ह्यभ्युपगमशून्येनापि गुंजारोपितवन्हिमादाय सिद्धसाधनताप्रसंगः । उत्सर्गतः शब्दप्रवृत्तौ व्यवहारकालाबाध्यत्वस्योपाधितया वन्हिपदेन व्यवहारकालाबाध्यवन्हेरेवोपस्थिततया तस्य पर्वतादावनभ्युपगतत्वेन सिद्धसाधनोद्भावनायोगात् । वन्हित्व मात्रस्य साध्यतावच्छेदकत्वे तु भवेदेव सिद्धसाधनमिति तदसत् । अबाध्यत्वस्यैव प्रवृत्त्युपाधित्वसंभवे ब्रह्मज्ञानेतराबाध्यत्वादिलक्षणस्य व्यावहारिकत्वस्य शब्दप्रवृत्त्युपाधित्वे ब्रह्मस्वरूपज्ञानविधुराणां पामराणां बोधाभावप्रसंगात् । शब्दबलादेव तत्ज्ञानोपगमे शब्दज्ञानवतां* ब्रह्मस्वरूपे विप्रतिपत्त्यभावप्रसंगात् । लोके व्यावहारिकत्वविशिष्टवन्हित्वादिना केनापि साध्यतावच्छेदकत्वानभ्युपगमेन त्वदभ्युपगमस्य निर्मूलत्वादधिकमुत्तरत्र निराकृतं भवतीत्यलं ॥ ७ ॥ वदति वदनसत्वादूषणं मोहयन् स्वान्य इह किल विदोषे दोषदृष्टयाऽल्पबुद्धिः ॥ तिमिरभिदि नितांतं कल्पयन् तिग्मभानौ निबिडतम उलूकस्तत्तुलां संबिभर्ति ॥ नवनीरदनीलविग्रहश्रीहृतलीलालसकामिनीकटाक्षः । मधुराधरचुंबिवेणुनादैः सुखयन् गाः यदुनायकोऽवतान्मां ॥ ७ ॥

शंकते । स्यादेतदिति । किमनिर्वचनीयो वेत्यादि । ननु कथमियमाशंका सामान्यरूपेण निर्दिष्टे साध्ये विशेषविकल्पेन दूषणे वन्ह्याद्यनुमानोच्छेदप्रसंगः । तत्रापि पर्वतीयवन्हिर्वा महानसीयवन्हिर्वा साध्यत इत्यादिरीतया विकल्पेन दूषणप्रसंगात् । नच परस्येयं शंकाऽनूद्यत इति वाच्यं । उक्तानुमानस्यैतद्ग्रंथ एव सत्वेनैतद्ग्रंथपूर्वमत्र विकल्पस्य परग्रंथे अभावेन तन्निरासकतयोत्तरमूलावतरणायोगात् । न परिरीत्येयमाशंका स्वयमेव कृतेति वाच्यं । परीत्याप्येतादृशनिर्दलशंकायाः स्वयमकर्तव्यत्वात् । नहि सामान्यरूपेण साध्यस्थले विशेषविकल्पः कर्तव्य इति परग्रंथे वर्तते येनेदं परीतिः स्यादिति चेत् न ।

टिप्पनी—* शब्दज्ञानवतां सर्वेषामित्यर्थः ।

भेदमात्रं मुक्तेन साध्यतया न्यायप्रयोक्तुरभिमतं । तथात्वे तादृशभेदस्यास्मदादिभिः बद्धपुरुषैः कल्पितस्य तत्र मयांगीकृतत्वेन तत्साधने सिद्धसाधनात् । तस्यानियम्यनियामकभावानुपयोगितया तवार्थांतरापाताच्च । किंतु आधुनिकभ्रमाविषयभेदव्यावृत्तव्यावहारिकसद्विशेषभेद एव वा श्रुतेः पारमार्थिकत्वाकारेण भेदनिषेधपरत्वपक्षे तेन रूपेण वा विप्रतिपत्तिरिति वक्तव्यं । तथाच प्रथमविप्रतिपत्त्यनुरोधेनानिर्वचनीयभेदः साध्यते वा द्वितीयविप्रतिपत्त्यनुरोधेन पारमार्थिकभेदो वा साध्यत इत्यभिमानेन प्रकृते विकल्पोपपत्तिः । एवं मुक्तत्वादिहेतुविकल्पस्थलेऽपि भ्रमप्रतिपन्नमुक्तत्वादिना व्यभिचारवारणाय मन्मतरीत्या भ्रमप्रतिपन्नव्यावृत्तानिर्वचनीयत्वनिवेशे तवासिद्धिः । पारमार्थिकत्वनिवेशे ममासिद्धिरित्यादिरीत्यैवोपपत्तिर्द्रष्टव्या । मिथ्यात्वमानखंडनादौ यत्तु दृश्यत्वादि हेतावुक्तरीत्या विकल्पकरणं तत्परन्यायैस्तु दूषणमित्युक्तेरुक्तरीत्या परन्यायेनैव । न चात्तरत्र सामान्यरूपेण प्रयुक्ते विशेषरूपेण विकल्प्य दूषणस्यातिप्रसंजकत्वमाशंक्य सामान्यरूपासंप्रतिपत्तेरुक्तविकल्पे बीजत्वोक्तिर्विरुध्येत । सामान्यरूपसत्त्वेऽप्युक्तरीत्या भ्रमाविषयव्यावर्तकविशेषणदानप्रयुक्तविकल्पतत्पक्षदोषाणां संगतेरिति वाच्यं। यतः दृश्यत्वत्वं तावद्धेतुतावच्छेदकं न भवत्यात्मनि भ्रमप्रतिपन्नदृश्यत्वमादाय त्वद्रीत्याऽनेकांत्यापातात् । अतस्तद्व्यावृत्तं हेतुतावच्छेदकं त्वया वाच्यमित्याशयेन यदि व्यावहारिकसत्त्वरूपानिर्वाच्यत्वविशिष्टदृश्यत्वत्वं तन्ममासिद्धं । यदि पारमार्थिकत्वघटितं तत्तवासिद्धमिति दूषणेऽभिहितेऽस्मदभिमतव्यावहारिकसद्रूपानिर्वचनीये त्वदभिमते पारमार्थिके च विद्यमानं भ्रमप्रतिपन्नव्यावृत्तं किंचित्सामान्यं हेतुतावच्छेदकं स्यात्तावताऽन्यतरासिद्धिः । व्यभिचारपरिहारसंभवे भवदीयविकल्पोऽसंगत इत्याशयेन शंकिते पारमार्थिकं मिथ्यापरपर्यायव्यावहारिकपदबोध्यं व्यावहारिकं चांगीकृत्योभयत्रैकं सामान्यं ममासंप्रतिपन्नमेव । दृश्यत्वत्वं व्यभिचारितावच्छेदकत्वेन त्वयैव स्वीकृतमतो विकल्पो युक्त एवेत्याशयेन तादृशसामान्यनिराकरणं युक्तमेवातो न कश्चिद्दोषः। अवश्यमित्थमेव तदभिप्रायो वाच्यः। अन्यथा जगति तावद्दृश्यत्वं भवतांगीकृतं तत्सत्यं मिथ्या वाऽस्तु । तत्र दृश्यत्वरूपधर्मस्त्वयांगीकृत एव । सच मिथ्यासत्योभयवृत्तित्वेन त्वया नाभ्युपगम्यतां । तथाच तत्रानिर्वचनीयत्वसत्यत्वरूपविशेषणप्रक्षेपं विहाय दृश्यत्वत्वमात्रेण तस्य हेतुत्वाभिप्रेते उक्तविकल्पोऽसंगत एव । अन्यथा मीमांसकनैय्यायिकयोः वर्णेषु शब्दे नित्यत्वानित्यत्वरूपस्वपक्षसाधनाय पक्षीकरणायोगप्रसंगः । मीमांसकैर्वर्णस्य द्रव्यत्वमुच्यते । नैय्यायिकैस्तु गुणत्वं । द्रव्यात्मकवर्णे गुणात्मकवर्णे च वर्णत्वरूपसामान्यधर्मो वर्तत इत्युभाभ्यामपि न स्वीकृतं । इत्थं चैकेन वर्णस्य पक्षीकारे परेण द्रव्यात्मकवर्णस्य पक्षत्वे मम पक्षाप्रसिद्धिर्गुणात्मकवर्णस्य पक्षत्वे तु तवाप्रसिद्धिरित्यादिदूषणप्रसंगात् । अत एवोक्ताभिप्रायो युक्तः। नच धूमादिति हेतावपि आभासेन व्यभिचारवारणाय तत्र तद्व्यावर्तकविशेषणस्यावश्यकत्वेऽन्यतरासिद्ध्यादिदूषणस्य तत्रापि संभवात्तत्र संप्रतिपत्तिरयुक्तेति वाच्यं। उक्तरीत्या दूषणं परमते सर्वत्रापि वर्तत एव । परंतु धूमत्वसामान्यांगीकर्त्रोर्विचारे एतद्देशसंलग्नत्वादिना विकल्पो न कर्तव्य इत्यत्रैव संप्रतिपत्तिस्तत्रोक्तेत्यलमप्रस्तुतविचारेण । प्रकृतमनुसरामः । यद्वा विधिनिषेधाववधूय प्रतीतेरयोगात् । असद्व्यावृत्तं रूपं सर्वप्रतीतावुत्सर्गतो विषय इत्यवश्यं वक्तव्ये तद्रूपमनिर्वचनीयत्वं चेत्साध्यादिस्वरूपग्राहकप्रमाणेन तद्रूपस्यैवोपस्थित्याऽनिर्वचनीयत्वविशिष्टभेदत्वं साध्यतावच्छेदकं प्राप्तं । तादृशं रूपं यदि पारमार्थिकत्वं तदा पारमार्थिकत्वविशिष्टभेदस्यैवोपस्थित्या पारमार्थिकत्वविशिष्टभेदत्वं साध्यतावच्छेदकं प्राप्तं । अतः

(टीका) किम(यम)निर्वचनीयो भेदः साध्यते। किं वा पारमार्थिकः। नाद्यः। अपसिद्धांतात्। न द्वितीयः। परं प्रति दृष्टांतस्य साध्यवैकल्यादित्यत आह—

**(मूलं) न च भेदे विकल्पो युज्यते ॥ ३ ॥**

(टीका) च शब्द एवार्थे विकल्प इत्यनेन संबध्यते। समुच्चये वा।

---

कं पक्षमवलंब्यानुमानं प्रवृत्तमित्याशयेन तत्वनिर्णयेच्छुः पृच्छति। किमिति। नच प्रथमकल्पे उभयसिद्धभ्रमविषयव्यावृत्तानिर्वचनीयत्वस्यैव शंकाविषयत्वेन प्रसक्ततया तत्रैव प्रमाणाभावे अभिहिते भ्रमविषयशुक्तिरूप्यादावनिर्वचनीयत्वसाधनाय प्रत्यक्षादिप्रमाणशंकाया असंगतिरिति शंक्यं। भ्रमविषये अनिर्वचनीयत्वं स्वीकृत्यान्यत्र दृशानिर्वचनीयत्वमात्राप्रसिद्ध्युक्तौ सिद्धांतिना बीजाभावेनोक्तविकल्पप्रापकांशे विकल्पांशे च सर्वत्र शंककस्यायुक्ततां बोधयितुं चानिर्वचनीयसामान्यस्यैव सिद्धांतिना प्रसिद्ध्याव भिहितायां सामान्यतो विचारप्रसक्त्या शुक्तिरूप्ये तत्साधनाय प्रमाणशंकासंगतेः। द्वितीययोजनायां तु नैष दोषः। सामान्यत एवानिर्वचनीयत्वस्य प्रथमत एव प्रसक्तत्वादिति भावः। यत्तु सामान्यतो भेदे साध्यतयोक्ते उक्तरीत्या पारमार्थिकत्वादिधर्मस्य न साध्यतावच्छेदकतया प्रश्नः। येन सामान्यतः प्रयुक्ते विशेषविकल्पानुपपत्तिरूपदोषः स्यात्। किंतु प्रमाणेन विषयीकृतो भेदः पारमार्थिको ऽनिर्वचनीयो वेति वस्तुतत्वविचारकस्य शंकाऽनिर्वचनीयनिराकरणप्रसक्तिसंपादकतयोपन्यस्तेति तदसत्। पारमार्थिकत्वस्य साध्यतावच्छेदककोटिप्रवेशाभावे भेदमात्रस्य दृष्टांते परांगीकृतत्वेन साध्यवैकल्यदूषणासंगतेः। भेदत्वेनैव साध्यत्वे पारमार्थिकव्यक्तिसिद्धेरनिर्वाह इति दूषणस्यैव वक्तव्यतापाताच्चेति। परं प्रतीति। प्रतिवादिनं मां प्रतीत्यर्थः। तत्वनिर्णयेच्छोरन्यस्य शंककत्वे तु भवत्प्रतिवादिनं मायावादिनं प्रतीत्यर्थः। यद्यप्यप्रसिद्धविशेषणतैव परेण वक्तव्या दृष्टांते साध्यवैकल्यरूपविशेषानिषेधेन सामान्यतस्तदंगीकारप्राप्त्या परस्यापसिद्धांतप्रसंगात्। तथाप्यप्रसिद्धविशेषणतापि व्याप्तिग्रहस्थलरूपदृष्टांताभावनिर्वाहकतया व्याप्तिग्रहविरोधिनी भवतीति आवश्यकत्वात् दृष्टांते साध्यवैकल्यमेवाभिहितमित्यन्ये। पारमार्थिकत्वाकारेण विप्रतिपत्तिदशायां मुक्ते पारमार्थिकभेदतदभावबोधकश्रुतिं विना तस्यावश्यकत्वेन सामान्यतः पारमार्थिकभेदस्य श्रुतिप्राप्ततया अप्रसिद्धविशेषणताया इदानीं वक्तुमशक्यतया दृष्टांते साध्यवैकल्यमेवाभिहितमित्यपरे। परे तु साध्यमाने भेदे अनिर्वचनीयत्वादिकोटिकसंशयस्य भेदत्वे तत्समानाधिकरणभ्रममूलकत्वरूपायुक्ततां व्युत्पाद्य तत्परिहाराय भेदे अनिर्वचनीयत्वपारमार्थिकत्वादिग्रहमंतरेणापि जातसंशय एवैतत्प्रश्नमूलं भवति। स तु युक्त एवेति पुनः प्रत्ययविरुद्धे अनिर्वचनीयस्य सर्वत्राप्रतीतत्वादिना तन्निराकरिष्यते। शिष्याणां कथाक्रमशिक्षार्थं परानभिप्रेतस्याप्यापाततः संभवदुक्तिककल्पस्य शंकानिराकरणयोर्ग्रंथकारीयसंप्रदायप्राप्तत्वात्। इदानीं शंककस्य क्वचिद्भेद एव पारमार्थिकत्वं क्वचिदनिर्वचनीयत्वमिति ज्ञानपूर्वकं प्रकृते विकल्प्य दूषकत्वात्तेनाप्रसिद्धविशेषणता नोद्भावयितुं शक्येति दृष्टांते साध्यवैकल्यमेवोक्तं। मुक्तभेद एव पारमार्थिकत्वादिविचारावसरे अन्यत्र क्वचित् पारमार्थिकभेदोऽपि स्यादन्यथा मुक्त एव विवादायोगादिति युक्त्या सामस्त्येन स्वमतास्फूर्तिमतः परमतानुसारिणः ज्ञानसंभवात्। अत एव पारमार्थिकभेदः परस्याप्रसिद्ध इति स्वमतस्फूर्तिमुखायुक्ततां संशयस्याह। तत्वनिर्णयेच्छोरन्यस्य शंककत्वेपि तस्य परमतानुसारेणैव प्रवृत्त-

(टीका) एतदाशंकानिरासससमुचितस्यैवानुमानस्य साधकत्वात् । एकत्र धर्मिणि विरुद्धानेकाकारकल्पनं विकल्पः । संशय इति यावत् । तन्मूलः प्रश्नोऽत्र विकल्पपदेन लक्ष्यते । हेतुसूचनं लाक्षणिकपदप्रयोगे प्रयोजनं । इदमुक्तं भवति । आस्तामिदं दूरे दूषणाभिधानं । प्रश्न एव तावदयं न युज्यते सन्देहमूलत्वात्प्रश्नस्य । नखलु कश्चिन्निश्चितं पृच्छति । नाप्यत्यन्ताविदितं । नच विमतो भिन्न इत्युक्ते विना प्रश्नेनापसिद्धांताद्युद्भावनावसरोऽस्ति । ननु विनापि सन्देहात्प्रश्नो भवति । यथा देवदत्त कियन्तस्तनयास्तवेति । मैवं । तत्रापि पुत्रत्वसामान्यस्य संख्याविशेषसमानाधिकरणतयाऽनुभूतत्वेन तत्प्रतिभासे सति संस्कारोद्बोधात्संख्याविशेषस्मृतौ तत्रान्यतमजिज्ञासायां निश्चायकप्रमाणाभावेन संशयोदयस्य न्यायप्राप्तत्वेन तन्मूलत्वात् । केवलं संख्याप्रभेदानां बाहुल्याद्गौरवभयेनैको द्वौ वेत्यादिविशेषनिर्देशेन विना कियन्त इति सामान्येन प्रश्नः क्रियते ।

त्वात्तं प्रत्येतदभिधानं युक्तमेवातः शंककस्य भेदे पारमार्थिकत्वज्ञानप्रसक्त्यभावशंकापि नेति युक्तमेव । दृष्टांते साध्यवैकल्यस्यैवाभिधानमित्याहुः । परंतु भावाद्वैतपक्षे ब्रह्मवृत्त्यनृतादिव्यावृत्तेः पारमार्थिकत्वदर्शनेन विकल्पातः साध्याप्रसिद्धिविरहात् दृष्टांते साध्यवैकल्यमेवोद्भावितमित्याहुः । एतदाशंकेति । अनुमानस्य मुक्तत्वहेतोः साधकत्वात् पक्षे साध्यानुमितिनिर्वाहकत्वात् । तथाच प्रकृतानुमितिजननरूपैकक्रियान्वयित्वमुभयोरिति समुच्चयनिर्वाहजननरूपक्रिया च जन्यज्ञानविषयत्वरूपपंचम्यर्थघटिकेति भावः । तथाच मुक्तत्वहेतुर्वर्तते । उक्तशंकाप्ययुक्तत्वान्नदूषणमतो विमतो भिन्न इति पर्यवसितोऽर्थः । भेदे विकल्पो न युज्यत इत्ययुक्तं । विकल्पपदस्य विविधधर्मपरत्वे भेदे भेदत्वघटप्रतियोगित्वादिनानाधर्माणां सत्त्वात्तन्निषेधानुपपत्तिः प्रकृतानुपयोगश्चेत्यतो विकल्पपदं प्रश्नपरतया व्याख्यातुमुपयुक्तमाह । एकत्रेत्यादिना । कल्पनं ज्ञानं । अक्षरार्थमुक्त्वाऽनेन कस्य लाभ इत्यत आह । संशय इति । प्रश्नस्य पुरुषविशेषकर्तृकस्यायोगेपि हेतोरुक्तदूषणेन दुष्टत्वेन गृहीतत्वात्कथं तस्य साधकत्वमित्यत आह । इदमुक्तं भवतीति । आस्तामित्यादि । तथा च प्रश्नस्यायुक्तत्वमनिर्वचनीयस्याप्रामाणिकतां विना न पर्यवस्यतीति भेदत्वेन वोत्सर्गतः पदस्वाभाव्यात् प्रतीयमानपारमार्थिकत्वसहितभेदत्वेन वा साध्यत्वेन किंचिद्दूषणमिति प्रकृतानुमानात्साध्यसिद्धिर्निष्प्रत्यूहेति भावः । प्रश्नेन युक्तप्रश्नेन । उद्भावनं सदुत्तररूपोद्भावनं । तथाच वादिवाक्येन हेतावप्रामाण्यग्रहानास्कंदितदुष्टत्वग्रहो दुष्टत्वग्रह एव वा न जायत इति भावः । संख्याविशेषेति । द्वित्वमात्रत्रित्वमात्रसामानाधिकरण्येनेत्यर्थः । अन्यतमजिज्ञासायामिति । एतच्च समानानेकधर्मोपपत्तेर्विप्रतिपत्त्युपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशय इति न्यायसूत्रे विशेषजिज्ञासायाः विशेषापेक्षापदेन संशयकारणकोटौ परिगणितत्वादुक्तं । तत्र तत्परिगणनं च साधारणधर्मादिज्ञानवत्संशयान्वयव्यतिरेकानुभावमाश्रित्य वा संशयप्रतिबंधकीभूतपदार्थांतरविषयकलौकिकप्रत्यक्षादिसामग्रीविघटकतया प्रायेणोपयोगाद्वेति ज्ञेयं । न्यायप्राप्तत्वेनेति । संशयसामग्रीरूपालिंगजन्यानुमितिविषय

(टीका) अथात्र गिरिदर्यां किमप्यद्राक्षमित्युक्ते किं लक्षणकं तदिति पृच्छति। तदा कथं संदेहहेतुकत्वं। विशेषस्मरणोपायाभावादिति चेन्न। तत्रापि वस्तुत्वेन लक्षणसद्भावमनुमाय तद्विशेषस्मृतौ तत्किमनुभूतेष्वन्यतममन्यद्वेति संदेहादेव प्रश्नात्। अस्तु वाऽन्यत्र प्रश्नो यथा तथा। अनेककोटयवलंबी प्रकृतस्तावत्संदेहमूल एवांगीकार्यः। अस्तु संदेहमूलत्वं प्रश्नस्य। तथापि कुतो न युज्यत इत्यत्रापि 'न च भेदे विकल्पो युज्यत' इत्येवोत्तरं। प्रश्नो हि संदेहहेतुक इत्युक्तं। नच भेदे भेदविषये किमयमनिर्वचनीयोऽथवा पारमार्थिक इत्येवंरूपो विकल्पः संदेहो युज्यते। नच कारणाभावे कार्यमुत्पत्तुमर्हति। अतिप्रसंगात्।

---

त्वेनेत्यर्थः। अस्तु वेति। अन्यत्र विशेषरूपेण कोट्यनुल्लेखस्थले यथा तथा सामान्यरूपेण ज्ञातकोटीनां विशेषरूपेणाज्ञानेनापि अनेककोट्यवलंबी विशेषरूपेणानेककोटयुल्लेखी। अत्र विशेषः भक्तिपादसुधाव्याख्यायां यादवाचार्यैरुक्तोऽनुसंधेयः। इत्येवेत्तरमिति। तथा चोत्तर मूलस्य हेतुतायां कथंतया (कथमित्याकांक्षया) न मनः खेदयितव्यमिति भावः। किमनिर्वचनीय इत्यादि। ननु किमनिर्वचनीयो भेदः साध्यत इति शब्दोल्लेख्यसंशयः पूर्वमुपन्यस्तः। सच विशिष्टभेदे साध्यत्वकोटिक एव नतु भेदेऽनिर्वचनीयत्वकोटिकः। तथात्वे विशेष्यतावच्छेदकविशिष्टविशेष्यनिर्णयायोगेनानिर्वचनीयभेद इत्यादिनिर्देशायोगादिति कथं पूर्वविकल्पप्रयोजकसंशयनिरासकत्वमस्येति चेन्न। नायमनिर्वचनीयत्वादिविशिष्टे भेदे साध्यत्वकोटिकः। तथात्वे साध्यत्वाभावकोटयुल्लेखापत्त्या साध्यो न वेत्याकारकतापत्तेः। किंतु प्रकृतानुमितिसंबंधिसाध्यतायां अनिर्वचनीयत्वविशिष्टभेदपारमार्थिकत्वविशिष्टभेदविषयक एव। एवंच भेदवत्वेन निश्चिते साध्यत्वे विशिष्टभेदोऽवगाही संशयः। विशेषणीभूते अनिर्वचनीयत्वपारमार्थिकत्वरूपविरुद्धकोटिद्वयावगाही विशेष्यवन्निष्ठविशिष्टाभावस्य विशेषणाभावरूपतामते विशेष्यवत्वेन निश्चीयमानविषयकविशिष्टसंशयस्य विशेष्ये विशेषणाभावविषयकत्वस्य क्लृप्तत्वात्। दंडवत्वेन निश्चिते पुरुषे रक्तदंडवान्नवेति संशयस्य पुरुषवृत्तिदंडे रक्तत्वकोटिकत्ववत्। नच दंडेरक्तत्वकोटिकत्वे रक्तदंडवाननिर्वचनीयभेदो वेत्यादिशब्देनोल्लेखानुपपत्तिः। तस्य दंडादौ रक्तत्वनिर्णयसापेक्षत्वादिति वाच्यं। नैय्यायिकमते शशशृंगमस्ति न वेति संशयस्य शशे शृंगतदभावकोटिकस्यापि शशशृंगादिपदघटितवाक्येनाभिलाप्यतायाः स्वीकृतत्वेन विशृंखलतदज्ञानेनापि तादृशव्यवहारोपपत्त्या तस्योक्तनिर्णयसापेक्षत्वाभावाभ्युपगमात्। यद्वा दंडत्वभेदत्वसामानाधिकरण्येन रक्तत्वानिर्वचनीयत्वादिनिर्णयसत्वात्तादृशशब्दप्रयोगोपपत्तिः। संशयस्तु पुरुषवृत्तिदंडत्वे तदनुमानविषयभेदत्वावच्छिन्नधर्मिक इति न कोपि दोषः। अत एवैवं शंककस्य कश्चिद्भेदेऽनिर्वचनीयत्वपारमार्थिकत्वज्ञानस्यावश्यकत्वादप्रसिद्धविशेषणता नोद्भावयितुं शक्येति। परे त्विति मतसंगतिः। नन्वयं प्रश्नः अनिर्वचनीयत्वविशिष्टभेदत्वपारमार्थिकत्वविशिष्टभेदत्वयोः साध्यतावच्छेदकत्वविषयक एव। तस्यैव साध्यवैकल्यादिदूषणक्षमत्वात्। ननु भेदे वस्तुतो अनिर्वचनीयत्वपारमार्थिकत्वादिकोटिविषयको दृष्टांते साध्यवैकल्याद्यसंगतारिति पूर्वमवोक्तं। एवंच भेदे अनिर्वचनीयत्वादिकोटिको अनिर्वचनीयत्वादिविशिष्टभेदत्वे साध्यताव

(टीका) अथैवं विधो भेदे संदेहः कुतो न युज्यत इत्यत्रापि 'नच भेदे विकल्पो युज्यत' इत्येवोत्तरं । संशयो हि स्थाणुपुरुषाद्यनेकविशेषसंबंधितयाऽनुभूतेनोर्ध्वतादिसाधारणधर्मेणालिंगितस्य पुरोवृत्तिवस्तुनोऽवभासे संस्कारोद्बोधद्वारेण प्रागनुभूतस्थाण्वादिविशेषविषयस्मृतौ प्रयोजनानुसंधाने विशेषाजिज्ञासायां अन्यतरनिश्चायकप्रमाणमनुसरतोपि तदलाभे सति किमयं स्थाणुस्स्यात्पुरुषो वेति जायते । न च भेदेऽनिर्वचनीयः पारमार्थिक इति विकल्पः प्रभेदो युज्यते । येन 'विमतो भिन्न' इत्युक्त्या भेदप्रतीतावनिर्वचनीयादिस्मृतिः स्यात् । अथ कथमनिर्वचनीयत्वपारमार्थिकत्वप्रभेदो भेदे न युज्यत इत्यत आह—

(मूलं) अनिर्वचनीयस्य सर्वत्राप्रसिद्धत्वादेव ॥ ४ ॥

(टीका) अनिर्वचनीयस्य भेदस्येति शेषः। एवकारोऽनिर्वचनीयस्येत्यनेन संबध्यते ।

---

छेदकत्वावगाही अयं संशयः कथं प्रकृतप्रश्नकारणत्वेन निरूप्य दूष्यत इति चेन्न । यतो विषयतायां साध्यतारूपायां पारमार्थिकत्वादिविशिष्टभेदावगाहिसंशयो नाम पारमार्थिकत्वादिसामानाधिकरण्यविशिष्टभेदत्वावच्छेद्यत्वविशिष्टतादृशभेदवृत्तित्वप्रकारकः । स च भेदे उक्तोभयकोटिक एव पर्यवस्यति । वादिनः स्वन्यायसाध्यत्वेनेच्छाविषयीभूतानुमितिनिरूपितविषयतायां भेदनिष्ठत्वस्य भेदत्वावच्छेद्यत्वस्य च शंककेन निश्चितत्वात् शुद्धभेदत्वस्य विषयतावच्छेदकत्वे भ्रमविषयीभूतभेदमादाय सिद्धसाधनत्वानुसंधानेन पारमार्थिकत्वावच्छिन्नत्वानिर्वचनीयत्वावच्छिन्नत्वान्यतरस्यापि निश्चितत्वात् । अतो विशेष्यवत्त्विष्टत्यादिन्यायेनोक्तसंशयः भेदे अनिर्वचनीयत्वपारमार्थिकत्वकोटिको वा भेदानिष्ठभेदत्वावच्छिन्नत्वाविषयतायामनिर्वचनीयत्वावच्छिन्नत्वतदभावकोटिको वा पारमार्थिकत्वावच्छिन्नत्वतदभावकोटिको वा भवति । अन्यतरत्वेन निश्चयेपि विशेषरूपेणानिश्चयात् । एतत्संशयत्रयमपि विशिष्टभेदत्वे साध्यतावच्छेदकत्वसंशयरूपमेव । एतत्संशयत्रयानिरासकविशेषदर्शनाभावादेक एव वा समूहालंबनरूपः संशयः साध्यतावच्छेदकत्वसंशयपर्यवसन्नः । तथा च पक्षद्वयेप्येतत्प्रश्नप्रत्युक्तसंशयस्य कारणत्वादन्यांशस्य दूषणेऽनुपयुक्तत्वाद्भेदेऽनिर्वचनीयत्वपारमार्थिकत्वकोटिकसंशयत्वेनैव तस्य प्रकृते ग्रहणं कृतमिति कृतबुद्धयो विदांकुर्वंतु । संशयो हीति । पूर्वं वक्ष्यमाणरीत्या संशयसामग्रीत्वेन क्लृप्तस्य संख्याविशेषस्मृत्यादेः कारणकलापस्य सत्वात् संशयो देवदत्त कियंत इति प्रश्नपूर्वं युक्तिसिद्ध इति प्रतिपादितं । अधुना प्रकृते संशयसामग्र्या भ्रमाघटिताया अयोगकथनाय सार्वत्रिकसंशयसामग्री निरूप्यतेऽतो न पौनरुक्त्यं । प्रभेदः भेदत्वन्यूनवृत्तिधर्मः । कस्यचिद्निर्वचनीयस्य सर्वत्राप्रसिद्धत्वे भेदे अनिर्वचनीयत्वरूपप्रभेदसत्वे बाधकाभावः अनिर्वचनीयसामान्यस्याप्यप्रसिद्ध्युक्तौ इदानीमाधिक्यं । भेदमात्रे अनिर्वचनीयत्वप्रभेदाभावस्य वक्तव्यत्वादित्यतो विशेष्यवाचकं पदं पूरयति । भेदस्येति शेष इति । पारमार्थिकभेदस्य परमतेऽप्रसिद्धेरपि विकल्पायुक्ततायां बीजतया वक्ष्यमाणतया एवकारः स्वस्थाने स्थितोऽन्ययोगव्यवच्छेदकश्चेद्बाधितार्थ कस्स्यादतो भिन्नक्रमेण योजयति । एवकार इति । अनिर्वचनी-

(टीका) उपलक्षणं चैतत् । पारमार्थिकोऽपि भेदो न परस्य सिद्ध इत्यपि द्रष्टव्यं । ननु नायमस्ति नियमः । यत्संदेहविषयजातीयमेवारोप्यमाणकोटिसंबंधितया प्रतिपत्तव्यमिति । आरोप्यमाणकोटिप्रतिपत्तिमात्रेणापि संदेहदर्शनादिति चेत्सत्यं । तथापि नायं संदेहो युज्यते । आरोप्यमाणानिर्वचनीयस्य कुत्राप्यप्रतीतत्वात् । एतदप्युक्तं । अनिर्वचनीयस्य सर्वत्राप्रसिद्धत्वादेवेति । अत्र दृष्टांतमाह ।

---

यत्वस्यैव भेदस्येत्यनेन सर्वत्रेत्यनेन सूचितार्थांतरस्यानुक्त्या न्यूनतापरिहारायाह । उपलक्षणं चैतदिति । श्रृंगिग्राहकतया एकस्य प्रदर्शकमित्यर्थः । तथा चार्थांतरे तात्पर्यसत्वेपि एतदुक्त्या तस्यापि शिष्यैर्ज्ञातुं शक्यतया तस्यानुक्तिर्न न्यूनतापादिका । स्वोक्तिं विनाऽज्ञायमानावश्यवक्तव्यार्थानुक्तेरेव न्यूनतापदार्थत्वादिति भावः । पारमार्थिकोपीति । परस्येति । यद्यपि पारमार्थिकत्वे भेदत्वसामानाधिकरण्यज्ञानं तत्कोटिस्मारकं नतु भ्रमरूपमिति । भ्रममूलकत्वरूपायुक्तत्वस्य संशये साधने नेदमुपयुज्यते। तथापि वक्ष्यमाणमयुक्तत्वं न भ्रममात्रमूलत्वरूपं । किंतु भ्रममूलकत्वस्वमतापरिज्ञानस्फुटप्रतिपत्तिकव्यावर्तकधर्मज्ञानाभावाद्यन्यतममूलकत्वमेव । तत्र स्वमतपरिज्ञानादिमूलकत्वज्ञापकतयेदमुपयुज्यत एवेति द्रष्टव्यं। प्रथम योजनालब्धार्थमात्रे मूलस्य तात्पर्यं यथा योजनमेव वाक्यं प्रयोज्यं । स्वायत्ते शब्दप्रयोगे इति न्यायादत उक्तविन्यासेनौचिती स्यादिति शंका स्यात्तत्परिहाराय न केवलमत्रैव तात्पर्यं किंतु शंकांतरपरिहारकार्थांतरेपि । तत्र च यथा प्रयुक्तमेवोपयुज्यत इत्याशयेन तदवतारिकामाशंकां दर्शयति । नन्विति सजातीयमिति । संदेहविशेष्यतावच्छेदकघटकधर्मवत्वेन सजातीयमित्यर्थः । प्रकृते अयं भेदः पारमार्थिको न वेति संशये इदंत्वविशिष्टभेदत्वरूपप्रकृतसंशयविशेष्यतावच्छेदकघटकभेदत्वस्य साधारणधर्मताखंडनार्थं सिद्धांतिनः प्रवृत्ततया तदुपयुक्तशंकासंगतिः। आरोप्यमाणकोटिप्रतिपत्तिमात्रेणेति । वस्तुत्वादिसाधारणधर्मांतरेण विप्रतिपत्त्या चेत्यर्थः । तथा च वस्तुत्वादिसाधारणधर्मेण विप्रतिपत्त्या वा प्रकृतसंदेहो भ्रांतिं विना भवतीति भावः । नायं संदेह इति । ऊर्ध्वत्वादिसाधारणधर्माधीनस्थाणुत्वादिसंशयात् विप्रतिपत्त्यधीनात् इंद्रियाणि भौतिकानि न वेति संशयाच्चास्य वैलक्षण्यं सूचितं तत्र हेतुमाह । आरोप्यमाणेति । तद्धर्मारोपस्य तादात्म्येन तदवच्छिन्नारोपरूपत्वनैयत्यमेव । लोहितं स्फटिकमित्यादौ स्फटिके जपात्वावच्छिन्नभेदग्रहेऽपि लौहित्यावच्छिन्नस्य तादात्म्येनारोपो वर्तत एव। लोहितस्फटिकमिति सामानाधिकरण्यबोधकशब्दप्रयोग इत्याशयेनानिर्वचनीयत्वस्य प्रस्तुतत्वेऽप्यनिर्वचनीयत्वेत्याभिहितं । भावद्वय कोटिकसंशयांगीकारपक्षे पाषाणे स्थाणुत्वपुरुषत्वसंशये कोटिद्वयस्याप्यारोपितत्वं न तथा प्रकृते । किं त्वनिर्वचनीयस्यैव पारमार्थिकत्वं तु भेदे वर्तत एवातस्तत्कोटावप्रासिद्धिर्न वक्तव्येत्याशयेनानिर्वचनीये आरोप्यमाणत्वमुक्तं । आरोपविषयस्येत्यर्थः । कुत्रापीति । तथा चैवकारोऽप्यर्थकः सन् सर्वत्रेत्यनेन संबध्यत इत्युक्तं भवति । अप्रतीतत्वादिति । सत्त्वेनानाहार्यप्रतीत्यविषयत्वादित्यर्थः । अत्रेति । अत्र वक्ष्यमाणानुमान इति विशेष्यतावच्छेदकघटकधर्मस्य साधारण्याभावेन तद्व्यतिरिक्तस्य च तथात्वाभावेन सर्वथा

(मूलं) शशविषाणं गोविषाणं वोच्यत इतिवत् ॥४॥

(टीका) यथा केनापि तत्र विषाणमस्तीत्युक्ते किं भवता विषाणपदेन शशविषाणमुच्यते किंवा गोविषाणमिति न युज्यते प्रश्नः। शशविषाणस्यैवाप्रसिद्ध त्वेन विषाणत्वस्य तत्संबंधितया अनुपलब्धस्य विषाणपदात्प्रतिभासे सत्यपि तद-नुस्मरणहेतुत्वानुपपत्त्या जिज्ञासोदयाभावेनैवंविधसंशयायोगात । तथा प्रकृतेपि। इदमुक्तंभवति। विमतः प्रश्नो न युज्यते असंदिग्धविषयत्वात्। शशविषाणं गोवि-षाणं वोच्यत इति प्रश्नवत्। विमतः संशयो न युज्यते अनुपलब्धारोप्यमाणकोटि त्वात्। उक्तसंशयवदिति। ननु प्रश्नः संशयो वा न युज्यत इति कोऽर्थः। यदि नोत्पन्न इति।तदा प्रत्यक्षबाधः।अथोत्पन्नोपि कारणशून्य इति।तदाऽनुमानबाधः। कार्यत्वादेव कारणानुमानात्।अथातत्कारणोत्पन्न इति। तदा व्याघातः। तदुत्पादकस्यैव तत्कारणत्वात्। मैवं। शशविषाणादिप्रश्नाद्यनुपपत्तेरप्येवं प्रत्याख्यानप्रसंगात्। कारणादिविमर्शवतो न शशविषाणादिप्रश्नाद्युत्पत्तुमर्हतीति। तत्रार्थ इति चेत्। तर्ह्यत्रापि कारणविपर्यासादुत्पद्यतां नाम। नपुनः प्रेक्षावतामुत्पद्यत इति प्रति-ज्ञार्थोपपत्तेः। ज्ञानजन्येषु कार्येषु कारणविपर्यासादपि भयादाविव जन्मोपपत्तेरिति॥

---

कोट्यप्रतीतिरित्युक्तार्थ इति भावः। विषाणत्वस्येति। उपलक्षणमेतत्। वस्तुत्वादिधर्मांतर-स्येत्यपि ग्राह्यं। अनुमानप्रकारमाह। इदमुक्तमिति। असंदिग्धेति। प्रेक्षावत्संबंधिसंदेहाविषय-विषयकत्वादित्यर्थः। तादृशसंदेहानधीनत्वादिति पर्यवसितः। अनुपलब्धेति। प्रेक्षावन्निष्ठ-सत्वप्रकारकानाहार्यप्रतीतिविषयत्वाभाववदारोप्यमाणकोटिकत्वात् स्वीयारोप्यमाणकोटि प्रतियोगिकसादृश्यवन्निष्ठविशेष्यताकानाहार्यसत्वप्रकारकप्रतीत्यभाववत्प्रेक्षावत्सामान्यक-त्वादिति यावत्। तेन सर्वत्र संशय आरोप्यमाणकोटेरसत्वेन तत्र प्रेक्षावतां सत्वप्रकार-कप्रतीत्यभावात्सर्वसंशयेषु व्यभिचारशंकानवकाशः। प्रथमानुमानहेतौ संदेहे प्रेक्षावन्निष्ठत्व निवेशान्नासिद्धिः। द्वितीयानुमानेऽप्यप्रेक्षावन्निष्ठां प्रेक्षावन्निष्ठामप्यसत्वेन प्रतीतिं तन्निष्ठा-मेवाहार्यसत्वप्रतीतिमादाय नासिद्धिः। प्रेक्षावत्सामान्यनिवेशाद्यत्किंचित्प्रेक्षावदवृत्ति-स्वारोप्यमाणस्वसजातीयविषयकोक्तप्रतीतिके स्थाणुपुरुषादिसंशये न व्यभिचारः। एवं प्रत्याख्यानेति। तत्रायुक्ततायाः सर्वैरंगीकृतत्वान्नेष्टापत्तिस्तत्र युक्तेति भावः। कारणादीति। कारणादौ प्रश्नं संदेहं प्रति वा साक्षात्परंपरया वा कारणीभूते साधारणधर्मज्ञानतत्प्रयो-जकीभूतकोट्यनुभावादौ विमर्शः प्रामाण्याप्रामाण्यान्यतरनिश्चायकहेत्वाद्यनुसंधानं तद्वता मित्यर्थः। तर्हीति। कारणविपर्यासात् कारणीभूतात् भ्रमादित्यर्थः। यद्वा कारणे साधारण धर्मज्ञाने कोट्यनुभावादौ विपर्यासात्प्रामाण्यभ्रमादित्यर्थः। निश्चितप्रामाण्यकसाधारण-धर्मादिज्ञानस्यैवानाहार्यसंशयकारणत्वात् साधारणधर्मदर्शनादौ प्रामाण्यनिश्चयस्यापि संशयप्रयोजकत्वमितिभावः। ननु कथं भ्रमात्कार्यांगीकारः। तथात्वे रजतभ्रमोत्तरप्रवृ-त्त्याविना रजतनिष्पत्तिपूर्वकंकटकादिसिद्धिः स्यादित्यत आह। ज्ञानजन्येष्विति। प्रमात्वघटि-तरूपानवच्छिन्नज्ञाननिष्ठकारणताकेष्वित्यर्थः। कारणविपर्यासादिति। पूर्ववदर्थद्वयमपि द्रष्टव्यं।

ननु प्रेक्षावत्वं किं भ्रमरहितत्वमुत प्रमावत्वं । नाद्यः । भगवदतिरिक्तानां परशुक्लातिरिक्तानां च सर्वेषामेव भ्रमवत्वनियमेन तादृशप्रेक्षावदप्रसिद्धेः । न द्वितीयः । क्वचित्प्रमावत्वस्य सर्वेषां सत्वेन शशविषाणादिसंशयवतामपि प्रेक्षावत्त्वापत्त्या दृष्टांते साध्यवैकल्यस्य बाधस्य चापत्तेरिति चेन्न । स्वनिष्ठसंशयप्रयोजकभ्रमरहितानां प्रेक्षावत्पदेन विवक्षितत्वात् । तथा चानाहार्यभ्रमाघटितसामग्र्यनधीनत्वं तादृशभ्रमघटितसामग्री प्रयोज्यत्वरूपत्वं वा ऽयुक्तत्वं । संशये प्रश्ने च साध्यतया पर्यवसन्नतादृशसामग्र्यनधीनसंदेहप्रकारीभूतस्वकोटित्वं अनाहार्यभ्रमघटितसामग्र्यधीनसंदेहविषयीभूतस्वकोटिकत्वं तादृशसंदेहाधीनत्वं वा प्रथमानुमाने हेतुः । अन्यतरनिर्णयवत्पुरुषकर्तृके परपरीक्षार्थप्रश्ने वाक्यार्थज्ञानमुद्रयाहार्यसंशयस्यावश्यकतया तदधीनप्रश्ने संदेहस्य किंचिदंशे भ्रमत्वनैय्यत्येन संदेहरूपभ्रमघटितसामग्र्यधीनतत्प्रश्नस्य लोके नायुक्तत्वव्यवहारः। तादृशायुक्तत्वस्य वादिप्रश्नस्य साधने वादिनस्तादृशभ्रमस्योक्तपुरुष इव भ्रांतत्वव्यवहारानिर्वाहकतया वादिनिग्रहासंपादकत्वेन उक्तानुमानस्याकिंचित्करत्वापत्तेरतः साध्यकोटौ भ्रमेऽनाहार्यत्व निवेशः । इत्थं च हेतुकोटावपि भ्रमे अनाहार्यत्वानिवेशे उक्तपरपरीक्षार्थप्रश्नादौ व्यभिचारः स्यादतस्तन्निवेशः । नच वादिनोऽनिर्वचनीयत्वादिसंदेहस्याहार्यत्वाभ्युपगमादिति वाच्यं । प्रकृतप्रश्नसंशयस्यानाहार्यत्वपक्ष एवानिर्वचनीयनिराकरणोपोद्घातविधया कग्रंथस्य प्रवृत्तत्वात् । एतच्चाग्रे व्यक्तीभविष्यति । द्वितीयानुमानेऽप्युक्तमेव साध्यं । हेतुस्तु सत्वेन प्रमीयमाणत्वाभाववत्स्वकोटिनिष्ठसादृश्यप्रतियोगिकत्वं अनिर्वचनीयत्वरूपैककोटिमादायैव पक्षे हेतुसत्वमुपपादनीयं । ननु पारमार्थिकत्वरूपकोटिमित्याशयेनारोप्यमाणेत्यभिहितं । ननु तदपि निर्विघ्नं प्रयोजनाभावात् । सत्वेनानिर्वचनीयप्रतीतेरनाहार्यायाः परस्यैव सत्वात् तादृशप्रतीतिविषयत्वाभावघटितहेतोरसिद्धिपरिहाराय प्रमाविषयत्वाभावनिवेशः । नच प्रतीत्यभाव एव साधितो भवतीत्युत्तरग्रंथविरोधः । तस्य हेतुशरीराघटकत्वे तत्साधनस्याकिंचित्करत्वापत्तेरिति वाच्यं । तस्य प्रतीतिसामान्याभाव घटितपूर्वोक्तयथाश्रुतहेत्वभिप्रायेण प्रवृत्तत्वात् । तत्र प्रेक्षावत्पदेन स्ववृत्तिभ्रमाधिकरणक्षणानवच्छिन्नस्यैव हेतुशरीरनिविष्टतया यथाश्रुतहेतोरपि दोषाभावात् । उक्तनिष्कृष्टहेत्वादरे यथा न विरोधस्तथाऽनुपदमेवोत्तरग्रंथे व्याख्यास्यते । ननु संदेहस्यायुक्तत्वे अनिर्वचनीयस्य सर्वत्राप्रसिद्धत्वादेवेति मूलं भेदस्येति शेषपूरणेन भेदत्वस्य साधारणधर्मत्वखंडनपरतया व्याख्याय प्रकारांतरेण तत्प्रतीत्या संशयो भवतीत्याशंक्य तत्प्रतीतिसामान्यनिराकरणरूपतया तदेव मूलं योजितं । इदानीं संशयस्यायुक्तत्वे अनुपलभ्यारोप्यमाणकोटिकत्वादिति द्वितीययोजनालभ्यार्थो हेतुत्वेन वर्णितः । इत्थं च प्रथमयोजनालभ्यार्थो यदि संशयायुक्तत्वे हेतुस्तस्यात्राकथनान्न्यूनता । यद्यहेतुस्तदा प्रथमव्याख्यानमयुक्त*मिति चेन्न । प्रथमत एव भेदस्वरूपसाधारणधर्मज्ञानाधीनकोटिस्मृत्यादिमूलकत्वं वा प्रकारांतराधीनकोटिस्मृतिमूलकत्वं वेति विकल्पौ हृदि निधाय तत्राद्यपक्षनिराकरणपरतया नच भेद इति मूलस्य तृतीययोजनां कृत्वा तद्धेतुतयाऽनिर्वचनीयस्येति मूलं शेषपूरणेन व्याख्याय प्रथमकल्पोक्तदोषपरिहारपूर्वकं द्वितीयकल्पमुत्थाप्य तदाशंकापरिहारकत्वेन तदेव मूलं यथाश्रुतमेव व्याख्यातं । तत्र प्रथमव्याख्याया अकरणे भेदप्रयोगोत्तरं जायमान संशयस्य पुरःस्फूर्तिकभेदत्वरूपसाधारणधर्मज्ञानजन्यत्वकल्पस्य प्रथमत एव बुद्धिस्थस्य निराकरणमकृत्वा कथंचित्तदुपस्थित्याविना संशयोपपत्तिनिराकरणे अवसराभावेनाना

* टिप्पनी—निष्प्रयोजनत्वादिति भावः ।

(टीका) कथमानिर्वचनयिस्य सर्वत्राप्रसिद्धत्वामित्यत आह–

**(मूलं) न चानिर्वचनीये किंचिन्मानं ॥५॥**

(टीका) च शब्दो यस्मादित्यर्थे। ननु प्रमितिः प्रमाणमपेक्षते न प्रसिद्धिमात्रं। नच संशयस्य प्रमितिसापेक्षता। प्रतीतिमात्रेणापि स्मरणोपपत्त्या संशयोपपत्तेः। यथा खलु विप्रलंभकवाक्याच्छशविषाणसद्भावं मन्यमानस्य विषाण मित्युक्ते भवति संदेहः। अतोऽनिर्वचनीयप्रसिध्द्यभावोपपादनाय तत्कारणाभावे वक्तव्ये कथं प्रमितिकारणाभावाभिधानमिति।

---

कांक्षिताभिधानत्वापत्त्या तन्निराकरणाय प्रथमव्याख्यानमवश्यकमेव। एवं च भेदत्वरूपसाधारणधर्मज्ञानजन्य उक्तसंशयो भ्रममूलस्वमतापरिज्ञानान्यतरमूलकः। भेदत्वस्य कोटिद्वयसाधारणत्वाभावात्। पारमार्थिकत्वसमानाधिकरणत्वेन स्वमतासिध्दत्वाच्चेति अनुमानं प्रथमव्याख्याने लब्धं। तच्च स्फुटमेवेति तदा न प्रदर्शितं। द्वितीयव्याख्यालब्धानुमानमनिर्वचनीयत्वकोटिकसंशयसामान्यस्यायुक्ततासाधकमिति तस्यैव मुख्यत्वाच्छशविषाणं गोविषाणं वेति मूलेन तत्रैव दृष्टांत आचार्यैः प्रदर्शितोऽतस्तद्व्याख्यानटीकायां तदेवानुमानं प्रदर्शितमतो न पूर्वोत्तरग्रंथसंदर्भाशुद्धिरिति धीराः विभावयंतु।७। चशब्दस्य हेत्वर्थकत्वे यस्मादनिर्वचनीये प्रमाणं नास्ति तस्मात्सर्वत्रानिर्वचनीयस्याप्रतीतत्वमित्यर्थः स्यात्तत्राशंकते। नन्विति। न च प्रसिध्दत्वादित्यस्याप्रमितत्वादित्यर्थः। तत्र चोक्तस्य हेतुत्वं युक्तमेवेत्याशंक्य निषेधति। न चेति। प्रतीतिमात्रेणेति। तथा चाप्रसिध्दत्वादित्यस्याप्रमितत्वादित्यर्थकरणे संशयनिराकरणाय तत्कारणतावच्छेदकावच्छिन्नाभावे वक्तव्ये प्रमितत्वावच्छिन्नाभावकथनं व्यर्थं स्यात् इति भावः। अत इति मौलप्रसिध्दिपदस्य ज्ञानसामान्यार्थकत्वस्य स्थितत्वादित्यर्थः। तत्कारणाभावे वक्तव्य इति। नन्वेतदयुक्तं। न ह्यत्र प्रश्ने संदेहे वाऽनुत्पन्नत्वरूपमयुक्तत्वं साध्यते येनेयं कारणाभावस्य वक्तव्यत्वशंका संगच्छेत। नैतदस्ति। तत्र प्रत्यक्षबाधोक्तिपूर्वकमविमर्शभ्रमादिमूलकत्वरूपायुक्तत्वस्य साध्यताया अनुपदमेव स्वयं वक्ष्यमाणत्वात्। तत्र च प्रमाविषयत्वाभाववत्स्वकोटिकत्वमेव हेतुः नतु ज्ञानसामान्याभावघटितः। सर्वस्यापि संदेहस्य पूर्वं स्वस्मिंश्च कोट्योर्भानावश्यकत्वेन स्वपदेन संशयग्रहणे हेतोरप्रसिध्यापत्तेः। इत्थं चाप्रसिध्दत्वादित्यस्याप्यप्रमितत्वादित्येवार्थः। तत्र प्रमितिसामान्याभावसाधनाय प्रमाणाभावाभिधानं संगतमेव। न चाप्रसिध्दत्वादित्यस्याज्ञातत्वार्थकत्वाभिमानिनः इयमाशंकेति वाच्यं। तथात्वे अग्रे अभिमानस्यैव निराकर्तव्यतया तत्प्रतीत्यभाव एव साधितो भवतीति तस्यैव साध्यत्वोक्तेरसंगत्यापत्तेः। किं चोत्तरत्र प्रमितिरेव संदेहहेतुतया वक्तव्येत्यस्यासंगतिः। प्रतीत्यभावस्यैव साध्यत्वे तत्कथनस्योपयोगाभावात्। नच तस्मिन् भ्रमाभावसाधने तदुपयुज्यत इति वाच्यं। यतः प्रतिवादिनः संदेहानुपपत्त्या तत्र कोटिज्ञानं भवतामप्यनुमानसिध्दं। स्वज्ञाने भ्रमत्वं तु तेन न स्वीकृतं। न ह्येतावता तत्र भ्रमाभावः सिध्यति येनेदमुपयुक्तं स्यात्। एवं प्रतीत्यभाव एव साधितो भवतीत्येतद्बाधितार्थकं च कोटिभ्रमस्य भवद्भिरेव तत्रानुमानेन निश्चितत्वात्। तथा च सर्वोप्ययं पूर्वापरग्रंथः परस्परविरुध्द इति चेन्न। यतः पूर्वमनिर्वचनीयस्य सर्वत्राप्रसिध्दत्वादिति मूलस्य प्रथमव्याख्यया भेदत्वरूपसाधारणधर्मजन्यसंशयस्य साध्य

( टीका ) सत्यं । प्रतीतिरेव संदेहोपयोगिनीति वस्तुगतिः । तथापि प्रमाणविषयतयोपक्षिप्ते भेदेऽनिर्वचनीयो वेत्यादिसंदिहानेन प्रतिवादिनाऽऽत्मनोऽनिर्वचनीयादिविषया प्रमितिरेव संदेहकारणतया वक्तव्या । तत्प्रतीतेरप्रमात्वांगीकारे स्वयमेव विलीनं संशयेन ।

रण्यांशे भ्रमात्मकज्ञानजन्यत्वेनायुक्तत्वे सित्धांतिनाऽभिहिते पूर्ववादिना स्वसंशयस्य भेदत्वरूपसाधारणधर्मज्ञानं विनाप्युपपादयता प्रकारविशेषनिर्भरं विहाय साधारणधर्मांतरेण वान्येन वा संशये आवश्यकीभूतकोटिस्मृत्यादिसत्वान्न मम संशयसामग्रीभ्रमघटितेति निरूपणे कर्तव्ये कोटिप्रतिपत्तेः प्रमात्वं न निरूपणीयं । सित्धांतिना कोटिज्ञानांशे भ्रमत्वं स्वीकृत्य तन्मूलकत्वेनायुक्ततायाः पूर्वमनुक्तत्वात् । किंतु भेदत्वरूपसाधारणधर्मज्ञानाधीनत्वं त्याज्यं। तन्मात्र एव भ्रमत्वस्य पूर्वमुक्तत्वात्।इत्थं च तच्छंकापरिहारके उक्त मूलस्य द्वितीयव्याख्यानेऽप्रसित्धत्वादित्यस्याप्रमितत्वादिति नार्थः कर्तव्यः । कोटिप्रमितेः पूर्वमनाशंकिततत्वेन तन्निषेधासंगतेः । तस्य प्रमात्वाभावेऽपि भेदत्वरूपसाधारणधर्मांशे भ्रमाधीनत्वरूपपूर्वसाध्यस्य तत्कल्पपरित्यागपूर्वकमेतच्छंकप्रतिवादिसंशये बाधेनासित्धेश्च । अतो अनुमानांतराभिप्रायेण सर्वत्र प्रेक्षावत्सु अप्रसिध्धेरप्रतीतत्वादित्येवार्थः कर्तव्यः । सर्वत्रेत्यस्य न सर्वस्मिन्नित्यर्थः । पृच्छकस्यैव प्रतीतत्वेन सामान्यतः प्रतीतत्वनिषेधायोगात् । उक्तरीत्याऽर्थांगीकारे तु पृच्छकस्य प्रेक्षाभावेनैव वाक्यस्याबाधितार्थत्वं । इत्थं च विमतप्रश्नः स्ववृत्तिप्रेक्षाधिकरणक्षणावछिन्नपुरुषाधिकरणकोत्पत्यभाववान् तादृशक्षणावछिन्नपुरुषवृत्तिसंशयाविषयीभूतकोटिकत्वात् । शशविषाणमित्यादिप्रश्नवत् । विमतः संशयः तादृशक्षणावछिन्नपुरुषाधिकरणकोत्पत्यभाववान् तदवछिन्नवृत्तिप्रतीतिविषयत्वाभाववत्स्वकोटिकत्वादित्यनुमानद्वयमेव मूलटीकयोरभिप्रेतं । अत एव टीकायां न पुनः प्रेक्षावतामुत्पद्यत इति प्रतिज्ञार्थोपपत्तेरित्यनेनोक्तस्य साध्यत्वमादृतं । प्रेक्षा च प्रकृते भ्रमाभाव एव । तस्योपलक्षणया निवेशे अंततः सुषुप्तिकालमादाय सर्वेषां भ्रमसामान्याभाववत्वाद्बाध † व्यभिचारासित्धयः प्रसज्यंत इत्युक्तरीत्यैव निवेशः। पूर्वमस्मत्प्रदर्शितनिष्कर्षस्त्वेतन्मूल त्रयपरमतातात्पर्यविषयीभूतो नेदानीमनुमतः। इत्थं च नन्वित्यादिग्रंथेन प्रेक्षावत्सु संशयानुत्पत्तिरूपसाध्यसित्धये तत्कारणीभूतप्रतीत्यभावस्यैव हेतुशरीरप्रविष्टतयावश्यकत्वेन पूर्व वाक्यतात्पर्यविषयत्वमभिप्रेत्य तत्र प्रमाणाभावोक्तेरसंगतिशंका युक्तैव । समाधानग्रंथोपि संदर्भशुत्धः । तथाहि प्रतीतिसामान्यस्यैव हेतुशरीरानिविष्टत्वं अस्मत्संमतमित्याशयेनाह । सत्यमित्यादिना । वस्तुगतिरिति । तथा च प्रतीत्यभावनिवेश एव हेतौ युक्त इति भावः । तथापि प्रतीतिमात्रस्य संशयकारणत्वेपि वक्तव्येत्यत्रान्वयः । उपक्षिप्ते गृह्यमाणे । एतच्च प्रमाणेन तत्वावधारणकामंप्रति प्रमाणस्योक्तत्वेन तस्यान्यतरकोट्यवधारणकाले इछाधीनः आहार्य संशयो न घटतेऽतो अनाहार्य एवायं संशयः तत्र युक्तायुक्तत्वादिचिंता युक्तैवेति सूचनाय । तत्र प्रतिवादित्वव्यवहारस्तु तत्वनिर्णयेच्छया परमतमनुरुध्य प्रवृत्तत्वादिति ध्येयं । आत्मन इत्येतत्संदेहान्वितं । वक्तव्येति । प्रतीतित्वेन कारणतया शंकितमप्यनिर्वचनीयत्वकोटौ सत्व ज्ञानसामान्यं प्रमारूपमेवेति वस्तुत अभिप्रेतमिति वक्तव्यमित्यर्थः । अप्रमात्वांगीकारे तादृशभ्रमत्वांगीकारे । स्वयमेव विलीनं । संशयकारणीभूतं ज्ञानजातमिति शेषः । प्रतीतिपदस्यैव विभक्तिविपरिणामेन संबंधे नपुंसकलिंगानुपपत्तेः संशयमनुत्पाद्य नष्टं

† टिप्पनी—हेतावप्युपलक्षणया निवेशेऽसित्धिर्विशेषणतया निवेशे व्यभिचारो ज्ञेयः ।

( टीका ) अतःप्रमाणाभावेन प्रमाभावे साधितेऽप्रमायाश्चस्वयमेवानंगीकारे प्रतीत्यभाव एव साधितो भवतीति न कश्चिद्दोषः । कथमनिर्वचनीयार्थे प्रमाणाभावः । यावता प्रत्यक्षं शुक्तिरजतादेरनिर्वचनीयतामावेदयदस्ति । बाधकज्ञानसमनंतरं मिथ्यैव रजतं प्रत्यभादित्यनुवादात् ।

---

स्यादित्यर्थः। न संशयेन स्वफलीभूतसंशयेन नष्टं न स्यादित्यर्थः। स्वयमेव विलीनं संशयेनेति नञ्घटितपाठे तु स्वोत्पत्तिप्रतिबंधकासमवधानेऽपि स्वकारणाभावादेवानुत्पन्नः संदेह इत्यर्थः। इत्थं च पाठद्वयेऽपि अप्रमात्वग्रहानास्कंदितस्य वा प्रमात्वेन गृह्यमाणस्य वा कोटिप्रतिपत्त्यादेः संशयकारणत्वेन तदभावात्संशयो न स्यादिति भावः । अत इति । कोटिप्रतिपत्तिसामान्यस्य प्रमात्वांगीकारादित्यर्थः । इदं चानंगीकारे हेतुः । साधिते प्रेक्षावत्स्विति शेषः। प्रतीत्यभाव एवेति । हेतुशरीरघटक इत्यर्थः। साधितो भवतीति । प्रेक्षावत्स्वित्यत्राऽपि संबंध्यते । न कश्चिद्दोष इति न न्यूनतेत्यर्थ इति । यद्वा पूर्वोक्तनिष्कृष्टानुमानमेव मूलटीकयोरभिप्रेतं । सर्वत्रेति मूलं तु न हेतुशरीरप्रविष्टाभावप्रदर्शकं । किंतु त्वदन्येषु सर्वेषु प्रेक्षावत्सु अनिर्वचनीयकोटेरप्रतीतत्वात् त्वत्प्रतीतिर्भ्रमरूपैव । एकस्य प्रतिभातं तु कृतकान्नातिरिच्यत इति न्यायादिति रीत्या कोटौ हेतुशरीरप्रविष्टप्रमाविषयत्वाभावोपपादकं । टीकायां तूक्तवक्ष्यमाणग्रंथाभिप्रायं त्हदि निधाय शिष्यहिताय पूर्वमेवानुमानप्रकारोभिहितः। वस्तुत एतन्मूलव्याख्योत्तरमेव वक्तव्यः। इत्थं च नन्वित्यादिशंककस्यायमभिप्रायः। भेदत्वरूपसाधारणधर्मज्ञानजन्यत्वेन स्वसंशयस्य भ्रममूलत्वरूपायुक्तत्वेऽभिहिते तं विना प्रतीतकोट्युपस्थित्यादिना स्वसंशयमुपपाद्य पूर्वदोषे परिहृते पूर्वदोषव्यवस्थापनार्थं एतदन्यप्रकारेण कोट्युपस्थितिर्न घटते। त्वदन्यस्मिन् सर्वत्राप्रतीतत्वे तं प्रत्यन्यस्यकारणत्वाकल्पनादतो भेदत्वज्ञानेनैव कोट्युपस्थितिस्तवैव वक्तव्यातः पूर्वोक्तदोषो दुर्वार इत्यनेन मूलेनोच्यते । तत्र प्रतीत्यभावः कथमित्याकांक्षायां न चेति मूलं प्रवृत्तं । तच्चानुपपन्नं । पूर्वमूलस्य प्रमित्यभावपरत्वे तस्य संशयकारणाभावानुपमर्दकतया प्रतीत्यभावस्यैव पूर्वमूलाभिप्रेतत्वे तत्र मानाभावोऽनुपपादक इति । समाधानग्रंथे तु संशयकारणनिरूपणादिकं यद्भवता कृतं तत्सर्वं युक्तमेव । तथाप्यनिर्वचनीयत्वादिकोटिप्रमितिरेव तेन स्वसंदेहहेतुतया वक्तव्या । तस्या अप्रमात्वांगीकारे स्वयमेवविलीनं तूष्णींस्थितं स्यात् । नसंशयेन न संशयसाध्यप्रश्नादिना भाव्यं । नञ्घटितपाठेतु वादिनि स्वयमेव विलीनं संशयेनानुत्पन्नमित्यर्थः । तथा च कथं तन्मूलकप्रश्नाद्युपपादनाशेति भावः। साधारणधर्मज्ञानरूपभ्रममूलकत्वाभावेऽपि स्वसंशयस्य प्रकारांतरेण भ्रममूलकत्वापरिहारात् । अस्माकं तु भ्रममूलकत्वमेवसाध्यतयाऽभिमतं न प्रथमदूषण एव निर्भरः अतोऽप्रसिद्धत्वादित्येतदेकस्येति न्यायेन पृच्छकज्ञानस्याप्रमात्वोपपादकमेव । तथा चान्यत्र कोटिभ्रमजनकसामग्रीपरानंगीकृता । तस्य भ्रमत्वे तत्समानाकारस्यज्ञानस्यापि प्रमात्वायोगात् । अनिर्वचनीये मानाभावात् प्रमासामग्रीनास्त्येवातः प्रतीत्यभाव एव प्रेक्षावत्सु साधितो भवतीति भावः। अतो न पूर्वोत्तरविरोध इति स्थितं । यावतेति । यस्मादित्यर्थः । नन्वयं घट इतिवदिदंमनिर्वचनीयामिति प्रत्यक्षाभावात्कथमनिर्वचनीयार्थे प्रत्यक्षस्य प्रामाण्यमित्यत आह । बाधकेति । अनुवादादिति । अभिलापादित्यर्थः । अभिलापकशब्दजन्यबोधसमानविषयकत्व-

( टीका ) यावदुक्तं भवत्यनिर्वचनीयमिति तावदुक्तं मिथ्येति । नचाप्रतीतमाप्तेनानूद्यते । नच बाधकप्रत्ययो भ्रांतिः । नापि लिंगादिजन्य इति ।

---

मभिलप्यमानप्रत्ययस्येति नियमात् । मिथ्यापदार्थस्य रजतान्वितत्वेन शाब्दबोधे भानात् अनूद्यमानप्रत्ययस्याप्यनिर्वचनीयविषयकत्वमिति भावः । ननु शाब्दबोधस्य मिथ्यात्वविषयकत्वात्कथं तदभिलाप्य बाधकप्रत्ययस्यानिर्वचनीयत्वविषयकत्वमित्यत आह । यावदुक्तं भवतीति । अनिर्वचनीयमितिपदेन यादृशविशिष्टस्वरूपं अस्मदभिमतं तदेव मिथ्यापदेन बोध्यते तथैव लोकानुभावादित्यभिमानः । ननु अग्निर्माणवक इति वाक्यप्रयोक्तरि तद्वाक्येन यथाश्रुतेन जायमानबोधसमानविषयकज्ञानस्यादर्शनात्प्रकृते तादृशवाक्यप्रयोगमात्रेण तस्य तज्ज्ञानं कथं कल्प्यत इत्यत आह । न चाप्रतीतमिति । अनूद्यते स्वकीयप्रतिपत्ति विषयतया प्रतिपाद्यते । आप्तेन यथार्थवक्त्रा । अयं भावः । यदि रजतं मिथ्येत्येव शब्दस्तेन प्रयुज्येत तदा तथा ज्ञानरहितोऽपि व्यपदेशमात्रं करोतीति वक्तुं शक्यते । न चैवं । किंतु रजतं मम मिथ्यैवाभादिति मिथ्यात्वविशिष्टरजतविषयिणीं स्वप्रतीतिमेव शब्देन बोधयति । वाक्यप्रयोगकारिणीभूतं च ज्ञानं बाधकप्रत्ययाविषयकानुव्यवसायो वा गुरुमतवद्बाधकज्ञानमेव वा रजतं मिथ्या जानामीत्याकारं नोभयथाऽपि काचित्क्षतिरिति । ननु स्वकीयबाधकज्ञानस्य रजतविषयकमिथ्यात्वप्रकारत्वमाप्तेन यदुक्तं तत्तथाऽस्तु तथापि तत्प्रत्ययस्य भ्रांतित्वेन रजतानिर्वचनीयत्वं न सेत्स्यतीत्यत आह । न चेति । बाधकप्रत्ययत्वमेव भ्रांतित्वाभावे हेतुं सूचयति बाधकपदेन । अस्य भ्रांतित्वे एतद्विरुद्धार्थावगाहिनः पूर्वप्रत्ययस्यैतद्बाधकत्वापत्त्या ऽस्य बाध्यत्वमेव स्यान्नबाधकत्वमिति भावः । ननु प्रत्यक्षप्रमाणोपन्यासप्रस्तावे एतत्कथनमयुक्तं । अस्य शुक्तित्वादिरूपलिंगवाक्यादिजन्यत्वादित्यत आह । नापीति । लोके घटादेरनुमितिः शाब्दबोधानंतरं घटो मे प्रत्यभादिति न परीक्षकादिव्यवहारः किंतु तर्कित इत्यादिरूप एव प्रत्यक्षानंतरमेव घटः प्रत्यभादिति व्यवहारः। अत उक्तवाक्यं तत्ज्ञानप्रत्यक्षत्वेनैव बोधयतीति लिंगादिजन्यत्वांगीकारे तद्विरोध इति भावः। अत एवोक्त बाधकप्रतीते लिंगजन्यत्वाभावे हेत्वंतरोपन्यासायासनिरासाय जन्यतया बाधकप्रतीत्यनुमापकमिथ्यैव रजतमित्येतावन्मात्रवाक्यं विहाय बाधकप्रत्ययं प्रत्यक्षत्वेनावगाहमानेनानुव्यवसायेन ( वाक्यार्थज्ञानमुद्रया ) जन्यं बाधकप्रत्ययस्य प्रत्यक्षत्वेनैव शब्दविधयाबोधकं वाक्यमुपात्तं । ननु केवलसन्निकर्षादिदशायां बाधकप्रत्ययस्यानुत्पन्नत्वाच्छुक्तित्वादिव्यावर्तकधर्मदर्शनोत्तरमेवोत्पन्नत्वात्कथं तस्य प्रत्यक्षत्वमिति चेन्न । शुक्तित्वादिसाक्षात्कारस्य रजतहेत्वज्ञाननिवृत्तावेवोपक्षीणत्वेनाज्ञाननिवृत्त्या रजते निवृत्ते चक्षुःसन्निकर्षेणैव रजताभावभानाभ्युपगमात् । अत्र रजते । मिथ्यात्वं रजततादात्म्यवच्छुक्तिनिष्ठनिरवच्छिन्नवृत्तिकाभावप्रतियोगित्वं । रजततादात्म्यं शुक्त्यंशे पूर्वानुभवजनितसंस्काराद्भासते । अद्वैतमते उपनीतभानाभावेऽपि तदंशे स्मृत्यात्मकमेव बाधकज्ञानं सुरभिचंदनमिति ज्ञानस्यापि सौरभांशे स्मृत्यात्मकत्वस्य चंदनांशे साक्षात्कारत्वस्य स्वीकारात् । प्रतियोगिभूतरजतांशेऽपि स्मरणात्मकमभावांशे शुक्त्यंशे निरवछिन्नत्वांशे चाक्षुषमेवात इदं प्रत्यक्षात्मकमिति ज्ञेयं । यद्यप्यभावः परमते षष्टप्रमाणरूपानुपलब्धिप्रमाणगम्यस्तथाप्यभावस्य प्रत्यक्षतामतमाश्रित्यैवं शंकेति अद्वैतचंद्रिकायामुक्तं । अतो नापसिद्धांतः । यद्वा बाधकप्रत्ययसमनंतरमिति मिथ्यैवेति । नेदं रजतमिति बाधक

(टीका) अत्रेदं वक्तव्यम् । किं मिथ्याशब्दोऽनिर्वचनीयस्य वाचक इति कृत्वा, भ्रांत्युत्थितस्य तत्प्रयोगदर्शनादनिर्वचनीयविषयः प्रत्ययोऽनुमीयते । उतावाचकेनापि तेन भ्रांत्युत्थितोऽनिर्वचनीयं व्यवहरतीति कृत्वा । आद्यं निराकरोति-

(मूलं) **मिथ्याशब्दोऽनिर्वचनीयं वदतीत्यत्र च ॥ ६ ॥**

(टीका) न किंचिन्मानमित्यस्यानुकर्षणार्थश्चकारः । ननु व्याकरणाभिधानादिप्रमाणाभावाद्वादिसमयमात्रस्यातिप्रसंगेनानिश्चायकत्वादनिर्वचनीयस्य यदि न मिथ्याशब्दो वाचकस्तर्हि तद्वाच्यं वाच्यं । सत्यं । असदिति ब्रूमः । एवं तर्हि निरर्थक इति प्राप्तम् । नह्यसदस्तीति संभवति । व्याघातात् निरर्थकत्वे च पदत्वव्याघात इति चेन्मैवं ।

---

प्रत्ययस्येदं रजतं मिथ्येत्याकारकत्वं परेषां यद्यप्यसंमतं तथापि बाधकप्रत्ययोत्तरं द्वित्रिक्षणानंतरं मिथ्यैव रजतं प्रत्यभादिति वाक्यं भ्रांत्युत्थितः प्रयुंक्ते । तद्वाक्यमिथ्यात्ववद्रजतं पूर्वज्ञानविषयीभूतमिति बोधं जनयति । एवकारेण रजते मिथ्यात्वायोगो व्यवच्छिद्यते । तथाच तद्वाक्यप्रयोगहेतुभूतं तत्समानविषयकं ज्ञानं तस्यापेक्षितं । तत्र रजते भ्रमात्मकज्ञानविषयत्वावगाह्यनुव्यवसायाधीनसंस्कारेण पूर्वतनभ्रमरूपज्ञानविषयत्वं भासते । रजते मिथ्यात्वोपनायकमन्यन्नास्तीति बाधकप्रत्यय एव मिथ्यात्वविषयकतया तदुपनायकोवश्यं वाच्य इत्युक्तानुवादबलाद्बाधकप्रत्ययस्य मिथ्यात्वविषयकत्वमवश्यं वाच्यमिति । नेदं रजतमिति प्रत्यक्षमेव तस्मिन्मिथ्यात्वे प्रमाणं । तस्य मिथ्यात्वावगाहित्वादिकं मूक्तरीत्यैवेति भावः । ननु तादृशवाक्यप्रयोक्ता न स्ववाक्याधीनबोधसमानविषयकज्ञानेन वाक्यं प्रयुंक्ते । किंतु एकपदार्थप्रकारतानिरूपितापरपदार्थनिष्ठविशेष्यताशालिबोधत्वेन स्ववाक्यसाध्यबोध इष्टसाधनतां गृहीत्वा तत्साधनतया विप्रलिप्सयैव । तथाच प्रकृतवाक्यप्रयोगनिर्वाहाय न बाधकज्ञानस्य मिथ्यात्वविषयकत्वं कल्पनीयमत आह । नचेति । आप्तेन अविप्रलंभकेन तस्य तत्वं प्रमाणांतरसिद्धमिति भावः। नन्वस्तु बाधकप्रत्ययस्य मिथ्यात्वविषयकत्वं तस्यापि भ्रमत्वान्नानिर्वचनीयसिद्धिरित्यत आह । नच बाधकेति । अन्यथाविज्ञातस्य सम्यग्विज्ञानस्यैव बाधत्वादिति भावः। ननु प्रत्यक्षमनिर्वचनीये परिज्ञायैतदुपन्यासो न युक्तस्तस्यानुमित्यादिरूपत्वादित्यत आह । नापि लिंगादीति । तथा चानुमितित्वादिव्यापकलिंगादिजन्यत्वाभावान्नानुमितित्वादिकमिति भावः। लिंगाद्यननुसंधानदशायामुत्पत्तेरनुभवसिद्धत्वान्न तज्जन्यत्वमिति हृदयं । अनुमीयत इति । पूर्ववाक्यानां पूर्वोक्तरीत्या प्रथमव्याख्याने उक्तप्रत्ययः शाब्दबोधविषयो भवति यद्यपि तथाप्याप्तवाक्येनानिर्वचनीयविषयकत्वेन बोध्यमानत्वलिंगादपि तद्वाक्यानुपूर्व्यश्राविणा प्रत्ययस्यानिर्वचनीयविषयकत्वमनुमीयत इत्याशयेनैवमुक्तिः। पूर्ववाक्यानां द्वितीयव्याख्याने तु न कोपि क्लेश इति ध्येयं । अनुकृष्टस्य न मानमित्यस्याभिप्रायमनुवदन्नेवाशंकते । नन्विति । एवं तर्हीति । वाच्यमसदित्यस्य नास्तीत्यत्रैव पर्यवसानादित्यर्थः । पदत्वव्याघात इति । अर्थवदधातुरप्रत्ययः प्रातिपदिकमित्यनेन प्रातिपदिकसंज्ञाविरहात्तेन स्वाद्युत्पत्त्या पदत्वं साध्यं । तथा सार्थकत्वाभावे

(टीका) अत्यंताभावप्रतियोगित्वलक्षणस्यासत्वस्य विद्यमानत्वात् । नहि-मिथ्येत्यस्य शशविषाणादिकमर्थः । यथासति शशविषाणं मिथ्येति न स्यात् । किन्नाम तन्नास्तीति । तथाच मिथ्यैव रजतमित्यस्य नास्तिरजतं रजतात्यंता-भावोऽस्तीत्यर्थः ।

---

पदत्वमेव न स्यादित्यर्थः । असत्वस्य विद्यमानत्वादिति । तथाच मिथ्यापदं तद्बोधकमेवेति भावः।शशविषाणादीनां तत्पदेन बोधात्कथमुक्तार्थकत्वमित्यतआह । न हीति । शशविषाणा-दीनां तत्समभिव्याहृतपदादिना बोध्यत्वेपि न शशविषाणत्वादिना तद्बोध्यत्वमित्यर्थः। विपक्षे बाधकमाह । तथा सतीति । तर्हि शशविषाणादिपदसमभिव्याहृतमिथ्यापदेन किं प्रतीयत इत्यत आह । किं नामेति । तथा च प्रकृतेऽनुवादकवाक्यस्य कीदृशोर्थः पर्यवसन्न इत्यत आह । तथाचेति । प्रतियोगिप्राधान्यविवक्षयाह । नास्ति रजतमिति । अभावप्राधान्य-विवक्षयाह । रजतात्यंताभाव इति । ननु अत्यंताभावप्रतियोगित्वार्थकत्वे समभिव्याहृतरजत पदार्थे निपातार्थत्वेन तस्याश्रयतयाऽन्वये रजतमत्यंताभावप्रतियोगीत्यर्थो लभ्यते । अत्यंताभावविशेष्यकबोधस्तु कथं । समभिव्याहृतरजतादिपदार्थस्याधेयतया व्युत्पत्ति-वैचित्र्येण प्रतियोगित्वेऽन्यथाभ्युपगमेपि प्रतियोगित्वविशेष्यकबोध एव स्यान्नाभावविशे-ष्यकः । तस्य वाच्यतावछेदककोटिनिविष्टत्वात् । किं चासत्तुच्छालीकमिथ्यापदानि पर्या-याणीत्यविवादं । तेषामप्यत्यंताभावप्रतियोग्यर्थत्वे तत्पर्यायस्य मिथ्यापदस्यात्यंताभाव प्रतियेगित्वार्थकत्वानुपपत्तिः । तेषामप्यत्यंताभावप्रतियोगित्वार्थकत्वे शशविषाणमलीक-मिति सामानाधिकरण्यानुपपत्तिः । मिथ्येत्यस्याव्ययतया तत्र भेदान्वयेप्यत्र तत्रैव भेदा-न्वयायोगात् । अभेदान्वयस्य बाधितत्वात् । शशविषाणे शशविषाणस्य वा मिथ्या अलीक मित्यादिव्यवहारापातश्च । षष्ठीसप्तम्यर्थभूतसंबंधाधेयत्वयोरुक्तमिथ्यालीकशब्दार्थे संभ-वात् । नच मिथ्यालीकादिशब्दानामत्यंताभावप्रतियोग्येवार्थः। समभिव्याहृतशशविषाणा-दिपदार्थानामभेदेनैवान्वयित्वमिति वाच्यं । वाच्यार्थासत्वशंकायां तस्यैव सत्वे वक्तव्ये अत्यंताभावप्रतियोगित्वलक्षणस्यासत्वस्य सत्वादित्यनेन वाच्यस्य तस्य सत्वोक्तिवैयर्थ्य प्रसंगात् । नच तदपि विशेषणतया वाच्यमिति वाच्यं । सिद्धांते विशेषणे वृत्तिनिमित्त-तांगीकारेण शक्तेरनंगीकृतत्वादिति चेन्न । तद्विषयिताशालिबोधजनकत्वं यत्स्वाभाविकं तदेव पदे शक्तिरित्युच्यते । सा च शक्तिर्ज्ञातैवोपयुज्यते । तादृशविषयितानिरूपकाणि सर्वा णि शक्यान्येव । अत एवान्वयेऽपि शक्तिरिति सिद्धांतः। अशक्यस्य शाब्दबोधे भानांगी-कारेप्रवृत्तिनिमित्तवदन्वयस्यापि तथैव भानसंभवेन योग्येतरान्विते शक्त्यंगीकारवैयर्थ्य-प्रसंगात् । परंतु शाब्दबोधानुकूलशक्तिज्ञानं घटत्वविशिष्टो घटपदशक्य इत्याकारं नतु घटत्वघटौ घटपदशक्यावित्याकारं । अतः शाब्दबोधानुकूलज्ञानविषयीभूतशक्त्यंशे ऽवि-शेष्यत्वात्तत्राशक्यत्वव्यवहारः । एवं च तादृशप्रतियोगित्वांशे विशेषणतया वाच्यत्वस-त्वादुक्तटीकासंगतैव । नच मिथ्यादिपदानामुक्तप्रतियोग्यर्थकत्वे मिथ्यापदवाच्यं नास्ती-ति प्रतीतिप्रसंगः । वाच्यसामान्यं नास्तीति प्रतीतेस्तादृशप्रतियोगित्वरूपवाच्यसत्वेन बाधितत्वात् । अतएव तादृशप्रतियोगित्वरूपवाच्यस्य सत्वमुक्तं । विशेष्यतया वाच्यं नास्तीति प्रतीतिस्त्विष्टैव । नचासतः कथं वाच्यत्वमिति वाच्यं । विषयितानिरूपकत्वरूपो-

(टीका) स्वयमसतः कथं प्रतियोगित्वमिति चेत्। किमिह कथं। नहि प्रतियोगित्वं रूपादिवद्धर्मिसत्तासापेक्षं। अभावज्ञानोपयोगिज्ञानविषयतामात्रस्य प्रतियोगित्वात्।

---

कत्वाच्यत्वस्य तत्र सत्वे बाधकाभावात्। अर्थवत्सूत्रेपि शक्तिमत्वरूपार्थवत्वमेव विविक्षितं। नतु सद्विशेष्यकबोधजनकत्वं। तथात्वेऽलीकादिपदानां पदत्वव्याघातप्रसंगात्। मिथ्यापदस्य तु प्रतियोगी अभावश्च पृथगेवार्थ इत्यंगीकृत्य प्रतियोगिनि समभिव्याहृतपदार्थस्याभेदेनान्वयमंगीकृत्याभावप्राधान्येन बोधः मिथ्याशब्दस्थलेऽनुभवादेव स्वीक्रियते। मिथ्यालीकशब्दयोः पर्यायत्वोक्तिस्त्वनतिभिन्नार्थत्वात्। यद्यभावप्रधानकबोधः पाश्चात्य एव दर्शित इत्युच्यते तदा न कोपि दोषः। मायावादिनस्त्वसतो निरुपाख्यत्वं शब्दशक्त्यविषयत्वमिति वदंतोऽसतः शक्त्यगोचरतामाहुः। तन्न। अलीकादिपदानां तेषामपदत्वापत्तेः। नच तान्यनिर्वचनीयवाचीनीति वाच्यं। शशविषाणमलीकमिति वाक्यस्य सर्वमते प्रमाणस्यापलापापत्तिः। नच तद्वाक्यं विकल्पजनकमेवेति न बोधकत्वघटितप्रामाण्यं मत्संमतमिति वाच्यं। पदार्थसंबंधज्ञानरहितपुरुषे विकल्पस्याप्यनुत्पत्त्या तदर्थमप्यलीकपदस्यासति शक्तिग्रहस्यावश्यकत्वात्। अनिर्वचनीये शक्तिज्ञानेनासद्भानांगीकारे घटे शक्तिज्ञानेन पटभानप्रसंगात्। अन्यदधिकमुत्तरत्र निराकरिष्यते। असत्प्रतीतिमनंगीकुर्वतां नैयायिकादीनां अलीकादिपदानां पदत्वव्याघातः स्फुट एव। कथंचित्सदर्थकत्वकल्पनानुभवविरुध्येत्युपरम्यते। स्वयमसत इति। सर्वैरपि रूपैरसत इत्यर्थः। तेन शंककस्य मते सतोपि स्वावृत्तिरूपेणासत्वात्तस्य प्रतियोगित्वांगीकारात्कथमेतदिति चोद्यानवकाशः। किमिह कथं का कथंतेत्यर्थः। धर्मिसत्तासापेक्षमिति। तथात्वे स्वप्रागभावध्वंसकालेऽसतां घटादीनां प्रतियोगित्वेन भानाभावप्रसंगादिति भावः। ननु घटादीनां ध्वंसप्रागभावकालेऽसत्वेपि पूर्वोत्तरकालयोः सत्वादेव प्रतियोगित्वोपपत्तिः। नच कालांतरसत्वं नेदानीमुपयुज्यत इति वाच्यं। प्रतियोगिताया अपि घटसमानकालिकत्वाभ्युपगमात्। नहि प्रतीतिकाले प्रतियोगिता सत्वेनावभासते येन प्रतियोगिनं विना सत्वं स्यात्। इदानीं घटो ध्वस्त इत्यादौ एतत्कालीनत्वस्य ध्वंस एव भानात्। प्रागभावादिप्रतीतौ भानमात्रेण प्रतीतिकाले सत्ताभ्युपगमे घटस्यापि प्रतीतिकाले सत्वं स्यात्। असतस्तु सर्वथा कालासंबंधस्य कथं प्रतियोगित्वोपपत्तिः। परिणामवादरुचीनां तु न कोपि दोषः। तस्यैव पूर्वं परतश्च कारणात्मना सत्वाभ्युपगमात्। एवंच प्रागभावादिप्रतियोगित्वदृष्टांतेन नासतः प्रतियोगित्वं वक्तुं शक्यमित्यत आह। अभावज्ञानेति। यद्वा प्रतियोगित्वं स्वरूपसंबंधविशेषोऽभावविरहात्मकत्वं वा नोभयथाप्यसतस्तत्संभवति। तस्य स्वरूपाभावात्। असदभावस्य केवलान्वयित्वेन तदभावाप्रत्ययादित्यत आह। अभावज्ञानेति। अधिकरणज्ञानस्यापि कारणत्वात्तत्रातिव्याप्तिपरिहाराय। विशेषेति। विशेषेति पाठाभावपक्षेप्युक्तप्रयोजनानुरोधात् ग्राह्यमेव। अधिकरणीयविषयताभिन्नत्वस्य तदर्थत्वात्। न चाधिकरणत्वस्य केवलान्वयितया तद्विषयताभिन्नत्वं विषयतायां दुर्घटमिति वाच्यं। अभावविषयताघटितधर्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदिका या आधेयत्वसंसर्गावच्छिन्नप्रकारत्वाप्रयोजकविषयता तस्या एव प्रतियोगितापदार्थत्वात्। न चैवं घटत्वाभावव्याप्यपटत्ववानिति परामर्शेन घटत्वाभाववानित्यनुमित्युत्पत्त्या तादृशघटत्वाभावविषयताघटितधर्मावच्छिन्नानुमितिनिष्ठजन्यतानि-

रूपितजनकतावच्छेदकीभूतविषयत्वादिकमादाय पटत्वे अभावोपनीतभानं प्रत्यभावज्ञानस्य हेतुतया भावे चातिव्याप्तिः । लौकिकप्रत्यक्षनिष्ठत्वस्य कार्यतायां निवेशो चातींद्रियाभाव-प्रतियोगिन्यव्याप्तिरिति वाच्यं । नञुल्लेखप्रयोजकीभूता या भावप्रतीतिनिरूपितविलक्षण-विषयता तन्निरूपिताधेयत्वसंबंधावच्छिन्न [ विशेषणतावत्प्रतियोगिनोऽभावांशे संसर्गा-नवच्छिन्नैव प्रकारता स्वीक्रियते तदा तस्याः संसर्गत्वं मास्त्वेव परंतु प्रतियोगिपद-प्रवृत्तिनिमितत्वमेव । प्रतियोगितायाः स्व ] प्रकारत्वान्यप्रकारताप्रयोजकविषयताया एव प्रतियोगितात्वात् । सा चाभावनिष्ठनिषेधत्वरूपधर्मावच्छिन्नाभावनिविष्टमुख्यविशेष्यता-प्रतियोग्यधिकरणप्रकारतानिरूपिता नञुल्लेखप्रयोजिका । उक्तानुमित्युपनीतभानविषयतायां तूक्तप्रयोज्यत्वं नास्ति अभावादिशब्दोल्लेखकप्रतीतावभावस्य विधित्वरूपरूपांतरेण भानात् । अत एवोक्तं तत्वसंख्यानटीकायां स्वरूपेण हि भावाभावौ विधिनिषेधात्मानौ रूपांतरेण तु निषेधविधिरूपौ । तत्रापातजायां संविदि स्वरूपमेवावभासते । द्वितीयादि-प्रतीतौ रूपांतरं । तथा हि प्रतीतिः । घटोस्ति स न शुक्लः । नास्ति घटोऽस्त्यत्र घटाभाव इति । अतींद्रियाभावप्रतियोगिन्यपि नञ्पदाधीनशाब्दप्रतीतीया भावविषयतानिरूपितोक्त-प्रकारिताप्रयोजकीभूता या प्रतियोगिवाचकपदशक्तिज्ञानीयप्रतियोगिविषयता तस्या एव प्रतियोगितारूपत्वान्न तस्या अव्यसंग्रहः । प्रयोजकत्वं च स्वरूपसंबंधविशेषः । एतत्ज्ञानेऽस्य विषयत्वादभावांशे अस्य प्रकारत्वमिति प्रतीतिसिद्धिः । यद्वोक्तप्रकारतासमानाधिकरण-विषयतैव प्रतियोगितास्तु । तस्याः स्वरूपपरिचयायैवाभावज्ञानोपयोगिज्ञानीयत्वमुक्तं । प्रतियोगिनोऽभावांशे तस्या एव संसर्गतात्वं स्वीक्रियते । यदि चाभेदस्य संसर्गतानंगी-कर्तृनये नीलो घट इत्यादिबुद्धौ नीलादीनां संबंधानवच्छिन्नविशेषणतावत्प्रतियोगिनोऽ भावांशे संसर्गानवच्छिन्नैव प्रकारता स्वीक्रियते । तदा तस्याः संसर्गत्वं मास्त्वेव । परंतु प्रति योगिपदप्रवृत्तिनिमितत्वमेव । प्रतियोगितायाः स्वरूपसंबंधत्वांगीकारेपि प्रतियोगिस्वरूप-भूतविषयत्वाभिन्नत्वेन प्रतियोगितायाः विषयतारूपत्वं दुष्परिहरमेव । परंतु प्रतियोगिता-स्वरूपाखंडधर्मांतरकल्पनमधिकं । यद्यपि मन्मतेऽपि तादृशविषयतायां प्रतियोगितात्वरूप धर्मांगीकारे न काचित्क्षतिस्तथापि प्रयोजनाभावादेव तदभावः । अप्रामाणिकप्रतियोगिता कात्यंताभावनियमवादिनस्तु यत्र भूतले घटस्य सर्वथा न संबंधस्तद्भूतले घटो नास्ती-त्यादिना वाक्यं तद्भूतलवृत्तित्वविशिष्टघटप्रतियोगिकात्यंताभावं बोधयति न त्वेतद्भूतले घटाभाव इति । तदा तद्वाक्याभिलाप्यं प्रत्यक्षमपि तादृशाकारमेव भूतलवृत्तित्वस्य तद्भानेऽभावांशेऽभानेपि क्षतिविरहात् प्रत्यक्षस्थले घटस्मरणोत्तरं भूतलवृत्तित्वेन घटस्य भानानंतरं विशिष्टस्यासत एवाभावांशे भानं । नच कारणीभूतज्ञानस्यानाहार्यत्वे तादृश-ज्ञानविषयप्रतियोगिकनिषेधभानानुपपत्तिः । एतन्मते तादृशज्ञानस्यात्रैव विरोधित्वात् । अन्यथा भूतले घट इति वाक्यादिना निश्चितवतोऽपि तादृशाभावबुद्धिप्रसंगात् । कारणी-भूतज्ञानस्याहार्यत्वे तत्र बाधग्रहापेक्षा तत्रापि कारणतया पुनराहार्यग्रहांतरापेक्षेत्यनवस्थै-वेति वाच्यं । भूतलवृत्तिर्घट इति रूपस्य कारणीभूतज्ञानस्य तत्र सत्वानवगाहितया प्रति-बंधकत्वाभावात् सत्वावगाहिधिय एव प्रतिबंधकत्वात्प्रतिबध्यत्वाच्च । तस्याहार्यत्वभावेन बाधग्रहांतरानपेक्षकतया अनवस्थाया अभावाच्च । ननु सत्वानवगाहिज्ञानं भ्रमः प्रमा वा । प्रमैवेति ब्रूमः । नच तदभाववति तत्प्रकारकस्य कथं प्रमात्वमुच्यत इति वाच्यं । स्वनिश्चि-ताभावकप्रतिवादिवाक्यार्थं ज्ञात्वानुवादकस्य भ्रांतत्वेन प्रेक्षावद्व्यवहारगोचरतया तत्र सत्वावगाहितया विधिरूपत्वेन व्यवह्रियमाणज्ञानस्यैव भ्रमे प्रमा(भ्रम?)त्वांगीकारात् । अत

एवोक्तमाचार्यैः। असतः सत्वेन प्रतीतिः सतोऽसत्वेनप्रतीतिरित्यन्यथाप्रतीतेरेव भ्रांतित्वादिति। न चानुवादस्थलेऽनुवादकर्तृज्ञानस्याहार्यभ्रमत्वात्तस्य स्वबुध्दिपूर्वं जातत्वात्तमादाय न तस्य भ्रांतत्वव्यवहारगोचरतेति वाच्यं। बुध्दिपूर्वं स्वांगविकृतिकर्तरि विकृतांग इति व्यवहारगोचरत्वात्। बुध्दिपूर्वकभ्रमसंपादकत्वे सुतरां भ्रांतव्यवहारगोचरत्वस्य दुर्वारत्वात्। निर्दोषत्वेन प्रमितेषु योग्यादिष्वनुवादकत्वदर्शनेन तन्निष्ठज्ञानस्य दोषाजन्यत्वेन भ्रमत्वानुपपत्तेः। अत एव तत्र तज्ज्ञानप्रयोजकेच्छाया एव दोषत्वमिति निरस्तं। भ्रमस्य तत्कारणदोषस्य च तत्र भ्रांतत्वादिव्यवहाररूपप्रमाणं विना कल्पकाभावात्। अन्यथा तत्पुरुषनिष्ठतत्कालीनानंतवायुसंयोगादिव्यक्तीनां समानाधिकरणतया दोषविधया कारणत्वस्य कल्पनायाः विनिगमनाविरहादापत्तिरिति गौरवापत्तेः। नच तज्ज्ञानजनकत्वेन क्लृप्तेच्छाया एव दोषत्वं कल्प्यते नतु वायुसंयोगस्य तस्य जनकत्वस्य चाक्लृप्तत्वादिति वाच्यं। इच्छायाः दोषविधया विलक्षणकारणतायाः अक्लृप्ततया विनिगमकाभावस्य दृढत्वात्। तज्ज्ञानकारणत्वेन क्लृप्ततत्क्षणतदद्दष्टतत्सन्निकर्षानादाय विनिगमकाभावस्य दुर्वारत्वाच्च। दोषाजन्यत्वेपि तस्य भ्रमत्वांगीकारे तत्पारिभाषिकं स्यात्। नच प्रमात्त्वमपि कथं अर्थाव्यवस्थापकत्वादिति वाच्यं। सत्वावगाहिप्रमाया एवार्थनिश्चायकत्वेन सत्वानवगाहितयाऽर्थाव्यवस्थापकत्वेपि भ्रमभिन्नत्वमात्रेण परेषां निर्विकल्पकस्येव प्रमात्वोपपत्तेः। नच यथार्थज्ञानं प्रमेति तल्लक्षणात् अस्य चायथार्थकत्वात्कथं प्रमात्वं। भ्रमभिन्नत्वमात्रेण प्रमात्वोपचारेपि संशयविपर्ययप्रमातिरिक्तज्ञानांगीकारप्राप्त्याऽपसिध्दांतः स्यादिति वाच्यं। यथार्थत्वं प्रमायां नासद्विषयकत्वरूपं शशविषाणमसदिति प्रमायामव्याप्तेः। किंतु भ्रमभिन्नत्वमेव। विभाजकवाक्यस्थप्रमादिपदस्यापि तत्परत्वेनापसिद्धांताभावात्। नच सत्वासत्वान्यतरावगाहित्वस्य प्रतीतौ नित्यत्वेन तदौदासीन्येन प्रतीत्यनुपपत्त्या कथमस्याः प्रतीतेः संभव इति वाच्यं। प्रामाण्यस्वतस्त्वस्येव तस्यौत्सर्गिकतया तस्मिन्नसत्वग्रहसामग्र्यां कार्यकालवृत्तितया विरोधित्वांगीकारेण द्वितीयक्षणे एव निषेधप्रतियोगित्वरूपासत्वबुध्युत्पत्त्योक्तज्ञानाधिकरणक्षणस्य सत्वग्रहसामग्र्यनधिकरणत्वात्। नच सत्वग्रहाभावेपि उक्तज्ञानोत्पत्तिक्षण एव तत्रासत्वभानापत्तिः। तस्य सत्ववत् ज्ञानोत्पादकसामग्रीमात्रग्राह्यत्वाभावेनासत्वग्राहकसामग्रीं विना प्रथमतस्तद्ग्रहायोगात्। न चोक्तज्ञानस्य भ्रमत्वाभावे आरोपकारणत्ववचनं योगिप्रश्नकारणीभूतसंशयस्याहार्यत्ववचनं च प्राचां विरुध्यते। तस्य भ्रमविशेषत्वादिति वाच्यं। सत्वानवगाहित्वेन विपरीतज्ञानाप्रतिबध्यतया तदुक्तिसंगतेः। नच शशशृंगे सत्वं नास्तीति धीः शशशृंगे सत्वज्ञानपूर्वकैव वाच्या। एवं घटे असत्वं नास्तीति धीर्घटेऽसत्वज्ञानपूर्वकैव वाच्या। तथाच तादृशनिषेधज्ञानवतां भ्रांतव्यवहारगोचरत्वापत्तिः। असतः शशविषाणादेः सत्वेन सतो घटादेरसत्वेन च प्रतीतेः सत्वात्। तत्र भासमानसत्वांशेऽसत्वांशेऽपि सत्वावगाहित्वमिति भ्रमत्वपरिष्कारे शुक्तिरजतसत्वे सत्वं नास्तीति ज्ञानकारणीभूतज्ञानमादाय पूर्वोक्त एव दोषः। तत्र भासमानसत्वेऽपि सत्वांतरावगाहित्वं निवेश्य परिष्कारे तत्र तत्र सत्वनिषेधज्ञानकारणीभूतज्ञानमादायोक्तदोषवारणायोत्तरत्रापि तथा तथा परिष्कारावश्यकत्वे भ्रमेऽनवस्थितविषयताकल्पनापत्तिस्तद्घटितभ्रमत्वस्य दुर्ग्रहत्वापत्तिश्चेति वाच्यं। यतो घटादौ यत्र सत्वं भासते तत्र सत्वं स्वांशे स्वरूपतो भासते। तदेव ज्ञानं घटांशे सत्वांशे चासत्वावगाहिनीं धियं विरुणध्धि। घटस्य सत्वं तत्सत्वस्यापि सत्वं तस्यापि सत्वमित्यादिनानाविधव्यवहारं जनयति च। एवं शशवि-

षाणमसदिति प्रत्ययेऽप्यसत्वे सत्वं प्रतीयत एव। ज्ञानसामान्यसामग्र्याः सत्वावगाहितया अपवादाभावे नियतत्वात्। तत्र भासमानसत्वे स्वयमेव सत्वं स्वरूपतो भासते अतस्तत्र नासत्वमंशयाद्यापत्तिः। घटाभावस्य स्वात्मकघटाभावाधारत्वज्ञानमात्रस्य घटाभावे घटाभावः घटाभाववृत्तिघटाभावे घटो नास्तीत्यादिव्यवहारनिर्वाहकत्ववत् त्रिकालबाध्यत्वसामान्याभावरूपसत्वस्य खांशेऽवगाहिज्ञानस्य सत्वे सत्वं तत्सत्वे सत्वमित्यादिव्यवहारनिर्वाहकत्वमुपपन्नं। एवं यथा द्रव्यादिषट्कान्योन्याभावस्याभावत्वरूपता मते घटो नास्ति घटाभाव इत्यादिप्रत्ययेषु अभावे भासमानं षट्कान्योन्याभावरूपभावत्वं स्वरूपत एव भासत इत्यभ्युपेयते। अन्यथा तादृशान्योन्याभाववत्वेन भाने तच्छरीरे पुनरभावत्वस्य निविष्टतयाऽनवस्थितविषयताप्रसंगादभावत्वेनाभावस्य दुर्ग्रहत्वापत्तेश्च। तथा बाध्यत्वाभावरूपसत्वस्य खांशे स्वरूपतो भानमविरुद्धं। इत्थं च भ्रमलक्षणेऽप्यसतः सत्वावगाहित्वमित्यत्रानवछिन्नस्वविषयतानिरूपितसत्वविषयतानिरूपितासन्निष्ठविषयतायाः सतो असत्वेनावगाहित्वमित्यनेन स्वरूपतः स्वविषयतानिरूपितसत्वविषयतानिरूपिता या सत्वविषयता तद्रूपप्रकारतानिरूपितसन्निष्ठविषयतायाश्च निवेशः। न चेदं रजतमिति भ्रमस्थलेऽसद्रजते भासमानसत्वस्याप्यसत्वेन तस्य निःस्वरूपत्वेन कथं स्वांशे स्वरूपतो भानमिति वाच्यं। शुक्त्याद्यधिष्ठाननिष्ठसत्वभासकसामग्र्याः सत्वेन तत्संसर्गमात्रस्य भ्रमे रजतादावारोपिततत्त्वांगीकारेण सत्वस्यासत्वाभावात्। यद्वा रजताद्यसत्वेपि भ्रमसामग्रीबलाद्रजतमित्यादिव्यवहार निर्वाहिकाविषयता भ्रमे स्वीक्रियते यथा तथा तद्बलादेव रजतं सत् तत्सर्वं सदित्यादिव्यवहार निर्वाहिका विषयिता प्रमायामिव स्वीक्रियते। भ्रमलक्षणेपि सैव निविष्टेति न काप्यनुपपत्तिः। अधिकमुत्तरत्र वक्ष्यते। एवं च शुक्तिरजतसत्वं नास्ति घटेऽसत्वं नास्तीति निषेधकारणीभूताक्तप्रतियोग्यारोपरूपज्ञाने निरवछिन्नसत्वविषयत्वास्वीकाराच्च तस्य भ्रमत्वापत्तिः। तज्ज्ञानस्य तादृशविषयत्वाभावे नियामकं तु तादृशविषयिताशालिबुद्धिं प्रति तद्वस्तुनिषेधबोधकसामग्र्यादीनां यथासंभवं प्रतिबंधकत्वं पूर्वोक्तमेवोह्यं सूक्ष्मदर्शिभिरिति दिक्॥ ७॥ एवं च भूतले न घट इत्यत्र प्रथमप्रत्यक्षे शाब्दे सर्वत्र भूतलवृत्तिघटप्रतियोगिकोत्यंताभाव इत्येवाकारः। अनंतरंच घटाभाववद्भूतलमिति द्वितीयं ज्ञानं। तत्र घटादिपदानां भूतलवृत्तिघटादौ लक्षणाया निरूढायाः स्वीकारात् भूतलवृत्तिघटाभाववद्भूतलमिति शाब्दाकारः। प्रत्यक्षं भूतलवृत्ति घटाभाववद्भूतलमित्याकारकमेव। भूतले घटो नास्तीत्यादौ भूतलवृत्तिघटस्य भूतलाधिकरणकघटकर्तृकसत्ताया वा अभाव एव प्रथमं ज्ञायते। अस्त्यत्र घटाभाव इत्यत्र तु घटतत्कर्तृकसत्तयोरत्यंताभेदात् तादृशघटाभावत्वेन बोध्यते। यत्र भूतले घट उत्पत्स्यते नष्टे च तत्र भूतले घटो नास्तीति प्रतीतिः प्रात्यक्षकी भूतलसंसृष्टघटप्रतियोगिकं ध्वंसं प्रागभावं तत्संसर्गप्रतियोगिकं ध्वंसप्रागभावं चावगाहते। संसर्गप्रागभावे ध्वंसे वा संसृष्टप्रतियोगिकत्वं स्वीक्रियते। विशिष्टस्योत्पत्तिनाशांगीकारपक्षे तत्प्रतियोगिकप्रागभावध्वंसयोरावश्यकतया पृथक् तत्स्वीकारे गौरवात्। नीलोपहितघटयोस्तादात्म्यार्थं भेदाभेदस्वीकारनये नीलप्रतियोगिकभेद एव नीलोपहितप्रतियोगिकत्ववदुक्तस्थले स्वीकारे बाधकाभावाच्च। इत्थं चात्र भूतले न घट इत्यत्र भूतलसंसृष्टत्वविशिष्टघटप्रतियोगिकप्रागभावध्वंसयोर्भानेऽपि न क्षतिः। भूतले घटो नास्तीत्यादौ तु भूतलाधिकरणकघटवृत्तिसत्तायाः संसर्गरूपायाः ध्वंसः प्रागभावो वा भासते। आख्यातार्थस्य नञर्थप्रकारतावछेदकतया भानाभ्युपगमे तु तादृशास्तित्वविशिष्टघटस्यैव तौ भासेते। इदानीमेतद्भूतले घटो नास्तीत्यत्र तु

तत्कालावच्छिन्नतद्भूतलसंसृष्टत्वविशिष्टघटस्यासत्वेनाप्रामाणिकप्रतियोगिकात्यंताभाव एव भासते। एतन्मते च नञुल्लेखप्रयोजकविशेष्यतानिरूपितप्रकारताप्रयोजकविषयत्वं तत्समानाधिकरणविषयत्वमात्रं वा प्रतियोगिता न त्वाधेयतासंसर्गावच्छिन्नप्रकारत्वाप्रयोजकत्वादिकं देयं। अधिकरणस्य प्रथमप्रतीतावभावांशे भानानंगीकरेण तत्रातिव्याप्तेरभावात्। नियमेन घटाभाववद्भूतलमिति द्वितीयप्रतीत्यंगीकारेण तदधिकरणे तादृशसंशयानुदयादिकं सर्वमुपपद्यते। केचित्तु भूतले घटो नास्ति भूतले न घट इत्यादिप्रत्यक्षशाब्दबोधादिकं पूर्वमतोक्तरीत्यैव। परंतु कारणीभूतज्ञानं तु भूतले घटोस्ति भूतले घट इत्याकारकमारोपरूपं नापेक्ष्यते। मूलकृट्टीकाकृच्चरणैस्तत्कारणतायाः कुत्राप्यनुक्तत्वान्निर्युक्तिकत्वाच्च। क्वचिट्टिप्पण्यादौ तदुक्तिर्मतांतरानुसारेणानिर्भरेणैव। विशृंखलघटभूतलाद्युपस्थित्यैव भूतलवृत्तिघटप्रतियोगिकाभाव इति भूतलाधिकरणकघटकर्तृकसत्ताभाव इत्याद्याकारकज्ञानं ज्ञायते। तावताप्यप्रामाणिकस्य विशिष्टस्याभावांशे भानादभावस्याप्रामाणिकप्रतियोगिकत्वोपपत्तिः। नन्वेवं तर्ह्यभावज्ञान एवाप्रामाणिकभानेन कारणीभूतज्ञानेऽभानेन कथमत्रोक्तं प्रतियोगित्वलक्षणं तत्र संभवतीति चेन्न। निषेधत्वावगाहिज्ञाने तदतिरिक्तधर्मांतरभानस्यानुभवविरुद्धत्वेनाभावांशे नञुल्लेखप्रतीतौ सत्वादेरभानेन तत्र सत्वाधिकरणविशेषवृत्तित्वादिसंदेहानुत्पत्तेरनुभवसिद्धायाः निर्वाहाय तद्द्वितीयक्षणे सत्वाद्यवगाहिप्रतीत्यंतरं नियमेनांगीकर्तव्यं। तथा च भूतले घटो नास्तीति ज्ञानोत्तरं नियमेन ज्ञानस्य भूतलवृत्तिघटाभाववद्भूतलमित्याकारस्य द्वितीयस्याभावज्ञानस्याभावज्ञानपदेन धर्तव्यतया तदुपयुक्तं यत् भूतले घटो नास्तीति ज्ञानं तद्विषयतायाः विशिष्टाप्रामाणिके सत्वात्तत्र लक्षणोपपत्तिः। अभावज्ञानोपयोगिज्ञाने विषयत्वमित्यत्राभावज्ञानोपयोगीत्येतत् द्वितीयज्ञानोपयोगि प्रथमज्ञानस्य परिचायकं। तथा च नञुल्लेखप्रयोजकविषयत्वमेव प्रतियोगित्वं तत्र पूर्वज्ञानीयां नञुल्लेखप्रयोजकीभूतनिषेधत्वविषयतानिरूपितामभावविषयतामादायातिव्याप्तिवारणाय तद्भिन्नत्वार्थकं अभावनिष्ठविशेष्यतानिरूपितप्रकारतारूपत्वार्थकं वा विशेषपदमपि सार्थकं। तादृशविषयतारूपप्रतियोगितायाः संसर्गत्वं वा प्रतियोगिपदप्रवृत्तिनिमित्तत्वं वेति सर्वापि पूर्वोक्तरीतिरनुसंधेया। एतेन प्राचां प्रामाणिकेष्वपि घटादिषु शास्त्रे बहुशः प्रतियोगित्वव्यवहारोपि निर्व्यलीकः। भूतले घटो नास्तीति प्राथमिकज्ञानजनकस्य घट इति विशृंखलज्ञानस्य विषयतारूपा मुख्यप्रतियोगितामादाय भ्रातृसुते सुतत्वव्यवहारस्य वा मुख्यस्य तादृशव्यवहारस्य संभवात् भूतलादौ तादृशव्यवहारस्य वारणाय विशेषपदं तदन्यत्वाद्यर्थकं। नच भूतलादौ गौणव्यवहारकरणे बीजाभाव इति वाच्यं। तदिच्छाया एव नियामकत्वात्। आरोपे सतीति न्यायेनोक्तशंकाया एवायोगाच्च। एवं च शुक्तिरजते सत्वं नास्ति घटे असत्वं नास्तीति ज्ञानोत्पत्तये शुक्तिरजते सत्वं घटेऽसत्वमिति ज्ञानस्य पूर्वमनपेक्षणात् न तद्ज्ञानवतो भ्रांतत्वमस्माकमापद्यते। निषेधांशेऽप्रकारतया सतोऽसत्वावगाहित्वस्यासतः सत्त्वावगाहित्वस्यैव भ्रांतित्वरूपत्वात्। नच भूतलघटादीनां विशृंखलज्ञानेन भूतलवृत्तित्वविशिष्टघटत्वावच्छिन्नप्रतियोगिताकाभावबुद्धिः कथमुपपद्यतां। प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानरूपकारणाभावात्। अन्यथा वन्हिर्महानसीयश्चेति विशृंखलज्ञानोत्तरं महानसीयवन्हिर्नास्तीति घटनिर्विकल्पकोत्तरं घटो नास्तीति धियश्चापत्तेरिति वाच्यं। वक्ष्यमाणरीत्या प्रतियोगितावच्छेदकत्वादिप्रक्रिया या अप्रामाणिकतयोक्तनियमासिद्धेः। वन्हिर्न महानसीय इति निश्चयवतामपि महानसीयवन्हिर्नास्त्येवेत्यादिप्रतीतिरपलपितुमशक्यतया ऽभावबुद्धौ प्रति-

योग्यंशे साक्षात्परंपरया भासमानधर्मपुरस्कारेण प्रतियोगिज्ञानस्यानावश्यकत्वं । वन्हि-र्महानसीयश्चेति विशृंखलज्ञानोत्तरमसंसर्गाग्रहवतां वन्हिर्महानसीय इति ज्ञानोदय-द्वारा महानसीयवन्हिर्नास्तीति बुद्धिर्जायते । तृतीयक्षण इति त्वया स्वीक्रियते । तत्र द्वितीयक्षण एव महानसीयवन्हिर्नास्तीति बुद्धिर्जायत इति मया स्वीक्रियते । क्षणविलंबस्य शपथनिर्णेयत्वात्तादृशज्ञानांतरा कल्पनाप्रयुक्तलाघवाच्च । यत्र तु महानसीयवन्हिरिति विशृंखलज्ञानोत्तरं महानसीयवन्हिरिति ज्ञानसंभवेऽपि अनुभव-सिद्धाया महानसीयवन्हिर्नास्तीति बुध्यनुत्पत्तेरुपपत्तिर्यद्बलेन भवतोपपाद्यते मयापि तेनैवोपपाद्यते । अनयैव रीत्या घटनिर्विकल्पकोत्तरं घटो नास्तीति बुध्यापत्तिरपि निरस्ता । सिद्धांते निर्विकल्पकाभावाच्चेत्याहुः । ननु शशविषाणं नास्तीति प्रतीत्याऽसत्प्रतियोगिकाभाववत् । अत्र भूतले घटो नास्तीति प्रतीत्या प्रामाणिकघटप्रतियोगिकोऽभावः भूतलवृत्तित्वेन प्रतीयत इति कुतो न स्वीक्रियते । तत्र तत्र विद्यमानटीका-वाक्यानि अप्रामाणिकप्रतियोगिकत्वनियमवत्प्रतीयमानानि कथंचित् योजयितुं शक्या-नीति न तद्विरोधोपि । न चात्यंताभावपदेनाभावे आत्यंतिकत्वं प्रतीयते । आत्यंतिकत्वं च देशकालपरिछेदराहित्यमेव । ततश्चात्यंताभावस्य सत्प्रतियोगिकत्वेऽभावस्य प्रतियोगिना सह विरोधात्प्रतियोग्यधिकरणदेशावृत्तित्वप्राप्त्या देशपरिछेदस्य प्राप्त्या आत्यंतिकत्वं भज्यत इति असत्प्रतियोगिकत्वनियमः स्वीक्रियत इति वाच्यं । दोषवत्स्वपि जीवेषु भगवतीवाप्रामाणिकदोषात्यंताभावसत्वेन निर्दोषत्वलक्षणस्यातिव्याप्तिमाशंक्य प्रतियोग्यारोपे यत्प्रधानं तेनापि साकमभावस्य विरोधादित्यादिग्रंथेनाप्रामाणिकप्रतियोगिकस्याप्यभावस्य देशपरिछेदमंगीकृत्यैव वंशपल्ल्याचार्यैरतिव्याप्तेः परिहृतत्वेनाचार्यैरपि प्राक्प्रध्वंससदात्वेनेति पूर्वापरसदात्वेनेति चात्यंताभावस्य कालावधिराहित्यमात्रस्योक्तत्वेन देश-परिच्छेदराहित्यस्यात्यंतिकपदार्थत्वाभावेन तन्निर्वाहायासत्प्रतियोगिकत्वनियमांगीकारायोगात् । युक्त्यंतरस्याभावादिति चेन्न । यतो अभावानां स्वप्रतियोगिविरोधस्तावत्संमतः। स च नैकाधिकरणावृत्तित्वरूपः प्रागभावध्वंसयोरभावात् किंत्वेककालावृत्तित्वं । इत्थं चात्यंताभावस्यापि तदेव स्वीकर्तव्यं । वैषम्ये बीजाभावात् । तथाच प्रयोगः । अत्यंताभावः स्व-निष्ठनञुल्लेखप्रयोजकविषयतानिरूपितप्रकारताश्रयविशिष्टाधिकरणकालवृत्तिरभावत्वात् । प्रागभावादिवदिति । अत्यंताभावत्वं च सार्वकालिकाभावत्वं । पक्षतावछेदकावछेदेन सा-ध्यसिद्धिरुद्देश्या ।एवं च तादृशरूपावछिन्नपक्षे तादृशप्रकारतारूपप्रतियोगिनाश्रयाधिक-रणकालावृत्तित्वसिद्धौ तादृशविशिष्टरूपप्रतियोगिनः कालासंबंधत्वमेव सिद्ध्यतीति सर्वा त्यंताभावानामप्रामाणिकप्रतियोगिकत्वनियमः सिद्ध्यति । घटात्यंताभावः पटात्यंताभावो नेति नञुल्लेखप्रयोजकभेदत्वरूपधर्मावच्छिन्नविशेष्यतानिरूपितप्रकारताश्रयभूतपटात्यं ताभावरूपविशिष्टरूपप्रतियोग्यधिकरणकालवृत्तित्वमादाय बाधस्य तद्रीत्यैव दृष्टांते साध्यवैकल्यस्य चापत्तिवारणाय नास्तीत्युल्लेखप्रयोजकविषयतत्वेव निवेशः । सा च भेद-त्वातिरिक्तेन प्रागभावत्वादिविलक्षणेन परमते संसर्गाभावत्वपदव्यवन्हियमाणेन धर्मेणैवा-वछिन्ना भवतीति न तादृशभेदत्वावछिन्नविषयतामादायोक्तदोषः । नच हेतोरप्रयोजकता । अभावत्वसाम्ये प्रमाणं विनात्यंताभावविशेष्यस्य निरुक्तप्रतियोगिना दैशिकाविरोधस्यान्य-योः शशविषाणाद्यत्यंताभावानां च कालिकविरोधस्य कल्पने गौरवरूपतर्कस्यैव बाधक-त्वात् । अपि चात्यंताभावस्य देशिकविरोधस्यावश्यकत्वे प्रतियोग्यधिकरणकाले प्रतियो-ग्यधिकरणेदशावृत्तित्वमेकस्यैव सामयिकात्यंताभावस्य स्वीकरणेनैव घटोत्पत्तेः पूर्वं पर

तश्च घटो नास्तीत्यादिप्रतीतिप्रामाण्याद्युपपत्तौ ध्वंसप्रागभावांगीकारस्यैव निर्बीजत्वापातः। न चात्र घटो भविष्यति अत्र घटो ध्वस्त इति प्रतीतिबलात्तदुभयांगीकारः एतद्देशवृत्तित्वविशिष्टघट एतदुत्तरकालसंबंधीति भविष्यतीति प्रत्ययेनावगाहनात्। अत्र घटो ध्वस्त इति प्रत्ययेन तु एतद्भूतलवृत्तिघट एतदुत्तरकालसंबंधीत्यवगाहनात्। न चोत्तरत्वादिकमपि प्रागभावध्वंसानंगीकारे निर्वक्तुमशक्यं। पूर्वत्वोत्तरत्वयोरखंडयोः काले स्वतो विद्यमानयोः किंचिन्निरूपितयोः सैद्धांतिकशिरोमणिभिर्यादवाचार्यैस्तत्वसंख्यानटिप्पण्यामुक्तत्वेन तयोः प्रागभावध्वंसाघटितत्वात्। न चोत्पन्नस्य पुनरुत्पत्त्यादिपरिहाराय प्रागभावांगीकार इति वाच्यं। उत्पत्तिर्हि तत्क्षणपूर्वक्षणासंबध्धस्यक्षणसंबंधः। तत्र सामग्रीक्षणसंबंधमात्रस्य निर्वाहिका नतु तत्पूर्वक्षणासंबंधस्यापि सामग्रीपूर्वमपि स्वतो विद्यमानस्य सामग्रीनियम्यत्वाभावात्। एवं च दंडादिरूपा घटसामग्री घटस्य क्षणसंबंधमापादयेत्। नतु विशिष्टक्षणसंबंधरूपोत्पत्तिमपीति कुतः प्रागभावांगीकारः। नच तद्घटध्वंसोत्तरं तद्दंडादिघटितसामग्रीबलात्तद्घटस्य क्षणसंबंधापत्तिवारणाय तत्प्रागभावस्य कारणत्वमावश्यकमिति प्रागभावसिध्धिरिति वाच्यं। प्रागभावस्वीकारेपि तद्दंडादिरूपसामग्रीबलात्क्षणचतुष्टयानंतरमुत्पत्स्यमानघटस्येदानीमेवापत्तिपरिहाराय तत्क्षणस्य तत्क्रियायां वा कस्यचिदननुगतस्य कारणस्यावश्यं सामग्रीकोटिनिविष्टतया तद्बलादेवोक्तापत्तिवारणेन प्रागभावासिध्धिः। न च त्यज्यतां प्रागभावो ध्वंसोपि सामयिकाभाव एव स्वीक्रियतां प्रामाणिकप्रतियोगिकः। किमर्थं प्रागभावादीनां पृथक् सिध्ध्यर्थमप्रमाणिकप्रतियोगित्वांगीकारोऽतिलाघवादिति वाच्यं। सिध्धांतिना तु मैवं वक्तुं शक्यमपसिध्धांतादिप्रसंगात्। तटस्थशंकायास्त्विदं उत्तरं लाघवमात्रं नार्थव्यवस्थापकं। तथात्वे एकस्मिन्नेव गुणे रूपत्वरसत्वादिकं परिकल्प्य रूपत्वेन चक्षुर्ग्राह्यत्वं रसत्वेन रसनाग्राह्यत्वं कल्पनीयं स्याल्लाघवात्। अपि च जगत्येकमेव नीलादिकं स्याल्लाघवात्। व्यक्तिनाशो पाके वा तत्संबंधापगमस्य वक्तुं शक्यत्वात्। तथाच सर्वव्यवस्थोच्छेदप्रसंगः। कामाच्च नानुमानापेक्षेति सूत्रविरोधश्च स्यात्। अतः प्रत्यक्षयोरागमयोर्विरोधे निश्चयायतु॥ अनुमाद्या न स्वतंत्राः प्रमाणपदवीं ययुः। इति पुरुषोत्तमतंत्रवचनानुसारेण प्रमाणानां परस्परविप्रतिपत्तौ सत्यां लाघवरूपतर्कादिकं अन्यतरसहकारीभूयार्थव्यवस्थापकं। प्रकृते च पूर्वापरसदात्वेन त्रिविधोऽभाव इष्यते॥ भावाभावस्वरूपत्वान्नान्योन्याभावता पृथगिति आचार्योदाहृतभगवत्कृततत्वविवेकवाक्यादिना प्रसिध्धवायुपुराणस्थशांडिल्यतत्वगतवाक्यादिना तत्सहकृतेन नष्टो घटः भविष्यति घट इति प्रत्यक्षेण च प्रागभावप्रध्वंसात्यंताभावानां पृथक् प्रमितानां लाघवमात्रेण नापलापः कर्तुं शक्यः। एतेन भेदवदत्यंताभावादीनामपि धर्मिस्वरूपत्वं परिकल्प्य सप्रतियोगिकत्वादिव्यवस्था सर्वा वोढुं शक्येति व्यर्थमन्योन्याभावमात्रस्य धर्मिस्वरूपत्वपरिकल्पनमिति कस्यचित्दूषणं एवं दीधितिकारीयं प्रागभावखंडनं चेत्येवमादीन्यपहस्तितानि। अस्माभिः केवल युक्त्या कस्याप्यर्थस्यानंगीकारात्। पूर्वोदाहृततत्वविवेकवायुपुराणवाक्यादिना भेदमात्रस्य वस्तुस्वरूपतत्वावेदकेन भेदस्तु सर्ववस्तूनां स्वरूपं नैजमव्ययमित्यादिना तैत्तिरीयभाष्याद्युदाहृतप्रमाणेन सिध्धार्थे उक्तचोद्यानवकाशात्। यस्तूक्तवचनेष्वेव विप्रतिपद्यते तं प्रत्येतत्साधनोपायाभावेऽपि अस्मदंगीकारस्योक्तप्रमाणमूलकस्य क्षत्यभावात्। अन्यथा बौध्धं प्रति तदसिद्धप्रमाणभावेन वेदेन संध्यावंदनयज्ञादिकर्तव्यतायाः साधयितुमशक्यत्वात्। स्वमतेऽपि तत्परित्यागप्रसंगात्। भेदग्रहेऽन्योन्याश्रयादिपरिहारस्तु धर्मिस्वरूपत्वनिर्भरं विनापि धर्मित्वप्रतियोगित्वतन्त्रैर्वा युगपदित्यनुव्याख्यासुधायां समयपादे नैय्या-

यिकमतप्रदर्शनेन किंचेत्यादिना विष्णुतत्वनिर्णयटीकायां टीकाकारैः प्रदर्शित इति नाद्वैतवादिभिः सह विचारे तन्निर्भरस्योपयोगः। तथाच प्रागभावादीनां त्रयाणामपि प्रतियोगिना सह कालिक एव विरोध उतात्यंताभावविशेषस्य दैशिक एवेत्यत्र स्फुटनिर्णायकविशेषप्रमाणाभावाल्लाघवादिसहकृतानुमानाद्यवसर इति। अपिच स्वरसतो यादृशशब्दात् यादृशबोधो जायते तदभिलाप्य प्रत्ययस्याप्युत्सर्गतस्तदाकारत्वं नियतं। एवंच भूतले घटो नास्तीत्यत्र भूतलाधिकरणकसत्तावद्धटाभावो बोध्यत इति तदभिलाप्य प्रतीतेस्तादृशविशिष्टघटप्रतियोगिकाभावो विषयो वाच्यः। यत्र भूतले घटः प्रसिद्धस्तद्धटितविशिष्टप्रतियोगिकः प्रागभावो ध्वंसो वा भवति। नचैवं सति शुद्धप्रतियोगिकप्रागभावध्वंसौ न सिद्ध्येतामिति वाच्यं। यत्र घटस्तत्संसर्गश्चोभावप्युत्पन्नौ नष्टौ वा तत्र घटस्तत्संसर्गश्च उत्पत्स्यते भविष्यति घटस्तत्संसर्गश्च नष्ट इत्यादिप्रत्ययांतरानुरोधेन सिद्धविशेषणविशेष्यप्रतियोगिकप्रागभावध्वंसानामेव विशिष्टप्रतियोगिकत्वेन भानमंगीक्रियत इति तस्य शुद्धप्रतियोगिकत्वासिद्धिः। वस्तुतस्तु चैत्रो रूपीति चैत्रत्वविशिष्टे रूपावगाहिप्रतीत्यैव शुद्धेपि रूपित्वं सिद्ध्यति। अन्यथा शुद्धस्यारूपित्वं स्यात्। एवं विशिष्टे प्रतियोगित्वावगाहिप्रतीत्या शुद्धेपि प्रतियोगित्वं विषयीक्रियत एव। यद्वा मास्तु तद्धर्मविशिष्टे प्रतियोगित्वावगाहित्वं। तद्धर्मोपलक्षित एव तदवगाहित्वमस्तु। यत्र विशेष्यांशे तदाभासमानाभावप्रतियोगित्वं बाधितं तत्र विशिष्टे तत्र विशेषणीभूतघटभूतलसंसर्गे वा प्रतियोगित्वं भासते। यत्र भूतले घटः सर्वथा नास्ति तत्र घटो नास्तीति प्रतीतिर्जायते। तत्र तद्भूतलवृत्तिघटस्यासतः प्रतियोगित्वेन भानमिति अत्यंताभावस्य सर्वस्याप्यसत्प्रतियोगिकत्वं सिद्धं। नच यत्र घटाभाववद्भूतलमिति प्रतीतिर्जायते तत्रैतद्भूतलासंसृष्टस्यैव घटस्य प्रतियोगितया भानात्सत्प्रतियोगिकाभावोपि स्वीक्रियतामिति वाच्यं। यत्रोक्तप्रतीतिः प्रात्यक्षकी तदा तस्या अत्र भूतले घटो नास्तीति प्राथमिकप्रतीतेरावश्यकतया तत्रोक्तरीत्या सत एव प्रतियोगितया भानात्तद्विषयीभूतार्थावगाहिन्या द्वितीयप्रतीतेरप्यसत्प्रतियोगिकाभावविषयकत्वावश्यकत्वे घटादिपदस्याभिलापकवाक्यस्य भूतलवृत्तिघटादौ लक्षणाश्रयणीया। यत्र घत्र घटाभाववदिदमित्यानुमानिकः प्रत्ययः शाब्दो वा तत्राधिकरणे अत्र घटो नास्तीति प्रत्ययस्य कदाचित्कस्यचिदपि दुरपन्हवतयोक्तानुमानिकाद्यभावप्रत्ययस्यापि तद्विषयत्वमिति रीत्योपपत्तेः। नच भूतले घटो नास्तीति वाक्याद्धटाभावो भूतलाधिकरणकसत्ताश्रयः भूतलवृत्तिघटाभावः सत्ताश्रय इति वा बोधः स्वीक्रियत इति तदभिलाप्य प्रतीतेरपि तत्समानविषयकतया घटप्रतियोगिकत्वावगाहितया नासत्प्रतियोगिकत्वसिद्धिरिति वाच्यं। नञो नियतत्वेन तदुपस्थाप्ये आख्यातार्थस्यान्वयायोगादुक्तरीत्या बोधस्य वक्तुमशक्यत्वात्। अन्यथा भूतलवृत्तिघटाभावो दृश्यो भवतीत्याद्यर्थे उक्तवाक्यप्रयोगवत् भूतले घटो न दृश्यो भवतीति भूतले घटो न प्रमेय इत्यादि प्रयोगस्य प्रसंगः। भूतले घटौ न स्तः भूतले घटा न संतीत्यादौ आख्यातस्य द्विवचनबहुवचनानुपपत्तेश्च। अभावस्यैकत्वेन द्वित्वानुपपत्तेः। नहि तत्राभावद्वयं त्रयं वा बोध्यते। तथात्वांगीकारे एकद्विघटाधिकरणे तादृशप्रत्ययानुदयापत्तेः। नच तर्हि घटकर्तृकसत्ताभावो भूतलवृत्तिरिति वा भूतलवृत्त्यभावीयप्रतीयोगी घटः सत्ताश्रय इति वा बोधः स्वीक्रियतां तावतापि प्रामाणिकप्रतियोगिकत्वाक्षतेरिति वाच्यं। आद्यकल्पे भूतलपदोत्तरं सप्तम्यनुपपत्तेः। तस्याः धात्वर्थनिरूपिताधिकरणार्थकत्व एवानुशिष्टत्वात्। अतः सत्तायामेवान्वयस्य वक्तव्यतया भूतलाधिकरणकघटकर्तृकसत्ताभावबोध एवांगीकार्य इति सिद्धम्-

अप्रामाणिकप्रतियोगिकाभावाविषयत्वं। द्वितीयकल्पस्त्वयुक्त एव। तथात्वे सर्वत्र शशविषाणं नास्तीति वाक्यादस्याप्रमाण्यप्रसंगात्। शशविषाणे सत्तया बाधितत्वात्। नैय्यायिकमतेपि भूतले गगनं नास्तीति वाक्यस्याप्रामाण्यप्रसंगात्। ह्रदवृत्यभावप्रतियोगी वन्हिः पर्वतवृत्तिरिति बोधतात्पर्येण ह्रदे पर्वते वन्हिर्नास्तीति प्रयोगप्रसंगाच्च। तस्मादुक्तरीत्यैव बोधो युक्तः। किंच भूतले घटोऽस्ति किमिति पृष्टे नेत्युत्तरयति। तत्र किंपदातिरिक्तप्रश्नभागार्थान्वितार्थबोधकत्वस्योत्तरवाक्ये क्लृप्ततया तद्वाक्यबोध्याविशिष्टप्रतियोगिकाभावबोधस्य तद्वाक्ये क्लृप्तत्वादन्यत्रापि तथैव बोध आवश्यकः। नेदं चैत्रस्येत्यादौ चैत्रसंबंधविशिष्टेदंपदार्थस्य असत्वेन तदभावो बोध्यते। नच षष्ठ्यर्थचैत्रसंबंधाभाव एवेदमर्थे प्रत्याय्यतां। घटो नास्तीत्यादाविवात्र बाधकाभावात्तथा च प्रामाणिकप्रतियोगिकाभावसिद्धिरिति वाच्यं। चैत्रसंबंधार्थकसर्वनामतत्पदघटितेन तदत्र नास्तीति वाक्येन बोध्याभावातिरिक्तप्रामाणिकप्रतियोगिकाभावांतरस्य तद्वाक्येन बोधने गौरवेणोक्तरीत्या सत्प्रतियोगिकाभावविषयकबोधजनकत्वस्यैवांगीकारात्। एवं चैत्रो न पचतीत्यस्यात्यंताभावबोधकत्वेप्येषैव गतिरूह्या। नन्वेवं पूर्वोक्तयुक्तिभिर्घटः पटो न भवतीत्यनेनापि घटकर्तृकभवनाश्रयघटाभावबोधोत्पत्यापत्त्या तस्य घटस्याप्रामाणिकतयोक्तवाक्यस्यात्यंताभावबोधकत्वमेव स्यान्न भेदबोधकत्वं। तथाच नान्योन्याभावता पृथगिति तत्वविवेकमूलव्याख्यावसरे भावशब्दस्य कर्तृघञ् त्वमभ्युपेत्यान्योन्यं न भवतीति व्युत्पत्त्याऽन्योन्याभावशब्देन भेदवान् बोध्यते तदुत्तरभावप्रत्ययेन पुनरन्योन्याभावं बोध्यत इति टीकाकृद्व्याख्यानं विरुध्येतेति चेन्न। यतो घटः पटो न भवतीत्यत्र नञर्थे भेदे घटस्य प्रतियोगितयान्वयः। तस्य च भवनरूपासाधारणधर्मे अभेदेनान्वयः। सर्वत्र नामार्थयोरभेदान्वयेनये घटो न पट इत्यत्र भेदवल्लाक्षणिकनञर्थस्य इतरपदार्थे अभेदान्वयस्यांगीकृतत्वेन प्रकृते नञर्थस्य भेदस्य भवने अभेदान्वये क्षतिविरहात्। तथाच घटभेदात्मकासाधारणधर्माश्रयो घट इति बोधः। घटस्वरूपभेदस्य घटासाधारणत्वमनपवादं। यद्वा भवनं स्वरूपसत्ता घटभेदस्वरूपा घटनिष्ठा भवतीति न दोषः। अथवा घटः पटो न भवतीत्यत्र पटस्यैव स्वरूपसत्तारूपभवने आश्रयतयान्वयः। तथाच घटकर्तृकभवनाश्रयभिन्नो घट इति बोधः। आख्यातस्याश्रयरूपकर्त्रर्थकत्वपक्षे आख्यातार्थप्रतियोगिकभेदावगाही जायते। अथवाऽस्मिन्नेव पक्षे पटस्य धात्वर्थभावनान्विताख्यातार्थाश्रये अभेदेनान्वयः। तथाच पटरूपभानकर्तृभेदवान् घट इति बोधो जायते। अथवा पटान्वितधात्वर्थभवनरूपसत्ताया नञर्थाभावरूपभेदे तस्याख्यातार्थे कर्तरि आश्रयरूपे तस्य घटे अन्वयः। न कलंजं भक्षयेदित्यादौ कलंजभक्षणाभावविषयकं कार्यमिति बोधाभ्युपगंतॄणां गुरूणां मत इव धात्वर्थाख्यातार्थयोरंतरा नञर्थभानाभ्युपगमसंभवात्। नामूढस्येतरोत्पत्तेः नानुपमृद्य प्रादुर्भावादित्यादौ पंचमीप्रकृतिप्रतियोगिकाभावस्य पंचम्यर्थान्वयस्याभियुक्तैरंगीकृतत्वाच्च। एतत्कल्पे पटकर्तृकसत्ताभावस्तद्भेदरूप एव भवतीति सर्वपक्षेष्वपि भेदबोधकतानिर्वाहः। ननु कुत एवमाश्रीयते पटकर्तृकसत्तावद्घटनिषेधः किं न स्यात्। भूतले घटो नास्तीत्यादाविवेति चेन्न। तत्र घटकर्तृकसत्ताभावस्य भूतले बोधने भूतल इति सप्तम्यनुपपत्तेर्नञर्थे आख्यातार्थान्वये पूर्वोक्तानुपपत्तेरिव उक्तरीत्या बोधांगीकारे प्रथमाद्यनुपपत्तेरभावात्। नच घटःपटो भवति किमिति पृष्टे नेति ब्रूते तत्र पटकर्तृकभवनविशिष्टघटनिषेधबोधकत्वं तद्वाक्यस्य पूर्वं भवदुक्तरीत्यैव तवावश्यकं। एवं घटे पटतादात्म्यं नास्तीत्यभिलापानुरोधात् तादृशप्रतीतेर्घटनिष्ठपटतादात्म्याभावविषयकत्वस्य क्लृप्तत्वात्तदनुसारेण घटः पटो न भव-

स्तीति प्रतीतेरपि नेदं चैत्रस्येत्यादावुक्तरीत्या घटनिष्ठपटतादात्म्याभावविषयकत्वमेव वाच्यमिति कुतोऽस्याः भेदविषयकत्वप्रत्याशेति वाच्यं। घटः पटात्पृथगिति शब्दाभिलाप्य प्रतीतेर्निषेधविषयकत्वेनानुभवासिद्धायाः अत्यंताभावविलक्षणभेदविषयकत्वमावश्यकं। एवं घट एवायमित्येतावन्मात्राकारप्रत्ययस्यापि स्वरूपभेदरूपविलक्षणविषयकत्वं दुरपन्हवं। घटः पटो नेत्यत्रापि नास्तीत्यादिप्रत्यये भासमानानुयोगिताविलक्षणभेदत्वादिरूपानुयोगिताविशिष्टविषयकत्वमनुभवासिद्धं। न चाभिलापकवाक्ये भवतीत्यस्याध्याह्रियमाणत्वात्पटभवनविशिष्टघटरूपासत एवात्यंताभावरूपनिषेधप्रतियोगित्वेन भानं तत्रेति वाच्यं। सार्वजनीनानुभवविरोधात्। प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्॥ पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्॥ इति कारिकयाभियुक्तैर्घटः पटो नेत्यादावुत्तरपदरूपपटपदार्थान्वितस्वार्थरूपभेदबोधकत्वेन नञः पर्युदाससंज्ञकत्वोक्त्या अत्र क्रियाध्याहारं विनैव बोधस्योक्तत्वात्प्रसज्यप्रतिषेधात्मकसंसर्गाभावबोधस्थले क्रियाया आवश्यकत्वोक्त्या तत्राश्रुत क्रियाध्याहारस्यावश्यकत्वात्। अघटं भूतलं निर्मक्षिकमित्यादौ क्रियां विनात्यंताभावबोधकत्वं तादृशसमासविधायकशास्त्रबलादेव सिध्यति। तत्रासत्प्रतियोगिकाभावभानविरोधः पूर्वोक्तरीत्या लक्षणया बोध्यः। एवं चोक्तप्रतीतिभिर्भेदस्यापि क्लृप्तत्वेन घटः पटो भवतीति वाक्यस्य तदभिलाप्यप्रत्ययस्य च तद्विषयकत्वकल्पने गौरवाभावात्। घटः पटः नेति वाक्यजन्यबोधस्य यत्कार्यमध्ये ज्ञानांतरं विना घटः पटात्पृथगिति व्यवहारादितज्जनकत्वादिना घटः पटो न भवतीति वाक्यजन्यबोधस्य तत्समानविषयकत्वस्य निष्प्रत्यूहतयोक्तरीत्या ऽन्योन्याभावबोधकत्वं निराबाधमिति युक्तैव तत्वविवेकटीका। घटः पटो भवति किमित्युत्तरवाक्यस्य नञ्पदसमभिव्याहृतेन पटभवनविशिष्टघटनिषेधो बोध्यतां नाम कश्चित्। नह्येतावता ऽनंतरमुक्तयुक्त्या सिद्धमुक्तवाक्यस्यान्योन्याभावविषयकत्वं हीयते। घटे पटतादात्म्यं नास्तीत्यस्माद्वृत्तिपटतादात्म्यरूपासत्प्रतियोगिकात्यंताभावस्य बोधः। तल्लिंगकभेदानुमितेर्मानसज्ञानस्य चोत्पत्त्यैव घटः पटात्पृथगिति व्यवहारादि कार्यमंगीक्रियते। तादात्म्याभावस्य भेदव्याप्यताग्रहरहितानां तदनुदयादिति सर्वमनवद्यं। केचित्तु प्रामाणिकप्रतियोगिकस्याप्यत्यंताभावस्यांगीकारे तद्भेदस्यैव तदत्यंताभावरूपताया नैय्यायिकैरंगीकृतत्वेन प्रकृतयोर्भेदे मानाभावेन च तत्रैव पर्यवसानादव्याप्यवृत्त्यंताभावस्य सिद्धांतेऽनंगीकारात्। सोऽत्यंताभावो भेद एव। शुद्धात्यंताभावस्तु केवलान्वयी अप्रामाणिकप्रतियोगिक एवेति शुद्धात्यंताभावस्याप्रामाणिकप्रतियोगिकत्वनियमस्य न काचित्क्षतिः। अत्यंताभावस्य शुद्धत्वं तु यादृशप्रतियोगिताकात्यंताभावत्वविशिष्टाधिकरणं यद्यत् तत्तत्स्व रूपभूतभेदनिष्ठात्यंताभावत्वानिरूपिका या या तादृशतादृशप्रतियोगिता तत्तदन्यप्रतियोगितानिरूपकात्यंताभावत्ववत्वं। यादृशी घटात्यंताभावीयघटनिष्ठप्रतियोगिता तन्निरूपकात्यंताभावत्वविशिष्टाधिकरणानि घटवद्भिन्नानि नानाधिकरणानि। तत्तदात्मकभेदास्तु तत्तत्स्वरूपभूतघटवद्भेदास्तन्निष्ठात्यंताभावत्वं घटात्यंताभावस्य। प्रामाणिकप्रतियोगिकात्यंताभावस्य भेदरूपताया उपपादितत्वात्। तन्निरूपिकाः या याः प्रतियोगिताः प्रामाणिकघटादिनिष्ठा एव। तत्तदन्या शशविषाणादिरूपाऽसन्निष्ठा भवति। तस्या यादृशपदेनोपादानासंभवात्। तथा हि शशविषाणादिनिष्ठप्रतियोगिता यादृशी चेत् तन्निरूपकात्यंताभावत्वविशिष्टाधिकरणं यद्यत् भूतलादिकं तत्तदात्मकभेदास्तु पदार्थांतरप्रतियोगिकभेदास्तन्निष्ठं यदत्यंताभावत्वं शशविषाणाभावत्वं तस्य धर्मिस्वरूपत्वाभावेन तदात्मकभेदरूपत्वाभावात्। किंतूक्तरीत्या घटात्यंताभावत्वमेव तन्निरूपकत्वं न शश-

विषाणादिनिष्ठप्रतियोगिताया इति । अत्र यद्यदधिकरणमिति वप्सानादरे शशविषाणादि-निष्ठप्रतियोगितापि यादृशी भवत्येव । शशविषाणाभावस्य स्वस्मिन्नपि सत्वात् । शशविषाणादिनिष्ठप्रतियोगिताकात्यंताभावत्वविशिष्टाधिकरणं शशविषाणाभावोपि तदात्मको भेद-स्तन्निष्ठघटभेदस्तन्निष्ठमत्यंताभावत्वं शशविषाणात्यंताभावत्वं तन्निरूपकत्वादतस्तदादरः। यादृशप्रतियोगिताकाभावाधिकरणमित्येतावता पूर्तावत्यंताभावत्वाश्रयेत्युक्तिरन्यात्यंता-भावप्रतियोगिता यादृशपदेनोपादेयेति सूचनाय न त्वातिप्रसंगपरिहारायेति ज्ञातव्यं । यद्वा व्यतिरेकिभिन्नत्वमेव शुत्धत्वं । तत्तत्धर्मिस्वरूपभेदात्मकानां प्रामाणिकप्रतियोगिकात्यंता-भावानां व्यतिरेकित्वात्तेन तद्वारणं । एतेन भेदान्यत्वं चेच्छुत्धत्वं । तदा शशविषाणात्यंता भावादीनामपि स्वनिष्ठघटभेदस्वरूपत्वादसंग्रह एव । स्वाश्रयस्वरूपभेदात्मकान्यत्वमि-त्युक्तावपि स एव दोषः । शशविषाणाभावादीनामपि स्वाश्रयत्वेन स्वाश्रयस्वरूपभेदात्म-कत्वादिति परास्तं । उक्तनिर्वचनद्वयेपि दोषाभावात् । नच घटत्वात्यंताभावस्य पटात्मक-भेदस्वरूपत्वे पटस्वरूपस्वाधिकरणात्मकत्वापत्त्याऽत्यंताभावस्याधिकरणस्वरूपत्वखंडक-सुधातत्वसंख्यानटीकादिविरोधः । तत्राभावत्वेनैव रूपेण प्रस्तुततया शुत्धात्यंताभावघ-टतत्संसर्गध्वंसप्रागभावादिपरत्वात् । ननु व्यधिकरणसंबंधावछिन्नप्रतियोगिताकरूपात्यं-ताभावादीनां तदवछिन्नभेदाप्रसित्ध्या तदनात्मकानां केवलान्वयिनां शुत्धात्यंताभाव-त्ववतां प्रामाणिकप्रतियोगिकानामसत्प्रतियोगिकत्वाभावाद्व्यभिचारः । नच तेन संबंधेन तद्भेदेपि तदत्यंताभावरूपः केवलान्वयीति नोक्तशुत्धत्वं तस्येति वाच्यं । प्रतीतिबला-त्तद्रूपासत्प्रतियोगिकभेदांगीकारेपि तद्भिन्नेत्यप्रतीतेरसद्विशेषे तद्भेदानंगीकारादिति चेन्न। संबंधस्य प्रतियोगितावछेदकत्वादेरग्रे खंडनीयतया तस्यसंयोगप्रतियोगित्वविशिष्ट रूपप्रतियोगिकत्वस्यैव स्वीकारेण तस्यासत्वेन व्यभिचारविरहात् । नचाकाशे इह पक्षी नेह पक्षीति प्रतीतिसित्धप्रामाणिकप्रतियोगिकाभावो व्याप्यवृत्त्यभावानंगीकारे अंशव्य-वस्थया विद्यमानस्तदंशात्मकभेदस्वरूपो न वाच्यः । तदंशे अंशांतरप्रतियोगिकभेदाभा-वादतोतिरिक्त एवेति शुत्धत्वप्राप्त्या व्यभिचार इति वाच्यं । तदंशे विद्यमानपक्षिसंयोगनि ष्ठयादृशप्रतियोगिता घटात्मकभेदस्वरूपात्यंताभावनिरूपिका सैवांशांतरनिष्ठभेदानात्मका-भावनिरूपिकेति तत्तदन्यप्रतियोगितानिरूपकत्वाभावात्प्रतियोग्यधिकरणांशावृत्तित्वेन व्य-तिरेकित्वाच्च तत्र शुत्धत्वाभावात् । तत्रत्याभावस्यांशभेदस्थानीयतद्विशेषात्मकत्वांगीका-रान्निरुक्तौ भेदविशेषयोरुभयोरपि निवेश्यतया वा दोषाभावादित्याहुः । अथ सर्वेषामत्यंता भावानां केवलान्वयितया समनियतत्वेनैक्यापात्तिः निर्दोषत्वादेः भगवल्लक्षणत्वानुपपात्तिः । जीवादावतिव्याप्तेः घटाधिकरणेपि भूतले घटो नास्तीति वाक्यस्य प्रामाण्यं च स्यात् । घटवति भूतले घटाभावो नास्तीति वाक्यं प्रमाणं च न स्यात् । सत्वासत्वयोः परस्पर-विरहात्मकत्वाद्युक्तिरपि न संगच्छेतेति चेन्न । समनियतत्वेप्यैक्यसाधकप्रमाणं विना लाघ-वमात्रेणैक्यसित्धेरयोगात् । अन्यथाऽभिधेयत्वज्ञेयत्वादीनां पंचाशद्वर्णाव्याकृताकाशादीनां देशकालसमनियतानामप्यैक्यं स्यात् । तेषां भावत्वान्नैवमिति चेत्तर्ह्यभावत्वादेवैषामपि भेदोस्तु । तेषां कत्वादिरूपविलक्षणधर्मेणानुभूयमानानां ककारो मया श्रुतो न गकार इति भेदोपलंभान्नैवमिति चेत्तर्हि शशविषाणं नास्तीति वाक्यं श्रुत्वा ततः किंचित्कालं विलंब्य नरविषाणं नास्तीति श्रुतवता पूर्वं शशविषाणाभावः श्रुतो न नरविषाणाभावः । इदानीमयं श्रुतो न स इत्यादिरूपेण भेदोपलंभात्तत्ज्ञानकार्यीभूतसंशयादिप्रतिबंधादीनां वैलक्षण्या-नुभवाच्च । स्वपृक्ततत्तत्प्रतियोगिकत्वरूपविलक्षणधर्मशालिनामभावानामपि भेदोस्तु ।

नापि निर्दोषत्वस्य भगवल्लक्षणत्वानुपपत्तिः। स्ववृत्तिदोषाभाववत्त्वस्य भगवल्लक्षणत्वाभ्युपगमात्। अत एव मंदारमंजर्यां स्वप्रागभावाप्रतियोगित्वमनादित्वमिति परिष्कृतं। ननु स्वशब्दस्य समभिव्याहृतपरत्वेनेश्वरलक्षणवाक्यस्थस्वशब्देनेश्वरस्य बोधनेपीश्वरवृत्तिदोषाभावस्यैव लक्षणत्वप्राप्त्या तस्य जीवेऽतिव्याप्तिर्दुर्वारैवेति चेन्न। मंदारमंजर्युक्तलक्षणस्याप्येवमेव प्रत्याख्यानप्रसंगात्। तत्रापि स्वशब्देनाऽनादेर्बोधनेप्यनादिप्रतियोगिकप्रागभावप्रतियोगित्वाभावस्य वाऽनादिनिष्ठं यत्प्रागभावप्रतियोगित्वं तदभावस्य वा लक्षणत्वेन प्राप्ततया तस्य सादिष्वतिव्याप्तेर्दुर्वारत्वात्। स्वप्रागभावप्रतियोगित्वाभाववदिदमिति वाक्यजन्यप्रमाविषयीभूतं यद्विशिष्टं तस्य तादात्म्येन लक्षणत्वं तद्वाक्याभिप्रेतमिति चेद्त्रापि स्ववृत्तिदोषाभाववानयमिति वाक्यजन्यप्रमाविषयीभूतविशिष्टस्यैव तादात्म्येन लक्षणत्वाभ्युपगमान्नोक्तदोषः। नच दोषाभाववदिति वाक्यस्योभयाभावादिबोधकत्वस्यापि संभवेन तादृशप्रमाविषयविशिष्टो जीवोपि भवतीति वाच्यं। दोषत्वावच्छिन्नप्रकारकग्रहविरोधित्वेन प्रमाया विशेषणीयत्वात्। उभयाभावादिग्रहस्याविरोधित्वात्। अत्र दोषो नास्तीति प्रमाव्यवहितोत्तरक्षणोत्पन्ना या दोषाभाववानयमितिवाक्याभिलाप्यप्रमा तद्विषयीभूतविशिष्टस्य लक्षणत्वे तात्पर्याद्वा न कश्चिद्दोषः। अनादित्वलक्षणमप्येवमेव परिष्कर्तव्यमन्यथोक्तोभयाभावप्रमामादायागतेः। केचित्तु दोषो नास्तीति प्रमीयाभावनिष्ठविशेष्यतानिरूपितप्रतियोगितासंसर्गावच्छिन्नप्रकारतानिरूपिताधेयतासंसर्गावछिन्नप्रकारतावत्वमेव निर्दोषत्वमभिप्रेतं। ईश्वरे दोषो नास्तीति प्रमीयतादृशप्रकारतामादायेश्वरे लक्षणसमन्वयः। प्रतियोगितया भासमानदोषसंबंधवत्तया भासमानस्य तादृशसंसृष्टरूपेणासत्त्वेपि शुद्धस्याप्यग्रे भानस्य व्यवस्थापनीयतया तस्यापि भानाभ्युपगमात्। तदनंगीकारे तु तादृशप्रकारतानिर्वाहकविषयताश्रयत्वमेव लक्षणमस्तु। पूर्वमीश्वरोपस्थितिं विनोत्तरज्ञाने तादृशप्रकारतायाः प्रतियोगिसंसृष्टतया भासमाने ऽसत्यनिर्वाहात्। प्रतीतिबलादेव पूर्वोपस्थितीयेश्वरविषयतायास्तादृशप्रकारताप्रयोजकत्वाभ्युपगमात्। जीवे दोषो नास्तीति धियः प्रमात्वाभावादेव तत्रोक्तरीत्या लक्षणागमनात्। एवमनादिलक्षणत्वस्यापि स्वनिष्ठं यत्प्रागभावप्रतियोगित्वं तदभाव इत्यर्थकत्वे उक्तरीत्यैव परिष्कारः। स्वस्य यः प्रागभाव इत्यादिरीत्यार्थकरणे तु तादृशाभावविषयतानिरूपितप्रतियोगितासंसर्गावछिन्नप्रकारतानिरूपितप्रागभावप्रकारतानिरूपितप्रकारता तत्प्रयोजकविषयताश्रयत्वमिति रीत्या परिष्कर्तव्यं। प्रतियोगिकोटौ भासमानस्य सर्वस्यासत्वात्कथं प्रकारता प्रागभावीया भवतीत्याशंका तु तच्छब्दोल्लिखादिप्रयोजकत्वमेव तथात्वमित्यग्रे वक्ष्यमाणदिशा वारणीया। एवमन्यत्रापि द्रष्टव्यमित्याहुः। एवं नापि घटवति भूतले अत्र घटो नास्तीति वाक्यस्य प्रामाण्यं। तद्वाक्येन तद्भूतलसंसृष्टघटप्रतियोगिकात्यंताभावबोधस्य व्यवस्थापितत्त्वेन घटाधिकरणसंसृष्टघटप्रतियोगिकत्वस्य तद्वाक्येनात्यंताभावे बोधनीयस्य बाधितत्वात्। नापि घटाभाववदिदमिति वाक्यस्य प्रामाण्योपपादनं युक्तं। उभयाभावादिबोधतात्पर्यकतादृशवाक्यप्रामाण्यस्य त्वयांगीकृतत्वेन ममापीष्टत्वात्। सामान्याभावबोधतात्पर्यस्थले समभिव्याहृताधिकरणसंसृष्टघटादौ लाक्षणिकत्वस्य घटादिपदानां पूर्वमुक्तत्वात्तादृशवाक्यस्याप्युक्तरीत्या बाधितार्थकत्वात्। निरनिष्टो निरवद्य इत्यादिवाक्यानां जीवविषयकतया प्रामाण्यं स्यादित्यप्यनेनैव निरस्तं। तद्वाक्यस्य जीवविषयकत्वे जीववृत्तिदोषाभाववत्त्वस्यैव जीवे बोधकताया एव बलादापत्त्या तस्य बाधितत्वात्। नच निरनिष्ट इत्यादि वाक्यबोध्यो योऽ

( टीका ) असतोपि प्रतीतिमुपपादयिष्यामः ।

भावस्तद्वान् जीव इति वाक्यस्य प्रामाण्यं स्यात् । तद्वाक्यबोध्यस्येश्वरवृत्तिदोषप्रतियोगिकाभावस्य जीवेपि सत्वादिति वाच्यं । तस्य केवलान्वयित्ववादिनामिष्टत्वात् । अन्यथा केवलान्वयित्वोक्तेरेवासंगतिप्रसंगात् । एवं घटवति भूतले घटाभावो नास्तीति वाक्यमपि प्रमाणं भवत्येव । घटपदस्य तद्भूतलसंसृष्टघटपरतया अत्र घटाभाव इत्यप्रमाणवाक्यानुसारेण क्लृप्ततया अत्र घटाभावो नास्तीति वाक्येनापि एतद्भूतलसंसृष्टो य एतद्भूतलसंसृष्टघटप्रातियोगिकोऽभावस्तदत्यंताभाव इति बोधो जायते । स च प्रमैव । यत्र भूतले घटोस्ति तद्भूतलसंसृष्टघटप्रतियोगिकात्यंताभावस्यासत्वेनैतद्भूतलसंसृष्टस्य तस्य सुतरामसत्वेन तत्प्रतियोगिकात्यंताभावस्य तद्बोधविषयस्य सत्वात् । भूतलांतरसंसृष्टघटप्रतियोगिकात्यंताभावरूपकेवलान्वयिवस्तुबोधकतत्पदघटितमत्र स नास्तीति वाक्यमप्रमाणमेव । एतद्भूतलवृत्तित्वविशिष्टतदभावव्यक्तेः सत्वेन तदत्यंताभावस्य बाधितत्वात् । एवं भावाभावयोः परस्परविरहात्मकत्वोक्तिरपि मतांतररीत्या । स्वमते तु अत्र घटो नास्तीति प्रतीत्युत्तरं यद्घटाभाववदिति यथार्थज्ञानं तद्विषयीभूतं यद्विशिष्टं तद्व्याप्यत्वं घटाभावस्य घटविरहरूपत्वं । एवमत्र घटाभावो नास्तीत्यादिरीत्या घटस्य घटाभावविरहरूपत्वं व्यांप्यता च नञुल्लेख्यस्वप्रमोत्तरप्रमाविषयतया बोध्यातो न तस्य केवलान्वयित्वेपि व्याप्यताभंगः । एवं क्रमेण तत्पारिभाषिकमेव । यद्वा स्वप्रधानकारोपविषयप्रतियोगिकत्वमभावस्य भावविरहात्मकत्वं स्वविषयताप्रयोज्यप्रतियोगितासंसर्गावछिन्नप्रकारतानिरूपितप्रमीयविषयताश्रयत्वं पर्यवसितमभावे । भावे तु तादृशप्रतियोगिप्रकारताप्रयोजकविषयताश्रयत्वमिति रीत्या पारिभाषिकं । प्रागभावादिस्थले प्रतियोगिनः सत्वादेव प्रतियोगिविषयता अभावप्रमीयप्रतियोगिप्रकारताप्रयोजिका । अत्यंताभावस्थले तु सत्यभूतप्रधानविषयतैव केचिदित्युक्तमतरीत्या प्रयोजिका । तत्र घटत्वरूपसामान्यधर्मावच्छिन्नविषयता प्रयोजिका चेत् सामान्यप्रधानकोऽभावः सामान्याभावपदव्यवहार्यः । विशेषधर्मावछिन्नप्रधानकस्तु विशेषाभावो भवतीति तद्व्यवस्थापि घटते । शशे विषाणं नास्तीति प्रतीतिसिद्धोऽभावो विषाणप्रधानकः । सर्वत्र शशविषाणं नास्तीति प्रतीतिसिद्धोऽभावः शशविषाणप्रधानक एव । असतोपि तादृशविषयताश्रयत्वरूपं प्रकृताभिमतप्रधानत्वं युक्तं । भावाभावयोरुक्तविरहात्मकत्वं भावाभावबोधकवाक्यप्रामाण्यादौ कथंचिदुपयुज्यत इति तदुक्तिरपि सार्थकैवमन्यदपि ऊह्यमित्यलं विस्तरेण । वंशपल्लीस्थाचार्यास्तु निर्दोषत्वं दोषारोपपूर्वकप्रतीतिविषयाभाववत्वमिति परिष्कृत्य प्रतियोग्यारोपे यत्प्रधानं तेनापि साकमसत्प्रतियोगिकाभावस्यापि विरोधमंगीकृत्य जीवे ऽतिव्याप्तिं परिहृतवंतः । तेषां मते सर्वेषामत्यंताभावानामसत्प्रतियोगिकत्वाविशेषेपि घटवति भूतले घटो नास्ति घटाभाववदिदमिति वाक्याप्रामाण्यादिव्यवस्थाबलात् सत्प्रधानकोऽभावो व्यतिरेकी प्रधानभूतसद्विरोधी असत्प्रधानकस्तु केवलान्वयी । तरंगिण्युक्तसत्वासत्वयोः परस्परविरहात्मकत्वपरिष्कारोप्येतन्मतरीत्या निर्वाह्यः । एवमप्रामाणिकप्रतियोगिकाभावानियमे एवमन्येपि क्षुद्रोपद्रवाः सूक्ष्ममतिभिः परिहरणीया इत्यलमिति वदंति । सत्यनाथश्रीचरणाः पुनरभिनवतांडवादौ प्रामाणिकप्रतियोगिकमप्यत्यंताभावं सिद्धांते व्यवस्थापयंतस्तन्नियमं तत्यजुः । तन्मते सर्वापि व्यवस्था सुकरैव । व्यवस्थापनप्रकारस्तत्कृतग्रंथ एवानुसंधेयः । ग्रंथगौरवभयान्नेह प्रपंच्यत इति । नन्वसतो ज्ञानविषयत्वात्कथमुक्तरूपमपि प्रतियोगित्वं तस्येत्यत आह । असतोपीति । उपपादयिष्याम इति । असतः प्रतीतिं विनेत्यत्रेत्यर्थः ।

( टीका ) ननु वदतिरत्र यदि वदनक्रियावाची तदा शब्दस्य कर्मतैव । अथ शाब्दप्रतीतिवाची तदा करणतैव । तत्कथं शब्दो वदतीति व्यपदेशः । इत्थं अवांतरव्यापारवतो हि कारणस्य करणत्वं । अन्यथाऽतिप्रसंगात् । तत्र स्वक्रियां प्रति सर्वस्य प्राधान्येन कर्तृत्वात्करणेपि शब्दे तद्विवक्षया वदतीति व्यपदेशो युज्यते । प्रधानाक्रियां प्रति करणत्वमुल्लंघ्य किमवांतरव्यापारे कर्तृत्वं विवक्षत इति चेत् । प्राधान्यानिर्देशेन वाचकत्वपक्षकक्षीकरणसूचनार्थं ।

---

वदतिरिति । वदधातुरित्यर्थः । वदनक्रिया उच्चारणरूपक्रिया । कर्मतैवेति । शब्दमुच्चारयति वदतीति प्रयोगादिति भावः । शाब्दप्रतीतिवाचीति । तदनुकूलव्यापाररूपतद्घटितार्थवाचीत्यर्थः। करणतैवेति । विक्लृत्यनुकूलव्यापाररूपपाके काष्ठानां करणत्वेन काष्ठैः पचतीतिवत् मिथ्याशब्दे नानिर्वचनीयं वदतीति प्रयोगः स्यादिति भावः। दृष्टांते दार्ष्टांतिके च धात्वर्थव्यापारानिरूपित करणत्वं काष्ठशब्दनिष्ठं तन्निष्पाद्यनिष्पादकत्वरूपं पारिभाषिकमेव । धात्वर्थकोटिप्रविष्ट-विक्लृतिप्रतीत्यादिरूपं फलान्वितं मुख्यमेव वा द्रष्टव्यं । तत्कथमिति । शब्दे कर्तृत्वस्य सर्वथाऽयोगादिति भावः । अवांतरेति । उर्ध्वाधोदेशसंयोगादिरूपावांतरव्यापारविशिष्टस्यैव कुठारादिच्छिदाकरणत्वस्य दृष्टत्वादित्यर्थः। अन्यथेति। प्रागभावेन छिनत्तीति प्रसंगादित्यर्थः प्राधान्येन। आश्रयत्वेन । इदं कर्तृत्वोपपादकं कर्तृत्वात् प्रकृतधात्वर्थकर्तृत्वात् । तद्विविक्षयेति । शब्दनिष्ठशक्तिज्ञानविषयत्वादिव्यापारविवक्षयेत्यर्थः। युज्यत इति। यथा विक्लृत्यनुकूलचैत्रादिनिष्ठव्यापारो यदि धात्वर्थस्तदा तत्र काष्ठानामुक्तरीत्या करणत्वात्काष्ठैः पचतीति प्रयोगः। यदा तु काष्ठनिष्ठक्षिप्रप्रज्वलनरूपव्यापारो यदि धात्वर्थस्तदा तदाश्रयत्वेन कर्तृत्वात् काष्ठं पचतीति प्रयोगः । तथा शाब्दप्रतीत्यनुकूलचैत्रनिष्ठशब्दोच्चारणादिरूपवदधात्वर्थव्यापार-निरूपितकरणतावतः शब्दस्यापि तादृशप्रतीत्यनुकूलव्यापारभूतस्य शक्तिमत्वादिना शीघ्र स्मृतिविषयत्वादेराश्रयतया कर्तृत्वात् शब्दो वदतीति व्यवहारो युज्यत इत्यर्थः । । वाचकत्वपक्षेति । मिथ्याशब्दस्यानिर्वचनीयवाचकत्वरूपप्राग्विकल्पितकल्पमंगीकृत्य पूर्वपक्षिणः प्रत्यवस्थानसूचनार्थमित्यर्थः। शक्तिस्मृतिविषयत्वादेर्व्यापारत्वेनैव धात्वर्थतया कथमनेन वाचकत्वपक्षावलंबनमेवेदानीं पूर्वपक्षिण इति ज्ञातुं शक्यमित्यतः । प्राधान्यनिर्देशेनेति । अनुमेयत्वरूपज्ञाप्यत्वमित्थंभूतलक्षणतृतीयार्थभूतं कक्षीकरणान्वयि। यद्वा तृतीयार्थतालिंग-कत्वमनुमित्यनुकूलव्यापाररूपसूचनपदार्थघटकानुमितावन्वेति । व्यापारश्च मानसः विमर्शात्मकः । तन्निर्वाहकश्चायं व्यपदेश इति भावः । यथा चैत्रः पचतीति विहाय काष्ठं पचतीति केनाचिदभिहिते श्रोतुर्विमर्शो जायते । अयं मुख्यकर्तृव्यापारतात्पर्यं विहाय किमर्थम-मुख्यकरणादिनिष्ठव्यापारतात्पर्येण धातुं प्रयुंक्त इति। ततः अयं काष्ठनिष्ठो यः प्रकृतविक्लृत्य नुकूलोतिशयस्तद्बोधतात्पर्यवान् पाकमुख्यकर्तृचैत्रतुल्यतया प्राधान्येन तन्निर्देशकर्तृत्वात् । शरवृत्त्यतिशयबोधतात्पर्येण हंता रामशर इत्यादिवाक्यप्रयोक्तृवत् । यो यादृशफल-मुख्यकर्तृतुल्यतया कर्तृत्वेन तदवांतरकारणनिर्देशकर्ता प्रेक्षावान् स तन्निष्ठप्रकृत-फलानुकूलातिशयबोधतात्पर्यवानिति सामान्यमुखी व्याप्तिः । तादृशातिशयः कीदृशः स्यादिति विमर्शे अन्यस्यासंभवात् क्षिप्रप्रज्वलनादिकमेव स इति निश्चि-

( टीका ) मिथ्याशब्देनानिर्वचनीयं देवदत्तो वदतीत्यस्य वाचकावाचकपक्षसाधारण्यात्। वदतिर्वाचकत्वे प्रयुज्यत इति चेत्सत्यं। नतु तन्नियमः। शाब्दप्रतीतिमात्रेपि प्रयोगदर्शनात्।

---

नोति । तद्वत्प्रकृतेपि । शाब्दप्रतीतिरूपफलं प्रति मुख्यतया निर्वाहकवाक्यप्रयोक्तृतुल्यतया मिथ्याशब्दस्य कर्तृत्वेन निर्देशकर्तृत्वाद्यं पूर्वपक्षो मिथ्याशब्दनिष्ठानिर्वचनीयशाब्दबोधोपयिकाकिंचिदतिशयबोधतात्पर्यवानिति निश्चयो जायते। ततः तादृशातिशयोऽतद्वाचकत्वमेव भवेत् । लक्षणादीनामनुपपत्तिज्ञानादिविलंबितोपस्थितिकानामतिशयरूपत्वासंभवात्। शक्तेरवश्यं प्राथमिकग्रहविषयत्वेन तत्संभवादिति निश्चयो जायत इति क्रमेण प्राधान्यानिर्देशस्य वाचकपक्षांगीकाररूपकक्षीकरणज्ञापकत्वं तदनुमितौ लिंगत्वं च निर्वहतीति भावः। अंगीकारेपि तद्बोधतात्पर्यमेवेति नोक्तविरोधः। अनुमित्यन्वयपक्षे करण तृतीयैव। धूमेन वन्ह्यनुमानाय यतत इतिवदिति द्रष्टव्यं। मिथ्याशब्देनेत्युक्तौ वाचकत्वस्यैव कुतो विशिष्य न लाभ इत्यत आह । मिथ्याशब्देनेति । साधारण्यादिति । कर्तृत्वेन निर्देशाभावे उक्तरीत्या विमर्शद्वारानुमितिर्नैव जायते। अनुमितावुक्तलिंगास्फूर्तेः विमर्शबीजाभावाच्च। शाब्दप्रतीतिकरणत्वं तु लाक्षणिकालाक्षणिकपदसाधारणं। तेन च न शब्दस्य वाचकत्वसिद्धिः। तत्प्रयोगेण च प्रयोक्तुर्न वाचकत्वपक्षाभिप्रायत्वासिद्धिरिति भावः। ननु तत्पदस्य तद्वाचकत्वे सति घटपदेन घटं वदतीति प्रयोगात् घटे घटपदवाच्यत्वसिद्धिवत् मिथ्याशब्देन वदतीत्युक्तावपि तत्कर्मकवद्धात्वर्थान्वितस्वकरणत्वलिंगेन मिथ्याशब्दस्यानिर्वचनीयवाचकत्वसिद्धौ तत्प्रयोगाद्वाचकत्वपक्षांगीकारासिद्धिश्च भवतीति गूढाभिसंधिराशंकते। वदतिरिति। वाचकत्वे वाचकत्वे सति। गूढाभिसंधेरवाभिप्रायमजानन्निव परिहरति। सत्यमिति। वाचकत्वे सति प्रयुज्यतां नाम तावता नास्माकं काचिल्क्षतिरिति भावः। नियमबोधकैवकाराप्रयोगेऽपि सर्वं वाक्यं सावधारणमिति न्यायान्नियमपरमेव मद्वाक्यमतोऽवतारिकोक्तरीत्या ऽस्मदभिमतसिद्धिरिति तदभिप्रायस्फुटीकरणे अस्याभिप्रायमाविष्करोति। नत्विति। तथाच भवदुक्तनियमासिद्धेरुक्तशंका न युक्तैवेति भावः। कुत इत्यतो व्यभिचारादित्याह। शाब्दप्रतीतिमात्र इति। तत्पदवाच्यविषयकत्वलक्ष्यविषयकत्वादि विशेषमपहाय तज्जन्यशाब्दप्रतीतिसामान्यघटितार्थे वदतेर्भूरिप्रयोगदर्शनादित्यर्थः। मात्रेणेति तृतीयांतपाठे तेन निमित्तेनेत्यर्थः। अध्ययनेन वसतीत्यादौ फलस्यापि निमित्तत्वादिति भावः। एतेन लाक्षणिकं पदं नानुभावकमित्यभियुक्तोक्तेर्लाक्षणिकपदस्य शाब्दप्रतीति करणत्वाभावेन करणत्वबोधकेन मिथ्याशब्देनानिर्वचनीयं वदतीति निर्देशो नापि वाचक त्वपक्षकक्षीकरणसंभवादुक्तकुसृष्ट्यादरणं मूलकृतामयुक्तमेवेत्यपि निरस्तं। देवदत्तो गंगा पदेन तीरं वदति बोधयतीत्यादि प्रामाणिकव्यवहारबलेन लाक्षणिकपदस्यापि करणतायाः सिद्धत्वात्। सिद्धविषयस्य युक्त्यापन्होतुमशक्यत्वात् । वदतिर्वाचकत्व इति । वाचकत्वइत्येतन्न सतिसप्तम्यंतं किंतु विषयसप्तमी । तथाच वदतिर्वाचकत्वरूपविषये प्रयुज्यते वाचकत्ववाचक इति यावदिति व्याख्यानमसत्। एतच्छंकनस्य पूर्वोक्तसाधारण्यदूषणद्वारा शब्दो वदतीति प्रयोगासामंजस्यस्य शब्देन वदतीति प्रयोगसामंजस्यासंपादकतया वाचकत्वस्यैव धातुमुख्यार्थत्वे शब्दस्यैव मुख्यकर्तृत्वप्राप्त्या पूर्वोक्तवैपरीत्यस्यैव संपादक तया च असंगतत्वापत्तेः। न चैतद्वाक्यस्योक्तार्थकत्वे तद्वयस्यैवेयमाशंका।

( टीका ) द्वितीयपक्षेपि मिथ्याशब्द इत्येवोत्तरं । नहि तीरपुरुषादेरवाचकेनापि नदीसिंहादिशब्देन देवदत्तस्तद्वदतीति विना प्रमाणेन कल्प्यते । अपि तु वक्तुराप्तत्वनिश्चये सति वाच्यार्थानुपपत्यादिदर्शनेनैव । नच तथा मिथ्येति शब्दो यस्यासौ मिथ्याशब्दो भ्रांतेरुथ्थितो ऽनिर्वचनीयं तेन वदतीत्यत्र किंचिन्मानमस्ति । अनिर्वचनीयत्वाद्रजतस्य मुख्यार्थानुपपत्तावमुख्या वृत्तिराश्रीयत इति चेन्न । परस्पराश्रयप्रसंगात् । सिद्धे शुक्तिरजतादेरनिर्वचनीयत्वे मिथ्याशब्दस्य तत्परत्वकल्पनं तेनैव चानिर्वचनीयत्वकल्पनमिति । प्रमाणांतरेणानिर्वचनीयताप्रतिपत्तौ तु किमनेन ।

---

तथाहि । ननु पूर्वोक्तरीत्या काष्टं पचतीति प्रयोगवत् एतत्प्रयोगसमर्थनं भवतामयुक्तं । वदतेर्वाचकत्ववाचकतया तन्मुख्यकर्तृभूतमिथ्याशब्दे कर्तृत्वव्यवहारस्य मूलकृत्कृतस्य स्वत एव युक्तत्वादिति तस्याभिप्राय इति वाच्यं । तथात्वे सत्यमित्यादिपरिहारग्रंथासंगतिप्रसंगात् । सत्यमित्यनेन वदतेर्वाचकत्वार्थकत्वस्यस्वयमंगीकृतत्वस्य प्राप्त्या तेन शंकादार्ढ्ये सति अन्यत्रापि तत्प्रयोगप्रदर्शकेणोत्तरवाक्येन तदपरिहारात् । न ह्यन्यत्र प्रयोगो वर्तत इत्येतावता मुख्यार्थप्रयोगो न कर्तव्यो येनेदं संगतं स्यादिति उक्तरीत्यैव व्याख्या युक्ता । ननु भवद्व्याख्याने वदतेर्वाचकत्ववाचकत्वं नास्त्येवेति टीकाकृदभिप्राय इत्यागतं । अन्यथा तेषामुक्तरीत्यनुसरणस्य असंगतत्वापत्तेः । तथाच स न युक्तः । गंगापदं नदीं वक्ति ब्रूते न तीरमिति प्रामाणिकव्यवहारानुरोधेन वचब्रूञादीनां वाचकत्वार्थकत्वस्याविवादतया तत्समानार्थकवदतेरपि तदर्थकत्वप्राप्तेः। गोपदं गां वदति नाश्वमित्यादिव्यवहारस्यापि सत्वात् शक्तिवादादौ गदाधरप्रभृतिभिः उक्तधातूनां शक्त्यर्थकत्वस्यैवाश्रयणादिति चेन्न । चैत्रो वदति मैत्रो वदति वक्ति ब्रूते परे वदंति संगिरंते इत्यादीनां प्रयोगाणां बहुलमुपलंभात् । पुरुषकर्तृकव्यापार एव तद्धातूनां मुख्यार्थः । गोपदं गां ब्रूत इत्यादीनां प्रयोगाणां विरलानां काष्ठं पचतीत्यादिवत् उक्तरीत्योपपन्नत्वान्न शक्तिर्मुख्यार्थः । प्रयोगप्राचुर्यस्यैव तद्वाचकत्वनियामकत्वात् । अन्यथा काष्ठस्यालपादिव्यापाराणामपि पचिमुख्यार्थत्वप्रसंगात् । शक्तिवादे उक्तधातूनां शक्तिमुख्यार्थकत्वं नाश्रितमेव । अवांतरव्यापारः शक्तिरेवेत्यभिप्रायेण यदा तादृशप्रयोगः तद्वाक्यार्थविचारपराण्येव तद्वाक्यानि मुख्यार्थत्वाभिप्रायकत्वे त्वनुपादेयान्येव । ननु शक्तेरवांतरव्यापारत्वे शब्दो वदतीति वाक्येनैव शाब्दबोधानुकूलशक्तिमत्त्वस्य शाब्दमर्यादया लाभात् किमर्थं माग्वाचकत्वपक्षकक्षीकरणसूचनार्थमित्युक्तं । वाचकत्वपक्षलाभायेत्येव वक्तव्यं स्यादिति चेन्न । स्वरूपसच्छक्तेः शब्दानुपयोगितया तद्वत्त्वेन ज्ञानाविषयताया एव धातुबोध्यत्वात् । तद्विषयशक्तेरपि तथात्वेपि व्यापारत्वेनैव धातुबोध्यतया शक्तित्वेनालब्धतया तल्लाभस्यानुमानफलत्वेन पूर्वोक्तिसंभवात् । इत्येवोत्तरमिति । तथात्वोक्तिलाघवेनास्यैवोभयपक्षदूषणपरत्वात्स्वायत्त इति न्यायेन मिथ्याशब्दोऽनिर्वचनीयवाचक इत्यत्र चेत्येव कुतो नोक्तमिति शंकानवकाशः । तेनेति । मिथ्याशब्देनेत्यर्थः। एतेनतृतीयांतमबहुव्रीहिसमासापन्नमेव । मौलं मिथ्याशब्दपदमावर्तत इत्युक्तं भवति । प्रमाणांतरेणेति । वक्ष्यमाणानुमानादिनेत्यर्थः । किमनेन । तदुपजीव्यानिर्वचनीयाविषयकत्वासिद्धिकप्रत्यक्ष-

( टीका ) तच्च निरसिष्यते । मा भूत्प्रत्यक्षेणानिर्वचनीयार्थसिद्धिः । विवादपदं अनिर्वचनीयं बाध्यत्वात् । यन्नानिर्वचनीयं न तद्बाध्यं । यथात्मेत्यनुमानेन भविष्यतीत्यत आह—

[ मूलं ] अनुमानस्य चाप्रसिद्धविशेषणः पक्षः ॥ ८॥

( टीका ) 'च' शब्दः प्रत्यक्षनिराकरणेनानुमाननिराकरणसमुच्चये वर्तते । एतदनुमानप्रवृत्तेः प्रागनिर्वचनीयस्य क्वाप्यप्रसिद्धत्वेनायमनुमानस्य पक्षोऽप्रसिद्धविशेषणो भवति। ननु विशिष्टस्य पक्षत्वं तत्कथमप्रसिद्धविशेषणः पक्ष इति निर्देशः स्यात् । नहि तद्विशिष्टस्य तद्विशेषणं भवति । आत्माश्रयप्रसंगात्। सत्यं । पक्षपदेन तदेकदेशो धर्मी लक्ष्यत इत्यदोषः।

---

प्रमाणस्यैव प्रथममुपन्यासेन किं न किमपि अनिर्वचनीयसिद्धिर्न भवतीति भावः । च शब्दस्य प्रत्यक्षसमुच्चायकत्वे तत्र पक्षाद्यभावात्तत्पक्षस्याप्रसिद्धविशेषणत्वकथनमसंगतमित्यत आह ।चशब्द इति। तथा चानुमानस्य पक्षोऽप्रसिद्धविशेषणश्चेति योजनोक्ता भवति। समुच्चितानि प्रत्यक्षनिराकरणानुमाननिराकरणागमनिराकरणानि । विशेषाभावकूटविधया न चानिर्वचनीये किंचिन्मानमित्युक्तमानसामान्यनिराकरणे हेतवो भवंतीति तेषां परस्परसमुच्चयकथनं युक्तमिति भावः। पक्षपदस्य साध्यधर्मविशिष्टधर्मिपरतया अप्रसिद्धं विशेषणं यस्येति बहुव्रीहिविग्रहघटकयत्पदार्थत्वस्यापि तस्यैव प्राप्त्या यस्य विशेषणमित्युक्तौ विशिष्टसंबंधिविशेषणमित्युक्तं स्यात् । विशिष्टविशेषणत्वं च विशेष्यविशेषणत्वे सति विशेषणविशेषणत्वं तदयुक्तं । आत्माश्रयप्रसंगेन प्रमाणं विना स्ववृत्तित्वनिर्वाह्यस्य स्वस्मिन् स्वविशेषणत्वस्य वक्तुमशक्यत्वादित्याशयेन शंकते । नान्विति । पक्षत्वे पक्षपदबोध्यत्वे पक्षपदस्य सपुत्रस्य गमनामित्यादिवाक्यघटकसपुत्र इत्यादिप्रातिपदिकवद्विशिष्टविषयकबोधजनन एव सामर्थ्यं इत्यर्थः। सर्वसंमतत्वाभिप्रायेणैवं निर्देशः ननु तत्र विवादसूचनाय। धर्मिमात्रशक्तत्वे वन्ह्यनुमितौ ह्रदः पक्ष इति मुख्यार्थकप्रयोगोऽपि प्रामाणिकःस्यात् । हेत्वाभासस्याप्यमुख्यया वृत्त्या हेतुपदव्यवहार्यत्ववत्पक्षाभासस्यापि तस्यामुख्यया वृत्त्या पक्षपदव्यवहार्यत्वमेव। इत्थं च निश्चित इति शेषो वा। अनुक्तस्यापि स्वरविशेषव्यंग्यत्वं वा धर्मशास्त्रस्य प्रामाण्ये इदमित्थमेवेत्यादाविवेति बोध्यं । सत्यमिति । पक्षपदस्य मुख्यवृत्त्या विशिष्टविषयकबोधजननसामर्थ्यं वर्तत इत्येतत्सत्यमित्यर्थः । तर्हि कथमस्योपपत्तिरित्यत आह। पक्षपदेनेति ।तदेकदेश इति। शक्यसंबंधप्रदर्शनाय अदोष इति । नैय्यायिक मते विशिष्टसत्ताभावाभावात्मकविशिष्टसत्तायां गुणवृत्तित्वसत्वेपि गुणे विशिष्टाभावो नास्तीति वाक्यस्य कथमपि प्रामाण्याभावेन तन्निर्वाहाय नञ्पदस्यानुयोगितारूपाभावत्वविशिष्टविषयकबोधजनकत्वमेव नतु कदापि तदुपलक्षितबोधजनकत्वं । तेन तद्वाक्येन नियमेन विशिष्टसत्ताभावाभावत्वावच्छिन्नगुणनिरूपिताधेयता प्रत्याय्यते । सा च बाधितेति तद्वाक्यस्याप्रामाण्यमेव । नैवं प्रकृते। किंतु लक्षणया विशेष्यमात्रबोधकत्वस्यापि विद्यमानत्वादुक्तनिर्देशप्रामाण्यं युक्तमेवेति भावः । विशेषणोपलक्षितान्वयस्य वैयर्थ्यादेकदेशलक्षणैवाश्रिता । ननु कथमिदं विशिष्टे विशेषणासत्वमभ्युपगम्य समाधानं विशिष्टे विशेषण

( टीका ) यद्विशेषणेनायं पक्षस्तदप्रसिद्धमिति वा ।

विशेष्योभयोपादानकं वा विशेष्यमात्रोपादानकं विशेषणतत्संबंधनिमित्तकं वा द्रव्यांतरमिति ते मतं । तत्र विशेषणसत्त्वे कथमात्माश्रयः । किंच कपालसंयुक्ततृणादेस्तदुपादानकघटेपि प्रतीत्या तत्र तत्सत्त्ववत् विशेष्यीभूतचैत्रादिवृत्तेर्दंडस्य विशिष्टसत्वमावश्यकं । किंच रूपविशिष्टचैत्रे रूपाभावे तादृशविशिष्टस्यारूपिद्रव्यत्वेन चाक्षुषानुपपत्तिः। क्रियाविशिष्टस्य क्रियाभावे तस्योत्तरदेशसंयोगाभावात्तत्र प्रतीत्यनुपपत्तिः गगनादिवत् स्थिरत्वापत्तिश्च । प्रमेयत्वविशिष्टस्याप्रमेयत्वे तस्यासत्वापत्तिः । घटाभावविशिष्टस्य घटाभावराहित्ये घटवत्त्वं स्यात् । भावाभावान्यतरत्वानियमात् । दंडविशिष्टे दंडानंगीकारे दंडी न दंडीति दंडिनि दंडो नास्तीति प्रतीत्यापत्तिश्च । तस्मादिदमयुक्तमिति चेन्न । विशिष्टं नाम न विशेष्यादत्यंतभिन्नं किंतु भिन्नाभिन्नं सविशेषाभिन्नं च।तत्र भिन्नाभिन्नस्थले विशेष्यवृत्तिधर्माः सर्वेपि विशिष्टाख्ये परिणामविशेषे प्रमया प्रतीयंत एवेति तत्र विशेष्यवृत्तिधर्माः रूपादयः संत्येवेति न केपि पूर्वोक्तदोषाः । परंतु विशेष्ये अप्रतीयमाना अपि केचिदुत्पत्तिनाशादयो धर्माः प्रतीतिबलादंगीक्रियंते।तदर्थमेव भेदांगीकारः सर्वसंमत एव। परंतु युक्त्यंतरमनुरुध्य नैय्यायिकवैलक्षण्येन विशेषांगीकारवादिभिरपि विशिष्टान्वयस्थले विशेष्यस्य समभिव्याहृतपदार्थे यादृशोऽन्वयः तत्र विशेषणस्याप्यन्वयः तादृश एव प्रतीयत इत्यवश्यमभ्युपेयं । विशेषणे तादृशान्वयस्य बाधग्रहदशायां विशिष्टान्वयस्यानुभवविरुद्धत्वात् । भूमौ दृढतरं किंचिदंशेन निखातदंडग्रहीतृपुरुषे दंडीति विशिष्टावगाहिप्रत्ययकालेपि दंडस्य चलनाभावदशायां पुरुषमात्रचलने दंड्ययं चलति दंडविशिष्टो न चलतीति दंडीसन्न चलतीति व्यवहारात् । तत्र दंडकर्तृकचलनकालीनतदाश्रयकर्तृकचलननिषेधेन तद्वाक्यसामंजस्याच्च । अन्यथा दंडविशिष्टचलनप्रतीत्या तन्निराकरणवाक्यस्याप्रामाण्यं स्यात् । तद्विशिष्टे तन्नास्तीति वाक्यस्याप्ययमेवाभिप्रायः । विशेषणस्य स्वविशिष्टविशेष्यवृत्तित्वं नास्त्येवेति दंडविशिष्टवृत्तित्वनिषेधतात्पर्यकं दंडिनि दंडो नास्तीति वाक्यं प्रमाणमेव । तादृशपरिणामविशेषभूतवस्तुनि तन्निषेधकं तु बाधितत्वादयुक्तमेव । क्वचित्प्रमाणसत्वे तद्विशिष्टेपि तत्सत्ता स्वीक्रियते । यथा प्रमेयत्वविशिष्टे प्रमेयत्वं । घटात्यंताभावविशिष्टे घटात्यंताभावः । एवं चोक्तविशिष्टान्वयपरित्यागेन समाधानं युक्तमेव । केचित्तु अस्य व्यवहारस्य नैय्यायिकमतानुसारेणैव कृतत्वात् तन्मते विशिष्टस्यानातिरिक्तत्वात् तद्रीत्यैवैतच्छंकापरिहारौ । नच तन्मते सिषाधयिषाविरहविशिष्टसिद्ध्यभावत्वत एव पक्षपदार्थत्वान्न साध्यविशिष्टधर्मिणः पक्षपदार्थत्वमिति वाच्यं । संदिग्धसाध्यधर्मवत्वं पक्षत्वमित्यस्य यथाश्रुतार्थमनुसरतां वन्हिसाध्यके न्हृदादेः पक्षपदव्यवहार्यत्वमनभ्युपगच्छतां प्राचां मते साध्यवैशिष्ट्यस्यैव पक्षपदार्थशरीराविनिष्टत्वात् । अत एवानुपदं तथैव वक्ष्यतीत्याहुः। पक्षपदस्य मुख्यार्थत्वमनुसृत्याह । यद्विशेषणेनेति । अनेनाप्रसिद्धं विशेषणं यस्येत्यत्र षष्ठ्यर्थो नाधेयत्वं किंतु निर्वाहकत्वं।विशिष्टनिर्वाहकत्वस्य विशेषणेप्यक्षतत्वात् । नच विशिष्टान्वयस्थले विशेषणान्वयस्य त्वयोक्तत्वात् ।विशेषणे स्वनिर्वाहकत्वं बाधितमिति वाच्यं । विशेषणसंबंधपरिणतद्रव्यात्मकविशिष्टान्वयरूपतदुपलाक्षितान्वयस्यैवांगीकारात् । इति तात्पर्ये तत्पदस्य तादृशान्वयबोधजननांगीकारे बाधकाभावात्। न चाधेयतान्वयपक्षोप्युक्तरीत्या युज्यत इति तत्पक्षे एकदेशलक्ष

( टीका ) अथ कथमप्रसिद्धविशेषणत्वमसाधकत्वे हेतुः । व्याप्तिपक्षधर्मताविरहात् । न ह्यप्रतीतेन कस्यापि व्याप्तिश्शक्यग्रहा । संदिग्धसाध्यधर्मवांश्च पक्षः। न चाप्रसिद्धविशेषणोल्लेखी संदेहो युज्यते । नच वाच्यं केवलव्यतिरेकिणो नाप्रसिद्ध विशेषणत्वं दूषणमिति । तथासत्यन्यत्रासंभवेन तत्कथाया एव वृथात्वापातात् । दूषणत्वोपयुक्तप्रकारानिरासे च केवलव्यतिरेकितामात्रस्यानुपयोगित्वात् ।

णांगीकारो व्यर्थ इति वाच्यं । तत्र पौनरुक्त्यपरपर्यायरूपवैय्यर्थ्यस्योक्तत्वात्।तद्विशेषणे तदाश्रयधर्मिनिरूपिताधेयत्वसंशयस्यानाहार्यस्य कदाप्यनुत्पत्त्या तद्विशेषणे तदाश्रयवृत्तित्वस्याजिज्ञासितत्वेन च फलानुत्पत्तेरानुभाविकत्वेन प्राचां मते जिज्ञासारूपाकांक्षाभावेन नव्य मते समभिव्याहाररूपाकांक्षाभावेन व्युत्पत्तिवादरीत्या कारणांतरकल्पनेन वातस्योपपादितत्वात् ।अत एव घटो घट इति वाक्यस्य कर्म गछति पक्ता पचतीत्यादेश्चाप्रामाण्यमुक्तं । तत्धर्मविशिष्टाख्यवस्तुनिर्वाहकत्वस्य विशेष्ये तत्धर्माश्रयत्वभानमात्रेणालब्धत्वेन तत्र तद्बोधनं युक्तमेवेत्यवधेयं । यद्वा अनेनाप्रसित्धं विशेषणं यत्रेति विग्रहो विवक्षितः । तत्र घटकत्वं सप्तम्यर्थः । विशेषणान्वयरूपविशिष्टान्वयस्वीकारेपि विशेषणस्यापि स्वाविषयकप्रतीत्याविषयतत्कत्वरूपघटकत्वस्याबाधेन क्षति विरहात् । स्वस्मिन् स्वघटितत्वव्यवहारस्याननुभाविकत्वेन घटकत्वस्य भेदघटितत्वे विशेषणान्वय एतत्कल्पे नास्त्येव किंतु तदुपलक्षितान्वय एवेति द्रष्टव्यं । अप्रसित्धविशेषणतायाः दूषणत्वं परिहरिष्यामीत्याशयवान् परं प्रत्येवदूषणताप्रकारं पृच्छति । अथेति । व्याप्तीति । तद्वत्त्वेन ज्ञानविरहादित्यर्थः ।तथाच व्याप्यत्वासित्धिः । पक्षासित्धिश्चेति भावः । नहीति । निरूपकीभूतसाध्याग्रहादिति भावः । साध्यवदन्यावृत्तित्वस्वव्यापकसाध्यकत्वादिरूपव्याप्तेरग्रहादित्यर्थकत्वमात्रं सित्धांतिवचनस्य ज्ञात्वा वक्ष्यमाणरीत्या व्याप्तिसामान्यग्रहाभिप्रायमज्ञात्वा केवलव्यतिरेकिणि तयोरनंगत्वात्तदग्रहोऽकिंचित्कर एव । पक्षतापि सिषाधयिषाविरह सहकृतसाधकमानाभावोतो न तत्रापि साध्यप्रसित्धिरुपयोगिनीत्याशयेन शंकते । केवलव्यतिरेकिण इति । किं केवलव्यतिरेकि सामान्ये दूषणत्वं नास्तीति केवलव्यतिरेकिपदं प्रयुंजानस्य तवाभिप्राय उत केवलव्यतिरेकि विशेष इति । नाद्यः तथोक्तेरेव निर्दलत्वादित्याह । अन्यत्रेति । केवलान्वयिनि अन्वयव्यतिरेकिणि चेत्यर्थः । सपक्षसत्व एव तयोस्तथात्वादिति भावः । तत्कथायाः शास्त्रकृतां तद्व्युत्पादनस्य वृथात्वापातादिति कुत्रापि तदुद्भावनायोगादित्यर्थः । तथाच सामान्यतः केवलव्यतिरेकिण इत्युक्तिरसंगतैवेति हृदयं । द्वितीयं निराचष्टे । दूषणोपयुक्तेति । अनिरासे तन्निरासाभावे तत्संपादकविशेषणदाने अकृते सति ।केवलव्यतिरेकितामात्रस्य तादृशविशेषणसाहित्यरहिते केवलव्यतिरेकित्वस्यानुपयुक्तत्वात् । अस्मदुक्तदूषणपरिहारं प्रतीत्यादिः । तथाच तादृशदूषणपरिहारक्षम विशेषोपपादनपूर्वकमेवाशंका कर्तव्या नतु केवलव्यतिरेकित्वं कथनीयमिति भावः। केचित्तु दूषणोपयुक्तप्रकारस्य अनिरासे सम्यक् निरासे केवलव्यतिरेकितामात्रस्यानुपयोगादित्यर्थः। केवलव्यतिरेकित्वकथनेनापि कथंचिदन्वयव्यतिरेक्यादिहेतुभिन्नहेतुविशेषपरिचयद्वारा कथंचिच्छंकापरिहारसंभवेपि सम्यक् निरासकस्यैव वक्तव्यत्वादिदमयुक्तमेवेति भाव इति व्याचक्रुः । नन्वस्मत्प्रयुक्तकेवलव्यतिरेकिपदं नासत्सपक्षकहेतुत्वावाछिन्नरूढं किंतु केवलव्यतिरेकव्याप्तिमत्वेन गृह्यमाणपरं । तेन व्यतिरेकव्याप्तिबलेनैवानुमितिसंभवादन्वय

(टीका) व्यतिरेकव्याप्तिस्तत्र ग्रहीष्यत इति चेन्न । प्रतियोगिप्रतीतिमंतरेण व्यतिरेकस्यापि प्रत्येतुमशक्यत्वात् । एवं सति केवलव्यतिरेकिभंगः स्यादिति चेन्न । सामान्यप्रसिद्ध्या तत्प्रवृत्तिसंभवात् । तदभावे तद्भंगस्येष्टत्वात् । अभावः केवलव्यतिरेकिणा साध्यः । तथा सत्यभावाभावो भाव एवेति सुशको व्याप्तिग्रह इति कश्चित् । तदसत् ।

---

व्याप्तिग्रहाभावेपि न दोष इत्युपपादितं भवति । पक्षे साध्यस्य निश्चये तस्यैव सपक्षत्वापातेन केवलव्यतिरेकित्वभंगापत्त्या रूढ्यर्थमहिम्ना सिद्ध्यभावरूपपक्षता लक्ष्यते। रूढेरप्यनिवारणात् । अतोऽस्मदुक्तमुपयुक्ततममेवेत्याशयेन शंकते । व्यतिरेकेति । उपलक्षणं चैतत् । पक्षधर्मताग्रहोप्यत्र द्रष्टव्यः । अन्यथा दोषद्वयमध्ये एकस्य दार्ढ्ये तेनैव प्रकृतहेतुदुष्टताप्राप्तौ व्याप्तिग्रहसंपादनस्याकिंचित्करत्वापत्तेः । प्रत्येतुमित्यादि साध्यप्रतियोगिकाभावत्वेन ग्रहीतुमशक्यत्वादित्यर्थः । अयमपि दोषः सामान्यतो व्याप्तिपदप्रयोगेणैव पूर्वमुक्त एव । भवता तु अन्वयव्याप्तेः साध्यघटितत्वस्य झडिति बुद्ध्यारोहेण अन्वयव्याप्तिमात्रप्रस्तावभ्रमेण दोषपरिहारोद्योगः कृत इति भावः । एवं सति केवलव्यतिरेकिण्यपि पक्षातिरिक्ते साध्यप्रतीतिरावश्यकीत्यागतं । अन्यथा साध्यप्रसिद्ध्यावश्यकत्वे तस्यावृत्तित्वेन ग्रहे हेतोः पक्षवृत्तित्वेन तदभावस्य तदभावव्यापकत्वग्रहायोगात् । व्यतिरेकव्याप्तिशरीरनिविष्टसाध्याभावनिष्ठप्रतियोगिवैय्यधिकरण्यग्रहायोगाच्च । साध्यप्रकारकानुमित्यनुपपत्तेश्च । तस्य वृत्तिमत्त्वग्रह आवश्यकश्चेत् पक्षांतर्भावेन तत्सत्वे अनुमानवैयर्थ्यापत्तेः । तथाच नियमेन सपक्षप्राप्त्या केवलव्यतिरेक्युच्छेदप्रसंग इति तटस्थः शंकते । एवं सतीति । वादिशंकया नैतत्फक्किकावतारः । स्वपक्षे दूषणमनुद्धृत्यैव वादिनैतच्छंकनस्यानुचितत्वात् । सामान्येति । नैरात्म्यं किंचिन्निष्ठाभावप्रतियोगिव्यतिरेकिधर्मत्वादित्याद्यनुमानादिना सामान्यप्रसिद्ध्येत्यर्थः । सामान्यप्रसिद्धिर्नाम यावंत उभयावृत्तिधर्माः तत्तदवच्छिन्नधर्मिकतत्तच्छंकायाविरोधिज्ञानं । तत्प्रवृत्तीति । व्याप्त्यादिज्ञानरूपानुमानप्रवृत्तीत्यर्थः । प्रतियोगितावच्छेदकविशिष्टप्रतियोगिग्रहमात्रस्याभावबुद्धावपेक्षितत्वेन व्यक्तिविशिष्टवृत्तित्वेन तन्निश्चयस्यानपेक्षितत्वादिति भावः । तथाच स्वविशेषकसाध्याभावग्रहविरोधिग्रहविषयस्यैव सपक्षत्वेन तदभावान्न केवलव्यतिरेकिविलय इति भावः । केवलव्यतिरेकी भावसाध्यकाभावसाध्यकभेदेन द्विविधः । तत्र भावसाध्यकस्थले साध्यप्रसिद्धिं विना कथमपि व्याप्तिग्रहो न घटत इति तत्रावश्यकी साध्यप्रसिद्धेर्दूषणता। अभावसाध्यकस्थले स्वभावाभावरूपभावव्यापकत्वेन गृहीताभावप्रतियोगिहेतुमत्ताज्ञानान्मुख्यविशेष्यीभूतसाध्यविधेयकानुमितिरेव जायते । अत एवेतरत्वव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती पृथिवीति परामर्शादिना पृथिव्यामितरभेद इत्याद्यनुमितिस्तांत्रिकैरभ्युपगता । एवं च प्रकृते सदसद्वैलक्षण्यरूपानिर्वचनीयत्वस्याभावत्वात्तत्साध्यकस्थले तदभावस्य सत्वासत्वरूपप्रतियोगितावच्छेदकस्वरूपतया तद्व्यापकत्वेन गृहीताभावप्रतियोगिबाध्यत्वावगाहिपरामर्शाद्भिमतेऽनिर्वचनीयत्वमित्येवानुमितिः स्यात्तावता क्षत्यभावादिति वदतः कस्यचिन्मतमुत्थापयति । अभाव इति । यत्रेति शेषः । तथा सतीति । तत्रेत्यादि तादृशस्थल इत्यर्थः । तथा सति अभावस्य साध्यत्वे सतीत्यर्थः । अभावाभाव इति। साध्यात्मकाभावस्याभाव इत्यर्थः । भाव एवेति । साध्यीभूताभावीयप्रतियोगितत्वावच्छेदका-

( टीका ) अभावाभावस्य भावत्वेऽपि प्रतिषेधाकारबुद्धेरानिवारणात् ।

न्यतररूपः साध्याघटितमूर्तिक इत्यर्थः । नतु भावात्मक इति यताश्रुतोर्थः । तथात्वे ध्वंस ( व्याप्यतातादात्म्येन ) व्यापकीभूताभावप्रतियोगिसामान्यत्वादिलिंगेन सामान्ये ध्वंसभेदादिसिद्धेस्तादृशस्थलासंग्रहकतया न्यूनतापत्तेः । इदानीं साध्यानुपस्थितिकाले अनुमितिसामग्रीनिर्वाहमात्रस्य कर्तव्यतया साध्याभावस्य भावरूपत्वनिर्भरे बीजाभावाच्च। अभावाभावस्येति । भावत्वेपि भेदात्यंताभावरूपसाध्यवैलक्षण्यानुरोधात् यथायोगं प्रतियोगितावच्छेदकप्रतियोग्यन्यतरात्मकत्वे अंगीकृतेपि अपिशब्दो वक्ष्यमाणार्थे युक्तिसूचनार्थः । तत्प्रकारश्चानुपदमेव व्यक्तीभविष्यति । प्रतिषेधाकारबुध्देः साध्याभावत्वेन प्रतियोगितदवच्छेदकत्वावगाहिपरामर्शस्य अनिवारणात् । तत्साध्यकतल्लिंगकान्वयिपरामर्शानधीनानुमितिसामान्यसामग्रीघटकताया इत्यादिः । अनिवारणात्। वारणस्य कर्तुमशक्यत्वात्। अयं भावः। अभावसाध्यकस्थले स्वाभावरूपस्य प्रतियोगिनस्तत्वावच्छेदकस्य वा स्वाभावत्वेनैवावगाहिपरामर्शस्यैव कारणताऽवश्यमभ्युपेया। ननु प्रतियोग्यादेः तदन्यरूपेणावगाहिनः येषां मते अभावाभावस्य न भावात्मकत्वं किं तु प्रतियोगिसम नियताभावांतरत्वमेव। तन्मते भवदुक्तपरामर्शस्य साध्यीयव्यतिरेकव्याप्त्यवगाहित्वाभावेन तेनानुमित्यजननस्यानुभवसिध्दतया येषां द्वितीयाभावस्य प्रतियोगिस्वरूपत्वं तन्मतेपि तथैवांगीकर्तव्यं। अनुभवकलहायोगात्। तथा चोक्तपरमर्शस्य कारणत्वायोगात्तल्लिंगानुमितिसामान्येपि प्रतिषेधाकारबुध्देरावश्यकत्वमिति। नन्वेतद्युक्तं। येषां मते द्वितियाभावस्य प्रतियोगिस्वरूपत्वं, तन्मते प्रतिषेधानाकारपरामर्शादनुमितेरानुभाविकतया द्वितीयाभावस्य प्रतियोगिस्वरूपत्वानंगीकर्तृभिरप्यनुमितिस्तादृशपरामर्शादंगीकार्या। अन्यथा ऽनुभववैषम्यायोगादिति ममापि वक्तुं शक्यत्वादित्यत्रापीदमेवोत्तरमभावाभावस्य भावात्मकत्वेपीति। तन्मतेऽपीत्यर्थः। तदन्यमतसमुच्चयेअपिशब्दः। प्रतिषेधाकारबुध्धिरित्यस्योक्त एवार्थः। अनिवारणात् अपरित्यागात्। अनुमित्युपधायकत्वस्येत्यादिः। अयमाशयः। अभावाभावस्य भावत्वमतेपि तदतिरिक्ततामत इव प्रतिषेधाकारपरामर्शस्य फलोपधायकत्वं स्वीकृतमेव। तथाच मतद्वयसिध्दत्वादयमनुभवो निर्विवाद इति तादृशपरामर्शस्यैव सर्वत्र फलजनकत्वमावश्यकं लाघवात्। यथा साध्ये केवलान्वयित्वग्रहकालीनानुमित्यनुरोधात् व्यापकताज्ञानकारणत्वस्यावश्यकत्वे साध्याभाववद्वृत्तित्वाद्युपस्थितिकालेपि हेतुव्यापकत्वादिज्ञानांतरकल्पनेनैवानुमितिः स्वीक्रियते। यत्र हेतुव्यापकत्वघटितविषयकज्ञानाभाव अनुभवसिध्दस्तत्रानुमितिर्न स्वीक्रियत एव। प्रवृत्यादिकार्यस्यानुभवसिध्दत्वे विशेषदर्शनाधीनमानसेनैव तन्निर्वाहात्। अन्यथा साध्याभावघटितज्ञानस्यापि कारणत्वे भिन्नविषयकप्रत्यक्षादिप्रतिबंधकतानां तादृशपरामर्शघटितसामग्र्याः कल्पने ऽतिगौरवापत्तेः। साध्याभाववद्वृत्तित्वज्ञानकाले व्यापकताज्ञानकल्पनं तु फलमुख गौरवरूपत्वान्नदोषावहं। अन्यथा ज्ञानद्वयोत्तरं विशिष्टज्ञानकल्पने गौरवप्रसंगेन विशिष्टज्ञानत्वेन हेतुत्वासिध्द्या मीमांसका एव विजयेरन्निति तत्सर्वमप्यविशिष्टं। प्रकृतेपीति प्रकृते तथाकल्प्यते । न चेतरत्वव्यापकीभूताभावप्रतियोगीति परामर्शकाले साध्यानुपस्थितेरानुभाविकतया तत्काले प्रतिषेधाकारपरामर्शकल्पनाया बाधितत्वेनागत्योक्तपरामर्शकारणताया आवश्यकतया फलमुखत्वेनोक्तसर्वगौरवमदोषमेवेति वाच्यं । तादृशपरामर्शकाले साध्यानुपस्थितिदशायामुक्तानुमित्यनुभवस्यैवाभावात् । नच तादृशानु-

नापि निर्दोषत्वस्य भगवल्लक्षणत्वानुपपत्तिः । स्ववृत्तिदोषाभाववत्त्वस्य भगवल्लक्षणत्वाभ्युपगमात् । अत एव मंदारमंजर्यां स्वप्रागभावाप्रतियोगित्वमनादित्वमिति परिष्कृतं । ननु स्वशब्दस्य समभिव्याहृतपरत्वेनेश्वरलक्षणवाक्यस्थस्वशब्देनेश्वरस्य बोधनेपीश्वरवृत्तिदोषाभावस्यैव लक्षणत्वप्राप्त्या तस्य जीवेऽतिव्याप्तिर्दुर्वारैवेति चेन्न । मंदारमंजर्युक्तलक्षणस्याप्येवमेव प्रत्याख्यानप्रसंगात् । तत्रापि स्वशब्देनाऽनादिबोधनेप्यनादिप्रतियोगिकप्रागभावप्रतियोगित्वाभावस्य वाऽनादिनिष्ठं यत्प्रागभावप्रतियोगित्वं तदभावस्य वा लक्षणत्वेन प्राप्ततया तस्य सादिष्वतिव्याप्तेर्दुर्वारत्वात् । स्वप्रागभावप्रतियोगित्वाभाववदिदमिति वाक्यजन्यप्रमाविषयीभूतं यद्विशिष्टं तस्य तादात्म्येन लक्षणत्वं तद्वाक्याभिप्रेतमिति चेद्त्रापि स्ववृत्तिदोषाभाववानयमिति वाक्यजन्यप्रमाविषयीभूतविशिष्टस्यैव तादात्म्येन लक्षणत्वाभ्युपगमान्नोक्तदोषः । नच दोषाभाववदिति वाक्यस्योभयाभावादिबोधकत्वस्यापि संभवेन तादृशप्रमाविषयविशिष्टो जीवोपि भवतीति वाच्यं । दोषत्वावच्छिन्नप्रकारकग्रहविरोधित्वेन प्रमाया विशेषणीयत्वात् । उभयाभावादिग्रहस्याविरोधित्वात् । अत्र दोषो नास्तीति प्रमाव्यवहितोत्तरक्षणोत्पन्ना या दोषाभाववानयमितिवाक्याभिलाप्यप्रमा तद्विषयीभूतविशिष्टस्य लक्षणत्वे तात्पर्याद्वा न कश्चिद्दोषः । अनादित्वलक्षणमप्येवमेव परिष्कर्तव्यमन्यथोक्तोभयाभावप्रमामादायागतेः । केचित्तु दोषो नास्तीति प्रमीयाभावनिष्ठविशेष्यतानिरूपितप्रतियोगितासंसर्गावच्छिन्नप्रकारतानिरूपिताधेयतासंसर्गावच्छिन्नप्रकारतावत्वमेव निर्दोषत्वमभिप्रेतं । ईश्वरे दोषो नास्तीति प्रमीयतादृशप्रकारतामादायेश्वरे लक्षणसमन्वयः । प्रतियोगितया भासमानदोषसंबंधवत्तया भासमानस्य तादृशसंसृष्टरूपेणासत्त्वेपि शुत्धस्याप्यग्रे भानस्य व्यवस्थापनीयतया तस्यापि भानाभ्युपगमात् । तदनंगीकारे तु तादृशप्रकारतानिर्वाहकविषयताश्रयत्वमेव लक्षणमस्तु । पूर्वमीश्वरोपस्थितिं विनोत्तरज्ञाने तादृशप्रकारतायाः प्रतियोगिसंसृष्टतया भासमाने ऽसत्यनिर्वाहात् । प्रतीतिबलादेव पूर्वोपस्थितीयेश्वरविषयतायास्तादृशप्रकारताप्रयोजकत्वाभ्युपगमात् । जीवे दोषो नास्तीति धियः प्रमात्वाभावादेव तत्रोक्तरीत्या लक्षणागमनात् । एवमनादिलक्षणत्वस्यापि स्वनिष्ठं यत्प्रागभावप्रतियोगित्वं तदभाव इत्यर्थकत्वे उक्तरीत्यैव परिष्कारः । स्वस्य यः प्रागभाव इत्यादिरीत्यार्थकरणे तु तादृशाभावविषयतानिरूपितप्रतियोगितासंसर्गावच्छिन्नप्रकारतानिरूपितप्रागभावप्रकारतानिरूपितप्रकारता तत्प्रयोजकविषयताश्रयत्वमिति रीत्या परिष्कर्तव्यं । प्रतियोगिकोटौ भासमानस्य सर्वस्यासत्वात्कथं प्रकारता प्रागभावीया भवतीत्याशंका तु तच्छब्दोल्लिखादिप्रयोजकत्वमेव तथात्वमित्यग्रे वक्ष्यमाणदिशा वारणीया । एवमन्यत्रापि द्रष्टव्यमित्याहुः । एवं नापि घटवति भूतले अत्र घटो नास्तीति वाक्यस्य प्रामाण्यं । तद्वाक्येन तद्भूतलसंसृष्टघटप्रतियोगिकात्यंताभावबोधस्य व्यवस्थापितत्वेन घटाधिकरणसंसृष्टघटप्रतियोगिकत्वस्य तद्वाक्येनात्यंताभावे बोधनीयस्य बाधितत्वात् । नापि घटाभाववदिदमिति वाक्यस्य प्रामाण्योपपादनं युक्तं । उभयाभावादिबोधतात्पर्यकतादृशवाक्यप्रामाण्यस्य त्वयांगीकृतत्वेन ममापीष्टत्वात् । सामान्याभावबोधतात्पर्यस्थले समभिव्याहृताधिकरणसंसृष्टघटादौ लाक्षणिकत्वस्य घटादिपदानां पूर्वमुक्तत्वात्तादृशवाक्यस्याप्युक्तरीत्या बाधितार्थकत्वात् । निरनिष्टो निरवद्य इत्यादिवाक्यानां जीवविषयकतया प्रामाण्यं स्यादित्यप्यनेनैव निरस्तं । तद्वाक्यस्य जीवविषयकत्वे जीववृत्तिदोषाभाववत्वस्यैव जीवे बोधकतया एव बलादापत्त्या तस्य बाधितत्वात् । नच निरनिष्ट इत्यादि वाक्यबोध्यो योऽ

भावस्तद्वान् जीव इति वाक्यस्य प्रामाण्यं स्यात् । तद्वाक्यबोध्यस्येश्वरवृत्तिदोषप्रतियोगिकाभावस्य जीवेपि सत्वादिति वाच्यं । तस्य केवलान्वयित्ववादिनामिष्टत्वात् । अन्यथा केवलान्वयित्वोक्तेरेवासंगतिप्रसंगात् । एवं घटवति भूतले घटाभावो नास्तीति वाक्यमपि प्रमाणं भवत्येव । घटपदस्य तद्भूतलसंसृष्टघटपरतया अत्र घटाभाव इत्यप्रमाणवाक्यानुसारेण क्लृप्ततया अत्र घटाभावो नास्तीति वाक्येनापि एतद्भूतलसंसृष्टो य एतद्भूतलसंसृष्टघटप्रतियोगिकोऽभावस्तदत्यंताभाव इति बोधो जायते । स च प्रमैव । यत्र भूतले घटोस्ति तद्भूतलसंसृष्टघटप्रतियोगिकात्यंताभावस्यासत्वेनैतद्भूतलसंसृष्टस्य तस्य सुतरामसत्वेन तत्प्रतियोगिकात्यंताभावस्य तद्बोधविषयस्य सत्वात् । भूतलांतरसंसृष्टघटप्रतियोगिकात्यंताभावरूपकेवलान्वयिवस्तुबोधकतत्पदघटितमत्र स नास्तीति वाक्यमप्रमाणमेव । एतद्भूतलवृत्तित्वविशिष्टतदभावव्यक्तेः सत्वेन तदत्यंताभावस्य बाधितत्वात् । एवं भावाभावयोः परस्परविरहात्मकत्वोक्तिरपि मतांतररीत्या । स्वमते तु अत्र घटो नास्तीति प्रतीत्युत्तरं यद्घटाभाववदिति यथार्थज्ञानं तद्विषयीभूतं यद्विशिष्टं तद्व्याप्यत्वं घटाभावस्य घटविरहरूपत्वं । एवमत्र घटाभावो नास्तीत्यादिरीत्या घटस्य घटाभावविरहरूपत्वं व्याप्यता च नञुल्लेख्यस्वप्रमोत्तरप्रमाविषयतया बोध्यातो न तस्य केवलान्वयित्वेपि व्याप्यताभंगः । एवं क्रमेण तत्पारिभाषिकमेव । यद्वा स्वप्रधानकारोपविषयप्रतियोगिकत्वमभावस्य भावविरहात्मकत्वं स्वविषयताप्रयोज्यप्रतियोगितासंसर्गावच्छिन्नप्रकारतानिरूपितप्रमीयविषयताश्रयत्वे पर्यवसितमभावे । भावे तु तादृशप्रतियोगिप्रकारताप्रयोजकविषयताश्रयत्वमिति रीत्या पारिभाषिकं । प्रागभावादिस्थले प्रतियोगिनः सत्वादेव प्रतियोगिविषयता अभावप्रमीयप्रतियोगिप्रकारताप्रयोजिका । अत्यंताभावस्थले तु सत्यभूतप्रधानविषयतैव केचिदित्युक्तमतरीत्या प्रयोजिका । तत्र घटत्वरूपसामान्यधर्मावच्छिन्नविषयता प्रयोजिका चेत् सामान्यप्रधानकोऽभावः सामान्याभावपदव्यवहार्यः । विशेषधर्मावच्छिन्नप्रधानकस्तु विशेषाभावो भवतीति तद्व्यवस्थापि घटते । शशे विषाणं नास्तीति प्रतीतिसित्धोऽभावो विषाणप्रधानकः । सर्वत्र शशविषाणं नास्तीति प्रतीतिसित्धोऽभावः शशविषाणप्रधानक एव । असतोपि तादृशविषयताश्रयत्वरूपं प्रकृताभिमतप्रधानत्वं युक्तं । भावाभावयोरुक्तविरहात्मकत्वं भावाभावबोधकवाक्यप्रामाण्यादौ कथंचिदुपयुज्यत इति तदुक्तिरपि सार्थकैवमन्यदपि ऊह्यमित्यलं विस्तरेण । वंशपल्लीस्थाचार्यास्तु निर्दोषत्वं दोषारोपपूर्वकप्रतीतिविषयाभाववत्वमिति परिष्कृत्य प्रतियोग्यारोपे यत्प्रधानं तेनापि साकमसत्प्रतियोगिकाभावस्यापि विरोधमंगीकृत्य जीवे ऽतिव्याप्तिं परिहृतवंतः । तेषां मते सर्वेषामत्यंताभावानामसत्प्रतियोगिकत्वाविशेषेपि घटवति भूतले घटो नास्ति घटाभाववदिदमिति वाक्याप्रामाण्यादिव्यवस्थाबलात् सत्प्रधानकोऽभावो व्यतिरेकी प्रधानभूतसद्विरोधी असत्प्रधानकस्तु केवलान्वयी । तरंगिण्युक्तसत्वासत्वयोः परस्परविरहात्मकत्वपरिष्कारोप्येतन्मतरीत्या निर्वाह्यः । एवमप्रामाणिकप्रतियोगिकाभावनियमे एवमन्येपि क्षुद्रोपद्रवाः सूक्ष्ममतिभिः परिहरणीया इत्यलमिति वदंति । सत्यनाथश्रीचरणाः पुनरभिनवतांडवादौ प्रामाणिकप्रतियोगिकमप्यत्यंताभावं सित्धांते व्यवस्थापयंतस्तन्नियमं तत्यजुः । तन्मते सर्वापि व्यवस्था सुलभैव । व्यवस्थापनप्रकारस्तत्कृतग्रंथ एवानुसंधेयः । ग्रंथगौरवभयान्नेह प्रपंच्यत इति । नन्वसतो ज्ञानविषयत्वात्कथमुक्तरूपमपि प्रतियोगित्वं तस्येत्यत आह । असतोपीति । उपपादयिष्याम इति । असतः प्रतीतिं विनेत्यत्रेत्यर्थः ।

( टीका ) ननु वदतिरत्र यदि वदनक्रियावाची तदा शब्दस्य कर्मतैव । अथ शाब्दप्रतीतिवाची तदा करणतैव । तत्कथं शब्दो वदतीति व्यपदेशः । इत्थं अवांतरव्यापारवतो हि कारणस्य करणत्वं । अन्यथाऽतिप्रसंगात् । तत्र स्वक्रियां प्रति सर्वस्य प्राधान्येन कर्तृत्वात्करणेपि शब्दे तद्विवक्षया वदतीति व्यपदेशो युज्यते । प्रधानाक्रियां प्रति करणत्वमुल्लंघ्य किमवांतरव्यापारे कर्तृत्वं विवक्षत इति चेत् । प्राधान्यानिर्देशेन वाचकत्वपक्षकक्षीकरणसूचनार्थं ।

---

वदतिरिति । वदधातुरित्यर्थः । वदनक्रिया उच्चारणरूपक्रिया । कर्मतैवेति । शब्दमुच्चारयति वदतीति प्रयोगादिति भावः । शाब्दप्रतीतिवाचीति । तदनुकूलव्यापाररूपतद्घटितार्थवाचीत्यर्थः। करणतैवेति । विक्लृत्यनुकूलव्यापाररूपपाके काष्ठानां करणत्वेन काष्ठैः पचतीतिवत् मिथ्याशब्दे नानिर्वचनीयं वदतीति प्रयोगः स्यादिति भावः। दृष्टांते दार्ष्टांतिके च धात्वर्थव्यापारानिरूपित करणत्वं काष्ठशब्दनिष्ठं तन्निष्पाद्यनिष्पादकत्वरूपं पारिभाषिकमेव । धात्वर्थकोटिप्रविष्ट-विक्लृतिप्रतीत्यादिरूपं फलान्वितं मुख्यमेव वा द्रष्टव्यं । तत्कथमिति । शब्दे कर्तृत्वस्य सर्वथाऽयोगादिति भावः । अवांतरेति । उर्ध्वाधोदेशसंयोगादिरूपावांतरव्यापारविशिष्टस्यैव कुठारादेश्छिदाकरणत्वस्य दृष्टत्वादित्यर्थः। अन्यथेति। प्रागभावेन छिनत्तीति प्रसंगादित्यर्थः प्राधान्येन । आश्रयत्वेन । इदं कर्तृत्वोपपादकं कर्तृत्वात् प्रकृतधात्वर्थकर्तृत्वात् । तद्विविक्षयेति । शब्दनिष्ठशक्तिज्ञानविषयत्वादिव्यापारविवक्षयेत्यर्थः। युज्यत इति । यथा विक्लृत्यनुकूलचैत्रादिनिष्ठव्यापारो यदि धात्वर्थस्तदा तत्र काष्ठानामुक्तरीत्या करणत्वात्काष्ठैः पचतीति प्रयोगः। यदा तु काष्ठनिष्ठक्षिप्रप्रज्वलनरूपव्यापारो यदि धात्वर्थस्तदा तदाश्रयत्वेन कर्तृत्वात् काष्ठं पचतीति प्रयोगः । तथा शाब्दप्रतीत्यनुकूलचैत्रनिष्ठशब्दोच्चारणादिरूपवदधात्वर्थव्यापार-निरूपितकरणतावतः शब्दस्यापि तादृशप्रतीत्यनुकूलव्यापारभूतस्य शक्तिमत्वादिना शीघ्र स्मृतिविषयत्वादेराश्रयतया कर्तृत्वात् शब्दो वदतीति व्यवहारो युज्यत इत्यर्थः । । वाचकत्वपक्षेति । मिथ्याशब्दस्यानिर्वचनीयवाचकत्वरूपप्राग्विकल्पितकल्पमंगीकृत्य पूर्वपक्षिणः प्रत्यवस्थानसूचनार्थमित्यर्थः। शक्तिस्मृतिविषयत्वादेर्व्यापारत्वेनैव धात्वर्थतया कथमनेन वाचकत्वपक्षावलंबनमेवेदानीं पूर्वपक्षिण इति ज्ञातुं शक्यमित्यतः । प्राधान्यनिर्देशेनेति । अनुमेयत्वरूपज्ञाप्यत्वमित्थंभूतलक्षणतृतीयार्थभूतं कक्षीकरणान्वयि। यद्वा तृतीयार्थतालिंगकत्वमनुमित्यनुकूलव्यापाररूपसूचनपदार्थघटकानुमितावन्वेति । व्यापारश्च मानसः विमर्शात्मकः । तन्निर्वाहकश्चायं व्यपदेश इति भावः । यथा चैत्रः पचतीति विहाय काष्ठं पचतीति केनाचिदभिहिते श्रोतुर्विमर्शो जायते । अयं मुख्यकर्तृव्यापारतात्पर्यं विहाय किमर्थममुख्यकरणादिनिष्ठव्यापारतात्पर्येण धातुं प्रयुंक्त इति। ततः अयं काष्ठनिष्ठो यः प्रकृतविक्लृत्यनुकूलोतिशयस्तद्बोधतात्पर्यवान् पाकमुख्यकर्तृचैत्रतुल्यतया प्राधान्येन तन्निर्देशकर्तृत्वात् । शरवृत्त्यतिशयबोधतात्पर्येण हंता रामशर इत्यादिवाक्यप्रयोक्तृवत् । यो यादृशफलमुख्यकर्तृतुल्यतया कर्तृत्वेन तदवांतरकारणनिर्देशकर्ता प्रेक्षावान् स तन्निष्ठप्रकृतफलानुकूलातिशयबोधतात्पर्यवानिति सामान्यमुखी व्याप्तिः । तादृशातिशयः कीदृशः स्यादिति विमर्शे अन्यस्यासंभवात् क्षिप्रप्रज्वलनादिकमेव स इति निश्चि-

( टीका ) मिथ्याशब्देनानिर्वचनीयं देवदत्तो वदतीत्यस्य वाचकावाचकपक्षसाधारण्यात्। वदतिर्वाचकत्वे प्रयुज्यत इति चेत्सत्यं। नतु तन्नियमः। शाब्दप्रतीतिमात्रेपि प्रयोगदर्शनात्।

---

नोति। तद्वत्प्रकृतेपि। शाब्दप्रतीतिरूपफलं प्रति मुख्यतया निर्वाहकवाक्यप्रयोक्तृतुल्यतया मिथ्याशब्दस्य कर्तृत्वेन निर्देशकर्तृत्वादयं पूर्वपक्षो मिथ्याशब्दनिष्ठानिर्वचनीयशाब्दबोधोपयिकाकिंचिदतिशयबोधतात्पर्यवानिति निश्चयो जायते। ततः तादृशातिशयोऽतद्वाचकत्वमेव भवेत्। लक्षणादीनामनुपपत्तिज्ञानादिविलंबितोपस्थितिकानामतिशयरूपत्वासंभवात्। शक्तेरवश्यं प्राथमिकग्रहविषयत्वेन तत्संभवादिति निश्चयो जायत इति क्रमेण प्राधान्यानिर्देशस्य वाचकपक्षांगीकाररूपकक्षीकरणज्ञापकत्वं तदनुमितौ लिंगत्वं च निर्वहतीति भावः। अंगीकारोपि तद्बोधतात्पर्यमेवेति नोक्तविरोधः। अनुमित्यन्वयपक्षे करण तृतीयैव। धूमेन वन्ह्यनुमानाय यतत इतिवदिति द्रष्टव्यं। मिथ्याशब्देनेत्युक्तौ वाचकत्वस्यैव कुतो विशिष्य न लाभ इत्यत आह। मिथ्याशब्देनेति। साधारण्यादिति। कर्तृत्वेन निर्देशाभावे उक्तरीत्या विमर्शद्वारानुमितिर्नैव जायते। अनुमितावुक्तलिंगास्फूर्तेः विमर्शबीजाभावाच्च। शाब्दप्रतीतिकरणत्वं तु लाक्षणिकालाक्षणिकपदसाधारणं। तेन च न शब्दस्य वाचकत्वसिद्धिः। तत्प्रयोगेण च प्रयोक्तुर्न वाचकत्वपक्षाभिप्रायत्वासिद्धिरिति भावः। ननु तत्पदस्य तद्वाचकत्वे सति घटपदेन घटं वदतीति प्रयोगात् घटे घटपदवाच्यत्वसिद्धिवत् मिथ्याशब्देन वदतीत्युक्तावपि तत्कर्मकवदधात्वर्थान्वितस्वकरणत्वलिंगेन मिथ्याशब्दस्यानिर्वचनीयवाचकत्वसिद्धौ तत्प्रयोगाद्वाचकत्वपक्षांगीकारसिद्धिश्च भवतीति गूढाभिसंधिरा शंकते। वदतिरिति। वाचकत्वे वाचकत्वे सति। गूढाभिसंधिरेवाभिप्रायमजानान इव परिहरति। सत्यमिति। वाचकत्वे सति प्रयुज्यतां नाम तावता नास्माकं काचिल्क्षतिरिति भावः। नियमबोधकैवकाराप्रयोगेऽपि सर्वं वाक्यं सावधारणमिति न्यायान्नियमपरमेव मद्वाक्यमतोऽवतारिकोक्तरीत्या ऽस्मदभिमतसिद्धिरिति तदभिप्रायस्फुटीकरणे अस्वाभिप्रायमाविष्करोति। नत्विति। तथाच भवदुक्तनियमासिद्धेरुक्तशंका न युक्तैवेति भावः। कुत इत्यतो व्यभिचारादित्याह। शाब्दप्रतीतिमात्र इति। तत्पदवाच्यविषयकत्वलक्ष्यविषयकत्वादि विशेषमपहाय तज्जन्यशाब्दप्रतीतिसामान्यघटितार्थे वदतेर्भूरिप्रयोगदर्शनादित्यर्थः। मात्रेणेति तृतीयांतपाठे तेन निमित्तेनेत्यर्थः। अध्ययनेन वसतीत्यादौ फलस्यापि निमित्तत्वादिति भावः। एतेन लाक्षणिकं पदं नानुभावकमित्यभियुक्तोक्तेर्लाक्षणिकपदस्य शाब्दप्रतीति करणत्वाभावेन करणत्वबोधकेन मिथ्याशब्देनानिर्वचनीयं वदतीति निर्देशो नापि वाचक त्वपक्षकक्षीकरणसंभवादुक्तकुसृष्ट्यादरणं मूलकृतामयुक्तमेवेत्यपि निरस्तं। देवदत्तो गंगा पदेन तीरं वदति बोधयतीत्यादि प्रामाणिकव्यवहारबलेन लाक्षणिकपदस्यापि करणतायाः सिद्धत्वात्। सिद्धविषयस्य युक्त्यापन्होतुमशक्यत्वात्। वदतिर्वाचकत्व इति। वाचकत्वइत्येतन्न सतिसप्तम्यंतं किंतु विषयसप्तमी। तथाच वदतिर्वाचकत्वरूपविषये प्रयुज्यते वाचकत्ववाचक इति यावदिति व्याख्यानमसत्। एतच्छंकनस्य पूर्वोक्तसाधारण्यदूषणद्वारा शब्दो वदतीति प्रयोगासामंजस्यस्य शब्देन वदतीति प्रयोगसामंजस्यासंपादकतया वाचकत्वस्यैव धातुमुख्यार्थत्वे शब्दस्यैव मुख्यकर्तृत्वप्राप्त्या पूर्वोक्तवैपरीत्यस्यैव संपादक तया च असंगतत्वापत्तेः। न चैतद्वाक्यस्योक्तार्थकत्वे तदसंगत्यैवैयमाशंका।

(टीका) द्वितीयपक्षेपि मिथ्याशब्द इत्येवोत्तरं । नहि तीरपुरुषादेरवाचकेनापि नदीसिंहादिशब्देन देवदत्तस्तद्वदतीति विना प्रमाणेन कल्प्यते । अपि तु वक्तुराप्तत्वनिश्चये सति वाच्यार्थानुपपत्त्यादिदर्शनेनैव । नच तथा मिथ्येति शब्दो यस्यासौ मिथ्याशब्दो भ्रांतेरुत्थितो ऽनिर्वचनीयं तेन वदतीत्यत्र किंचिन्मानमस्ति । अनिर्वचनीयत्वाद्रजतस्य मुख्यार्थानुपपत्तावमुख्या वृत्तिराश्रीयत इति चेन्न । परस्पराश्रयप्रसंगात् । सिद्धे शुक्तिरजतादेरनिर्वचनीयत्वे मिथ्याशब्दस्य तत्परत्वकल्पनं तेनैव चानिर्वचनीयत्वकल्पनमिति । प्रमाणांतरेणानिर्वचनीयताप्रतिपत्तौ तु किमनेन ।

---

तथाहि । ननु पूर्वोक्तरीत्या काष्ठं पचतीति प्रयोगवत् एतत्प्रयोगसमर्थनं भवतामयुक्तं । वदतेर्वाचकत्ववाचकतया तन्मुख्यकर्तृभूतमिथ्याशब्दे कर्तृत्वव्यवहारस्य मूलकृत्कृतस्य स्वत एव युक्तत्वादिति तस्याभिप्राय इति वाच्यं । तथात्वे सत्यमित्यादिपरिहारग्रंथासंगतिप्रसंगात् । सत्यमित्यनेन वदतेर्वाचकत्वार्थकत्वस्य स्वयमंगीकृतत्वस्य प्राप्त्या तेन शंकादार्ढ्ये सति अन्यत्रापि तत्प्रयोगप्रदर्शकेणोत्तरवाक्येन तदपरिहारात् । न ह्यन्यत्र प्रयोगो वर्तत इत्येतावता मुख्यार्थप्रयोगो न कर्तव्यो येनेदं संगतं स्यादिति उक्तरीत्यैव व्याख्या युक्ता । ननु भवद्व्याख्याने वदतेर्वाचकत्ववाचकत्वं नास्त्येवेति टीकाकृदभिप्राय इत्यागतं । अन्यथा तेषामुक्तरीत्यनुसरणस्य असंगतत्वापत्तेः । तथाच स न युक्तः । गंगापदं नदीं वक्ति ब्रूते न तीरमिति प्रामाणिकव्यवहारानुरोधेन वचब्रूञादीनां वाचकत्वार्थकत्वस्याविवादतया तत्समानार्थकवदतेरपि तदर्थकत्वप्राप्तेः । गोपदं गां वदति नाश्वमित्यादिव्यवहारस्यापि सत्वात् शक्तिवादादौ गदाधरप्रभृतिभिः उक्तधातूनां शक्त्यर्थकत्वस्यैवाश्रयणादिति चेन्न । चैत्रो वदति मैत्रो वदति वक्ति ब्रूते परे वदंति संगिरंते इत्यादीनां प्रयोगाणां बहुलमुपलंभात् । पुरुषकर्तृकव्यापार एव तद्धातूनां मुख्यार्थः । गोपदं गां ब्रूत इत्यादीनां प्रयोगाणां विरलानां काष्ठं पचतीत्यादिवत् उक्तरीत्योपपन्नत्वान्न शक्तिर्मुख्यार्थः । प्रयोगप्राचुर्यस्यैव तद्वाचकत्वनियामकत्वात् । अन्यथा काष्ठस्यालपादिव्यापाराणामपि पचिमुख्यार्थत्वप्रसंगात् । शक्तिवादे उक्तधातूनां शक्तिमुख्यार्थकत्वं नाश्रितमेव । अवांतरव्यापारः शक्तिरेवेत्यभिप्रायेण यदा तादृशप्रयोगः तद्व्याख्यार्थविचारपराण्येव तद्वाक्यानि मुख्यार्थत्वाभिप्रायकत्वे त्वनुपादेयान्येव । ननु शक्तेरवांतरव्यापारत्वे शब्दो वदतीति वाक्येनैव शाब्दबोधानुकूलशक्तिमत्त्वस्य शाब्दमर्यादया लाभात् किमर्थं प्राग्वाचकत्वपक्षकक्षीकरणसूचनार्थमित्युक्तं । वाचकत्वपक्षलाभायेत्येव वक्तव्यं स्यादिति चेन्न । स्वरूपसच्छक्तेः शाब्दानुपयोगितया तद्वत्त्वेन ज्ञानविषयताया एव धातुबोध्यत्वात् । तद्विषयशक्तेरपि तथात्वेपि व्यापारत्वेनैव धातुबोध्यतया शक्तित्वेनालब्धतया तल्लाभस्यानुमानफलत्वेन पूर्वोक्तिसंभवात् । इत्येवोत्तरमिति । तथाचोक्तिलाघवेनास्यैवोभयपक्षदूषणपरत्वात्स्वायत्त इति न्यायेन मिथ्याशब्दोऽनिर्वचनीयवाचक इत्यत्र चेत्येव कुतो नोक्तमिति शंकानवकाशः । तेनेति । मिथ्याशब्देनेत्यर्थः । एतेनतृतीयांतमबहुव्रीहिसमासापन्नमेव । मौलं मिथ्याशब्दपदमावर्तत इत्युक्तं भवति । प्रमाणांतरेणेति । वक्ष्यमाणानुमानादिनेत्यर्थः । किमनेन । तदुपजीव्यानिर्वचनीयविषयकत्वासिद्धिकप्रत्यक्ष-

( टीका ) तच्च निरसिष्यते । मा भूत्प्रत्यक्षेणानिर्वचनीयार्थसिद्धिः । विवादपदं अनिर्वचनीयं बाध्यत्वात् । यन्नानिर्वचनीयं न तद्बाध्यं । यथात्मेत्यनुमानेन भविष्यतीत्यत आह—

[ मूलं ] **अनुमानस्य चाप्रसिद्धविशेषणः पक्षः ॥ ८॥**

( टीका ) 'च' शब्दः प्रत्यक्षनिराकरणेनानुमाननिराकरणसमुच्चये वर्तते । एतदनुमानप्रवृत्तेः प्रागनिर्वचनीयस्य क्वाप्यप्रसिद्धत्वेनायमनुमानस्य पक्षोऽप्रसिद्धविशेषणो भवति। ननु विशिष्टस्य पक्षत्वं तत्कथमप्रसिद्धविशेषणः पक्ष इति निर्देशः स्यात् । नहि तद्विशिष्टस्य तद्विशेषणं भवति । आत्माश्रयप्रसंगात् । सत्यं । पक्षपदेन तदेकदेशो धर्मी लक्ष्यत इत्यदोषः।

---

प्रमाणस्यैव प्रथममुपन्यासेन किं न किमपि अनिर्वचनीयसिद्धिर्न भवतीति भावः । च शब्दस्य प्रत्यक्षसमुच्चायकत्वे तत्र पक्षाद्यभावात्तत्पक्षस्याप्रसिद्धविशेषणत्वकथनमसंगतमित्यत आह । चशब्द इति। तथा चानुमानस्य पक्षोऽप्रसिद्धविशेषणश्चेति योजनोक्ता भवति। समुच्चितानि प्रत्यक्षनिराकरणानुमाननिराकरणागमनिराकरणानि । विशेषाभावकूटविधया न चानिर्वचनीये किंचिन्मानमित्युक्तमानसामान्यनिराकरणे हेतवो भवंतीति तेषां परस्परसमुच्चयकथनं युक्तमिति भावः । पक्षपदस्य साध्यधर्मविशिष्टधर्मिपरतया अप्रसिद्धं विशेषणं यस्येति बहुव्रीहिविग्रहघटकयत्पदार्थत्वस्यापि तस्यैव प्राप्त्या यस्य विशेषणमित्युक्तौ विशिष्टसंबंधिविशेषणमित्युक्तं स्यात् । विशिष्टविशेषणत्वं च विशेष्यविशेषणत्वे सति विशेषणविशेषणत्वं तदयुक्तं । आत्माश्रयप्रसंगेन प्रमाणं विना स्ववृत्तित्वनिर्वाह्यस्य स्वस्मिन् स्वविशेषणत्वस्य वक्तुमशक्यत्वादित्याशयेन शंकते । नन्विति । पक्षत्वे पक्षपदबोध्यत्वे पक्षपदस्य सपुत्रस्य गमनमित्यादिवाक्यघटकसपुत्र इत्यादिप्रातिपदिकवद्विशिष्टविषयकबोधजनन एव सामर्थ्यं इत्यर्थः। सर्वसंमतत्वाभिप्रायेणैवं निर्देशः नतु तत्र विवादसूचनाय। धर्मिमात्रशक्तत्वे वन्ह्यनुमितौ ह्रदः पक्ष इति मुख्यार्थकप्रयोगोपि प्रामाणिकःस्यात् । हेत्वाभासस्याप्यमुख्यया वृत्त्या हेतुपदव्यवहार्यत्ववत्पक्षाभासस्यापि तस्यामुख्यया वृत्त्या पक्षपदव्यवहार्यत्वमेव। इत्थं च निश्चित इति शेषो वा। अनुक्तस्यापि स्वरविशेषव्यंग्यत्वं वा धर्मशास्त्रस्य प्रामाण्ये इदमित्थमेवेत्यादाविवेति बोध्यं । सत्यमिति । पक्षपदस्य मुख्यवृत्त्या विशिष्टविषयकबोधजननसामर्थ्यं वर्तत इत्येतत्सत्यमित्यर्थः । तर्हि कथमस्योपपत्तिरित्यत आह। पक्षपदेनेति । तदेकदेश इति। शक्यसंबंधप्रदर्शनाय अदोष इति । नैय्यायिक मते विशिष्टसत्ताभावाभावात्मकविशिष्टसत्तायां गुणवृत्तित्वसत्वेपि गुणे विशिष्टाभावो नास्तीति वाक्यस्य कथमपि प्रामाण्याभावेन तन्निर्वाहाय नञ्पदस्यानुयोगितारूपाभावत्वविशिष्टविषयकबोधजनकत्वमेव नतु कदापि तदुपलक्षितबोधजनकत्वं । तेन तद्वाक्येन नियमेन विशिष्टसत्ताभावाभावत्वावच्छिन्नगुणनिरूपिताधेयता प्रत्याय्यते । सा च बाधितेति तद्वाक्यस्याप्रामाण्यमेव । नैवं प्रकृते । किंतु लक्षणया विशेष्यमात्रबोधकत्वस्यापि विद्यमानत्वादुक्तनिर्देशप्रामाण्यं युक्तमेवेति भावः । विशेषणोपलक्षितान्वयस्य वैय्यर्थ्यादेकदेशलक्षणैवाश्रिता । ननु कथमिदं विशिष्टे विशेषणासत्वमभ्युपगम्य समाधानं विशिष्टे विशेषण

( टीका ) यद्विशेषणेनायं पक्षस्तदप्रसिद्धमिति वा ।

विशेष्योभयोपादानकं वा विशेष्यमात्रोपादानकं विशेषणतत्संबंधनिमित्तकं वा द्रव्यांतरमिति ते मतं । तत्र विशेषणसत्त्वे कथमात्माश्रयः । किंच कपालसंयुक्ततृणादेस्तदुपादानकघटेपि प्रतीत्या तत्र तत्सत्त्ववत् विशेष्यीभूतचैत्रादिवृत्तेर्दंडस्य विशिष्टसत्वमावश्यकं । किंच रूपविशिष्टचैत्रे रूपाभावे तादृशविशिष्टस्यारूपिद्रव्यत्वेन चाक्षुषानुपपत्तिः। क्रियाविशिष्टस्य क्रियाभावे तस्योत्तरदेशसंयोगाभावात्तत्र प्रतीत्यनुपपत्तिः गगनादिवत् स्थिरत्वापत्तिश्च । प्रमेयत्वविशिष्टस्याप्रमेयत्वे तस्यासत्वापत्तिः । घटाभावविशिष्टस्य घटाभावराहित्ये घटवत्त्वं स्यात् । भावाभावान्यतरत्वनियमात् । दंडविशिष्टे दंडानंगीकारे दंडी न दंडीति दंडिनि दंडो नास्तीति प्रतीत्यापत्तिश्च । तस्मादिदमयुक्तमिति चेन्न । विशिष्टं नाम न विशेष्यादत्यंतभिन्नं किंतु भिन्नाभिन्नं सविशेषाभिन्नं च।तत्र भिन्नाभिन्नस्थले विशेष्यवृत्ति धर्माः सर्वेपि विशिष्टाख्ये परिणामविशेषे प्रमया प्रतीयंत एवेति तत्र विशेष्यवृत्तिधर्माः रूपादयः संत्येवेति न केपि पूर्वोक्तदोषाः । परंतु विशेष्ये अप्रतीयमाना अपि केचिदुत्पत्तिनाशादयो धर्माः प्रतीतिबलादंगीक्रियंते।तदर्थमेव भेदांगीकारः सर्वसंमत एव। परंतु युक्त्यंतरमनुरुध्य नैय्यायिकवैलक्षण्येन विशेषांगीकारवादिभिरपि विशिष्टान्वयस्थले विशेष्यस्य समभिव्याहृतपदार्थे यादृशोऽन्वयः तत्र विशेषणस्याप्यन्वयः तादृश एव प्रतीयत इत्यवश्यमभ्युपेयं । विशेषणे तादृशान्वयस्य बाधग्रहदशायां विशिष्टान्वयस्यानुभवविरुध्दत्वात् । भूमौ दृढतरं किंचिदंशेन निखातदंडग्रहीतृपुरुषे दंडीति विशिष्टावगाहिप्रत्ययकालेपि दंडस्य चलनाभावदशायां पुरुषमात्रचलने दंड्ययं चलति दंडविशिष्टो न चलतीति दंडीसन्न चलतीति व्यवहारात् । तत्र दंडकर्तृकचलनकालीनतदाश्रयकर्तृकचलननिषेधेन तद्वाक्यसामंजस्याच्च । अन्यथा दंडविशिष्टचलनप्रतीत्या तन्निराकरणवाक्यस्याप्रामाण्यं स्यात् । तद्विशिष्टे तन्नास्तीति वाक्यस्याप्ययमेवाभिप्रायः । विशेषणस्य स्वविशिष्टविशेष्यवृत्तित्वं नास्त्येवेति दंडविशिष्टवृत्तित्वनिषेधतात्पर्यकं दंडिनि दंडो नास्तीति वाक्यं प्रमाणमेव । तादृशपरिणामविशेषभूतवस्तुनि तन्निषेधकं तु बाधितत्वादयुक्तमेव । क्वचित्प्रमाणसत्वे तद्विशिष्टेपि तत्सत्ता स्वीक्रियते । यथा प्रमेयत्वविशिष्टे प्रमेयत्वं । घटात्यंताभावविशिष्टे घटात्यंताभावः । एवं चोक्तविशिष्टान्वयपरित्यागेन समाधानं युक्तमेव । केचित्तु अस्य व्यवहारस्य नैय्यायिकमतानुसारेणैव कृतत्वात् तन्मते विशिष्टस्यानातिरिक्तत्वात् तद्रीत्यैवैतच्छंकापरिहारौ । नच तन्मते सिषाधयिषाविरहविशिष्टसिध्यभाववत एव पक्षपदार्थत्वान्न साध्यविशिष्टधर्मिणः पक्षपदार्थत्वमिति वाच्यं । संदिग्धसाध्यधर्मवत्वं पक्षत्वमित्यस्य यथाश्रुतार्थमनुसरतां वन्हिसाध्यके न्हदादेः पक्षपदव्यवहार्यत्वमनभ्युपगच्छतां प्राचां मते साध्यवैशिष्ट्यस्यैव पक्षपदार्थशरीराविनिष्टत्वात् । अत एवानुपदं तथैव वक्ष्यतीत्याहुः। पक्षपदस्य मुख्यार्थत्वमनुसृत्याह ।

यद्विशेषणेनेति । अनेनाप्रसिध्दं विशेषणं यस्येत्यत्र षष्ठ्यर्थो नाधेयत्वं किंतु निर्वाहकत्वं। विशिष्टनिर्वाहकत्वस्य विशेषणेप्यक्षतत्वात् । नच विशिष्टान्वयस्थले विशेषणान्वयस्य त्वयोक्तत्वात् ।विशेषणे स्वनिर्वाहकत्वं बाधितमिति वाच्यं । विशेषणसंबंधपरिणतद्रव्यात्मकविशिष्टान्वयरूपतदुपलक्षितान्वयस्यैवांगीकारात् । सति तात्पर्ये तत्पदस्य तादृशान्वयबोधजननांगीकारे बाधकाभावात्। न चाधेयतान्वयपक्षोप्युक्तरीत्या युज्यत इति तत्पक्षे एकदेशालक्ष

( टीका ) अथ कथमप्रसिद्धविशेषणत्वमसाधकत्वे हेतुः । व्याप्तिपक्षधर्मताविरहात् । न ह्यप्रतीतेन कस्यापि व्याप्तिश्शक्यग्रहा । संदिग्धसाध्यधर्मवांश्च पक्षः। न चाप्रसिद्धविशेषणोल्लेखी संदेहो युज्यते । नच वाच्यं केवलव्यतिरेकिणो नाप्रसिद्ध विशेषणत्वं दूषणमिति । तथासत्यन्यत्रासंभवेन तत्कथाया एव वृथात्वापातात् । दूषणत्वोपयुक्तप्रकारानिरासे च केवलव्यतिरेकितामात्रस्यानुपयोगित्वात् ।

णांगीकारो व्यर्थ इति वाच्यं । तत्र पौनरुक्त्यपरपर्यायरूपवैयर्थ्यस्योक्तत्वात् । तद्विशेषणे तदाश्रयधर्मिनिरूपिताधेयत्वसंशयस्यानाहार्यस्य कदाप्यनुत्पत्त्या तद्विशेषणे तदाश्रयवृत्तित्वस्याजिज्ञासितत्वेन च फलानुत्पत्तेरानुभाविकत्वेन प्राचां मते जिज्ञासारूपाकांक्षाभावेन नव्य मते समभिव्याहाररूपाकांक्षाभावेन व्युत्पत्तिवादरीत्या कारणांतरकल्पनेन वा तस्योपपादितत्वात् । अत एव घटो घट इति वाक्यस्य कर्म गछति पक्ता पचतीत्यादेश्चाप्रामाण्यमुक्तं । तत्धर्मविशिष्टाख्यवस्तुनिर्वाहकत्वस्य विशेष्ये तत्धर्माश्रयत्वभानमात्रेणालब्धत्वेन तत्र तद्बोधनं युक्तमेवेत्यवधेयं । यद्वा अनेनाप्रसित्धं विशेषणं यत्रेति विग्रहो विवक्षितः । तत्र घटकत्वं सप्तम्यर्थः । विशेषणान्वयरूपविशिष्टान्वयस्वीकारेपि विशेषणस्यापि स्वाविषयकप्रतीत्याविषयतत्कत्वरूपघटकत्वस्याबाधेन क्षति विरहात् । स्वस्मिन् स्वघटितत्वव्यवहारस्याननुभाविकत्वेन घटकत्वस्य भेदघटितत्वे विशेषणान्वय एतत्कल्पे नास्त्येव किंतु तदुपलक्षितान्वय एवेति द्रष्टव्यं । अप्रसित्धविशेषणतायाः दूषणत्वं परिहरिष्यामीत्याशयवान् परं प्रत्येवदूषणताप्रकारं पृच्छति । अथेति । व्याप्तीति । तद्वत्त्वेन ज्ञानविरहादित्यर्थः । तथाच व्याप्यत्वासित्धिः । पक्षासित्धिश्चेति भावः । नहीति । निरूपकीभूतसाध्याग्रहादिति भावः । साध्यवदन्यावृत्तित्वस्वव्यापकसाध्यकत्वादिरूपव्याप्तेरग्रहादित्यर्थकत्वमात्रं सित्धांतिवचनस्य ज्ञात्वा वक्ष्यमाणरीत्या व्याप्तिसामान्यग्रहाभिप्रायमज्ञात्वा केवलव्यतिरेकिणि तयोरनंगत्वात्तदग्रहोऽकिंचित्कर एव । पक्षतापि सिषाधयिषाविरह सहकृतसाधकमानाभावोतो न तत्रापि साध्यप्रसित्धिरुपयोगिनीत्याशयेन शंकते । केवलव्यतिरेकिण इति । किं केवलव्यतिरेकि सामान्ये दूषणत्वं नास्तीति केवलव्यतिरेकिपदं प्रयुंजानस्य तवाभिप्राय उत केवलव्यतिरेकि विशेष इति । नाद्यः तथोक्तेरेव निर्दलत्वादित्याह । अन्यत्रेति । केवलान्वयिनि अन्वयव्यतिरेकिणि चेत्यर्थः । सपक्षसत्व एव तयोस्तथात्वादिति भावः । तत्कथायाः शास्त्रकृतां तव्द्युत्पादनस्य वृथात्वापातादिति कुत्रापि तदुद्भावनायोगादित्यर्थः । तथाच सामान्यतः केवलव्यतिरेकिण इत्युक्तिरसंगतैवेति हृदयं । द्वितीयं निराचष्टे । दूषणोपयुक्तेति । अनिरासे तन्निरासाभावे तत्संपादकविशेषणदाने अकृते सति । केवलव्यतिरेकितामात्रस्य तादृशविशेषणसाहित्यरहिते केवलव्यतिरेकित्वस्यानुपयुक्तत्वात् । अस्मदुक्तदूषणपरिहारं प्रतीत्यादिः । तथाच तादृशदूषणपरिहारक्षम विशेषोपपादनपूर्वकमेवाशंका कर्तव्या नतु केवलव्यतिरेकित्वं कथनीयमिति भावः। केचित्तु दूषणोपयुक्तप्रकारस्य अनिरासे सम्यक् निरासे केवलव्यतिरेकितामात्रस्यानुपयोगादित्यर्थः। केवलव्यतिरेकित्वकथनेनापि कथंचिदन्वयव्यतिरेक्यादिहेतुभिन्नहेतुविशेषपरिचयद्वारा कथंचिच्छंकापरिहारसंभवेपि सम्यक् निरासकस्यैव वक्तव्यत्वादिदमयुक्तमेवेति भाव इति व्याचक्रुः । नन्वस्मत्प्रयुक्तकेवलव्यतिरेकिपदं नासत्सपक्षकहेतुत्वावछिन्नरूढं किंतु केवलव्यतिरेकव्याप्तिमत्वेन गृह्यमाणपरं । तेन व्यतिरेकव्याप्तिबलेनैवानुमितिसंभवादन्वय

( टीका ) व्यतिरेकव्याप्तिस्तत्र ग्रहीष्यत इति चेन्न । प्रतियोगिप्रतीतिमंतरेण व्यतिरेकस्यापि प्रत्येतुमशक्यत्वात् । एवं सति केवलव्यतिरेकिभंगः स्यादिति चेन्न । सामान्यप्रसिध्या तत्प्रवृत्तिसंभवात् । तदभावे तद्भंगस्येष्टत्वात् । अभावः केवलव्यतिरेकिणा साध्यः । तथा सत्यभावाभावो भाव एवेति सुशको व्याप्तिग्रह इति कश्चित् । तदसत् ।

---

व्याप्तिग्रहाभावेपि न दोष इत्युपपादितं भवति । पक्षे साध्यस्य निश्चये तस्यैव सपक्षत्वापातेन केवलव्यतिरेकित्वभंगापत्त्या रूढ्यर्थमहिम्ना सिध्यभावरूपपक्षता लक्ष्यते । रूढेरप्यनिवारणात् । अतोऽसदुक्तमुपयुक्ततममेवेत्याशयेन शंकते । व्यतिरेकेति । उपलक्षणं चैतत् । पक्षधर्मताग्रहोऽप्यत्र द्रष्टव्यः । अन्यथा दोषद्वयमध्ये एकस्य दार्ढ्ये तेनैव प्रकृतहेतुदुष्टताप्राप्तौ व्याप्तिग्रहसंपादनस्याकिंचित्करत्वापत्तेः । प्रत्येतुमित्यादि साध्यप्रतियोगिकाभावत्वेन ग्रहीतुमशक्यत्वादित्यर्थः । अयमपि दोषः सामान्यतो व्याप्तिपदप्रयोगेणैव पूर्वमुक्त एव । भवता तु अन्वयव्याप्तेः साध्यघटितत्वस्य झडिति बुध्यारोहेण अन्वयव्याप्तिमात्रप्रस्तावभ्रमेण दोषपरिहारोद्योगः कृत इति भावः । एवं सति केवलव्यतिरेकिण्यपि पक्षातिरिक्ते साध्यप्रतीतिरावश्यकीत्यागतं । अन्यथा साध्यप्रसिध्यावश्यकत्वे तस्यावृत्तित्वेन ग्रहे हेतोः पक्षवृत्तित्वेन तदभावस्य तदभावव्यापकत्वग्रहायोगात् । व्यतिरेकव्याप्तिशरीरनिविष्टसाध्याभावनिष्ठप्रतियोगिवैयधिकरण्यग्रहायोगाच्च । साध्यप्रकारकानुमित्यनुपपत्तेश्च । तस्य वृत्तिमत्त्वग्रह आवश्यकश्चेत् पक्षांतर्भावेन तत्सत्वे अनुमानवैयर्थ्यापत्तेः । तथाच नियमेन सपक्षप्राप्त्या केवलव्यतिरेक्युच्छेदप्रसंग इति तटस्थः शंकते । एवं सतीति । वादिशंकया नैतत्फक्किकावतारः । स्वपक्षे दूषणमनुत्धृत्यैव वादिनैतच्छंकनस्यानुचितत्वात् । सामान्येति । नैरात्म्यं किंचिन्निष्ठाभावप्रतियोगिव्यतिरेकिधर्मत्वादित्याद्यनुमानादिना सामान्यप्रसिध्येत्यर्थः । सामान्यप्रसिद्धिर्नाम यावंत उभयावृत्तिधर्माः तत्तदवच्छिन्नधर्मिकतत्तच्छंशयाविरोधिज्ञानं । तत्प्रवृत्तीति । व्याप्त्यादिज्ञानरूपानुमानप्रवृत्तीत्यर्थः । प्रतियोगितावच्छेदकविशिष्टप्रतियोगिग्रहमात्रस्याभावबुध्यावपेक्षितत्वेन व्यक्तिविशिष्टवृत्तित्वेन तन्निश्चयस्यानपेक्षितत्वादिति भावः । तथाच स्वविशेषकसाध्याभावग्रहाविरोधिग्रहविषयस्यैव सपक्षत्वेन तदभावान्न केवलव्यतिरेकिविलय इति भावः । केवलव्यतिरेकी भावसाध्यकाभावसाध्यकभेदेन द्विविधः । तत्र भावसाध्यकस्थले साध्यप्रसिद्धिं विना कथमपि व्याप्तिग्रहो न घटत इति तत्रावश्यकी साध्यप्रसिद्धेर्दूषणता । अभावसाध्यकस्थले त्वभावाभावरूपभावव्यापकत्वेन गृहीताभावप्रतियोगिहेतुमत्ताज्ञानान्मुख्यविशेष्यीभूतसाध्यविधेयकानुमितिरेव जायते । अत एवेतरत्वव्यापकीभूताभावप्रतियोगिपृथिवीत्ववती पृथिवीति परामर्शादिना पृथिव्यामितरभेद इत्याद्यनुमितिस्तांत्रिकैरभ्युपगता । एवं च प्रकृते सदसद्वैलक्षण्यरूपानिर्वचनीयत्वस्याभावत्वात्तत्साध्यकस्थले तदभावस्य सत्वासत्वरूपप्रतियोगितावच्छेदकस्वरूपतया तद्व्यापकत्वेन गृहीताभावप्रतियोगिबाध्यत्वावगाहिपरामर्शाद्भिमतेऽनिर्वचनीयत्वमित्येवानुमितिः स्यात्तावता क्षत्यभावादिति वदतः कस्यचिन्मतमुत्थापयति । अभाव इति । यत्रेति शेषः । तथा सतीति । तत्रेत्यादि ताहशस्थल इत्यर्थः । तथा सति अभावस्य साध्यत्वे सतीत्यर्थः । अभ वाभाव इति । साध्यात्मकाभावस्याभाव इत्यर्थः । भाव एवेति । साध्यीभूताभावीयप्रतियोगितत्वावच्छेदका-

( टीका ) अभावाभावस्य भावत्वेऽपि प्रतिषेधाकारबुद्धेरनिवारणात् ।

---

न्यतररूपः साध्याघटितमूर्तिक इत्यर्थः । ननु भावात्मक इति यतावश्रुतोर्थः । तथात्वे ध्वंस ( व्याप्यतातादात्म्येन ) व्यापकीभूताभावप्रतियोगिसामान्यत्वादिलिंगेन सामान्ये ध्वंसभेदादिसिद्धेस्तादृशस्थलासंग्रहकतया न्यूनतापत्तेः । इदानीं साध्यानुपस्थितिकाले अनुमितिसामग्रीनिर्वाहमात्रस्य कर्तव्यतया साध्याभावस्य भावरूपत्वनिर्भरे बीजाभावाच्च । अभावाभावस्येति । भावत्वेपि भेदात्यंताभावरूपसाध्यवैलक्षण्यानुरोधात् यथायोगं प्रतियोगितावच्छेदकप्रतियोग्यन्यतरात्मकत्वे अंगीकृतेपि अपिशब्दो वक्ष्यमाणार्थे युक्तिसूचनार्थः । तत्प्रकारश्चानुपदमेव व्यक्तीभविष्यति । प्रतिषेधाकारबुद्धेः साध्याभावत्वेन प्रतियोगितदवच्छेदकत्वावगाहिपरामर्शस्य अनिवारणात् । तत्साध्यकतल्लिंगकान्वयिपरामर्शानधीनानुमितिसामान्यसामग्रीघटकतायाः इत्यादिः । अनिवारणात् । वारणस्य कर्तुमशक्यत्वात् । अयं भावः । अभावसाध्यकस्थले स्वाभावरूपस्य प्रतियोगिनस्तत्त्वावच्छेदकस्य वा स्वाभावत्वेनैवावगाहिपरामर्शस्यैव कारणताऽवश्यमभ्युपेया । ननु प्रतियोग्यादेः तदन्यरूपेणावगाहिनः येषां मते अभावाभावस्य न भावात्मकत्वं किं तु प्रतियोगिसम नियताभावांतरत्वमेव । तन्मते भवदुक्तपरामर्शस्य साध्यीयव्यतिरेकव्याप्त्यवगाहित्वाभावेन तेनानुमित्यजननस्यानुभवसिद्धतया येषां द्वितीयाभावस्य प्रतियोगिस्वरूपत्वं तन्मतेपि तथैवांगीकर्तव्यं । अनुभवकलहायोगात् । तथा चोक्तपरमर्शस्य कारणत्वायोगात्तल्लिंगानुमितिसामान्येपि प्रतिषेधाकारबुद्धेरावश्यकत्वमिति । नन्वेतदयुक्तं । येषां मते द्वितीयाभावस्य प्रतियोगिस्वरूपत्वं, तन्मते प्रतिषेधानाकारपरामर्शादनुमितेरानुभाविकतया द्वितीयाभावस्य प्रतियोगिस्वरूपत्वानंगीकर्तृभिरप्यनुमितिस्तादृशपरामर्शादंगीकार्या । अन्यथा ऽनुभववैषम्यायोगादिति ममापि वक्तुं शक्यत्वादित्यत्रापीदमेवोत्तरमभावाभावस्य भावात्मकत्वेपीति । तन्मतेऽपीत्यर्थः । तदन्यमतसमुच्चयेअपिशब्दः । प्रतिषेधाकारबुद्धिरित्यस्योक्त एवार्थः । अनिवारणात् अपरित्यागात् । अनुमित्युपधायकत्वस्येत्यादिः । अयमाशयः । अभावाभावस्य भावत्वमतेपि तदतिरिक्तामत इव प्रतिषेधाकारपरामर्शस्य फलोपधायकत्वं स्वीकृतमेव । तथाच मतद्वयसिद्धत्वादयमनुभवो निर्विवाद इति तादृशपरामर्शस्यैव सर्वत्र फलजनकत्वमावश्यकं लाघवात् । यथा साध्ये केवलान्वयित्वग्रहकालीनानुमित्यनुरोधात् व्यापकताज्ञानकारणत्वस्यावश्यकत्वे साध्याभाववद्वृत्तित्वाद्युपस्थितिकालेपि हेतुव्यापकत्वादिज्ञानांतरकल्पनेनैवानुमितिः स्वीक्रियते । यत्र हेतुव्यापकत्वघटितविषयकज्ञानाभाव अनुभवसिद्धस्तत्रानुमितिर्न स्वीक्रियत एव । प्रवृत्त्यादिकार्यस्यानुभवसिद्धत्वे विशेषदर्शनाधीनमानसेनैव तन्निर्वाहात् । अन्यथा साध्याभावघटितज्ञानस्यापि कारणत्वे भिन्नविषयकप्रत्यक्षादिप्रतिबंधकतानां तादृशपरामर्शघटितसामग्र्याः कल्पने ऽतिगौरवापत्तेः । साध्याभाववद्वृत्तित्वज्ञानकाले व्यापकताज्ञानकल्पनं तु फलमुख गौरवरूपत्वान्नदोषावहं । अन्यथा ज्ञानद्वयोत्तरं विशिष्टज्ञानकल्पने गौरवप्रसंगेन विशिष्टज्ञानत्वेन हेतुत्वासिद्ध्या मीमांसका एव विजयेरन्निति तत्सर्वमप्यविशिष्टं । प्रकृतेपीति प्रकृते तथाकल्प्यते । न चेतरत्वव्यापकीभूताभावप्रतियोगीति परामर्शकाले साध्यानुपस्थितेरानुभाविकतया तत्काले प्रतिषेधाकारपरामर्शकल्पनाया बाधितत्वेनागत्योक्तपरामर्शकारणताया आवश्यकतया फलमुखत्वेनोक्तसर्वगौरवमदोषमेवेति वाच्यं । तादृशपरामर्शकाले साध्यानुपस्थितिदशायामुक्तानुमित्यनुभवस्यैवाभावात् । नच तादृशानु-

मितिर्दीधितिकृत्प्रभृतिभिरंगीकृतैवेति वाच्यं । तदुक्तार्थ एव विवदमानं प्रति तद्नुभवस्याप्रमाणीकर्तव्यत्वात् । तद्यनुभवकलहोयं निरवधिरिति चेत् युक्त्यापि बाधितत्वात् । तथाहि । साध्याभावत्वेनावगाहित्वेन कारणत्वानंगीकारे वस्तुतो यः साध्याभावः तद्व्यापकाभावप्रतियोगित्वज्ञानस्य कारणत्वं वाच्यं । तथात्वे रूपाभावाभावात्मकतया तद्रूपस्य तद्रूपव्यापकाभावप्रतियोगिघटत्ववत्ताज्ञानात् घटे रूपाभावानुमितिः स्यात् । एवं भावसाध्यकस्थलेऽपि वन्ह्यभावस्य तद्व्यक्तित्वेनावगाहिनः तद्व्यक्तिव्यापकाभावप्रतियोगिधूमवत्ताज्ञानात् पर्वते वन्हिरित्यनुपस्थितसाध्यमुख्यविशेष्यकानुमित्यापत्तिश्च। अभावसाध्यकस्थले ऽनुमितिं स्वीकृत्य भावसाध्यकस्थले तदनंगीकारे तु अर्धजरतीयन्यायापत्तेः। न च भावप्रतियोगिकाभावनिष्ठतव्द्यक्तित्वं प्रतियोगिविशेषप्रतियोगिकत्वातिरिक्तं दुर्वचमिति वाच्यं । रूपादाविव प्रतियोग्यघटितस्यैव तव्द्यक्तित्वस्य तत्र सत्वात् । अन्यथा प्रलये सर्ववन्हिनाशे अभावनिष्ठतव्द्यक्तित्वस्यापि नाशप्रसंगेन तव्द्यक्तिरूपत्वाभावेनेतरतादात्म्यं निःस्वरूपत्वं वा स्यात् । चैत्रेण न्हदे यत्किंचिद्वर्तत इत्युक्तौ तत्कालीनचैत्रोच्चारितयत्किंचित्पदतात्पर्यविषयतया वन्ह्यभावावगाहिनः तादृशयत्किंचित्पदतात्पर्यविषयीभूतव्यापकाभावप्रतियोगीत्यादिपरामर्शादुक्तानुमित्यापत्तेर्दुवारत्वाच्च । एवमभिधेयत्वाभावनिरूपितव्यतिरेकिपरामर्शाद्भ्रमात्मकाभिधयत्वाभावानुमितिर्व्यतिरेक्याभासाज्जायते । सा न स्यात् । तत्र साध्यस्यैवाप्रसित्ध्या तदभावस्य वास्तवस्याभावेन तत्र कारणतावच्छेदकविरहात् । नच वास्तवसाध्याभावघटितकारणांतरांगीकारेपि प्रतिषेधाकारपरामर्शस्य कारणतायां अपरित्यागात् । निरूप्यनिरूपकभावापन्नविषयिताशालिभ्रमात्मकपरामर्शादेव व्यतिरेक्याभासलिंगकानुमित्युपपत्तिरिति वाच्यं । उक्तकारणांतरांगीकर्तुर्भवतो मते धूमव्यापकाभावप्रतियोगीवन्ह्यभाववान् न्हद इति ज्ञानात्न्हदे धूमाभावानुमितेरिवाभिधेयत्वव्यापकाभावप्रतियोगि घटत्वाभाववान्पट इति भ्रमात्पटेऽभिधेयत्वाभाव इत्यनुमितेर्दुष्परिहरतया तत्स्थलीयपरामर्शे भवदुक्तकारणतावच्छेदकाभावाद्व्यतिरेक्याभासत्वानुपपत्तेरित्त्यभिप्रायात् । एतेन साध्यीभूताभावप्रतियोगितावच्छेदकावच्छिन्ननिरूपितव्यापकत्वावगाहिज्ञानस्य कारणत्वमिति प्रत्युक्तं । उक्तस्थले साध्यीभूताभावस्यैवाप्रसित्धेः। नच तत्धर्मावच्छिन्नविषयतानिरूपिताभावत्वावच्छिन्नविधेयताकानुमितौ तत्धर्मावच्छिन्ननिरूपितव्यापकतावच्छेदकत्वेन गृहीतधर्मावच्छिन्नं प्रतियोगिताकाभावनिर्णयत्वेन परामर्शस्य तादृशज्ञानद्वयसाधारण्येनापि हेतुता स्वीक्रियते । अत एव व्यतिरेकिग्रंथे दीधितिकृता तथैवोक्तं । इत्थं च न कोपि पूर्वोक्तदोषः प्रसरतीति वाच्यं । न्हदो धूमाभाववान् धूमत्वावच्छिन्नव्यापकतावच्छेदकधर्मावच्छिन्नाभाववत्वात् । यो यत्धर्मावच्छिन्नव्यापकतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभाववान् स तत्धर्मावच्छिन्नाभाववानिति सामान्यव्याप्तिज्ञानेन वा यत्वतत्वाननुगमविद्धिषे तु यो यद्विशेषाभावकूटवान् स तत्सामान्याभाववान् यो यत्धेतुः स तद्व्याप्तः यद्यन्मंगलं तत्समाप्तिसाधनं यो यस्य सुतः स तदीयं धनमाददीतेत्यादौ यत्वतत्वहेतुत्वसाध्यत्वमंगलत्वसमाप्तित्वादेरनुगतत्वाभावेऽपि तत्रानुभवसित्धानुमितिनिर्वाहाय सामान्यव्याप्तिस्थानाभिषिक्तव्याप्त्यंतरावगाहिज्ञानेनानुमिति स्वीकारेण प्रकृतेपि तथैवानुमितिस्वीकारसंभवेनोक्ताबिधव्यतिरेकिपरामर्शस्य फलोपधायकत्वानंगीकारात् । नच वन्हित्वावछिन्नाभावलिंगकत्वं न स्यादपि तु धूमव्यापकतावच्छेदकवन्हित्वावछिन्नाभावलिंगकत्वमेव स्यात् । न चेष्टापत्तिः । तद्रूपावछिन्नास्फूर्तिदशायामेव वन्हित्वावछिन्नाभावलिंगकानुमित्युदयात् । तदर्थमेव चोक्तव्यतिरेकव्याप्तेरंगत्वमपि स्वीकि-

यत इति वाच्यं। धूमव्यापकवन्ह्यभाववानिति परामर्शस्य भवदभिमतस्यैव मत्सिद्ध-लिंगस्फूर्तिरूपतया तदस्फूर्तेरेवासिद्धेः। परंतु त्वया तदुत्तरक्षण एव न्हदे धूमाभाव इत्याकारामनुभवविरुद्धामनुमितिं स्वीकृत्य ततो धूमाभाववानित्यनुमित्यंतरं स्वीक्रियते। साध्यप्रसिद्धिवेलायां साध्यविशेष्यकानुमितिवारणाय साध्यप्रसिद्धेः साध्यविशेष्य-कानुमितिप्रतिबंधकत्वमित्यादिकमप्रामाणिकं बहु कल्प्यते। मया तु क्षणद्वयविलंबेन तादृशसामान्यव्याप्त्यादिस्फूर्त्या सर्वानुभवसिद्धसाध्यप्रकारकानुमितिरेव स्वीक्रियते। भवदभिमतसूक्ष्मकाल एवानुमित्युत्पत्तेश्शपथैकनिर्णयत्वात्। तत्रास्मन्मतमेव युक्तं। अस्मदभिमतान्वयव्याप्तिविशिष्टलिंगांतरस्य कालांतरे ज्ञानस्थलेऽनुमित्यनुरोधेनोभय क्लृप्त-तत्सामग्रीबलादेव क्षणद्वयादिविलंबेनानुमितिमात्रांगीकारेण निर्वाहे अप्रामाणिकस्य कल्पित साध्यविशेष्यकानुमितिनिर्वाहाय सामग्र्यंतरकल्पनस्य साध्यप्रसिद्ध्यादिप्रतिबंधकत्वकल्पनस्यातिगुरुत्वेन हेयत्वात्। एवं च वन्हिर्धूमव्यापकः वन्ह्यभाववांश्चायमिति ज्ञानद्वय स्थलेपि संभवदुत्पत्तिकधूमव्यापकवन्ह्यभावरूपहेतुज्ञानं स्वीकृत्यैवानुमितिरुपपादनीया। अन्यथाऽन्वयिस्थलेपि ज्ञानद्वयानंतरं विशिष्टपरामर्शोप्यकल्पनीयः स्यात्। उक्तलाघवादेव वृक्ष-तादात्म्याद्यनुमितिसंभवे तादात्म्येन वृक्षस्य व्यापकतामनिच्छंतः प्राचीनाः वृत्त्यनियामक-संबंधेन व्यापकतां न स्वीकुर्वंति। तस्मात्साध्याभावत्वेन साध्याभावावगाहिव्यतिरेकि परामर्शस्यैवानुमितिहेतुत्वं सयुक्तिकमिति साधूक्तं प्रतिषेधाकारबुद्धेरनिवारणादिति। यद्वान्यत्र व्यतिरेकिणि परोक्तमभ्युपगम्य प्रकृतानुमानविषय एवैतद्रीत्यसंभवप्रातिपादकमिदं वाक्यं। तथात्वे चाभावेत्यादिना तन्निर्वाह्यस्य प्रतिषेधाकारानवगाहिपरामर्शकारणत्वस्य परिग्रहः अपिशब्दः संप्रतिपत्तिसूचकः।प्रकृत इति आवश्यकताया इति च प्रतिषेधेत्यस्याद्यंतयोर्योज्यं। तथाचाभावसाध्यकस्थले जलादिरूपप्रतियोगिनो जलत्वेनावगाहिनस्तादात्म्येन जलव्यापकाभावप्रतियोगिगंधवान् घट इति परामर्शाद्घटे जलभेद इत्याद्यनुमितिसंभवेपि प्रकृतानुमाने सदसद्विलक्षणत्वरूपसाध्याभावत्वेन साध्याभावावगाहिपरामर्शस्यावश्यकतायाः वारणा-योगादित्यर्थः। कुत इति चेत् यतः सदसद्विलक्षणत्वं नाम सद्विलक्षणत्वविशिष्टासद्विलक्ष-णत्वं। तादृशविशिष्टसाध्याभावस्तु न सत्वासत्वरूपः। विशिष्टाभावस्य सदसदुभयत्रैकस्यैव प्रतीत्या सत्वासत्वयोः परस्परासमानाधिकरणत्वेन तदैक्यायोगात्। नन्वभावस्यैवैक्यप्रतीतिरभावत्वैक्यमवलंबते। रूपाणां रूपाभावाभावात्मकत्वेपि घटपटवृत्तिरूपाभावाभावैक्यप्रतीतिवदितिचेन्न। तथात्वेपि सदसद्विलक्षणत्वाभावव्यापकीभूतेत्यादिरीत्या ज्ञानांगीकारे प्रतिषेधाकारत्वमागतमेव। तादात्म्येन सद्व्यापकीभूताभावप्रतियोगिबाध्यत्ववानेवमसद्व्यापकीभूताभावप्रतियोगिबाध्यत्ववानिति समूहालंबनादनुमित्यंगीकारेऽनुमितिरपि समूहालंबनरूपैव स्यान्न सद्विलक्षणत्वविशिष्टासद्विलक्षणत्वरूपसाध्यविधेयिकातत्वसद्वैल-क्षण्यस्य शुक्तिरूप्ये सिद्धतयांशे सिद्धसाधनतायाः दुर्वारत्वात्। एतदर्थमेव मिथ्यैव रजतमिति प्रत्यक्षमुभयसंप्रतिपन्नसद्विलक्षणत्वावगाहिताकमुपन्यस्तं प्राक्। न चैकत्र द्वयमिति रीत्या बाध्यत्वे तादृशप्रतियोगित्वद्वयावगाहिपरामर्शादेकत्र द्वयमित्यादिरीत्यैव सद्विलक्षणत्वासद्विलक्षणत्वावगाहिनी अनुमितिः स्यात्तत्समानाकारकज्ञानस्य पूर्वमसिद्धतया न सिद्धसाधनमिति वाच्यं। तादृशज्ञानानामप्रामाणिकत्वात्। प्रामाणिकत्वे वाऽनुमितिपरामर्शयोस्तादृशरूपेण कार्यकारणभावे मानाभावाद्विधेयतावच्छेदककोटावधिकावगाहित्वाभावेनांशे सिद्धसाधनतैव। एतदप्युक्तं। प्रतिषेधाकारबुद्धेः शुक्तिरूप्ये सद्विल-क्षणत्वबुद्धेः अनिवारणात्। अंशे सिद्धसाधनत्वस्येत्यर्थः। यदि सदसदुभयव्यापकी-

भूताभावप्रतियोगीत्यादिपरामर्शाच्चोभयत्वावच्छिन्नभेदावगाहिनी अनुमितिः स्यात्तदा शुक्तिरजतस्योभयात्मकत्वानंगीकारात्स्फुटं सिद्धसाधनतैव । सदसदन्यतरव्यापकीभूतेत्यादिपरामर्शादरेऽनुमितेरप्यन्यतरत्वावच्छिन्नभेदावगाहित्वेनेष्टसिद्धिरित्युक्तावपि सद्भेदाविशिष्टासद्भेदावच्छिन्नप्रतियोगिताकभेदवत्त्वरूपान्यतरत्वस्योक्तसद्भेदविशिष्टासद्भेदरूप प्रतियोगितावच्छेदकाद्यप्रसिद्ध्या तद्घटितव्याप्तिग्रहस्य प्रतिषेधविषयिण्याः व्याप्तिग्रहो न घटत इत्याकारायाः बुद्धेः त्वया वारयितुमशक्यत्वात् । अथ तद्भेदतद्भेदैतदुभयत्त्वावच्छिन्नप्रतियोगिताकाभाव एवान्यतरत्वं । तद्ग्रहश्च प्रत्येकं तादृशभेदग्रहादपि संभवतीति उच्यते । तदापि तादृशोभयं नास्तीति प्रतिषेधाकारबुद्धेस्तयोर्विरोधग्रहमूलायाः शशविषाणघटादिष्विव शुक्तिरूप्यादिषु पक्षेष्वपि उक्तानुमानप्रवृत्तेः प्रागेव लोकानामवारणात् बाध्यत्वरूपहेतोरभावस्य तद्व्यापकत्वप्रतिषेधबुद्धेरवारणमेव । एतेन सदसदुभयत्ववृत्तिस्वरूपसंबधावच्छिन्नावच्छेदकताप्रतियोगिताकभेदोऽनुमितिविषयोऽतो न सिद्धसाधनता। कारणीभूतपरामर्शश्च तत्संबंधेनोभयत्वाश्रयस्य तादात्म्येन व्याप्यतावगाहिहेत्वभावस्य व्यापकत्वावगाहीति निरस्तं । सत्वासत्वयोर्लोकानां परस्परविरुद्धस्वरूपप्रतिषेधाकारबुद्धेरनुमानप्रवृत्तेः प्रागनिवारणात् । सत्वाभावप्रयुक्तासत्ववत्त्वेन गृह्यमाणत्वात् । तादात्म्येन तदुभयत्वाश्रयतया गृह्यमाणे शुक्तिरूप्यादौ बाध्यत्वरूपहेतुग्रहेण हेत्वभावस्य पक्षादिप्रविभागात्पूर्वमेव व्यापकत्वप्रतिषेधबुद्धेरवारणादिदमयुक्तमिति । यद्वा ऽभावः केवलव्यतिरेकिणेति ग्रंथः प्रकारांतरेण व्याख्यायते । तथाहि । भक्तिपादीयसुधायां साध्याप्रसिद्धेर्दूषणत्वनिरासप्रस्तावने नैय्यायिकमतोपन्यासावसरे व्याप्तिप्रसिद्ध्यर्थं साध्यप्रसिद्ध्यपेक्षायां केवलव्यतिरेकिभंगमाशंक्य संप्रतिपन्नप्रमाणभावेषु केवलव्यतिरेकिषु सामान्यप्रसिद्ध्या तदुपपत्तिरित्युक्त्वा कैश्चिद्ग्रंथैः सामान्यप्रसिद्धिप्रकारमभिधाय तदेकदेशिमतमपि तद्दूषणपरिहारार्थमुपन्यस्तं अभावो वा केवलव्यतिरेकिणा साध्य इति । तत्र वाकारेण भावसाध्यकस्थले केवलव्यतिरेकित्वं नास्त्येवातः पूर्वोक्तभावसाध्यकस्थले पूर्वोक्तसामान्यप्रसिद्ध्यादिश्रमो न कार्यः । किंत्वभावसाध्यकस्थलमेव केवलव्यतिरेक्युदाहरणमतो न केवलव्यतिरेकिभंग इत्याशय उन्नीयते । तत्रोत्तरत्र सुधायां साध्याप्रसिद्धेर्दूषणत्वनिराकरणावसरे तदवांतरभेदनिराकरणानवसरात्तन्मतं तत्र न दूषितं । अत्र ग्रंथे पुनर्नैय्यायिकमतमवलंब्यैव परानुमानस्यसाध्याप्रसिद्धिदूषणाभिधानावसरे तद्व्यवस्थापनाय केवलव्यतिरेकिभंगमाशंक्य सुधोपन्यस्तं नैय्यायिकोक्तं समाधानं तस्यैव तन्मते संयुक्तिकत्वमित्याभिप्रेत्याभिधाय तदेकदेशिमतं पूर्वमतदार्ढ्याय दूषयितुमभाव इत्यादिग्रंथः <u>। अभावः</u> अभाव एव । तथा च भावसाध्यक केवलव्यतिरेकी नास्त्येवेति साध्याप्रसिद्धेस्तत्र दूषणत्वमनपवादमेवेति भावः । नन्वभावस्य साध्यत्वेपि साध्यप्रसिद्धिं विना व्याप्तिग्रहायोगात्कथं तत्र साध्याप्रसिद्धेर्दूषणत्वाभाव इत्यत आह <u>। तथासतीति ।</u> अभावमात्रस्य केवलव्यतिरेक्यनुमानसाध्यत्वे सतीत्यर्थः। <u>सुशक इति ।</u> केवलव्यतिरेकिसामान्य इत्यादिः । तथा च न केवलव्यतिरेकिभंग इति भावः। <u>अभावाभावस्येति</u> । प्रतिषेधेत्यादेः पूर्वोक्तएवाभिप्रायः । यद्वा न्यायवाक्याधीनायाः परार्थानुमितिरूपायाः प्रतिषेधात्मकाभावसाध्यककेवलव्यतिरेकिलिंगजन्यबुद्धेरनिवारणात् वारयितुमशक्यत्वादित्यर्थः। तथाच तत्रापि (अभावसाध्यकेपि) साध्याभावावगाहित्वेन ज्ञानस्यावश्यकत्वे( न्यायसाध्यनिर्देशावश्यकत्वात् )सामान्यप्रसिद्ध्यावृणरूपपूर्वमतमपहाय

केवलव्यतिरेकिभंगापादनं दुष्परिहरमिति व्यर्थमभावमात्रस्य केवलव्यतिरेकिसाध्यकत्वानुसरणमिति। यद्वा अभावाभावस्येत्यादिना तदुपपाद्य परप्रक्रियोपलक्ष्यते। प्रतिषेधेति। भावसाध्यकस्थलेपि साध्याभावव्यापकत्वावगाहिपरामर्शस्यावारणात्। अनुमितिकारणताया इति शेषः। अयं भावः। अभावाभावस्य भावत्वमतेनाभावसाध्यकस्थले साध्यप्रसिद्धिं विना व्यतिरेकव्याप्तिग्रहसंभवेपि भावसाध्यकस्थलेपि कदाचिद्व्यतिरेकव्याप्त्यानुमित्युत्पादनस्य वारयितुमशक्यत्वेन केवलव्यतिरेकिणा अभाव एव साध्य इति नियमो न युक्तः। नच तत्र व्यतिरेकिपरामर्शकाले ऽनुमितिरेव न जायत इति वक्तुं शक्यं। एकप्रकारेण जायमानज्ञानानां कारणत्वाकारणत्वविभागस्यानुभवविरुद्धत्वात्। ननु व्यतिरेकिव्याप्त्या तत्रानुमितिजननेपि अन्वयव्याप्तिज्ञानेनाप्यनुमितिजननात्तस्य न केवलव्यतिरेकित्वमिति चेत् किं जलभेदव्याप्यगंधवान् घट इति ज्ञानादभावानुमितिः कदापि न जायत इति वक्तुमुद्यतोऽसि। न चाभावसाध्यके प्रथमतः साध्यानुपस्थित्या प्रथमतः तज्जन्यानुमित्यंगत्वं व्यतिरेकव्याप्तेरेवेति तस्य केवलव्यतिरेकित्वं नैव भावसाध्यकस्येति वाच्यं। सर्वपुरुषाणां प्रथमतस्तथैवानुमितेः। केवलव्यतिरेकितानियामकत्वे कस्यचित्पुरुषस्य जलपरमाणुभेदव्याप्यगंधवान् पृथिवीपरमाणुरित्याप्तवाक्यजन्यात् शाब्दात्तन्मूलकान्मानसाद्वान्वयिपरामर्शात्प्रथमतो ऽनुमितिरेवमन्यानुमितिरन्यस्येति क्रमेण सर्वेषामप्यभावानां सर्वपुरुषीयप्राथमिकव्यतिरेकव्याप्तिग्रहमूलकानुमितिविषयत्वाभावेन केवलव्यतिरेकिमात्रोच्छेदप्रसंगः। कस्यचित्पुरुषस्य तथाभावस्य तन्नियामकत्वे तु वन्ह्यभावव्यापकीभूताभावप्रतियोगिधूमवान् पर्वत इति वाक्यार्धीनव्यतिरेकिपरामर्शादेव कस्यचित्पुरुषस्य प्रथमतोऽनुमितिसत्त्वेन भावसाध्यकस्यापि केवलव्यतिरेकितायाः दुर्वारत्वात्। न चैवं सत्यन्वयव्यतिरेकित्वकेवलव्यतिरेकित्वादिव्यवस्था कथं संगच्छत इति वाच्यं। यदा यस्यान्वयव्यतिरेकिव्याप्तिद्वयप्रमया यल्लिंगकानुमितिः स तस्यान्वयव्यतिरेकी। यस्य यदा व्यतिरेकिव्याप्तिप्रमयैव यल्लिंगकयत्साध्यकानुमितिः स तस्य केवलव्यतिरेकी। एवं केवलान्वयी निर्वाच्य इति व्यवस्थोपपत्तेः। वस्तुतोऽन्वयव्याप्त्यसत्त्वं न केवलव्यतिरेकितानियामकं केवलव्यतिरेकित्वाभिमतेषु सर्वेषु तत्सत्त्वावश्यकतया तादृशस्थलस्यैवाप्रसिद्धेः। तस्माद्भावाभावसाध्यकस्थलयोरविशेषात्सर्वसंप्रतिपन्नभावसाध्यककेवलव्यतिरेकिसामान्यभंगपरिहाराय सामान्यप्रसिद्ध्यादरणमेव युक्तमिति। अत्रेदं बोध्यं। अभावः केवलव्यतिरेकिणेत्यादिग्रंथस्यानिर्वचनीयत्वसाध्यकप्रकृतनिर्वाहकत्वविविक्षापूर्वकं मतांतरोत्थापनपरत्वेन पूर्वव्याख्यानमात्रादरणे प्रतियोगिप्रतीतिमंतरेणेति वाक्योत्तरत्वमेव स्यात्। व्याप्तेरशक्यप्रतिपत्तिकत्वाभिधाने प्रतियोगिप्रतीतिमंतरेण व्याप्तिग्रहोपपादकस्यैतन्मतस्य झाडिति तत्रैव संगतत्वात्तद्विहाय व्यतिरेकिभंगरूपतटस्थशंकया व्यवधानेन पुनस्तन्मतोत्थापने बीजाभावः। अत उत्तरत्र सामान्यप्रसिद्धिशंकाया एव कर्तव्यतया तत्पक्षस्यैव युक्ततायाः शिष्यान् प्रति प्रतिपादनाय सामान्यप्रसिद्धिरूपस्वसमाधानानंतरमेतत्पक्षोपन्यासस्योक्तविन्यासेन टीकाभिप्रेतत्वावगमादुक्तद्वितीयव्याख्या युक्ता। एतद्व्याख्यानमात्रादरेण परानुमाने प्रतियोगिप्रतीतिमंतरापि व्याप्तिग्रहोपपत्तिशंकाया उक्तव्याख्याननिवर्त्याया दृष्टत्वे तन्निरासं विना मौलदूषणसमर्थनायोगात्। तद्विहाय नैय्यायिकमतसौष्ठवमात्रविचारस्य गंगावालुकपरिगणनवदसंगतत्वापत्तेः। प्रथमावतारिका पूर्वोक्तसर्वार्था अपि टीकाभिप्रेता इत्यवगम्यते। बह्वभिप्रायाणामस्मदादिबुध्यविषयाणां सर्वज्ञकल्पटीकाकृद्वाक्येषु सर्वेषु संभावितत्वं प्रमितत्वमपि चंद्रिकातत्प्रकाश-

(टीका) प्रतिषेधस्य च प्रतियोगिसापेक्षतानियमात्। सत्वासत्वे एकधर्मिनिष्ठात्यंताभावप्रतियोगिनी धर्मत्वात्। रूपरसवदित्यनुमानेन—

कृतां महात्मनां वचनैस्तथावगमात्। वचनानि तु न्यायामृते 'चित्रैः पदैश्च गंभीरैर्वाक्यैर्मानैरखंडितैः॥ गुरुभावं व्यंजयंती भाति श्रीजयतीर्थवाक्॥' इति। चित्रैः उक्तरीत्याविन्यासविशेषशालिभिः नानात्वबोधनसमर्थैश्च गर्भिणीपक्षे अलसभावेन मंथरगतिशालित्वादिवैचित्र्योपेतैः गंभीरैर्बह्वभिप्रायशालिभिः गर्भिणीपक्षे स्वरविशेषपूर्वकं मंदं निःसरद्भिः अखंडितैः प्रतिवादिभिर्दूषयितुमशक्यैः मानैः स्वप्रतिपादनीयप्रत्यक्षादिप्रमाणैः गुर्विणीपक्षे रतौ नखदंतादिभिरखंडितैर्मानैर्गोपनीयस्थलविशेषैः कुचाधरादिभिः गर्भिणीगमननिषेधात् गुरुभावं गुरूणां मूलकारप्राचीनटीकाकारसन्न्यायरत्नावल्यादिकृतां भावं व्यंजयंती प्रकटीकुर्वती सुधादिषु सन्न्यायरत्नावल्याद्युपपत्तेरपि प्रदर्शितत्वात् तथा गुरुर्बहुः योभावः स्वाभिप्रायः तं व्यंजयंती शिष्यान् बह्वभिप्रायकमिदं वाक्यमिति द्योतयंती विन्यासविशेषादिभिः शिष्याणां तदवगमात् गर्भिणीपक्षे तु गुरोर्गर्भधारणप्रयुक्तशरीरगौरवशालिन्याः स्वस्याः वोतोगुणवचनादित्यनेन ङीषो विकल्पितत्वात् भावं गर्भरूपं पदार्थं धर्मं वा विशेषणमात्रसाम्याद्प्रस्तुतगर्भिणीप्रतीत्या गर्भो निगूढो यथा चिन्हमात्रानुमेयः तथा टीकाभावोऽपीति ध्वन्यते। तथा सुधापरिमले चंद्रिकाप्रकाशकृतां वाक्यं 'यद्यपि प्रतिवाक्यमनेकाकूतगर्भिता प्रतिभाति सुधा तथापि ग्रंथगौरवभयादुपरम्यत' इति। तेषामेव भावदीपिकायां वचनं 'टीकावाक्यस्य गांभीर्यं मर्शं मर्शं पुरो मनः॥ न गाहतेऽथापि ग्रंथबहुत्वादुपरम्यत॥' इति। तस्मादुक्तसर्वव्याख्या युक्ता एवेति। प्रतिषेधेत्यस्य चरमव्याख्यानातिरिक्तपूर्वतनप्रधानव्याख्यापक्षेषु साध्याभावत्वेन ज्ञानस्यावश्यकत्वे किमागतमित्यतस्तटस्थशंकासमाधानाभ्यामुपपादितव्यतिरेकव्याप्त्यग्रहरूपपूर्वार्थोपपादकत्वं स्मारयति। प्रतिषेधस्येति। हेत्वभावनिष्ठप्रकृतसाध्यानुमित्यौपयिकव्यापकतानिरूपकतावच्छेदकरूप विशिष्टसाध्याभावज्ञानस्येत्यर्थः। प्रतियोगिसापेक्षतानियमात् तादृशरूपघटकप्रतियोगिग्रहाधीनत्वनियमात्। तेन वस्तुतः प्रतिषेधरूपाभावस्य नैय्यायिकादिरीत्या प्रतियोगिसापेक्षत्वोपपादनस्य प्रकृतानुपयोगेपि ज्ञाने लक्षणायां तु प्रमेयत्वाभावत्वादिना तद्ज्ञाने प्रतियोगिग्रहस्यानपेक्षायामपि न क्षतिः। प्रमेयत्वादेरनुमितिकारणग्रहविषयहेत्वभावनिष्ठव्यापकतानिरूपकतानवच्छेदकत्वात्। प्रतिषेधाकारेति भागस्य चरमव्याख्यानपक्षे तु ननु भावस्थले साध्याभावघटितव्यतिरेकव्याप्तिज्ञानस्यानुमितिजनकत्वानंगीकारे का क्षतिरित्यत आह। प्रतिषेधस्येति। साध्याभावव्यापकहेत्वभावप्रतिषेधस्य (तद्रूपहेतोः हेत्वभावप्रतिषेधो हेतुरेव) प्रतियोगिसापेक्षत्वनियमात्। साध्याभावप्रतियोगि वा व्याप्तिप्रतियोगि वा यत्साध्यं तत्सापेक्षत्वं तद्विनानुपपद्यमानत्वं तस्य नियमात्। तन्नियमस्याभावसाध्यकस्थले भवतैवांगीकृतत्वादित्यर्थः। तथा चाभावसाध्यकस्थल इव भावसाध्यकस्थलेपि साध्यं विनानुपपद्यमानत्वग्रहाधीनानुकूलतर्कसचिवपरामर्शसद्भावे तदनंगीकारो निर्बीजः। निर्निमित्तं तथांगीकारेऽभावसाध्यकस्थलेपि व्यतिरेकिपरामर्शकारणत्वं न स्यादिति भावः। यद्वा प्रतिषेधस्य प्रतिषेधावगाहिपरामर्शघटितसामग्र्याः प्रतियोगिसापेक्षत्वनियमात्। कारणताद्वारा स्वनिरूपकीभूतानुमितिरूपकार्योपधाननियमस्याभावसाध्यकस्थले भवतैवांगीकृतत्वादित्यर्थः। पर्यवसितभावस्तु पूर्वोक्त एव ज्ञातव्यः। वादी सामान्यप्रसिद्धिमाशंकते। सत्वासत्व इति। सत्वासत्वे परस्परसमानाधिकरणाभावप्रतियोगिनी धर्मद्वया-

(टीका) सामान्यतोऽनिर्वचनीयत्वप्रसिद्धौ शुक्तिरजतादिधर्मिविशेषाश्रयता तस्य केवलव्यतिरेकिणा साध्यते। अतो न दोष इति चेन्न। अभिधेयत्वादौ व्यभिचारात्। तस्यापि पक्षतुल्यत्वे व्याघातात्। अभिधेयत्वादिकं किंचिन्निष्ठात्यंताभावप्रतियोगि इत्यत्र तस्य किंचिदादिशब्दाभिधेयत्वात्।

---

त्मकत्वात् रूपरसोभयवदित्यर्थो लघ्वद्वैतचंद्रिकादिशाऽवसेयः। निष्कर्षस्तु सत्वासत्वोभयत्वविशिष्टं स्वप्रयोजकापेक्षाबुध्धिविषयौ यौ धर्मौ तत्तदवछिन्नप्रतियोगिताकाभावकूटत्वावच्छिनाधिकरणताकं तदवच्छिन्नाभावाधिकरणतासमानाधिकरणतदवच्छिन्नाभावाधिकरणताकं वा द्वित्वविशिष्टधर्मत्वात् रूपरसोभयवदिति। अत्र शुध्धात्मघटोभयविषयकापेक्षाबुध्यधीनोभयत्वविशिष्टे आत्मव्यतिरेकाप्रसिध्या व्यभिचारवारणाय घटशशविशाणे इति विकल्पाख्यापेक्षा बुध्यधीनतादृशद्वित्वविशिष्टे तन्मते असत्प्रतियोगिताकाभावानंगीकारेण व्यभिचारवारणाय वा धर्मपदं कालसंबंधितादात्म्यमात्रवदर्थकं। आत्मनः शशविषाणादेश्च कालसंबंधानंगीकारात् तत्तादात्म्यवतोरुभयावीशिष्टयोर्वारणमित्याहुः। धर्मत्वमविविक्षितमेतत्तात्पर्यग्राहकमेवेत्यपि केचित्। अत्र सत्वासत्वोभयत्वं किंचिन्निष्ठात्यंताभावप्रतियोगितावच्छेदकं अत्यंताभावप्रतियोगितावच्छेदकं वा धर्मपर्याप्तोभयत्वत्वात् रूपरसोभयत्ववत् प्रतियोगितावछेदकता स्वरूपसंबंधावच्छिन्ना ग्राह्या। अतः प्रत्येकं सदसतोरुभयाभाववत्वेपि न सिध्धसाधनावसर इत्यपि केचिन्निष्कर्षयंति। सामान्यत इति। सत्वाभावासत्वाभावयोरेकत्रानुमानेन तदुत्तरमानसबोधेन वा सिध्धौ सत्वाभावविशिष्टासत्वाभावरूपस्य वा तदनतिभिन्नार्थरूपसदसद्वैलक्षण्यात्मिकानिर्वचनीयत्वस्य वा सामान्यतः सिध्धिरित्यर्थः। ननु सदसती एकधर्मिनिष्ठभेदप्रतियोगिनी इति साक्षादेव सदसद्वैलक्षण्यरूपानिर्वचनीयसिध्धिं विहाय कुतो वक्रतेति चेन्न। सत्वाभावविशिष्टासत्वाभावस्यापि सदसद्वैलक्षण्यपदव्यवहृतिगोचरतया सत्वासत्वयोरनुगततया कथंचिन्निर्वक्तुं शक्यत्वेन लाघवेनोक्तरीत्यनुसरणं कृतं। सदसतीत्युक्तरीत्यनुसरणे भेदद्वयासिध्यानिर्वचनीयसिध्धिर्न स्यात्। अधिकप्रयत्ने गौरवं स्यादिति तत्पक्षोपेक्षेपणात्। अभिधेयत्वादाविति। अभिधेयत्वप्रमेयत्वोभयत्वविशिष्टे इत्यर्थः। तस्यापीति। पक्षतुल्यत्वे इति। नहि पक्षे पक्षसमे वा व्यभिचार इति प्राचीनोक्तेरित्यर्थः। व्याघातादिति। तमुपपादयति। तस्यापीति। किंचिदादीति। तथाच स्वयमुक्तसाध्यसाधनाय यत्किंचिच्छब्देन तमभिधाय पुनस्तन्निराकरणे स्वकीयतत्प्रतिपादनव्याधातरूपस्वक्रियाविरोध इत्यर्थः। किं चाभिधेयत्वप्रमेयत्वरूपयत्किंचित्केवलान्वयिधर्माणां पक्षतुल्यत्वं सर्वेषां वा। नाद्यः। उर्वरितेष्वेवानैकांत्यापातात्। द्वितीये तु सर्वेषां केवलान्वयिधर्माणां पक्षतुल्यत्वेऽपि परस्परविरुध्धानां व्यतिरेकिधर्माणामपि मिलित्वा किंचिन्निष्ठात्यंताभावप्रतियोगित्वमावश्यकमन्यथा तदुभयस्मिन्नेव व्यभिचारप्रसंगात्। तथा च घटत्वाभावाधिकरणे तादृशयत्किंचिद्व्यक्तौ घटत्वतद्व्याप्यतत्समनियतधर्माभावानामावश्यकत्वमेवमघटत्वतत्समनियततद्व्याप्यधर्माभावानामपि तत्रैव सत्वमावश्यकं। केवलान्वयिभूतप्रमेयत्वघटत्वाघटत्वान्यतराधिकरणतैतदुभयस्मिन् व्यभिचारवारणाय तत्तदभावोऽपि तत्रैव स्वीकृतः स्यात्। तथा च तन्निष्ठसर्वधर्माभावाधिकरणत्वे किंचिन्निष्ठाभावप्रतियोगित्वाभावाद्व्यभिचार इत्याह। किं चेति। न च तस्यैकत्वादुभयधर्मपदेन तद्ग्रहणायोगात्कथं व्यभिचार इति वाच्यं।

(टीका) किंच सकलधर्माणां यत्किंचिन्निष्ठात्यंताभावप्रतियोगितासाधने सकलधर्मात्यंताभावाधिकरणत्वे व्यभिचारः। तस्यापि पक्षत्वे सकलधर्मवत्त्वं कस्यचिद्विरुद्धमापद्येत । अविरुद्धत्वं चोपाधिः ।

---

सर्वधर्माभावाधिकरणतापदेन तन्निष्ठाघटत्वाभावाधिकरणताघटत्वाभावाधिकरणतैतदुभयस्मिन् एवमन्यान्यप्युपादाय व्यभिचार इत्यत्र तात्पर्यात् । तस्यापीति । तादृशोभयस्यापीत्यर्थः । विरुद्धमिति । अघटत्वाभावस्य घटत्वाभावस्य चाभावे एकस्मिन् सति तत्र घटत्वमघटत्वं एवमपटत्वाभावस्य पटत्वाभावस्य चाभावे तस्मिन्नेव च सति पटत्वमपटत्वं चेति क्रमेण सर्वविरुद्धधर्मवत्वमेकस्यापाद्येतेत्यर्थः । वस्तुतः प्रमेयत्वादौ व्यभिचारवारणाय तद्घटितोभयस्यापि पक्षत्वेन केवलं व्याघातः। अपि तु सर्वधर्माणां कुत्राप्यभावेन सर्वधर्मत्वावच्छिन्नाभावस्यापि केवलान्वयितया तादृशाभावप्रमेयत्वैतदुभयस्मिन्नुक्तसाध्याभावाद्व्यभिचारः । तस्यापि पक्षत्वे प्रमेयत्वाभावसर्वधर्माभावत्वावच्छिन्नाभावयोः एकस्मिन् स्वीकारे सर्वधर्माधिकरणत्वमेकस्य विरुद्धमापद्येतेत्याह । किंचेति । सर्वधर्माधिकरणत्वेनेति यथाश्रुतविवक्षया हेतोरुक्तोभयधर्मत्वपर्यंतविवक्षायां तु तद्घटितोभयेनेत्यर्थ इति सारं । सर्वधर्माणां यावंतो धर्माः तेषां यथाश्रुते निष्कर्षे तद्घटितोभयेषां,अन्यथा तत्र तत्रैव व्यभिचारः स्यादिति भावः । एतेन सर्वधर्माणां पक्षत्वापादनमसंगतं । व्यतिरेकिधर्मेषु सिद्धत्वेन सिद्धसाधनतया पक्षीकर्तुमशक्यत्वात् । साधनपदस्यांगीकारार्थकत्वेनोक्तदोषपरिहारेऽपि सर्वधर्माभावो नाम धर्मत्वावच्छिन्नाभावरूपः तत्सामान्याभाव एव । तत्र व्यभिचारवारणाय तत्रोक्तसाध्यादरे एकस्य विरुद्धसर्वधर्मवत्वं नापादयितुं शक्यं । धर्मसामान्याभावस्य धर्ममात्रविरोधितया यत्किंचिद्धर्मसत्तामात्रेण धर्मसामान्याभावाधिकरणत्वासंभवात् । अन्यथा घटसामान्याभावाधिकरणत्वाभाववति सर्वघटत्वं स्यादिति परास्तं । ननु धर्मपदस्य भेदप्रतियोगितावच्छेदकत्वरूपव्यतिरेकित्ववद्धर्मपरतयैव हेतुशरीरे सार्थक्यं। नच तथात्वेपि व्यतिरेकिधर्मघटितोभयात्मकत्वस्य प्रमेयत्वघटत्वोभयस्मिन् सत्वेनोक्तसाध्याभावाद्व्यभिचार इति वाच्यं । व्यतिरेकिधर्ममात्रघटितोभयात्मकत्वस्य विवक्षितत्वात् । तथाच केवलान्वयिधर्माणां किंचिन्निष्ठाभावप्रतियोगित्वानंगीकारान्न पूर्वोक्तव्याहत्यादीत्यत आह । अविरुद्धत्वं चोपाधिरिति । चस्त्वर्थे । उपाध्यंतराकथनेन समुच्चायकत्वायोगात् । तुशब्दार्थविशेषस्तु परस्परात्यंताभावात्मकत्वरूपविरोधघटितत्वं । तेन सहानवस्थानरूपविरोधनिवेशे घटत्वस्तंभत्वयोरेकनिष्ठात्यंताभावप्रतियोगिनोरुक्तविरोधशालित्वाद्व्यभिचारः । परस्परविरहव्याप्यत्वं चेदपि स एव दोषः । परस्परभावानात्मकत्वं चेत् रूपतत्प्रागभावरूपतद्ध्वंसयोः परस्परध्वंसप्रागभावात्मकयोरेकवायुनिष्ठात्यंताभावप्रतियोगिनोर्व्यभिचार इति निरस्तं । न चोक्तरूपविरोधनिवेशेऽपि संयोगतदत्यंताभावयोरेकवृक्षवृत्तिपरस्परात्मकात्यंताभावप्रतियोगिनोर्व्यभिचारः । नैय्यायिकमतरीत्या दूषणकथनावसरे शुद्धासिद्धांतसिद्धतद्व्याप्यवृत्तित्वाभावस्यानाश्रयणीयत्वात् । तथात्वेपि वा रूपात्यंताभावाभावात्मकघटीयतद्रूपरूपात्यंताभावयोरेकपटनिष्ठात्यंताभावप्रतियोगिनोर्व्यभिचार इति वाच्यं । सत्वासत्वयोरुक्तरीत्यात्यंताभावप्रतियोगितयाऽर्थांतरवारणाय पूर्वोक्तपरिष्कारे कूटत्वावच्छिन्ननिरूपकताकाधिकरणतायामनवच्छिन्नत्वस्य निविष्टतया संयोगतदत्यंताभावात्मकोभयस्मिन् व्याप्यदलस्यैवाभावात् । यदुभयं स्वप्रयोजकापेक्षाबुद्धिविषयौ यौ

( टीका ) नच सत्वासत्वे अपि न विरुद्धे । अनिर्वचनीयार्थप्रतीतेः प्राक्

धर्मौ तत्धर्मावछिन्नाभावनिरूपितानवछिन्नाधिकरणतासमानाधिकरणतत्धर्मावछिन्नाभाव निरूपितानवछिन्नाभावाधिकरणताकत्वरूपं वा तत्धर्मावछिन्नाभावकूटत्वावछिन्ननिरूपितानवछिन्नाधिकरणताकत्वरूपं वा यत्साध्यं तद्वत् तत् स्वावछिन्नप्रतियोगितानिरूपितानुयोगितावछेदको यो धर्मः तदवछिन्नप्रतियोगितानिरूपितानुयोगितावछेदकं च यत्स्वं तदवछिन्नतदवछिन्न ( तद्विषयकतद्विषयक ) विषयकापेक्षाबुध्विजन्योभयत्वं विशिष्टभिन्नत्वरूपाविरुध्यत्ववदित्यादिरीत्या परिष्करणादरे सर्वदोषाभावात्। तद्रूपरूपाभावोभयोपादाने तद्रूपत्वस्य रूपाभावत्वावछिन्नप्रतियोगितानिरूपितानुयोगितानवछेदकत्वेनोक्तभिन्नत्वरूपाविरोधाक्षतेः। सत्वासत्वयोरप्रामाणिकात्यंताभावानियमपक्षेऽपि परस्पर विरहात्मकत्वमुपपादितमधस्तात् । तत्रैव रूपघटितपरिष्कारे तत्पक्षेऽपि न दोष इत्यलं। यद्वा चशब्दः पक्षेतरत्वात्मकसत्वासत्वोभयभेदस्योभयत्वानाश्रयत्वरूपस्य चोपाध्यंतरस्य समुच्चायकः । ख्यातिबाधानुपपत्त्यादिरूपानुकूलतर्कस्य परेण स्वग्रंथे लिखितस्याग्रेऽर्थापत्तिनिरासेनार्थतो निरस्ततया पक्षेतरत्वस्योपाधितायाः आवश्यकत्वात् । यद्वा चशब्द उपाधिश्चेति भिन्नक्रमेण योजितः सन्न्यायामृतोक्ता (उपपादिता) भाससाम्यादिदूषणांतर समुच्चायकः । अनुकूलतर्कसद्भावे पक्षे साध्यव्यापकताभंगेनोपाधेरप्ययोगादुपाधिं वदताऽनुकूलतर्काभावसूचनद्वाराऽऽभाससाम्यस्यापि सूचितत्वात् । तानि च घटत्वाघटत्वे किंचिन्निष्ठात्यंताभावप्रतियोगिनी धर्मत्वात् रूपरसवत् कल्पितत्वमकल्पितत्वानधिकरणानात्मनिष्ठात्यंताभावप्रतियोगिअनात्मनिष्ठात्यंताभावप्रतियोगिधर्मत्वात् अकल्पितत्ववदित्यादीन्यनुमानानि चेतनाचेतनत्वसुनिरूपत्वदुर्निरूपत्वादिकमेकस्यैव स्यादित्यादीनि दूषणांतराणि द्रष्टव्यानि । यदत्र केनचिदुक्तं। धर्मत्वमात्रेणोक्तसाध्यं साधयतो मम घटत्वाघटत्वयोरप्युक्तसाध्यवत्वामिष्टमेव नहि क्षतिः । सकर्तृकेत्यनुमानस्यांकुरं सकर्तृकमित्यनेनाभाससाम्यं । नच घटाघटविलक्षणत्वं वास्तवं येन विरोधः स्यात् । नहि वस्तुनो दुर्निरूपस्य किंचिदपि रूपं वास्तवं भवति । कल्पितत्वपक्षकानुमानमपि मदिष्टमेव । सत्वासत्वयोरपिनोक्तरूपविरोधः। अनिर्वचनीयार्थं एवाभावद्वयस्य सत्वादित्यादितल्लघूक्त्या दूषयितुमुपलक्षणतया यत्किंचिदाशंकते। नचेति । सत्वासत्वे अपि यथारूपरसादिकं न विरुध्दं तथा सत्वासत्वे अपीत्यर्थः । तथाचोपाधिः साधनव्यापक इति भावः । उपलक्षणं चैतत् । कल्पितत्वाकल्पितत्वादिधर्मा अपि ग्राह्याः । तेन पूर्वोक्ताभाससाम्याद्युध्दारः । न विरुध्दे अपीति योजनया अपिशब्देनोक्तार्थोपपादकमतात्विकत्वमपि लभ्यते । सर्वं संगृह्यैकोक्त्या दूषयति । अनिर्वचनीयार्थेति । अनिर्वचनीयरूपो योऽर्थो ऽसदन्यः कालसंबंधी वा तत्प्रतीतेः प्रागित्यर्थः । अस्मन्मतेऽपि शशविषाणादिशब्देनासत इवानिर्वचनीयसदसद्विलक्षणादिशद्वैस्तादृशासत एव प्रतीतिसंभवात् । प्राक्पदलभ्यतत्प्रतीतिदौर्लभ्यमयुक्तमिति शंकापनोदायेदमुदितं । कालसंबंधासदन्यत्वोपपाद्यानां सत्वाभावाधिकरणतासमानाधिकरणासत्वाभावाधिकरणतादीनां अविरोधसंपादकानां तदभावे उपपादयितुमशक्यत्वात् । नच सद्विलक्षणत्वविशिष्टासद्विलक्षणत्वरूपेण प्रतीयमानस्य कालसंबंधवत्वेनाऽपि प्रतीयमानस्य तस्यैवासत्वे कालसंबंधोऽसदन्यत्वमसत्यप्यागतमिति कथं तेन तव्द्यावृत्तिरिति वाच्यं । वस्तुतः सद्रूपकालसंबंधवत्वादेरेव विवक्षिततया तत्प्रतीतौ भासमानयोस्तयोरप्यसत्वेन वारणात् । वस्तुतः सद्रूपत्वं च सत्ताव-

(टीका) अविरोधाप्रतीतेः।

---

त्वमेव। तत्र सत्तासंसर्गस्य संसर्गविधयेव निवेशान्न कोऽपि क्षुद्रोपद्रवः। अविरोधेति। सत्वासत्वाभावयोरुक्तविरोधाभावस्याभाससाम्यादिना प्राप्तप्रयोजकत्वव्याप्तिग्राहकतर्काभावमूलकहेतुनिष्ठव्याप्त्याभावरूपाविरोधस्य च योऽभावस्तस्याप्रतीतेः सार्वलौकिकवैदिकानामपीत्यर्थः। असिद्धेरित्युक्तौ प्रतिवादिमात्रं प्रति असिद्धत्वस्य झडिति प्रतीत्या परार्थन्यायप्रयोगासंभवेऽपि स्वार्थानुमितिसामग्रीसंभाव्येतातोऽप्रतीतेरिति सामान्येनोक्तं। तेन सर्वथानाहार्यप्रतीतेरभावात्स्वार्थानुमितिरेव न घटते। कुतस्तन्मूलकपरार्थन्यायप्रयोगादिकमिति लभ्यते। अयमभिप्रायः। उपाधिर्हि पक्षादिप्रविभागोत्तरमुपस्थितः सत्प्रतिपक्षस्योत्थापकः। व्याप्तिग्रहवेलायामुपस्थितो व्यभिचारोन्नायको भवतीत्यन्यत्राभिहितं। तत्रोपाध्युद्भाव्यस्य विरुद्धत्वरूपसत्प्रतिपक्षहेतोरसिद्धिग्रहः केन भवति। न तावत्प्रमाणांतरेण त्रैकालिकनिषेधरूपासत्वतदभावरूपसत्वयोर्भवता पक्षीकृतयोर्घटत्वतदभावादीनामिव विरोधग्रहस्यैव प्रमाणांतरेण जननात्। नहि कुत्रापि विरोधग्रहो न संभवति। तथात्वे लोकानां विरोधाविरोधग्रहाधीनसर्वप्रवृत्तिनिवृत्याद्युच्छेदप्रसंगात्। नहि प्रमाणानि स्वशक्तिमपहाय त्वदिच्छामात्रेण कार्यं जनयंति। तथासत्यनुमानस्येव प्रत्यक्षस्यानुमितिजनकत्वमप्यापाद्येत। मम तादृशग्रह आनुभाविक इति चेत् उन्मादवत्पुरुषाणां दोषविशेषाधीनमानसस्येवानुमानशब्दादिजन्यानुमितिशाब्दादिना स्वयमपि प्रवृत्यादिकं लोकव्यवहारसदृशमेव शाब्दात्प्रत्येमि। लिंगात्प्रत्येमीति व्यवहारं चानुतिष्ठतः व्यवहारविशेषज्ञाप्योक्तज्ञानधर्मिकप्रत्यक्षवैलक्षण्याद्यनुभवतोऽपि चार्वाकस्य प्रत्यक्षातिरिक्ते अप्रामाण्यभ्रमस्य मानसस्य दोषविशेषेणाग्रहापरपर्यायेच्छादिनाहार्यरूपतया जायमानस्येव त्वज्ज्ञानस्यापि तादृशभ्रमरूपत्वसंभवेन तस्योक्तानुमित्यादिकार्यनिर्वाहकत्वात्। व्यवहारादेस्तु तन्मूलकाहार्यभ्रमांतरद्वारैव निर्वन्हिर्वन्हिमानित्यादिव्यवहारस्यैव संभवात्। आग्रहादिशून्यलौकिकानां धूमानुमानादिसामग्र्या इवोक्तविरोधग्रहसामग्र्याः कदाप्यभावात्। अत एवोक्तमाचार्यैः। 'ईशशक्तेरचिंत्यत्वान्महोन्मत्तैः प्रवर्तितं' इति। उन्मत्तैरिति तत्सदृशदोषविशेषकथनेन परकीयप्रक्रियायाः लौकिकपरीक्षकबुद्ध्यगोचरत्वकथनेनाग्रहादिमूलकत्वमुच्यते। तस्मात्स्वार्थानुमाने प्रवृत्तस्याविरोधग्रहः संभवतीति न संगच्छते। नाप्येतेनैव उपाध्युन्नेयसत्पतिपक्षहेतोरसिद्ध्युत्तरमेवोक्तानुमानैः तत्सजातीयानुमानांतरैर्वा निर्वचनीयार्थसिद्धेः संपादनीयतयाऽन्योन्याश्रयात्। नच प्रतिहेतोः संदिग्धासिद्धत्वेन दुर्बलतया बाधकत्वायोगेन स्थापनानुमानेन साध्यसिद्ध्या निश्चितासिद्धो भवतीति वाच्यं। अन्यत्र घटत्वतदभावादावनुत्पन्नस्य विरोधसंशयस्यात्रैवोत्पत्तौ बीजाभावात् सर्वत्र तदुत्पत्तौ तन्मूलनिश्चयाधीनप्रवृत्त्यादिकार्यविलोपप्रसंगात्। अनुकूलतर्कानुत्थाने संदिग्धोपाधेरपि दूषकत्वाच्च। व्याप्तिग्रहवेलायामुपाधिस्फूर्तेरावश्यकतया व्याप्तिनिश्चयस्याप्ययोगाच्च। घटत्वाघटत्वादीनामाभाससाम्ये उपस्थिते अतात्विकत्वादिग्रहाधीनतच्छमनस्यापि कुत्रापि तद्ग्रहाभावदशायामयोगाच्च। स्वाप्नादावपि कल्पिताकल्पितवैलक्षण्यस्य शुक्तिरजते रजतारजतवैलक्षण्यस्य च लोकानामनुभवविरुद्धत्वात्। इत्थं च स्वार्थानुमित्यनुपपत्तौ परार्थानुमानस्यापि वादिनं प्रत्यनिर्वचनीयसिद्धेः प्रयोक्तुमशक्यतया उभयोरपि कल्पितत्वेनाविरोधः। स्वरूपतोऽतात्विकस्य नहि किंचिदपि रूपं वास्तवं भवति। अस्याः प्रसक्तेरिष्टत्वादिति त्वदुक्तेरकिंचित्करत्वमेव। त्वदनुमानसाध्यीभूतसत्वा

(टीका) तदिदमप्रसिद्धविशेषणत्वं परसिद्धमिति ज्ञातव्यम् । अन्यत्र तद्दूषणत्वस्याचार्यैरेवोपपादित (रेवोक्त) त्वात् स्वमतेन तु स्वव्याघातादिदूषणमूहनीयम् ।

---

भावाधिकरणतासत्वाभावाधिकरणतासत्वासत्वैतच्चतुष्टयं पक्षीकृत्यैकधर्मिनिष्ठात्यंताभावप्रतियोगित्वस्य धर्मचतुष्टयत्वादिहेतुना रूपरसगंधस्पर्शैतच्चतुष्टयदृष्टांतेन साधने सदसद्विलक्षणविलक्षणत्वादिकस्याप्येवं रीत्या सिद्ध्यापत्त्या सप्तभंगित्वस्य जगति सिद्ध्यापत्तेश्च। अतात्विकत्वादेरसिद्धतया तेन समाहितुमशक्यत्वाच्च । अथ मिथ्यात्वबोधकश्रुतीनामुपक्रमादिलिंगानुगुण्येन स्वार्थतात्पर्ये निश्चिते तद्विरुद्धप्रमाणानामबाधकत्वनिश्चयात्सर्वोप्ययमर्थकलापो ऽन्यथानुपपत्तितन्मूलकस्वार्थानुमितिगोचरो भवत्येव । प्रतिवादिनं प्रत्यपि श्रुतिबलेन प्रत्यक्षमाभासीकृत्यान्यदुपपाद्यत इति चेन्न । श्रुत्यर्थनिर्णयार्थं प्रवृत्तस्योपपत्तिविरोधादिपरिहारायानिर्वचनीयत्वादितृतीयप्रकारकल्पना प्रतियोग्यभावादिविरोधपरिहाराय विषमसमानसत्ताकनानाभावादिलोकासिद्धबहुतरपदार्थकल्पना चेति गौरवसहनेन श्रुतीनां मिथ्यार्थकत्वमेव ग्राह्यमुत कल्पनागौरवमपहाय सत्यत्वाद्युक्तार्थकत्वमेवेति तात्पर्यसंदेहकवलितत्वेन श्रुतितात्पर्यनिश्चयोपायाभावात् । प्रत्युतोक्तगौरवानुसंधानेन मिथ्यात्वं यदि दुःखादेरित्याद्यनुव्याख्यानसुधाद्युक्तादिशा मिथ्यात्वपरत्वाभावस्यैव निश्चयात् । एवं प्रतिवादिबोधनमप्युक्तं । उक्तबाधकपरिहारमंतरेण तं प्रत्युपपत्तिविरुद्धायाः श्रुतेरुपन्यस्तुमशक्यतया तत्परिहारस्य श्रुत्यर्थनिश्चयात्प्राक् कर्तुमशक्यतया अन्योन्याश्रयेण साधनोपायाभावात् । तदेतदभिप्रेत्योक्तं सुधायां 'शिष्योऽपि प्राक् प्रबोधात् प्रतिवादितुल्य एव' इति। अन्योन्याश्रयमनुत्तीर्णः कथं त्वदभ्युपगममात्रेण स्वतर्कस्य विरुद्धतां प्रतिपद्येतेति श्रुतीनामद्यापि गहननिविष्टत्वादिति च तस्मात्साध्याप्रसिद्धिर्दुर्वारैवेति स्थितं । प्रतिवादिवाक्यादिना वा कस्यचिदुपदेशादिना वा कथंचित्साध्यस्योपस्थित्या तदभावग्रहपूर्वकव्यतिरेकिव्याप्तिनिश्चयः संभवतीति नाप्रसिद्धविशेषणता दूषणमिति सुधायां व्यवस्थापितत्वात्। अद्वैतमतेपि तद्दूषणत्वस्य तत्र तत्र तैरुक्तत्वात्कथमिदं दूषणमुक्तमित्यत आह । तदिदमिति । तत् परेण स्वग्रंथे आशंक्य सामान्यप्रसिद्ध्युपपादनादिना परिहृतं । इदमेतन्मूलेनाचार्यैरुक्तं इदानीमस्माभिर्व्याख्यातं । परसिद्धं नैय्यायिकसिद्धमित्यर्थः । इदमित्येव पूर्वावुक्तार्थकेन तत्पदेनैतदपि परिहृतं । स्वमतसिद्धदूषणमपहाय नैय्यायिकसिद्धस्वपरिहृतदूषणमात्राभिधाने अथात इति सूत्रस्य प्रथमप्रतिपन्नश्रौतार्थमुल्लंघ्य चरमप्रतिपन्नार्थिकार्थप्रतिपादकपरभाष्यकारस्येव ग्रंथकृतोऽकुशलत्वं स्यादिति परेण स्वग्रंथे ऽप्रसिद्धविशेषणत्वमाशंक्य स्वसिद्धं तद्दूषणत्वरूपं समाधानमपहाय पराभिमतरीत्यैव समाधातुं सामान्यप्रसिद्ध्यादेः प्रदर्शितत्वात्तस्यैव दोषस्यादौ व्यवस्थापने परस्यात्यंताकुशलत्वं प्रकटीकृतं भवतीत्याचार्यैस्तदेव स्फुटमभिहितमित्यभिप्रायात् । अन्यत्रेति । 'आश्रयव्याश्रयासिद्धी साध्यासिद्धिश्च दूषणं ॥ केषांचिन्न ते दोषा व्याप्तौ सत्यां कथंचन' इत्यनेन भक्तिपादीयानुव्याख्यान इत्यर्थः। आचार्यैरेवेति। तेनाचार्यैरत्राप्रसिद्धविशेषणतायाः कंठत उक्तत्वात् तस्य दूषणत्वमेव भवद्भिर्व्यवस्थापनीयं । बाधकभयान्नैय्यायिकसिद्धत्वाभिधानं भवतामयुक्तमिति शंका परिहृता । एवकारस्तु स्थानांतरस्थाचार्यवाक्यमपि न बलादस्मदानुगुण्येन योज्यते किंतु कंठत एवोक्तमिति सूचयति। स्वव्याघातादिकमिति। आदिपदेन प्रमाणबाधपरिग्रहः। ऊहनीयमिति। मूलार्थतयेतिशेषः।

अप्रसित्धविशेषणत्वमित्यस्याप्रमितविशेषणकत्वमित्यर्थो लभ्यते। प्रेत्युपसर्गेण सित्धौ प्रमितित्वलाभात्। अप्रमितविशेषणकत्वं च द्वेधा। साध्यतावच्छेदकस्य साध्ये अभावः, प्रकृतानुमितेः प्राक् साध्यतावच्छेदकविशिष्टस्य सामान्यतोऽपि क्वचिदप्रमितत्वं। तत्राद्यं सर्वमतेऽपि दूषणं। अस्मन्मतेऽपि तस्य प्रतिज्ञाविरोधांतर्गतत्वात्। तत्र द्वितीयस्या प्रसित्धविशेषणत्वेन प्राचां बहुतरव्यवहारात्तत्पदेन तस्यैव झडिति प्रतिभासादुक्तरीत्या पराचातुर्यप्रकटनाय प्रथमतस्तदेवास्माभिर्व्याख्यातमत एवेदमित्युक्तं। स्वमते तु प्रकृतानुमितेः प्राक् क्वचिदप्यप्रमितत्वस्यादूषणत्वे किं विश्वं सदसद्विलक्षणमित्यनुमानस्यापि साधकत्वमुत व्याप्त्यभाव इत्यादिविकल्पेष्वाद्यपक्षदूषणत्वेन 'अन्यत्सदसतोर्विश्वमिति च व्याहतेरमा' इत्यनुव्याख्यानस्य प्रवृत्त्या तद्रीत्या सुज्ञानमित्यस्माभिर्न प्रदर्शितं। शिष्यैर्मूलार्थ तयैवोह्यमित्यर्थः। एतेन परसित्धमात्रदूषणस्य प्रथमतः अभिधाने उक्तप्रयोजनसद्भावेन प्रथमतस्तस्योचितत्वेप्यनंतरमवश्यं वक्तव्यस्य स्वमतासित्धदूषणस्यानभिधाने मूलकृतां न्यूनतोक्तरीत्या मूलेन स्वव्याहत्यादेरपि लाभे संभवति पूर्वमूलेषु नानायोजनाभेदं प्रदर्शितवतां टीकाकृतामत्र मद्वेषे बीजाभाव इति पूर्वपक्षानवकाशः। मूलकृतोक्तत्वात् उक्तरीत्या टीकाकृतापि योजितत्वात्। स्वव्याहतिप्रकारश्च निर्वचनाविषयत्वमनिर्वचनीयत्वमित्युक्ते अनेनैव रूपेण निर्वचनात्स्वकीयनिर्वचनक्रियाव्याघातः। सदसद्विलक्षणमित्युक्तौ विश्वमसन्नेत्युक्ते सदित्येवोक्तं स्यात्। द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इति न्यायात् पुनस्तन्निषेधे कथं न स्वव्याहतिरित्यादिरन्यत्र टीकाकृत्प्रदर्शित एव। उक्तन्यायार्थस्तादृशवाक्यात्पुनस्तल्लाभप्रकारश्च कर्मनिर्णयटीकातोऽवगंतव्यः। विस्तृतिभयान्नेह प्रपंच्यते। सद्विलक्षणत्वसामान्ये असत्वस्यैव गृहीतत्वात् असद्विलक्षणत्वे सद्विलक्षणत्वसामानाधिकरण्याभावग्राहकप्रमाणविरोधः। प्रत्येकमप्रसित्धसद्विलक्षणासद्विलक्षणत्वोभयत्वावच्छिन्नत्वस्य साध्यत्वेपि मिथ्यैव रजतमभादिति बाधप्रमया असत्वस्यैव गृहीतत्वेन तदवच्छिन्नभेदसाधने पुनः प्रमाणबाध एवेति द्रष्टव्यं। ननु कथं स्वव्याहत्यादिकं प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं बाध्यत्वं तदभावोऽबाध्यत्वं सत्वं तद्वान् सन् तद्विलक्षणत्वं च बाध्यत्वमेव। असत्वं च सत्तादात्म्यशून्यत्वं तदवच्छिन्नभेदः सत्तादात्म्यमेव। तथाच बाध्यत्वे सति सत्तादात्म्य साध्यं पर्यवसन्नं। तस्य भावाभावरूपत्वाभावादित्यत आह। आदीति। वक्ष्यमाणदोषा आदिपदग्राह्याः। अयमूहप्रकारः। अत्र निविष्टसत्पदार्थो यद्यबाध्यत्वविशिष्टस्तदा तत्तादात्म्यमबाध्यत्वतादात्म्यमेव। तथाच बाध्यत्वे सत्यबाध्यत्वमेवोक्तं स्यात्। इत्थंच कथं न स्वव्याहतिः। यदि च सदिति प्रतीयमानं तदा तत्तादात्म्यं। सत्वेन प्रतीयमानत्वं तदा अर्थांतरता। असत्ख्यातिवादिनाऽपि शुक्तिरजतादेः सदिति प्रतीतिगोचरतांगीकारात्। अथ तादात्म्यं संबंधविशेषः। तथा चाबाध्यतादात्म्यं नाबाध्यत्वरूपमिति कथं व्याहतिरिति चेन्न। तादृशसंबंधः कश्चन नीलघटयोः यादृशतादात्म्यं तज्जातीयादन्यस्तच्छब्दबोध्यश्चेत्तस्य चाबाध्याधिष्ठानकभ्रमविषयत्वादेतज्ज्ञा (त्व अबाध्यज्ञा) ननिवर्त्यज्ञानविषयत्वादेः कस्यचित्संबंधस्य सत्यपि संभवे न तत्साधनमात्रेणासद्व्यावृत्त्ययोगः। प्रसित्धतादात्म्यसाजात्ये तस्य भेदाभेदसापेक्षत्वेनाबाध्येन सहाभेदस्यापि प्राप्त्याऽबाध्यत्वावच्छिन्नात्यंतभेदात्मकबाध्यत्वं तत्र कथं स्यात्। अन्यथा नीलो घट इति प्रतीतिवत् बाध्योऽबाध्य इति प्रतीतिप्रसंगः। तत्धर्मावच्छिन्नेन सहात्यंतभेदग्रहस्यैव तादात्म्येन तत्धर्मावच्छिन्नग्रहं प्रति विरोधित्वेनाबाध्यतादात्म्येन विद्यमानस्य बाध्यत्वस्याबाध्यात्यंतभेदरूपत्वाभावात्।

न चाबाध्यभेदस्य तादात्म्यापेक्षयाऽधिकसत्ताकत्वान्न विरोध इति वाच्यं। स्वार्थानुमित्याऽनिर्वचनीयत्वासिद्धेः प्रागुक्तसत्ताकभेदानुपस्थित्या विरोधशांत्ययोगात्। जगति उक्तभेदतत्तादात्म्ययोः व्यावहारिकत्वस्यैव वक्तव्यतया विरोधशांत्ययोगाच्च। नच शुक्तितादात्म्यं रजतेनाबाध्यत्वावच्छिन्नप्रतियोगिताकं किंत्विदंत्वाद्यवच्छिन्नप्रतियोगिताकमेव। अबाध्यत्वावच्छिन्नप्रतियोगिताकात्यंतभेदरूपबाध्यत्वस्य सत्वान्नाबाध्यो बाध्य इति व्यवहारापत्तिः। अनिर्वचनीयत्वशरीरेऽपि अबाध्यत्वाश्रयनिरूपिततादात्म्यनिवेशान्न कोऽपि दोष इति वाच्यं। येन केनापि रूपेण तेन सहात्यंतभेदवति केनापि रूपेण तेन सह भेदाभेदयोस्तदधीनतादात्म्यस्य सर्वानुभवविरुद्धत्वात्। अन्यथा करकादितात्पर्यकजलपदघटितजलं पेयमिति वाक्यजानुमानजज्ञानप्रामाण्यप्रसंगः। करकादित्वेन पेयत्वेनात्यंतभेदसद्भावेऽपि त्वद्रीत्या जलत्वावच्छिन्नेन सह तादात्म्यस्याबाधात्। उक्तं च त्वयापि वाचस्पतिकारिकाव्याख्यावसरे 'युगपद्भिन्नदेशकालवृत्तिनोः कटककुंडलयोर्हेमत्वादिनाऽपि नाभेदः' इति। न चैकहेमव्यक्त्युपादानकयोः कटककुंडलयोर्हेमत्वादिनाऽभेदः तत्कटकत्वेन तत्कुंडलत्वेनात्यंतभेदोऽपि तत्रैवोक्त इति येन केनापि रूपेणात्यंतभिन्नस्य येनकेनापिरूपेणाभेदो नास्तीत्येतदयुक्तमेवेति वाच्यं। तत्राप्येतत्कुंडलं हेमत्वेन तत्कटकमित्यप्रत्ययेन हेमत्वेनापि रूपेण तत्कुंडलप्रतियोगिकाभेदस्य तत्कटकेऽनंगीकारात्। तदुपादानवृत्तिहेमत्वाश्रयणेन सहैवाभेदस्यांगकृतत्वात्। अत एवात्यंतभिन्नैकघटनिष्ठरूपरसादिव्यवस्थैवमेवेत्यभिहितं तत्रैव। न चैवमेवं सदुपादानकस्य रजतस्य सत्तासहतादात्म्यमस्त्विति वाच्यं। तेन सहात्यंतभिन्नत्वेन प्रतीयमाने तदुपादानकत्वस्य मृदात्यंतभिन्नत्वेनोपलभ्यमाने पटादावदृष्टत्वेनाबाध्यत्वानाश्रये रजते तदुपादानकत्वायोगात्। किंच बाध्यत्वस्यैव हेतूकृतत्वेन तेन बाध्यत्वविशिष्टसत्तादात्म्यसाधने विशेषणांशस्य साध्यशरीरे नातिप्रयोजनकत्वं। विशिष्टसाध्यत्वे विशेषणपरित्यागेनाबाध्यतादात्म्यरूपसत्तादात्म्यसाधने वा बाध्यत्वहेतोर्विरोधश्च। न चार्थक्रियाकारित्वमेव सत्वं। तदवच्छिन्नतादात्म्यं साध्यत इत्यपि युक्तं। बाध्यस्यार्थक्रियाकारिभिन्नत्वेनैवावगतस्य तत्तादात्म्यसाधने बाधाद्विरोधाच्च। असत्ख्यातिवादिना सौगतेन बाध्यस्याप्यर्थक्रियाकारित्वाभ्युपगमेन तस्यैव जगत्यनिर्वचनीयत्वरूपत्वांगीकारे सौगतवैलक्षण्यासिद्ध्या तत्सिद्ध्यर्थं अन्यस्यैवानिर्वचनीयत्वस्य जगति निर्वक्तव्यतया तत्साधकानुमाने दृष्टांतभूते शुक्तिरजतादौ तादृशस्यैव वक्तव्यत्वाच्च। नापि सर्वं सत्प्रमेयमित्याकारा काचन बुद्धिः। तत्तद्विषयतादात्म्यं तत्साधने तस्याः बुद्धित्वेनैव परिचये सर्वं सदित्याकारस्य शुक्तिरजतादिसर्वविषयस्य भ्रमस्यापि परिचितत्वेन तद्विषयीभूतस्य तादात्म्यस्य शुक्तिरजतादेरसत्वपक्षेऽपि सत्वेन सिद्धसाधनापरिहारात्। तादृशाकारज्ञानेषु इयं प्रमैवायं भ्रम एवेति निर्धारणायोगेन विशिष्यव्यक्तिविशेषस्य निवेशयितुमशक्यत्वात्। तादृशाकारभ्रमत्वेन परिचये तद्विषयतायाः शुक्तिरूप्येऽगीकारात्सिद्धसाधनता। नापि तादृशी काचन प्रमा † व्यक्तिस्तत्वेन परिचयः। घटात्यंतभिन्नत्वेन गृह्यमाणे घटत्वप्रकारकप्रमाविषयात्यंतभेदग्रहस्यौचित्यावर्जितस्य सार्वलौकिकस्य दुरपन्हवताया इव अत्राप्यसदेव रजतमितिरूपेणात्यंतसद्भिन्नत्वेन गृह्यमाणरजते सत्वप्रकारकप्रमाविषयात्यंतभेदस्य तादृशप्रमाव्यक्तिविशेषविषयात्यंतभेदस्य च यो ग्रहस्तस्य दुरपन्हवतया तादृशरजते तादृशप्रमाविषयतादात्म्यसाधने बाधस्य बाध्यत्वहेतोर्विरोधस्य दुर्वारत्वात्। अन्यथा नील

† टिप्पनी—प्रमात्वेन तादृशव्यक्तित्वेन चेत्यर्थः

इति प्रमाविषयाभिन्ने वा सर्वं नीलमिति प्रमाविशेषविषयात्यंतभेदवत्वेन निश्चितेपि घटे नीलतादात्म्यसिध्दिप्रसंगः। न चानिर्वचनीयवादिनामयं विरोधो न संमत इति वाच्यं। अनिर्वचनीयप्रतीतेः प्रागुक्तविरोधस्य सर्वलोकसिध्दस्य स्वेच्छामात्रेण परिहर्तुमशक्यतया स्वार्थानुमितेरेवायोगस्योक्तत्वात्। परार्थानुमाने तूक्तप्रकारः सर्वथा न संगच्छते। यदि सा व्यक्तिरिदं रजतमिति ज्ञानप्रकाररजतविषयकत्वेन स्वपरसंमता तदा तादृशव्यक्तेः प्रमात्वमेव मां प्रत्यसंमतमिति मां प्रति तत्परिचयायोगः। यदि तदविषयकत्वेन मतद्वयासिद्धं ज्ञानमुपादीयते तदा बाध एव। यदि मध्यस्थस्य प्रतिवादिनश्च शुक्तिरजताद्यविषयत्वेन संमतं स्वमतमात्रेण तद्विषयकत्वेन संमतं ज्ञानमुपादीयते तदा तद्विषयात्यंताभिन्नत्वेन गृह्यमाणे तत्तादात्म्यानुमितिः मध्यस्थस्य वादिनो वा न घटत एव। यदि चोभयमतेऽपि प्रमात्वेन शुक्तिरजतविषयकत्वेन च संमतं सर्वं सत्प्रमेयमिति ज्ञानमुपादीयते तदा तद्व्यक्तेः प्रमात्वेन संमतिः। शुक्तिरजते सत्वसंमतिं विना न घटत इति तत्र सत्तादात्म्यसाधनस्य वैय्यर्थ्यमेवेति द्रष्टव्यं। किंच यदि सदित्याकारप्रमेत्यस्य सत्पदघटितवाक्याभिलाप्यप्रमेत्यर्थः तदा शुक्तिभ्रमेण लक्षणया आधुनिकसंकेतेन च सत्पदेनासतोऽपि बोधसंभवात्तद्विषयतादात्म्यसाधने सिद्ध साधनत्वादिकमेव। यदि शुक्तिभ्रमाद्यनधीनतादृशवाक्यसाध्यप्रमोच्यते तदा सर्वं सत्प्रमेयमिति वाक्येन शक्तिभ्रमादिकं विनाऽपि जायमानायाः समीचीनत्वादिप्रकारकप्रमाया अपि ग्रहणापत्त्या तद्विषयतादात्म्यसाधने अर्थांतराद्यनिस्तारात्। नहि समीचीनत्वादौ कोशसिध्दे शक्तिर्नास्ति अबाध्यत्वावच्छिन्ने वर्तत इति राज्ञामाज्ञास्ति। अबाध्यत्वप्रकारकप्रमातात्पर्यक तादृशवाक्यसाध्यप्रमात्वेन तदुपादाने अबाध्यत्वप्रकारकप्रमात्वेन तदुपादानस्य संभवे शिरोवेष्टनन्यायापातः। तत्परित्यागे तथैवोपादाने अबाध्यभिन्नत्वेन निश्चीयमाने तत्प्रमाव्यक्तिविषयतादात्म्यसाधने पूर्वोक्तरीत्या बाधादिरेव। ननु सत्ताजातिमत्तादात्म्यसाध्य इति चेन्न। द्रव्यत्वरजतत्वादिमत्तादात्म्येनापि गृह्यमाणे रजते असत्वसदधिष्ठानकत्वादिसंशयनिवृत्तेरिव तन्मते उक्तसत्तादात्म्यज्ञानेनापि तदनिवृत्तेस्तुल्यत्वेनार्थांतरानिस्तारात्। द्रव्यतादात्म्यज्ञानादेरपि तन्निवर्तकत्वे रजतं द्रव्यमिति व्यवहारादिबलसिध्दतादृशज्ञानबले नोक्तसंशयस्य निवृत्ततया अनुत्पन्नतया वा सत्तादात्म्यसाधनस्याकिंचित्करत्वापातः। द्रव्यतादात्म्यज्ञानस्योक्तसंशयाविरोधित्वं सत्तादात्म्यज्ञानस्यैव विरोधित्वमित्थमित्यत्र नियामकाभावः। द्रव्यत्वादिजातेरिव सत्ताजातेरपि प्रत्यक्षगृहीततया तत्तादात्म्यसाधनायोगः। एतेन सदित्याकारप्रतीतौ स्वरूपतः प्रकारो यः तदवच्छिन्नतादात्म्यं साध्यते। समीचीनत्वादिकं तु न तथेति परास्तं। तादृशधर्मो यदि सत्ता तदर्थांतरं यद्यबाध्यत्वं तदा बाध एवेत्यादिपूर्वोक्तदोषानिस्तारात्। कालसंबंधतादात्म्यमप्यर्थांतरबाधादिना निरस्तं। अस्तु वा सत्तादात्म्यं यादृशं तादृशं इदं सदिति प्रतीतिसिध्दं तत्साधनस्योपयोगो वक्तव्यः। बौद्धाभिहितासत्ख्यातिनिरासार्थमिति चेत् न। शशविषाणं सदिति प्रतीतिबलेन शशविषाणादिरूपासत्यपि सत्तादात्म्यस्यावर्जनीयतया तस्यासत्वव्यावर्तकत्वायोगात्। अनिर्वचनीयसत्तादात्म्यमसति नेति विशेषोपपादनं शशविषाणादिव्यवहारे हेतुर्विकल्प एव। शुक्तिरजतादिव्यवहारहेतुश्च ज्ञानमतः प्रतीतिसिद्धसत्तादात्म्यमेव निवेश्यते। अतो असद्व्यावृत्तिरिति भाषणं, शशविषाणं सदित्यादि प्रतीतौ कालसंबंध एव प्रतीयते नतु सत्तादात्म्यमिति विशेषकथनं, शशविषाणं सदित्यादिप्रतीतावनिर्वचनयिमेव प्रतीयते असच्च सर्वथा निरुपाख्यमेवातो न सत्तादात्म्यवदिति जल्पनं, शशविषाणमिति वाक्याद्यधिकरणप्रकारकमेव

(टीका) अस्तु तर्हि विवादपदं मिथ्या बाध्यत्वात्

ज्ञानं जायत इति भाषणं चेत्येवमादीनि दुर्भाषणान्यर्थापत्त्यादिनिरासप्रस्तावे निरसिष्यंते। अस्तु तर्हीति। विवादपदमिति। असत्वानिर्वचनीयत्वाभ्यां विप्रतिपत्तिविषयीभूतं शुक्तिरजतादिकमित्यर्थः। ननूक्तविवादस्य कोट्यप्रसित्ध्या अयुक्तत्वस्य पूर्वमेवोक्तत्वात्कथमुक्तविवादविषयत्वेन पक्षनिर्देश इति चेन्न। तादृशविवादस्य भ्रांतिमूलकत्वरूपायुक्तत्वकथनेऽपि तत्स्वरूपानपलापात्। नच सद्विविक्तत्वस्य साध्यतया निर्देशात्तत्कोटिकाविप्रतिपत्तिविषयत्वमेव व्याख्येयमिति वाच्यं। बौद्धमायावादिनोर्मायावादिसिद्धांतिनोर्वा तथा विवादायोगात्। गुरुभिर्भास्करेण वा सह तथाविवादसंभवेऽपि अनिर्वचनीयत्वसाधने तत्प्रदर्शनस्यानुपयोगात्। पूर्वानुमाने अनिर्वचनीयत्वस्यैव साध्यत्वेन निर्देशानुरोधात्तादृशविवादस्यैवेदानीं सत्वेन तत्परित्यागेनाप्रक्रांतविवादेनानुमानप्रवृत्त्ययोगाच्च। न चानिर्वचनीयत्वकोटिकविप्रतिपत्तौ सत्यविवेकसाधनायोगोऽनाकांक्षितत्वादिति वाच्यं। असद्भिन्नत्वे सति सदन्यत्वेनानिर्वचनीयत्वं साधयितुमुपोद्घातविधया तत्कथनात्। न चोक्तहेतोरेवानिर्वाच्यत्वेन साध्याविशिष्ट्यमिति वाच्यं। प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपस्य ( रूपात् अन्यस्यैव ) अन्यादृशस्यैवानिर्वचनीयत्वस्य साध्यत्वसंभवात्। केचित्तु भ्रांतिप्रतिपन्नस्य सत्यत्ववादिनैय्यायिकैः सह सत्वानिर्वचनीयत्वरूपभावद्वयकोटिकविप्रतिपत्ताविदमनुमानमित्याहुः। वस्तुतस्तु स्वार्थानुमित्ययोगस्योक्तत्वेन तस्यैवोपपत्तिः शंक्यते। अन्यथा तत्ववादिनः प्रति सद्विविक्तत्वसाधकत्वे सित्धसाधनप्रसंगात्। तत्र विवादपदमिदानीमावयोर्यदनिर्वाच्यत्वसत्वाभ्यां विवादविषयीभूतं शुक्तिरजतादिकमित्यर्थः। तथा च विवादपदमनिर्वचनीयं, बाध्यत्वादिति पूर्वानुमाने अत्र च पक्षविशेषपरिचायकमेव। विवादपदपदं पक्षता तु इदं रजतमिति ज्ञानीयप्रकारताश्रयत्वेनैव भ्रमांतरप्रकारतापन्नानां तत्कालोपस्थितानां पक्षसमत्वाद्वा समूहालंबनानुमितेरुद्देश्यतया तेषामपि पक्षत्वाद्वा न व्यभिचारशंकेति ध्येयं। बाध्यत्वादिति। पूर्वानुमाने असद्व्यावृत्तं स्वप्रकारकबुत्धिविषयताव्यापकानवच्छिन्नत्रात्तिकाभावप्रतियोगित्वदोषप्रयुक्तभानकत्वादिरूपं बाध्यत्वं वाच्यमन्यथासति व्यभिचारापत्तेः। साध्यं तु सदसद्विलक्षणत्वमेव। सत्वासत्वे इत्यनेन सामान्यप्रसिद्धेरभिहितत्वात्। सत्वं तु नोक्तबाध्यत्वरूपहेत्वभावरूपं। तदवच्छिन्नभेदस्य साध्यरूपस्य हेतुसित्ध्यैव सिद्धत्वात्। तद्विशिष्टसद्भेदस्य पूर्वमसिद्धस्य साध्यत्वसंभवेप्यनतिप्रयोजनकतया साध्यशरीरे विशेषणांशवैय्यर्थ्यापरिहारात्। किंतु सर्वं परमार्थसदविनाशीत्यादिबुद्धिविशेषविषयत्वादिरूपमिति। यत्तु स्वप्रकारकेत्याद्युक्तबाध्यत्वं हेतुः त्रैकालिकनिषेधप्रतियोगित्वरूपसत्वावच्छिन्नप्रतियोगिकभेदः साध्य इति तदसत्। यतः परेणासतोप्यत्यंताभावप्रतिगोगित्वस्य स्वमतनिष्कर्षे अनंगीकृतत्वेन तादृशसत्वावच्छिन्नभेदसाधनेनैवासत्वावच्छिन्नभेदस्यापि सित्ध्या पुनस्तद्भेदस्य साध्यकोटौ निवेशायोगात्। प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूप स्वप्रकारकेत्याद्युक्तबाध्यत्वेनोक्तसत्वावच्छिन्नभेदरूपत्रैकालिकनिषेधप्रतियोगित्वसाधनापत्त्या महानसीयवन्हिना वन्हिसाधनवत्साध्याविशिष्टतया दुर्वारत्वापातश्च। तस्य भेदत्वेन साध्यत्वान्न साध्याविशिष्टयमित्यपि न सत्। तत्संदेहे हेतुसंदेहस्य वन्हिसंदेहे महानसीयवन्हिसंदेहस्येवौचित्याऽवर्जितत्वेन दुर्वारत्वे परामर्शायोगरूपदूषकताबीजस्यापरिहारात्। एतदनुमाने पुनर्बाध्यत्वं सत्वप्रकारकप्रमाविषयत्वाभावदोषानधीनसत्वप्रकारक-

(टीका) इत्यनुमानं शुक्तिरजतादेरनिर्वचनीयत्वे मानं मिथ्यात्वस्यासति प्रसिद्धत्वेनाप्रसिद्धविशेषणतानवकाशात् । न चैवमनिर्वचनीयत्वासिद्धिः । समानं खलु सत्यविवेकलक्षणं मिथ्यात्वमसत्यनिर्वचनीये च । तस्मिन्ननेनानुमानेन सिद्धे निर्विशेषस्य सामान्यस्य प्रतिपत्तु (प्रत्येतु) मशक्यत्वेन नेदमसत्प्रतीतत्वादित्यनेनासत्वे प्रतिक्षिप्तेऽनिर्वचनीयत्वस्य (प्र)सिद्धेरित्यत आह ।

**[मूलं] नच धूमत्ववन्हिमथ्यात्वमित्युभयसंप्रतिपन्नं सामान्यमस्ति ॥ ९ ॥**

---

प्रतीतिविषयत्वाभावादिकमसत्साधारणमेव वाच्यं । अन्यथा व्यतिरेकव्याप्तावात्मनो दृष्टांतत्वसंभवेऽपि असद्रूपसपक्षगामित्वाभावे हेतोरसाधारण्यापत्तेः । एतेनानुमानद्वये बाध्यत्वस्यैव हेतुत्वाभिधानमनुचितम् । साधारण्यासाधारण्ययोरन्यतरस्यान्यतरानुमाने आवश्यकत्वादिति परास्तं । शब्दैक्येप्युक्तरीत्याऽर्थभेदात् । अनिर्वचनीयत्वे मानमिति । पूर्वोक्तरीत्या परंपरया मानमित्यर्थः । अन्यथैतदनुमानेन सद्विविक्तत्वस्यैव सिध्यानिर्वचनीयत्वे मानत्वोक्त्यसंगतेः । केचित्तूक्तानुमानेनासत्वाभावव्याप्यप्रतीतत्वलिंगसहितेन सद्भिन्नमसद्भिन्नं चेति समूहालंबनरूपानुमितिरेव जायते । एतदनुमानात्प्राक् स्वार्थानुमानेन सद्भेदस्यासिद्धत्वेन सिद्धसाधनानवकाशात् । असत्वे प्रतिक्षिप्ते इत्युत्तरवाक्येपि सत्वप्रतिक्षेपकाळ एवासत्वे प्रतिक्षिप्ते इत्यर्थः । तथा च सद्भेदासद्भेदोभयस्यैवानिर्वचनीयत्वरूपतयोक्तानुमानमेव साक्षादनिर्वचनीयत्वे मानमिति भाव इत्याहुः तच्चिंत्यं । एतत्पक्षस्यार्थापत्तिपक्षानतिभिन्नतयेदानीमेतदभिप्रायकथनायोगात् । उक्ताभिप्रायकत्वे सद्विविक्तत्वस्य सामान्यरूपतां विनाऽपि प्रकृतानुमाननिर्वाहेण तस्य सामान्यरूपत्वोपपादनखंडनयोरकिंचित्करत्वापत्तेः । परे तु असत्वरूपैकविशेषबाधग्रहसहितैतदनुमानेनैव प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपानिर्वचनीयत्वसामानाधिकरण्यविशिष्टसद्भेदवदित्यनुमितिर्जायते। महानसीयवन्ह्यादिबाधग्रहसहितवान्हिव्याप्यधूमपरामर्शात् पर्वतीयवन्हिमानित्यनुमितिवत् । तथाचैतदनुमानमेवानिर्वचनीयत्वे साक्षान्मानमित्याहुः । तदपि चिंत्यं । अतो मिथ्यात्वे साधिते इत्याद्युत्तरग्रंथाननुगुण्यात् पूर्वानुमानसिद्धसद्विविक्तत्वावच्छिन्ने ऽ सद्विविक्तत्वस्य साधनादनिर्वाच्यत्वासिद्धिः । सद्भेदस्य सामान्यरूपत्वाभिधानं तु व्याहतिपरिहारायेत्यपि न चारु । तथात्वे एकस्य सद्भेदप्रमोपधायकत्वप्राप्त्या उत्तरत्रोभयाप्रामाण्यापादनासंगतेः । विवादपदमानिर्वचनीयमिति । पूर्वानुमानप्रसंजितदोषमत्रोद्धरति । मिथ्यात्वस्येति । उक्तानुमानस्यैव साक्षादनिर्वचनीयत्वसाधकत्वं पराभिप्रेतं मन्वानः पूर्वोक्ताशयमविद्वानाशंकते । न चेति। असिद्धिरिति । असत्साधारणस्यानिर्वचनीयत्वरूपत्वाभावादिति भावः । परंपरया ऽनिर्वचनीयत्वसाधकत्वरूपस्वाभिप्रायमाविष्करोति । समानमिति । निर्विशेषस्येति । विशेषधर्मप्रकारकज्ञानासहितस्य केवलसामान्यधर्मप्रकारकज्ञानस्य विशेषार्थिप्रवृत्त्याद्यनुपयुक्तत्वेनेति पर्यवसितार्थः । इदं च विशेषजिज्ञासाद्वारा वक्ष्यमाणविशेषसिद्ध्यनुकूलतयाऽभिहितं । अनिर्वचनीयत्वस्य सिद्धेरिति । सद्भिन्नत्वरूपसामान्यधर्मवत्वे सत्यसत्वाभावरूपालिंगेन ज्ञाननिवर्त्यत्वरूपस्य वा प्रतिपन्नोपाधावित्यादिरूपस्य वा ऽनिर्वचनीयत्वस्य तदुभयावृत्तिधर्मत्वादिना सामान्यतः सिद्धिरित्यर्थः।

(टीका) चशब्दोऽनुमानांतरदूषणसमुच्चयार्थः । इतिशब्दो निर्देशार्थः । मिथ्यात्वाख्यमिति । स्यादेतदेवं । यदि मिथ्यात्वं नाम सामान्यमसदनिर्वचनीययोरुभयवादिसंप्रतिपन्नं स्यात् । नैतदस्ति । प्रागितोऽनिर्वचनीयस्यैवाप्रसिद्धत्वात् । नचाश्रयासिद्धौ सामान्यं सिद्धं भवति । बाष्पारोपितधूमस्यैवाप्रसिद्धत्वेन तत्र धूमांतरे च धूमत्वसामान्यसिद्धिवत् । अन्यथा तत्रापि प्रसज्ज्येत ।

---

मिथ्यात्व नामेति । सद्विविक्तत्वरूपमित्यर्थः । सामान्यमिति । अनिर्वचनीयत्वासत्वयोर्व्यापकताविशिष्टं सदित्यर्थः। तेन स्वरूपतस्तस्योभयवादिसंप्रतिपन्नत्वेऽपि न क्षतिः । उभयवादीति । स्वार्थानुमानासंभवविवक्षायां तु भ्रमविषयीभूतेषु सर्वेष्वप्यनिर्वचनीयत्वसिद्धियत्नप्राग्दशावच्छिन्नतदुत्तरदशावच्छिन्नावेव ग्राह्यौ । पुरुषस्यैकत्वेऽपि तस्य दशाभेदेनैव वादित्वप्रतिवादित्वव्यवहारात् । अत एवोक्तं सुधायां 'प्राक्प्रबोधाच्छिष्योपि प्रतिवादितुल्य एव' इत्यादि । प्रागित इति । भ्रमप्रतिपन्नप्रकारेषु अनिर्वचनीयत्वसिद्धेः पूर्वमित्यर्थः । अनिर्वचनीयत्वस्यैवाप्रसिद्धत्वादिति । असद्व्यावृत्तं यद्भवता निरुच्यते तादृशतादृशानिर्वचनीयत्वस्वरूपस्यैव सत्वेनाग्रहादित्यर्थः । एवकारेण भ्रमप्रकारमात्रेषु प्रसिद्धत्वाभावेपि स्वरूपतस्तत्सत्वप्रसिद्धिं निराकरोति । न चाश्रयेति । तादृशधर्मस्यैवाप्रसिद्धौ तदाश्रयेऽपि कालसंबंधित्वादिरूपासद्व्यावृत्तरूपेणाप्रसिद्ध इत्यर्थः । अनिर्वचनीयस्यैवेति पाठे तादृशधर्मविशिष्टवस्तुन एव सामान्यतः कालसंबंधित्वादिरूपासद्व्यावृत्तधर्मपुरस्कारेणाग्रहादित्यर्थः । तादृशस्य वस्तुनः अलीकव्यावृत्तरूपेणाग्रहे प्रकृतसत्याविवेकरूपधर्मस्यासत्वतव्द्याधिकरणानिर्वचनीयत्वरूपधर्मद्वयसामानाधिकरण्यरूपस्य तद्द्वयव्यापकत्वरूपस्य वा सामान्यत्वस्य ग्रहीतुमशक्यत्वादिति भावः। आश्रयासिद्धाविति । यादृशरूपविशिष्टधर्मिणमंतरा यादृशधर्मस्य तत्साधारण्यादिना सामान्यता न संभवति तादृशधर्माश्रयधार्मिग्रहाभाव इत्यर्थः । सामान्यं तत्साधारण्यादिसामान्यत्वविशिष्टं सिद्धं ज्ञानं भवतीत्यर्थः । यथाश्रुतं तु न संगच्छते । शशविषाणनरविषाणरूपाश्रययोः स्वरूपाभावरूपासिद्धिसंभवेऽपि सत्याविवेकलक्षणसामान्यस्य तत्र सत्वात् । असद्रूपाश्रयाभावेप्यसति सति च ज्ञेयत्वशशविषाणत्वादिरूपसामान्यस्यांगीकृतत्वाच्च उक्तव्याख्यायां तु न दोषः। धूमत्वादेर्धर्मस्य कालसंबंधित्वादिधर्मविशिष्टधर्मिमात्रसापेक्षत्वात् पर्वतीयधूमबाष्पारोपितधूमादिनिष्ठयत्तद्व्यक्तित्वादीन् प्रति सामान्यधर्मत्वज्ञानं प्रति तत्तत्धूमेषु कालसंबंधित्वज्ञानमपेक्षितं । बाष्पारोपितधूमे कालसंबंधित्वादिसत्वग्रहाभावान्न तस्य तान् प्रति सामान्यधर्मत्वग्रहः । ज्ञेयत्वाभावप्रभृतीनां तु सत्वाश्रयीभूतधर्मिमात्रसापेक्षत्वानियमात् धर्मिस्वरूपमात्रग्रहे तत्र सदात्मके असदात्मके चाभावज्ञेयत्वादीनां वृत्तित्वग्रहेण तस्य सामान्यरूपत्वग्रहः । प्रकृते च सद्विवेकस्यासत्वतद्व्यावृत्तानिर्वचनीयत्वोभयं प्रति सामान्यधर्मत्वज्ञानं प्रति असत्वाश्रयीभूतधर्मिणो असत्वेन ज्ञानस्य अनिर्वचनीयत्वाश्रयधार्मिणस्तु असद्व्यावर्तककालसंबंधित्वादिरूपेण ज्ञानस्यावश्यकतयैतदनुमानात्प्राक् केषामपि तादृशग्रहाभावेन सदसदुभयज्ञानस्यैव सत्वेन तस्य सामान्यरूपत्वज्ञानं दुर्घटमित्यभिप्रायस्य लाभात् । अन्यथेति । उक्तरीत्यनंगीकारे। तत्रापि । धूमत्वेपि। प्रसज्येत । बाष्पारोपितधूमव्यक्तित्वपर्वतीयधूमव्यक्तित्वे प्रतिसामान्यत्वग्रहः प्रसज्येतेत्यर्थः । लोकानामिति शेषः । तेन परस्योन्मत्तवद्दोषविशेषाधीन-

(टीका) अतो मिथ्यात्वे साधितेऽसत्वस्यैव प्रतिपत्तौ सत्यां पुनस्तन्निषेधे सत्प्रतिपक्षतया द्वयोरप्रामाण्यापत्तिः। असत्प्रतीतेरुपपादयिष्यमाणत्वादसत्वप्रतिक्षेपानुपपत्तिश्च।

---

भ्रमसत्वेऽपि न क्षतिः। एतावता किं सामान्यसिद्धिपरिशेषानुमानयोर्दूषणमभिहितं स्यादित्यत आह। अत इति। मिथ्यापदार्थतावच्छेदकसद्विविक्तत्वस्य परस्परव्यावृत्तासत्वानिर्वचनीयत्वसाधारण्यस्यैतावत्कालमगृहीतत्वादित्यर्थः। मिथ्यात्वे। साधिते विवादपदं मिथ्येतिशब्दाभिलाप्यानुमित्या मिथ्यापदार्थतावच्छेदके विषयीकृते असत्वस्यैव विषयीकृतत्वप्राप्त्या मिथ्यात्वस्य सामान्यत्वग्रहरहितैर्लौकिकपरीक्षकैरसदलीकमिथ्यापदानां पर्यायेणैव व्यवहारादिति भावः। अन्यथा घटः पृथिवीरूपं द्रव्यं करका तु जलरूपं द्रव्यमितिवत् शुक्तिरजतमनिर्वचनीयरूपं मिथ्या शशविषाणं त्वसद्रूपं मिथ्येति लौकिकपरीक्षकव्यवहारप्रसंग इत्यर्थः। पुनस्तन्निषेध इति। नेदमसदिति पर्यायशब्दांतरप्रयोगेण तन्निषेधसाधन इत्यर्थः। सत्प्रतिपक्षतयेति। पर्वतोऽग्निमान् धूमात्। पर्वतोऽवान्हिमान् (वन्ह्यभाववान्) पाषाणमयत्वादित्यनुमानयोर्वेत्यर्थः। अप्रामाण्यापत्तिरिति। अनुमितिरूपप्रमानुपधायकत्वापत्तिरित्यर्थः। संशयाकारानुमितिर्भवति नवेत्यत्रेदानीमनिर्भरसूचनायाबोधकत्वापत्तिर्नोक्ता। द्वयोरपि भ्रमजनकत्वापत्तिस्तु नार्थः। विरुद्धयोरुभयोः प्रामाण्यवदप्रामाण्यस्यापि व्याहतत्वेनान्यतरप्रामाण्यावश्यंभावात्। नन्वपरीक्षकैर्मिथ्यापदार्थतावच्छेदकासत्पदार्थतावच्छेदकयोरैक्यस्य गृहीतत्वेऽपि यस्य परीक्षकविशेषस्य भ्रांत्युत्थितेन मिथ्यापदव्यवन्हियमाणे शुक्तिरजतादावसत्यसंभाव्यमानप्रतीतत्वलिंगेनासत्वाभावनिश्चयो जातस्तस्यासत्वमेव मिथ्यापदार्थतावच्छेदकमिति स्वीयप्राथमिकग्रहे अप्रामाण्यधीपूर्वकं मिथ्यापदार्थतावच्छेदके असत्वतदभावोभयाधिकरणवृत्तित्वरूपसामान्यधर्मत्वग्रहः सामान्यतो जायत एव। बलवल्लिंगदर्शनेऽपि प्राथमिकज्ञानापरिवर्ते भ्रांत्युच्छेदादिकमुद्दिश्य परीक्षायां प्रवृत्त्यभावप्रसंगः। तथा चासत्वाभावग्रहसहितसद्विविक्तत्वरूपमिथ्यात्वसाधकानुमानेनैवासत्वव्यधिकरणधर्मसामानाधिकरण्यविशिष्टसद्विविक्तत्ववदिति रूपेणानुमितिर्जायते। सत्वव्यधिकरणसद्विविक्तत्वसमानाधिकरणधर्मत्वेनानिर्वचनीयत्वं विषयीकरोति। तस्यैवानिर्वचनीयत्वात्मकत्वात्। अथवा सत्वाभावसहितयाविशिष्टप्रथमानुमानसिद्धमिथ्यापदार्थतावच्छेदकत्वरूपव्यतिरेकिलिंगेन सामान्यव्याप्तिज्ञानादिना वा सदसदुभयावृत्तिधर्मत्वादिनानिर्वचनीयत्वानुमितिर्भवत्येव। एतेन ज्ञाननिवर्त्यत्वादिरूपानिर्वचनीयत्वस्याप्येतदनुमानात्प्राक् क्वचित्सिद्धावेतदनुमानवैय्यर्थ्यमसिद्धौ पुनरप्रसिद्धविशेषणतेति शंकानवकाश इत्यत आह। असत्प्रतीतेरिति। उपपादयिष्यमाणत्वादिति। अर्थापत्तिनिराकरणप्रस्ताव इत्यादिः। असत्वप्रतिक्षेपानुपपत्तेश्चेति। तथा च त्वन्मतमूलाग्रहरूपदोषविशेषशून्यानां केषामपि परीक्षकाणां स्वरसतोलोकरीत्या मिथ्यात्वेन व्यवन्हियमाणे असत्वाभावबुद्धिर्न जायते। तथात्वे लोकानां सदसत्वव्यवहारवत् असद्भिन्नमिदं मिथ्येति तृतीयप्रकारस्यापि व्यवहारस्य प्रसंगः। न हि परीक्षापि लोकानुभवातिक्रमेणैव कर्तव्या। तथात्वे तस्योन्मत्तप्रलापतुल्यत्वापत्तेः। किं त्वविप्रतिपन्नलोकानुभवस्य विषयव्यवस्थैव कर्तव्या। इत्थं चोक्तरीत्याऽपि नानिर्वचनीयत्वसिद्धिरिति भावः। नन्वेवं सति सामान्यसिद्धिपरिशेषाभ्यां कस्याप्यपूर्वार्थस्यासिद्धिप्रसंगः। सामान्यानुमानसाध्यस्य प्रसिद्ध-

(टीका) ननु सर्वज्ञासर्वज्ञकर्त्रोः कर्तृत्वसामान्यस्य प्रागीश्वरसिद्धेरसिद्धेः (प्रागसित्थेः) कार्यत्वादिना क्षित्यादिकर्तृमात्रसिद्धावीश्वरसिद्धिरेवं सति दुर्लभा स्यात्। न स्यात्। नहि क्षित्यादिकर्तृताव्यतिरिक्तमीश्वरत्वं सिषाधयिषितं। यदर्थं पुनरारंभो भविष्यति। सर्वज्ञत्वादेरपि तदंतर्भावात्। ये तु कार्य(त्वादिनाकतृ)त्वेन कर्तृमात्रसिद्धिमंगीकृत्य सार्वज्ञादिसिद्धौ पुनः परिशेषेण प्रयतंते तेषां कथमितिचेन्न। यतोऽस्त्वत्र प्रमेयविशेषः।

---

विशेषात्मकत्वेन पर्यवसन्नत्वेन परिशेषेण पुनस्तत्प्रातिषेधे सत्प्रतिपक्षतया भवदुक्तरीत्योभयाप्रामाण्यापत्तेः। अतस्तत्र यः परिहारः स प्रकृतेऽपि तुल्य इत्याशयेनोदाहरणतया तावदेकस्थलमुद्धाट्याशंकते। नन्विति। अप्रा(सि)द्धेरनिश्चयात् दुर्लभेति सर्वज्ञकर्तुरनुपस्थित्या जायमानानुमितिः सकर्तृकत्वत्वेनासर्वज्ञकर्तृकत्वत्वेनासर्वज्ञकर्तृकत्वमेव क्षित्यादाववगाहते। परिशेषे प्रवृत्तस्य पुनस्तन्निषेधे उभयाप्रामाण्यमेव स्यादित्यर्थः। अतस्तत्र सामान्यत्वज्ञानं कर्तृत्वे अस्तु वा न वा वस्तुतस्तादृशसामान्यरूपकर्तृत्वपुरस्कारेण कर्त्रवगाहिनीमनुमितिं प्रत्यसर्वज्ञकर्तृत्वरूपविशेषधर्मावच्छिन्नाभावग्रहस्याविरोधित्वं वाच्यं। एवं सद्विविक्तत्वरूपसामान्यधर्मप्रकारकानुमितिं प्रति सद्भेदविशिष्टासत्वरूपाविशेषधर्मावच्छिन्नभेदग्रहो वा वस्तुतः तव्द्याप्यसत्वावच्छिनप्रतियोगिकभेदग्रहो वा सद्विविक्तत्वस्यानिर्वचनीयत्वासत्वोभयानिरूपितसामान्यत्वाग्रहवेलायामप्यविरोधीत्यवश्यं वक्तव्यं। तथा च सामान्यासिद्धिपरिशेषाभ्यां अनिर्वचनीयसिद्धिरिति भावः। सद्विविक्तत्वरूपामिथ्यात्वरूपमसत्वादतिरिक्तं वस्तु अनिर्वचनीयत्वासत्वयोर्व्यापकमित्यभिमानः दृष्टांतासंमत्योक्तिं तावत् खंडयाति। न हीति। पुनरारंभः। परिशेषाय प्रसक्तप्रातिषेधावसरः तर्हि क्षित्यादिकर्तुः सर्वज्ञत्वासिद्ध्या कथमीश्वरसिद्धिरित्यत आह। सर्वज्ञत्वादेरपीति। उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वस्यैव प्रथमानुमानसाध्यतया तेनैवेश्वरस्य सिद्धत्वादिति भावः। उदाहरणांतरसंभवान्न प्रमेयखंडनं भवतीत्याशयेन शंकते। ये त्विति। हविरादिजन्यादृष्टद्वारा जीवकर्तृकत्वमादाय सिद्धसाधनतावारणायाननुगमभिया स्वोपादानेतिक्रमं विहायादृष्टद्वारा कृतिमत्पुरुषजन्यत्वं प्रसाध्येश्वरसिद्धयेऽसर्वज्ञकर्तृकत्वं निषेधयतामित्यर्थः। भवदुक्तस्थले सामान्यविशेषरूपद्वयसत्वादुक्तन्यायसंभवेऽपि प्रकृते असत्वसद्विविक्तत्वयोरैक्यमेव न सामान्यविशेषभावः। तत्प्रमाणस्य तदधिकरणवृत्तित्वग्रहसहिततदनधिकरणवृत्तित्वग्रहस्य भवदभिमतानिर्वचनीयोपस्थितेः पूर्वमसत्वेन पूर्वोपपादितरीत्या मिथ्यात्वस्यैवासत्वरूपत्वं। एतदुपपादनार्थमेव मूले मिथ्यात्वस्यासत्वादिकं प्रति सामान्यरूपत्वग्रहो निराकृतः। तथाच प्रथमानुमानसिद्धासत्वावच्छिन्नभेदस्यैव द्वितीयानुमानेन साधने सत्प्रतिपक्षत्वं अस्माभिः पूर्वमुक्तं। त्वया तु अस्मदभिप्रायमबुद्ध्वा अपूर्वविशेषोपस्थितेः प्राक् सामान्यरूपावच्छिन्नग्रहं प्रत्युपस्थितविशेषारूपावच्छिन्न अभावग्रहस्यैव विरोधित्वमस्मदभिमतामिति मन्वानेनेयं प्रतिबंदिरभिहितातो नेदं युक्तमित्याशयेनोभयत्र वैलक्षण्यं पूर्वग्रंथाभिप्रेतं स्फुटीकुर्वन्नुक्तदोषं निराह। नेत्यादिना। ईश्वरानुमानप्रमेयीभूतभवदनुमानप्रमेयीभूतसाध्ययोः विशेषः। विशेष-

(टीका) यन्मिथ्यात्वसाधने यथाऽसत्वस्यैव प्रतीतिर्न तथा कर्तृत्वसाधनेऽसार्वज्ञादि-प्रतीतिर्येन सत्प्रतिपक्षता स्यात्। यः कर्ता नासौ सर्वज्ञ इत्यस्त्येवेति चेन्न। प्रकृते मिथ्यात्वस्यैवासत्वेन तेन तदसाधनात्

---

निषेधार्थे प्रवृत्तानुमानांतरप्रतिबध्यग्रहविषयत्वाभावतद्ग्रहविषयत्वरूपवैलक्षण्यमस्तीत्यर्थः। तदेवोपपादयति । मिथ्यात्वेति । सर्वैर्लौकिकैस्त्वदितरवैदिकैः प्रेक्षावद्भिश्च मिथ्यालीकानृतासदादिशब्दानां पर्यायेणैव प्रयोगेणासदादिपदमिथ्यापदार्थतावच्छेदकैक्यत्वस्यैव सर्वैर्गृहीतत्वान्मिथ्येत्युक्तेऽसत्वस्यैव प्रतीतिः। तयोः सामान्यविशेषभावे यत्किंचित्पृथिवी न घट इतिवत् यत्किंचिन्मिथ्या नासत् नालीकमित्यादिव्यवहारस्य क्वचिदपि लोके अभियुक्तशास्त्रे चापत्तेः। सत्वासत्वातिरिक्ततृतीयप्रकारमिथ्यात्वरूपसामान्यधर्माश्रयस्य लोकानुभवसिद्धत्वे तद्व्यवहारे बीजाभाव इति भावः। न तथेति। कर्तृत्वस्यैतन्मते ज्ञानाद्य घटितत्तया कृत्याश्रयत्वमात्रेणैव कर्तुरनुमानेन प्रतीतिः। तथा च कृत्याश्रयजन्याक्षित्यादावसर्वज्ञजन्यत्वाभावसाधने तादृशकर्तरि असर्वज्ञभेदसाधने वा प्रथमानुमानसाध्याभावासाधनाभावान्न सत्प्रतिपक्षत्वमिति भावः। ननु लोके कर्तृत्वेन प्रतीयमानेषु सर्वेषु असार्वज्ञस्यैव भूयो दर्शनेन सकर्तृकत्वस्यासर्वज्ञकर्तृकत्वव्याप्यत्वेन गृहीतत्वात्। क्षित्यादौ सकर्तृकत्वरूपव्याप्यग्रहबलादसर्वज्ञकर्तृकत्वबुद्धिः प्रथमानुमितिद्वितीयक्षणे जायत एव। तथा च तत्रासर्वज्ञकर्तृकत्वाभावसाधने सत्प्रतिपक्षता स्यात्। साध्यव्यापकत्वेन गृहीतधर्माभावग्रहसाधकस्यापि साध्यग्रहं प्रति परंपरया झडिति विरोधित्वेन सत्प्रतिपक्षरूपत्वस्य भवतैवेदानीं स्वीकृतत्वात्। अन्यथा भवदुक्तस्यासत्वाभावसाधकहेतोः सत्प्रतिपक्षरूपत्वाभावप्रसंगात्। अतस्तत्र भवद्भिरेतावदेव वक्तव्यं। सर्वेषां तादृशव्याप्तिग्रहो न जायत एव। भूयो दर्शनमात्रस्यानुकूलतर्काभावे व्याप्त्यनिश्चायकत्वात्। केषांचिद्भ्रांतानां तथा व्याप्तिभ्रमसंभवेपि उक्तानुमित्यनंतरं तादृशव्याप्तिस्मरणनियमाभावेन सकर्तृकत्वेन सेत्स्यमाने क्षित्यादावसर्वज्ञकर्तृकत्वाभावसिद्धिद्वारा ईश्वरसिद्ध्यनंतरमुक्तव्याप्तिग्रहे अप्रामाण्यबुद्धिरुदेतीति तथा मयाप्येतावदुच्यते। अनिर्वचनीयोपस्थितेः प्राक् मिथ्यात्वासत्वयोः व्याप्तिग्रह एव केषांचिन्न जायते। अनुकूलतर्काद्यभावात् केषांचिद्भ्रांतानां तद्भ्रमसंभवेपि तस्य मिथ्यात्वानुमितिकाले स्मरणानियमेन मिथ्यात्वानुमित्यनंतरं नियमेनासत्वग्रहे बीजाभावेन मिथ्यात्वेन सिद्धेऽसद्भेदसाधनेनानिर्वचनीयसिद्ध्यनंतरं तत्राप्रामाण्यग्रहो भविष्यतीत्याशंकां मिथ्यात्वे साधितेऽसत्यस्यैव यथाप्रतीतिरित्यादिकस्योक्ताभिप्रायमज्ञात्वा व्याप्तिबलेनासत्वस्यैव प्रतीतिरित्यन्यथाभिप्रायग्रहपूर्विकामाशंकां स्वाभिप्रायाविष्करणेन निराकर्तुमनुवदति। यःकर्ता नासाविति। इदं वाक्यं यत्सकर्तृकं तदसर्वज्ञकर्तृकमेवेति व्याप्तिप्रदर्शनोपक्षीणं ज्ञेयं। इत्यस्त्येवेति। मिथ्यासत्वयोर्यथाव्याप्तिग्रहो वर्तते तथाऽत्राप्यस्त्येव। अतस्तन्मूलवैषम्यप्रदर्शनमयुक्तमिति हृदयं। व्याप्तिसदसद्भावकृत एवासत्वोपस्थितिनियमोऽसर्वज्ञकर्तृकत्वोपस्थित्यभावश्चेति वैषम्यमनुमानद्वये सिद्धांत्यभिप्रेतमित्यभिमानः शंककस्य वर्तत इत्येतमर्थमस्त्येवेत्यत्रत्यैवकारो ध्वनयति अत्राप्यस्त्येव। तत्र को विशेष इति रीत्या। अन्यथेश्वरानुमाने सत्प्रतिपक्षोपपादनमात्रतात्पर्यकत्वे व्याप्तिरस्तीत्येतावता पूर्तावेवकारानर्थक्यप्रसंगात्। तत्रैव परिहारमनुक्त्वा प्रकृतानुमाने तद्वैषम्यबोधकस्य प्रकृत इत्युत्तरग्रंथस्यासंगतिप्रसंगाच्च। पराभिमानं निराकृत्य समाधत्ते। प्रकृते इति। मिथ्यात्वस्यैवासत्वेनेति।

(टीका) अस्य चाश्रयासिद्ध्यादिना निराकरणात्।

पूर्वोक्तरीत्या असत्पदार्थतावच्छेदकत्वेनासत्वरूपत्वेनेति वार्थः। तेन सद्विविक्तत्वरूपमिथ्यात्वेन तदसाधनात् व्याप्तिबलेनासत्वग्रहस्यानंगीकारात्। तथा च सद्विविक्तत्वसाधनमेवासत्वसाधनरूपमिति पुनस्तन्निषेधे सत्प्रतिपक्षतैव स्यादिति भावः। ननूक्तपरोक्तदूषणायासत्वमिथ्यात्वयोरैक्यस्येदानीमभिप्रेतत्वे मूले तथैव वक्तव्यं। किमर्थं तस्य सामान्यरूपतानिराकरणमनुपयुक्तत्वादित्यत आह। अस्य चेति। मिथ्यात्वस्यैवासत्वेनेति पूर्ववाक्ये एवकारेणासत्वे मिथ्यात्वसामान्यरूपत्वावच्छिन्नान्यस्य तादात्म्यं व्यवच्छिद्यते। प्रथमांतातिरिक्तविशेषणसंगतैवकारेणान्ययोगव्यवच्छेदात्। मिथ्यात्वान्यस्मिन्नसत्पदार्थतावच्छेदकत्वस्य वा सत्वरूपत्वस्य वा निराकरणेऽसत्तदन्यसाधारणसामान्यरूपे मिथ्यात्वतादात्म्यस्यार्थतो व्यवच्छिन्नत्वात्। एवं च पूर्ववाक्ये तस्य प्रक्रांतत्वेन वा एतन्मूलव्याख्यावसरे तस्य बुद्धिस्थत्वेन वाऽस्येति मिथ्यात्वस्यासत्वान्यसामान्यधर्मतादात्म्यं परामृशति। तथाच मिथ्यात्वस्य सामान्यरूपतया सत्वान्यतादात्म्यस्याश्रयासिध्यादिना असदन्यानिर्वचनीयरूपाश्रयस्यासदन्यत्वेनासिद्ध्या आदिपदोपात्तेन च तत्प्रयुक्तसामान्यरूपत्वनिराकरणेन च निराकरणादित्यर्थः। सामान्यरूपत्वनिराकरणं विना मिथ्यात्वस्यासत्वरूपताया व्यवस्थापयितुमशक्यत्वात्तदर्थं सामान्यरूपतानिराकरणं मूलकृतो युक्तमिति भावः। एतत्पक्षे मूलं नानुपयुक्तमिति पंचम्यर्थं प्रति साध्यधर्मपर्यवसानत्वेनाध्याहर्तव्यं। यद्वा मिथ्यात्वस्यैवासत्वरूपत्वं कुत इत्यत अस्य चेति। सामान्यरूपत्वस्येत्यर्थः। मिथ्यात्वस्यैवासत्वेनेति पूर्वेणैव पंचम्यर्थान्वयः। निराकरणस्य तद्धेतुताया उपपादितत्वात्। मूलानुपयुक्तत्वपरिहारस्त्वार्थिको ऽवसेयः। यद्वा अस्य चेत्यस्य मिथ्यात्वस्यासत्वरूपत्वस्य चेत्यर्थः। अव्यवहितपूर्ववाक्ये कंठत एवोपात्तत्वेन प्रकृतत्वात्। सिध्यर्थमिति शेषः। एवार्थश्च। तथाच मिथ्यात्वस्यासत्वरूपत्वस्य सिध्यर्थमेव मूलेनाश्रयासिद्ध्यादिप्रदर्शनादिना मिथ्यात्वस्य सामान्यरूपतायाः निराकरणात्। मिथ्यात्वस्यैवासत्वेनेति पूर्वेणान्वयः। अन्यत्पूर्ववत्। यद्वा यः कर्तेति वाक्यस्यैतावानेव भावः। मिथ्यात्वसाधने व्याप्तिबलादसत्वस्यापि सिद्धिः। पूर्वानुमानफलरूपैवेति पुनरसत्वस्य प्रतिक्षेपे सत्प्रतिपक्षत्वं त्वदनुमानस्य, नैवमीश्वरानुमानस्य। सकर्तृकत्वेनासर्वज्ञकर्तृकत्वस्याप्रतीत्याऽसर्वज्ञकर्तृकत्वसिद्धस्तत्फलत्वाभावेन तत्प्रतिक्षेपकानुमानस्य सत्प्रतिपक्षत्वाभावे प्रमेयविशेषकृतमनुमानस्य वैलक्षण्यं प्राप्तमितीश्वरानुमानप्रतिबंदीदानं न घटत इति यद्भवतोऽभिप्रेतं तन्न संगच्छते। अत्र यः कर्ताऽसौ सर्वज्ञ इति व्याप्तिसद्भावेनात्रापि भवदुक्तरीत्या प्रमेयसाम्यादिति स्वाभिप्रायमुद्घाट्य प्रमेयवैषम्यमुपपादयति। मिथ्यात्वस्यैवेति। तथाच प्रकृते साक्षात्साध्य एव सत्प्रतिपक्षत्वं नैवमीश्वरानुमाने अतो वैषम्यं युक्तमिति भावः। वैषम्यसाधनेन किमागतमिति चेत् प्रतिबंद्यादिदातुरयमाभिप्रायः। यद्यदस्मदनुमानं उक्तजातीयदूषणबलादसाधकं स्यात् ईश्वरानुमानमप्यसाधकं स्यात्। नचैवं तस्मात्तद्वदिदमपि असाधकं न भवतीति। नचात्र व्याप्त्यभावः। विशेषव्याप्त्यभावेऽपि यद्विशिष्टस्यैकस्य यद्भवति तस्यापि तद्भवतीति सामान्यव्याप्तिसत्वात्। प्रदर्शिता चेयं रीतिः सुधायामेव आभाससाम्योपपादनप्रस्तावे। तथा च तत्परिहारे आपादकासिद्धिं वक्तुं तयोर्विशेष उपपादनीय इति तदुपपादनं युक्तमेवेति। ननूक्तानुमानस्येश्वरानुमानवैषम्यस्योक्तरीत्योपपादनेनापात्तिपरिहारो न घटते। तद्व्यक्तित्वकृतवैषम्यस्य सर्वत्र संभवेन

एतादृशापादनमात्रोच्छेदप्रसंगात् । किंतु येन यज्जातीयदूषणभूषणवत्वान्यतरादिना सजातीयं यत्तत् साधकत्वासाधकत्वान्यतररूपेण तत्सजातीयमिति व्याप्तिमाश्रित्येदमापाद्यते । ईश्वरानुमानेपि पूर्वोक्तरीत्या सत्प्रतिपक्षताया उपपादितत्वात् । सत्प्रतिपक्षे भवदुपपादितरीत्या अवांतरवैचित्र्यस्याकिंचित्करत्वादित्यत आह । अस्य चेति । चस्त्वर्थः । प्रकृतत्वादीश्वरानुमानप्रतिपक्षानुमानमस्येति परामृशति । आश्रयेत्यनेन । प्रतिपक्षोत्थापनामूलभूतव्याप्त्यादिपरिग्रहः । व्याप्तिमाश्रित्यानुमानं प्रवर्तत इति प्रेक्षावद्व्यवहारात् । आदिपदेन स्थापनानुग्राहकस्य प्रतिपक्षबाधकस्य ' यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते ' इत्याद्यागमस्य ग्रहः। तथा चायमर्थः। ईश्वरानुमानप्रतिपक्षस्य स्वोपष्टंभकव्याप्तिपक्षधर्मत्वाभावागमबाधादिना निराकरणात् । अस्मदुक्तसत्प्रतिपक्षस्योक्तरीत्या निराकरणायोगेन दृढत्वरूपविशेषसत्वान्न मिथ्यात्वानुमानेश्वरानुमानयोः सत्प्रतिपक्षितत्वेनापि साम्यमिति। ईश्वरानुमानप्रतिपक्षनिरासस्त्वित्थं। पूर्वोक्त यथाश्रुतव्याप्तिबलेन क्षित्यादिकर्तारं पक्षीकृत्य क्षित्यादिकर्ता असर्वज्ञः कर्तृत्वात्संमतवदिति अनुमानेन असर्वज्ञत्वस्य क्षित्यादिकर्तरि सिद्धत्वात् पुनः तन्निषेधे अनुमानांतरेण कृते सत्प्रतिपक्षत्वं परस्परानुमानयोरित्यभिप्रायो वा तद्वाक्यपर्यवसितां सकर्तृकत्वे असर्वज्ञकर्तृकत्वव्याप्तिमवष्टभ्य क्षित्यादावसर्वज्ञकर्तृकत्वसिद्ध्या पुनस्तन्निषेधे सत्प्रतिपक्षत्वमिति वाऽभिप्रायो भवेत् । नोभयमपि संभवति। सहचारदर्शनेपि व्याप्तिग्राहकतर्काभावेन व्याप्त्यसिद्ध्या असर्वज्ञत्वतादृशकर्तृकत्वसाधकानुमानयोरनुत्थितेः यः सर्वज्ञ इत्याद्यागमबाधश्च । यो यदपेक्षया अधिकपदार्थकर्ता स ततोधिकाविशेषज्ञ इति सामान्यव्याप्तिमूलकप्रबलानुमानबाधश्च। सार्वज्ञ्यं विना क्षित्यादिकर्तृत्वमेवानुपपन्नमित्यनुकूलतर्कोपेतत्वेन स्थापनायाः प्राबल्याच्च । किंच सर्वज्ञत्वतत्कर्तृकत्वसाधकानुमानप्रतिपक्षभूतेनानुमानांतरेणैतदनुमानसाध्यग्रहप्रतिरोधमात्रं क्रियते किं वा क्षित्यादिकर्तृत्वतन्निष्ठसकर्तृकत्वयोः व्यापकत्वेन गृहीतसर्वज्ञत्वतत्कर्तृकत्वाभावसाधकत्वेन क्षित्यादौ सकर्तृकत्वानुमितिप्रतिरोधः क्रियते। आद्ये प्रथमस्येश्वरानुमानस्य न काचिद्धानिः। तत्र अस्मदादिवैलक्षण्येनेश्वरस्यापि सिद्धेः। द्वितीये क्षित्यादिकर्ता न सर्वज्ञ इत्यस्याश्रयासिद्धिः। क्षित्यादिकमसर्वज्ञकर्तृकं सकर्तृकत्वादित्यनुमानस्य पक्षे हेत्वासिद्धिः। प्रतिपक्षानुमाने प्रथमानुमानस्यैवालब्धशरीरत्वात् तथा चानयोर्दुर्लभत्वेन न सर्वज्ञत्वतत्कर्तृकत्वसाधकानुमानप्रतिबोधकतेति आदिपदेनेश्वरानुमानस्यागमसाहाय्यकथनेनैतदनुमानस्येश्वरासाधकत्वस्य स्वयमेव विष्णुतत्वनिर्णये उक्तत्वादत्र तस्य साधकत्वोक्त्या विरोध इत्यपि निरस्तं । आगमसाहित्यासाहित्यदशाभेदेनोक्तिद्वयव्यवस्थायाः व्यंजितत्वादिति । केचित्तु किं कर्तृत्वस्यैवासर्वज्ञत्वादिरूपत्वादसर्वज्ञत्वनिषेधकेन सत्प्रतिपक्ष उक्तोक्तरीत्या परंपरया। नोभयथाप्येतत्साम्यं प्रकृतानुमानस्येति वक्तुमाद्यं तावन्निराह। मिथ्यात्वसाधन इत्यादिना । द्वितीयं शंकते । य इति । तथापि वैषम्यमुपपादयति । प्रकृत इति । तथा च वैषम्यमेवेति भावः । अस्य च मिथ्यात्वानुमानसाधकानुमानस्य चाश्रयासिद्ध्यादिना आश्रयासिद्धिमूलकासामान्यासिद्धिस्तन्मूलकं चासत्वमिथ्यात्वयोरैक्यस्थापनं । ततश्चासत्वनिरासकहेतुना सत्प्रतिपक्ष इति क्रमेण निराकरणादित्यर्थः । ईश्वरानुमानवैषम्योपपादनमात्रेण प्रकृते यद्येनाविशिष्टमित्याभिप्रेतापादकस्य परिहृतत्वेनेश्वरानुमानसबलत्वविचारस्यानवसरात्स न कृत इति व्याचक्षते ।ननु सत्वावच्छिन्नभेद एव यद्यसत्वं

स्यात्तदा भवेदस्य सत्प्रतिपक्षत्वं। तदेव न किंतु निरुपाख्यत्वं। उपाख्यत्वं तु अखंडो धर्मः। असद्व्यावृत्तस्तदभावो निरुपाख्यत्वं शब्दवृत्त्यविषयत्वं वा तत्। ब्रह्मणो वाच्यत्वाभावेऽपि लक्षणागोचरत्वान्नासत्वापत्तिः। एतेन यच्चासत्वमर्थक्रियाकारित्वाभावः तर्हि तदवच्छिन्नभेदो अर्थक्रियाकारित्वमेव। तच्च शुक्तिरूप्ये रजतोचितक्रियारहिते प्रत्यक्षबाधः। तस्यापि * कथंचिदर्थक्रियाकारित्वमिति पक्षस्तु (ज्ञान एव शक्तिविशेषोपपादनेन) निराकरिष्यते। तथात्वेपि वा सौगताभिमतस्य सत्ख्यातेर्निराकरणाभावः। तेनापि शुक्तिरजते भवदुक्तरीत्या यथाकथंचित् ज्ञानावच्छेदकतया अर्थक्रियाकारित्वस्यानिवारितत्वात् असत्वेनाभ्युपगते जगति अर्थक्रियाकारित्वस्याभ्युपगतत्वाच्च। नाप्यपरोक्षप्रतीत्यविषयत्वं प्रतीत्यविषयत्वं वा तदवच्छिन्नभेदस्यापरोक्षप्रतीतिविषत्वरूपतया स्वार्थानुमापकस्य सिद्धसाधनताप्रतीतत्वस्य धर्मादावपि भावेन व्यभिचारः। अपरोक्षतया प्रतीतत्वस्य हेतुत्वे साध्यावैशिष्ट्यं। असत्वस्य प्रतीतत्वाभावरूपत्वे स्फुटं साध्यावैशिष्ट्यं। सर्वस्याप्यस्य शून्यवाद्यभिमततया शून्यवाद्युक्ताद्वैलक्षण्यस्य शुक्तिरजते जगत्यप्यसिद्ध्याऽर्थांतरात्। शुक्तिरजतादावुक्तग्रहवतां लौकिकानां मतांतरानुयायिनां चालीकमसदिति व्यवहारस्य सत्वेन भवदभिमतानुमानेनापि तस्यैव धर्मस्य सिद्धिप्राप्त्या पूर्वोत्पन्नग्रहेऽप्रामाण्यग्रहानुत्पादनेनैतत्साधनस्याकिंचित्करत्वाच्च। नापि सत्वेन प्रतीत्यनर्हत्वं। तच्च सत्तादात्म्याभावः तेन गुरुत्वादावतींद्रिये इदं सदिति प्रात्यक्षिकप्रतीत्यभावेऽपि न क्षतिः। तस्यापि फलाद्यवच्छिन्नसद्रूपचित्येवाध्यस्तत्वेन सत्तादात्म्याक्षतेः। एवं च शुक्तिरजतादेरसत्वग्रहवतां तादृशसत्तादात्म्यस्यासिद्धत्वेन प्रतीतत्वप्रत्यक्षप्रतीतत्वादिलिंगैस्तादृशासत्वाभावरूपसत्तादात्म्यानुमितिर्विशेषग्रहवतां परीक्षकाणामुपपद्यत इति। तत्र सत्तादात्म्यस्य भेदप्रतियोगितावच्छेदकसत्वघटितत्वे तदघटितत्वे वा दूषणानां पूर्वमुपपादितत्वादिति निरस्तं। निरुपाख्यत्वरूपासत्वाभावरूपसोपाख्यत्वस्यैव साध्यत्वेन तस्य च भेदप्रतियोगितावच्छेदकसत्वापेक्षयाऽतिरिक्तत्वेन व्याघातादिविरहादित्यत्राप्येतदेवोत्तरं। अस्य चेति। मिथ्यात्वान्यनिरुपाख्यत्वानिष्ठस्य प्रकृतसाध्यरूपभेदप्रतियोगितावच्छेदकत्वेनाभिमतासत्वतादात्म्यस्य पूर्वोक्तरीत्या परामर्शः। चोप्यर्थे। $ असत्वव्यवहारगोचरव्यावृत्ताश्रयासिध्यादिना निराकरणादित्यर्थः। आदिपदेन प्रमाणाभावपरिग्रहः। पंचम्याः पूर्वेणान्वयः। यदवच्छिन्नभेदः प्रतीतत्वेन साध्यः मिथ्यात्वस्यैव तादृशासत्वरूपत्वेनेत्यर्थः। इदमुक्तं भवति। सोपाख्यत्वं नाम कश्चिदखंडो धर्मः सद्व्यवहारगोचरेष्वेव स्वीक्रियते उतान्येष्वपीति। आद्येऽपि परीक्षादिप्रवृत्तावपि यन्नासद्व्यवहारभागि किंतु सर्वथैव यत्सद्व्यवहारालंबनं तत्रैवोत कदाचित्सद्व्यवहारगोचरेष्वपि। आद्ये शुक्तिरजतादेरतथात्वेन घटादेरेव तथाभूततया परीक्षादिनाऽसदेवरजतमभादिति सद्भेदग्रहवता तत्र निरुपाख्यत्वस्यैव गृहीतत्वेन तत्र तदवच्छिन्नभेदसाधने सत्प्रतिपक्ष एव (बाध एव)। द्वितीये शशविषाणादेरपि शब्दादिना सत्वेन प्रतीतिसंभवात्। निरुपाख्यत्वस्य सर्वथा सत्वेन प्रतीतिरपरोक्षप्रतीतिर्वा नास्ति। तादृशासद्विशेषे पर्यवसन्नत्वेन तद्भेदसाधने शशविषाणादिरूपासद्विशेषभेदसाधनवदर्थांतरत्वात्। शून्यवादिलौकिकादिसिद्धालीकादिव्यवहारविरोधिधर्मस्यासाधनात्। उक्तधर्मस्य सत्वेन प्रतीतिविषयत्वाभावापरोक्षप्रतीतिविषयत्वाभावसमनियतत्वेन तदभावस्य सत्वेन प्रतीतिविषयत्वापरोक्षप्रतीतिविषयत्वमात्रे पर्यवसानात्। तृतीये सोपाख्यत्वस्य सर्वसाधारण्यापत्त्या तदभावरूपनिरुपाख्यत्वस्यैवासिद्धिप्रसंग एवेति न तदवच्छिन्नभेदा-

* (टिप्पनी)—ज्ञानावच्छेदकतया $ (टिप्पनी)—त्वदन्यसर्वव्यवहारत्वर्थः

सिद्धिः । उपाख्यत्वस्याप्युक्तप्रतीतिविषयत्वाद्यतिरिक्ताखंडधर्मरूपत्वे मानाभावाच्चेति । अथ शब्दवृत्तिविषयत्वरूपोपाख्यत्वाभावरूपासत्वाभावः साध्यत इति चेन्न। तथात्वेपि तस्य शब्दवृत्तिविषयत्वरूपस्यासत्ख्यातिवादिना सौगतविशेषेण पुरुषांतरेण चेदं रजतमिति व्यवहाराद्यनुपपत्त्या स्वीकृतत्वेनासत्वालीकत्वादिव्यवहारविरोध्यनिर्वचनीयत्वासिध्या पूर्ववदर्थांतरतापत्तेः । नच तस्यासत्वविरोधं जानतः परीक्षकस्य तज्ज्ञाने असत्वबुध्धिव्यवहारादयो निवर्तंत इति वाच्यं । सद्विविक्तत्वरूपासत्वसामानाधिकरण्यस्य भवतैवांगीकृतत्वेन तदन्यस्य सत्वाभावाद्यतिरिक्तस्योपाख्यत्वाविरोधिनो असत्वरूपधर्मस्याश्रयासिध्या शुक्तिरजतादिवैलक्षण्येन तद्धर्माश्रयग्राहकप्रमाणाभावेनादिपदोपात्तव्याहत्यादिना निराकरणादेव तदप्ययुक्तमित्यर्थकतयैतदेव वाक्यमुत्तरं। तादृशधर्माश्रयसद्विलक्षणलक्षणे प्रत्यक्षाप्रसक्तौ तस्य शुक्तिरजतादिवैलक्षण्यासित्थ्यापत्त्येंद्रियसंनिकर्षासंभवेन च प्रत्यक्षाभावादत एव लिंगाभावाच्छब्देनापि तद्बोधने प्रमाणसामान्यस्यैवाभावेन धर्मिणं विहाय तादृशधर्मस्येतरव्यावृत्ततया बुध्धावनारोहे तदवच्छिन्नभेदसाधनायोगः। अवृत्तित्वेन तादृशधर्मग्रहे तदभावस्य केवलान्वयितया तत्साधनं प्रमेयत्वादिसाधनवदकिंचित्करमर्थांतरप्रसंगात् । भेदसाधनार्थं तादृशधर्माश्रयस्य शब्देनैव व्यवहृततया अस्य शब्दविषयत्वविरोधोक्तेर्व्याहतत्वाच्च। नच शब्दजन्यानुभवाविषयत्वेऽपि लक्षणया योगवृत्त्या वा विकल्पसंभवेन व्यवहारनिषेधयोः संभवान्न व्याहतिरिति वाच्यं। अस्याग्रे निराकरिष्यमाणत्वादयं पक्षोऽत्यसमंजस इति भावः। उत्पत्तिमत्त्वाभावः कालसंबंधाभावो वा यद्यसत्वं तदभाव उत्पत्तिमत्त्वकालसंबंधित्वरूप इति त्रैकालिकनिषेधप्रतियोगित्वादिरूपहेतुसाध्यत्वेन गृह्यमाणे कालसंबंधघटितोत्पत्तेः कालसंबंधस्य च व्याहतत्वादिना च पूर्वमेव निराकृतत्वात् सौगतमतावैलक्षण्याच्च। प्रतीतत्वमापरोक्ष्येण प्रतीतत्वं सत्वेन तथा प्रतीतत्वमित्येतेषां नित्येषु घटत्वसत्वादिषु व्यभिचार इत्येषा दिक् । कश्चिदनिर्वचनीयस्थापनाय बहूक्त्वाऽनिर्वचनीयं साधितमित्यभिमानेन तस्मादेवमनिर्वचनीयत्वप्रसिद्धौ भेदे अनिर्वचनीयत्वादिविकल्पस्य तन्मूलकप्रश्नादेश्चोपपन्नत्वाद्विकल्पेन दूषणमपि संभवतीति बोध्यमित्यंतेनोपसंहृत्य नच धूमत्ववन्मिथ्यात्वमित्यादिमूलटीके कटाक्षीकृत्योक्तत्वात् । मिथ्याशब्दस्य सद्विलक्षणत्वमेवार्थः। तच्चात्यंतासदनिर्वाच्यसाधारणं । नच सामान्यस्य सदसदुभयवृत्तित्वायोगः। पटात्यंताभावप्रतियोगितायाः सदसत्साधारण्यस्य त्वयैव वाच्यत्वात्। प्रतियोगिताः प्रतियोगिभेदेन भिद्यंते । अतो नैकस्योभयसाधारण्यमिति चेत् पूर्वोक्ताभावप्रतियोगित्वरूपमिथ्यात्वस्याप्यनुभयसाधारण्यमक्षतमेव । किंच किंबहुना धूमत्वसाम्यमपि व्यावहारिकप्रातिभासिकसाधारण्यमेवेति स प्रष्टव्यः किमनेनैतद्ग्रंथस्य दूषणमुक्तं भवतीति । आश्रयासिध्या सामान्यं न संभवतीत्युक्तिखंडनद्वारा सामान्यसिध्धिपरिशेषादेः स्थापनमिति चेत्। न ह्येतट्टीकायां मूले चासति सति च कोऽपि धर्मो मिलित्वा नास्तीत्युक्तं । ज्ञेयत्वादेरेवांगीकृतत्वात्। अत एव सैध्धांतिकानामपि परस्परविप्रतिपत्तिगोचरं प्रामाणिकप्रतियोगिकोऽपि भवत्यत्यंताभाव इति पक्षमाश्रित्य पटात्यंताभावप्रतियोगितायां सदसत्साधारण्यप्रदर्शनमचातुर्यमूलकमेव । नच तद्युक्तमपि एकस्यैव पटात्यंताभावस्य प्रतियोगितायाः सदसदुभयसाधारण्यस्य प्रामाणिकप्रतियोगिकाभाववादिसैध्धांतिकेनाप्यनंगीकृतत्वात्। प्रतियोगितावच्छेदकीभूतपटत्वस्य सदसदुभयवृत्तित्वस्य तेनाऽप्यनंगीकृतत्वात् । पटात्यंताभावप्रतियोगिता सत्सु पटेष्वेव स्वीकृता। दंडजन्यपटो नास्तीति

( टीका ) नन्वसदनिर्वचनीये द्वे अपि न स्तः । ततो नरखरविषाणयोर्विषाणत्ववदिति निदर्शनीयं । धूमस्तु बाष्पारोपित एव नास्ति । न त्वितरः । तत्कथं धूमत्ववदित्युदाहृतम् । मैवं ।

---

प्रतीतिसिद्धाभावप्रतियोगिता त्वसति तेन स्वीकृता । किंतु टीकामूलयोः पूर्वोक्तास्मद्व्याख्यारीत्या स्वरसत एव ग्रंथलभ्यो अनिर्वचनीयस्यासद्विलक्षणत्वादिना सिद्धेः सद्विविक्तत्वस्यानिर्वचनीयासदुभयसामान्यत्वग्रहो न संभवतीत्यादिरूपोऽभिप्रायः। अत एव टीकायामनिर्वचनीयस्यैवाभावादिति विहाय प्रागितो अनिर्वचनीयस्यैवासिद्धत्वादिति न चाश्रयाभावे सामान्यं भवतीत्यनुक्त्वा न चाश्रयासिद्धौ सामान्यं सिद्धं भवतीति चोक्तं । एवं बहुष्वेतत्प्रघट्टिकास्थवाक्येषु ज्ञातत्वावच्छिन्नबोधकासिद्धपदप्रयोग एव कृतः। मूलेपि नच धूमवत्ववन्मिथ्यात्वमिति सामान्यमस्तीत्युक्त्वोभयसंप्रतिपन्नमित्यनेन सामान्यत्वाभिमतस्यानिर्वचनीयत्वासिद्धेः प्राक्ज्ञातत्वनिराकृतावेव निर्भरः कृतः । तस्मात्स्वमतेन तस्य वस्तुतः सामान्यरूपत्वोपपादनमुक्तमूलटीकाशयापरिज्ञानविजृंभितमेव । यदपि प्रतियोगिता प्रतियोगिभेदेन भिद्यत इत्यादिना तस्य सामान्यरूपत्वाभावशंकनं तत् कस्य रीत्या वक्तव्यं । अप्रसिद्धविशेषणत्वोपपादनमारभ्य नैय्यायिकरीत्याऽस्य ग्रंथस्य प्रवृत्तत्वात्तस्यैव रीत्येति न तावद्युक्तं । पटात्यंताभावप्रतियोगितायाः सदसत्साधारण्यस्य नैय्यायिकानभिमतत्वेन पूर्वं तस्य तत्प्रतिबंद्यगोचरत्वात् तन्मतानुसरणे नैय्यायिकं प्रति पूर्वोक्तत्वदुक्तिरसंगता । नापि मन्मतरीत्या । मन्मते सर्वस्यापि धूमत्वादेः प्रत्याश्रयं भिन्नत्वेऽपि विशेषशक्त्या सामान्यव्यवहारनिर्वाहकत्वप्रयुक्तसामान्यरूपत्वस्यांगीकृतत्वेनाश्रयभेदेन भेदस्य सामान्यरूपत्वाखंडकत्वात् । एकस्योभयवृत्तित्वाभावशंकायाः प्रकृते अनुपयोगात् । घटत्वपटत्वादिधर्मांतरेषु क्लृप्तरीतिरत्रापि संभवात् । नापि तटस्थस्य सिद्धांतिमतानभिज्ञस्य कस्यचिदाशंकेयमिति साप्रतं । तथात्वे सिद्धांतिमतप्रदर्शनपूर्वकं तं प्रति स्वोक्तस्योक्तप्रतियोगित्वस्य सामान्यरूपताव्यवस्थापनस्यैव कर्तव्यतया मिथ्यात्वस्याप्यनुभयसाधारण्यादिति । मिथ्यात्वस्योभयसाधारण्याभावरूपसामान्यत्वाभावकथनस्यानुपयोगात्पूर्वोक्तार्थव्याहतत्वाच्चायुक्तमेव । तद्वाक्ये सद्विलक्षणत्वरूपमिथ्यात्वमुपक्रम्य पूर्वोक्तप्रतियोगित्वरूपमिथ्यात्वेत्युक्तिस्तु त्रैकालिकनिषेधाप्रतियोगिरूपसद्वैलक्षण्यं तादृशाप्रतियोगित्वरूपमेवेत्याशयश्चेत्कथंचिद्युक्ता । किंच किंबहुनेत्यादिना यदुत्तरमूलटीकादूषणमुत्प्रेक्षितं तदाभासत्वव्युत्पादनमुत्तरमूलटीकाव्याख्यावसरे स्फुटीभविष्यतीत्यलं । ननु धूमत्वदृष्टांतेनेदं लभ्यते । यथा धूमत्वरूपसामान्यस्योचिताश्रयस्यैकस्य सत्त्वेन सिद्ध्या अन्यस्य तथात्वेनासिद्ध्या तदुभयसाधारण्यं धूमत्वस्य न गृह्यते । तथा मिथ्यात्वरूपधर्मस्याप्यसदनिर्वचनीययोर्मध्ये एकस्य सत्त्वेन ( ग्रहविषयत्वेन ) ग्रहविषयत्वादपरस्यातथात्वादुभयानिरूपितसामान्यरूपत्वग्रहो न घटत इति तदयुक्तं । स्वमते तस्याभावात्। उभयासंप्रतिपत्तेरपि स्वमतासंप्रतिपत्त्यैव निर्वाह्यत्वादित्याशयेन शिष्यः शंकते । नन्विति । न स्तः सत्त्वेन ग्रहाविषयावित्यर्थः । स्वमत इत्यादि । निदर्शनीयामिति । दृष्टांते अत्यंतानुरूप्यस्य भूषणत्वात्तं विहाय किंचिद्विरूपशालिनो दृष्टांतपथानुसरणे बीजाभावादिति भावः। उपात्तस्य कथं तद्वैरूप्यमित्यतस्तदुपपादयति । धूमस्त्विति । नास्ति सत्त्वेन ग्रहाविषयः इतरः वास्तवधूमः नतु सत्त्वेन ग्रहाविषयो न किंतु तथात्वेन ग्रहाविषय एवेत्यर्थः । असविति ।

(टीका) असदिति निर्देशस्य प्रतियोगिप्रधानत्वे व्यक्त्यभावमात्रे दृष्टांतत्वोपपत्तेः। निषेधप्रधानत्वे तु तस्य सत्वेन सुतरां युक्तत्वात्।

। निर्देशस्येति। मूले न्यूनताभंगायासदनिर्वचनीययोरिति पूरणीयतया तद्घटकासत्पदस्येत्यर्थः। प्रतियोगीति। त्रैकालिकनिषेधप्रतियोगीत्यर्थः। व्यक्त्यभावमात्रे इति। भवदुक्तपर्यंतं तात्पर्याभावेन सामान्यत्वग्रहे यादृशरूपेणाश्रयग्रहोपेक्षितः तदभावमात्र इत्यर्थः। स च ग्रहः प्रकृते असद्विलक्षणत्वेनानिर्वचनीयविषयक इति पूर्वमुपपादितं। दृष्टांतदार्ष्टांतिकभावे सर्वात्मना आनुरूप्यनियमाभावसूचनायैव मूले धूमत्वमेवोपात्तमिति हृदयं। निषेधप्रधानत्व इति। नञः प्रसज्यप्रतिषेधत्वे धात्वर्थसत्ताप्रतियोगिकाभाव एव प्रतीयते। अन्यदधिकं पूर्वमेवावेदितं। सुतरामिति। असत्पदार्थभूताभावस्य सत्वादनिर्वचनीयस्यासत्वादित्यर्थः। नन्वेतदयुक्तं। सद्विविक्तत्वस्यासदनिर्वचनीयसाधारण्यमभ्युपेत्यासद्भेदसाधनेनानिर्वचनीयस्य साधितत्वेनासत्पदेनालीकस्यैव प्रक्रांततया तत्साधारण्यमेव मिथ्यात्वस्य खंडनीयम्। अनलीकाभावसाधारण्यखंडनस्यानुपयुक्तत्वात्। शुक्तिरजतादिमात्रेऽनिर्वचनीयत्वविवादस्य जगत्सत्तामभ्युपगम्य प्रवृत्ततयेदानीं मिथ्यात्वस्थाभावसाधारण्यस्य तेन वक्तुमशक्यतया तत्खंडनस्यानुक्तोपालंभनरूपत्वापत्तेश्चेति चेन्न। यतोऽस्त्यत्र निगूढो ग्रंथकृतो अभिप्रायः। उत्तरत्र भावाभावविलक्षणत्वरूपानिर्वचनीयत्वे आगमप्रामाण्यं निराकरिष्यति। पूर्वमपि तस्याप्रक्रांतत्वे अन्यत्र प्रत्यक्षानुमाने निराकृत्य प्रमाणसामान्याभावबोधनाय तत्रागममनिराकृत्यान्यत्र प्रत्यक्षादिकमनिराकृत्यागममात्रनिरासे प्रमाणसामान्याभावस्य कुत्राप्यनिरूपितत्वेन नचानिर्वचनीये किंचिन्मानमित्यस्यानुपपादितत्वेनासंगातिप्रसंगात्। अतो भावाभावविलक्षणत्वं सत्यासत्यविलक्षणत्वं मिथ्यात्वादिकं यद्यदनिर्वचनीयत्वमभिमतं तत्सर्वं आदित एव प्रक्रांतं। तथा च भावाभावविलक्षणत्वरूपसाध्येप्यप्रसिद्धविशेषणता तुल्या। सत्वासत्व इत्यनुमानेपि सत्वासत्वशब्दौ विकल्पेन भावाभावत्वपरावपि प्रत्येकं सदसत्वाभ्यां विचारपदवीं न यत् गाहते तदनिर्वाच्यमाहुः वेदांतवादिन इति। परोक्तावपि सत्वासत्वशब्दावेवमेव। तथा च प्रकृतानुमाने सद्विविक्तत्वरूपमिथ्यात्वसाधकानुमानवाक्यमपि विकल्पेन भावविलक्षणत्वरूपप्रकृतोपयोगिपारिभाषिकमिथ्यात्वतात्पर्यकमपि तादृशपारिभाषिकमिथ्यात्वस्येदानीं परेणाभावस्वीकारे बाधकाभावेन तस्याभावानिर्वचनीयोभयसाधारण्यमंगीकृत्यानिर्वचनीयसिद्ध्यर्थं सत्वेन प्रतीयमानत्वहेतुना सत्पदार्थभूताभावविलक्षणत्वसाधनपक्षेऽपि तस्योभयसाधारण्यं निराकृत्य सत्प्रतिपक्षोऽप्यस्य मूलस्याभिप्रेत एव। तथा चैतत्पक्षे दृष्टांतदार्ष्टांतिकयोरानुरूप्यं सुतरामित्युक्तं युक्तमेव। अत एव निषेधप्रधानत्व इत्यनेनाभावसामान्यग्रहणं कृतं। अन्यथा अत्यंताभावस्यैव ग्रहणेऽत्यंताभावभावोभयवैलक्षण्यस्य प्रागभावादौ सत्वस्य सर्वांगीकृतत्वेनानिर्वचनीयत्वरूपत्वाभावात् अप्रसिद्धविशेषणत्वाद्यसंगतेश्च। एवं चासदिति निर्देशस्येत्यनेनानुमानवाक्यस्थस्यात्र पूरितस्य च सर्वस्यासच्छब्दस्य ग्रहणं। केचित्तु अनुमानवाक्यस्थासच्छब्द एव निर्देशस्येत्यनेन विवक्षितः। उभयस्मिन् सदसतोः संप्रतिपन्नं सम्यग्ग्रहाविषयीभूतमित्यर्थकस्योभयसंप्रतिपन्नपदस्यावृत्त्यैव विवक्षितार्थसिद्धावत्र पूरणे प्रयोजनाभावात्। अनुमाने त्वेकस्यासच्छब्दस्यार्थनिरूपणे सच्छब्दस्तद्विरुद्धार्थकतया गृह्यत एवेति तदर्थोऽपि न निरूपित इत्याहुः। इत्थं चैतादृशानिर्वचनीयाभिप्रायेण सुतरामित्येतद्युक्तमेवेति। प्रतियोगिप्राधान्यपक्षेऽप्यानुरूप्याग्रहेप्याह। बाष्पधूलीति। धूलित्ववदितिमूले सामान्यत एवोक्तत्वादुक्तव्याख्यानेऽपि न किंचिद्बाधक-

( टीका ) बाष्पधूलीमशकमालाद्यारोपितधूमेषु धूमत्ववदिति वा व्याख्येयम् । ननु बाष्पारोपितधूमेऽपि धूमत्वसामान्यांगीकारे को दोष इति चेत् तदा पर्वतस्याग्निमत्त्वे साध्ये प्रयुज्यमानं धूमवत्त्वं बाष्पारोपितधूमेन निराग्निकेऽपि ह्रदादौ वर्तमानेन निमित्तेनाग्निव्यभिचारि स्यात् । नच तेन तदग्निं व्यभिचरति । निःशंकलोकव्यवहारहेतुत्वादित्याह । नच बाष्पारोपितधूमेन धूमवत्वं व्यभिचरति । बहुलोर्ध्वतादिवदाभासविवेकोपि वन्हिं प्रति प्रयोजक इति चेत् । तत्किं प्रयोक्तॄणां लौकिकानामभिप्रायमनुरुध्येदमाश्रीयते किंवा स्वाभ्युपगतसामान्यनिर्वाहार्थं । नाद्यः । तदभावात् । लौकिका हि धूमवत्त्वस्यानैकांत्ये चोदिते धूम एवासौ न भवतीति प्रतिवक्तारो भवंति । अन्यथा तदन्यत्वे सतीत्यवक्ष्यन् ।

---

मिति भावः । ननु पृथिवीवज्जलं गंधवन्नेत्यनेन यथा पृथिवी गंधवती तथा जलं गंधवन्नेति यथा बोधस्तथाऽनेनापि वाक्येन धूमत्वं यथोभयसंप्रतिपन्नं सामान्यं न तथा मिथ्यात्वमपीत्यर्थो लभ्यते । तथात्वे धूमत्वस्य व्यतिरेकदृष्टांतत्वमेव । तथात्वे न कोऽपि क्लेशः । तथाच धूमत्वस्यान्वयदृष्टांतत्वेन व्याख्यानं कृत्वोक्तप्रयासकरणं विफलमिति चेन्न । एवं सति बाष्पारोपितधूमसाधारण्याभावस्यैतन्मूलेनालाभे तत्रापि तत्स्वीकारेण दृष्टांतासम्मतिशंकानुदयेन बाष्पारोपितधूमे धूमत्वस्वीकारे दंडप्रदर्शकस्योत्तरमूलस्यानुत्थानप्रसंगेन व्यतिरेकदृष्टांतत्वपक्षे मिथ्यात्वे सामान्यत्वाभावसाधकस्याश्रयाभावरूपहेतोर्दृष्टांतमाहिम्ना लब्धत्वाभावेन पृथक् तदनुक्त्या मूलकृतां न्यूनतापातेन च तत्परिजिहीर्षया टीकाकृतैवं व्याख्यातत्वात् । उत्तरमूले बाष्पारोपितधूमे धूमत्वांगीकारे बाधकोक्तिबलादेव पूर्वं बाष्पारोपितधूमाभावप्रयुक्तो धूमत्वस्य तत्साधारण्याभाव इत्ययमर्थो लभ्यत इतीदानीं न मूलस्य न्यूनतेत्यवधेयम् । प्रयुज्यमानं पंचम्यंतप्रतिपाद्यं धूमवत्वं धूमः निमित्तेनेति मूलस्थधूमपदोत्तरतृतीयार्थविवरणं । निःशंकमिति । तथा च स्फुटत्वान्मूले व्यभिचाराभावे हेत्वनुक्तिर्न दोषायेति भावः । बहुलोर्ध्वतादिवदिति । विच्छिन्नमूले शांताग्नौ धूमे च व्यभिचारवारणाय सिद्धत्वादेव लोकानां न तथा प्रयोग इति भावः । प्रतिवक्तार इति । अन्यथेति । धूमवत्वादितिहेतुवाक्यं प्रयुंजानानां बहुलोर्ध्वतादिविशिष्टधूमबोधतात्पर्येणेवाभासान्यत्वविशिष्टधूमबोधतात्पर्येणापि धूमपदप्रयोगस्य सत्व इत्यर्थः । अवक्ष्यन्निति । धूमवत्वादित्युक्तौ लौकिकानां वैदिकानां स्फुटतया बहुलत्वादिविशेषबोधक पदप्रयोगं विहाय धूमादित्येवोक्तिरित्यर्थमविदुषा केनचिद्व्यभिचारे चोदिते बहुलत्वादिकं हेतुविशेषणं । परंतु स्फुटत्वादस्माभिर्नोक्तमिति यथा वदंति तथा केनचिदविदुषा बाष्पारोपितधूमेन व्यभिचारे चोदिते आभासान्यत्वविशेषणमपि हेतुकोटिनिविष्टं परंतु स्फुटत्वादस्माभिर्नोक्तमिति वदेयुरित्यर्थः । ननु लौकिकानां तत्सदृशानां मदन्यवादिनां चाभासविवेकरूपविशेषणादानं धूम एवासौ न भवतीत्यादिकं त्वपरीक्षामूलकं । न ह्येतत्परीक्षकाणां तादृशविशेषणदाने बाधकं भवति । उक्तविशेषणदातॄणां परीक्षकत्वादित्यभिप्रायकं

(टीका) न द्वितीयः। त्वदभ्युपगमस्यैव निर्मूलत्वात्। भ्रांतिप्रतिपन्नानामनिर्वचनीयत्वस्याद्याप्यसिद्धत्वात्।

---

द्वितीयपक्षं प्रतिषेधति। न द्वितीय इति। त्वदभ्युपगमस्यैवेति। निर्मूलत्वात् निष्प्रामाणिकत्वात्। एवकारो लौकिकप्रतीतेर्निर्मूलत्वमपाकरोति। प्रत्युत लौकिकादिप्रतीतेरेव प्रत्यक्षादिप्रमाणमूलत्वात्तेषामेव परीक्षकत्वं तथैवापरीक्षकत्वमिति भावः। एतेन यत्केनचिदभिहितं किंच किंबहुना धूमत्वादिसामान्यमपि व्यावहारिकप्रातिभासिकसाधारणमेव यत्तु व्यावहारिकप्रातिभासिकसाधारणधूमत्वसामान्यं नाभ्युपगंतुं युक्तं। तथा सति वन्हौ साध्ये धूमादेर्व्यभिचारापत्तेरिति तन्न। बहुलोध्र्वतादिवद्व्यवहारकालाबाध्यत्वादेरपि हेतुविशेषणत्वाभ्युपगमात्। तार्किकाभिज्ञैस्तदनुसरणं त्वनिर्वचनीयानभ्युपगमेनैव। अपरीक्षकैस्तदनुसरणं तु यथायथं। बाष्पारोपितधूमादेरसत्वनिश्चयादन्यथा वेति न परीक्षकैस्तथा वर्तितव्यमिति दिक् इति तदपास्तं भवति। त्वदभ्युपगमस्यैव निर्मूलत्वकथनेन तवैवापरीक्षकत्वसूचनात्। कुतो मदभ्युपगमस्य निर्मूलत्वमित्यत आह। भ्रांतीति। सर्वेषां लौकिकानामित्यादिः। अद्यापीत्यनेन त्वद्वाक्ये श्रत्धाधीनाग्रहाभावकालमुपलक्षयति। असित्धत्वात् स्वार्थानुमानेन प्रत्यक्षादिनेति शेषः। अयं भावः। प्रत्यक्षेणानुमानेनाप्तवाक्यादिना वा बाधबुत्धिमतां भ्रांतत्वेन व्यवहारो लोके नास्तीति सर्वलोकसंमतं। नच तेषां बुत्धिरनिर्वचनीयत्वस्वरूपतृतीयप्रकारावगाहिनी भ्रांतिकाले सत्वेन बाधोत्तरं चासत्वे लोकैर्व्यवन्हियमाणत्वेनानिर्वचनीयत्वस्य लौकिकप्रमाणागम्यत्वात्। नहि तत् त्वद्वाक्याधीनश्रत्धादिकं विना घटत्वादिवत्प्रत्यक्षेण चक्षुरादिवदनुमानेन तन्मूलकाविवक्षितार्थे ज्ञानवदाप्तोपदेशेनापि प्रतीयते। अतः 'एकस्य प्रतिभातं तु कृतकान्नातिरिच्यते' इति न्यायेन त्वत्प्रतीतेरेवोन्मत्तप्रतीतेरिव भ्रांतित्वं वक्तुं युक्तमिति त्वदभ्युपगम एव निर्मूलक इति। यद्वा न केवलं त्वदभ्युपगमो निर्मूल इति कृत्वा तादृशविशेषणं न देयं। तद्दानेऽपि व्यभिचारस्य परिहर्तुमशक्यत्वात्। अतस्तत्र धूमत्वानंगीकार एव युक्तः इत्याशयेनाह। भ्रांतीति। केषांचिदिति शेषः। असित्धत्वादित्यतः परं चशब्दो अध्याहर्तव्यः। अनिर्वचनीयत्वस्य व्यवहारकालबाध्यत्वस्य। अद्येति ब्रह्मज्ञानप्राक्कालोपलक्षणं। अपिरभिव्याप्तौ सर्वस्मिन्नपि तादृशपूर्वकाले इत्यर्थः। अद्येति वर्तमानकालः समुच्चायकेनापि नापूर्वोत्तरकालाबुच्येते इति वा सर्वस्मिन् ब्रह्मज्ञानपूर्वकाल इत्यर्थः। योग्यतया बाधानुदयेनेत्यध्यान्हियते। असित्धत्वात् अप्राप्तत्वात्। तथाच ब्रह्मज्ञानपूर्वकाले बाधानुदयेन केषांचिद्भ्रांतिप्रतिपन्नानां व्यवहारकालबाध्यत्वस्याप्राप्तत्वात्तदभावादिति यावद्व्यभिचारवारणद्वारा स्वाभ्युपगमनिर्वाहरूपीद्वितीयपक्षनिर्वाहो न भवति। न केवलं स्वाभ्युपगमस्य निर्मूलत्वमिति। तथा च ब्रह्मज्ञानपूर्वकालेऽसंजातबाधभ्रमविषयबाष्पारोपितधूमे वन्हिव्यभिचारो दुर्वार इति भावः। ननु व्यवहारकालबाध्यत्वं नाम मूलाज्ञानोपादानकत्वं विवक्षितं। उक्तधूमस्य ब्रह्मज्ञानेन बाधेपि मूलाज्ञानोपादानत्वान्न व्यभिचार इति चेन्न। ब्रह्मज्ञानपूर्वकाले बाधानुदये तस्य मूलाज्ञानोपादानकत्वस्यैव युक्तत्वेन मूलाज्ञानोपादानकत्वे भानाभावात्। न चाविद्यातिरिक्तदोषजन्यत्वान्न मूलाज्ञानोपादानकत्वमिति वाच्यं। पूर्वं बाधानुदयेन तज्जनकानां दोषत्वस्यैवासित्धेः। नच साक्षात् मूलाज्ञानोपादानकस्य बहिष्ठत्वेनाध्यक्षतो न दृष्टेति वाच्यं। तमस इव त्वन्मते उपपत्तेः। नच यत्पुरुषस्य तादृशभ्रमो जातः तस्य बाधानुदयेऽपि तदन्यस्याधिष्ठानतत्वज्ञानवतः तत्प्रतीतधूमे बाधितत्वग्रहात्त व्यवहारकालबाध्यत्वं वर्तत एवेति न व्यभिचारः।

विशेषणशरीरे तत्पुरुषीयत्वादेरनिविष्टत्वादिति वाच्यं । तथात्वे सर्वस्मिन् प्रपंचे इदानीं तत्वविचारकस्य बाधबुध्युदयेन तादृशविशेषणाक्रांतधूमादीनामेवाप्रसिध्धेः।व्यवहारकाले मिथ्यात्वेनापरोक्षीकृतत्वनिवेशे तु चैत्रारोपितधूमे मैत्रेण मिथ्यात्वेनापरोक्षीकृतत्वायोगादसंजातबाधभ्रमगोचरे तत्र व्यभिचारो दुर्वार एव । नच तादृशभ्रमगोचर एव नास्तीति वाच्यं । सन्निपातादिरोगेण जायमानभ्रमगोचराणामेव सत्वात् संनिपातेन तस्य मृतत्वेन तस्य बाधबुध्यनुत्पत्तेः। नच तेषां प्रातीतिकानां प्रतीत्यपगमे स्थित्ययोगेन नष्टत्वाद्विनाशित्वरूपबाध्यत्वमस्त्येवेति वाच्यं । धूमादेर्व्यावहारिकस्यापि विनाशित्वेन असिध्ध्यापत्तेः । अपि च व्यवहारकालाबाध्यत्वरूपसत्वविशिष्टार्थग्राहकत्वरूपव्यावहारिकप्रामाण्यावगाहिज्ञानाभावे बाष्पारोपितधूमार्थं प्रवृत्त्याद्यनुपपत्त्या प्रामाण्यभानाय साक्षिणा ज्ञानग्राहकेण ज्ञानांशे विशेषणतया भासमानधूमरूपार्थे व्यवहारकालाबाध्यत्वभाननिर्वाहाय प्रथमज्ञानेऽपि धूमांशे व्यवहारकालाबाध्यत्वारोपस्यावश्यकतया बाष्पारोपितधूमेपि व्यवहार कालाबाध्यत्वरूपविशेषणस्य सत्वात् तेन व्यभिचार एव । नच तत्र तस्यारोपितत्वेन न वस्तुतस्तस्य तदधिकरणत्वमिति वाच्यं । प्रसिध्धधूमेप्याध्यासिकसंबंधातिरिक्तसंबंधाभावेन तत्र तद्विशेषणवत्वाभावापातात्। स्वसमानसत्ताकतादृशविशेषणवत्वं तादृशसंसर्गवत्वं च प्रातीतिकधूमेपि तत्र प्रतीयमानव्यवहारकालाबाध्यत्वसंसर्गस्य प्रातीतिकत्वातत्संसृष्टरूपेण तस्यापि प्रातीतिकत्वात् । शब्दानुमाभासेभ्योपि अनिर्वचनीयख्यात्यंगीकारे तु अयं धूमो व्यवहारकालाबाध्य इति वाक्याभासजनिते बोधे आनुमानिके च बाष्पारोपितधूमे भासमानस्य व्यवहारकालाबाध्यत्वस्य स्वरूपत एव कल्पितत्वाच्च अत्र नोक्तरूपं प्रामाण्यं । किंतु मिथ्यात्वेनाज्ञायमानधूमाद्यवगाहित्वरूपमित्याद्युक्तावपि सद्रजतं सत् धूम इत्यादिव्यवहारनिर्वाहायोक्ताबाध्यत्वरूपसत्वारोपो धूमादावारोपिते आवश्यकः। अत्यंताबाध्यत्वरूपसत्वस्य प्रत्यक्षागोचरतायास्त्वयैव भाषितत्वात् । नच तत्रोक्तयोग्यानुपलब्ध्यनुपपत्तिरूपदोषस्यात्रापि साम्यात् व्यवहारकालाबाध्यत्वमपि कथं प्रत्यक्षविषय इति वाच्यं । तर्हि सन् घट इत्यादिव्यावहारिकावगाहिप्रत्ययस्य सद्रजतमित्यादिप्रातीतिकावगाहिप्रत्ययस्य गतिं भवानेव विभावयतु । अर्थक्रियाकारित्वादेरपि शक्तिरूपतयाऽतींद्रियत्वेन तद्भानेनापि तादृशप्रतीतेर्निर्वोढुमशक्यत्वात् । नच रूपादिहीनत्वेपि सद्रूपब्रह्मणः चक्षुरादिगम्यत्वांगीकारात्तत्तादात्म्यभानमात्रेण सन् घट इति प्रत्ययोपपत्तौ घटादावपि सत्वसंबंधो न भासत इति वाच्यं । अबाध्यत्वरूपसत्वपुरस्कारेण ब्रह्मणो अधिष्ठानतया अभाने सद्रूपविशिष्टब्रह्मतादात्म्याभानेन सत् घट इति प्रतीतेरनुपपत्तिरेव। वस्तुतः सदात्मकब्रह्मतादात्म्यभानमात्रात्सदित्याकारकत्वे वस्तुतो ज्ञानानंदादिरूपब्रह्मतादात्म्याध्यासबलात् ज्ञानं घटः आनंदो घट इत्याकारकत्वापत्त्या तादृशव्यवहारापत्तिः घटे सत्वमित्यादिव्यवहारानुपपत्तिश्च। एतेन सद्रूपविशिष्टब्रह्मतादात्म्याध्यासमात्रेण घटः सन् इत्यादिप्रतीतिव्यवहारयोरुपपत्तौ घटेपि सत्वसंसर्गो नाध्यस्यत इति निरस्तम् । उक्तप्रतीतिव्यवहारयोरनिर्वाहापरिहारात् सर्वत्र तत्धर्मोपहिततादात्म्याध्यासस्थले तत्धर्मसंसर्गाध्यासस्याप्यभावप्रसंगेनेदमादौ रजतत्वसंसर्गाध्यासस्य तत्र विनिगमकाभावरूपभवदुक्तयुक्तेश्चासंबंधत्वापाताच्च। सद्रूपोपहितस्याधिष्ठानतया भानांगीकारे तु अबाध्यत्वस्य भानानुपपत्तिस्तव दुर्वारैव । अथ मानांतरेण बुध्युपारूढाबाध्यत्वं सन् घट इति बुद्धौ भासिते सिध्धांते ज्ञानस्य सन्निकर्षत्वाभावेऽपि तस्य स्मृत्यात्मकत्वांगीकारात् । नच ज्ञानद्वयात्मकता स्मृत्यात्मकाविद्यावृत्तिप्रमाणवृत्तिद्वयावछिन्नचिद्रूपज्ञानस्यैकत्वात्। तत

एव सत्तादात्म्यस्यापि घटे सिध्युपपत्तेः । अत्युद्बुद्धसंस्कारवशात्प्रत्यक्षानियमतो भानेन तत्रापि प्रत्यक्षाभिमान इति चेत्तर्हि व्यवहारकालाबाध्यत्वस्याप्येषैव गतिरस्तु । अपि च व्यवहारकालाबाध्यत्वस्य प्रसिद्धधूमादौ यादृशप्रत्ययबलात्सिद्धिः तथैव प्रातीतिकेपि सिद्धिर्भवत्येवेति सुस्थो व्यभिचारः । नन्वद्वैतचंद्रिकायां व्यावहारिकरजततादात्म्यस्य प्रातीतिके आरोपं प्राचीनोक्तं निराकर्तुं रजतत्वं व्यावहारिकरजतनिष्ठमेव प्रातीतिकेपि स्वीक्रियते । नच प्रातीतिकाद्व्यावहारिकस्य यत्कार्यं तदापत्तिः । व्यावहारिकत्वविशिष्टस्यैव कारणत्वाभ्युपगमात् । प्रातीतिकं तु न कुत्रापि कारणं । चिद्रूपात्तद्विषयकज्ञानादेव कार्योत्पत्तिसंभवात् । अत एव प्रतीतिविषयकाद्व्यावहारिकविषयकाच्चैकजातीयं कार्यमुत्पद्यते । संयोगविशेषणत्वादिसंसर्गस्थले तु व्यावहारिकप्रातीतिकसाधारणमेकं संयोगत्वविशेषणतात्वादिकमपरं व्यावहारिकसंयोगादिमात्रनिष्ठं स्वीक्रियते । तत्र व्यावहारिक धूमादिनिष्ठवन्ह्यादिव्याप्तिशरीरे व्यावहारिकमात्रवृत्तिरूपावच्छिन्नसंसर्गो निविष्टः । तेन वन्हिविशेषाधिकरणे धूमस्यारोपितस्थले मिथ्यात्वघटकतदभावस्य तत्र सत्वेपि तस्य प्रतियोगिव्यधिकरणत्वाभावेन प्रतियोगिव्यधिकरणस्वसमानाधिकरणाभावाप्रतियोगित्वस्य धूमे सत्वेपि न वन्हेर्धूमव्याप्यता । साध्यसामानाधिकरण्यशरीरे व्यावहारिक संसर्गस्य निविष्टतया व्यावहारिकसंबंधस्य प्रातीतिकधूमप्रतियोगिकसंबंधत्वाविरहात् । तद्घटितसाध्यसामानाधिकरण्यविरहात् । यत्र वन्हिसमानाधिकरणे बाष्पेधूमत्वभ्रमस्तत्स्थले तादृशधूमत्वाश्रयप्रतियोगिकत्वस्य बाष्पीयसंयोगे सत्वेपि धूमत्वविशिष्टप्रतियोगित्वविरहाद्व्याप्तिघटकसाध्यसामानाधिकरण्यशरीरे च साध्यतावच्छेदकविशिष्टप्रतियोगिकसंबंधस्यैव निवेशान्न तत्रापि व्याप्तिप्रसंगः । किंच साध्यसामानाधिकरण्यमपि व्यावहारिकविशेषणतयैव निविष्टमिति प्रातीतिकघटितस्य व्यावहारिकविशेषणतयाऽवृत्तित्वान्नातिव्याप्तिरित्युक्तं । तथा च तद्रीत्या व्यावहारिकसंयोगेन धूमत्वविशिष्टवन्हिनिष्ठात्यंताभावप्रतियोगितावच्छेदकसाध्यतावच्छेदकस्य साध्यतावच्छेदकावच्छिन्नाभावसामानाधिकरण्यस्य हेतुतावच्छेदकावच्छिन्नानुयोगिकविशेषणतया वर्तमानस्य वा व्यभिचाररूपत्वं स्वीक्रियते । तथाच बाष्पे धूमत्वस्यारोपेपि तद्विशिष्टप्रतियोगिकत्वस्य तदीयव्यावहारिकसंयोगे अभावात्साध्याभावसामानाधिकरण्यस्य बाष्पनिष्ठस्य धूमत्वावच्छिन्नानुयोगिकव्यावहारिक विशेषणतया अवृत्तित्वाच्च न व्यभिचारप्रसक्तिः । आभासान्यत्वविशेषणदानस्यापि अत्रैव तात्पर्यं । अतो बाष्पारोपितधूमे धूमत्वांगीकारे न कोपि दोष इति चेत् अत्रापि वक्तव्यं । अयमपि प्रकारः किं लोकव्यवहारानुसारेणाश्रीयते उत स्वाभ्युपगमनिर्वाहाय । तत्राद्यं दूषयति । नाद्य इति । अन्यथा धूमवत्वमंगीकृत्य संबंधकृतवैलक्षण्येन व्यभिचारवारणस्याभिप्रेतत्वे तदन्यत्व इति शंककस्याभिप्रेतसंयोगाविशेषणतादिनिष्ठं यत्संसर्गतावच्छेदकं संयोगत्वविशेषणत्वत्वादिकं बुध्दिस्थत्वात्तदिति परामृशति । तदनन्यत्वे तद्भेदे सति व्याप्तिघटकसंसर्गतावच्छेदके विद्यमाने सति सप्तमी चेयं विद्यमाने सतीत्यर्थः । इति एवं क्रमेण व्यावहारिक संयोगादिनिष्ठवैजात्यपुरस्कारेणैव व्याप्तिशरीरे व्यभिचारशरीरे च संयोगादिर्निविष्टोऽतो न व्यभिचार इत्येवं क्रमेणैवेत्यर्थः । अवक्ष्यन् वदेयुः । न स्वयं धूमो न भवतीति वदेयुरित्यर्थः । अन्यथा द्रव्यं प्रमेयादित्युक्ते केनचिद्गुणे व्यभिचारे चोदिते संयोगे नायं हेतुरित्यनुक्त्वा प्रमेय एवायं न भवति गुणत्वादिरिति वदत इति लोकानां मूर्खत्वापत्तिरिति भावः । द्वितीयं निराचष्टे । नेति त्वदभ्युगमस्यैवेति । एवकार आत्यंतिकत्वं कैमुत्यं वा बोधयति । लोकप्रतीतिविरुद्धस्य बाष्पारोपिते धूमत्वाभ्युपगमस्यैवात्यंतमप्रामाणिकाभ्युपगम

रूपत्वे तन्निर्वाहाय कल्पनीयोयं सर्वलोकप्रतीत्यसिद्धस्तद्विरुद्धश्च प्रकारः सुतरामप्रामाणिक इति द्वितीयोपि प्रकारो न सम्यागिति भावः । ननु भ्रांतिप्रतिपन्नानां प्रातीतिकत्वेनासत्वायोगात् अनिर्वचनीयत्वस्य सिद्धत्वात्तत्र धूमत्वादिके प्रतीतिबलात्सिद्धे व्याप्त्यव्याप्त्यादिव्यवस्थासिद्धये सर्वोपि प्रकारोऽन्यथानुपपत्त्या सिद्ध इत्यत आह । भ्रांतीति । प्रेक्षावतामसिद्धत्वादित्यर्थः । तेन भ्रांतानामविचारेण तत्सिद्धावपि तज्ज्ञानस्य भ्रमत्वात्तद्विषयीभूतार्थनिर्वाहाय सर्वापि कल्पना निर्मूलेति सिध्यति । ननु प्रेक्षावतां कुतो न सिद्ध्यतीति चेच्छृणु । भ्रांतिविषये सद्विविक्तत्वेन प्रतीयमाने उपपत्यादिकं रजतत्वादिकं तत्संसर्गादिकं च परिकल्पयंतः तत्काल एव रजतत्वधूमत्वावच्छिन्नस्य लोकसिद्धविप्रतिपन्नव्याप्तिकस्य स्वसाध्येन सह व्यभिचारादिप्रसंगरूपबाधकस्फूर्तेर्झडिति संभवेन तत्परिहाराय संसर्गतावच्छेदकेषु वैजात्यादिरूपाप्रामाणिकपरंपराकल्पनागौरवानुसंधानस्यावश्यकतया कथमनिर्वचनीयत्वसिद्धिः स्यात् । वक्ष्यमाणरीत्या प्रतीतस्याप्यसत्वांगीकारपक्ष एव लाघवसंभवात् । लघुपक्षानादरेण गुरुपक्षस्य प्रकृते अंगीकारे गौरवस्य बाधकत्वमेवोच्छिद्येत । न हीदमनिर्वचनीयसिद्ध्युत्तरकालिकं येन फलमुखत्वेनादूषणं स्यादिति।किंच व्यभिचारशरीरे व्याप्तिशरीरे च धूमत्वविशिष्टप्रतियोगित्वनिवेशे धूमत्वावच्छिन्नप्रतियोगिकव्यावहारिकसंबंधस्याप्रसिद्ध्याऽप्रसिद्धिः । संयोगादेर्धूमत्वाश्रयप्रतियोगिकत्वमात्रोपगममात्रेण सर्वस्यापि धूमप्रकारकप्रत्ययस्य प्रामाण्यादिव्यवस्थोपपत्तौ धूमत्वावच्छिन्नप्रतियोगिताकत्वस्य संयोगेऽगीकारे मानाभावात् । स्वाभ्युपगमनिर्वाहाय विना प्रमाणं पदार्थकल्पनेऽतिप्रसंगात् । अस्तु वा तत्स्वीकारः तथापि हेतुतावच्छेदकविशिष्टवैशिष्ट्यावगाहिपरामर्शात् तदुपलक्षितावगाहिपरामर्शाधीनानुमित्योर्पायिकव्याप्त्योर्भिन्नतया आद्यायां हेतुतावच्छेदकविशिष्टप्रतियोगिकसंसर्गस्य द्वितीयायां तदुपलक्षितसंसर्गस्यैव निवेशो युक्तः । उभयत्र व्याप्त्योरेकजातीयत्वे सर्वत्र विशिष्टप्रतियोगिकसंबंधनिवेशे चैत्रत्वसाध्यमैत्रान्यत्वसामानाधिकरण्योपलक्षितचैत्रमैत्रोभयवृत्तिदंडहेतुकानुमितेः सलिंगकपरामर्शाधीनत्वापत्तिः । सर्वत्र हेतुतावच्छेदकोपलक्षितप्रतियोगिकसंबंधानिवेशे च पूर्वोक्तस्थल एवोक्तसामानाधिकरण्यविशिष्टस्य सद्धेतुतया तत्रानुमितिजनकपरामर्शप्रामाण्यस्य दुर्लभत्वापत्तिः। तथा च धूमत्वोपलक्षितस्य वन्हिनिरूपितव्याप्तिशरीरे तदुपलक्षितप्रतियोगिकसंबंधस्यैव निवेशस्यावश्यकतया तद्विरोधिव्यभिचारस्यापि तथात्वावश्यकतया बाष्पे धूमत्वभ्रमस्थले धूमत्वोपलक्षितस्य बाष्पस्य व्यावहारिकसंयोगेनैव न्हदादौ सत्वाद्व्यभिचार एव । साध्याभावसामानाधिकरण्यस्याप्युपलक्षितहेतुकव्यभिचारशरीरे हेतुतावच्छेदकावच्छिन्नत्वेनानिविष्टत्वात् । तदाश्रयगात्रे निविष्टत्वात् । अन्यथोक्तोपलक्षितदंडस्य चैत्रत्वादिव्यभिचारानिर्वाहापातात् । नच धूमत्वाश्रये साध्याभावसामानाधिकरण्यं न व्यावहारिकविशेषणतयाऽस्तीति वाच्यं । धूमत्वाश्रये बाष्पेवन्ह्यभावसामानाधिकरण्यस्य व्यावहारिकसंबंधेन सत्वात् । नच व्यावहारिकसंसर्गेण हेतुतावच्छेदकाश्रयो व्याप्तिशरीरे व्यभिचारादिशरीरे निविष्टः संसर्गश्च तादात्म्यं समवायो वेत्यन्यदेतत् । इत्थं च बाष्पे धूमत्वं प्रातीतिकसंबंधेनैवास्तीति न तमादाय व्यभिचारप्रसक्तिरिति वाच्यं । तथात्वे बाष्पे धूमत्वारोपस्थले तत्र विद्यमानवन्हेः धूमव्याप्यतावारणाय व्यावहारिकसंबंधेन साध्यतावच्छेदकवत्वस्य साध्ये निवेशं विहाय तत्रत्यसंयोगे विशिष्टधूमप्रतियोगिकत्वाभावाभ्युपगमेन तादृशधूमसामानाधिकरण्यस्य वन्हौ व्यावहारिकसंबंधेनासत्वोक्त्या परिहारस्यानुचितत्वापातात् । तादृशधूमत्वाश्रयीभूत

बाष्पसामानाधिकरण्यस्य व्यावहारिकसंबंधेनैव सत्वेन तत्र विशिष्टनिरूपितसामानाधिकरण्यस्य प्रातीतिकार्थघटितत्वेनैव व्यावहारिकसंबंधाभावे त्वयोपपादनीये बाष्पधूमत्वयोरुभयोरपि व्यावहारिकत्वेन प्रातीतिकतदुभयसंसर्गमुपादाय विशिष्टस्य प्रातीतिकार्थघटितत्वस्यैव तद्बीजतया तद्द्वारेणैवोक्तदोषवारणस्योचितत्वात् । किंच बाष्पे धूमत्वभ्रमानंतरं तादृशबाष्पसंयोगेनैव ह्रदे यत्र धूमाभासस्य प्रतीतिः तदधिकरणे वन्हेः सर्वथाऽनारोपस्तत्रैव व्यभिचारः । तादृशाभासधूमे व्यावहारिकसंबंधेनैव त्वया धूमत्वस्यांगीकृतत्वात् । तादृशधूमस्य व्यावहारिकसंयोगेनैव ह्रदे प्राप्तेः । नच प्रातीतिके कथं व्यावहारिकसंबंधः। धूमत्वस्य प्रातीतिकानुयोगिकत्वेन प्रातीतिकत्वस्यैव प्राप्तेरिति वाच्यं । भ्रमबाधयोर्वैय्यधिकरण्यमाशंक्य तत्परिहाराय भ्रमे हि व्यावहारिकरजतत्वस्य व्यावहारिकः संसर्गः प्रातीतिकरजते भासते । बाधकज्ञाने व्यावहारिकमिथ्यात्वस्य व्यावहारिकसंबंधभानवदिति ग्रंथेन परेणैवोपपादितत्वेन प्रातीतिकानुयोगिकत्वस्य संबंधप्रातीतिकत्वे अतंत्रत्वावगमात् । नच प्रातीतिकतादात्म्यसंसर्गेण धूमत्वोपलक्षितबाष्पप्रतियोगिकत्वस्य तत्संयोगे सत्वेपि व्यावहारिकतादात्म्येन धूमत्ववत्प्रतियोगित्वं न बाष्पसंयोग इति वाच्यं । तादृशधूमतादात्म्यापन्नबाष्पप्रतियोगिकत्वे संयोगस्य तादृशधूमप्रतियोगिकत्वानपायात् । अन्यथा नीलघटवति भूतले घटवन्नीलवच्चेति प्रतीतिर्न स्यात् । नीलस्य संयोगाप्रतियोगित्वात् । नच संयोगद्वयमेव प्रतीतिद्वयनियामकमिति वक्तुं शक्यं। दृष्टांते दार्ष्टांतिके चोभयत्राप्यनुभवबाधात् । नच तत्प्रतियोगिकव्यावहारिकतादात्म्यवत्वमेव तत्प्रतियोगिकसंसर्गे तत्प्रतियोगिकत्वनियामकमिति वाच्यं।पूर्वं विद्यमानशुक्तिनिष्ठतादात्म्ये रजतप्रतियोगिकत्वमात्रं जायते । नतु तादात्म्यमप्युपपद्यत इति अपि त्वया भाषितत्वात् । प्रतियोगित्वेपि व्यावहारिकत्वं नियामकमित्युक्तौ तु उक्तस्थले बाष्पसंयोगस्य धूमाप्रतियोगिकत्वेन धूमासंबधतया धूमवानिति प्रतीत्यनुपपत्तिः । व्यधिकरणसंबंधेन धूमप्रकारकत्वे प्रात्यक्षिकभ्रमस्य तवान्यथाख्यातित्वं स्यात् । धूमवद्ह्रदरूपविशिष्टविषयकत्वाभावे ज्ञानानां विशिष्टविषयकत्वेनैव मिथो वैलक्षण्यात् । भ्रमे रजतमिदं इदं रजतमिति द्व्याकारकतानिर्वाहाय रजतादाविदमादितादात्म्यं प्रातीतिकं जायत इत्यादिसिद्धांतभंगः स्यात् । नच बाष्पीयसंयोगे धूमप्रतियोगिकत्वं प्रातीतिकमुत्पद्यत इति वाच्यं । तावतापि व्यावहारिकसंसर्गस्य धूमसंसर्गत्वानपायात् । व्याप्त्यादिशरीरेऽपि व्यावहारिकवृत्तिवैजात्यावच्छिन्नस्य संसर्गविधयैव निविष्टत्वात् । प्रतियोगित्वानुयोगित्वादावप्यवांतरवैजात्यमंगीकृत्य तादृशविजातीयप्रतियोगितया धूमविशिष्टो यो विजातीयः संयोगः विजातीयानुयोगितासंबंधेन तद्विशिष्टत्वं व्याप्त्यादिशरीरे निविष्टमित्याग्रहकरणेपि बाष्पे धूमभ्रमोत्तरं यत्र तादृशधूमस्य तदधिकरणे भ्रमेण धूमवन्निष्ठाभावप्रतियोगी वन्हिरित्यादिव्यभिचारभ्रमस्तस्य व्याप्तिग्रहप्रतिबंधकत्वानुभवानुरोधात् । तत्प्रतीतिविषयविशिष्टशरीरप्रविष्टप्रतियोगित्वादिसंसर्गाणां वैजात्यवत्वमेव वाच्यमन्यथा समवायसंसर्गघटितव्याप्तिग्रहे संयोगसंसर्गघटितव्यभिचारग्रहवत्तद्ग्रहस्याप्रतिबंधकत्वापत्तेः । तथाच धूमसाध्यकवन्हेरिव वन्हिसाध्यधूमस्यापि व्यभिचारो दुर्वारः । न चोक्तव्यभिचारस्य प्रातीतिकधूमप्रतियोगिकत्वादिघटितत्वेन प्रातीतिकत्वान्न व्यावहारिकसंबंधेन तद्वत्त्वं हेतोरिति वाच्यं । उक्तप्रतियोगिकत्वादिसंसर्गाणां व्यावहारिकमात्रवृत्तिवैजात्यवत्वे तेषां प्रातीतिकत्वस्य वाङ्मात्रत्वात् । वन्ह्यादौ धूमादिव्यभिचारस्य व्यावहारिकसंबंधेनैवावगाहिज्ञानस्येव प्रतिबंधकतायाः दृष्टत्वात् । चैत्रेण धूमे वन्ह्यभाववद्वृत्तित्वमारोपितमित्यादि मैत्रव्यवहारमूलभूतस्य प्रातीतिक

संबंधेन व्यभिचारप्रकारकधूमविशेष्यकस्य वन्ह्यभाववद्वृत्तिविशिष्टधूमविषयकज्ञानवांश्चैत्र इत्याकारकानिर्णयस्य मैत्रे सत्वेन तस्य व्याप्तिग्रहोदयेन व्यावहारिकवृत्तिवैजात्यावच्छिन्न-संसर्गकव्यभिचारज्ञानस्य प्रतिबंधकत्वस्य क्लृप्ततयोक्तवाष्पारोपितधूमस्थले व्यभिचार-ज्ञानप्रतिबंधकत्वानुभवानुरोधेन व्यावहारिकसंसर्गेण व्यभिचारविशिष्टहेतुरूपविशिष्ट-विषयकत्वस्यावश्यकत्वे व्यावहारिकसंबंधेनोक्ताव्यभिचारस्य हेतावावश्यकत्वात्। नच प्रातीतिकव्यावहारिकसाधारणरूपावच्छिन्नसंसर्गेण व्यभिचाराद्यवगाहिनिर्णय एव व्याप्ति-ग्रहविरोधी। हेतोर्दुष्टत्वव्यवहारे तु व्यावहारिकसंबंधेनैव तद्वत्वं तंत्रमिति वाच्यं। द्रव्य-त्वावच्छिन्नग्रहस्य वन्हित्वावच्छिन्नप्रतियोगिकाभावप्रकारकबुद्ध्यविरोधित्ववदुक्तसामान्य-रूपविशिष्टसंसर्गव्यभिचारग्रहस्य व्यावहारिकसंसर्गमात्रवृत्तिवैजात्यविशिष्टसंसर्गावच्छि-न्नप्रतियोगिताकव्यभिचाराभावघटितव्याप्तिग्रहविरोधित्वात्। नच व्याप्तिशरीरेऽपि सामा न्यरूपविशिष्टसंसर्गावच्छिन्नव्यभिचाराभावो निविष्ट इति वाच्यं। प्रातीतिकव्यभिचारस्यो क्तसामान्यरूपविशिष्टसंसर्गेण धूपादौ सत्वेन धूमादौ वन्हिव्याप्तेर्दुर्लभत्वापत्तेः। नच तेन संबंधेन तस्य मिथ्यात्वात्तत्संबंधावच्छिन्नतदभावोऽपि तत्र सुलभ इति वाच्यं। व्यभिचा-रिण्यप्युक्तरीत्या व्यभिचाराभावसत्वात्तस्यापि व्याप्यतापत्तेः। नच व्यावहारिकमात्रवृत्ति रूपविशिष्टसंसर्गेण प्रतियोगिवैयधिकरण्यप्रभावे निविष्टमिति वाच्यं। तर्हि आगतं व्याव-हारिकसंसर्गेणैव व्यभिचारग्रहो व्याप्तिग्रहविरोधीति। तस्मात् पूर्वोक्तदोषो दुर्वारः। नच व्यावहारिकव्यभिचारविशिष्टत्वं हेतोर्दुष्टत्वे नियामकमुक्तस्थले तु प्रातीतिकपदार्थघटि-तत्वाद्व्यभिचारः प्रातीतिक एवेत्युक्तमिति वाच्यं। संसर्गातिरिक्तस्थले व्यावहारिकमात्र वृत्तिवैजात्यस्य त्वयाऽनंगीकृतत्वेन व्यभिचारे जातिरूपव्यावहारिकत्वाद्यभावात्। व्यव-हारकालाबाध्यत्वस्यैव तथात्वे तेनैव सर्वनिर्वाहे व्यर्थो व्यावहारिकसंसर्गमात्रवृत्ति-वैजात्याभ्युपगमः व्यावहारिकस्याप्युक्तदिशा प्रातीतिकसंसर्गताया उपपादिततया तद्-संसर्गतया वन्ह्यादौ धूमादिव्याप्त्यादेः परिहर्तुमशक्यतया ततोऽस्यार्थस्यावश्यमनुसर-णीयत्वात्। अत्र चासंजाजातबाधभ्रमविषयीभूतव्यभिचारादिकमादाय पूर्वोक्तदोषः सर्वोऽप्यनुसंधेयः। प्रतिवादिनं प्रति साधने त्वनिर्वचनीयसिद्धावुक्तव्यवस्थासिद्धिस्तत्सि द्धौ चोक्तबाधकाभावेनानिर्वचनीयसिद्धिरित्यन्योन्याश्रयोऽप्रामाणिकत्वं चेत्येवमाद्या दोषाः स्फुटा एव। कपालादीनां व्यावहारिकत्ववतां घटादिरूपस्वोचितार्थक्रियाकारित्वं प्रातीतिकं तु न कुत्रापि कारणं। सर्वत्र चिद्रूपज्ञानस्यैव कारणत्वमित्यादिवचनानि स्वयमेव पूर्वत्रोत्तरत्र च प्रातीतिकानामप्यर्थक्रियाकारित्वनिरूपणाद्व्याहतानि। एकत्रारोपितयोः प्रातीतिकयोरपि व्याप्तिसंभवात्। तत्र व्यावहारिकसंबंधनिवेशायोगात्। सर्वत्रव्याप्त्याद्वावे-कजातीयत्वं स्वाप्नदंडेन कपालादिना स्वाप्नघटाद्युत्पत्त्या व्यावहारिकत्वविशिष्टानामेव तेषां कारणत्वमित्यप्ययुक्तमित्यादिकमनुसंधेयमित्यलं। तस्मात्साधूक्तं। नच वाष्पारोपित-धूमेन धूमवत्वं व्यभिचरतीति। ननु स्वाप्नधूमः सिद्धांते सत्य एव। न चासौ वन्हिनियतः। स्वप्ने वन्ह्यभाववत्यपि धूमदर्शनात्। तथा च तमादाय व्यभिचारं वारयितुं स्वाप्नधूमवृत्तिवैजात्यावच्छिन्नभेदो निवेश्यः। तत्स्थाने परेणाभासान्यत्वविशेषणं दीयते। स्वाप्नधूमे व्यभिचारोद्भावने अपरीक्षकैः लौकिकैः स धूम एव न भवतीत्युक्तकोक्तविशेषणा-दानेपि परीक्षकत्वेन यथा लौकिकप्रतीतेरप्रामाण्यं भवतोच्यते तथा तेनापि लौकिकप्रती-तिरप्रामाण्योक्तौ किं बाधकमितिचेन्न। यतः इदमत्र समाधानं। येषु ज्ञानेषु लौकिकानाम-विप्रतिपन्नभ्रमत्वसंप्रतिपत्तिस्तद्विषयीभूतधूमादिकमादाय व्यभिचारे केन चिन्नोदिते

( टीका ) अस्त्वागमस्तर्ह्यनिर्वचनीयार्थे मानमिति चेत् । स किं सदसद्विलक्षणमेतदिति निरवकाशतया विवक्षितार्थस्य प्रतिपादको भवेत् । उतानिर्वचनीयमेतदित्यादिरूपः । नाद्यो ऽनुपलंभादित्याह ॥

[ मूलं ] **नच भावाभावविलक्षणं क्वचिदागमो वक्ति ॥ १० ॥**

( टीका ) च शब्दः प्रमाणान्तरनिराकरणसमुच्चये । क्वचित्प्रदेशे निरवकाशागमपक्षनिराकरणसूचनायानिर्वचनीयमिति लक्ष्यप्रक्रमं विहाय भावाभावविलक्षणमिति लक्षणानुवादः कृतः ।

---

आविपालगोपालानारभ्य न केऽपि लौकिकाः परीक्षकाश्च तत्धर्मं तत्राभ्युपेत्य व्यभिचारवारणाय विशेषणदानाय प्रयतंते । किंतु तत्धर्मावच्छिन्नभेदमेव तत्राभ्युपेत्य स्वप्नेपि येषु भ्रमत्वाभिमानः तेपि तथैव वदंति । किंतु स्वाप्नप्रमेयाणां विशेषश्रुतिसूत्रस्मृत्यादिभिः प्रत्यक्षादिप्रमाणाद्यबाधितसत्वं स्वीकुर्वता मया स्वाप्नप्रत्यये लौकिकानां यो धर्म्यंशे विभ्रमत्वग्रहस्तन्मात्रस्य भ्रमत्वं कल्प्यते बाधकाभावात् । स्वाप्नपदार्थेषु न धूमत्वादिकं धूमपदशक्यतावच्छेदकतया लौकिकपुरुषैरवगतं तत्र स्वीक्रियते । केवलं बाह्यधूमाद्यभेदारोपः तन्नियतस्तन्मूलक एव । तत्र धूमादिपदप्रयोगः रजतभ्रमवतः शुक्तौ रजतपदप्रयोगवत् । स्वप्नोत्थितस्य तद्बोधनाय तथाप्रयोगस्तु चित्रलिखितसिंहादौ सिंहशब्दप्रयोगवत् विशेषसादृश्यनिबंधनो गौणः। अत एव धूममिवासादृश्यमितिप्रयोगः। अन्यथैकमात्रवृत्तिरूपावच्छिन्नप्रवृत्तिनिमित्तकचैत्रपदतत्तृणादिसंकेतितपदविशेषादीनां स्वाप्नदृष्टतत्तदर्थेषु व्यवहाराणां प्रेक्षावत्संबंधिनां दुरुपपादप्रसंगात् । मानोरथिकस्वाप्नानां प्रसिद्धजलपुष्पादिभिः सादृश्यात्तन्मूलकत्वेन गौण्या प्रवृत्तजलपुष्पादिशब्देन पूजाविधाननिषेधादिबोधकवचनसामर्थ्यात्पुण्यपापनिर्वाहकत्वशुभाशुभसूचकत्वादिकमपि युक्तं गुडतिलधेन्वादिदानपरवाक्यानुसारेण धेन्वाकारगुडादीनामिवेति कथमपि बाधकविरहात् । तथाच स्वाभ्युपगमनिर्वाहाय सर्वलोकाविदितविशेषणं हेतुकोटौ निवेश्य सर्वसिद्धस्य धूमत्वावच्छिन्नव्याप्तिग्रहस्य विनाप्रमाणं भ्रमत्वं न कल्प्यत एव । सर्वलोकप्रतीतेर्विना प्रमाणं स्वाभ्युगमानिर्वाहाय भ्रमत्वकल्पने सर्वव्यवस्थायाः स्वेच्छाधीनत्वापातात् । परेण तु स्वाभ्युपगमनिर्वाहमात्रानुरोधेन सार्वलौकिकप्रतीतेर्भ्रमत्वं कल्प्यते । स्वार्थानुमितिसामग्रीसमवधानदशायामेव प्रेक्षावतामुक्तबाधकस्य स्फूर्त्याऽऽवश्यकत्वेन तन्निरासकलधूपायांतराभावेन बहुतरकल्पनागौरवादिति । बाधकप्रातिसंधानादिगौरवतर्कपराहत्या स्वार्थानुमित्यादेरनुत्पत्तिप्रकारस्याविदितत्वात् । नच सदसद्वैलक्षण्यरूपानिर्वचनीयत्वग्रहकाले रजतत्वादिधर्मस्य प्रातीतिकरजतवृत्तित्वादिग्रहपूर्वकं रजतादेः स्वसाध्यव्यभिचारादिस्फूर्तौ बीजाभाव इति वाच्यं। अपरोक्षप्रतीतिविषयत्वेऽसद्वैलक्षण्यमात्रस्यानुपपादकतया तन्निर्वाहायोत्पत्त्यादिमद्रजतादिस्वरूपवत्वस्फूर्त्यावश्यकत्वे तदनुषंग्युक्तबाधकस्फूर्तेरावश्यकत्वात् । अतो युक्तमेव परं प्रत्युक्तदूषणाभिधानामिति । एतदपि त्वदभ्युपगमस्यैवेत्येवकारेण नतु त्वदन्येषामित्यर्थद्वारा स्वाभ्युपगमव्यवच्छेदकेन सूचयामासेत्यलं । क्वचित्प्रदेश इति । कस्यामपि शाखायामित्यर्थः। ननु न चानिर्वचनीये किंचिन्मानमिति लक्ष्यस्यैव प्रक्रांतत्वादिदानीं तथैव वक्तव्यं। नच भावाभावविलक्षणमिति लक्षणोक्तिपूर्वकानिर्देशे किं बीजमित्यतस्तद्बीजं जय-

(टीका) तर्हि सदसद्विलक्षणमिति वक्तव्यम्। तस्यैवानिर्वचनीयलक्षणत्वेन परैरंगीकृतत्वात्। मैवं। यतोऽत्र न भावाभावशब्दौ रूढ्या विधिनिषेधयोरभिधायकौ किंतु योगेन सदसत्परौ। विधिनिषेधपरत्वेपि केनापि प्रकारेण निर्वक्तुमशक्यमनिर्वचनीयम्। सदसद्विलक्षणत्वं तूपलक्षणत्वेनोच्यत इति परैरंगीकृतत्वाददोषः। अत एवोभयाविलक्षणं चेदनिर्वचनीयत्वं ब्रह्मण एवापतितमिति भिन्नाभिन्नविलक्षणत्वेनानिर्वचनीयत्वं वक्ष्यति। प्रसिद्धातिक्रमस्तूत्तरार्थः। तच्च दर्शयिष्यामः।

---

आह। निरवकाशेति। योगेनेति। भवतीति भावः सन् न भवतीत्यभावोऽसन्नित्यर्थः। विधिनिषेधपरत्वेपीति। ननु विधिनिषेधपरत्वे भावरूपाभावरूपतत्वद्वयविलक्षणत्वमेवेत्स्यात्। तच्चासत्यव्याप्तत्वात् कथमनिर्वचनीयलक्षणत्वेनाभिमतं।किंचास्यापि लक्षणस्य पूर्वमेव प्रक्रांततायाः पूर्वोक्तरीत्याऽऽवश्यकत्वे तस्यासत्येव सत्वेन न तस्याप्रसिद्धविशेषणत्वव्याहत्यादीति। नैवं।निषेधपदस्य प्रकृते भावभिन्नपरत्वेन भावतद्भिन्नोभयवैलक्षण्यस्य सत्यप्ययोगेन पूर्वोक्ताप्रसिद्धविशेषणत्वादिसंगतेः। नच भावाभावशब्दौ रूढ्या न विधिनिषेधपराविति पूर्वनिषिद्धार्थस्यैवैतद्वाक्यस्थाप्यत्वेनांगीकारः सूच्यते। न हीदं निषेधपदस्य भावभिन्नार्थत्वे युज्यते। मौलाभावपदस्य योगेन भावभिन्नपरत्वेपि तत्र रूढेरभावादिति वाच्यं। अत्रानुवादे रूढ्येत्यंशं विहाय विधिनिषेधपरत्वेपीत्युक्तिस्वारस्यादेवाव्यवहितपूर्ववाक्यप्रक्रांतयोगमात्रांगीकारपूर्वकं रूढेरविवक्षितत्वलाभेनोक्तबाधकानवकाशात्। परैरंगीकृतत्वादिति। अत एवानिर्वचनीयवादार्थे ब्रह्मानंदेनाभिहितं न चाज्ञानस्य प्रागभावरूपत्वे भावाभावविलक्षणत्वचैतन्यविषयकत्वादिसिद्धांतव्याघात इति वाच्यं। परेषां ज्ञानस्य भावस्यापि ध्वंसप्रागभावत्वसविषयत्वादिवत् भावाभावविलक्षणसविषयत्वादिसत्वेपि प्रागभावत्वाविरोधादिति। एवमद्वैतसिद्धौ सत्वासत्वे समानाधिकरणाभावप्रतियोगिनीत्यनुमानस्याभासानिरासप्रस्तावे नित्यानित्यत्वकल्पितत्वाकल्पितत्वादिकमपि पक्षीकृत्यैवं साध्यमनुमेयं स्यादित्याशंक्यानिर्वचनीयवादिनस्स्वेष्टत्वादित्यादिना तां शंकां निराकृत्य नहि स्वरूपतः कल्पितस्य किंचिदपि रूपं वास्तवमित्याद्यभिधानं संगच्छते अन्यथा तस्यापसिद्धांतः स्यात्।एवं विवरणेपि अविद्यानिवृत्यभावसाधकपूर्वपक्षिहेतोरनादित्वस्य प्रागभावे व्यभिचारवारणाय भावत्वे सतीति तेनानादित्वविशेषणे दत्तेऽनिर्वचनीयत्वादज्ञानस्येत्यभिहितं भावाभावविलक्षणत्वरूपानिर्वचनीयत्ववत्वादसिद्धं भावत्वविशेषणमित्याशयेन। अन्यथा तदुक्तिस्तत्रानुपयुक्ता स्यादेवमुत्तरत्राप्यभाववैलक्षण्यादात्मवदज्ञानस्यानिवृत्तिरिति चेन्न। सद्वैलक्षण्यात्प्रागभावनिवृत्तिः किन्न स्यादिति तत्र सत्पदं भावपरमेवान्यथा घटादिकं विहाय प्रागभावपर्यंतं दृष्टांतानुसरणवैय्यर्थ्यापत्तेः।भावपदं विहाय सत्पदोपादानं लक्षणवाक्यघटकसत्पदं भावपरं विकल्पेन भवतीति सूचनायेति स्वरसतोऽवगम्यत इति ध्येयं। अदोषः। अनुक्तोपलंभरूपदोषाभावः। पराभिप्रेतमिदमित्येतदाचार्यस्यापि संमतमतो नेदं द्वितीयव्याख्यानं तदनभिमतमित्याशयेनाह। अत एवेति।प्रसिद्धेति। तन्मते प्रचुरव्यवहारविषयकल्पातिक्रम इत्यर्थः। उत्तरार्थ इति। नासदासीदिति श्रुतेरेतत्कल्पे किंचित्स्वारस्यस्य परिरीतिमादाय संभवेन तदादाय स्वकीयोत्तरग्रंथोत्थितौ किंचित्सद्लपक्षनिराकरणरूपमुत्तरवाक्यस्य पाष्ठ्यं तत्संपादक इत्यर्थः। तच्च दर्शयिष्याम इति यदुक्तं

( टीका ) ननु नासदासीदित्याद्यागमोऽनिर्वचनीयामविद्यां वक्ति । सदसती प्रतिषिध्य तम आसीदिति महाप्रलयेऽविद्यावस्थानस्योक्तत्वात् । न चासतः सत्वप्रसक्त्यभावेन तन्निषेधायोगादनुपपन्नार्थं वाक्यं नानिर्वचनीयामविद्यां गमयितुमलमिति सांप्रतम् । अत्र सदसच्छब्दयोर्भावाभावपरत्वेनांगीकृतत्वात् । भावाभाववैलक्षण्येनाप्यानिर्वचनीयत्वसिद्धेः। अतः कथं न भावाभावविलक्षणं क्वचिदागमो वक्तीति तत्राह ॥

**(मूलं) नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमापरो यदित्यत्र च ॥ ११ ॥**

( टीका ) 'च' शब्देन भावाभावविलक्षणं न वक्तीत्येतदनुकृष्यते । इदं खलु वाक्यं प्रलये सदसतोरभावं तमसश्च भावं प्रतिपादयदनुभूयते।न पुनस्तमः सदसद्विलक्षणमिति । ननु सदसतोरभावेऽवस्थितस्य तमसो बलात्सदसद्वैलक्षण्यमापाद्यत इति। सत्यम्। न तर्हीदं वाक्यमविद्यानिर्वचनीयतायामागमयितव्यम् । पदार्थसंसर्गमात्रस्यागमार्थत्वेन सामर्थ्यलब्धस्यातदर्थत्वात् । यथोक्तं 'यश्चार्थादर्थो न स चोदनार्थ' इति ।

---

तदिदानीं दर्शयति । न चासत इति । असतः सत्वेनोपस्थितेरनाहार्याया अयोगेनेत्यर्थः। अनुपपन्नार्थमिति । तथा चायं पक्षो निर्दल एवेति भावः। अंगीकृतत्वादिति । परमते एतत्कल्पस्य संभवदुक्तिकत्वं तत्कल्पस्यासंभवदुक्तिकत्वं च परोक्तदूषणाभासानुवादपूर्वकनिरासे स्फुटीभविष्यति। अत्र नासदासीदित्यादिमूलग्रंथः सदसद्वैलक्षण्यभावाभाववैलक्षण्यरूपपराभिप्रेतश्रुत्यर्थद्वयस्यापि निरासकः । द्वितीयस्तु परैः स्वग्रंथे विशिष्यानुक्तोपि पूर्वार्थापेक्षया स्वरसत्वात्परेण स्वग्रंथे निवारितत्वाभावात्सदसच्छब्दाभ्यां सामान्यत एवोक्तत्वाच्च लभ्योऽतः पक्षद्वयस्यापि निरासकत्वमपि युक्तं । अत एव पूर्वटीकायां सदसत्परत्वेनापि भावाभावशब्दौ व्याख्यातौ । परंतु मूलस्य केवलपूर्वार्थनिरासपरत्वेऽतिनिर्दलपक्षमात्रनिरासकत्वे विशेषतः पौष्कल्यं न स्यादित्याशयेन पूर्वार्थनिर्दलताप्रदर्शनपूर्वकमुत्तरपक्षमुत्थाप्यैतन्मूलमवतारितं । अन्यथैतन्मूलस्यैकार्थनिराकरणपरत्वे योगेन भावाभावशब्दयोः सदसत्परत्ववर्णनटीकायाः अप्रकृततानुपयुक्तार्थकथकत्वेनासंगतिप्रसंग इत्यवधेयं । तमस इति अविद्याया अनिर्वचनीयत्वासिद्धावपि न चाऽनिर्वचनीये किंचिन्मानमित्येतत् व्याहतमेव जातमिति भावः। बलादनुमानात् । आगमयितव्यमिति । नवीनोक्तार्थांतरनिरासेनैतत्समर्थनमपि भविष्यतीति ध्येयं । यश्चेति । अर्थात् । वाक्येन शब्दमर्यादया लभ्यार्थात् । ज्ञाप्यत्वं पंचम्यर्थः अर्थपदार्थेऽन्वेति । चोदनाविधिवाक्यं तच्चतुल्यन्यायतया वाक्यसामान्योपलक्षकं। तदर्थः शब्दमर्यादया

(टीका) माभूदिदं वाक्यमनिर्वचनीयाविद्यायामागमतया प्रमाणम् । परिशेषतया तु भविष्यति । तथाहि । तम आसीदिति महाप्रलये तमसोऽविद्यापरपर्यायस्यावस्थानमभिहितम् । तस्यच प्रसक्तानां सत्वादिप्रकाराणां नासदासीदित्यादिना सदसदभावाभिधानेन प्रतिषेधे सत्यन्यत्राप्रसंगात्परिशिष्यमाणे तमसोऽनिर्वचनीयत्वे बुद्धिर्भविष्यतीत्याशंक्यास्य वाक्यस्यार्थांतरं विवक्षुस्तत्सिद्धये पराभिमतार्थेऽनिष्टप्रसंगं तावदाह ।

**[मूलं] पारिशेष्येणानिर्वचनीयत्वांगीकारे आनीदवातं स्वधया तदेकमिति तदानीं परिशिष्टत्वाद्ब्रह्मण एवानिर्वचनीयत्वं स्यात्॥१२॥**

(टीका) यद्यस्य वाक्यस्योक्तविधया परिशेषप्रमाणत्वेन तमसोऽनिर्वचनीयत्वमंगीक्रियते तदा परमार्थतयांगीकृतस्यैव ब्रह्मणोप्यनिर्वचनीयत्वं स्यात् । तस्यापि तमोवदानीदवातमिति वाक्येन तदानीं प्रलये परिशिष्टत्वावगमात् । उभयोरपि परिशिष्टत्वेनावगतयोरन्यतरस्मिन्नेव परिशेषेणानिर्वचनीयत्वापाते नियामकाभावात् । ब्रह्मणः पारमार्थिकत्वे प्रमाणमस्तीति चेन्न । तमसोऽपि तस्य वक्ष्यमाणत्वात् ।

---

तल्लभ्योर्थः । परिशेषप्रमाणत्वेनेति । परिशेषप्रमाणोत्थापकत्वेनेत्यर्थः । निमित्ते तृतीया अंगीकारेऽन्वेति । तथाच मूले परिशेषपदं परिशेषोत्थापकपरं । तस्माद्भावे ष्यञित्युक्तं भवति । तमस इति शेषोक्तिः । ब्रह्मणोऽपीति । अनेन एवकारोऽप्यर्थ इत्युक्तं भवति । वाक्यस्य वस्तुतः परिशिष्टत्वकारणत्वायोगादितिपदोत्तरमध्याह्रियमाणतृतीयांतश्रुतिपदोत्तरतृतीयाया ज्ञाप्यत्वरूपहेतुत्वार्थकत्वमंगीकृत्य लब्धमर्थमाह । परिशिष्टत्वावगमादिति । नियामकाभावात् ब्रह्मव्यावृत्तहेत्वभावात् । ब्रह्मण्यनिर्वचनीयत्वाभावे सदसदभावाधिकरणकाले सत्वरूपहेतोस्तत्रैव व्यभिचारित्वप्राप्तेरिति भावः । पारमार्थिकत्वेन प्रमाणप्रमितत्वमपि हेतुविशेषणं । तथा च न व्यभिचार इत्याशयेन शंकते । ब्रह्मण इति । तेन च ब्रह्मणो निर्धर्मिकत्वेन भावत्वानधिकरणत्वात्तच्छून्यकाले ब्रह्मसत्वमंगीकृत्य व्यभिचारवारणाय विशेषणदानशंकासंभवेपि सदसद्वैलक्षण्यपक्षे कथमियमाशंका । ब्रह्मणः सत्वेन सदभावकाले तस्य सत्वमभ्युपगम्य व्यभिचारवारणाय विशेषणदानायोगात् । नच भावाभावविलक्षणत्वकल्प एवेयमाशंकेति वाच्यं । पूर्वकल्प ब्रह्मणोऽनिर्वचनीयत्वपरिहारस्यास्फुटस्यानाशंकितत्वेन न्यूनतापातात् । मैवं । सत्वरूपधर्मोपहितस्य प्रलये अभाव एव वर्तत एव । तदा सद्रूपब्रह्मसत्वेऽपि सत्वोपहिततासंपादकभेदकल्पकस्य जीवस्य तदानीं शरीरेंद्रियादिविकलत्वेन सत्वोपहितस्य तदानीमसत्वात् । सन्नास्तीत्यनेनापि तथैव बोधोदयात् । अत एव माधवेन सत् सत्वेनानिर्वाच्यं नासीदित्युक्तं । आनीदवातमिति वाक्येन ब्रह्मणः सत्वोपहिततया तत्कालवृत्तित्वानवबोधेन ब्रह्मत्वेनैव बोधेन तद्वाक्यस्य व्याहतार्थकत्वाभावात् । इत्थंच प्रकृतहेतुना तत्राप्यनिर्वचनीयत्वापत्तौ उक्तहेतुविशेषणं युक्तमेव । तमसोऽपीति । वक्ष्यमाणत्वादिति । विश्वं सत्यमित्यादिप्रमाणोदाहरणेनेति भावः ।

( टीका ) अतो नैतद्वाक्यं प्रसिद्धसदसत्प्रतिषेधपरमिति । तदेकं सर्वोत्तमं ब्रह्मा-वातं वातप्रेरणया विनैव स्वधया सुखेनैव नतु सुखप्राप्त्याद्यर्थमानीदचेष्टतेति श्रुत्यर्थः।

,तथाच पक्षे हेत्वसिद्धिरिति भावः । ननु सदसदभावकाले वा भावाभावकाले वा स्थितिमत्वं हेतुः पारमार्थिकत्वेनाप्रमितत्वरूपविशेषणाघटित एव स्वसाध्यप्रयोजकः। तदन्यतरात्मकत्वे स्वस्य स्वाधिकरणकाले तदभावसत्वायोगेन साध्याभावे प्रकृतहेतूच्छित्तिरूपविपक्षबाधकतर्कोदयात् । प्रकृतहेतुशरीरे व्याप्यतावच्छेदककोटौ अनुपयुक्तमाधिकविशेषणं प्रक्षिप्य कथमाशंका तदभ्युपगमेन च कथं समाधानमिति चेन्न । यतस्तदभाववति तस्य सत्वं परस्परं न्यूनाधिकसत्ताकत्वेन घटितं । अन्यथा विरोधप्रसंगात् । तथा चाधिकसत्ताकस्य स्वान्यूनसत्ताकस्य वा स्वविरोधिनोऽधिकरणे येन रूपेण प्रतीयते यः स वस्तुतस्तद्रूपवानित्येव व्याप्तिः पराभिमता । ननु तदभाववति विद्यमानस्तद्विलक्षण इति। तथा सति प्रातिभासिकघटाभाववति विद्यमानस्य घटस्य घटविलक्षणत्वग्रहापातात्। इत्थं च तादृशाविद्यासमसत्ताकस्याधिकस्य वा सतोऽसतश्चाभावस्याधिकरणेऽविद्यासत्वाद्वस्तुतस्तद्रूपत्वाभावेन तत्तद्विलक्षणत्वं । अत एवोक्तमद्वैतसिद्धौ नहि स्वरूपतः कल्पितस्य किंचिदपि रूपं वास्तवं भवतीति । अत एवाभावो नास्तीति निषेधोपि न व्याहतः न्यूनाधिकसत्ताकवस्तुद्वयावगाहित्वात् । सर्वेभ्यो दर्शपूर्णमासाविति वाक्ये पश्वादीनां सर्वपदेन पशुत्वादिरूपविशेषरूपेणैव बोधकत्ववन्नेह नानेति वाक्यस्थकिंचनेति पदेन घटत्वादिरूपविशेषरूपेणैव सर्वं ब्रह्मणि मिथ्यात्वसिद्धये निषिध्यते । शुद्धाद्वैते अभावत्वरूपेणोपस्थितस्याप्यभावबोध आवश्यकः । तथापि न व्याहतः स निषेधो यथा तद्वत् । अत एवानादिजीवब्रह्मविभागादेः प्रलये सत्वपक्षे नाभावनिषेधानुपपत्तिः। भावरूपाविद्यायाः सत्वेपि तदभावनिषेधवत् अनिर्वचनीयत्वस्योभयत्रापि साम्यात् । इत्थं चोक्तरीत्या पराभिप्रेतव्याप्तेरधिकसत्तादिघटितत्वेनानिर्वचनीयासिद्धेः प्रागसिद्धत्वमेवेत्याशयेन यो यदभावाधिकरणवृत्तिः स तद्विलक्षण इति लोकसिद्धव्याप्तिमालंब्यैव ब्रह्मणोऽनिर्वचनीयत्वमापादितं । तदुपरि स्वाभिप्रेतव्याप्त्यनुसारेणेदमाशंकितं ब्रह्मणः पारमार्थिकत्व इत्यादिना । तस्यायमभिप्रायः । ब्रह्मणः प्रमाणबलेन पारमार्थिकत्वेन तदधिकसत्ताकस्य वा तदन्यूनसत्ताकस्य वा वस्तुन एव वा भावाद्ब्रह्मणि तादृशसत्ताघटितहेतुर्नास्तीति न व्यभिचारो नाप्यनिर्वचनीयत्वं ब्रह्मण आपाद्यत इति पराभिप्रायं तुष्यत्वितिन्यायेनांगीकृत्यैव तदभिप्रायमनुरुध्यापि स्वाभ्युपगतनिर्वाहकरणेन समाधानस्याधिक्यलाभाय तमसोपीत्याद्यभिहितं । अविद्याया अपि प्रमाणेन पारमार्थिकत्वावगमात् अधिकसत्ताकत्वादिघटितहेतुस्तत्रासिद्ध एवेति भावः । एतद्वाक्यद्वयस्य पूर्वव्याख्यानं यथाश्रुतरीतिमनुरुध्य प्रवृत्तमत्रैव पर्यवस्यतीति न पूर्वोत्तरविरोधोऽपीति । प्रसिद्धेति । भावाभावयोरपि प्रसिद्धयोग लभ्यत्वात्सदसच्छब्दौ प्रसिद्धार्थावेवेति भावः। वातप्रेरणा विनैवेति । §'सुप्तास्तत्र यतो जीवाः सर्वे ब्रह्मशिवादिका' इत्युक्तेस्तस्यान्यप्रेरणादौ व्यापाराभावादिति भावः। अचेष्टतेति । अचेष्टयत् तदा नियम्यं कालादिकं नियामयदित्यर्थः । चेष्टतिरंतर्णीतणिजर्थः। तेन स्वकीयचेष्टायाः कदापि वातप्रेरणानधीनत्वाद्विशिष्योक्तिरयुक्तेति शंकानवकाशः । यद्वा तात्कालिकपदार्थविषयिणीं वातप्रेरणां विना स्वयमेव तत्प्रेरणार्थमचेष्टतेत्यर्थः । इदं चावातमित्यनेन वातासहितमित्यर्थकेन श्रौतपदेन लभ्यते । यद्वा यथा लोकानां चेष्टा वातप्रेरणया न तथा ब्रह्मचेष्टा ।

§ टिप्पणी—सुप्ता इति पदस्य निर्व्यापारत्वरूपार्थांतराभिप्रायेणैतत्प्रमाणोदाहरणसंगतिः

(टीका) ननु महाप्रलये ब्रह्मणोऽवस्थानं परस्य सम्मतमेव । तत्किं तत्समर्थनाया नीद्वातमिति वाक्यमुपादीयते । मैवं । यदीदमनुदाहृत्यातिप्रसंगोऽभिधीयेत । तदै-तद्वाक्यप्रकृतस्यैव सन्निहितत्वादनेन सत्वादिप्रतिषेधस्य क्रियमाणत्वान्नातिप्रसंग इति परः परिहर्तुमुत्सहेतापि तन्निरासायैतत्प्रकरणगतवाक्येनैव ब्रह्मणोऽवस्थानमुपपादनीयम् । यदि तर्हि प्रतीतोऽर्थोऽनुपपन्नः कोऽर्थोऽस्य ब्रह्मतमसोस्सदसद्वैलक्षण्यस्ये-त्यतः श्रुत्यंतरेण तं दर्शयति ।

[ मूलं ] मूर्तं सदिति संप्रोक्तममूर्तमसदुच्यते । मूर्तामूर्तेतरद्ब्रह्म नसत्तन्नासदुच्यत इति पैंगिश्रुतिः ॥ १२ ॥

(टीका) ब्रह्मेत्युपलक्षणं । प्रकृत्याख्यं तमोऽपीति ज्ञातव्यं । नन्वसर्व-गतपरिमाणं मूर्तं ततोऽन्यत्सर्वममूर्तम् । तथाच भावाभावात्मकस्य सर्वस्यापि मूर्ता-मूर्तांतःपातित्वात्ततो विलक्षणत्वे ब्रह्मप्रकृत्योरनिर्वचनीयतातादवस्थ्यमिति चेत् ।

---

किंत्वानंदोद्रेकेणेति ब्रह्मचेष्टा स्वभावोक्तिरेवेयं नतु प्रलयकालमात्रवृत्तिचेष्टानिष्ठाविशेषधर्मपरेति ध्येयं। स्वधयेत्युक्तिसामर्थ्यलभ्यार्थप्रदर्शनं नतु सुखप्राप्त्याद्यर्थमिति। नतु स्वधापदोत्तरमवधारणपूरणेन व्याख्यानं कस्याप्यर्थस्यानुपपत्त्यभावेन प्रयोजनाभावात् । उत्सहेतापीति । स्वाभ्युपगतब्रह्माधिकरणप्रलयापेक्षयैतद्वाक्यप्रतिपाद्यकालस्य वैलक्षण्यमभ्युपेत्येत्यर्थः । एतत्प्रकरणेति । ब्रह्मानधिकरणत्वाधिकरणत्वकृतवैलक्षण्याभ्युगमपूर्वशंकैव नोदेतीति भावः। प्रतीतोऽर्थ इति । लोकप्रसिद्ध्यादिना झडिति प्रतीत इत्यर्थः । श्रुतौ न सत्तन्नासदुच्यत इति नासदासीदित्यादावर्थतः । 'अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ न सन्न चासन् साक्षात्सदसतः पर' इत्यादिषु पुराणवाक्येषु शब्दमर्यादया चोच्यत इत्यर्थः । एतच्छ्रुत्या श्रुतिविशेषमुपादायैतच्छ्रुत्या एवमुच्यत इत्यनुक्तत्वाद्बाधकं विना संकोचे सत्यं ज्ञानमित्यादावपि सत्यपदस्य कालविशेषसत्वार्थकत्वार्थकत्वापत्याऽतिप्रसंगेनैतच्छ्रुतेर्ब्रह्मणि सदसद्वैलक्षण्यबोधकवाक्यसामान्यविषयकत्वे आवश्यके नासदासीदित्यादिवाक्यविषयकत्वमावश्यकं। न चोच्यत इतिपदस्वारस्याद्वचनवृत्त्या सदसद्वैलक्षण्यप्रतिपादकवाक्यगतिरेवोच्यते अनया श्रुत्येति वाच्यं । श्रौतार्थापत्तिबललब्धार्थस्यापि ब्रह्मसत्वाविरोधितयोक्तश्रुतेरेतद्वाक्यगत्यप्रदर्श्यकत्वे ब्रह्मसत्वविरोध्येतच्छ्रुत्यतिविरोधापरिहारकतयाऽकृतार्थत्वप्रसंगेनैतद्विषयकत्वस्याप्यावश्यकत्वात् । उच्यत इत्यस्य प्रतिपाद्यत इत्येतावन्मात्रार्थत्वेन बहुशः प्रयोगदर्शनेन तदस्वारस्यस्याप्यभावात्। एवं च नासदासीदितिवाक्यस्थसदसत्पदयोर्ब्रह्मानुरोधेन मूर्तामूर्तपरत्वावश्यकत्वे तद्वाक्यप्रतिपाद्यतमस्याप्ययमेवार्थः श्रुत्यभिप्रेतः । अन्यथा सकृदुक्तशब्दस्यार्थद्वयकल्पने गौरवादतस्तमोऽपि एतच्छ्रुत्या ब्रह्म-पदेनोपलक्ष्यते तुल्यन्यायादित्याशयेनाह । ब्रह्मेत्युपलक्षणमिति । प्रकृत्याख्यमिति भौतिकतमो-व्यावृत्त्यर्थमिदं। तदपि नासदासीदितिश्रुतौ न सती नासती मायेत्यादिस्मृतौ च तथोच्यत इत्यर्थः । उक्तश्रुतेः प्रसिद्धमूर्तेतद्भिन्नपरत्वांगीकारे सर्वप्रपंचस्य तदंतर्भावेण सदसद्विल-क्षणत्वरूपप्रतीतार्थ एव स्वस्यापि पर्यवसानात्सदसच्छब्दार्थांतरप्रदर्शनपूर्वकं तदुक्तेर्गति-

( टीका ) मैवं । मूर्तशब्दस्य पृथिव्यप्तेजोविषयत्वेनामूर्तशब्दस्य च वाय्वाकाशपरत्वेन सर्वस्य तदंतर्भावाभावात् । ब्रह्मप्रकृत्योश्च पंचमहाभूतविलक्षणत्वस्योपपन्नत्वादिति भावेन सदसच्छब्दौ श्रुत्यंतरेण व्याख्याति—

(मूलं) यदन्यद्वायोश्चांतरिक्षाच्चैतत्सदिति माध्यंदिनश्रुतिः ॥ १४॥

( टीका ) वायुरंतरिक्षं चासदिति श्रुतिशेषः ।

---

चिंतनमयुक्तं स्यादतो न प्रसिद्धमूर्तादिरेतच्छुत्या बोध्यत इत्याशयेनाह । मैवमिति । श्रुतिशेष इति । स्ववाक्यानंतरं शेषभ्रांतिवारणाय श्रुतीत्युक्तं । ननु श्रुतौ कुतः शेषः।यत्रानवसरोन्यत्रे त्याद्युक्तेरनुपपत्तिं विना ऽध्याहारायोगादिति चेदत्र केचित् । यतोऽत्राप्यनुपपत्तिर्वर्तत एव। तथाहि न तावदियं श्रुतिर्वाय्वंतरिक्षभिन्नेषु सत्यतां विधातुमुपक्रांता तत्सत्ताकथनस्यानुपयुक्तत्वात् । तन्मात्रसत्यत्वस्य श्रुत्यंतराविरुद्धत्वात् अतो ब्रह्मप्रकृत्यादिषु सदसदन्यत्वादिबोधकश्रुतिगतिप्रदर्शनाय तत्तद्वाक्यस्थसदसच्छब्दव्याख्यानार्थमेव प्रवृत्तेति वाच्यं । तत्र सच्छब्दमात्रव्याख्यातात्पर्यकत्वे न्यूनतैवातश्चाच प्रतिपादकतया सदसच्छब्दयोर्बुद्धिस्थत्वे सति प्रतिपाद्यतयोपस्थितपंचमहाभूतानां मध्ये पृथिव्यादित्रयस्य वाय्वंतरिक्षभिन्नत्वेनोपादानं कृत्वा ऽसच्छब्दघटकनञर्थभेदप्रतियोगिसमर्पकसत्पदवाच्यताकथनेन तयोरसत्पदबोध्यता स्फुटतया लभ्यतेति सिद्धवत्कृत्य कंठतः श्रुत्यनुक्तं तदभिप्रेतमेव वाक्यं शाब्दबोधनिर्वाहाय पूरणीयमेवेति न कश्चिद्दोष इति । यदि त्वियमानुपूर्वी देशांतरे क्वचिदुपलभ्यमाना भवेदत एवाद्वैतसिद्धौ यदन्यद्वायोश्चांतरिक्षाच्चैतत्सद्वायुरंतरिक्षं चासदिति श्रुतेश्चेत्युक्तमित्युच्यते तदा श्रुतिशेष इत्यस्य श्रुत्यंतभाग इत्यर्थ इति व्याख्यातुं शक्यते । तथाप्येतादृशानुपूर्वीसत्वे अवश्यवक्तव्यस्य तस्यानुदाहरणं किमर्थमाचार्यैः कृतमिति महांतः प्रष्टव्याः इत्याहुः । अन्ये तु श्रुतिशेष इति प्रसिद्धमाध्यंदिनश्रुतिशेष इत्यर्थः । यद्यपि 'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च यच्च सच्च त्यच्च तदेतन्मूर्तं यदन्यद्वायोश्चांतरिक्षाच्चेतन्मर्त्यमेतत्स्थितमेतत्सत् तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रस एष तपति सतो ह्येष रसो अथामूर्तं वायुश्चांतरिक्षं चैतदमृतमेतद्यदेतत्त्यंतस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यतः एतस्यत्यस्यैष रसो य एष एतस्मिन् मंडले पुरुषः तस्य ह्येष रस इत्यधिदैवतमित्येव प्रसिद्धमाध्यंदिनश्रुतौ पाठः श्रूयते । तथापि मूलमर्थग्राहकटीकायामपि इत्यभिप्रायकः श्रुतिशेष इत्यर्थः । मूलेपीत्यर्थिका श्रुतिरित्यर्थः । नन्वेवंप्रकारानुपूर्वीकेति एतन्मर्त्यमेतत्स्थितमित्यनेन व्यवहितत्वादिति ध्येयं । मूर्तं चामूर्तं चेति विभक्तयोर्मध्ये वाय्वंतरिक्षान्यभूतत्रयस्य मूर्तपदार्थतया गृहीतस्य स्थितैतत्सदादिरूपतायां तत्पदेन विधानात्तत्तच्छब्दवाच्यत्वसिद्धौ अथामूर्तं च वायुं चांतरिक्षं चेति वाय्वंतरिक्षयोर्भिन्नत्वेनामूर्तपदार्थत्वे स्थिते सदन्यार्थकासत्पदाभिधेयत्वस्यापि श्रुत्यभिप्रेतत्वप्राप्तेः । न च मूर्तभिन्नत्वं तदन्यसर्वसाधारणं । अतः कथं वाय्वंतरिक्षयोरेव तत्पदव्यवहारतेति वाच्यं । अब्राह्मणमानयेत्यादौ ब्राह्मणभिन्नत्वेन क्षत्रियादिमनुष्यस्यैव सजातीयग्राहकतास्वाभाव्यस्य शब्दे सत्वेनैवोपपत्तेः । अत एव यदन्यद्वायोरित्यत्राप्यन्यपदेनावशिष्टभूतत्रयस्यैव ग्रहणं । अस्माद्वोरन्योऽन्वेष्टव्य इतिवत् । ननु तद्भिन्नसामान्यस्य तथात्वे उत्तरत्रादित्यस्य तद्रसत्वोक्त्यसंगत्यापत्तेः । आदित्यस्य वाय्वंतरिक्षभिन्नत्वेन मूर्तत्वेन मूर्तत्वप्राप्त्या स्वं प्रति स्वस्य रसत्वायोगात् ।

(टीका) ततश्चायं श्रुत्यर्थो भवति । तदानीं प्रलयेऽसदमूर्तं वाय्वंतरिक्षाख्यं नासीत्सच्च मूर्तं पृथिव्यप्तेजोरूपं नो आसीत् । रजःशब्दोपलक्षितं गुणत्रयं च नासीत् । यत्परः परं सर्वगतमव्याकृतं व्योम तच्च मूर्तसंबंधाभावान्नो आसीदिति सदसच्छब्दयोर्भावाभावपरत्वे प्रसिद्धमूर्तामूर्त (विषयत्वे) परत्वे वा सर्वस्य तदंतर्भावात्पुनारजः प्रभृतेः प्रतिषेधोऽनर्थकः स्यादित्यनिष्ठान्तरसूचनार्थं प्रागधिकांशोदाहरणं कृतम् । अन्यथा नासदासीन्नो सदासीत्तदानीमित्येतावदेवोदाहरिष्यत् ।

---

विना निरवकाशबाधकं सामान्यग्रहणस्यौत्सर्गिकत्वेन संकोचायोगात् । एवं न्यायामृतस्थं यदन्यद्वायोश्चांतरिक्षाच्चैतत्सदिति वायुरंतरिक्षं चासदिति श्रुतेश्चेति वाक्यमपीत्यभिप्रायकश्रुतेश्चेत्यर्थकतया योज्यं । अत एव पृथगिति शब्दः निरंतरवाक्यत्वे तद्वैय्यर्थ्यापत्तेः । अद्वैतसिद्धिकृता तु मध्यस्थेतिशब्दोऽधिकः पठित इति भ्रमेण श्रुतिपाठमेव तथा भ्रांत्या मध्यस्थेतिशब्दं विहायानुवादः कृतः । मूले काण्वश्रुतिव्याख्ययैव माध्यंदिनस्यापि व्याख्येयत्वाभिप्रायेणोपलक्षणतयेयमेवोदाहृताऽतोत्र न तदुपेक्षाविचारावसरः इत्यवधेयमिति वदंति । परे तु अप्रसिद्धशाखांतरपाठ एवायं अत एव माध्यंदिनश्रुतिरित्यनुक्त्वा माध्यंदिनायनश्रुतिरिति नामांतरग्रहणं कृतं । अन्यथैतत्समानभूतव्याख्याने काण्वश्रुतिपरित्यागे बीजाभावप्रसंगात् । श्रुतिशेष इति टीकापि इत्यानुपूर्वीरूपः श्रुतेः शिष्टो भाग इत्यार्थिका । टीकाकृतामपि सर्वज्ञकल्पत्वादेवमुक्तिर्युज्यते । न्यायामृते तु मध्ये किंचिदानुपूर्वीव्यवधानमपि संभावितमित्याशयेन वा उक्तरूपनिरंतरानुपूर्वीसत्वेऽवश्यमुदाहर्तव्यस्य तद्भागस्य मूलेऽनुदाहरणे बीजाभावं स्यादतो नेयं निरंतरानुपूर्वीति निश्चित्यैव वा मध्ये इति शब्दं पठित्वा श्रुतिद्वयं व्यवच्छिद्य पठितं । टीकायां शेष इत्यस्याध्याहारार्थकत्वे न्यायामृते श्रुतित्वेन तत्समकक्षतया मध्य इतिशब्दं प्रक्षिप्य पाठाभावप्रसंगात् । अस्या अपि श्रुतेः शाब्दमर्यादयैव स्फुटं स्वाभिमतार्थाबोधकत्वे मूलकृतां प्रसिद्धकाण्वमाध्यंदिनश्रुतिपरित्यागे बीजाभावप्रसंगाच्च । प्रसिद्धश्रुतौ मूलोक्तानुपूर्व्यभावेन टीकायां तच्छेषपूरणानुपपत्तेश्चेति प्राहुः । ततश्चेति । एतद्वाक्यपूर्ववाक्ययोर्विसंवादपरिहाराय सामर्थ्यात्पंचमहाभूतविलक्षणत्वं नासदासीदिति श्रुत्यर्थ इति उक्तश्रुतिद्वयेन लब्धे सतीत्यर्थः । भवति पर्यवसितो भवति । मूर्तसंबंधाभावादिति । अत्र मूर्तशब्दः प्रसिद्धार्थक एव नतु तेजोबन्नमात्रपरः । मूर्तसंबंधाभाव एवाव्याकृतस्य लय इत्यर्थः । अनर्थक इति । विशेषहेत्वभावादिति भावः । यदत्र केनचिदुक्तं । किंचागमोप्यनिर्वचनीये प्रमाणं । तथा हि नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत् किमावरीवः कुहकस्य शर्मन्नंभः किमासीद्गहनं गभीरं न मृत्युरासीदमृतं न तर्हि न रात्र्या अन्ह आसीत्प्रकेतः आनीदवातं स्वधया तदेकं तस्माद्धान्यत्र परः किंचनास तम आसीत्तमसा गूळ्हमग्रे प्रकेतं सलिलं सर्वं मा इदं तुच्छेनाभ्वपिहितं यदासीत्तमसस्तन्महिना जायते कं कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीदिति श्रुत्या सदसतोर्निषेधपूर्वकं तमःसत्वकथनेन तस्य सदसद्विलक्षणत्वरूपानिर्वचनीयत्वलाभात् । नन्विदमयुक्तमेवं सति परमार्थतयांगीकृतस्य ब्रह्मणोऽप्यनिर्वाच्यतापत्तेः । तस्याप्यानीदवातमिति वाक्येन प्रलये परिशिष्टत्वावगमादिति चेन्न । सदेव सोम्यदमग्र आसीत्सत्यं ज्ञानमनंतं ब्रह्मेति

श्रुत्यंतरेण ब्रह्मणः पारमार्थिकत्वावगतौ तद्विरोधेनार्थापत्तेः। ब्रह्मांशे प्रवृत्त्ययोगात्। न चैवं नो सदासीदित्याद्यभिधानविरोधः। ब्रह्मणः तदानीं सत्वादिति वाच्यं। आनीदवातमिति श्रुत्यैकवाक्यतया ब्रह्मान्यसत एव निषिद्धत्वात्। नच सिद्ध्यसिद्धिभ्यां व्याघातः। ब्रह्मान्येत्यंशपूरणेन नो सदासीदित्यंशव्याख्यानसंभवात्। न चैवमपि नासदासीदित्यंशविरोधः। उक्तप्रतियोगित्वरूपमिथ्यात्वस्य तमःसाधारण्यादिति वाच्यं। अत्रत्यासत्पदस्य सत्तादात्म्यशून्यपरत्वात्। नच 'मूर्तं सदिति संप्रोक्तममूर्तमसदुच्यते। मूर्तामूर्तेतरं ब्रह्म न सत्तन्नासदुच्यते।' इति पैंगिश्रुतौ सदसत्पदयोर्मूर्तामूर्तवाचकतायाः उक्तत्वात्। यदन्यद्वायोश्चांतरिक्षाच्चैतत्सदिति माध्यंदिनश्रुत्याऽसत्पदस्य वाय्वंतरिक्षवाचकताया उक्तत्वेन ब्रह्मान्यत्वेनेत्यध्याहारस्यासत्पदस्य सत्तादात्म्यशून्यलक्षणायाश्च कल्पनामपेक्ष्योक्तभागद्वयस्य मूर्तामूर्तनिषेधपरत्वमेव युक्तमाश्रयितुमिति वाच्यं। सदसच्छब्दयोः पारमार्थिकापारमार्थिक्यपरतया लौकिकवैदिकप्रयोगप्राचुर्येण श्रुतिमात्रसिद्धमूर्तामूर्तपरत्वकल्पनस्यायुक्तत्वात्। अध्याहारतो लक्षणाया अजहन्निरूढलक्षणयोर्जहल्लक्षणायाश्च जघन्यत्वाच्च। श्रुतेर्यया कयाचिद्वृत्त्या तद्बोधकत्वमात्रेण उपपन्नतया तयोः तद्वाचकत्व कल्पने मानाभावाच्च। न चोक्तासन्निषेधे अप्रसक्तप्रतिषेधापत्तिः। सतो निषेधेन तस्यापाततः प्राप्तिसंभवात्। नचैवं तुल्ययुक्त्या तमोन्यत्वेन सदभावो नो सदासीदित्यस्यार्थः स्यादिति तमसोपि नानिर्वाच्यता स्यादिति वाच्यं। तथा ऽध्याहारे मानाभावात्। तमः पारमार्थिकताग्राहकप्रमाणाभावादधिकमग्रे वक्ष्यामः। यत्तूक्तव्याख्याने तदानीमित्यस्य वैयर्थ्यं रज आदेरपि सन्निषेधेनैव निषेधलाभात् पृथग्ग्रहणानौचित्यं च। तस्यापि पारमार्थिकत्वासंप्रतिपत्तौ असन्निषेधेनैव निषेधलाभ इति तदसत्। तदानीमित्यनुक्तौ कालांतरे सदसन्निषेधसहितस्य कालांतरसत्वस्यानिर्वाच्यत्वासाधकतया तन्निषेधाधिकरणकाले तत्सत्वाभिधानस्यावश्यकत्वात्। सत्वं च पारमार्थ्यतैव असत्वं सत्तादात्म्य शून्यत्वं इति तुच्छपारमार्थ्ययोरेव प्रकृतनिषेधविषयत्वेन रजआदिनिषेधस्यावश्यकत्वाच्च। तदानीमित्यस्य रजःप्रभृतिनिषेध एवान्वय इत्यपि वदंति। अत्र च सदसत्पदयोर्भावाभावपरता मदभ्युपगतेति परोक्तिस्तु न श्रद्धेया। अनादेर्जीवेशभेदादेः प्रलयकालसत्वाभ्युपगमेन तस्यास्मदनभिमतत्वात्। यत्तु रजःपदं रजःप्रभृतिगुणत्रयप रमिति तदसत्। तमसो गुणत्रयात्मकत्वेन तत्सत्वे गुणनिषेधासंभवात्। गुरुचर णास्तु नासदासीदित्यस्यासदन्यदासीदिति नो सदासीदित्यस्य सदन्यदासीदित्यर्थः। न च नञाद्यर्थस्य नोद्देश्यत्वं। तथासति न पृथिवी निर्गंधेत्यतो पृथिवीभिन्नं निर्गंधमित्यादिप्रत्ययप्रसंगादिति वाच्यं। असन्न भवतीति व्युत्पत्त्या इह ब्रह्मण आसीदिति तदुद्देश्यत्वाविरोधात्। नशब्देनायं समासः। उक्तप्रसिद्ध्यतिक्रमापेक्षया वैरूप्यानुसरणस्यापि युक्तत्वाच्च। नचैवं प्रलये सदसत्वमात्रेणोक्तनिषेधद्वयोपपत्तेरनिर्वाच्यत्वासिद्धिरितिवाच्यं। सद्विलक्षणे कालसंबंधाभिधानेनैव तत्सिद्धेः। न चैवमसदन्यस्य सत्वाभिधान मसंगतं निरर्थकत्वादिति वाच्यं। सदन्यस्मिन्कथं कालसंबंध इत्याशंकानिरासार्थत्वेन तदभिधानस्य सार्थक्यादित्याहुरिति तदसत्। यत्तावदुक्तं सदेव सौम्येदमित्यादिश्रुतिभिर्ब्रह्मणः सत्यत्वान्न तस्यानिर्वचनीयत्वमापततीति तत्समाधानं टीकायामुक्तमेव। तमसोपीत्यादिना ब्रह्मसत्यताबोधकानां स्वार्थपरत्वं जगत्सत्यताबोधकानां तु न तथेति वैषम्यं तु उत्तरत्र निराकरिष्यते। अपिच जगत्सत्यताबोधकवाक्याविरोधपरिहारोत्तरमेव श्रौतार्थापत्त्यवकाशः। तत्परिहारश्चावांतरसत्यत्वादिपरत्वादिभिस्तत्र-

बीजं त्वविद्यातत्कार्यानिर्वचनीयत्वासित्धिरिति स्फुटा चक्रकापत्तिः। अन्यथा ब्रह्मणोऽप्येत द्वाक्यबलादनिर्वचनीयत्वापगमेनैव तत्सत्यत्वबोधकश्रुतीनामपि अर्थांतरपरिकल्पनासंभवेन तद्विरोधेनार्थापत्तिप्रवृत्त्यनुपपत्त्युक्त्ययोगः। विशेषाभावात् प्रत्यक्षादिप्रमाणांतरेणानिर्वचनीयसित्ध्यभावस्योक्तत्वात्। सित्धत्वे आगमोदाहरणस्य वैय्यर्थ्यात्। यदपि सतो ब्रह्मणः प्रलये सत्वान्निषेधानुपपत्तिमाशंक्य आनीदवातमितिश्रुत्यैकवाक्यतया ब्रह्मान्यसत एव निषेध इति। तदसत्। सित्ध्यसिद्धिभ्यां व्याघातात्। नच ब्रह्मान्येत्यंशपूरणेन नो सदासीदित्यस्य व्याख्यानसंभव इति वाच्यं। एवमपि ब्रह्मान्यसतो रूपांतरेण सित्ध्यसित्धिभ्यां व्याघातपरिहारेपि ब्रह्मान्यत्वविशिष्टसद्रूपप्रतियोग्यसित्ध्या पुनस्तव निषेधानुपपत्तिरेव। नच ममेव प्रतियोग्यप्रसित्धावप्यभावः संभवति। तवाद्वैतसित्धावसतः प्रतियोगितायाः निराकरणात् असतः प्रतियोगित्वव्यवहारः पररीत्या नतु सित्धांत इत्यद्वैतचंद्रिकायां बहुवारमुक्तत्वाच्च। न हीदं किंचिल्लक्षणादिकं परिष्क्रियते येन परीत्येदमिति वक्तुं शक्येत। श्रुतेर्वास्तवार्थवर्णनप्रस्तावात्। अत एव सत्पदस्य सत्तादात्म्यशून्यार्थकत्ववर्णनमप्यपास्तं। असत् एव त्वन्मते तथात्वेन निषेधप्रतियोगित्वस्य तत्रायोगात्। नच ब्रह्मान्यत्वेन सन्नास्तीति निषेधो व्यधिकरणधर्मावच्छिन्नाभावविषयक इतिवाच्यं। तथात्वे ब्रह्मान्यत्वेत्यंशपूरणेनेत्यनुक्त्वा ब्रह्मान्येत्यंशपूरणेनेत्युक्तेरसंगतेः। व्यधिकरणधर्मावच्छिन्नाभावस्य सौदंडमात्रोत्प्रेक्षितस्य श्रुत्यर्थत्ववर्णनायोगाच्च। नच परोक्षब्रह्मविषयस्याप्यनिर्वचनीयत्वांगीकारात् ब्रह्मान्यत्वविशिष्टसतस्तादृशत्वान्निषेधप्रतियोगित्वं युक्तमिति वाच्यं। तथात्वे श्रुत्यभिमेतत्वनास्त्यैव निष्कृष्टपक्षत्वापत्त्या परोक्षभ्रमो व्यधिकरणप्रकारक इत्यादीनां शशविषाणं नास्तीतिवाक्यादीनां विकल्पजनकत्वमित्यादीनां च त्वदाचार्योक्तीनां त्वदुक्तानां च दत्तजलांजलित्वप्रसंगात्। प्रलये ब्रह्मान्यत्सत् वर्तत इति तत्त्ववादिभ्रमविषयस्य तादृशनिर्वचनीयस्य निषेधायोगाच्च। अपिच प्रसित्धतेजोबन्नादिरूपानिर्वचनीयानिषेधं विहायास्यैवानिर्वचनीयस्य निषेधे बीजाभावः। किंच ब्रह्मान्यत्वविशिष्टपारमार्थिकत्वब्रह्मान्यज्ञानब्रह्मान्यानंदरूपाणां तादृशानिर्वचनीयानामनिषेधे नास्यैव बीजाभावः। अस्तु वा तद्यथा तथा ब्रह्मान्यसन्निषेधस्य सर्वकालसाधारणतया प्रलय एव विशिष्य तन्निषेधोक्तिरयुक्तैव। सत्तादात्म्यशून्यनिषेधस्यापि सार्वदिकत्वेन तवाप्युक्त दोष एव। यदपि असत्पदस्य सत्तादात्म्यशून्यपरत्वमिति तदप्यसत्। सत्प्रतियोगिकत्वविशिष्टतादात्म्यत्वावच्छिन्नाधिकरणत्वस्य सत्यभावेनास्य सत्साधारण्यात्तन्निषेधानुपपत्तेः। सत्प्रतियोगिकतादात्म्याभाववदर्थकत्वं स्वीकृत्य ब्रह्मण्यपि तादृशतादात्म्यस्याद्विष्टत्वमंगीकृत्य स्वीकारेपि सत्पदनञुभयघटितपदाधीनशाब्दबोधविषयत्वस्यासत्यंगीकारापत्त्या सति पदवृत्तिविषयत्वाभावरूपस्वासित्धांतस्य शशविषाणादिपदादसद्बोधानुपपत्तिप्रदर्शकस्वकीयपूर्वग्रंथस्य च विरोधः। श्रुतिवाक्यस्य तदंशे विकल्पजनकत्वापातेन शशविषाणमित्यादिवाक्यतुल्यतापातश्च। अपिच सत्पदस्य पारमार्थिकसदर्थकतायाः लौकिक वैदिकप्रसित्ध्यनुसारेण त्वयैव भाषितत्वेनासत्पदघटकसत्पदस्य सत्तादात्म्यवत्परत्वे लक्षणापातः। यदपि मूलोक्तश्रुतिद्वयानुसारेण पंचमहाभूतपरत्वं सदसत्पदयोराशंक्योक्तं सदसत्पदयोः पारमार्थिकापारमार्थिकयोः लौकिकवैदिकप्रयोगप्राचुर्येण श्रुतिमात्रसित्धमूर्तामूर्तपरत्वकल्पनायोगः श्रुतेः यया कयाचिद्वृत्त्या तद्बोधकत्वमात्रेणोपपन्नतया तयोस्तद्वाचकत्वकल्पने मानाभाव इति तदपि न सम्यक्। यदि श्रुत्यंतरे सदसच्छब्दयोर्मूर्तामूर्तपरतया प्रयोगमात्रं स्यात्तदैवं कल्पयितुं शक्येतापि

नचैवं तादृशश्रुतिद्वयस्य मूर्तामूर्तविलक्षणपरतया ब्रह्मतमसो सदसद्विलक्षणत्वबोधकश्रुतिगतिप्रदर्शनपरत्वं समर्थितं प्राक् टीकाव्याख्यावसरे। तथाच श्रुत्यभिप्रेतार्थविरूद्धकथने तथैव तच्छ्रुतिविरोधः। 'मूर्तं सदिति संप्रोक्तममूर्तमसदुच्यते' इति संप्रशब्दाभ्यामुच्यत इत्यनेन न च तयोः शक्तेरेव बोधितत्वेन मानाभावहेतोरसिध्दिश्च। प्रचुरप्रयोगाभावमात्रेण श्रुतिबोधितशक्त्यपलापेऽप्रसिध्दार्थकनानार्थोच्छेदप्रसंगः। द्वितीयश्रुत्यापि शक्तिर्वा निरूढलक्षणा वा सिध्यति। सत्पदस्य श्रुत्या वाक्यांतरेणान्यस्य सत्पदबोध्यत्वविधानसामर्थ्यात्। लक्षणामात्रस्य विधानं विनापि पदांतराणामिवास्यापि संभवेन तद्विधानवैयर्थ्यापत्तेः। प्रथमवाक्येनैकवाक्यत्वसंधाने तु शक्तिरेव सिध्यति। तस्मात् युक्तमेवानयोर्यया कयाचिद्वृत्त्या बोधकत्वमिति। भवन्मत एव ब्रह्मान्येत्यध्याहारोऽसत्पदस्थल एव प्रसिध्दार्थपरित्यागेन लक्षणा च। यदत्रोक्तमध्याहारतो लक्षणाया अजहन्निरूढलक्षणयोर्जहल्लक्षणायाश्च जघन्यत्वादिति तदसंगतं। जघन्यत्वं यतः पश्चाद्भावित्वं। तत्र पदशक्यार्थस्य प्रथममुपस्थितिः तत्र बाधाद्यवतारे तच्छक्यस्य चोपस्थितत्वात्तत्संबंधरूपलक्षणाया उपस्थितिः। तेनाप्यनिर्वाहे अश्रुतपदतद्वृत्त्यनुसंधानरूपाध्याहारकल्पनेत्यस्यैव सर्वसिध्दत्वेनाध्याहारस्यैव परमजघन्यत्वात्। सत्तादात्म्यस्य सद्घटितत्वेपि वाच्यार्थस्य विशेष्यतयाऽप्रवेशेन जहल्लक्षणैव। असत्पदस्य लक्षणेति तु न युक्तं। तस्य पदद्वयघटितत्वेन वाक्यरूपत्वात्। सत्पदस्य मतांतररीत्या कथंचिदजहल्लणावत्वेपि असत्पदस्य त्वद्रीत्या श्रुत्युक्तलक्षणया अनादितात्पर्यविषयतया निरूढत्वेन लक्षणायाश्च स्वबुध्दिमात्रकल्पितत्वेनास्या एव जघन्यत्वं। यदपि लोकप्रसिध्दौ निर्भरकरणेन सदसत्पदयोः श्रुत्युक्तार्थनिराकरणं तदपि मंदं। तथात्वे तमःपदस्य लौकिकवैदिकप्रयोग प्राचुर्येण प्रसिद्धतमस एवात्र बोध्यतापत्तेः। न त्वविद्यायाः तस्याः तमोवत्तम इति गौण्यैव तत्पदबोध्यत्वसंभवे शक्तिकल्पने मानाभावात्। तस्य मूलाविद्योपादानकत्वस्य त्वासिध्दत्वेपि घटशब्दस्य मृदीव तमःशब्दस्याविद्यायां प्रवृत्त्ययोग एव मुख्यया वृत्त्या। एवं रजःशब्दस्य लौकिकवैदिकप्रयोगप्राचुर्येण पांसुशक्तत्वेन तत्परत्वमेव प्रसिध्दिश्रध्दालुना त्वयाऽभ्युपेयमिति रजांसि लोका इति या स्ववचनानुसारेण रजःपदस्य लोकपरत्वेन त्वदाचार्याणां व्याख्यापि तवायुक्ता स्यात्। यदपि असन्निषेधप्रसक्तप्रतिषेधकत्वमाशंक्य समाधानं सतो निषेधेन तस्यापाततः प्राप्तिसंभवादिति। तन्मंदं। प्रथमतः सन्निषेधे कथंचिदेवं संभाव्येत प्रथमतोऽसत एव निषेधे कथं तदुत्तरभाविसन्निषेधः तत्प्रापकः। ब्रह्मान्यत्वेन सन्नास्तीतिनिषेधे रूपांतरेण सत एव प्रसक्तिः स्यात्। नतु सामान्यतोऽसतः। दक्षिणेन न पश्यतीत्युक्तौ वामेन पश्यतीतिवत्। तथा चासतः प्रसक्त्युक्त्यसंगतिश्च। अपिच प्राप्तिरपि असत्तदानीमासीदित्याकारा वक्तव्या नतु रुपांतरेण। रूपांतरेण प्रसक्तस्य रूपांतरेण निषेधस्य वैयर्थ्येनायुक्तत्वात्। तथा च तस्याहार्यत्वात्कथं श्रुतिरेतादृशनिर्दलपक्षनिराकरणाय प्रवर्तते। अत एवासतः सत्वेन प्रतीतिनिराकरणावसरे गुरुचंद्रिकायामुक्तं तत्थैक आहुरिति श्रुत्या नासतः सत्वप्रतीतिरनूद्यते सत्प्रतीतेराहार्यत्वेन तन्निराकरणस्य श्रुत्या कर्तुमनुचितत्वात्। न ह्ययं निर्वन्हिर्वन्हिमानित्याहेत्युक्त्वा सचेतसस्तन्निराकरणाय प्रवर्तत इति। नच सत्तादात्म्यशून्यं नासीदिति ज्ञानं कथमाहार्यं रूपं आसीदित्यस्य सत्तादात्म्यवदित्यर्थकत्वाभावात्प्राक्कालसंबंधवदित्येतावन्मात्रार्थकत्वादिति वाच्यं। सत्पदस्य त्रैकालिकनिषेधाप्रतियोग्यर्थकतया सत्तादात्म्यशून्यत्वेन भासमानस्य त्रैकालिकनिषेधप्रतियोगित्वेन भासमानतुल्यतया तत्र पर्वकालसंबंधावगाहिधियोपि वन्ह्यधिकरणत्वाभाववान्वन्हिमानिति धिय इव आहार्यताया दुर्वारत्वात्।

अन्यथाऽद्वैतचंद्रिकोक्तमपि असत्यग्रकालसंबंधावगाहिधियोऽऽह्रार्यत्वं दुरुपपादं स्यात्। किंचैतादृशप्रसक्त्या श्रुतेस्तन्निषेधार्थं प्रवृत्तावसतः सत्वेन प्रतीतिः श्रुत्यनुमतैव जातेति अद्वैतसिध्यादीनां तन्निराकरणाय प्रवृत्तानां दत्तजलांजलित्वं स्यात्। अपिच नो सदासी दित्यस्य तव मते ब्रह्मान्यसन्नास्तीत्यर्थकतया ब्रह्मान्यसन्नास्तीत्युक्तौ विशेषणसामर्थ्याद् ब्रह्मस्वरूपं सदस्तीत्येव बुध्दिरुदेति। न तु सत्तादात्म्यशून्यमस्तीति। सत्तादात्म्यवन्नास्तीति पूर्वमनिषिध्दत्वेन तर्हि सत्तादात्म्यशून्यं स्यादिति बुध्दौ बीजविरहात्। सत्पदस्य सत्ता दात्म्यवदर्थकत्वे प्रसिध्दार्थपरित्यागापत्त्या लक्षणाप्रसंगेनाविद्यायास्तादृश्याः सत्वेन निषे धानुपपत्त्या रजःप्रभृतेरनेनैव निषिध्दत्वापत्त्या पुनस्तन्निषेधवैय्यर्थ्यापत्तिभिया च पर- मार्थसत्वस्यैव त्वयांगीकृतत्वात्। यदपि तमोन्यत्वेन सदभावोऽपि नो सदासीदितिश्रु- त्यर्थः स्यात्तुल्ययुक्त्या। तथाच तमसो नानिर्वाच्यतासिध्दिः स्यादित्याशंक्य तथाध्या- हारे मानाभावात्तमःपारमार्थिकताग्राहकप्रमाणाभावादिति दत्तोत्तरमेव। यदपि तत्सत्यताग्रा हकप्रमाणानां तात्पर्यांतराभिप्रायेणाधिकमग्रे वक्ष्याम इति। तन्निराकरणं तत्रैव भविष्यति। यदपि यत्त्वित्यादिनानूद्य तदसदित्युक्त्वावश्यकत्वादित्यंतेन समाधानं तदयुक्तमेव। कालां तरसदसन्निषेधसहितस्य कालांतरेऽविद्यासत्वस्य तदनिर्वाच्यताबाधकत्वाभावेन साध- कतासिध्यर्थत्वे तदानीमित्यस्य वर्ण्यमानेपि यदीयं श्रुतिरविद्यानिर्वाच्यत्वमेव मुख्यतया प्रतिपादयितुं प्रवृत्ता तदा सृष्टिकालमादायाप्येतदुपपादनसंभवेन प्रलयपर्यंतानुधावना- नौचित्यं तस्याः। किंच नासदासीन्नो सदासीदित्यनंतरं तम आसीदित्युक्त्यैव तमसोनिर्वाच्यत्वासिध्दिसंभवे रजआदिनिषेधकोत्तरवाक्यस्य सर्वस्यापि वैय्यर्थ्यापत्तेः। यदिच प्रलयनिरूपणार्थमेव प्रवृत्ता तमोनिर्वाच्यतासिध्दिस्त्वार्थिकी तदा ब्रह्मान्यसन्निषे- धयोः सार्वदिकत्वेन विशिष्यादित एव तदुभयोक्तिरनौचिती। उभयोर्मुख्यार्थत्वे वाक्य- भेद एव। अपिच ब्रह्मान्यसन्निषेधाधिकरणकाले विद्यमानस्य तमसो ब्रह्मात्मकत्वमेव कुतो न पर्यवस्यति। तत्सत्यताग्राहकप्रमाणांतरानुग्रहोप्येवं सति कृतः स्यात्। तदनुसारे णैव सर्वं कल्पनीयं स्यात्। किंच विशेषनिषेधस्य सामान्याभ्युपगमतात्पर्यसहितस्यैव लौकिकवैदिकप्रयोगेषु स्वरसतः सिध्दस्याभ्युपगमे ब्रह्मान्यसतोऽसतश्च प्रलये निषेधे कालांतरे तत्वाभ्युपगमप्रसंगः। तत्त्यागे च वाक्यस्वारस्यभंग एव। एवमसत एव प्रथमतो निषेधायोगः। अमुख्यत्वात्। मन्मते तु पृथिव्यादीनां सृष्टिकाले सत्त्वात्तत्स्वारस्यात्यागः। एवमाकाशवाय्वादिक्रमेण पूर्वस्मात्पूर्वस्मादुत्तरोत्पत्त्या प्रथमत एवासत्पदेन अंतरिक्षवायु निषेधोपपत्तिः। तत्पदस्योभयसाधारणरूपावच्छिन्ने वा पृथग्वा शक्तिरित्यन्यदेतत्। इत्थंच सदसत्पदयोर्भवदुक्तार्थकत्वानुपपत्तौ भावाभावार्थकत्वस्यैव कथंचित्संभवदुक्तिकत्वेनानु सरणीयतया तत्र रजआदेः पृथक निषेधानुपपत्तिरूपदूषणं युक्तमेवेति सत्यं चेत्यादिनाव- श्यकत्वादित्यंतेन रजःप्रभृतेः पृथक् निषेधसार्थक्यवर्णनमयुक्तमेव। तदानीमित्यस्य रज- आदिनिषेध एवान्वय इति मतांतरोत्थापनमप्ययुक्तं। अनुयोगिसमर्पकपदाभावेन पूर्व- भागस्याबोधकतापत्तेः। न चाख्यातार्थाभावबोधने सप्तम्यंतानुयोगिबोधकपदापेक्षेति वाच्यं। वैय्यर्थ्यव्याहतिभयेन सामान्यतः सत्वनिषेधस्य सदसतोः कर्तुमशक्यतया प्रकृते कालविशेषबोधकपदस्यावश्यकत्वात्। यदप्यत्र सदसत्पदयोर्भावाभावपरता मदभिप्रेतेति परोक्तिस्तु न श्रद्धेया। अनादेर्जीवेशभेदादेः प्रलयकाले सत्वाभ्युपगमेन तस्यासदभि- मतत्वादिति। तदप्यसारं। भावरूपत्वेन व्यवाह्रियमाणाया अप्यविद्यायाः वास्तवतद्रूपा- भावेन भावाभावविलक्षणत्वरूपानिर्वचनीयत्ववदनादिजीवेशादिभेदादीनामपि तथात्वेना-

निर्वचनीयत्ववत्तमःसत्वेपि भावनिषेधवद्भावनिषेधस्यापि संभवात् । नच भावनिषेधोप्यनुपपन्नस्तमस एव सत्वादतो दृष्टांतोऽप्यसंमत इति वाच्यं । तथात्वे प्रकृतवाक्येनैव तमःसत्वप्रतीतेभावनिषेधोऽनुपपन्न इति पुरस्स्फूर्तिकदूषणमनुक्त्वा तद्वाक्यप्रतिपाद्यस्वाभ्युपगतजीवेशभेदसत्वेनाभावनिषेधानुपपत्तितात्पर्यकपंक्तेः संदर्भाशुद्धतापत्तेः । न चासत्पदेनाभावस्यैव प्रथमं श्रुत्युपात्तत्वेन तत्रैव दूषणं संदर्भशुद्धं । आदिपदेनाविद्यादेरपि गृहीतत्वेन भावनिषेधपक्षेऽप्यनुपपत्तेरुक्तत्वलाभान्न संदर्भाशुद्धिरिति वाच्यं । एवमपि नेह नानेत्यादिश्रुतिरिव अस्या अपि श्रुतेर्भावाभावनिषेधपरत्वेपि व्याहत्यभावस्य भावाभावविलक्षणत्वस्य चानिर्वचनीयलक्षणतायाश्च टीकाव्याख्यानसमय एव समर्थितत्वेन तथैवोक्तश्रुतियोजनायाः सदसत्पदयोर्योगेन प्रसिद्धभावाभावपरतामुपेत्याध्याहारलक्षणादिरूपक्लेशं विना संभवेन त्वत्पूर्वाचार्याभिमतत्वे बाधकाभावेन त्वदुक्तेरेवाश्रद्धेयत्वात् । नच मिथ्यात्वश्रुतिरवांतरार्थेऽनुपपत्तिज्ञानसहिता खंडब्रह्मणि पर्यवस्यतीति तत्र व्याहतिसत्वेऽपि न दोष इति वाच्यं । तथात्वेऽवांतरबोधविषयतया मिथ्यात्वासिद्धिप्रसंगात् । तद्वदस्याप्यखंडार्थताया वक्तुं शक्यत्वाच्च । माधवाचार्यैर्नैतच्छ्रुतिव्याख्यानावसर एव स्वधाशब्दितमायासहितं एकं द्वितीयरहितमासीदिति द्वितीयाभावस्वधासाहित्ययोः पारमार्थिकापारमार्थिकत्वप्रयुक्तव्याहत्यभावमभ्युपेत्य व्याख्यानाच्च । गुर्वद्वैतचंद्रिकायामपि तथैवोपपादितत्वाच्च । न चास्या पक्षस्य परेणानुल्लिखितत्वं । प्रत्युत माधवेन प्रलये कारणस्वरूपमाह 'नासदिति' निरुपाख्यं नासीदित्यर्थः, सत् रूपविशिष्टं नो सदासीदित्यर्थः, तथाच कारणमनिर्वाच्यमासीदित्यर्थः इत्येवोक्तं । तथाच कथं तदनुक्तस्य दूषणमिति वाच्यं। परानुक्तस्यापि तत्पक्षे संभावितस्य दूषणे बाधकाभावात् । माधवपक्षे सन्निषेधोपपत्तिः प्रागेवाभिहिता । नच तन्मते कारणं सद्रूपं नासीदित्यभिमतमिति वाच्यं । तस्यार्थत्वेन कारणपदाध्याहारे गौरवात् । भावाभावपरत्वेऽपि रजआदेः पुनर्निषेधस्य गत्यंतराभावे पूर्वोक्तार्थत्वादिना कुरुपांडवन्यायेन वा संभवेन तस्यापि बाधकत्वाभावात् । सैद्धांतिकदूषणं तु श्रुत्यंतरोक्तरीत्या सर्वस्याप्यवैयर्थ्येनार्थसंभवे विवरणार्थकत्वादिक्रमयुक्तमित्याशयेनैवेति न तद्विरोधोऽपि । यदप्यविद्यायां गुणत्रयात्मकत्वेन तत्सत्वे रजःपदोपलक्षितगुणत्रयनिषेधानुपपत्तिर्भवद्व्याख्यान इति दूषणं तदस्मन्मतापरिज्ञानमूलं । गुणत्रयस्यास्मन्मते प्रकृतिपरिणामत्वेन सृष्टिकाल एव तदुपपत्तेस्तदभावस्यैव मन्मतसिद्धत्वात् । प्रकृतेस्तदुपादानत्वादेव तत्सत्वे गुणनिषेधानुपपत्तौ सर्वकार्यस्य त्वन्मते अविद्योपादानकत्वेन तत्सत्वे रजआदिशब्दोपात्तलोकादीनां निषेधानुपपत्तिस्तवापि दुर्वारा स्यात् । अंभः किमासीदित्यादेर्यथा न पौनरुक्त्यादि तथारंभणाधिकरणटीकायामेव सम्यग्व्याख्यातं । तस्माद्यथाश्रुताद्वैतसिद्ध्यनुसारि त्वदीयव्याख्यानमयुक्तमेव । नापि तट्टीकायामेव वस्तुतस्त्वित्यादिनाऽद्वैतचंद्रिकाकृतोक्तं गुरूचरणास्त्वित्यादिनाऽत्र त्वयोदाहृतं व्याख्यानं युक्तं । तम आसीदिति दूरस्थवाक्यस्थतमसोऽत्र नासदित्यादितात्पर्यविषयतया कर्तृत्वेनान्वये ब्रह्मणोऽपि तथा कर्तृत्वेनान्वयप्रसंगो विनिगमकाभावात् । सत्यताग्राहकप्रमाणतदभावकृतवैषम्यस्य निराकरिष्यमाणत्वात् । अपि च सदन्यदासीदसदन्यदासीदित्यर्थकत्वेन आद्यर्थस्योद्देश्यतापरिहाराय न समासाद्याश्रयणं न असत् आसीत् नो इति सदिति प्रसिद्धपदपाठविरोधः । स्वाभिमतसिद्धिमात्रेच्छया प्रसिद्धपदपरित्यागे पदपाठस्यैव वैयर्थ्यप्रसंगः । अन्यथोपनिषदोपि पदपाठप्रसंगः । क्वचित्तत्परित्यागमकृत्वा पदांतरमप्यंगीकृत्य व्याख्यानांतरकरणं तत्पौराणवाक्यादिना तादृशार्थाधिगतौ सत्यामेव।

नच प्रकृते प्रकृतवाक्यव्याख्यानरूपपुराणादिवाक्यं भवदुक्तैकपद्यज्ञापकमस्ति । अन्यथा सर्वस्य स्वेच्छामात्रनियम्यतापातेन प्रकारांतरेणापि श्रुत्यर्थसंभवेन भवदभिमतासिद्धिप्रसंगः । तथाहि ना सदा आसीदिति छेदः । तथाच तदानीं प्रलये सदा ना सर्वकालेऽपि यो ना पुरुषः नतु कदाचिदपि पुंसामर्थ्यविधुरः स आसीत् । ननु असदेवेदमग्र आसीदिति श्रुत्या असत एव कारणतया सत्वं प्रतीयत इति श्रुतितात्पर्यभ्रममूलकामाशंकां निरस्यति । नो सदासीदिति । श्रुतितात्पर्यभ्रमप्राप्तनिरासकत्वेन व्याख्यानं सलिलमासीदिति श्रुत्यर्थभ्रमप्राप्तं निरस्यति । अंभ इतीत्यवतारितवतो वेदभाष्यकृतोऽपि संमतं । ननु रजआदिसर्वपदार्थनाशे तदात्मकदेहनाशात्कथं पुरुषस्याप्यवस्थानं स्वरूपेणावस्थानं त्वस्मदादिसाम्यान्न विशिष्य वक्तुं योग्यमित्यतो वा आह । नो सदिति । न उ इति छेदः । तेन ओदिति प्रकृतिभावाभावः । असन्नेवासीदित्यर्थः । ननु तर्हि रजआदिकमासीत्किमित्यपेक्षायामाह । रज इत्यादि । स पुरुषः कः किं जीव इत्यत आह । आनीदवातमिति । वातपदोपलक्षितपंचमहाभूतविकृतदेहरहितं ब्रह्मैवासीदित्यर्थः । तेन ब्रह्मैव पूर्वोक्तः पुरुष इत्यर्थः । रज आदीनामभावे उपादानकारणाभावात्कथं जगदुत्पत्तिरित्यत आह । तम आसीदित्यादि । एवं ना आस दासीत् । नः असत् आसीदिति छेदः । दासवंतो भृत्यवंतो ब्रह्मादयो दासिनस्तेषां प्रेरकत्वात् दासीत् । रश्मीदित्यस्य रश्मिप्रेरक इति यथा एतादृशो नः अस्माकं रक्षकत्वादिना अस्मत्संबंधी ना पुरुषः आस न परः किंच नासेत्यत्रेव भूभावाभावः सहनीयः । रजः लोकादिकं असत् ¶ ए परमात्मस्वरूपे सदपि नो आसीत् तदिच्छयैवेति । अन्यत्समानमिति । अत्र स्वराद्यनुपपत्तिर्बाहुलिकत्वादिना परिहर्तुं शक्यत एव स्वाभ्युपगतनिर्वाहाय तव प्रसिद्धपदपरित्यागवत् । एवं व्याख्यातुरपि स्वाभ्युपगतनिर्वाहायोक्तरीत्यंगीकारे बाधकाभावस्य त्वन्न्यायेनैव सिद्धत्वादिति । ननु न मया स्वाभ्युपगतनिर्वाहाय प्रसिद्धपदपाठस्त्यज्यते । किंतु न सती नासती मायेत्यादिवाक्यांतरानुरोधेनेत्थं व्याख्यायत इति चेदेवमपि तत्स्मृतेरर्थलब्धार्थानुवादित्वसंभवेन पदैक्यज्ञापने ऽन्यथासिद्धत्वात् । स्मृतिश्रुत्यायां न सन्न चासन् साक्षात्सदसतः पर इति स्मृत्यनुरोधात्तमोवाक्यापेक्षया ब्रह्मवाक्यस्य सन्निहितत्वेन तदेकवाक्यतया ब्रह्मण एव सदसद्वैलक्षण्यमापद्येत । एतेनाग्नेयं चतुर्धा करोति पुरोडाशं चतुर्धा करोतीतिवदुपसंहारेणेव समीहितसिद्धिरिति निरस्तं । ब्रह्मणोऽपि तथात्वापत्तेर्दुर्वारत्वात् । सत्वग्राहकप्रमाणकृतवैषम्यं त्वयुक्तमेव । तमस्यपि साम्यात् । नच तेषां व्यावहारिकसत्तावगाहित्वाद्वैषम्यमिति वाच्यं।प्रत्यक्षेणानिर्वचनीयत्वस्य कुत्रापि निश्चयायोगेनानुमानादीनां तर्काप्रतिष्ठानादित्युक्तरीत्या व्यवस्थापकत्वाभावेनागमेनैव क्वचिदनिर्वचनीयतां गृहीत्वोक्तव्यावहारिकत्वादिव्यवस्थायां कल्पनीयायां जगदनिर्वचनीयमनृतमित्यादीनां सावकाशतायाः वक्ष्यमाणतया लक्षणप्रतिपादकत्वादस्या एव श्रुतेः प्रथमतोऽनिर्वचनीयत्वव्यवस्थापकत्वे वक्तव्ये ब्रह्मण्यपि तत्प्रसंगापत्तिरूपबाधकस्यानुसंधाने ब्रह्माविद्ययोः सत्वग्राहकप्रमाणतौल्ये अस्या एवानिर्वचनीयत्वमस्य नेति निश्चयदौर्घट्येन व्यावहारिकसत्वादिव्यवस्थाया इतरेतराश्रयादिपराहतत्वात् ।· प्रमाणतौल्यं त्वग्रे दर्शयिष्यते । अपि चासदन्यस्य सदन्यत्वैक्यलाभे निर्वचनीयसिद्धिः स्यात् । नच सत्संभवति पृथक् क्रियासंबंधेन भेदस्यैवावगतेः। अन्यथा पृथक् क्रियापदसंबंधानुपपत्तेः।

¶ टिप्पणी—असदित्यस्य सप्तमीतत्पुरुषसमासप्रदर्शनमिद

नहि नीलघटोस्तीत्यर्थे नीलोस्ति घटोऽस्तीति प्रेक्षावान् प्रयुंक्ते। प्रत्युतैकवस्तुबोधनाय तथा प्रयोक्ताऽपहसनीयो भवति। तथा चासंजातविरोध्युपक्रमबलाद्भेदस्यैवावगतेरुपसंहारेणापि तत्सिद्धिः कथं स्यात्। आग्नेयवाक्ये च तयोरनैरंतर्यापन्नत्वेन विरूद्धरूपेणानुपस्थापकतया चोपसंहारबलेनाग्नेयपुरोडाशयोरैक्यावगतावप्युक्तरीत्या क्रियाद्वयसंबंधबलात्सद्भिन्नत्वासद्भिन्नत्वरूपविरुद्धधर्माभ्यामुपस्थितयोर्भेदस्यैव झडिति प्रतिभानात्। न ह्यनिर्वचनीयासिद्धेः प्राक् तयोरविरुद्धत्वग्राहकं प्रमाणं। अनेनैव विरुद्धत्वासिद्ध्यपेक्षायां स्फुट इतरेतराश्रयः। इत्थं चात्र वस्तुद्वयभेदावगतो उपसंहारस्थब्रह्मतमोवाक्यद्वयानुरोधेन यथासंख्यन्यायेन ब्रह्मणः सत्त्वमविद्याया असत्त्वं प्रतीयेत। ननु सदसद्विलक्षणत्वं शाब्दप्रमात्वं वेति व्यर्थस्ते प्रयासः। यदपि नशब्देनायं समासः उक्तः प्रसिद्ध्यतिक्रमापेक्षणावैलक्ष्यण्यानुसरणस्यापि युक्तत्वाच्चेत्यभिहितं। तदप्यसत्। प्रसिद्ध्यतिक्रमो हि न तावत्पलांडुभक्षणवत्स्वातंत्र्येण पापसाधनं किंतु बहुप्रसिद्धाविषयस्यैव प्रथमं बुद्धिगोचरत्वान्निर्निमित्तं तत्परित्यज्यार्थांतरानुसरणं व्याख्यातुरज्ञानादिकमनुमापयति। तत्र सदसत्पदयोः पारमार्थिकापारमार्थिकयोः प्रसिद्धिवत् नासदित्यादौ भिन्नपदत्वं बहुप्रसिद्धतया प्रागेव बुद्धिस्थं उत्तरत्र सर्वत्र निषेधार्थकतायाः नो नञादीनां विद्यमानत्वात्तत्प्रायपठितत्वेन नो न इत्यादीनामपि प्रथमं श्रूयमाणानां निषेधार्थकत्वमेव बुद्धिस्थं। एवं नो इत्यस्य निषेधार्थकत्वमेव बहुशो दृष्टं। नतु भेदार्थकत्वमिति तदेवादौ बुद्धिस्थं। तथाच तत्सर्वपरित्यागस्य कथं युक्तता सदसच्छब्द प्रसिद्धार्थपरित्यागस्य कथमयुक्तता। प्रत्युत त्यजेदेकं कुलस्यार्थे इति न्यायेन बहुपरित्यागापेक्षया एतत्परित्याग एव श्रेयान्। तच्छास्त्रीयाभिधानरूपवाक्यानुसारेण तच्छास्त्रीयवाक्यार्थस्य वर्णनीयतया व्याकरणे गुणवृद्ध्यादिपदैः स्वरविशेषाणामिव वेदशास्त्रे उक्तश्रुतिप्रसिद्ध्या पंचमहाभूतानामेव प्रतिपाद्यत्वस्य वक्तुं युक्तत्वाच्च। अन्यथा प्रसिद्धिमात्रनिर्भरे प्रकेतं सलिलं सर्वमा इदमित्यत्र षत्तृगतौ तस्मादिलच्प्रत्यय इत्यादिरीत्या सलिलपदस्याप्रसिद्धार्थवर्णनमयुक्तं स्यात्। नच सर्वकार्यलयकाले तमसः जलभूताभेदो बाधित इति तत्र प्रसिद्धपरित्याग इति वाच्यं। इहापि सदन्यस्मिन्नासीदिति क्रियार्थबाधं कुतो न पश्यति। परमार्थाभिन्ने कालसंबंधः प्रतीयते स चानिर्वचनीयवादिनां न बाधित इति तु न वाच्यं। अनिर्वचनीयसिद्धेः प्राक् पारमार्थिकभेदस्य कालसंबंधविरुद्धत्वेन सर्वलोकावगतत्वेन तदवच्छिन्न तदन्वयस्य योग्यताग्रहविरहात्। अन्यथा सलिलपदमुख्यार्थजलाभेदान्वयोपि स्यात् अविशेषात्। किं चासदस्ति असदासीदसद्भविष्यतीत्यादिव्यवहाराभावस्तथा व्यवहर्तरि भ्रांतत्वव्यवहाराच्च। कालसंबंधप्रयोजकरूपावच्छिन्ने वा कालसंबंधे वा सत्पदस्य लोकप्रसिद्धिरवश्यं वाच्या। तथा चात्रत्यसत्पदस्य तादृशार्थकत्वे तादृशसदन्यस्मिन्नन्वयप्रयोजकरूपविरहनिश्चयान्नासीदिति ¶ क्रियान्वयः। यदि च तदन्यस्वानिरुच्यमानपारमार्थिकत्वावच्छिन्नवाचीसच्छब्दस्तादृशसदन्यत्वं च न कालसंबंधाविरोधीत्युच्यते। तदा सच्छब्दस्य प्रसिद्धार्थपरित्यागो दुर्वार एव। एवं सच्छब्दस्यासीदिति क्रियायाश्चैकधातुजत्वात्स धातुर्यदि पारमार्थिकसत्तावाची तदा आसीदित्यनेन कालसंबंधबोधने प्रसिद्धत्याग एव। यदि कालसंबंधवाची तदा तद्धातुनिष्पन्नशब्दस्याबाध्यत्वावच्छिन्नार्थकत्वे प्रसिद्धार्थत्याग एव। अबाध्यविलक्षणे कालसंबंधावगाहिबोधस्य प्रागाहार्यत्वमुपपादितमेवेति तादृशबोधोऽपि न घटत एव। एतेन सद्विलक्षणे कालसंबंधबोधनमात्रेणानिर्वचनीयसिद्धिरिति परास्तं।

¶ ( टिप्पणी ) न आसीदिति छेदः

(टीका) ननु प्रतीतार्थे बाधितेऽर्थांतरमावश्यकमेव । तत्किं श्रुत्युदाहरणेन । मैवं । बाधकेनार्थांतरमेव लभ्यते ननु तद्विशेषोपीति तत्राश्रयणीयमेव श्रुत्यंतरं । ननु श्रुति-पुराणादिषु प्रपंचस्यानिर्वचनीयत्वमुच्यते । अचिंत्यत्वमतर्क्यत्वमज्ञेयत्वं च। नच तत्र चिंताद्यविषयत्वमेवार्थः । तथासति प्रमाणानां निर्विषयत्वापत्तेः। अतस्स-दादिप्रकारैरचिंत्यत्वाद्येव तदर्थः । किंच प्रपंचोऽनृतोऽसन्नसत्य इत्यपि संति वाक्यानि । नचासत्वमेव तदर्थः । तथात्वे प्रतीतिविरोधात् । अतस्तान्यनिर्वचनीय वचनानि । तत्कथमनिर्वचनीयं नागमो वक्तीति द्वितीयपक्षनिरासाय तद्वचनार्थं सोपपत्तिकया स्मृत्यैव दर्शयति—

(मूलं) अद्भुतत्वादनिर्वाच्यं ब्रह्म चिच्चेत्थमेव च ॥ १९ ॥

---

शून्यवादिनाऽपि बाध्यत्वे सति कालसंबंधस्य जगति स्वीकृतत्वेन तन्मात्रस्य त्वन्मते निर्वचनीयत्वरूपत्वाभावात् । तन्मताविशेषेऽपि तथात्वमेवानिर्वचनीयत्वमित्यंगीकारस्य पूर्वमेव दूषितत्वाच्च । नासदासीदित्यंशवैयर्थ्याच्च । नच सद्विलक्षणस्य कथं कालसंबंध इति शंकानिरासकत्वेन तत्सार्थक्यमिति वाच्यं । असदन्यस्य सत्वोक्तिमात्रेण तन्निरासायोगात्। उक्तवाक्यद्वयबलेन सदन्यस्मिन्नसदन्यत्वलाभात्तन्मात्रेण कालसंबंधभावशंकानिरास इति तु न वाच्यं । सदसदिति अनाहार्यलोकव्यवहाराभावात्सत्वावछिन्नभेदरूपासत्वावछिन्नभेदसत्वावछिन्नभेदयोर्विरुद्धत्वग्रहेणैकत्र तयोर्ज्ञातुमशक्यत्वात् । न चासत्वं सत्तादात्म्यशून्यत्वमेव न तु सद्भेदः।तथा च तादृशासद्भेदः सद्भिन्नेन लौकिकैर्विरुद्धत्वेनावगत इति वाच्यं । तर्ह्यत्रत्यासत्पदस्य तादृशासद्बोधकत्वं स्वघटकसत्पदस्य पूर्वोक्तरीत्या लक्षणया वाक्यलक्षणापक्षेऽसदिति समुदायस्य वा लक्षणमेव निर्वाह्यमिति सदसत्पदयोः प्रसिद्धार्थत्यागो दुर्वार एव । एवं सदन्यस्य कथं कालसंबंध इति शंकायास्तयोर्विरुद्धत्व ग्रहवत एव संभवेन तद्बीजभूतविरोधमनिराकृत्य तत्तुल्यतया सर्वलोकावगतासदन्यत्वोक्तिमात्रेण तच्छंकानिरासासंभवाच्च । उत्तरवाक्योत्थिततच्छंकानिरासकत्वस्य पूर्ववाक्येऽनुचितत्वाच्च । असन्न भवतीति व्युत्पत्त्या इह ब्रह्मण उद्देश्यत्वाविरोधादिति वाक्ये ब्रह्मण इति न लग्नं । तस्योद्देश्यत्वे तमसोऽनिर्वचनीयत्वासिद्धौ बीजाभावात् । एवं सद्विलक्षणस्य कथं कालसंबंध इत्याशंकापरिहारकत्वायोगाच्च । तर्ह्यन्यस्यासद्विलक्षणत्वेऽन्यस्य कालसंबंधः सिद्ध्यतीति । एवं त्वदुक्तरीतौ स्वग्रंथे त्वद्गुरूक्तं नञः पर्युदासपक्षे सदसद्विलक्षणत्वरूपा निर्वचनीयत्वं शाब्दमित्यप्ययुक्तं चेति दिक् । तस्मात्पराभिमतार्थानामयुक्तत्वादाचार्योक्तः टीकाकृदुपपादित एव श्रुत्यर्थः सत्हृदयैरादरणीय इति स्थितं । द्वितीयपक्षेति । नच भावाभाव विलक्षणमिति मूलावतारिकाग्रंथे विकल्पित द्वितीयपक्षेत्यर्थः । सोपपत्तिकयेति । ब्रह्मचिद्ग्रहणेन स्मृतावुपपत्तिः सूचिता प्रकटीकरोति च तद्व्याख्यायां स्वयमेवेति ध्येयं । अज्ञेयपदा-

(टीका) अद्भुतत्वादाश्चर्यत्वादेव चेत्यमनिर्वाच्यमुच्यते। नतु सदादिप्रकारैर्निर्वक्तुमशक्यत्वात्। कुतः न केवलं चेत्यमनिर्वाच्यमुच्यते। किंतु ब्रह्मनादितरचेतनं च। नच ब्रह्मादेरनिर्वाच्यतांगीकारार्हा। अतस्तत्र यथाद्भुतत्वादेव सा व्याख्येया। तथा चेत्यस्यापि प्रकरणात्।

[मूलं] आचिंत्यं तत एवैतत्।

(टीका) एतद्ब्रह्म चिच्चेत्यं च ततोऽद्भुतत्वादेवाचिंत्यमुच्यते। नतु सदादिप्रकारैर्मनोवृत्त्याविषयत्वात्।

(मूलं) "अतर्क्याज्ञेयमेव च" ॥ १६ ॥

(टीका) तत इति वर्तते। तेनैवकारस्य संबंधः। अतर्क्यं च तदज्ञेयं चातर्क्याज्ञेयं। ततोऽद्भुतत्वादेव। नतु सदादिप्रकारैरनुमातुं प्रत्यक्षेण वा ज्ञातुमशक्यत्वात्। मनोवृत्तेः प्रत्यक्षत्वेपि बाह्यांतरत्वभेदेन पृथगुपादानं। अस्त्वेवं। यत्र ब्रह्मणा सहानिर्वाच्यत्वादि प्रपंचस्योच्यते। यत्र तु ब्रह्मैवर्तमन्यदनृतमित्याद्युक्तिः तत्र कथमित्यत आह।

[मूलं] ऋ-गताविति धातोस्तु पूर्वावगतवत्सदा॥ स्थितेर्ब्रह्मर्तमित्युक्तम्।

(टीका) धातोरिति धातुव्याख्यानात्। गत्यर्थानामवगत्यर्थत्वेन निष्ठाप्रत्ययस्य भूतार्थत्वेन तस्य च विशेषानुक्त्यानादितालाभे सत्यृतमनादितोऽवगतमित्युक्तं भवति।

---

चिंत्यपदयोरर्थभेदं प्रकटयति। मनोवृत्तेरिति। इत्याद्युक्तिरिति। आदिना 'तदेवर्तं तदु सत्यमाहुरित्यादीनां संग्रहः। तत्राप्येवकारेण जगति सत्यत्वव्यवच्छेदात्। धातोरिति। ऋगताविंत्यस्य समुदायस्य धातुत्वाभावादित्थं व्याख्यातं। तथाच ऋगताविंत्यस्माद्धातुव्याख्यानादित्यर्थ उक्तो भवति। यद्वा मूल ऋगताविंतिशब्दगतार्थस्य ऋगताविंत्यानुपूर्व्याः निपातार्थत्वात्स्वव्याख्यातत्वरूपभेदसंसर्गेणैव धातुपदार्थेऽन्वयः। धातुव्याख्यानादिति टीका तु पर्यवसितार्थपरैव। तेन न धातुपदस्य लक्षणानुरूपो दोषः। व्याख्यानद्वयेऽपि पंचम्यर्थप्रयोज्यतायाः शाब्दबोधविषयरूपोक्तपदार्थैकदेशे शाब्दबोधेऽन्वेति। व्याख्यानस्योक्तशाब्दबोधप्रयोजकत्वं शक्तिग्राहकतया परंपरयेत्यवधेयं। गत्यर्थानामिति। तथैवाभियुक्तव्यवहारादिति भावः। निष्ठाप्रत्ययेति। क्तक्तवतू निष्ठेति क्तस्य निष्ठासंज्ञाविधानात्। क्तप्रत्ययस्येत्यर्थः। भूतार्थत्वेनेति। अतीतकालघटितार्थकत्वेनेत्यर्थः। लाभ इति। शाब्दविषये सतीत्यर्थः। विशेषानुक्त्यादिनेति। प्रमाणांतरेणैतदपेक्षयैव भूतत्वमित्येवंरीत्या अवधिविशेषस्यानुक्त्येत्यर्थः। आदिना प्रमाणांतरानुगुण्यादिपरिग्रहः। अनादितोऽवगतमित्युक्तं भवतीति।

अयं भावः। ऋधातोर्ज्ञानमर्थः। क्तप्रत्ययस्य प्रकृतशब्दप्रयोगाधिकरणकालवृत्तिध्वंसप्रतियोगिकालवृत्तित्वविषयत्वावच्छिन्नं चार्थः। तादृशकालवृत्तित्वं ज्ञाने ऽन्वेति। तस्य च विषयतायामेकदेशभूतायामपि व्युत्पत्तिवैचित्र्येणान्वयः। तथाच यदा यदा ऋतशब्दप्रयोज्यो बोधस्तदा तदा तत्तत्कालपूर्ववृत्तिज्ञानविषयीभूतमित्यर्थो लभ्यते। तत्तत्पदव्यक्तीनां पुरुषबुद्धिक्रमोपहितवर्णात्मकानां भिन्नत्वेपि वेदानामिव तद्घटकपदानामपि सजातीयानुपूर्व्याः स्वतंत्रकर्तृकत्वाभावेनापौरुषेयतया ऋतशब्दप्रयोगमाहिम्नाऽ नादिकालतोऽवगतमिति पर्यवस्यतीति। अनादितोऽवगतत्वं तु शाब्दबोधविषयीभूतमेव। तत्तत्कालीन ऋतशब्दाधीनबोधे क्तप्रत्ययेन तत्तत्कालापेक्षया पूर्वेषां सर्वेषां कालानां तादृशपूर्वत्वेन भाने प्रमाणांतरबाधाभावाद्ब्रह्मज्ञानादित्वग्राहकप्रमाणांतरानुगुण्याच्च। अत एवेत्युक्तं भवतीति शब्दविषयत्वमेवोक्तं एकस्या अवगतिव्यक्तेः सर्वपूर्वकालसंबंधाभावेऽपि सर्व एव शुभः काल इत्यादौ एकैकस्मिन्नेकैकशुभत्वान्वय इव यथायोगं एकैकस्मिन् ज्ञाने एकैककालसंबंधस्य नित्यज्ञाने वा सर्वपूर्वकालान्वये बाधकाभावात् पूर्वकालीनज्ञानेषु ब्रह्मणो विषयताप्यस्तित्वेनैवेति लभ्यते। ज्ञानानामसति बाधके स्वसमानकालासंबंधित्वेन स्वविषयावगाहित्वस्वाभाव्यात्। तादृशविषयताया एव मुख्यत्वेन प्रकृते क्तप्रत्ययेन तस्यैव बोधयितुमुचितत्वात्। अस्तीत्येवोपलब्धव्यः। अस्ति ब्रह्मेति चेद्वेदेति प्रमाणांतरानुगुण्याच्च। ज्ञाने प्रतीयमानास्तिता च धर्म्यंश इव तद्योग्यत्वात्धर्मांशेपि बाधकप्रमाणाभावात्। ज्ञानमपि प्रमात्मकमेव मुख्यत्वात्। असति बाधके मुख्यस्यैव प्रथमतः शब्देन बुद्ध्यावारोहात्। तथा चैतत्कालोच्चारितवैदिकऋतपदेन यावंतो एतत्पूर्वकालास्तत्तत्कालसंबंधिन्यो यावंत्यो ऽस्तित्वेन गुणपूर्णतादिविशिष्टब्रह्मविषयिण्यः प्रमास्तत्तद्विषयीभूतविशिष्टमिति बोधो जायते। यथानंतपदेन परिच्छेदराहित्ये लब्धेपि प्रमाणांतरानुसारेण गुणैः परिच्छेदाभावो लभ्यत इत्याशयेन महागुणत्वाद्यमनंतमाहुरिति निरुक्तिर्भागवते तथेयमपि निरुक्तिः स्मृतिकृताकृताऽतो न कोपि क्षुद्रोपद्रवः। पूर्वावगतवत्सदास्थितेरित्यनेन ऋतशब्दबोध्यान्वय प्रयोजकधर्मस्य तदन्वययोग्यतारूपस्योक्तिः पूर्वावगतवत्सदास्थित्यभावे यदा यदा ऋतशब्दस्तद्बोध्यस्य समस्ततत्पूर्वकालसंबध्यस्तित्वप्रकारकविशिष्टब्रह्मविषयकप्रातिपत्तिसामान्यप्रमात्वस्य दुर्घटत्वापतेः। पूर्वावगतवादित्यत्र तत्र तस्येवेति सूत्रात् षष्ठ्यंताद्वतिः। तथाच गोवद्गवयस्य रूपमिति वाक्येन गोरूपसदृशं गवयरूपमिति धीर्जायते। तथा यत्किंचित्पूर्वकालीनावगतिविषयनिष्ठस्थितिसादृश्यस्य ब्रह्मनिष्ठसार्वकालिकस्थितौ धीर्जायते। स्थितिश्च कालसंबंध एव। ब्रह्मनिष्ठयत्किंचित्कालसंबंधसादृश्यं तन्निष्ठसर्वकालसंबंधेषु यादृशयादृशधर्मवद्ब्रह्मनिष्ठत्वं तस्य तादृशतादृशधर्मवद्ब्रह्मनिष्ठत्वात्मकमेव। सादृश्यस्य तन्निष्ठभूयो धर्मात्मकत्वेनासति बाधके संभवतां सर्वेषा ग्रहणात्। नच तत्क्षणसंबंधवद्ब्रह्मवृत्तित्वमेवैतत्क्षणसंबंधरूपस्थितौ नास्तीति वाच्यं। संभवतामित्यनेनैतच्छंकायाः परिहृतत्वात्। तेषां धर्मत्वाभावाच्च। तद्भेदशालिनामेव धर्मत्वात्। उपपादितमेतदन्यत्र। नच पूर्वावगतस्य स्थितेरित्येव वक्तव्यं वतिर्निरर्थक इति वाच्यं। पूर्वावगतनिष्ठस्थितिमात्रेण ऋतपदबोध्योक्तधर्मासिद्ध्या तस्य योग्यतारूपत्वाभावेन तदुक्तिवैयर्थ्यात्। कुत एतदिति चेत्। पूर्वावगतस्य प्रकृत्यादेरिदानीं सदा च स्थितत्वेपि तत्परिणामभूतविकारविशेषाणां तेन भेदाभेदशालिनामुत्पत्तिविनाशशालित्वेन तन्नाशेन विशिष्टस्यापि नाशेन एतत्काल उच्चरितऋतशब्दबोध्यस्यैव तत्पूर्वतननिखिलकालसंबंधियावत्प्रमीयानां स्वकालेऽस्तित्वेन विषयतानामेकस्मिन्नपि विशिष्टेऽभावात्।

(टीका) नच परिणामित्वे अस्यैव पूर्वावगतत्वं मुख्यतो युज्यत इति पूर्वावगतव त्सदास्थितिरुक्ता भवति ।

---

ब्रह्मणि तु विकारादिरहिते विद्यमानधर्माणां तेनात्यंताभिन्नत्वात्तद्विशिष्टानामपि परस्परमत्यंताभिन्नत्वात्सार्वदिकत्वाच्च । तादृशप्रमाविषयत्वस्यैकविशिष्टे संभवात् । नच ज्ञानवद्ब्रह्मेति प्रमाविषयत्वमानंदविशिष्टब्रह्मणि नास्ति । तथात्वे तज्ज्ञानस्यानंदविशिष्टब्रह्मविषयकत्वापत्तेः । तथाच तादृशयावत्प्रमाविषयकत्वं कथमेकविशिष्ट इति वाच्यं । विशेषणविषयकत्वघटितविशिष्टविषयकत्वव्यवहारस्य तज्ज्ञानेऽभावेपि वस्तुतो विशिष्टानामत्यंताभिन्नत्वेनैकस्मिन् सर्वतादृशप्रमाविषयत्वे बाधकाभावात् । प्रकृत्यादौ तु नैवं । तादृशपरिणामविशेषविशिष्टानां धर्मिणा भिन्नाभिन्नानामपि परस्परं भिन्नत्वात् । यद्वा तादृशयावत्कालसंबंधिन्यो यावत्यः समानविषयिण्यः स्वसमानकालसंबंधावगाहिन्यः प्रमास्तद्विषयीभूतमिति ऋतपदेन बोधः । असति बाधके संकोचे कारणाभावात् । तथात्वे च ब्रह्मस्वरूपैकैकविशिष्टेष्वस्तित्वेनानादितः प्रमासत्वं लभ्यते । तच्च ब्रह्मणि सर्वथा विकाररहिते घटते । प्रकृत्यादौ तु यत्किंचित्परिणामधर्मविशिष्टे स्वकालेऽस्तित्वावगाहिज्ञानस्य प्रमात्वेपि तन्नाशादिना तदभावदशापन्नतादृशज्ञाने प्रमात्वस्य बाधितत्वान्न तस्य ऋतपदार्थता । नच प्रकृतित्वपराधीनत्वादिधर्मानादाय प्रकृतावपि तादृशप्रमाविषयत्वसंभवेन तत्रापि ऋतपदव्यवहारप्रसंग इति वाच्यं । सर्वधर्मघटिततादृशप्रवृत्तिनिमित्तवतो ब्रह्मण एव तत्पदव्यवहारभागित्वात् । बहुधनवत एव धनीति व्यवहारगोचरत्ववदसाधारण्येन व्यपदेशा भवंतीति न्यायेन ब्रह्मण्येवैतद्व्यवहारस्य तदेवर्तमित्यादौ सिद्धत्वेनारोपे सति निमित्तानुसरणमिति न्यायेन स्मृतिकृता तस्यासाधारण्यमात्रोपपादनार्थं प्रकृतत्वाच्च । अत एव ऋतपदप्रवृत्तिनिमित्तकोटौ प्रकृत्यादिव्यावृत्तं पूर्वोक्तं सर्वं निवेश्यमेव । इत्थं च पूर्वावगतस्य स्थितेरित्युक्तिमात्रेण ऋतपदप्रवृत्तिनिमित्तसत्ताया अनुपपादनात्तदुपपादनाय वतिः सार्थक एव । ननु तत्प्रयोगेण कथमेतदुपपादितं भवतीति चेत् । इत्थं । पूर्वकालस्थितो राजा इदानीं वर्तते इत्यनेन पूर्वोत्तरकालवर्तिराजैक्यमात्रं प्रतीयते । नतु पूर्वकाले यादृशौदार्यादिगुणविशिष्टो राजा तादृशगुणविशिष्टस्य राज्ञ इदानीं स्थितिः। पूर्ववदिदानीं वर्तत इत्यनेन तु राजपूर्वनिष्ठकालसंबंधसदृशैतत्कालसंबंधबोधे सादृश्यघटकतया पूर्वकालसंबंधे वक्तृतात्पर्ययोग्यतावशाद्यादृशधर्मवद्राजनिष्ठत्वं तादृशधर्मवद्राजनिष्ठत्वमुत्तरकालसंबंधे भासत इति राजन्येतत्काले तादृशौदार्यसिद्धिर्भवतीत्यनुभवसिद्धत्वात् । चैत्र त्वं पूर्वोऽसि नतु पूर्ववदसि तमेव चैत्रं पश्यामि नतु पूर्ववत्पश्यामि मैत्रं तु पूर्ववत्पश्यामीत्यादिलोकव्यवहारतज्जातीयशास्त्रीयव्यवहाराणामुक्तरीत्यार्थबोधकानां सुप्रसिद्धत्वाच्च । पूर्वावगतवदिति वातिप्रत्ययांतसमभिव्याहारेण पूर्वोक्तरीत्या विवक्षितार्थसिद्धिरिति । परिणामस्तु प्रकृत्यादौ ऋतपदार्थतावच्छेदकमुख्यधर्माभावोपपादनद्वारा अनृतपदव्यवहार्यतोपपादनायाभिहितः । ननु अनृतपदार्थतावच्छेदकतयेति द्रष्टव्यं । एतदेव स्फुटीकरोति। न चेत्यादिना । उक्ता भवतीति । ऋतपदेन स्वप्रवृत्तिनिमित्तनिर्वाहकतया क्षिप्ता भवतीत्यर्थः । अत्र यद्यपि ब्रह्मणि ऋतपदवाच्यत्वमुपपाद्य प्रकृत्यादौ तदन्यत्वादिना ऋतपदव्यवहार एव उपपादनीयः। पूर्वावगतवत्सदा स्थितिस्तु ऋतशब्दार्थयोग्यतानिर्वाहाय प्रमाणकृतोपात्ता । अत एव तस्य हेतुविभक्त्यंतेन निर्देशस्तथा च तत्सिद्धेरेव प्रकृते मुख्यफलत्वव्यापक उक्ता भवतीति निर्देशो न घटते ।

( मूलं ) अनृतं परिणामतः ॥ प्रकृतिप्राकृतं प्रोक्तं ॥ १७ ॥

( टीका ) प्रकृतिश्च प्राकृतं च प्रकृतिप्राकृतं। तु शब्दोऽवधारणे। ततश्च अपरिणामित्वपरिणामित्वाभ्यामेव ब्रह्मजगती ऋतानृते तदेवर्तमनृतेन हि प्रत्यूढा इत्यादौ प्रोक्ते, नतु सत्वासत्वाभ्यामित्युक्तं भवति ॥

[ मूलं ] असत्तदशुभत्वतः ॥ १८ ॥

( टीका ) संसाररूपत्वेनाशुभत्वत एव। तथा परमानंदरूपत्वेन शुभत्वात् ब्रह्म सत्प्रोक्तमित्यपि ज्ञातव्यम्। असतां बुद्धिगम्यत्वादसत्यमिति चोच्यते। एवं सतां बुद्धिगम्यत्वाद्ब्रह्म सत्यमित्युच्यते इत्यपि द्रष्टव्यम्।

---

तथापि तस्य प्रकृतप्रमाणप्रवृत्तिफलत्वाभावेपि जगत्यनृतादिपदव्यवहारोपपादनाय रीत्यंतरं विहाय यदुक्तरीत्यैव ब्रह्मणि ऋतशब्दप्रवृत्तिप्रदर्शनं कृतं। तत्फलाभिधानपूर्वकं तादृशास्थिते योग्यत्वरूपत्वप्रदर्शनार्थमिदं वाक्यं प्रसक्तमिति नासंगतिः। एतेनैतदपि परिहृतं भवति। ऋतशब्दस्य ब्रह्मण्युपपत्तये उक्तप्रयासो विफलः। भावनिष्ठांतत्वेपि ब्रह्मणो ज्ञानरूपतया ऋतशब्दवाच्यत्वसंभवात्। जगतस्तदन्यत्वेनानृतपदवाच्यतासंभवाच्च। नच जीवानामपि ऋतपदवाच्यतापत्तिः। जीवानामपरिणामित्वेन रमाया अपि तथात्वेन भवदुक्तनिरुक्तावप्युक्तदोषसाम्यात्। नच तेषामनृतपदव्यवहारागोचरत्वेन तद्भिन्नत्वऋतशब्दवाच्यत्वेपि बाधकाभावः। प्रकृतवाक्ये ब्रह्मण एकस्यैव ग्रहणं तच्छब्दवाच्येष्वपि ब्रह्मण अपरायत्तप्रवृत्तिनिमित्तत्वेन तस्यैव मुख्यत्वनिमित्तेनेति वाच्यं। ऋतशब्दस्य ज्ञानार्थकत्वेप्युक्तसमाधान संभवात्। नच जडज्ञाने ऋतपदप्रवृत्तिर्न स्यादिति वाच्यं। भवदुक्तरीत्या निर्वचनपक्षेपि मुख्यत्वानुरोधेन ऋतपदार्थशरीरे प्रमात्वादिनिवेशवत् अत्रापि तदनुरोधेन नित्यत्वमात्रस्य निवेशनीयत्वेन ऋतपदस्य नित्यज्ञानत्वावच्छिन्नार्थकत्वेन सर्वसामंजस्यादिति। उक्तरीत्या निर्वचने तदुपपादकतया ब्रह्मण अनादित एकप्रकारेणैव स्थितिलाभेन निर्विकारत्वनित्यानंद नित्यज्ञानादिबहुगुणानां ब्रह्मणि लाभेनास्यैव युक्तत्वात्। वेदानां भगवद्गुणोत्कर्षप्रतिपादनार्थमेव प्रवृत्तत्वेन तद्घटकशब्दानामपि तदनुसारेणैव तात्पर्यकल्पनात्। अन्यथा भागवतोक्तानंतशब्दनिरुक्तिरपि व्यर्था स्यात्। नाशाभावमात्रेण तच्छब्दप्रवृत्तिसंभवात्। प्रकृतिश्चेति। सर्वो द्वंद्वो विभाषयैकवद्भवतीति वचनात् प्रकृतिप्राकृतमिति साध्विति भावः। ततश्चापरिणामित्वपरिणामित्वाभ्यामिति। अनयोरुक्तरीत्या परंपरया प्रवृत्तिनिमित्तनिर्वाहकतया परंपरया तच्छब्दव्यवहारबीजत्वबोधनाय निमित्ततृतीयाप्रयोगः। वाच्यकोटौ निवेशाभिप्राये अपरिणामित्वपरिणामित्वबोधके ऋतानृतपद इत्यवक्ष्यत्। नतु सत्वेति। अत्रापि निमित्ते तृतीया। परंतु बाधकाभावात्प्रवृत्तिनिमित्ततयैव निमित्तत्वबोधिका। निमित्ततृतीयात्वेन साम्यात्साक्षात्परंपरया कृतवैलक्षण्येपि न वैगुण्यं। एतेन 'अविकारादृतं ब्रह्म विकारादनृतं जडं' इति परिणामार्थकविकारपदं प्रयुज्यैकस्मिन्नर्थद्वयनिबंधनसंभवे एतावदुक्तिर्विफलेति शंकानवकाशः। तयोः साक्षाद्वृत्त्या योगेन वा तत्पदार्थतावच्छेदकत्वायोगेन पूर्वोपपादितरीत्या बह्वर्थलाभायैतावदुक्तेरावश्यकत्वात्। इत्यपि ज्ञातव्यमिति। इदानीं जगति प्रयुज्यमानानिर्वचनीयानृतासदादिपदार्थनिरूपणपरायामस्यां स्मृतौ ब्रह्मणि

( टीका ) प्रकृत्यादिसतामपि बुद्धिगम्यम् किंविशिष्याभिधीयतेऽसतामिति नियमाभिप्रायेणेतिभावेन सदसद्विवेकमाह—

**( मूलं ) नियमेन चहिश्चित्तास्तेऽसंतो ब्रह्मणिस्थिताः ॥ १९ ॥**

( टीका ) ते संत इत्यत्राकारप्रश्लेषभावाभावाभ्यां यच्छब्दाध्याहारेण च द्वे वाक्ये द्रष्टव्ये। ब्रह्मणि स्थितास्तन्निष्ठबुद्धयः कस्मादेवमनृतत्वायुक्तेरन्यार्थवर्णनम्। ब्रह्मवत्सत्यत्वेन प्रमितत्वादित्याह ।

**( मूलं ) विश्वं सत्यं ॥ २० ॥**

( टीका) प्रमितमितिशेषः।नच सत्यत्वेपि परमात्मनोऽस्याविशेषश्शंकणीयः। एतत्सत्ताया अपि तदधीनत्वादित्याह ॥

**( मूलं ) वशे विष्णोः ॥ २१ ॥**

( टीका ) तदधीनसत्ताकमपि तेन नोत्साद्यत इत्याह ॥

**( मूलं ) नित्यमेव ॥ २२ ॥**

---

सत्पदं निरुच्यैव तदन्यत्वादिना जगति असदादिपदं निर्वाच्यमिति नास्ति । अत एवैकेनैव निमित्तेन जगद्ब्रह्मणोरनिर्वाच्यादिपदानि निरुक्तानि। ब्रह्मग्रहणं चैतद्ग्रहणवद्युक्तिसूचनायैव। अनृतपदस्य जडे निर्वचनार्थमेव ब्रह्मणि ऋतपदं निरुक्तं । एवं च स्मृतिकृता सत् सत्यमिति पदद्वयं ब्रह्मण्यनिरुच्य सत्पदासत्पदयोर्जगति निर्वचनेपि न क्रमभंगदोषः। नापि न्यूनता तथा चात्रोत्तरत्र च ज्ञातव्यं। द्रष्टव्यमिति च टीका न मूले एतदध्याहार्यमित्यभिप्रायिका। स्फुटत्वादप्रक्रांतत्वेनानावश्यकत्वाच्च प्रमाणकृताऽनुक्तत्वेपि ब्रह्मणि सत्पदं कथं प्रवर्तते शुभत्वेन प्रवृत्तावपि तस्य शुभत्वं कुत इति। एवमसत्पदस्योक्तरीत्या निर्वचने सत्यपदस्यैतत्पदार्थप्रविष्टभेदप्रतियोगिसमर्पकत्वाभावेन क्वचिद्विशिष्य ब्रह्मणि प्रयुज्यमानसत्यपदार्थतावच्छेदकं जगत्साधारणं किमिति च शंकया मनःखेदो न कर्तव्यः। स्मृत्या सूचितमस्मदुक्तरीत्या ज्ञातव्यमिति शिष्यान् प्रत्येवाभिहितं । अत एवेत्यध्याहर्तव्यमित्यनुक्त्वा ज्ञातव्यं द्रष्टव्यमित्येवाभिहितं । सदसद्विवेकमिति । असत्पदार्थस्य सत्साधारण्ये पुनर्विशिष्योक्तिरयुक्ता स्यादिति सत्स्वरूपनिरूपणपूर्वकं तद्विवेकोक्तिराव श्यकीति भावः। तथाच सत्पदार्थकथनमपि असत्पदनिर्वचनोपयोगितयैव प्रमाणे प्राप्तं न ब्रह्मणि सत्पदनिर्वचनाय येनाप्रक्रांतोक्तिः स्यात्। परं त्वन्यार्थमुपात्तेनाप्यनेन सूचितसत्पदनिर्वचनमस्माभिर्दर्शितमिति इदयं । सत्यासत्यपदे तु सदसदुपपादके यातेः कर्मणि कप्रत्ययांते अयस्मयादित्वेन भसंज्ञाश्रवणात्पदसंज्ञाप्रयुक्तजस्प्रवृत्त्या न सद्यमित्यादिरूपोपपत्तिरिति द्रष्टव्यं। न्यायप्रदर्शनपूर्वकं व्याख्यानार्थं स्मृतेः प्रवृत्तत्वात्तल्लाभायाह । प्रमितमितीति । अविशेष इति । तथा च तस्योपनिषत्सत्यस्य सत्यमिति वचनाविरोधप्रसंगः स्यात्तत्परिहारायोक्तवचनमवांतरसत्यत्वपरमेवेति भावः। तदधीनत्वादितीति । इत्थं च सत्यस्य सत्यताप्रदमिति श्रुत्यर्थः। 'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ॥ यत्प्रसादादिमे संति न संति यदुपेक्षया॥' इति स्मृत्यनुगृहीतत्वेनास्यैवार्थस्य प्रामाणिकत्वादितरस्य त्वौत्प्रेक्षिकत्वादिति भावः। न तेनोत्साद्यत इति । स्वरूपसत्वापहारो न क्रियत इत्यर्थः।

(टीका) नच तथात्वे भागे प्रत्यक्षादिविरोधश्शंकनीय इत्याह ॥

(मूलं) प्रवाहतः ॥ २३ ॥

(टीका) प्रवाहतो नित्यत्वेपि नावांतरवैचित्र्यमित्याह ॥

(मूलं) नक्काप्यनीदृशं विश्वम् ॥ २४ ॥

(टीका) क्वापि काले ॥ तथात्वेपि न प्रलयाद्यागमविरोधश्शंकनीय इत्याह ।

(मूलं) तत्तत्कालानुसारतः ॥ २५ ॥

(टीका) यस्मिन्काले यादृशेन भवितव्यं तथाभावस्य न व्यत्यास इत्युक्तं भवति । यदि तर्हीत्थंभूतं जगत्कथं केचिद्वैपरीत्येनाहुरित्यत आह—

(मूलं) असत्यमप्रतिष्ठं ये जगदाहुरनीश्वरम् । त आसुराः॥२६॥

(टीका) अत्र विश्वं सत्यं वशे विष्णोर्नित्यमेव प्रवाहत इत्यस्यासत्यमनीश्वरमप्रतिष्ठमिति विपरीतोक्तिः । आसुरा इति मिथ्याज्ञानित्वे हेतुः।

---

न संति यदुपेक्ष्येति वाक्यस्यार्थवादत्वपरिहाराय कारणकार्यादिसमस्तरूपैः प्रपंचोच्छेदो वक्तव्यः । अन्यथा पूर्वभागस्याप्यर्थवादत्वप्राप्त्या तदुक्तरीत्या भवदभिप्रेतः श्रुत्यर्थोपि न स्यादिति शंककभावान्न निर्दलशंकानिराकारकमिदमिति ज्ञातव्यं । मूले नित्यमेवेति । सर्वथा सत्वापह्वाररूपबाध्यत्वराहितमेवेत्यर्थः । न संति यदुपेक्ष्येति भगवच्छक्तेर्दुर्घटकारित्वतात्पर्यकं । भाग इति । लोकव्यवहारगोचर इत्यर्थः । प्रत्यक्षादीति । चक्षुरादिनाशोऽनुमानासिद्ध इत्याशयेनादीति । शंकनीय इति । घटादिरूपेणासत्वस्यानुभवसिद्धत्वात्कारणरूपेणापि सत्ताकल्पने मानाभावात्सर्वात्मना स्वरूपोच्छेद एवेति शंकाभावः । मूले प्रवाहत इत्यनेन कारणस्वरूपस्यापि बाधे जगत्प्रवाहोच्छेदापत्त्या ' अनाद्यनंतं जगदेतदीदृक् प्रवर्तते ' इति श्रुतिविरोधापत्त्या कारणोच्छेदो न युक्त इति युक्तिः सूचिता भवतीत्याशयः । नन्विदानीं जातस्य वसिष्ठादेरुत्तरकल्पे सत्तायाः भवदनंगीकारादनाद्यनंतमिति श्रुतिरुपचरितार्थैवावश्यं वक्तव्येति न तदनुरोधेन कारणसत्ताकल्पनीयेत्याशयेनाशंक्य निषेधति । प्रवाहत इति । नित्यत्वेपि नित्यत्वांगीकारपक्षेपि अवांतरवैचित्र्यं उत्तरकल्पे वसिष्ठाद्यसत्वसत्वं भवदंगीकृतमित्यर्थः। तथाचानाद्यनंतमिति श्रुतिरमुख्यानंतत्वपरेति हृदयं । मूले अनीदृशं । वसिष्ठादिराहितमित्यर्थः । तथा च वसिष्ठाद्यसत्वमसिद्धमिति न तदनुरोधेन श्रुतिरुपचरितार्थेति भावः। प्रलयादीति । महदादीनां प्रलये नाशाद्वसिष्ठादीनामपि मुक्तत्वात्तदभाव इत्याद्यर्थकश्रुतीत्यर्थः । तथा भावस्य न व्यत्यास इति । तादृशविश्वभवनस्येत्यर्थः । तथा चैतदीदृगिति श्रुतौ जगदंतरस्य तत्सादृश्यमेवोच्यते तच्च महदादिकांतरं वसिष्ठाद्यंतरं चादायोपपद्यत एवेति न श्रुतिरुपचरितार्थनिरुपादानोत्पत्त्यभावात् । पुनस्तत्सजातीयोत्पत्त्याद्यर्थं च कारणादिसत्ता आवश्यकीति भावः। केचिद्वैपरीत्येनेति । तद्वाक्यानामप्यागमत्वाविशेषेण प्रामाण्यात्तद्विरुद्धभवदुदाहृतश्रुतीनामनिर्णायकत्वं या तस्य व्याख्यानरूपतया प्राबल्ये तदनुरोधेन नेयत्वं वेति भावः। अप्रतिष्ठमिति। ज्ञानोच्छेद्यमित्यर्थः। तथाच प्रवाहतो नित्यत्वाविरुद्धार्थकत्वलाभः। ननु य एवमाहुस्ते असुरा इति तत्स्वरूपकथनेपि तद्वाक्यप्रामाण्याभावे पूर्वोक्तदोषो न परिहार्यत इत्यत आह । आसुरा इति । असुराणां

( टीका ) किमर्थं ते तथाहुरित्यत आह—

[मूलं] स्वयं नष्टा जगतः क्षयकारिणः इत्यादेर्व्यासस्मृतौ ॥२७॥

---

मिथ्याज्ञानित्वं प्रसिद्धमेवेति तदुक्त्या मिथ्याज्ञानमूलकत्वात्तद्वाक्याप्रामाण्यमुपपादितमेव भवति। मिथ्याज्ञानिन इत्युक्तौ न तत्रापि कारणशंका स्यादेवेति मूलकारणमेवोक्तमिति भावः। ननु परप्रयोजनं विना तदुक्तेः प्रयोजनांतराभावात् तत्साफल्यस्य ज्ञानद्वारैव वक्तव्यतया मन्वादिवाक्यवत्प्रामाण्यमेवेत्याशयेन पृच्छति। किमर्थमिति। मूले स्वयं नष्टाः स्वभावतो ज्ञानादिगुणविरुद्धधर्मवतः जगतः क्षयकारिणः मिथ्याज्ञानजननद्वारा तमोरूपार्थसंपादका इत्यर्थः। 'अथ च दैत्यहतास्तमसि स्थिरा नियतसंस्थितिः' इत्याद्युक्तेः। तथा च प्रयोजनभ्रमेण तैस्तथाभिधानेपि वस्तुतो निष्प्रयोजनत्वान्न तद्वाक्यप्रामाण्यमिति भावः। एतेन सत्यत्वे परमात्मनो अविशेष इत्यादिशंकानिरासस्य विश्वसत्यताव्यवस्थापनेऽनुपयुक्तत्वं अस्यापादनपरतया तन्निरासकतया कथंचिद्वशे विष्णोरित्यंशसार्थक्येपि तदुत्तरभागस्य प्रकृतेऽनुपयोग एव। प्रसंगात् स्मृतौ तदुक्तिसंभवेपि मूले तदुदाहरणमनुपयुक्तमेव। उपयोगसत्त्वे तट्टीकाप्ययुक्ता तथा व्याख्यानाकरणादिति चोद्यानवकाशः। यदत्र केनचित्प्रलपितं। यत्तु 'अद्भुतत्वादनिर्वाच्यं ब्रह्मचिन्त्यमेव च॥ अचिंत्यं तत एवैतदतर्क्यांज्ञेयमेव च॥ ऋगताविति धातोस्तु पूर्वावगतवत्सदा॥ स्थितब्रह्मतामित्युक्तमनृतं परिणामतः॥ प्रकृतिप्राकृतं प्रोक्तमसत्तदशुभत्वतः॥ असतां बुद्धिगम्यत्वादसत्यामिति चोच्यते॥ नियमेन बहिश्चित्तास्ते संतो ब्रह्मणि स्थिताः॥ विश्वं सत्यं वशे विष्णोर्नित्यमेव प्रवाहतः॥ न क्वाप्यनीदृशं विश्वं तत्तत्कालानुसारतः' इति व्यासस्मृतिबलात्पुराणादौ क्वचिज्जगति प्रयुक्तानामसदनृतानिर्वाच्यादिशब्दानामन्यार्थतया तादृशस्मृतिबलादपि जगतो नानिर्वाच्यत्वं। जगदसत्यवादिनामसुरत्वोक्तेश्चेति तदयुक्तं। 'न सती नासती माया माया नैवोभयात्मिका॥ अनिर्वाच्या' इति बृहन्नारदीये प्रयुक्तस्यानिर्वाच्यशब्दस्याद्भुतत्वादनिर्वाच्यतापरत्वे न सतीत्यादिपूर्वार्धेन तस्य सत्वादिनिषेधासंगतेः। तथा च मायाशब्दितजडप्रकृतेरनिर्वाच्यत्वावगतौ कथं जगतस्तद्वारणीयं। एवं ऋगतावित्यनुशिष्टाद्धातोर्निष्ठायां निष्पन्नस्य ऋतशब्दस्य पूर्वावस्थितज्ञानविषयार्थकत्वे कथं परिणामितामात्रेण प्रकृतेः सत्वाभावः। तस्यानाद्यनंतवत्त्वाभ्युपगमात्। सादित्वेपि पूर्वपूर्वतनज्ञानविषयत्वे किं बाधकं। यदि च भावनिष्ठाप्रत्ययस्तथापि ज्ञानरूपत्वाभावमात्रेण प्रकृत्यादेरनृतपदवाच्यत्वोपपत्तौ पूर्वावगतत्वाभिधानं तल्लाभाय निष्ठाप्रत्ययस्य भूतार्थकत्वानुसरणं चायुक्तं। नच मनोवृत्तिरूपज्ञानव्यावृत्तं तदिति वाच्यं। भूतत्वाभिधानमात्रेण तद्व्यावृत्तेः। अनादित्वस्य निष्ठावाच्यत्वात ब्रह्मरूपज्ञाने उक्तभूतत्वाभावाच्च। यत्तु विशेषानुक्त्या ऽनादिता ऽवगतामित्युक्तं भवतीति। तदसत्। शब्दप्रयोगस्यैवाबाधिततया भानस्य व्युत्पत्तिसिद्धतया विशेषानुक्त्यसिद्धेः। यत्काले हि क्तः प्रयुज्यते तदधिकरणक्षणवृत्तिध्वंसप्रतियोग्युत्पत्तिकत्वस्यैव तदर्थत्वात्। तथापि तदवगतामित्यादिस्थले जीवज्ञानव्यवच्छेदानुपपत्तेः। तथाच यथा कथंचिद्विवक्षितलाभो न मुख्यया वृत्त्येति स्थिते अविद्यादौ प्रयुक्तानामनृतादिपदानां रूढित्यागे हेत्वभावाच्चैतदयुक्तं। ब्रह्मणि प्रयुक्तस्य ऋतशब्दस्य क्वचिद्रूढित्यागो न दोषाय। अन्यथा 'ऋतं सत्यं परं ब्रह्म' 'तदेवर्तं तदु सत्यमाहुः' इत्यादौ सत्यादिपदानां पौनरुक्त्यापातात्। वस्तुतस्तु 'यो होताऽसोऽध्वर्युः' इत्या

¶ दाविव प्रथमपदानुरोधेन द्वितीयस्यैवार्थांतरकल्पना युक्ता । एतेन परिणामादनृतत्वं प्रकृत्यादीनामिति निरस्तं। एवं 'यद्यन्योऽस्ति परः कोपि मत्तः पार्थिवनंदन ॥ तदैषोऽहं भवानन्यो वक्तुमेवमपीष्यते ॥ यदा समस्तदेहेषु पुमानेको व्यवस्थितः ॥ तदा हि को भवान् कोहमित्येतद्विफलं वचः ॥ त्वं राजा शिबिका चेयं वयं वाहाः पुरस्सराः ॥ अयं च भवतो लोको न तदेतन्नृपोच्यते ॥' इत्यत्रासच्छब्दस्य परिणामिपरत्वे देहशिबिकादीनां परिणामित्वेपि ततो विलक्षणत्वेन सर्वानुभवसिद्धत्वेन त्वदभिमतजीवस्यैवाहं शब्दवाच्यस्यैव सत्वेनाहमस्मीति वक्तुं शक्यतया तादृशवचनवैफल्योक्तेरसंगत्यापत्तेः । मन्मते देहासत्वादहमस्मीति वक्तुमशक्यत्वादहंकारस्य चापि तादृशत्वान्निरुपाधिकात्मतत्वस्य चानहंकारत्वात्त्वग्रस्तवाप्यस्तीति सदृशमात्रस्य संदिग्धत्वात्सोहमस्मीति निर्देशायोग्यत्वं स्पष्टमेव। कर्तृत्वाद्युपलक्षितं शुद्धचैतन्यं तु सर्वानुगतामितरव्यावृत्तत्वमर्थविषयकप्रश्नप्रतिवचनविषयो न भवतीति त्वंपदेनापि शुद्धचैतन्यविवक्षायां मदन्योस्तीत्यादिकमपि त्वया कथमुपपादनीयं । मत्त इत्यत्रास्मच्छब्देन जीवपरिग्रहे तस्मादन्यस्य परमात्मनः सत्वेन तन्निषेधायोगात् । शास्त्रदृष्ट्यांतर्यामिपरिग्रहे स्वांतर्याम्यपेक्षयोत्कृष्टस्यान्यस्याभावेपि स्वस्यायमहमित्युपदेशे किं बाधकं । एतेन सच्छब्दस्य शुभवाचितामभ्युपेत्य प्रकृत्यादीनामसत्पदप्रतिपाद्यत्वोपपादनमपि निरस्तं । तस्यात्यंतमसंगतत्वात् । 'वृक्षाद्दारु ततश्चेयं शिविका तदधिष्ठिता॥' वृक्षसंज्ञा क्व याता स्यात् दारुसंज्ञाऽथवा नृप॥ इत्युपक्रम्य एवं 'छत्रशलाकानां पृथग्भावं विमृश्यतः ॥ क्व यातं छत्रमित्येष न्यायस्त्वयि तथा मयि॥' इत्यादिना कारणव्यतिरेकेण कार्यसत्तां निराकुर्वतः तस्य हेतूपपादकोत्तरसंदर्भेण विरोधात् । 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य अपागादग्नेरग्नित्वं त्रीणि रूपाणीत्येव सत्यं' इति श्रुत्युक्तरीत्यैवात्र भगवता पराशरेणोपबृंहितमिति नानुमेयश्रुतिमूलत्वमेतस्य परिणामविक्रियाशून्यस्य परमार्थोपपादनं च परिणामित्वादिना परिच्छिन्नत्वप्राप्त्या देहादेरसत्वोपपादनाय चासत्वं परिणामित्वं असत्पदार्थ इति बोधनाय प्रसिद्ध्यतिक्रमे हेत्वभावात् । अनेकार्थताया अन्याय्यत्वाच्च । एवमसद्बुद्धिगम्यत्वाज्जगतोऽसत्ववचनमित्यप्ययुक्तं लक्षणाद्यापत्तेः । उक्तरीत्या संदर्भविरोधाच्चेति । एवं ' भ्रांतिज्ञाने न पश्यंति जगद्रूपं कुयोगिनः ॥ ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ॥ अर्थस्वरूपं पश्यंतो भ्राम्यंते मोहसंप्लवे ॥ ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत् ॥ ज्ञानात्मकं प्रपश्यंति त्वद्रूपं परमेश्वर' इत्यादिस्मृतयो ह्यनिर्वाच्यतां जगतोऽनुगृण्हंतीत्यन्यत्र विस्तरः । एवमुपपत्तिरहितत्वान्न्यायानुगृहीतश्रुतितन्मूलकस्मृतिकोटिविरुद्धत्वाद्धातोरिति धातुव्याख्यानपरनिर्देशात् । अनृतं परिणामतः प्रकृतिप्राकृतं प्रोक्तमित्येकस्मिन्पद्यार्थे विवक्षितार्थनिबंधनाशक्तेः । पूर्वावगतवत्सदेत्यत्र सदा स्थितिरुक्ता भवतीति विवक्षितार्थमनुक्त्वा अवगतवदित्यनुपयुक्तवार्तानिर्देशात् । परमानंदरूपत्वेन ब्रह्मणः सत्पदार्थनिर्वाहकशुभत्वानुक्त्या प्रक्रमभंगान्न्यूनतापत्तेश्च । एवमसतां बुद्धिगम्यत्वादित्यादावप्युक्तदोषात् । पुनरस्य सत्पदस्याभिधानेन पौनरुक्त्यापाताच्चैतानि वचनानि श्रीकृष्णद्वैपायनप्रणयनच्छायारहितानि मध्वकुकविकल्पितान्येवेत्युक्तार्थे न्यायतया आगमतया च न निर्णायकानीति । तत्तुच्छं । न सत्तन्नासदुच्यत इत्युदाहृतश्रुतौ ब्रह्मपदस्य प्रकृत्याख्यतमउपलक्षकत्वस्य टीकोक्तस्य समर्थितत्वेन न सतीत्यादिना पृथिव्यादिशुद्धपंचमहाभूतभेदस्य नोभयात्मकेत्यनेनोपलक्षणपरेण नानाभूतविकृतभौतिकभेदस्यानिर्वाच्यपदार्थभूतसम्यग्ज्ञानशक्तिगोचरत्वाभावे तात्पर्याद्व्याहतत्वे

¶ ( टिप्पणी ) तत्र प्रथमप्राप्तहोतृपदानुरोधादध्वर्युपदस्य तत्कार्यकर्तरि लक्षणाश्रितेति भावः ।

वा हेतुत्वेन पूर्वार्धे उक्तत्वेन तद्वचनस्योक्तबाधकत्वायोगात्प्रत्युतानुगुण्यस्यैव सत्वाच्च । नच नपुंसकलिंगसदसत्पदे भूतवाचिनीति वाच्यं । सूतं सदिति नपुंसकांतोपादानस्यातंत्रत्वेन प्रातिपदिकमात्रस्य शक्तिप्रदर्शनपरत्वात् । अन्यथा न सन् न चासन्निति पुल्लिंगांतसदसत्पदघटितवाक्यस्य ब्रह्मणि गतिप्रदर्शकत्वाभावापत्तेः । प्रत्युत तवैवेदं वचनमननुगुणं । यतो न सतीत्यत्र सच्छब्दस्य परमार्थपरत्वं नासतीत्यत्रासच्छब्दस्य परमात्मभिन्नपरत्वमेव वाच्यं । तथाच सद्भिन्ने सद्भेदावच्छिन्नप्रतियोगिताकभेदबोधतात्पर्यकवाक्यव्याहत्या बोधमेव न जनयेत् । नन्वसत्पदं सत्तादात्म्याभाववत्परं कालसंबंधाभाववत्परं वेति चेत् । तथात्वे स्वारासिकलक्षणाप्रसंगात् । नहि सत्पदं सत्प्रतियोगिकत्वोपलक्षिततादात्म्यवन्मुख्यवाचकं तस्य शक्यतावच्छेदकत्वे गौरवात् । तत्पर्यायसत्यशब्दस्यापि तथात्वापातेन सत्यं ज्ञानमित्यादौ सदेव सोम्येत्यादौ तयोर्मुख्यार्थत्वानुरोधेनोक्ततादात्म्यार्थकत्वप्राप्त्या तेन जगत इव ब्रह्मणोपि पारमार्थिकत्वस्यासिद्धिप्रसंगाच्च । एतेन कालसंबंधार्थकत्वमपि निरस्तं । न चाबाध्यार्थकत्वमपि तस्यांगीक्रियत इति वाच्यं । अनेकार्थताया अन्याय्यत्वात् । पुनरुक्तब्रह्मवाक्येन तत्सत्यत्वासिद्धिप्रसंगश्च । विनिगमकाभावेन निर्णायकाभावात् । एवं अलीकस्य शाब्दप्रतीतिविषयत्वाभावस्य त्वया व्यवस्थापितत्वेन सत्तादात्म्याभाववत्वेन कालसंबंधाभाववत्वेन चासत्पदाबोध्यत्वात् । व्यधिकरणप्रकारकबोधजनकतायाः एवोक्तवाक्यस्याश्रयणीयतया नदीतीरे पंच फलानीति वाक्यवत् स्फुटमप्रामाण्यप्रसंगश्च । न सतीति भागस्य सत्तादात्म्यवतीत्यर्थांगीकारे स्वाभिप्रायनिर्वाहायैवास्य जघन्यलक्षणाप्रसक्तिः । तथात्वे सत्यं ज्ञानमित्यादेरपि शून्यवाद्यभिप्रायानुसारेण ब्रह्मासत्वलाक्षणिकत्वापत्तिः किंच भवत्पक्षे नैवोभयात्मिकेत्यस्य सर्वथाऽसंगतिः। सदसदुभयात्मकवस्तुन एवाप्रसिद्धतया तदात्मकत्वाप्रसक्त्या तद्भेदकथनायोगात् । नच घटादिकं देशकालव्यवस्थया सदसदुभयात्मकं प्रसिद्धमिति वाच्यं । पूर्वं सदसदादिपदेन परमार्थसत्तदन्ययोरेव प्रसक्त्याऽत्रोभयपदेन किंचित्कालदेशसंबंधि किंचिद्देशकालासंबंधिरूपसदसदुभयस्य प्रसक्त्यभावेन ग्रहणायोगात् । नञ्समभिव्याहारेण सत्सामान्यभेदस्यैव लाभेन सदसदुभयभेदस्यापि लाभेन पौनरुक्त्यापाताच्च। स्वोक्तस्य संकुचितार्थकत्वभ्रमनिरासाय तदुक्तिरिति तु न सत्। सत्पदस्य शुद्धसदादिलाक्षणिकत्वं विना तथार्थबोधकत्वायोगेन व्युत्पन्नानां लक्षणाग्रहे बीजाभावात् । अव्युत्पन्नानां तु नैवोभयात्मिकेत्युक्तावपि उभयपदस्य यत्किंचिदुभयलाक्षणिकत्वग्रहसंभवेन तद्भ्रांतिनिरासोपायाभावात् । एवं किंत्वनिर्वाच्येत्यस्य सदसद्भिलक्षणार्थकत्वे पूर्वार्धेन पौनरुक्त्यं यदि निर्वक्तुमशक्येत्यर्थः । तदा मिथ्यात्वादिना निर्वक्तव्यत्वात्सर्वरूपैर्निर्वक्तुमशक्यत्वेन सदसत्वाभ्यामित्यस्याध्याहारप्रसंगः । मन्मतेनिरित्यनेनैव सम्यक्त्वलाभः । आपिच पुनर्मायापदं भवन्मते व्यर्थं अनुयोगिसमर्पणस्य एकेनैव सिद्धेः। नञ्भेदात्पुनस्तदुक्तिरिति न वाच्यं । तथात्वे नञ्त्रयसत्त्वेन तृतीयमायापदप्रयोगप्रसंगो अर्धजरतीयानुपपत्तेः । नैवोभयात्मिकेत्यत्रैवकारस्याधिक्याच्च । न चैतद्दोषद्वयं भवतोपि समानमिति वाच्यं । माया न सती स्वतः कार्यरूपा न भवति शुभसंपादकतया शुभरूपा च न भवति नासती कारणरूपा च न भवति बंधकतया शुभरूपा च न भवति किंतु मायाना मायोपपदादंतर्णीतणिजर्थादनतेः कर्तरि किपि मायान् मायाप्रवर्तको हरिः तज्जलानित्यत्र जलानिति शब्दवदयं शब्दः । तेन श्रीहरिणैव कारणरूपा भवति परिणतत्वेन कार्यरूपा च भवति । एवं केषांचित्सत्वगुणप्रचुरदेहादि-

संपादकताद्वारा मोक्षोपयोगित्वाच्छुभरूपा केषांचिन्मिथ्याज्ञानप्रापकशरीरारंभकतया नित्यनिरयप्रापकतयाऽशुभरूपा अत एवानिर्वाच्या एवमेवेति व्यवस्थापितत्वेन वक्तुमशक्ये त्यर्थांतरेप्यस्य वाक्यस्य तात्पर्याभ्युपगमेन सर्वस्यापि सार्थक्यात् । न च वाक्यभेददोषः । योजनाभेदेनार्थद्वयबोधकत्वेन तस्य भूषणत्वात् । अत एव महाभाष्येऽन्निपरापि चत्वारिशृंगेति ऋक् शब्दशास्त्रप्रशंसापरत्वेनापि व्याख्याता॥नच स्वतः पदाध्याहारदोषः। तैत्तरीयारण्यकेपि पठिते अंधो मणिमविंदतेतिवाक्यैंधादिपदानि यथा स्वतश्चक्षुरंगुलिहीनादिपराणि मणिमविंदत आवयत् असश्चतेत्यादिपदसमभिव्याहारात् । तद्वदुभयात्मकत्वबोधकपदसमभिव्याहारात्तादृशार्थस्य निरूढव्यवहारासिद्धत्वात् । न चोदक्षरता व्यक्तत्वाव्यक्तत्वाभ्यां सदसत्पदयोः कार्यकारणवाचकताया आकरे उक्तत्वात् । शुभाशुभवाचकतायाश्च सर्वसिद्धत्वात् । नच मायायाः सदसदुभयात्मकत्वमप्रामाणिकं।'सदसद्रूपया चासौ गुणमय्या गुणो विभुः'इति भागवते । 'अव्यक्तं कारणं यत्तत्प्रधानमृषिसत्तमैः प्रोच्यते प्रकृतिः सूक्ष्मा नित्यं सदसदात्मिका॥'इति विष्णुपुराणे चोभयात्मकत्वोक्तेः।तस्मान्मायाया अनिर्वाच्यत्वं न सतीत्यादिवाक्येनोच्यत इत्येतदसंगतमेव । वस्तुतस्तु अयं श्लोको नारदीये नोपलभ्यते एव। परंतु स्कांदवचनं।तत्रापि किं त्वनिर्वाच्येति नोत्तरार्धादिभागः। 'अनिर्वाच्या यया सर्वभेदाभासव्यवस्थितिः' इत्युत्तरार्धपाठ इति केचित् । तत्रानिर्वाच्येत्येतावत्पर्यंतमुक्तार्थं ।ययेत्यस्य भिद्यंत इति भेदाः परस्परभिन्नाः आभासाः आ सम्यक् प्रकाश्यंते प्रमाविषयीभूताः घटादिपदार्थास्तेषां व्यवस्थितिरुत्पत्त्यादिव्यवस्थितिर्यन्मूलेत्यर्थः। पराभिमतार्थे अनाभासभेदाप्रसिद्ध्याऽऽभासेति व्यर्थं । मन्मते प्रमितत्वेन सत्यत्वात्तदुत्पत्तौ कारणापेक्षावश्यकीति ज्ञापनं तत्प्रयोजनं । मायापदस्य भगवत्प्रज्ञापरत्वे नैव पूर्वार्धयोजनायां भेदस्याभासः सम्यक् ज्ञानं प्रमेति यावत् । तस्या व्यवस्थितिः विशेषेणावस्थानं मुक्तावपि स्थितिरित्यर्थः। भेदरक्षकत्वेन विषयबाधानिर्वाहकत्वादिति व्याख्येयं। परमेश्वरेण ज्ञातत्वाद्रक्षितत्वाच्च तद्द्वैतं स्यात्भ्रांतिकल्पितमित्यर्थः । इति मायामात्रपदस्य भगवत्पादैर्व्याख्यातत्वादिति ध्येयं । भेदबुद्धिप्रदायिनीति पाठेप्ययमेवार्थः। प्रेत्युपसर्गबलान्मुक्तावपि भेदधीप्रापकत्वं पारमेश्वरप्रज्ञाया उच्यत इत्याद्यवधेयं । यदपि ऋतपदेन पूर्वकालिकज्ञानविषयतामात्रलाभात् न तेन जडादिव्यावृत्तिलाभ इति । यथा कथंचिदेव तल्लाभे न मुख्यवृत्तिरिति । तदप्यसत्॥'सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः।ततस्स वासुदेवेति विद्वद्भिः परिपठ्यते ।' इति विष्णुपुराणोक्तवासुदेवपदप्रवृत्तिनिमित्तवासकर्तृत्ववासाधिकरणत्वस्य गतिकर्मत्वरूपदेवपदार्थतावच्छेदकत्वस्य च घटादावपि सत्वेन पूर्वोक्तानंतपदार्थतावच्छेदकनाशराहित्यस्य जीवादिसाधारण्येन पयोधरत्वादेर्घटादिसाधारण्येन च घटादावपि वासुदेवानंतपयोधरादिपदप्रयोगप्रसंगात् । नच 'वर्णागमो वर्णविपर्ययश्च तथा परौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पंचविधं निरुक्तं' इत्युक्तेः धातोर्निरतिशयतया संबंधात्सर्वभूतेषु स्वातंत्र्येण नियामकतया वा सकर्तरि सर्वभूतानां निरतिशयाधारभूते धातोरित्यस्योपलक्षणत्वेनानंतपदार्थतावच्छेदकस्य गुणघटितत्वे अत्यंतातिशयलाभात्तादृशगुणाकरे हरौ वासुदेवानंतादिशब्दानां मुख्यवृत्तिः। सर्वजीवनप्रदपयोधारके मेघ एव तच्छब्दस्य मुख्यवृत्तिरिति वाच्यं । तर्हि ऋतशब्दस्यापि पूर्वोक्तरीत्या ब्रह्ममात्रमुख्यवृत्तौ कुतस्ते प्रद्वेषः। ऋतशब्दस्य भावनिष्ठांतत्व मभ्युपेत्य यत्दूषणदानं तत्पूर्वावगतवदिति ज्ञानविषय एव बहुशः प्रयुज्यमानावगतशब्दघटितमूलविरोधेन शंकितुमशक्यत्वादनुक्तोपालंभनरूपत्वाच्चायुक्तमिति स्फुटमेव।

यत्तु विशेषानुक्त्यानादित इत्यारभ्य तदर्थत्वादित्यंतं तत्तुच्छं । विशेषानुक्त्येत्यस्यपूर्वोक्तार्थकत्वेन त्वद्भ्रांतिगोचरार्थदूषणस्याकिंचित्करत्वात् । यदपि तथाच यथाकथंचिदित्यारभ्य पौनरुक्त्यापातादित्यंतं तदप्यसंगतं । ऋतशब्दस्य मुख्यवृत्तैवोपपादितत्वेन यथाकथंचिद्विवक्षितार्थलाभाभावात् । अविद्यादौ प्रयुक्तानृतादिपदानां रूढित्याग इत्यप्यसत् । अविद्यादावेव त्वदुक्तमिथ्यात्वं विहाय परिणामित्वादिना स्मृत्युक्तरूढेर्बलवत्वात् । प्रकृतिप्राकृतं प्रोक्तमिति प्रशब्देनबलवद्विद्वद्रूढेः प्रदर्शितत्वात् । ऋतं सत्यं परं ब्रह्मेति आदौ ऋतशब्दस्योक्तार्थत्वेन ब्रह्मशब्दस्येव तत्र मुख्यवृत्तेरेव सत्वेन मुख्यवृत्त्यनाश्रयणात् । ऋतं च सत्यं चाभीत्धात ऋतं च स्वाध्यायप्रवचने च सत्यं च स्वाध्याय प्रवचने इत्यादौ शतशो ऋतसत्यादिपदानामन्यत्रापि प्रयोगेण ऋतपदस्य परमार्थरूढिरित्यस्यासिद्धेश्च कोशादीनामपि बहुप्रयोगानुसारित्वात् । एतेन वस्तुत इत्यपि परास्तं । स्वत एव तयोरर्थभेदसत्वात् । कृष्णलं श्रपयेदिति विध्युद्देशगतस्यापि धातोः प्रथमं प्राप्तस्यापि सुवर्णकृष्णलमिति चरमवाक्यानुसारेणोष्णीकरणरूपामुख्यार्थताया अंगीकृतत्वेन त्वदुक्तनियमासिद्धेश्च । एतेनैतेनेत्यादिनिरस्तामित्यंतं निरस्तं । यदपि एवमित्यादि विष्णुपुराणादिवचनोदाहरणपूर्वकं दूषणं तदपि न लग्नं इत्यत्रासच्छब्दस्येत्यस्यासंगतेः । एतच्छ्लोकद्वयेऽसच्छब्दाभावात् । अन्यत्र यत्र कुत्रचिद्विद्यमानत्यासच्छब्दस्यैव परिणामिपरत्वस्य प्रकृतपुराणवाक्यासंगतौ बीजत्वाभावात् । अनृतपदस्यैव परिणामिपरताया उक्तत्वेनापरिणामिपरताया अनुक्तत्वाच्च । अनृतपदस्य परिणामिपरत्वे सच्छब्दस्यापि तत्पर्यायस्य तथास्वरूपाशुभत्वावच्छिन्नपरत्वं प्राप्तमेव । तथा च जगति प्रयुक्तानृतासदादिपदानां परिणाम्यादिपरत्वे जगतः असत्वासिध्या वक्ष्यमाणासंगतिरिति क्लेशेन कथंचिदेतदुक्तिसंबंधेपि जगतः सत्यत्वेनैतद्विष्णुपुराणवाक्यासंगतिः । तथाहि विष्णुपुराणे द्वितीयांशस्थत्रयोदशाध्यायस्थमिदं वाक्यं तत्र पूर्वसंदर्भे भरतरूपावधूतं प्रति राज्ञोक्तमुपहासपूर्वकं युवा पीवा दृश्यसे अतः किमध्वगमनमात्रेण श्रांतोसीति तदुत्तरत्वेन भरतेनोक्तं न मयि श्रांतत्वादिकं पीनत्वादिकं वास्तीति स्वस्मिन् शरीराभिमानाभावविवक्षयाऽवधूतोक्तमबुध्वा लोकदर्शनमनुसरता राज्ञा प्रत्यक्षं दृश्यसे इत्यादि ग्रंथेन तदुक्तेः प्रत्यक्षबाधेऽभिहिते आत्मनः शरीरान्यत्वाच्छरीरे उपलभ्यमानधर्माणां पीवरत्वादीनामात्मनि प्रत्यक्षसिद्धत्वाभिधानं तवासंगतमितिभावेन प्रत्यक्षं भवता भूपेत्यादिश्लोकैः पादोपरिजंघादिस्थितिक्रमेण शरीरोपर्येव विकारादिस्थितिं आत्मनश्च स्वभावतः प्रकृतिविलक्षणत्वं गुणत्रयानात्मकत्वं च प्रदर्श्य तदभिमानाभावात्स्वस्य श्रांत्यभावोपि दर्शितः पराशरउवाचेत्यंतैः श्लोकैः । तत्प्रकरणे एते श्लोकाः 'कर्मवश्या गुणाश्चैते सत्वाद्याः पृथिवीपते । अविद्यासंचितं कर्म तच्चाशेषेषु जंतुषु ॥ आत्मा शुद्धोक्षरः शांतो निर्गुणः प्रकृतेः परः । प्रवृध्यपचयौ नास्य एकस्याखिलजंतुषु ॥ यदा नोपचयस्तस्य न चैवापचयो नृप । तदा पीवानसीति त्वं कथा युक्त्या त्वयेरितं ॥' इति । तेषामयं भावः । प्रथमश्लोके सर्वप्राणिनां कर्मबद्धत्वेभिहिते शंका भवति तर्ह्येको देवः सर्वभूतेषु गूढः न कर्मणा वर्धते नो कनीयानित्यादिश्रुतिविरोधः । सर्वत्र विद्यमानात्मन एकत्वकर्माबद्धत्वश्रवणादित्यत आह । आत्मेति । आत्मा परमात्मा तच्छब्दस्य तत्रैव मुख्यत्वात् । आत्मा स्वामी वा सर्वजीवनियामकत्वेन हृदयस्थित इत्यर्थः । अखिलजंतुष्वित्यनेन जीवानां नियम्यतया ग्रहणात् सर्वजीवेषु एकस्य जीवस्य नियामकतया स्थित्ययोगात प्रकृतिपरत्वालिंगाच्च । अत्रात्मपदं परमात्मपरमेव । न चाखिलजंतुष्वित्यस्य सप्राणदेहेष्वित्यर्थो युक्तः । पूर्वश्लोके तत्पदेन जीवानामेव

कर्मबन्धत्वलिंगेन प्रक्रांतत्वात्तत्परित्यागे प्रकृतहानापत्तेः। जंतुशब्दस्य प्राणभृत्स्वेव प्रयोगेण प्रकृते तत्परित्यागे प्रसिद्ध्यर्थत्यागापत्तेश्च। तथाच शंकितश्रुतशः परमात्मपरा इति भावः। यदेति। तस्य तत्प्रतिबिंबभूतस्य जीवस्य यदा यस्मात् नोपचयः नैवापचयः स्वरूपत उपचयापचयाभाव इत्यर्थः। 'अल्पं तेजस्तथैवाल्पं जीवरूपं हि संसृतौ॥ तदेव सुमहत्तेजः करोतीशो विमुक्तिगं॥' इति वचनेन मुक्तौ स्वरूपोन्नाहस्य विद्यमानत्वेन संसारे तदभावः अपचयस्य तु सर्वथा तदभाव इत्याशयेन न चैवापचय इत्युक्तं। नित्यः सर्वगत स्थाणुरित्यादेर्नित्यसर्वगतेश्वरप्रतिबिंबत्वेन जीवविषयत्वेन गीताभाष्ये व्याख्यानात्। एव मुत्तरत्र। भृत्यश्चाहं प्रतिबिंबेन सोऽस्मीत्यादिश्रुत्युदाहरणेन प्रतिबिंबत्वस्य दर्शितत्वाच्च। तस्येत्यस्योक्तव्याख्यानं नावमत्यहं। युक्ताश्च बिंबधर्माः प्रतिबिंबे सति चाविरोध इत्यनेन द्वितीयाध्याये गीताभाष्य एव प्रमाणांतराविरुद्धबिंबधर्माणां प्रतिबिंबे उपपादितत्वादीश्वरप्रतिबिंबत्वयुक्त्या स्वरूपतो वृद्ध्याद्यभावोपपादनाय प्रतिबिंबरूपाभेदबोधकतत्पदेन जीवनिर्देशः कृतः। 'यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि नो इतराणि' इत्यादौ वेदे लोके 'हरशिरासि शिरांसि यानि रेजुः शिव शिव तानि लुठंति गृध्रपादैः' इत्यत्रैवं ये पूर्वभुक्ताः शालयः तानेवेदानीं भोक्ष्य इत्यादौ पूर्वोक्तार्थसादृश्यरूपाभेदमात्रतात्पर्येण तच्छब्दप्रयोगसत्वात्प्रतिबिंबस्यापि सादृश्यगर्भितत्वान्न लोकवेदातिक्रम इत्यवधेयं। आत्मेत्ये तच्छ्लोकस्य जीवपरत्वेन योजनायां अखिलजंतुषु स्वकीयकर्मनिर्मितनानादेहेषु एकस्य एकरूपस्य शरीरपरिणामादिरहितस्येत्यर्थः। शरीरपरिमाणत्वेऽनित्यत्वापत्त्या पूर्वार्जितकर्मभोगाद्यभावप्रसंगेन कृतहानाकृताभ्यागमप्रसंगसूचनाय पूर्वश्लोके अविद्यासंचितं कर्मेत्याद्युक्तं। शिष्टं सुगममिति। ततो राजा अयं ज्ञानीति मत्वा तत्प्रसादेच्छया तत्पादग्रहणपूर्वकं त्वं कृत्रिमवेषेण संचरसि त्वदागमनकारणमपि न जानामि अतस्त्वत्स्वरूपाज्ञानप्रयुक्तमदपराधं क्षमस्वेत्याशयेन ' कथ्यतां को भवानत्र जाल्मरूपधरास्थित ॥' इत्यादिग्रंथेन पप्रच्छ। तस्मिन् राज्ञि करुणया अर्थविशेषबोधौपयिकजिज्ञासाजननाय प्रश्नद्वयोत्तरं स्फुटमेवेत्यभिधाय मदीयाकृत्रिमरूपं त्वदाद्यकृत्रिमरूपापेक्षया यद्यपि व्यावृत्तं तथापि तादृशधर्मव्यावर्तकधर्मवत्वेनेदानीं त्वां प्रति मया निरूपयितुमशक्यं। मया निरूपणे कृतेऽपि तवानुत्पन्नज्ञानत्वेन त्वद्बुद्ध्यावनारोहात्। यत्त्वस्वाभाविकमात्मन्यपरायत्तस्वामित्वाभिमानेन भासमान तान्निश्चयास्त्विदानीं त्वया ज्ञातरूपनिश्चयतुल्यत्वादनावश्यक इत्याशयेन कोहमित्येतद्वक्तुं भूप न शक्यत इति मुनिरुक्तवानित्येतमर्थं ब्राह्मण उवाचेत्यादिनोक्तं। तदनंतरं यो धर्मो व्यावर्तकतया वर्तते तद्वत्तया प्रतिपादने किं बाधकमनृतवादित्वाभावात्। सोहमित्यादि शब्दोच्चारणस्यापि दोषत्वाभावादित्यभिप्रेत्य शरीरात्मनोः स्पष्टविवेकग्रहशून्येन राज्ञा योस्ति सोहमित्यादिनाऽभिहिते स्वाभिप्रायमाविष्कर्तुं शरीरेंद्रियादितादात्म्यमात्मनो निराकृत्य बहिस्त्वया परिदृश्यमानसर्वधर्मा नात्मीया अतस्तद्वत्तया निरूपणं न कर्तव्यमित्युक्तं। 'पिंडः पृथग्यतः पुंसः शिरःपाण्यादिलक्षणः। ततोऽहमिति कुत्रैतां संज्ञां राजन् करोम्यहं॥' इत्यंतेन। अहंशब्दप्रवृत्तिनिमित्ताहेयत्वस्यैतेषु कथंचिदप्यभावात्तच्छब्देनैतद्विशिष्टमत्स्वरूपप्रतिपादनमयुक्तमिति भावः। तदुत्तरत्र यद्यन्योस्तीत्यादयः श्लोकास्तेषामियं गमनिका। तर्हि विष्टिग्रहणवेलायां यादृशजात्यादिमत्वेन भवान् ज्ञातः तज्जातीयजीवापेक्षया तव वैलक्षण्यमात्मसंबंधि स्वाभाविकधर्मैरेव निरूपयेत्यभिप्रायवंतं प्रत्याह। 'यद्यन्योऽस्ति परः कोपि मत्तः पार्थिव सत्तम॥ तदैषोहमहं चान्यो वक्तुमेवमपीष्यते ॥ यदा समस्तदेहेषु पुमानेको

व्यवस्थितः । तदा हि को भवान्सोहमित्येतद्विफलं वचः ॥' अस्माद्वोरन्य इत्यादाविवान्य पदं सजातीयान्यपरं । तथा चैवमपि शरीरधर्मेण निरूपयितुमशक्यत्वेपि मत्तोन्यः परापर दर्शित्वादिना मत्सजातीयः मत्तः परो ज्ञानादिनोत्तमोऽपि वा । अथवा मत्तोन्यः परावरद-र्शित्वेन लोकश्रेष्ठो यद्यस्ति निकटे यद्यस्ति तदाहमेव एतादृशः स्वाभाविकधर्मोपेतः अयं चान्यः अन्यधर्मोपेत इति वक्तुमिष्यते तथेच्छा भवति तज्ज्ञानस्य तस्य सद्भावेपि मद्वाक्य-श्रवणादिना हर्षादिसंभवात्। तत्संवादेन मद्वाक्ये त्वादृशानां प्रामाण्यनिश्चयोदयसंभवाच्च। यदा समस्तदेहेषु समीपस्थितत्वदादिसर्वदेहेषु पुमान् जीवः जात्येकवचनं । एकः एक-विधः आत्मानात्मविवेकज्ञानशून्यत्वरूपैकधर्मोपेत इति यावत् । तदा को भवानिति त्वत्प्र-श्नवाक्यं सोहमित्येतदुत्तरवाक्यं च विफलमेव । उत्तरवाक्यस्य निश्चितप्रामाण्यार्थक-बोधानुपधायकत्वेन वैफल्ये प्रश्नवाक्यस्य वैफल्यं सहजत एव प्राप्तमिति भावः। सोह-मित्यस्य जीवांतरव्यावृत्तौ तादृशस्वाभाविकधर्मविशिष्टोहमित्यर्थः। अथवा यद्यन्योस्तीत्या देरियं गमनिका । ननु तर्हि शरीरतादात्म्यमात्मनि नास्ति तर्हि शरीररूपोपाधिकृतभेदेनै-वात्मनि भेदस्तवाभिसंहितः किं नेत्याह। यद्यन्य इति। परः परदेहे प्रतीयमानः अन्यः स्वभाव तोन्यः। यद्वा परोन्यः मुख्यभेदविशिष्टः स्वाभाविकत्वस्यैव मुख्यत्वात् तल्लाभः परो धार्मिक इत्यादौ धर्मे पारस्यलाभवत्। तदेत्यादेरुक्त एवार्थः । विफलत्वं प्रश्नोत्तरयोः प्रमाया अनि-र्वाहकतया बोध्यं । अथवा पूर्वग्रंथे ब्राह्मण उवाचेत्यनंतरं श्रूयतां कोहमित्येतद्वक्तुं भूप न शक्यत इति श्लोकः श्रूयते । यद्यपि तत्र यो भवान् तत्कथ्यतामिति राजप्रश्नं प्रति सोह-मित्यस्यैवोत्तरत्वेन तादृशानुपूर्व्या अशक्यता वक्तव्या । ननु कोहमित्यानुपूर्व्याः। तस्याः किं शब्दघटितत्वेन प्रश्नरूपत्वात् । तथापि किंशब्दः छांदसत्वात्तच्छब्दार्थः । एवमुत्तरत्रापि 'यत्त्वेतद्भवता प्रोक्तं कोहमित्येतदात्मनः॥ वक्तुं न शक्यते श्रोतुं तन्ममेच्छाप्रवर्तते॥ योस्ति सोहमिति ब्रह्मन् कथं वक्तुं न शक्यते ॥ आत्मन्येष न दोषाय शब्दोहमिति यो द्विज ॥' इति राजसंबंधिवाक्यघटकानुवाद्यभागस्थकिंशब्दस्याप्ययमेवार्थः । अत एव सोहमिति राज्ञा तद्विवरणमेव कृतं। इतरव्यावर्तकधर्मवत्तया मत्स्वरूपप्रतिपादनमशक्यमिति भावः। यद्वा कोहमित्यस्याहं को वा कीदृशव्यावर्तकधर्माद्युपेतो वा इति हेतोरेतदिदं विविच्य वक्तुं न शक्यते । मत्स्वरूपस्यैव परमेश्वरेण प्रकृत्याविद्भिर्बध्दत्वेन मया सम्यग्गृहीतुमशक्य त्वादिति भावः । तथा च व्याख्यानद्वयेपि स्वस्वरूपस्य सम्यगज्ञानात्सम्यग्वक्तुमशक्यत्वं फलितं। सम्यक् तदभिप्रायं ज्ञातुकामेन राज्ञा ऽभिहितं यो धर्मोऽनुभवसिध्दो वर्तते तत्पुर-स्कारेण सोहमिति वक्तव्यं । न ह्यहंशब्दप्रयोग एव दोषः । अतः कथमेतदित्याशयेन सोऽस्ति सोहमित्याद्यभिहितं। ततः ब्राह्मण उवाच 'शब्दोहमिति दोषाय नात्मन्येष तथैव तत् ॥ अनात्मन्यात्मविज्ञानं शब्दो वा भ्रांतिलक्षणः॥ जिव्हा ब्रवीत्यहमिति दंतौष्ठं तालुकं नृप ॥ एते नाहंयतः सर्वे वाङ्निष्पादनहेतवः॥ किं हेतुभिर्वदत्येषा वागेवाहमिति स्वयं ॥ तथापि वाक्। नाहमेतद्वक्तुमित्थं न युज्यते॥ पिंडः पृथग्यतः पुंसः शिरः पाण्यादिलक्षणः॥ ततोहमिति कुत्रैतां संज्ञां राजन्करोम्यहं ॥ यद्यन्योस्ति परः कोऽपि' इत्यादिसमग्राध्यायो भरतवाक्यरूपः।तस्यायमभिप्रायः। अनुभवसिध्दाः धर्माः शरीरात्माविवेकस्य स्फुटतरज्ञाना भावेन कृष्णोहमिति व्यवहारविषयीभूताः केचन शरीरधर्माः अहं कर्तेत्यादिप्रतीतिसिध्दाः शरीरादिकं प्रति स्वातंत्र्यापरायत्तकर्तृत्वादयस्ते सर्वेपि न मदीयाः। ये मदसाधारणा न ते इदानीं मदनुभवसिध्दाः परमेश्वरशक्त्यावृतत्वात्। अतः कथं तत्पुरस्कारेण वक्ष्यामीति। अत एव त्वं राजा शिबिकेत्यादिसमस्तोत्तरप्रबंधेन राजत्वभृत्यत्वादिनिखिलधर्माणां स्वभावत

आत्मीयत्वाभावं सविस्तरमुपपाद्याध्यायांते तदुपसंहरति। 'एवं व्यवस्थिते तत्वे मयाहमिति भाषितं ॥पृथक्करणनिष्पाद्यं शक्यते नृप ते कथं॥' इति। तथा चेत्थं योजना। अनात्मनि परमात्मभिन्ने जीवे आत्मविज्ञानं परमात्मधर्मज्ञानं एवमनात्मनि जडे शरीरादौ आत्मविज्ञानं शब्दो वा तत्प्रतिपादकशब्दो वा भ्रांतिलक्षणः भ्रांतेर्लक्षणं यत्र सः। शब्देऽपिज्ञानद्वारा भ्रांतिलक्षणमन्यथावगाहित्वं वर्तत एव। तत्र शरीरतदिंद्रियादीनां आत्मभिन्नत्वं सयुक्तिकमुपपाद्य तत्राहंशब्दार्थत्वाभावमाह। जिव्हेत्यादि। एतेहं अहंशब्दार्थाः न भवंतीत्यर्थः। वागेव यदि स्वयमहमिति यदि वाक् मुख्यतया ऽहंशब्दार्थभूता कर्त्री तदा किं हेतुभिर्वदति किंकरणैर्वदति अस्या एव कर्तृत्वे करणांतराभावादिति भावः। तथापि एवं भेदसत्वेपि वाङ्नाहमेतदित्थं वक्तुं न युज्यते न शक्यते स्फुटतरभेदज्ञानस्य सर्वसाधारण्येनाभावादिति भावः। एवं शरीरधर्मवति आत्मत्वनिरूपणं अहंपदेन कर्तुं न शक्यमित्युपपाद्य स्वातंत्र्येण कर्तृत्वादिविशिष्टतया प्रतीयमानस्य तादृशधर्मविशिष्ठस्याहंपदार्थत्वं त्वया निरूपणीयमित्याशंक्य तेषां परमात्मधर्माणां जीवे भ्रांत्या प्रतीयमानत्वेपि तद्विशिष्टस्य नाहंपदबोध्यजीवाभेद इत्याशयेन शरीरे नियामकतया जीवातिरिक्तः किमर्थमसांवगीकार्य इत्यतो विपक्षे बाधकमुखेन तं साधयति। यद्येति। एवमपि शरीरादिभिन्नस्य जीवस्य शरीराधिष्ठातृत्वेपि अन्यः जीवादिलक्षणः मत्तः इत्युपलक्षणं। अस्मदाद्यपेक्षया परः प्रेरणा स्वातंत्र्यादिना उत्तमः कोपि इदानीं भवदादिभिरनिर्धारितस्वरूपो यद्यस्ति तदा तदैवैषोहं अयं चान्य इति वक्तुमिष्यते। सर्ववचनानां साक्षात्परंपरया वा परमात्मज्ञानोपयोगितया साफल्येन ज्ञानिनां तत्रेच्छोदेतीत्यर्थः। यदा समस्तदेहेषु एकः पुमान् प्रधानपुरुषः परमात्मा अव्यवस्थितः नियामकतया न स्थितस्तदा परतंत्रस्वरूपज्ञानमात्रेणैतावत्कालमनुत्पन्नस्योत्तरोत्पत्तौ बीजाभावात्। परतंत्रस्य ज्ञातस्य फलदाने सामर्थ्याभावात्को भवानिति त्वदीयप्रश्नवाक्यस्य सोहमिति मदीयोत्तरवाक्यस्य परमफलापर्यवसायित्वेन वैयर्थ्यमेवेति भावः। अथवा सर्वनियामकस्य स्वतंत्रस्य सत्वे 'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च॥ यदनुग्रहतः संति न संति यदुपेक्षया॥' 'नित्यं नित्यात्मना यतः नियामयति' इत्यादिप्रमाणानुसारेण तन्नियततया सर्वव्यवस्थासंभवात्। लक्षणाविशेषणवत्तया स्वस्वरूपान्यस्वरूपप्रतिपादकवचनानां प्रामाण्यसंभवात्तथा वक्तुमिच्छा स्यात्। अन्यथा 'अनवस्थितेरसंभवाच्च' इति न्यायेन कस्यापि नियामकत्वाभावापातेन सर्वव्यवस्थाया असिध्या सर्वस्याकस्मिकत्वापत्त्या इतरव्यावर्तकस्वस्वरूपलक्षणप्रश्नप्रतिवचनादिप्रमात्मकफलानिर्वाहकमेव स्यात्। कथितव्यावर्तकधर्मस्य कालांतरे अकस्माद्यावृत्तिः प्रतियोगिन्यपि संभवेन व्यावृत्तेरपि नाशादिसंभवेन तादृशवचनप्रामाण्यानिर्वाहादिति भावः। अस्तु कश्चन परमात्मा तथापि मम राजत्वादिवत्स्वशरीरादिस्वामित्वं स्वनिष्ठमपरायत्तमेव कुतो न स्यादित्याशंक्य तदप्यस्वाभाविकमेवेत्याह। 'त्वं राजा शिबिका चेयं वयं वाहाः पुरःसराः॥ अयं तु भवतो लोको न सदेतन्नृपोच्यते॥' इति। 'सद्भावे साधुभावे च' इति वचनात् सत् स्वाभाविकत्वेन सम्यक् न भवतीत्यर्थः। तदेवोपपादयति। 'वृक्षाद्दारु ततश्चेयं शिबिका त्वदधिष्ठिता॥ क्व वृक्षसंज्ञा याता स्याद्दारुसंज्ञाथवा नृप॥ वृक्षारूढो महाराजो नायं वदति ते जनः॥ न च दारुणि सर्वस्त्वां ब्रवीति शिबिकागतं॥ शिबिका दारुसंघातो रचनास्थितिसंभवः॥ अन्विष्यतां नृपश्रेष्ठ तद्भेदे शिबिका त्वया॥ एवं छत्रपताकानां पृथक् भावो विमृश्यतां॥ क्व यातं छत्रमित्येव न्यायस्त्वयि तथा मयि॥ पुमांस्त्रीगौरयं वाजी कुंजरो विहगस्तरुः॥ देहेषु लोकसंज्ञेयं विज्ञेया कर्महेतुषु॥ पुमान्न देवो न नरो

न पशुर्न च पादपः ॥ शरीराकृतिभेदास्तु य एते कर्मयोनयः ॥ वस्तु राजेति यल्लोके यच्च राजभटात्मकं ॥ तथान्यच्च नृपेत्थं तु न सत्संकल्पनामयं ॥ यत्तु कालांतरेणापि नान्यसंज्ञामुपेति वै ॥ परिणामादिसंभूतं तद्वस्तु नृप तच्च किं ॥ त्वं राजा सर्वलोकस्य पितुः पुत्रो रिपोः रिपुः॥ पत्न्याः पतिः पिता सूनोः किं त्वां भूप वदाम्यहं॥' इत्यादि। क याता स्याच्छिबिकावस्थायामिति शेषः। कुतो वृक्षादिसंज्ञापगम इत्यतः शिबिकास्थिते त्वयि वृक्षारूढ इति दारुस्थित इति व्यवहाराभावादित्याह। वृक्षेति। ते त्वां ते तव जन इति वा संबंधः। रचनास्थितिसंस्थितः। रचनास्थित्या निर्माणाधीनसंस्थानविशेषादिना सत्तावानित्यर्थः। संभव इति पाठेऽप्ययमेवार्थः। एष न्यायः शिबिकादिव्यवहारतदभावयोर्नियामकीभूतागंतुकत्वन्यायः। त्वयि मयि राजशरीरावच्छिन्ने वाहकशरीरावच्छिन्ने तादृशशरीराणामस्वाभाविकत्वोपपादनाय कर्मयोनय इति कर्मनिमित्तका इत्यर्थः। पूर्वोक्तार्थानुवादपूर्वकमेतन्न्यायमन्यत्रातिदिशति। वस्त्विति। संकल्पनामयं संकल्पना सम्यक् स्वानुकूला या कृतिः तन्मयं तत्प्रचुरं तत्प्रधानकमेवेत्यर्थः। ननु न सदिति असत्वं प्रतिज्ञाय तद्धेतुत्वेन कल्पनामयत्वोक्तिर्न युक्ता। असतः कृत्यनधीनत्वात्प्रत्यक्षबाधाच्चेत्यतः स्वाभिप्रायमाविष्करोति। यत्त्विति। तद्वस्तु वस्तुशब्दवाच्यं हे नृप तत् तादृशपराधीनविशेषादिविक्रियारहितं। किं आक्षेपे। ईश्वरातिरिक्तं न किमपीत्यर्थः। असत्पदार्थनिरूपणाय तत्प्रतियोगिबोधकतद्घटकसत्पदप्रयोगे कर्तव्ये तत्पर्यायवस्तुपदप्रयोगेण परिणामादिरहितमेव मुख्यत्वात्परमार्थपदसत्पदऋतपदवस्तुपदादिव्यवहारालंबनं। तदन्यत्तु परिमाणादिमत्वेनामुख्यत्वादसदनृतावस्त्वादिपदेन व्यवह्रियते इति रीत्या पुराणादावनृतत्वाद्युक्तेर्गतिस्सूचिता। जीवे इदानीं प्रतीयमानास्सर्वे धर्माः अव्यवस्थितत्वाद्देहानुबंधिन एवेत्याह। त्व राजेति। एवंच त्वदुदाहृतविष्णुपुराणं नैतद्व्यासस्मृतिविरुद्धार्थकं प्रत्युत तदनुकूलमेवेत्येतदवष्टंभेन त्वद्दूषणमयुक्तमेव। प्रत्युत तवैव परान्यपदयोरन्यतरवैय्यर्थ्यं। मन्मते समस्तवाक्ययोजनायाः दर्शितत्वेन कस्यापि वैय्यर्थ्यासंगत्यभावयोः स्फुटत्वात्सर्वस्य मिथ्यात्वात्मैकत्वाभिप्रायक एव चेदयं संदर्भस्तदा जगतो मिथ्यात्वमुपपाद्यात्मैकत्वं निरूपणीयं। जिव्हादीनां शरीरादीनामहमर्थातिरिक्तत्वोपपादनस्य पूर्वसंदर्भकृतस्य शरीरादीनां कर्महेतुत्वादिनोत्तरसंदर्भकृतस्यास्वाभाविकत्वोपपादनस्य क्वोपयोगः। नहि शरीरादिवैलक्षण्यमात्रेण आत्मन एकत्वं तेषां मिथ्यात्वं वा सिध्यति। लोकायतातिरिक्तसमायिनां तदंगीकाराभावप्रसंगात्। अपि चाहमर्थस्यापि त्वन्मते अनात्मत्वेन तद्वैलक्षण्यस्य शरीरे उपपादनेऽपि स्वाभिमतात्मवैलक्षण्यासिद्धेः। आत्मनि अहमर्थवैलक्षण्यस्यावश्यं वक्तव्यस्यानुक्त्याऽसंगतिश्च। एतदध्यायोपसंहारवाक्ये 'एवं व्यवस्थिते तत्वे मयाहमिति भाषितुं॥ पृथक्करणनिष्पाद्यं शक्यते नृप ते कथं॥' इत्यत्र शरीरात्मादीनां सर्वेषां तत्वत्वमुक्त्वा आत्मसंबंधिप्रातिस्विकस्वाभाविकधर्माणामशक्यज्ञानत्वेनैवाहामित्याद्युक्त्यशक्यतायाः स्फुटप्रतिभासादैक्यमूलकत्वाप्रतिभासाच्च। तथात्वे पृथक्करणेति पुरुषव्यापारस्य तत्र निष्पादनहेतुत्वोक्त्यसंगतिः। पृथक्करणेऽपि त्वदभिमतनिरुपाधिकात्मतत्वस्य त्वदुक्तरीत्यैव निर्देशायोग्यत्वस्यापरिहारात्। अपि च त्वदुक्तरीत्या अहमित्यादिवचनवैफल्ये 'अहं ब्रह्मास्मि' 'तद्योहं सोऽसौ' 'यो सौ सोऽहं' तत्वमसीत्यादीनामुपदेशानां वैय्यर्थ्यापत्तिस्तेषां सार्थक्ये तद्रीत्यापि संभवेनाहमादिशब्दघटितोपदेशस्यानर्थक्यकथनासंगतिः। न चानया वाचोभंग्या जगन्मिथ्यात्वोपपादनपूर्वकमात्मैकत्वमेव सिध्यतीत्याशयेनैवमुक्तिरिति वाच्यं। उक्तोक्त्या तदलाभस्य दर्शितत्वात्। अपि

चाख्यातस्य तादात्म्यार्थकत्वस्य त्वद्गुरुणोक्तत्वात्तेनैवासत्वावरणाज्ञानाभावापिहितचैतन्यस्य सत्तारूपतया असद्धात्वर्थतायाः जडत्वहेतुसमर्थने उक्तत्वेन तादृशसत्तातादात्म्यस्य मिथ्याभूतवस्तुन्येव संभवेनाहंकारादावस्मीत्यादिनिर्देशायोग्यत्वकथनस्यासंगतत्वं। आत्मान्यमिथ्यात्वस्यैवाहमस्मीति निर्देशायोगबीजत्वप्राप्त्या तदनुक्त्या चैतन्यैक्यकथनस्यासंगतत्वाच्च । अभेदस्य भास्कररीत्याऽपि संभवात् । अत्र कारणव्यतिरेकेण कार्यासत्वमुच्यत इत्यसंगतं। शिबिकावस्थायां वृक्षावस्थाद्यपगमप्रयुक्ततत्संज्ञापगमोक्त्या कार्यव्यतिरेकेणैव कारणाभावस्य लाभात् । यदपि यदग्नेरित्यादि तदपि वाचारंभणश्रुतिव्याख्यावसरे उक्तश्रुतेरप्यर्थप्रकटनेन निराकरिष्यामः । परिणामविक्रियाशून्येत्याद्यसंगतं । परिणामविक्रियाशून्यत्वस्य पारमार्थिकत्वोपपादकत्वे शशविषाणादिरूपासतोपि तथात्वापातात् । स्वस्वरूपत्वस्यापि नियामकत्वे स्वरूपवत्वरूपतत्संबंधात्मकविक्रियाया अवर्जनीयतया विक्रियाशून्यत्वानुपपत्तिः । यदपि प्रसिद्ध्यतिक्रम इत्यादि तदपि मंददंधनं । बाधके सत्यर्थांतरानुसरणस्य न्याय्यत्वात्। जगत्सत्यताग्राहकप्रमाणानामेव बाधकत्वात् । अन्यथा ब्रह्मणः सदसद्विलक्षणत्वबोधकपूर्वोदाहृतवाक्येष्वपि सदसच्छब्दयोरर्थांतराभावप्रसंगात् । लक्षणासंदर्भविरोधौ न स्त एवेति तद्व्याख्यान एव प्रदर्शितं । यदप्येवमित्यादिना विष्णुपुराणगतस्थानांतरगतवाक्यानि स्वोपयोगितयोदाहृत्य जगतोऽनिर्वचनीयत्वकथनं तदप्यसंगतं। तस्य पूर्ववाक्यानि 'परमार्थस्त्वमेवैको नान्योस्ति जगतः पते ॥ तवैषमहिमा येन व्याप्तमेतच्चराचरं ॥' इत्यादि । तत्र धरण्यामुत्धृतायां मुनिभिर्वराहरूपस्य हरेः स्तुतिः क्रियते। तद्घटकैतद्वाक्ये परमार्थ इत्यस्योत्तमोर्थस्त्वमेवेत्यर्थः। तदुपपादकतया तवैषमहिमेत्युक्तेः। नहि चराचरव्याप्तमाहात्म्यं अबाध्यत्वस्योपपादकं।निष्क्रियस्य तस्य माहात्म्यादेरयोगात्। न चैतत्तस्यानुपपादकमेव तूष्णीं कथितमिति वक्तुं युक्तं । त्वमेव परमार्थो नान्य इत्युक्तौ कुत इत्याकांक्षाया आवश्यकत्वेन तदर्थत्वेनैतस्याप्रवृत्तौ न्यूनतापातात् । तथाच माहात्म्यस्य चराचरव्याप्तत्वेपि न निरुपचरितोत्तमत्वं युक्तं । येन नान्योस्तीतिनिषेधः संगच्छेत । यदप्यन्यवत्पांचभौतिकदेहग्रहणपरित्यागादिनेतरयोगिजनसाधारण्यात् न चैतत्स्वरूपमेव । तस्यादृश्यत्वेनापरिच्छिन्नत्वेन दृग्विषयत्वधरण्युत्धरणरूपक्रियाद्ययोगादित्याशंक्य निषेधति । यदेतदिति । 'यदेतत्दृश्यते मूर्तमेतज्ज्ञानात्मनस्तव ॥ भ्रांतिज्ञानेन पश्यंति जगद्रूपमयोगिनः॥' इति । आत्मशब्दो देहवाची। ज्ञानात्मकदेहवतस्तव मूर्तं धरण्युत्धरणादिक्रियाविशिष्टं रूपं दृश्यते प्रत्यक्षविषयीक्रियते । तद्रूपमयोगिनः भगवति मनोयोगतत्साध्यदिव्यचक्षुरादिरहिताः। कुयोगिन इति पाठे कुत्सितज्ञानादिविशिष्टाः अयोग्या इत्यर्थः। भ्रांतिज्ञानेनं ज्ञायते अनेनेति करणव्युत्पत्त्या भ्रांतिजनकचक्षुरादिना जगद्रूपं पंचभूतात्मकमिति यावत् पश्यंति साक्षात्कुर्वंति । जानंति वा । ज्ञानेनेत्यस्य यथाश्रुतार्थकत्वे विषयीकुर्वंतीत्यर्थः । नन्वस्यावतारस्य को विशेषः । अन्येषां कृष्णऋषभादीनां देहत्यागदेहहननादिना भौतिकदेहवत्वस्यैवावगमादित्यत आह । ज्ञानेति । अखिलं समस्तभगवन्मूलरूपावतारादिदेहादिकं ज्ञानस्वरूपमेव । अबुत्धयः सम्यग्ज्ञानरहितास्तु अर्थस्वरूपं पंचमहाभूतादिरूपार्थस्वरूपात्मकं यज्जगत् तदात्मकं पश्यंतो जानंतो मोहसमुदाये परिभ्रमंते। नच 'भवतो यत्परं रूपं तन्न जानाति कश्चन॥ अवतारेषु यद्रूपं तदर्चंति दिवौकसः॥' इत्यादिना धरिणीकृतस्तोत्रे परशब्देन देवतागम्यत्वागम्यत्वादिना मूलावताररूपवैलक्षण्यस्यावगमात्तस्य च लीलागृहीतभौतिकाभौतिकदेहवत्वेनैव निर्वाह्यत्वात्कथं सर्वरूपाणां ज्ञानात्मकत्वमित्यत आह। ये त्विति । परमेश्वरेत्याचिंत्यशक्तिरूपैश्वर्योक्तिः। विदेः विचारार्थ

त्वात् तु शब्दस्य विशेषार्थत्वात्। ये भगवतः पूर्वोक्ताचिंत्यशक्तित्वादिधर्मानुसंधानपूर्वक विशेषविचारवंतस्ते ऽखिलं त्वद्रूपं ज्ञानात्मकमेव पश्यंति निश्चयेनैव पश्यंति। उक्तवाक्यं तु विशेषविचाररहितानामेव भ्रामकं। देवपूज्यरूपप्रलयकालवृत्तिसर्वभक्षण कर्तृरूपयोरचिंत्यशक्तिविशेषबलादेव देवगम्यत्वागम्यत्वोपपत्तेः। कुत एतादित्य- तस्ते ऽखिलं जगदित्युक्तं। येत्विति यच्छब्दयोगात्ते इत्यस्य स्वतो लब्धत्वादत्र त्यं युष्मच्छब्दषष्ठ्येकवचनं। तु शब्दो हेत्वर्थकोऽपि। यस्मादखिलं जगत् ते त्वत्सकाशा- दुत्पन्नं तस्मादित्यर्थः। अयं भावः। अवताररूपेषु लोकपालनाद्यर्थं मूलरूपेण शरीरादि- रहितेन कर्तुमशक्यत्वाल्लीलया शरीरग्रहणं कार्यं। मूलरूपस्य तदशक्तौ प्रथमतो जगदुत्पत्त्यनुपपत्तेः। नच तदर्थमपि शरीरग्रहणमिति वाच्यं। शरी- रस्य प्रवृत्त्याद्यर्थमेवांगीकार्ये। तथा तच्छरीरग्राहकप्रवृत्त्यादिनिर्वाहार्थमन्यशरीरापे- क्षायामनवस्था। आदिसृष्टावनुपपत्तिश्चातस्तन्निर्वाहायाचिंत्यशक्त्याद्यभ्युपगमे आव- श्यके तेनैव प्रमाणप्रमितसर्वनिर्वाहसंभवाद्व्यर्थं इतरयोगिन इव शरीरांतरादिग्रहणमव-ताररूपेष्विति। यद्वा कुतः अवताररूपाणां भौतिकत्वज्ञानस्य भ्रमत्वमुच्यत इत्यतो ज्ञानिप्रत्यक्षस्य विचारपूर्वकस्य बाधकत्वादित्याशयेनाह। येत्विति। अर्थस्तु पूर्ववदेव। यद्वा अज्ञानिदर्शनमुक्त्वा ज्ञानिनां भगवत्स्वरूपज्ञानप्रकारमाह। येत्विति। ते इत्येतत्प्रथ- मैव। ये शुद्धचेतसोऽत एव ज्ञानविदो ज्ञानात्मकभगवत्स्वरूपवेत्तारस्ते पुरुषा अखिलं जगत् ज्ञानात्मकं त्वद्रूपं त्वदावासस्थानं त्वज्जन्यं पश्यंतीत्यर्थः। कार्यकारणयोरभेदव्य- पदेश आयुर्वै घृतमित्यादौ दृष्टः। एतदुत्तरक्रोशे या गंगा सैव भवद्भ्यो ग्राम इति गंगात- टस्थग्रामतात्पर्येणाधाराधेययोरप्यभेदव्यपदेशो दृष्टः। नच मुख्यार्थपरित्यागेनोक्तगौणा- र्थादरणस्यायुक्ततेति। चिज्जडयोर्मुख्यतादात्म्यस्य बाधितत्वेनारोपाधिष्ठानतया कथं- चित्तादात्म्यस्य वा बाधायां सामानाधिकरण्यस्य वा परेणापि वक्तव्यतया तस्याप्यमुख्य- त्वात्। नच तर्हि भवदुक्तार्थग्रहणे किं विनिगमकमिति वाच्यं। देवा ऊचुः। 'नमो नमस्ते विश्वेश त्वं ब्रह्मा त्वं पिनाकधृक्॥ इंद्रस्त्वमग्निः पवनो वरुणः सविता यमः॥ वसवो मरुतः साध्याः विश्वेदेवगणो भवान्॥ योऽयं तवागतो देव समीपं देवतागणः॥ स त्वमेव जग- त्स्रष्टा यतः सर्वगतो भवान्॥' इति वाक्येन स्थानांतरस्थितेन 'सर्वस्मिन्सर्वभूतस्त्वं सर्वः सर्वस्वरूपधृक्॥सर्वं त्वत्त स्ततस्तत्त्वं नमःसर्वात्मने नमः॥सर्वात्मकस्त्वं देवेश सर्वभूतस्थितो यतः॥ कथयामि ततः किं ते सर्वं वेत्सि हृदि स्थितं॥' इति वाक्येन अत्रैवोत्तरत्र सर्वकारणत्व सर्वस्थितत्वादिना सर्वात्मकत्वोक्तिगत्युक्तेः। नच सर्वकारणत्वतात्स्थितिभ्यां वास्तवसर्वा- त्मकत्वमेवोच्यते नतु तदुक्तेर्गतिरुच्यते तथा प्रतीत्यभावादिति वाच्यं। कार्यकारणयोः कथंचित्तदुक्तिसंभवेपि आधाराधेययोस्तादात्म्यस्यादृष्टत्वेन तथाभिप्रायस्य वक्तुमशक्य- त्वात्। स्थितेरपि तादात्म्यसंबंधेन संबद्धत्वरूपत्वे तस्यैव सर्वात्मकत्वेन स्वस्मिन् स्वस्य हेतुत्वायोगात् च। 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते॥ सर्वांतर्यामिको विष्णुः सर्वनाम्नाऽभिधीयते॥एषोहं त्वमसौ चेति नतु सर्वस्वरूपतः॥' इत्यादिस्मृत्यानुगुण्याच्चो क्तार्थस्यैव युक्तत्वाच्च। भवदुदाहृतवाक्ये जगद्ब्रह्मतादात्म्यप्रतिपादनद्वारा कारणब्रह्म- व्यतिरेकेण जगदसत्यतातात्पर्यं यदेतद्दृश्यते मूर्तमित्यत्र मूर्तपदेन जगद्ग्रहणे तस्य जगद्रू- पताज्ञानस्य भ्रांतित्वकथनासंगतिः। ब्रह्मग्रहणे तवेत्युक्तस्वस्वरूपसंबंधित्वमूर्तत्वदृश्य- त्वानामनुपपत्तिः। निरुपाधिके तदनुपपत्तेः। सोपाधिकस्य कथंचिद्ग्रहणे तस्यापि दृश्य त्वादिना मिथ्यात्वेन जगदंतःपातितया तज्ज्ञानस्य भ्रांतित्वकथनासंगतिः। नच मन्मते

श्रुत्यान्यविषयकं सर्वज्ञानं भ्रम एवेति नेदं बाधकमिति वाच्यं। तर्हि ये त्वित्यादिना ब्रह्मणो निखिलात्मकत्वज्ञानस्यापि तथात्वेन तत्स्तवानुपपत्तेः। अखंडार्थविषयज्ञानतात्पर्यकं तदित्यप्यसत्। पूर्वस्यापि तथात्वेन तन्निंदानुपपत्तेः। अश्रुतकल्पनापत्तेश्च। तस्मात्तत्रोक्तरीत्याऽवताररूपस्यैव प्रसक्तौ वक्तव्यायामुत्तरत्र जगद्ब्रह्मणोस्तादात्म्यकथनं कथमुपपन्नं। तवैष महिमा येनेत्यनेन जडाजडात्मकनिखिलप्रपंचस्य ब्रह्मशक्त्युपजीवकत्वरूपतन्महिमाव्याप्तत्वोक्त्या जगद्ब्रह्मणोर्भेदस्यैवोपपादितत्वाच्च। ज्ञानस्वरूपस्यापि जगतः अर्थस्वरूपस्यापि सत्वेन तज्ज्ञानस्य भ्रमत्वायोगेन ज्ञानस्वरूपमित्यादिवाक्यार्थासंगतिश्च। अर्थपदं परमार्थपरमिति तु न सत्। ज्ञानस्यैव परमार्थत्वेन तत्स्वरूपत्वे परमार्थस्वरूपत्वानपायात्। नच ज्ञानस्वरूपमित्यनेन ज्ञानात्मके ब्रह्मणि आरोपिततया तादात्म्यमुच्यते। अर्थस्वरूपमित्यनेन तु स्वरूपतः परमार्थत्वं निषिध्यत इति युक्तं। एकवाक्यस्थस्वरूपपदद्वयस्य विना प्रमाणं लक्षणादिनाऽर्थद्वयकल्पनापत्तेः। अर्थपदस्य परमार्थवाचित्वाभावात्तस्यापि लक्षणापत्तेः। एवमत्रार्थपदस्य परमार्थवाचित्वे पूर्वत्र विद्यमाने 'आधारभूतं विश्वस्याप्यणीयांसमणीयसां॥ प्रणम्य सर्वभूतस्थमच्युतं पुरुषोत्तमं॥ ज्ञानस्वरूपमत्यंतं निर्मलं परमार्थतः॥ तमेवार्थस्वरूपेण भ्रांतिदर्शनतः स्थितं॥' इति पराशरकृतप्रणतिश्लोके एतत्सजातीये अर्थपदस्य परमार्थपरत्वावपातेन ज्ञानस्वरूपब्रह्मणोऽपि मिथ्यात्वापत्त्या शून्यवादापातः। नच परमार्थत इति पूर्ववाक्यविरोधान्न तथा वक्तुं शक्यमिति वाच्यं। तर्ह्यत्रापि ज्ञानस्वरूपमिति पूर्ववाक्यविरोधान्न त्वदुक्तार्थोपपत्तिः। तादात्म्यार्थकतया पूर्ववाक्यं सावकाशमिति चेत् तर्ह्यत्रापि भ्रांतिकल्पितेतरार्थेषु मुख्यार्थत्वेन दोषाभावोक्तिपरतया पूर्ववाक्यसावकाशत्वं किं पाणिपिहितं। तस्मात्त्वन्मतप्रतिपादकत्वमस्य वाक्यस्य नास्तीति कुतो जगतोऽनिर्वचनीयतानुग्राहकत्वं। 'विज्ञानं परमार्थोऽसौ द्वैतिनो तथ्यदर्शिनः॥ एवमेवमिदं विश्वं न भेदि सकलं जगत्॥ वासुदेवाभिधानस्य स्वरूपं परमात्मनः॥' इत्यत्र विज्ञानं ज्ञानात्मकं ब्रह्म उत्तमोऽर्थः। तत्र द्वैतिनः मूलरूपावताररूपादिषु सामर्थ्यवैलक्षण्यादिग्रहवंत इत्यर्थः। इदं विश्वं न भेदि परमात्मविश्लेषविधुरं। सकलं जगत् स्वरूपं स्वं स्वातंत्र्योपेतं स्वात्मकं रूपं स्वरूपं यत्र तादृशं तदधिष्ठानमित्यर्थः। 'सितनीलादिभेदेन यथैकं दृश्यते नभः। भ्रांतिदृष्टिभिरात्माऽपि तथैकः सन् पृथक् पृथक्॥' इत्यत्र आत्मा परमात्मा पृथक् स्थानभेदेन नाना। 'एकः समस्तं यदिहास्ति किंचित्तदुच्यते नास्ति परं ततोन्यत्॥ सोहं स न त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहं॥' इत्यत्र एकः सर्वोत्तमः परं उत्कृष्टं। कुत इत्यतः सर्वांतर्यामित्वादित्याह। सोहमित्यादि। एतदात्मस्वरूपं एतज्जीवजातांतर्यामिभेदमोहं परमात्मरूपेषु भेदभ्रमं कस्यचित्परमात्माधिष्ठितत्वं कस्यचिन्नेति वैलक्षण्यभ्रमं जगतः परमात्मविश्लेषभ्रमं वेत्यर्थः। एवं 'मही घटत्वं घटतः कपालिका कपालिका चूर्णरजस्ततोणुः॥ जनैस्स्वकर्मस्तिमितात्मदृष्टिभिः संदृश्यते ब्रूहि किमत्र तत्वं॥' इत्यत्र स्वकर्मस्तिमितात्मदृष्टिभिः स्वकर्मप्रतिबद्धपरमात्मग्रहवद्भिरित्यर्थः। संदृश्यते समित्युपसर्गमहिम्ना मुख्यत्वेन दृश्यते। तत्वं स्थिरं। कुत इत्यत अस्थिरत्वस्यानुभाविकत्वादित्याह। महीत्यादि। अस्य वाक्यस्य मिथ्यात्वपरत्वे ज्ञानोच्छेद्यत्वमेव दर्शनीयं न त्वेकैकापगमे एकस्य स्थितिः। एवमुदाहृतवाक्येषु स्वपरपक्षसाधकबाधकान्यूह्यानि। ग्रंथगौरवभयान्नेह प्रपंच्यते। एवमन्यान्यपि वाक्यानि योज्यानीत्यलं। इत्थं च न कुत्रापि त्वद्भिस्तरस्यावकाशः। एवमित्युपसंहारवाक्यं टीकाव्याख्यानेनैव सर्वदोषाणामुद्धृतत्वाद् दूषितमेव। प्रत्युत स्वोदाहृतबृहन्नारदीयवाक्येषु लाक्षणिकनिर्देशोपयुक्तार्थानुक्त्यनुपयुक्तार्थोक्त्यादीनां

(टीका) प्रपंचानिर्वचनीयताभिधायिनां वाक्यानामुक्तार्थांतरपरतासमर्थनार्थं तत्सत्यतां भगवद्गीताभिः श्रुतिभिश्च दृढीकरोति—

**(मूलं) असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् । अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ एतां दृष्टिमवष्टभ्य नष्टात्मानोल्पबुद्धयः । प्रभवंत्युग्रकर्माणः क्षयाय जगतो हि ताः ॥ इत्यादि च गीतासु ॥ २८ ॥**

(टीका) ते आसुराः असत्यत्वादप्रतिष्ठं ज्ञानबाध्यं । तत एवानीश्वरं । नच यतो यतो जातमसावसावीश्वर इति वाच्यं । यतो परस्परसंभूतमेकस्मादेकस्य नोत्पत्तिरिति यावत् । सत्यं नचेत्किमसदेव, परस्परसंभूतं नचेत्किमसदेव, परस्परसंभूतं नचेत्किं नित्यं, स्वतो वा जातम् ? आद्यस्योत्तरं अन्यत् सदसद्भ्यामितिशेषः । द्वितीयस्य कामहैतुकं काम इति तत्कारणमविद्योपलक्ष्यते । अत्र जगदसत्यतावादिनामासुरत्वाद्युक्त्या तत्सत्यतावगम्यते ।

---

त्वद्रीत्या व्याख्यानपक्षे दर्शितत्वान्मुक्तोपसृप्यव्यपदेशाच्चानंदमयोऽभ्यासादित्यादौ लाक्षणिकनिर्देशस्य त्वयाऽप्यंगीकृतत्वात्तद्बलात्कृष्णद्वैपायनाप्रणीतत्वाच्चार्यकल्पितत्वोक्तिस्तन्मौर्ख्यस्यैवाविपालगोपालं ज्ञापिका । मध्वकुकवीत्युक्तस्तु तमासि तद्भटकर्तृकस्वजिव्हाछेद एव तव फलं भवतीति सर्वं चतुरस्रं । दृढीकरोतीति । असत्यत्ववादिनिंदया जगत्सत्यता दृढीकृता भवतीत्यर्थः । त आसुरा इति । 'प्रवृत्तिं च निवृत्तिं च जना न विदुरासुरा' इति पूर्वं तेषामेव प्रक्रांतत्वादिति भावः । तत एव । बाध्यत्वादेव । पालनादिना नियामकस्यैवेश्वरत्वाज्जगतो मिथ्याभूतस्य पालनाभावादनीश्वरत्वमिति भावः । अपरस्परेण संभूतमित्यर्थस्यानुपयोगाद्बाधितत्वाच्च । नञो विशिष्टपदयोगमभिप्रेत्य पर्यवसितमाह । एकस्मादिति । सर्वस्य भ्रांतित्वे उत्पत्त्यादिप्रतीतेरपि भ्रांतित्वापत्त्या उत्पत्त्यभाव एव पर्यवसानं तद्वाक्यस्येति भावः । लौकिकैः सदसत्प्रकारयोर्द्वयोरेव ज्ञातत्वादसत्यमित्युक्ते सद्भिन्नत्वस्यैव बुध्यारूढतया तस्यार्थक्रियाशून्यत्वेन कथमेतदुक्तिसहामिति पृच्छति । सत्यं न चेदिति । उत्पत्तिप्रतीतेः सर्वथा भ्रांतित्वं उतान्यजन्यत्वांशे । आद्यमनुपपन्नं । तर्हि कुत्राप्युत्पत्त्यभावेन तत्स्वरूपस्यैव सर्वथा शशविषाणादिवदसत्वे प्रधानाभावादारोपानुपपत्तिः । द्वितीयं तु सर्वथांगीकारानर्हं व्याहतेः स्फुटत्वादित्याशयेन पृच्छति । परस्परेति । आद्यस्येति । अन्यदेव हि गांभीर्यमित्यादाविव प्रसिद्धवैलक्षण्यबोधकान्यशब्दप्रयोगमहिम्नैव सदसद्वैलक्षण्यबोधो झडिति भवत्येव । बोधस्तु नान्यपदलक्षणया सदसतोः पुरःस्फूर्तिकत्वेन तद्वाचकपदयोरेव बुद्धिसन्निहितत्वादित्याशयेनाह । सदसद्भ्यामिति । द्वितीयस्येति । आयुर्वै घृतमित्यत्र कार्यकारणयोरभेदोपचारस्य दृष्टत्वात्कामपदं तत्कारणाविद्यालक्षकमित्याह । काम इतीति । नच लाक्षणिकप्रयोगे बीजाभावः ।

अविद्येत्युक्तौ अनिर्वचनीयोपादानभूता परसिद्धा अनिर्वचनीयाऽविद्या परमतसिद्धा काचिदस्तीति भ्रमः स्यात् सा मा भूदिति तथा लक्षणानुसरणात् । तदनुसरणे तु मन्मते सत्यभूतकामादिहेतुत्वेनांगीकृताविद्याया एव परैर्जगदुपादानत्वानिर्वचनीयत्वादिना भाषितत्वमित्यस्य लाभसंभवात् । नन्वविद्याहेतुकत्वोक्तौ उत्पत्तिरेवोक्ता स्यात् । तथा च कथं पूर्वोक्तानुत्पत्तिसमर्थनं । न चानेन पूर्वोक्तश्चेतनजन्यत्वाभावरूपः स्वाभिप्रायः स्फुटीकृतो भवति । चेतनस्यैवेश्वरत्वेनानीश्वरत्वोपपादकतया प्रयुक्तस्य तस्य तथाभिप्रायस्यैवोचितत्वादिति वाच्यं । तथात्वे परस्परेति सामान्यतः एकस्मादेकस्योत्पत्तिनिषेधासंगतेः । भवदुक्तरीतौ घटादौ दंडादिहेतुकत्वानिवारणापत्त्या तल्लाभाय विवरणवाक्ये जगति चेतनजन्यत्वाभावस्यैव पूर्वोक्ताभिप्रायविषयतया वर्णनीयतापत्त्या विद्याहेतुकत्ववर्णनासंगत्यापातेन तदलाभाद्विपरीतप्रतीतेरेव जायमानत्वाच्चेति चेन्न । एकस्मादेकस्योत्पत्तिप्रतीतिभ्रांतिरतः केनापि कस्याप्युत्पत्तिर्नास्तीति पारमार्थरीत्योच्यते। व्यवस्था तूत्पत्त्यादेः स्वाप्नपदार्थानामिव काल्पनिकीत्यस्यार्थस्याविद्याहेतुकत्वोक्तिबललब्धत्वेन सर्वसामंजस्यात् । अत्र यत्केनचिदुक्तं । यानि त्वसत्यमप्रतिष्ठं ते जगदाहुरनीश्वरमित्यादीनि तानि नाद्वैतदर्शनविरोधीनि । असत्यमित्यस्य न सत्यं यस्मिन्निति व्युत्पत्त्या शून्यवादस्य अप्रतिष्ठितमिति स्थैर्यनिषेधेन क्षणभंगवादस्य निरीश्वरमिति नास्तिकवादस्यापरस्परसंभूतमिति स्वभाववादस्य किमन्यद्वाच्यं कामयत इति काम इष्टस्तद्धेतुकं यस्य यदिष्टं परमाण्वादि तद्धेतुकमित्यनेन स्वबुद्ध्युत्प्रेक्षितकारणकमित्यवैदिकानामन्येषां निंदितत्वेऽपि ब्रह्मवादस्यानिंदितत्वात् । न चासत्यामित्यस्य सत्यभिन्नार्थमाश्रित्य वैदिकमतदूषणमपि शक्यमुपपादयितुमिति वाच्यं । एवं सति जगद्बुद्धिगम्यं न भवतीति वदंतीत्यादि त्वन्मतदूषणस्याऽपि वक्तुं शक्यत्वात् । यदि न्यायानुगृहीतश्रुतिविरोधान्नैवमित्युच्यते तर्हि तुल्यं प्रकृतेऽपि । प्रसिद्ध्यतिक्रमे बीजाभावः। उदाहृतस्मृत्यंतरं तवाऽपि तुल्यमित्यन्यत्र विस्तरः। यत्तु कामत इति तत्कारणाविद्या लक्ष्यत इति तदसत् । मतांतरानिरासान्न्यूनताप्रसंगात् । यच्च सत्यं न चेत्किमसदेव परस्परसंभूतं न चेत्किं स्वतो जातं । आद्यस्योत्तरमन्यत्सदसद्भ्यामिति शेषः। द्वितीयस्योत्तरं कामहेतुकमित्यपव्याख्यानं तदसत् । सदसद्भ्यामित्यस्याध्याहारे मानाभावात् । किंपदास्वारस्याच्च । अपरस्परसंभूतत्वस्य विश्वस्याहेतुत्वेऽप्यव्याघाताच्च । यदप्यप्रतिष्ठितमित्यस्य ज्ञानोच्छेद्यमित्यर्थवर्णनं तदनक्षरार्थ इति स्पष्टमेवेति तदसारं । त्वदुक्तरीत्या सत्यपदार्थांगीकारे त्वन्मतशून्यमतयोरविशेषस्याग्रे वर्णनेन शून्यवादिनिरासकसूत्राणामेव त्वन्मतनिरासकत्वस्य च प्रतिपादितत्वेन त्वन्मतानिंदाया अपह्नतत्वेन त्वत्प्रयासवैफल्यात् । अपि चासत्यमित्यनेन सद्भिन्नस्यैव स्फुरणात्प्रसिद्धिश्रद्धालुना त्वया तथैवादर्तव्यं । ननु बहुव्रीहिलभ्योऽर्थस्तस्याप्रसिद्धत्वात् । अनृतासत्यादिपदघटितस्मृत्यंतरं तु व्याससमृत्यैवान्यथाव्याख्यातमिति नास्माकं प्रसिद्ध्यतिक्रमे बीजाभावः । जगदसत्यताग्राहकप्रमाणप्राबल्यादेव मास्थीयत इतिचेत् । तत्राप्यसत्यानृतपदानामप्रसिद्धार्थकत्वस्य एतद्वाक्यस्थसत्यपदमुख्यार्थकत्वानुरोधेनानुसरणे कुतो न सम्मतिः । वाचारंभणादिश्रुत्यनुसारात्तानि मुख्यार्थानीति चेन्न । अत्रापि विश्वं सत्यमित्यादिवाक्यानुग्रहेण प्रसिद्धसत्यविवेकपरत्वमेवासत्यपदस्य । न चैतेषां वचनानामनुवादकत्वादिना दौर्बल्यमिति वाच्यं । तस्य निराकरिष्यमाणत्वात् । एवं कामपदस्य काम्यंत इति कामा इत्यर्थांगीकारे तव प्रसिद्धार्थपरित्यागो दुर्वारः। इच्छाया एव प्रसिद्धार्थत्वात् । प्रसिद्धार्थपरित्यागे

आवश्यके योगापेक्षया लक्षणैव ज्यायसी । प्रसिद्धशक्यार्थस्य प्रथमतो बुद्धिस्थत्वेन तद्बाधग्रहे प्रतिसंबंधिन उपस्थितत्वात्तत्संबंधरूपलक्षणोपस्थितया तदधीनबोधस्य शीघ्रत्वात् । योगाश्रयणे तु प्रसिद्धार्थबाधोत्तरं पुनर्नानावयवघटकपदवृत्तिज्ञानाधीनशाब्दबोधस्य मंथरगामित्वात् । किंच काम्यंत इत्यनेनापि कामनाविषयस्रक्चंदनादीनामेव स्वभोग्यतया प्रसिद्धानामेव लब्धतया स्वाभोग्यतया कामनाया अविषयतया परमाण्वादीनां कथं लाभः । नच तेऽपि कारणतयाऽस्य प्रतिपाद्यत्वप्रकारकेच्छाविषया इति वाच्यं । तर्हि सामान्यवाचकपदस्यात्यप्रसिद्धलक्षणापात्तिः। किंच सामान्यरूपेण विशेषबोधने वा विशेषरूपेणैव तद्बोधे वा त्वदभिमतेश्वरस्याविद्यायाश्च तथात्वेन तत्कारणत्ववादस्यापि निंदितत्वप्रसंगः । नच स्वकामनाविषयपरं कामपदमिति वाच्यं । कामपदस्य सामान्यवाचित्वेऽपि स्वघटितार्थबोधाय लक्षणाया आवश्यकत्वात् । स्वपदेन तवापि ग्रहणसंभवेन वैदिकत्वेन त्वदभिमतकारणवादस्यापि निंदाया अवारणाच्च । नच प्रमाणं विना स्वेच्छानुसारेणैव वदंतीति तत्पर्यवस्यतीति वाच्यं। उक्तवाक्यात्तदलाभेनोदक्षरतायाः स्फुटत्वात् । यदपि टीकाकृतोक्तपदव्याख्याने मतांतरानिरासान्न्यूनतेति कथनं तदसत् । तैर्नानामतनिंदापरत्वेनैतच्छलोकस्य व्याख्याततत्वेन तत्पक्षे न्यूनताप्रसंगाभावात् । तर्हि सर्वमतविषयतया व्याख्यानस्याकृतत्वादेव न्यूनतोच्यत इति चेत् । तर्हि अप्रतिष्ठितादिपदस्य टीकाव्याख्यानपक्षे विज्ञानवाद्यलाभेन तत्र न्यूनतामनुक्त्वाऽत्रैवोक्तौ बीजाभावात् । न चाप्रतिष्ठितादिपदस्यान्यार्थवर्णनेऽपि कामहेतुकपदमात्रस्यास्मदुक्तरीत्यार्थवर्णने सर्ववैदिकमतलाभो भवति । तस्याप्यन्यार्थवर्णने तल्लंभकपदांतराभावेन न्यूनतादोषस्तत्पदानुषंग्येवेति तत्रैवोद्भावित इति वाच्यं । तर्हि तेनैव सर्ववैदिकमतलाभे तवासत्यमित्यादिपूर्वभागस्य सर्वस्याप्याधिक्येन वैय्यर्थ्यापातात् । शून्यवाद्यादिभिरपि स्वेच्छानुसारेणैव जगत्कारणस्योक्तत्वात् । नच विशेषरूपेणाऽपि तन्मतोपन्यासार्थं पूर्वभाग इति वाच्यं । जैनमतस्य सप्तभंगिजगद्वाचित्वेन नैय्यायिकसांख्यादिमतानामपि परमाणुप्रकृत्यादिकारणकत्वादिविशेषरूपेणानुपन्यासेन त्वत्पक्षेऽपि न्यूनतापातात् । सर्वोपन्यासानियमाभावान्न न्यूनतेति वाच्यं । तर्हि सर्वमतोपन्यासनियमाभावादेवैकमतविषयतया टीकोक्तव्याख्याने कथं न्यूनता । किंचैकमतस्यापूर्वस्योपन्यासे तत्संभवदुक्तित्वविषय एवोत्सर्गतो जिज्ञासोदयेन तदुपपादकतयैव पदानां व्याख्यानं युक्तं। न तु कस्याप्यनुपपादनेन नानामतपरतया व्याख्यानं।किंच जगति प्रयुक्तासत्यादिपदानामन्यार्थप्रदर्शनपूर्वकं प्रवृत्ते व्याससमृतिवाक्ये असत्यमप्रतिष्ठंत इत्यादिपदानां सद्भिन्नार्थकत्वमेव प्रसिद्ध्यनुरोधात् । नहि तत्र प्रसिद्ध्यतिक्रमे बीजमस्ति। प्रत्युत जगतो सत्यत्वे तत्र प्रयुक्तासत्यादिपदानामर्थांतरवर्णनस्यानुपयोगप्रसंगेन सत्यत्वाभिमतैरेव स्मृतिकर्तुरावश्यकतया मतांतरानुवादकवाक्ये स्वाभिमतविरोध्यर्थकत्वस्यैव युक्तत्वाच्च । तथा च तादृशवाक्यसंवादानुरोधेन टीकोक्तव्याख्यैव युक्ता । अत एव मूले प्रसिद्धाऽपि गीतानंतरं पठिता । तन्निर्णयाय व्याससमृतिरादौ पठिता । यदप्यध्याहारे मानाभावादिति तदसत्। तथाऽप्यन्यत्किं वक्तव्यमिति व्याख्याने वक्तव्यपदाध्याहारस्यावश्यकत्वेन तत्र मानस्य वक्तव्यतापातात् । न चात्र किंपदस्याक्षेपार्थकतयाऽऽक्षेप्येण भाव्यं । पूर्वोक्तान्यमतांतरस्वरूपस्याभावरूपाक्षेपायोगेनेदानीं गौरवेण तत्कथनस्यैवाक्षेप्यतया तल्लाभान्यथानुपपत्तिरेव मानमिति वाच्यं । अस्मत्पक्षेऽपि टीकाव्याख्यावसर एव तदध्याहारबीजस्य दर्शितत्वात्। नतं विदाथ य इमाजजानान्यद्युष्माकमंतरं बभूवेति श्रुति

घटकान्यपदस्य सदसदन्यार्थकत्वं वर्णयता त्वया वक्तव्यरीतेरेव मयाऽप्याश्रयणाच्च। नच भवद्व्याख्याने किंपदास्वारस्यमिति वाच्यं। तस्यार्जुनप्रश्नरूपतया किंशब्दस्वारस्यापरित्यागात्। लोके अपूर्वार्थे आपाततो बाधितवत्प्रतीयमाने श्रुते अतिकौतुकेन तत्स्वरूप जिज्ञासया किमित्युक्तिमात्रस्य प्रश्नार्थकस्य सर्वानुभवसिद्धत्वात्। प्रत्युत किमित्यादि तवैवास्वरसं। यतो लोके किंचित्संभावितस्यानुपपत्त्यादि प्रदर्श्य कैमुत्यन्यायं तदपेक्षया नुपपन्नार्थे प्रदर्शयंति। यथा पंडिता अपि मुह्यंति किमन्ये प्राकृता जना इति तद्वैपरीत्येन। तथा च परमाणुकारणकत्वादिवादं आत्मस्वरूपधर्माद्यंगीकारवेदप्रामाण्याद्यभ्युपगमादिना वेदानुसारिणं किंचिदंशे स्वविरुद्धं प्रथमतः प्रदर्श्य अत्यंतवेदविरुद्धत्वेन तदपेक्षया निकृष्टविज्ञानवादादिकमनंतरं वक्तव्यं। एवं मतांतरोक्ततत्कारणकत्वं जगत्यप्रदर्श्य किंवक्तव्यं कामहेतुकं वदंतीत्युक्तेर्लोकव्यवहारमर्यादातिक्रमेणास्वारस्यमपि। यदप्यप्रतिष्ठितमित्यस्य बाध्यत्वार्थकत्वे उदक्षरत्वमिति तदसत्। अतोऽन्यदार्तमित्यत्रार्तपदस्य ज्ञानबाध्यार्थकत्वांगीकारेऽप्युदक्षरत्वापत्त्या त्वद्गुर्वादिकृतव्याख्यानस्याप्यसंगत्यापत्तेः। नच पीडितमात्रं तदर्थः। पीडा च तत्स्वरूपोपघातव्यापारः। शब्दानामुत्सर्गतो मुख्यार्थबोधकत्वस्वाभाव्यात्। कारणकार्यादिसकलरूपैर्जगदुपघातप्रयोजकज्ञानमेव मुख्यपीडेति नोदक्षरत्वमिति वाच्यं। अत्रापि एकरूपापगमेऽप्यंतत एकरूपेण स्थितिरूपप्रकृष्टस्थित्यभाव बोधने कारणात्मनाप्युच्छेदलाभेन ज्ञानोच्छेद्यत्वस्य पर्यवसितत्वात्। अन्यथा प्रतिष्ठितपदेन स्थिरत्वाभावमात्रबोधनेन त्वदभिमतविज्ञानवादस्याप्यलाभप्रसंगात्। भगवता श्रीकृष्णेनापि अन्यद्युष्माकं आर्तमित्यादिश्रुतीनामुक्तरीत्याऽपार्थमाश्रित्यैवं वदंतीति त्वन्मत रीतिसूचनायान्यदिति अप्रतिष्ठितमिति च त्वन्मतानुसारिपदप्रयोगः कृतः। तथैव व्याख्यातं टीकाकृतापि। यदप्यपरस्परेति तदपि मंदं। अपरस्परसंभूतत्वव्याघातेन कामहेतुकत्वस्य टीकायामनवतारितत्वेनानुभवबाधतात्पर्येणैवावतारितत्वेनाव्याहत्युक्तेरसंगतेः। नच परस्परसंभूतत्वस्यैव दुष्टत्वेन तदभावस्यादुष्टत्वेन तस्य निंद्यत्वोक्तिरयुक्तेति वाच्यं। परस्परपदस्य व्यक्तिघटितवचनत्वाभावेन जातिघटितवचनत्वेन कर्मणः शरीरं शरीरात्कर्मेत्येवं क्रमेणैकस्मादेकोत्पत्तेष्टीकाकारोक्तायाः लाभेन तदभावस्य प्रमाणबाधेन निंदापादकत्वात्। त्वदुक्तरीत्या स्वभाववादपरत्वे परासंभूतमित्यस्यैव वक्तव्यतया अपरस्परेत्यस्यानुपयोगित्वेनासंगत्यापत्तेः। अत्रत्यासत्यपदस्यासद्बुद्धिगम्यार्थकत्वे मोक्षवादिभिः सर्वैरपि जगति तथाभावाभ्युपगमेन भगवतः स्वमतनिंदकत्वप्राप्त्या तादृशार्थस्य शंकितुमपि अशक्यत्वेनैवं सति त्वदुक्तरीत्येति त्वदुक्तेरत्यंतासंगतत्वं। अपि चोक्तवाक्यस्य नानामतपरत्वे एतां दृष्टिमित्यस्य जात्यैकवचनत्वापत्त्याऽस्वारस्यं। अस्तु वा त्वदुक्तरीत्यैवोक्तगीतावाक्यार्थः। तावताऽपि त्वन्मतस्यैतद्वाक्यनिंद्यत्वमव्याहतमेव। दृष्टिसृष्टिपक्षे जगतो विज्ञानसमकालिकत्वेन विज्ञानवादाविशेषात्। न चानादिदृश्यषट्कमप्यंगीकृतं तत्पक्ष इति वाच्यं। तावताऽपि जगत्पदप्रसिद्धार्थभूतपरिदृश्यमानजगतो विज्ञानसमकालिकतया तादात्म्येनैकजातीयास्थिरत्वोक्तिप्रयुक्तनिंदाया अपरिहारात्। एवमनीश्वरवादिनिंदापि त्वन्निंदारूपैव। एकजीववादे सर्वस्यैकजीवकल्पितत्वेनेश्वरस्यापि स्वप्नदृष्टराजादिवत् स्वाविद्याकल्पितत्वेन भवदंगीकारात्। बहुजीववादेपि सर्वेषां मुक्त्या चरममुक्तनंतरं मायाया अपि गतत्वेन तदुपाधिकेश्वरस्यापि निवृत्तत्वापरिहारात्। नहि स्वरूपतः परिकल्पितः निवर्त्यः श्रीकृष्णसंमत ईश्वररूपो भवति। तेन हि यो 'मामजमनादिं च' 'यो लोकत्रयमाविश्य बिभर्त्यव्यय

**(मू.) विश्वं सत्यं मघवाना युवोरिदापश्चन प्रमिनंति व्रतं वां ॥२९॥**

(टीका) हे मघवानौ धनादिमंतौ इंद्राबृहस्पती युवयोर्विश्वं सत्यमेव। न केवलमहमेवं प्रतिपन्नः किंतु आपोपि वां सत्यजगत्सर्जनादिकं कर्म जानंतीति द्विरूपं परमेश्वरं प्रत्युच्यते ॥

**(मू.) प्रघान्वस्य महतो महानि सत्या सत्यस्य करणानि वोचं॥३०॥**

(टीका) नु इदानीमस्य महतः सत्यस्य परमेश्वरस्य महांति सत्यानि कर्माणि प्रावोचमेव। कर्मणां सत्यत्वं विषयसत्यतामंतरेण नोपपद्यत इति विश्वसत्यतासिद्धिः।

**(मूलं) सत्यस्सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये ॥३१॥**

(टीका) स जगत्सृष्ट्यादिलक्षणोऽस्य परमेश्वरस्य महिमा सत्यः तं विप्रप्रधानेषु यज्ञेषु शवः सुखमुद्दिश्य स्तौमि ॥

---

ईश्वरः '' उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः '' ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठतीति इत्यादिनेश्वरस्यानादित्वाध्ययत्वसर्वोत्तमत्वादिकथनात्। एकजीवसंबंधिज्ञाननिवर्त्यस्य तदज्ञानकल्पितस्य त्वदंगीकृतत्वात्। एवं स्वभाववादिनदापि त्वन्निंदैव। अविद्यारोपस्य स्वत एवांगीकारात्। नच तस्यानादित्वं मयांगीकृतं नतु स्वतो जातत्वमिति वाच्यं। आरोपसामान्यस्यापि दोषजन्यत्वेन दंडं विना घटांगीकारवत् उक्तानादित्वस्याप्यप्रमाणिकस्वभाववाद एव पर्यवसानात्। अन्यथा प्रमाया इव भ्रमस्यापि स्वतस्त्वापत्तेः। कामहेतुकत्वोक्तिस्तु स्फुटं त्वन्निंदिका त्वयाजीवाविद्याकल्पित एव सर्वप्रपंचः ब्रह्म तु तत्स्वरूपत्वात्तथोच्यत इति अंबरादिकमीश्वरमायाकल्पितं दुःखादिकं जीवाविद्याकल्पितमिति च माया ब्रह्मणी सितासितरज्जुवत् जगत्कारणमिति च मायैव जगत्कारणं ब्रह्म तु तदधिष्ठातृत्वात्तथोच्यत इति च स्वेच्छानुसारेण सर्वश्रुत्यादिसिद्धेश्वरकारणत्वादेरुपचरितत्वादिकल्पनया तत्कारणकत्वं विहाय जगदुत्पत्तेरंगीकृतत्वात्। एवं च व्यर्थ एव तस्य वाक्यस्यार्थांतरकथनप्रयासः। मूलटीकोक्तीर्न किंचिदपि बाधकमीक्षितुमीष्ट इति स्थितं। धनादिमंताविति। तस्य (मघस्य) धननामत्वादिति भावः। आदिपदेन कर्मनिर्णयोक्तरीत्या यश आद्युपग्रहः इंद्राबृहस्पती इति। तयोरुत्तरार्धे अच्छेंद्राब्रह्मणस्पती इति प्रस्तुतत्वादिति भावः। बृहस्पतिः पुरोधाश्च ब्रह्मा च ब्रह्मणस्पतिरिति वचनाद्ब्रह्मणस्पतिरित्यस्य बृहस्पतिरिति व्याख्या। इदित्यस्यार्थ एवेति। आपोपीति कर्माभिमानिन इत्यर्थः। अप्शब्दस्य कर्मपरतया ईशावास्यभाष्ये व्याख्यातत्वात्। सत्यानीति। श्रुतौ सत्या इति शसोडादेशः। पूर्वसवर्णो वेति भावः। प्रावोचमेवेति। प्रशब्दोऽवधारणे। श्रुतौ प्रेत्येतद्वोचमित्यनेन संबध्यते छंदसि परे व्यवहिताश्चेति स्मरणात्। अडभावः छांदस इति प्रावोचमित्युक्तमिति ध्येयं। ननु कर्मणां सत्यत्वेपि जगत्सत्यत्वस्य किमायातमित्यत आह। कर्मणामिति। विषयेति। विषयस्य मिथ्यात्वे तस्य कृतिकर्मत्वानुपपत्त्या तत्कर्मकत्ववद्व्यापाररूपकृतिरप्यसत्या स्यादिति भावः। तथा चाविद्यकस्य कृतिविषयत्वायोगात्कृतिविषयत्वेन जगत्सत्यतासिद्धिरिति श्रुतावुपपत्तिरुक्ता भवति। पूर्वश्रुतौ ये कर्मसाक्षिणो देवास्तैरपि प्रमितस्वसर्जकत्वरूपोपपत्तिरभिहितेति ध्येयं। वचनव्यत्ययमादृत्य विप्रराज्ये विप्रप्रधानकेष्वित्युक्तं। शव इति धृत्वा सुखमिति व्याख्या। प्रतियोगे द्वितीया। स्वोद्देश्यकत्वेन स्तोत्रस्यैतद्व्यावर्तकरूपलक्षणं भवतीत्याशयेन फलितमाह। उद्दिश्येति। अनेन स्वोक्तार्थसाक्षितया

(मूलं) कविर्मनीषी परिभूस्स्वयंभूर्याथातथ्यतोर्थान् व्यदधा-
च्छाश्वतीभ्यस्समाभ्य इत्यादिश्रुतिभिश्च ॥ ३२ ॥

(टीका) कविःसर्वज्ञः, मनसामीष्ट इति मनीषी, परिभवति सर्वानिति परिभूस्सर्वोत्तमः स्वयमेव भवतीति स्वयंभूःस्वतंत्रः, परमेश्वरश्शाश्वतीभ्यस्समाभ्यः सर्वदा, अर्थान् महदादीन् याथातथ्यत एव व्यदधात् । नतु मिथ्याभूतानित्येवं श्रुतिस्मृतिभिः प्रपंचस्य सत्यतावगमात् । तदनिर्वाच्यतापराणां वाक्यानामर्थांतरपरत्वस्यैव युक्तत्वात् । नागमोऽनिर्वचनीये मानमिति स्थितं (सिद्धं) ।

---

ब्राह्मणप्रमितत्वरूपलिंगोक्त्या फलोक्त्या च सत्यत्वे तात्पर्यमवसीयते । मनसामीष्ट इति । मनश्शब्दः तत्स्थितेच्छाविषयपरः तथा च स्वाभिमतानामिति यावत् । ईष्टे समर्थः। अधीगर्थदयेशां कर्मणीति मनसामिति षष्ठीति ध्येयं । समाभ्य इति ल्यब्लोपे पंचमी । समा अनुसृत्येत्यर्थः । याथातथ्यत इति । यथार्थे तु यथातथमित्यमरोक्तेः यथातथपदं यथार्थवाचि । भावे ष्यञ् तृतीयार्थे तासिस्तृतीयावैशिष्ट्ये । तथा च याथार्थ्ययुक्तानकरोदित्यर्थः। 'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च' सत्यस्य सत्यमित्यादिवचनैः स्वभावस्यापि ईशाधीनत्वावगमात् । जगत्स्वभावत्वेपि याथार्थ्यस्य तद्विशिष्टत्वेन जगत्करणं युक्तमिति भावः। एवेत्यस्य व्यवच्छेद्यमाह। न मिथ्याभूतानिति । नन्ववधारणस्य श्रुतावभावात्कुतस्तत्पूरणेन व्याख्यानमिति चेन्न। अस्य विशेषणसामर्थ्यलब्धार्थप्रदर्शनपरत्वेन पूरणाकरणात् । तथाहि सत्योत्पादने सार्वज्ञमपेक्षितं । तस्य भोगयोग्यतया तन्निर्माणार्थे भोक्तृजीवतत्प्रयोजकादृष्टतदुचितदेशकालादिसर्वपदार्थज्ञानस्य साक्षात्काररूपस्य निश्चितप्रामाण्यकस्यापेक्षितत्वात् । अनुमित्याद्यात्मकत्वे लिंगादिप्रतिसंधानविलंबेन कर्मविशेषादिज्ञानानुदयेन तत्काले स्वापेक्षितकार्यजनकत्वायोगेन द्वितीयविशेषणस्य स्वाभीष्टकरणसामर्थ्यस्याभावप्रसंगात्।तथाच प्रथमविशेषणसामर्थ्याद्द्वितीयविशेषणसिद्धिरित्यनंतरं तदुक्तिः। ननु 'ब्रह्मादिसर्वजगतां प्रकृत्या मनसोऽपि च । ईशितृत्वान्मनीषी स' इति ईशावास्यभाष्यविरोध इति चेन्न। तत्राप्युक्तोपयोग्यधिकार्थलाभाय यथाश्रुतार्थमविहायैवार्थांतरांगीकारे बाधकाभावेन प्रकृते तदनुसरणे विरोधाभावात् । इदमपि सत्यत्वस्यैवोपपादकं । सत्यार्थकरणसामर्थ्याभावे हि मायिकवज्जगद्रंजनादिना स्वोदरभरणार्थं सृजेत् । मिथ्याभूतानां साक्षात्स्वपरानुपयोगित्वात् । अन्यथैंद्रजालिकस्य स्वोदरभरणार्थं भिक्षाटनादौ प्रवृत्तिर्न स्यात् । अविद्याबलादेव सार्वज्ञस्य वक्तव्यतया तदीयविक्षेपशक्तिबलात्तदाकारप्रतिभास ईश्वरस्य भवतीत्याशंकापरिहाराय परिभूरिति । तथा च सर्वपरिभावकत्वादविद्यारूपदोषं कथं सहेतेत्युक्तं भवति । ननु स्वस्य सार्वज्ञादिसंपादकत्वात्तस्याः गुणत्वेन तन्निरासो न क्रियत इति चेन्न । तत्संबंधं विना स्वस्यासामर्थ्यनिरासकत्वाभावे सर्वपरिभावकत्वेन सर्वोत्तमत्वानुपपत्तेः । नन्वेतादृशगुणाः कस्यचिदनुग्रहादिना साध्याश्चेत्कथं सर्वपरिभावकत्वेन सर्वोत्तमत्वमित्यतः स्वयंभूरिति स्वातंत्र्यमुक्तं । इदं सत्यतोपपादकमपि भवति । अचिंत्यशक्तिरूपैतदुपपाद्य परमैश्वर्यवत्वेन दुर्घटतया प्रतीयमानस्य जगत उत्पादकत्वासंभवादित्याशयेन परमेश्वर इति तल्लब्धार्थ उक्तः। मायिकसर्जने मायासाधनादेरेवापेक्षितत्वेन स्वातंत्र्यादिगुणानामनुपयोगः । सार्वज्ञादेर्मायिकत्वे स्वयंभूत्वानुपपत्तिः। स्वयमिति

विशेषोक्तिबलेनान्यनैरपेक्ष्येण सार्वज्ञादिगुणवत्तया स्थितिरूपभवनस्योक्तेः। समाभ्य इत्यनेनापि सत्यता लभ्यते। सत्यभूतकारणादिद्वारा कार्योत्पादने विलंबस्यापेक्षितत्वात्। मिथ्याभूतस्य तु मायामात्राधीनत्वेन विलंबे बीजाभावात्। परमार्थबोधकवस्त्वादिपर्यायार्थशब्देनापि महदादीनां सत्यता लभ्यते। अत एवार्थशब्देनैव सत्यतालाभात्तदीयस्वभावभूतमपि याथार्थ्यमीशाधीनमिति बोधनाय टीकायां याथातथ्यतो व्यदधादिति क्रियया सह योजितं। न त्वर्थेष्वन्वयसूचनाय यथार्थानर्थानित्याद्युक्तं। अर्थपदस्य परमार्थपरत्वं अर्थस्वरूपं भ्राम्यंत इत्यादौ परेणाप्यंगीकृतमिति एतेन सत्यत्वपक्षे विशेषणानुपयोगः। स्वोक्तार्थे तदुपयोग इत्यद्वैतचंद्रिकोक्तिरनादर्तव्यैव। त्वदुक्तार्थे विशेषणानुपयोगस्याधुनिकोक्तनिरासावसरे दर्शयिष्यमाणत्वात्। मूले आदिपदेन यच्चिकेत सत्यमितं न मोघं सत्यमेनमनु विश्वेमदंतीत्यादीनामन्यत्राचार्योदाहृतानां ग्रहणं स्फुटत्वाट्टीकायां तदनुक्तिरिति द्रष्टव्यं। उक्तमूलवाक्यस्य केन सहैकवाक्यत्वमित्याकांक्षापूरणाय विशिष्टार्थमुपसंहरति। एवमित्यादिना। यदत्र केनचिदुक्तं मिथ्यात्वानुमानस्य श्रुतिबाधमाशंक्याद्वैतसिध्यद्वैतचंद्रिकाद्युक्तमुक्तं। ननु प्रत्यक्षबाधाभावेऽपि श्रुत्यैव बाधोस्तु तथाहि 'विश्वं सत्यं मघवाना युवोरिदापश्चन प्रमिनंति व्रतं वां। अच्छेंद्रा ब्रह्मणस्पतीहविर्नोन्नंयुजेववाजिनाजिगातं।' इति ऋक्संहिताद्वितीयाष्टकवाक्येन देवप्रमितत्वरूपतात्पर्यलिंगसहितेन सत्यतावगमादिति चेन्न। तत्र हि विश्वं सत्यमिति वाक्येन विश्वपरमार्थत्वाबोधनात्। तथा हि हे इंद्रब्रह्मणस्पती भवंतौ मघवंतौ धनवंतौ मघमिति धननामसु पाठात् विश्वं सर्वं सत्यं सद्भावत्वात् फलावश्यंभावित्वाद्वा कर्म युवयोरित् युवयोरेव युवामेवोद्दिश्य सर्वाण्यनुष्ठेयानीत्यर्थः। आपो व्यापनशीला देवताः। चनेत्येतन्निपातद्वयं न हि देवो न मर्त्यो महस्तव क्रतुं परः' इत्यादौ महेतिशब्दवत् ददाति मह्यं यादुरीत्यादौ यादुरीत्यादिवदेकपद्यमध्यापकसंप्रदायसिद्धं। युवयोर्व्रतं सकलं कर्म च न प्रमिनंति नहि संति मी हिंसायां क्र्यादिः। किंतु अनुमोदंत इति यावत्। नोऽस्माकं हविर्दध्यादिकं अन्नं च पुरोडाशादि अच्छा अभिलक्ष्य वाजिनावेगवंतौ अश्वाविव युजा युक्तौ आ जिगातमागच्छतेत्येतत्परत्वेन स्तुतिपरस्यैतद्वाक्यस्य विश्वसत्यत्वे तात्पर्याभावात्। शाक्मनाशाकोरुणः सुपर्णआयोमहः शूरः सनादनीळः यच्चिकेतसत्यमितंनमोघंवसुस्पार्हमुतजेतोतदाता' इत्यपींद्रस्तुतिपरतया न विश्वसत्यत्वतात्पर्यवती। तथाहि शाक्मनाशक्य एव शाक्म तेन शाक्मना बलेन शाकः स्वशक्त्यैव कर्तुं शक्तः अरुणः सुपर्णः कश्चिच्छोभनपर्णः पक्षी आगच्छतीत्यध्याहारः उपसर्गश्रुतेः यो महा महान् शूरः विक्रांतः सनात् पुराणः अनळिः अनीडः नीडा स्वीकर्ता नहींद्रोऽग्निवत् कुत्र विद्यते नीडं करोति एकः सुपर्ण इत्यादिरूपकेणेंद्रमाह। स इंद्रः इदमिदानीं कर्तव्यमिति यज्जानाति तत्सत्यमित् सफलमेव न मोघं न विफलं स्पार्हं स्पृहणीयं वसु धनं जेता जयति शत्रुभ्यः सकाशादुत अपि दाता ददाति स्तोतृभ्यः जे ता दातेति तृन्नंतेन न लोकेत्यादिना षष्ठीप्रतिषेधः। नच विश्वं सत्यमित्यादौ सत्यशब्दस्याप्रसिद्धार्थता यो वै धर्मः सत्यं वै तत् तस्माद्धर्मं वदंतमाहुः। सत्यं वदतीति श्रुतौ धर्मशब्दस्य सत्यशब्दसमानार्थकत्वोक्तेः। नच वैदिकलौकिकप्रसिद्धिभ्यां सत्यशब्दस्य परमार्थपरतैव युक्तेति वाच्यं। अन्यपरवाक्ये प्रमाणांतरविरुद्धार्थपरताया अयुक्तत्वात्। उपक्रमादिसमग्रतात्पर्यलिंगसन्निवस्याद्वैतवाक्यस्यैव प्राबल्यात्। एवं 'प्रधान्वस्य महतो महानि सत्यासत्यस्य करणानि वोचमित्यत्रापि सत्यपदं सफलपरमेव। सत्यसंकल्प इत्यादौ तत्प्रयोगात्। सत्यः सो अस्य महिमेत्यादावपि महिमशब्दस्य स्वे महिम्नि प्रतिष्ठित इत्यादाविव परमानंदरूपस्वरूपमहिमपरत्वात्।

तथात्वे परमार्थत्वरूपसत्यत्वं विवक्षितुं शक्यं । महिमशब्दस्य जगत्सृष्ट्यादिपरत्वे तु सत्यपदं सफलपरमेव । 'कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः' इत्यत्र यतः कविः क्रांतमतीतं सर्वं दृष्टवान् यतश्च मनीषी मनसा ईष्टे उहापोहकुशलः यश्च पूर्वसृष्टिविरुद्धसृष्टिमिच्छतामसुराणां परिभावसमर्थः यतश्च स्वयमन्यनैरपेक्ष्येण पूर्वसृष्टप्रकारेण जगद्भावनसमर्थस्ततो हेतोर्याथातथ्यतः यादृशतादृशभावं प्रतिसंधाय व्यदधादित्यर्थः। परमते तु तथागतइत्यादौ तथाशब्दस्यैव सत्यार्थताया अमरटीकादावुक्ततया यथाशब्दस्य तद्धितस्य च वैयर्थ्यं स्यादित्यन्यत्र विस्तर इति तदयुक्तं । सत्यशब्दस्य कर्मपरतायाः अप्रसिद्धत्वेनाबाध्य एव बहुप्रसिद्ध्या शक्तिमत्वेन च तदर्थकताया एव युक्तत्वात् । एवं विश्वशब्दस्य जगत्येव प्रसिद्धत्वेन कर्मत्वसमनियतसर्वत्वावच्छिन्नपरत्वमप्ययुक्तं । नच सत्यपदस्य धर्मपरत्वमुदाहृतश्रुतिसिद्धमिति मुख्यं तत्रापीति वाच्यं। सदसत्पदस्थले पंचमहाभूतेषु तत्प्रयोगस्य श्रुतिसिद्धस्य लक्षणयाऽपि संभवादिति त्वयैव भाषितत्वेन तद्रीतिरत्रापि वक्तुं शक्यत्वात् । मह्यं ददाति याद्रुरीत्यादौ द्रुरी आर्द्रवती या इति व्याख्यानमध्यापकसंप्रदायसिद्धं । याद्रुरीत्येकपद्यं परित्यज्य कृतं यदि ऋष्यादिमतेन वा पुराणादिप्रमाणानुसारेण वा प्रवृत्तं तदा तत्रोभयोस्तुल्यबलत्वात् तत्र षोडशिग्रहणाग्रहणवत् उभयमपि विकल्पेन युक्तं । यदि त्वादृशस्यैव कस्यचिद्ग्रंथकृतः स्वेच्छानुसारेण व्याख्यानं तदा तदप्ययुक्तमेव पूर्वप्रदर्शितातिप्रसंगात् । इत्थं च चनेत्यत्र भिन्नपदत्वमाश्रित्य व्याख्यानमशुद्धमेव । भवदुक्तरीतावपि आपश्चन आपोपि व्रतं कर्म वा भवदुद्देश्यकं जानंतीत्यर्थसंभवे भिन्नपदत्वस्य प्रमिनंतीत्यस्यानुशिष्टत्वेपि तत्र प्रयोगप्राचुर्येणाप्रसिद्धहिंसार्थकतया व्याख्यानस्यायुक्तत्वात् । नन्वद्वैतचंद्रिकाच्छाययैतद्वाक्यस्य देवसंबंधिजगत्सत्यत्वाभावपरतायाः अद्वैतसिद्धिकृदभिप्रेतत्वावगमात्तत्र भिन्नपदाश्रयणं तस्य युक्तं । ततस्तदनुसार्यस्मद्व्याख्यानमपीदं युक्तमिति चेन्न। यादृशव्याख्याने भिन्नपदत्वमावश्यकं तादृशव्याख्यानं कंठतो प्रदर्श्य यत्र तदनावश्यकत्वं तादृशव्याख्याने भिन्नपदाद्याश्रवणस्याद्वैतसिद्धिकृत एवायुक्तत्वेन तदनुसारित्वद्व्याख्यानस्य सुतरामयुक्तत्वात्।एवं यच्चिकेतेत्यत्र यत्कर्तव्यतया जानातीत्यंगीकारे कर्तव्यत्वेनेति पदाध्याहारप्रसंगः। सत्यपदस्य फलाविसंवादित्वरूपलाक्षणिकार्थप्रसंगश्चस्यात्। तदपेक्षया यच्चिकेत जानाति तत्सत्यमबाध्यमित्यर्थ एव युक्तः । अध्याहाराभावात् सत्यपदप्रसिद्धार्थात्यागात् । अबाधितज्ञानवत्वरूपोत्कर्षलाभाच्च। नच सत्यसंकल्प इत्यादौ सफलेऽपि सत्यपदं प्रयुक्तमिति वाच्यं। एवमपि क्वचिदेव तस्य प्रयुक्तत्वेन लक्षणयाऽपि तस्य संभवेनाप्रसिद्धत्वेन तस्य मुख्यार्थत्वायोगात्।एवं सत्यः सो अस्य महिमेत्यादौ महिमापदं विनिगमकाभावादानंदादिवज्जगत्कर्तृत्वादिपरमपि जन्माद्यस्य यत इति भगवता सूत्रकारेण तस्य ब्रह्मलक्षणत्वेनाभिधानात् । प्रसिद्धानामेव लक्षणत्वात् । अत्र च इत्यनेन प्रसिद्धार्थकेन तेषां तदुपपाद्य पूर्णानंदादिलक्षणानां ग्रहणात्। तथा च सत्यपदमप्यबाध्यार्थकमेव । स्वरूपानंदादावश्यं त्वयाऽनुसर्तव्यत्वात् ।वस्तुतः सत्यसंकल्प इत्यत्रापि सत्यपदमबाध्यार्थकमेव ।संकल्पस्य तद्विषयकत्वात् सत्यस्य संकल्प इति षष्ठीतत्पुरुषाभिप्रायेण विषयविषयिणोरभेदोपचारेण कर्मधारयविवक्षया वा तत्प्रयोगः । यथार्थज्ञानं मिथ्याज्ञानमिति प्रयोगवत् । संकल्पविषयस्य परंपरया तत्साध्यतां विनाऽबाधितत्वं न निर्वहतीति तस्य सफलत्वमर्थतोऽधिगम्यते । अन्यथा मिथ्यासंकल्प इति व्यवहारानुसारेण मिथ्यैष व्यवसायश्चेत्यादिप्रयोगात् । बाध्यार्थकत्वसमकक्षतया वैय्यर्थ्यार्थकत्वस्य प्राप्त्या मिथ्यादिपदेन पुरा

णादौ जगतो मिथ्यात्वमुच्यत इति त्वदभ्युपगमोऽनुपपन्नः स्यात् । किं च पूर्वश्रुत्योः कथं चित्त्वदुक्तोऽर्थः अस्मन्मतरीत्या वक्तुं शक्यते त्वन्मते त्वयुक्त एव । इंद्रबृहस्पतिरूपदेवताद्वयस्यैव गृहीतत्वेन तयोरपि जीवत्वेनाविशेषात्सर्वकर्मणां तदुद्देश्यकत्वस्य कर्तव्यत्वेन तदीयज्ञानसामान्ये साफल्यस्य च बाधितत्वात् । न चैतद्यथायोग्यं ग्राह्यमिति वाच्यं । विश्वपदवैयर्थ्यापत्तेः । यच्चिकेत सत्यमिदित्यवधारणसाहित्येन सामान्योक्तिपूर्वकं न मोघमिति वैफल्यव्यवच्छेदानुपपत्तेश्च । नच स्तुतौ तात्पर्यान्न वास्तवत्वचिंताऽवसर इति वाच्यं । उक्तवाक्ययोः सर्वस्वाभिधेयत्यागेन देवताप्राशस्त्यमात्रलाक्षणिकत्वापत्तेः । ओमिति चेत् । तस्य सत्यशब्दस्याबाधितार्थकत्वेऽप्युक्तक्रमसंभवेन म्लेंछ गुरूक्तब्राह्मणाचारविरुद्धाचारकर्तव्यतावदस्मदुक्तार्थविरुद्धत्वमात्रेण त्वदुक्तार्थस्योपादेयत्वापातात् । एतेन लौकिकवैदिकप्रसिद्ध्यनुरोधेन सत्यशब्दस्याबाधितार्थकत्वमस्त्वित्याशंक्यान्यपरवाक्ये प्रमाणांतरबाधितसत्यार्थकत्वमयुक्तं । उपक्रमादिसचिवाद्वैतश्रुतिप्राबल्येन विश्वसत्यतायास्तद्विरुद्धत्वादिति समाधानाभिधानमप्ययुक्तं । त्वदुक्तार्थत्वकत्वेऽपि प्रमाणांतरविरोधस्य दर्शितत्वात् । मिथ्यात्वप्रतिपादकश्रुतेरेवाभावस्य वाचारंभणादिवाक्यार्थप्रतिपादनेन दर्शनीयतया तत्प्राबल्यस्य कपोणिगुडायितत्वाच्च । न चेंद्रादयोऽपि न जीवा इति वाच्यं । तथात्वेनेकेश्वरापातेन जगद्भिलयापातात् । तेषां जीवत्वेनास्मदविशेषस्य त्वद्भाष्ये शतश उक्तत्वाच्च । यदपीशावास्यश्रुतिव्याख्याने कविः क्रांतमतीतं सर्वं दृष्टवानिति कविशब्दव्याख्यानं तदनागतवर्तमानरूपाशेषार्थविषयकज्ञानालाभेन कविशब्दमुख्यार्थत्यागाच्च हेयं । यदपि मनीषीत्यस्योहापोहकुशल इति व्याख्यानं तदत्यंताशुद्धं । तस्यानुमितितर्कादिरूपस्य साक्षाज्जगद्द्रष्टरि यः सर्वज्ञः सर्वविदित्यादिश्रुतिसिद्धे परमेश्वरे ऽसंभवात् । परिभूरिति सामान्यत उक्त्या सर्वोत्तमत्वलाभेन तं विहायासुरपराभावकत्वमात्रार्थकत्वकथनानौचित्यात् । यदपि स्वयंभूरित्यस्यान्यनैरपेक्ष्येण जगद्भावनसमर्थ इति स्वातंत्र्यार्थकत्वपरित्यागेन व्याख्यानं तण्णिजर्थस्य अधिकस्य निवेशादश्रुतस्य जगतः संबंधाच्च स्वेच्छयोक्तार्थकरणे क्लिष्टं । स्वयमेव भवतीति व्युत्पत्त्याऽन्यनैरपेक्ष्येण सत्तारूपस्वातंत्र्यलाभेन तदेव युक्तं । यदपि याथातथ्यत इत्यस्य यादृशतादृशभावं प्रतिसंधायेति व्याख्यानं तत्र वक्तव्यं किं यथातथा इति समुदायात् ष्यञ् किं तथापदमात्रात् किंवा यथातथा इति समासात् । नाद्यः । यथापदस्य सादृश्यार्थकत्वेन तथापदस्यापि तदुपस्थापितसादृश्यादिरूपप्रकारपरामर्शितया तदुभयार्थयोर्भिन्नवाक्ययोरेव यथा घटस्तथा पट इत्यादौ निविष्टत्वेनैकार्थीभावरूपसामर्थ्याभावेन समासानुपपत्त्या तदुभयघटितस्य प्रातिपदिकत्वाभावेन ष्यञोऽनुपपत्तेः । न द्वितीयः । यथापदस्य वृद्ध्यभावप्रसंगात् । तथापदस्यैव तद्भावप्रसंगाच्च यादृशभावरूपार्थस्याप्राप्तेश्च । नापि यथातथ इति प्रातिपदिकात् यथापदस्य सादृश्यार्थकत्वे अव्ययीभावस्य यथा सादृश्य इत्यनेन निषिद्धत्वात्समासांतरस्याप्राप्तेः सुप्सुपेति कथंचित्समासे वक्तव्ये यथार्थवाचियथातथपदस्य कोशादिसिद्धत्वात् तदर्थकत्वे समासोस्तु नतु अन्यार्थे । घटस्य यादृशः प्रकारः तादृशप्रकारोपेतः पट इत्यर्थे घटस्य यथा तथा पट इत्यप्रयोगात् । नहि ह्रासकर्तृत्वं निमित्तीकृत्य तत्र निरुक्तौ वर्णागमादिना निष्पन्नस्य हंसवाचिहंसशब्दस्य ह्रासकर्तृत्वादियोगलभ्यार्थमादायान्यत्रवर्णागमादिना तादृशरूपमुपपद्यते । किंच यादृशतादृशभावमिति व्याख्याने केषामित्याकांक्षायां पूर्वकल्पीयपदार्थानामित्यध्याहारप्रसंगः । अध्याहारेऽपि पूर्वसृष्टाः पदार्थाः यथातथाभावं प्रतिसंधायेति अद्वैतचंद्रिकोक्तस्य यादृशतादृशभावमिति

त्वदुक्तस्य कथमनेन लाभः। तथात्वे यथातथापदयोः परस्परमनन्वितार्थत्वेनासमर्थस-मासत्वापत्तेः। अद्वैतसिद्धिकारस्तु दूषणार्थं न्यायामृतानुवादावसरे तदनुदाहृतानामेव यथातथार्थान्व्यदधादिति श्रुतिमुदाहृत्य पूर्वसृष्टिप्रकारेण सर्जनसमर्थ इति व्याख्यातवान्। तस्यान्यथानुवादरूपदोषः स्फुट एव। यदपि तद्व्याख्याने उक्तशंकापरिहारायार्थतौल्येन श्रुत्यंतरमेवोदाहृतमित्यभिहितं। तदपि न सम्यक्। उपस्थितवाक्यं याथातथ्यत इत्यादेरु-पपादनसाकांक्षं विहाय तदुपपादनमकृत्वा श्रुत्यंतरग्रहणे बीजाभावात्। तस्मान्न्यायामृत-वाक्ये तस्य भ्रांतिरेव। नापि तद्व्याख्यानोक्तमपि युक्तं तादृशश्रुतेरनुपलंभात्। यदपि मन्मते यथापदस्य वैय्यर्थ्यकथनं तथा तत्खितस्यापि तदत्यंतमसंगतं। यथार्थ-वाच्युक्तशब्दशरीरे तद्वाचितथाशब्दस्याप्रविष्टत्वात्। अन्यथा मापतिशब्दादिघटितत्वेन लोके रमापत्यादिशब्दानामप्रयोगप्रसंगात्। नच सत्यस्सदुक्तरीत्या सर्वसार्थक्येनार्थांतरे श्रुतेर्यथार्थबोधकत्वतात्पर्ये स्वल्पाक्षरघटितपदोपादानं विशिष्टप्रयोगेऽप्यावश्यकं वि-हाय श्रुतावाधिकोपादानं निर्बीजमिति दूषणवाक्यतात्पर्यमिति वाच्यं। यथार्थार्थकत्वे कस्यापि वैय्यर्थ्याभावेन सर्वानुपूर्व्या अपि सफलत्वात्। अन्यथा सत्यं ज्ञानमित्यत्र सत्य पदशरीरनिविष्टं सत् इत्यंशेनैव यथार्थवस्तुबोधनसंभवे यमित्यस्य वैय्यर्थ्यापातेन सत् शुभं यापयतीत्यादिरीत्याऽर्थस्य प्राप्त्या ब्रह्मणः सत्ता न सिध्येत्। एवं त्वमहमस्मि भगवो देवते इत्यादौ अथ योन्यां देवतामुपास्ते इत्यत्र देवतापदस्य देवार्थकत्वं न स्यात्। देवपदेनैव तद्बोधने ते तामित्यनयोर्वैय्यर्थ्यप्रसंगादुक्तदोषेणैवार्थांतरस्य कथंचित्कर्त-व्यतापाताच्च। तस्मादुक्तरीत्या दूषणाभिधानमसंगतमेव। तद्धितस्तु भावार्थकतया सार्थकस्तदुपपादितं व्याख्यानावसर एवेति न तद्वैय्यर्थ्यशंकापीति न किंचिदेतादित्यन्यत्र विस्तरः। ननु सत्यत्वश्रुतयोऽनुवादका एव। अतः कथं ताभिः सत्यत्वं सिध्यतीति चेन्मैवं। सत्यत्वस्य त्रिकालाबाध्यत्वरूपस्य प्रत्य-क्षेणागृहीतत्वे तद्ग्राहकतया श्रुतीनामनुवादकत्वायोगात्। ननूपक्रमादितात्पर्यलिंगोपेताद्वै-तश्रुतिविरोधान्न तत्तात्पर्यकत्वं युक्तमिति वाच्यं। श्रुत्यर्थविचारप्रवृत्तस्योक्तरीत्या विरोध-स्फूर्तौ मिथ्यात्वश्रुतिप्राबल्यग्रहस्यैवानुदयात्। न चोपक्रमादिभिः स्वार्थतात्पर्ये ऽवधृते तात्पर्यवद्वाक्यबोध्यनिषेधप्रतियोगिसमर्पकतया ऽर्थक्रियाकारित्वादिलिंगाभासादिप्राप्तस-त्वानुवादकत्वेन तच्छेषत्वनिश्चय इति वाच्यं। निर्णीतार्थकानां खलूपक्रमादीनां प्रकरणता-त्पर्यनिश्चायकत्वं वाच्यं। तदेव न घटते। द्वितीयवस्तुसामान्यनिषेधे स्वस्यापि मिथ्यात्व-प्राप्त्या बोधकत्वं न स्यादित्युपपत्तिविरोधे प्राप्ते तस्यानिर्वचनीयत्वरूपतृतीयप्रकारसिद्धेः प्रागपरिहार्यतया तस्य च प्रत्यक्षस्वार्थानुमितिभ्यां असंभवस्य स्फुटं निरवकाशतया तद्बो धकागमाभावस्य च प्रदर्शितत्वेन प्रेक्षावतां तैस्तच्छिध्यमावात्। उक्तवाक्यार्थानुपपत्त्यैव तत्कल्पनस्य तदर्थावधारणोत्तरकालिकस्येतरेतराश्रयेण प्रेक्षावतां दुर्घटत्वात्। अतः सत्य त्वबोधकागमैः स्वार्थबोधनकाले तादृशागमप्राबल्यमूलकविरोधानुपस्थित्या एतेषां प्रत्य-क्षानुमानादिविरोधव्याहत्याद्यभावेन स्वर्गकामादिवाक्यवत् स्वार्थनिश्चायकत्वात्। निर्णी तार्थकैतद्विरोधेनाद्वैतागमानां तदविरोध्यर्थांतरपरत्वस्यावश्यकत्वात्। नच स्तुतिपरवा-क्यस्थसत्यादिशब्दैर्विश्वसत्यता न सिध्यतीति वाच्यं। किंतु स्तुतिपरवाक्यघटकपदानां प्रसिद्धार्थकत्वाभाव इति नियम इति सत्यपदस्य प्रसिद्धार्थकत्वाभावेन कथंचिदन्यार्थ-परत्वात्। किंवा प्रसिद्धार्थकत्वेऽपि तद्वाक्यस्य तत्र तात्पर्याभावात्। नाद्यः। येनाश्रुतं

श्रुतं भवतीत्यादिषु सर्वत्रार्थवादवाक्येषु विद्यमानपदानामपि प्रसिद्धार्थत्यागेनात्यंताप्रसिद्धार्थकत्वापातात्। न द्वितीयः। तात्पर्याभावो नाम सर्वथा तत्प्रमानुकूलशक्तिरूपतात्पर्याभावो वा प्राधान्येन तत्प्रतिपत्त्यनुकूलशक्तिरूपतात्पर्याभावो वा। नाद्यः। तादृशवाक्येन तादृशप्रमोदयस्यानुभवसिद्धत्वात्। अन्यथा तद्बोधकपदानामनुपयोगेनाभावप्रसंगात्। विशिष्टवाक्यं देवताप्राशस्त्यलक्षकमिति न तेन जगति सत्यतासिद्धिरिति चेत् तर्ह्यर्थवादवाक्यस्यापि प्राशस्त्यलक्षकतया तद्वाक्यार्थीनावांतरबोधविषयस्याप्यसिद्ध्या रामरावणादिसर्वस्वरूपाणामपलापापत्तेः। न चैतद्युक्तं। भूतार्थवादेभ्योऽप्यबाधितार्थसिद्धेस्त्वया ऽप्यंगीकृतत्वात्। नच जगत्सत्यत्वमपि भिन्नत्वादितर्कविरोधेन मिथ्यात्वानुमानविरोधेन च बाधितमिति प्रेक्षावतां तन्न सिध्यतीति वाच्यं। श्रुतीनामिवासामपि स्वव्याहत्यादिनोत्थातुमशक्यतयेतरबाधनाक्षमत्वात्। ननु श्रुत्यनुमाने परस्परसाहित्येन मिथ्यात्वं निश्चाययती सत्यत्वं बाधिष्यत इति चेन्न। प्रसिद्धप्रकारैः व्याहतिपरिहारोपायाभावेनानिर्वचनीयत्वस्य तृतीयप्रकारस्य श्रुत्यनुमानाधीननिर्णयोत्तरसिद्धिकस्य व्याहतिपरिहाराक्षमत्वेनोक्तानुमानसचिवश्रुतिभिरपि तदर्थत्वेन मिथ्यात्वानिश्चयात्। अन्यथा 'प्रजापतिरात्मनो वपामुदखिदत्' 'अंधोमणिमविंदत' इत्यादीनां स्वानुकूलपुरुषमतिकल्पितयुक्तिसाहितानां स्वार्थनिश्चायकत्वप्रसंगात्। नापि मुख्यतया तत्प्रमापकत्वं नास्तीति द्वितीयः पक्षः। मुख्यतया तत्प्रतिपादकत्वाभावेऽपि स्रुक्स्रुवाहवनीयादीनामिव प्रतिपाद्यतामात्रेण तत्सिद्धिसंभवात्। नच तेषामिवोपयोगाभावात् नास्य सिद्धिरिति वाच्यं। प्रमितार्थस्योपयोगाभावेनापन्होतुमशक्यत्वात्। अन्यथा प्रत्यक्षसिद्धोदासीनानिष्टासिद्धिप्रसंगात्। जगतः सत्यत्वे तत्कर्तुरैंद्रजालिकादिव्यावृत्तनैजशक्तिसिद्ध्या उत्कृष्टत्वसिद्धावुपयोगस्यापि सत्वाच्च। नच देवताप्रीत्यर्थं स्तुतिः क्रियते। सा चाविद्यमानगुणकथनेनापि भवतीति किमर्थं वास्तवोत्कर्षसिद्ध्यर्थं तदुक्तिरिति वाच्यं। अज्ञानां स्वाविद्यमानगुणकथने स्वस्मिन्नुत्कर्षभ्रमेण स्तावके प्रीतिसंभवेऽपि सर्वज्ञकल्पानां देवानां स्वाविद्यमानगुणकथनेनोत्कर्षभ्रमाद्ययोगेन प्रीत्युत्पादायोगात्। मत्युतासूयोत्पत्तेरेव प्रसंगाच्च। दृश्यंते हि लोके महापुरुषाः अविद्यमानस्वगुणकथनविद्वेषिणः। अत एवोक्तं विराटपर्वणि 'असूयंति हि राजानो जनाननृतवादिनः। तथैव चावमन्यंते नरान्पंडितमानिनः॥' इति। पामरा अपि स्वासंभावितगुणवक्तरि अपहासकर्ताऽयमिति विद्विषंत्येव नानुरज्यंते। तस्मात्सत्यस्तवस्यैव युक्तत्वात्। स्तावकवाक्येनापि जगत्सत्यत्वसिद्धिर्भवत्येव। अस्ताघकसत्वबोधकैर्वाक्यैः 'सत्यं भिदा तस्योपनिषत्सत्यस्य सत्यं' इत्यादिभिः अनाद्यनंतं जगदेतदित्यादिभिश्च तत्सिद्धिरप्रत्यूहैव। अत्राप्यनंतत्वकथनेन न चान्यथेत्याद्युत्तरार्धेन बाधाभावप्रतिपादनेनाबाध्यत्वरूपसत्यत्वस्यैवोक्तेः। नच सत्यत्वस्य प्रत्यक्षाग्राह्यत्वमते तदवच्छिन्ने कथं शक्तिग्रहः येन शाब्दबोधे तद्भासेतेति वाच्यं। सत्यं ज्ञानमित्यादावप्यखंडार्थद्वारीभूतसत्यत्वभानाभावप्रसंगेन तदनुपपत्तेस्तवापितुल्यत्वात्। अतींद्रियगुरुत्वाद्यवच्छिन्नवाचिगुर्वादिपदानामिव कथंचित्पूर्वव्यवहारानुरोधेन शक्तिग्रह इति समाधानस्यापि तुल्यत्वाच्च। नच सन्घट इत्यादिप्रत्यक्षे अबाध्यब्रह्मतादात्म्यभाने ब्रह्मांशे अबाध्यत्वं भासत इति तदवच्छिन्ने शक्तिग्रहः संभवतीति वाच्यं। लौकिकप्रतीतेरावयोर्मतेन नियंतुमशक्यत्वेन घटादावबाध्यतादात्म्यविषयकत्वमबाध्यत्वविषयकत्वं वाऽस्तु। उभयथाऽप्यबाध्यत्वविशिष्टविषयकप्रत्ययस्यावश्यकत्वेन ममापि शक्तिग्रहसंभवात्। घटसत्वग्रहे बाधकरूपयोग्यानु-

पलब्ध्यनुपपत्तिरूपबाधकस्य ब्रह्मणि तद्भेदेऽपि तुल्यत्वेन सन् घट इत्यादिप्रतीतेरबाध्यत्वांशे साक्षात्कारत्वस्यानुपलब्धत्वस्य वा वक्तुमशक्यत्वाच्च। तदुपाहितस्य मिथ्यात्वेन स्वतः स्फुरणायोगात्। स्यादेतत्। एकमेवाद्वितीयमित्यादिका श्रुतिरपौरुषेयत्वेनोपक्रमस्थत्वादिना च प्राबल्येन गृह्यमाणा स्वस्य मुख्यार्थत्वसिद्धिनिर्वाहायोपस्थितमपि युक्तिविरोधमवधूय द्वितीयसामान्याभावमेव बोधयति न तु सजातीयद्वितीयराहित्यादिकं मुख्यार्थत्यागप्रसंगात्। तथाच यद्यत् ज्ञेयं तत्सत्वासत्वान्यतरप्रकारोपेतं यत्त्रैकालिकनिषेधप्रतियोगि तन्नार्थक्रियाकारीति व्याप्तिज्ञानप्रामाण्ये श्रुतेर्मुख्यार्थकत्वानुपपत्तिरूपबाधकतर्केण तादृशव्याप्तिज्ञाने प्रामाण्याभावनिश्चये वा श्रुतेर्मुख्यार्थत्वं त्याज्यं वा तादृशनियमग्रहप्रमात्वं त्याज्यं वेति संदेहे वा तादृशव्याप्तिग्रहमूलकतर्कानुत्थानात्सत्यत्वश्रुतीनामप्यन्यपरवाक्यप्रविष्टानां दौर्बल्यग्रहेण तद्विरोधिज्ञानस्याकिंचित्करत्वेनाद्वितीयादिश्रुतिभिर्मिथ्यात्वग्रहो जायते। तदनंतरभाविनी तृतीयप्रकारादिकल्पना सर्वापि फलमुखत्वान्न गौरवसंपादिकेति तादृशनिश्चितार्थद्वैतश्रुतिविरोधान्न सत्यत्वश्रुतीनां स्वार्थपरत्वमिति तदेतदसत्। श्रुतेर्मुख्यार्थत्वलाभमात्रनिर्वाहाय निश्चिताव्यभिचारकनियमग्रहाप्रामाण्यग्रहोत्पत्तौ आदित्यो यूप इत्यादिश्रुतिमुख्यार्थलाभानुरोधेनादित्ययूपयोर्भेदावगाहिप्रत्यक्षप्रामाण्यसंशयादिनादित्ययूपयोरभेदस्य श्रुत्यर्थतामंगीकृत्य तदुपपादकाप्रामाणिकपरंपरा कल्पनीया स्यात्। नच प्रधानवाक्यस्यैवं रीतिरिति वाच्यं। श्रुतित्वापौरुषेयत्वादिसाम्ये प्रधानवाक्यस्थानि पदानि प्रबलप्रमाणांतरविरोधव्याहत्यादिसद्भावेऽपि यथाश्रुतार्थकान्येवाप्रधानवाक्यानि तु प्रमाणांतरविरोधाभावे मुख्यार्थान्यन्यथा तु नेत्यत्र त्वद्वचनातिरिक्तनियामकाभावात्। किं च किमिदं प्राधान्यं। किमनुष्ठेयविधायकत्वमुतानन्यशेषत्वं उत सप्रयोजनार्थावगमकत्वमुत प्रकरणादौ पठितत्वं। नाद्यः। अद्वितीयादिश्रुतेर्विधायकत्वाभावात्। सोमेन यजेतेत्यत्र सोमपदस्य प्रमाणविरोधपरिहाराय सोमवल्लाक्षणिकत्वाभावप्रसंगाच्च। अत एव न द्वितीयः। उक्तविधिवाक्यस्यानन्यशेषत्वात्। एकमेवाद्वितीयमित्यादिश्रुतीनां तत्पदार्थशोधकानां महावाक्यशेषत्वेनोक्तप्राधान्याभावाच्च। नापि तृतीयः। स्वाध्यायाध्ययनविधिना सर्वेषामपि वाक्यानां प्रयोजनवदर्थावबोधकत्वस्य दर्शितत्वेन तस्याव्यावर्तकत्वात्। नापि चतुर्थः। सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्यस्यावांतरप्रकरणादित्वेन कथंचित्तत्संभवेपि नेह नानेत्यादेस्तथात्वाभावात्। असद्वा इदमग्र आसीदिति वाक्यस्याप्यवांतर प्रकरणादित्वस्य सत्वेनास्यापि व्याहतिमवधूय यथाश्रुतार्थकत्वप्रसंगाच्च। नच तत्प्रमानुकूल शक्तिरेव तत्परत्वमिति वाच्यं। व्याहतार्थकत्वशंकानिरासात्प्राक् द्वितीयसामान्याभावप्रमानुकूलशक्तिमत्वग्रहासंभवात्। सामान्यतः प्रमानुकूलशक्तिमत्वग्रहस्य पूर्वोक्तनियमग्रहाप्रामाण्यनिश्चयाहेतुत्वात्। सजातीयद्वितीयराहित्यार्थकत्वेनापि तन्निर्वाहात्। नच बहुश एकप्रकरणे स्थानभेदेन वा पठितानां एकजातीयतया प्रतीयमानानां मुखतः प्रतीयमानार्थं विहायान्यार्थकल्पने बहुबाधप्राप्त्या तस्यान्याय्यतया तत्परिहाराय वाक्यप्रामाण्यघटकाज्ञातत्वनिर्वाहकापूर्ववत्वेन च द्वितीयसामान्यप्रतिषेधप्रमानुकूलशक्तिमत्वनिश्चयो युज्यत इति वाच्यं। बहूनामपि वाक्यानां व्याहतिसाम्ये तद्बोधे प्रमात्वावधारणोपायाभावेन तदनुकूलशक्तेरपि दुर्ग्रहत्वस्यापरिहार्यत्वेन वाक्यबहुत्वस्याकिंचित्करत्वात्। प्रमाणांतर विरोधाभाव एवापूर्वतायाः प्राबल्यहेतुत्वात्। अन्यथा बाधितहेतुशतैर्विप्रलंभकवाक्यशतैरर्थसिद्धिः स्यात्। ननु ते न निर्दोष उक्तवाक्यानि त्वपौरुषवत्तया निर्दोषाणीति चेत्। किं

तावत्। न हि निर्दोषवाक्यत्वं श्रुतित्वं प्रधानवाक्यत्वं वा आपाततः प्रतीयमानार्थकत्वव्याप्यं व्यभिचारस्योक्तत्वात्। किंतु प्रामाण्यव्याप्यं तच्चास्मदुक्तरीत्या घटत एव। किं चैवं सति 'नेह नानास्ति किंचन' 'नेति नेति' 'असद्वा इदमग्र आसीदिति' बहुवाक्यानुसारात् शून्यतात्पर्यं वेदानां सिध्येत्। तथात्वे इह निरूपितेषु ब्रह्मप्रपंचात्मकेषु नाना आनंदरूपत्वस्वप्रकाशरूपत्वतद्भिरुत्थानानंदादिमत्वरूपविलक्षणप्रकारोपेतं किमपि ब्रह्म प्रपंचात्मकं नास्तीत्यर्थः। नानेत्युक्त्यैव पूर्तौ उक्तार्थतात्पर्यलाभार्थं संकोचनिरासाय किंचनेत्युक्तिः। ब्रह्मणि प्रपंचमात्रनिषेधेऽल्पार्थकत्वेन वाक्यस्थकिंचनपदस्य ब्रह्मातिरिक्तबोधकत्वप्राप्त्या संकोचप्रसंगश्च। नेति नेतीति द्विरुक्तिबलात्सर्वप्रकारनिषेधलाभे सत्यज्ञानादिस्वरूपभेदलाभेन निःस्वरूपत्वरूपशून्यतायाः प्राप्तत्वात्। अन्यथा सत्यादिस्वरूपत्वानिषेधे नेति नेतीत्यस्य संकोचप्राप्तेर्द्विरुक्तिवैयर्थ्याच्च। ब्रह्मप्रतिपादकानि वाक्यान्युक्तवाक्येन निषेधार्थं सुषुप्त्यादिसिद्धाद्वितीयब्रह्मानुवादीन्येव। सर्वस्यारोपितसद्रूपत्वेन व्यवहारोपपत्तौ कस्यचित्सत्स्वभावत्वकल्पने गौरव प्रसंगात्। नच 'तद्धैक आहुरसदेवेदमग्र आसीदिति' तन्मतनिंदानुपपत्तिः एतत्प्रकरणस्य ब्रह्मवादानुवादकतया ब्रह्मवादिभिरेव तस्य निंदितत्वेन तन्निंदायाः श्रुत्यनभिमतत्वात्। सर्वस्यापि निषेधे अधिष्ठानं विना भ्रमानुपपत्तिनिःसाक्षिकबाधानुपपत्तिरूपयुक्तिविरोधान्न श्रुतिस्तत्तात्पर्यकेति वाच्यं। उक्तप्रकारेण शून्यतात्पर्यकश्रुतिमुख्यार्थत्वानुरोधेन यो यो भ्रमः स साधिष्ठानः यो यो बाधः सः ससाक्षिक इति नियमग्रहाप्रामाण्यबुद्ध्युदयेन युक्तिबाधाभावेन शून्यवाक्यार्थनिर्णयानंतरं फलानुसारेण तन्निर्वाहकसर्वकल्पनापातात्। शून्यतात्पर्यकत्वे अपूर्वतारूपप्राबल्यबीजस्य सत्वाच्च। ननु निष्प्रयोजनत्वापातान्न शून्यतात्पर्यश्रुतेर्ग्लावाणः प्लवंतीति श्रुतेरिवेति चेन्न। अद्वितीयाखंडब्रह्मतात्पर्यकत्वेऽपि साम्यात्। न चात्मनो निष्प्रपंचतयाऽवस्थानं सुषुप्तौ पुरुषार्थतयादृष्टमिति तदर्थं तत्प्रतिपादनमिति वाच्यं। नितांतदुःखाकुलितस्य गलग्रहादिना स्वाभावरूपमरणस्यापि इष्टत्वदर्शनेन स्वरूपाभावरूपशून्यतायाः पुरुषार्थत्वानपायात्। नच सा देहत्यागेच्छैव न स्वाभावेच्छा। कदापि मा न भूवं भूयासमिति सर्वेषां स्वरूपाभावे द्वेषपूर्वकं स्वरूपेच्छा दृश्यत इति वाच्यं। देहात्मभेदस्य प्रत्यक्षसिद्धत्वे चार्वाकादीनां देहाभिन्नात्मनि विवादायोगाद्देहात्मभ्रम एव लोकानामिति त्वया व्यवस्थापितत्वेनात्मसत्तापूर्वकं देहत्यागेच्छायाः त्वया वक्तुमशक्यत्वात्। कदापि न स्त्रीपुत्रादिभिर्विमुक्तो भूयासं किंतु तद्विशिष्ट एव भूयासमित्याद्वितीयस्वरूपद्वेषपूर्वकं सद्वितीयस्वरूपेच्छाया दर्शनाच्च। नच सा अविवेकिनामेव स्वोपाधिकस्वरूपविषयिणीति वाच्यं। भवदिच्छाया अपि तथात्वस्य वक्तुं शक्यत्वात्। नच स्वरूपाभावस्येष्टत्वे लोके मरणे द्वेषो न स्यादिति वाच्यं। निष्प्रपंचताया पुरुषार्थत्वे मूर्च्छायां स्वकुटुंबहान्यादावपि द्वेषो न स्यादिति समं। नचात्यंतिकनिष्प्रपंचता पुरुषार्थ एव। मूर्च्छा तु न तथेति वाच्यं। मरणेऽप्यारोपितस्वरूपांतरसत्वेन नात्यंतिकस्वरूपाभाव इति समं॥ तर्ह्यात्यंतिकस्वरूपाभावरूपमोक्षस्य पुरुषार्थत्वेन मरणेच्छोदाहरणं युक्तमितिचेत् तर्ह्यात्यंतिकनिष्प्रपंचता न सुषुप्तौ कर्माज्ञानादीनां विद्यमानत्वादिति सुषुप्तीच्छापिनोदाहरणमिति समं। नच सुखाविषयकत्वान्न स्वभावेच्छा संभवतीति वाच्यं। निष्प्रपंचतेच्छायामपि तुल्यं। सुखाभिव्यक्तिहेतुत्वात्तदुपपत्तिरितिचेत् दुःखाभावसाधनत्वाद्दुःखसाधनप्रतियोगिकत्वात्तथेत्यत्रापि समं। स्वाभाविकसंबंधित्वेनायं पुरुषार्थः स्वादि

तिचेत् ब्रह्मस्वरूपस्याखंडत्वे आनंदस्यापि तथात्वमिति समं। स्वयमेव स पुमर्थश्चेदयमपि तथाऽस्तु। विषयविषयिभावसंबंधाभावेप्यनावृतत्वस्यात्रापि वक्तुं शक्यत्वात्। तस्माच्छून्यतात्पर्यावधारणे सर्वोऽपि दोषो ब्रह्मवाद एवोत्थर्तुं शक्य इति शून्यवादाद्बिभ्यता प्रमाणांतरविरोधव्याहत्याद्यभाव एव वाक्यस्वारस्यापूर्वतादिकं वाक्यतात्पर्यावधारणहेतुः। ननु वाक्यस्वारस्यमात्रदृष्ट्या क्लृप्तप्रमाणबाधनादिना बहुतरं कल्पनीयं गौरवादिति वक्तव्यं। तत्सर्वमवशिष्टं त्वन्मतेपीति कथमद्वैततात्पर्यावधारणं। कथंच सत्यत्वश्रुतीनां स्वार्थप्रच्युतिरिति त्वमेव चिरं विभावय। भगवति यथा युगपदणुत्वमहत्वप्रतिपादकश्रुतीनां अव्याहतार्थकत्वं तथोपपादितं सुधायां। अत्रापि मय्यनंतगुणइत्यादिमूलटीकाव्याख्यावसरे विशदीकरिष्यत इति न तत्प्रतिवंदिरपि। इदं सर्वं परमते वाक्यस्य मिथ्यात्वबोधकत्वं यथाश्रुतरीत्या वर्तत इत्यभ्युपेत्योक्तं। वस्तुतः पदानां मिथ्यात्वबोधकत्वमेव नास्ति कुतस्तात्पर्यमिति वाचारंभणश्रुतिव्याख्यानावसरे विवेचयिष्यते। अपि चाद्वैतश्रुतीनां तत्र परमतात्पर्यसत्वात्तद्विरोधेन सत्यत्वप्रतिपादकश्रुतीनां स्वार्थतात्पर्याभावो वा तासां तत्रावांतरसत्वात्। नाद्यः। तासामखंडार्थे परमतात्पर्याभ्युपगमात्। न द्वितीयः। जगत्सत्यत्वप्रतिपादिकानामपि श्रुतीनां तत्सत्यत्वद्वारा तत्कर्तृत्कर्षे महातात्पर्यवतीनां अद्वैतश्रुतिसाम्येन बाध्यबाधकभावायोगात्। न ह्यखंडार्थबोधद्वारीभूतबोधतात्पर्यकश्रुतीनामेव प्राबल्यं। नोत्कर्षबोधद्वारीभूतबोधपराणामित्यत्र राज्ञामाज्ञास्ति। अपि चाखंडार्थबोधस्य सप्रयोजनत्वे सत्यजगत्कर्तृत्वादिपारमेश्वरधर्मप्रतिपादिका अपि श्रुतयस्तद्द्वारा अखंडार्थबोधकाः स्युः। तथाच तासामद्वैतश्रुतिसाम्यमेव। सत्यकर्तृत्वादि धर्मबोधः कथमखंडार्थप्रमाद्वारभूतः स्यादिति चेत्। वेदानामखंडार्थतात्पर्यग्राहकमानानुसारेण तस्मिन्नवधृते प्रकृष्टप्रकाशादिवाक्यानामिव सत्यभूतधर्मप्रतिपादनेनापि तत्संभवात्। ननु तर्ह्यखंडार्थसिद्धिर्न स्यादितिचेत् केयं सिद्धिः। ज्ञानं चेत्तदुत्पत्तिप्रकार उक्त एव। तन्निष्ठप्रपंचमिथ्यात्वासिद्धिश्चेदिष्टापत्तिः। ननु जगत्सत्यत्वेऽखंडार्थबोधस्य निष्प्रयोजनत्वं स्यात्। सत्यस्यानिवृत्तिदर्शनादिति चेन्मिथ्यात्वेऽपि तुल्यं। तादृशानां शुक्तिरजतशशविषाणादीनां नष्टमिति प्रत्ययाभावेन नाशादर्शनात्। ननु तादृशबाधग्रहे जगदप्रतीतिरेव निवृत्तिरितिचेत्। सप्रयोजनत्वश्रुतिप्रामाण्यादंधादीनामिव नैय्यायिकाभिमतमुक्तात्मनामिव च विद्यमानजगतोऽप्यदर्शनसंभवात्। नच सत्यत्वमिथ्यात्वोभयश्रुतीनामखंडार्थद्वारत्वेऽवांतरतात्पर्यानुरोधादुभयसिद्धौ वस्तुनि विकल्पापत्तिरिति वाच्यं। एतद्दोषस्य तवापि तुल्यत्वात्। अर्थक्रियाकारित्वाद्यनुरोधाय मिथ्यात्वश्रुतीनामेव स्तुत्यर्थतया अवांतरबोधविषयीभूतार्थे वपोत्खननवाक्यादीनामिव तात्पर्याभावस्य वक्तुं युक्तत्वाच्चेत्यलं। तथाच श्रुतीनां प्रत्यक्षागृहीतसत्वपरत्वे ऽद्वैतसिद्धिकृदुक्ताः क्रियासमभिव्याहारेण श्रुतीनां षड्विधतात्पर्यलिंगोपेतानां प्राबल्यात्सत्यत्वप्रतिपादिकानां तदविरोधिव्यावहारिकसत्यपरत्वं वा विशेषतोऽपि देवसंबंधिजगत्सत्यत्वादिना निषेधायानुवादकत्वं स्तुतिपरत्वं वा ऽस्तु। श्रुतीनामपि व्यावहारिकप्रामाण्यमस्तु, सत्यकामत्वादि प्रतिपादिका अपि सगुणपरश्रुतयोऽ पूर्वार्थका अपि स्वार्थतात्पर्यवदद्वैतश्रुतिविरोधेनैव न स्वार्थपराः, जगत्सत्वपराः श्रुतयोऽध्यासे सामानाधिकरण्यपरतया योज्या इत्यादयः प्रत्युक्ताः। तात्पर्यस्यैव दूषितत्वात्। व्यावहारिकप्रामाण्याध्याससामानाधिकरण्यादेरप्रसिद्धत्वाद्दूष्यत्वाच्च। घटादिविश्वसत्यत्वस्य प्रत्यक्षसिद्धत्वेपि श्रुतेर्नानुवादकत्वं धर्माद्यंशे प्रत्यक्षेणाप्राप्तत्वात्। तथाच विश्वत्वावच्छेदेन सत्वसिद्धिसंपादकत्वान्न श्रुतेर्वै-

स्यर्थं । ननु विश्वत्वं नाम नानुगतधर्मोऽस्ति येनतदवच्छेदेन श्रुतेस्तद्बोधकत्वं स्यात् । नच तावन्मात्रवृत्तित्वाख्यवृत्तिधर्मएवानुगत इति वाच्यं । तदवच्छिन्ने सत्वादिबोधस्य स्वरूपतो घटत्वादिधर्मितावच्छेदकतदभावसंशयानिवर्तकत्वानुपपत्तेः । अनुभवसिद्धा च संशयनिवृत्तिः । नचघटत्वपटत्वाद्यवच्छिन्नोपस्थापकमेव विश्वसर्वादिपदं । तथाच धर्मत्वावच्छिन्ने सत्यताबोधकत्वं युक्तमिति वाच्यं । तथासति घटत्वाद्यवच्छिन्ने अनुवादकत्वं धर्मत्वाद्यवच्छिन्ने विधायकत्वमिति विरुद्धद्वयापातात्।अपि च परमाण्वादौ धर्मादावप्यर्थक्रियाकारित्वादिलिंगेन सत्यताया गृहीतत्वादनुवादकत्वं दुर्वारं । नच धर्मादिस्वरूपस्यागमेतरेणाप्राप्तेरागमोपजीवने च स्वानुपजीविप्रमाणप्राप्तार्थबोधकत्वरूपमनुवादकत्वमागमस्य नास्त्येवेति वाच्यं । धर्मादिस्वरूपांशे आगमोपजीवनेऽपि तत्सत्यत्वांशे आगमानुपजीवनादृशानुमानप्राप्तविश्वसत्यत्वबोधकश्रुतीनामनुवादकत्वमेव । अपि च धर्मादिस्वरूपबोधकश्रुतिभिरेव तत्सत्त्वासिध्यति तज्जन्यबोधे सत्वघटितप्रामाण्यस्य ज्ञानग्राहकेण गृहीतत्वात्। नह्यावयोर्मते प्रामाण्यस्वतस्त्वे विप्रतिपत्तिः।तथा च ताभिरेवानुवादकत्वं विश्वसत्यत्वप्रतिपादकश्रुतीनां नेह नानेति प्रतिषेधार्थं नतु विश्वसत्यत्वविधानार्थं। विश्वसत्यतां विना कस्याप्यनुपपत्त्यभावात् । किंचाखंडात्मसाक्षात्कारस्य मोक्षहेतुत्वमभिधीयते एकधैवानुद्रष्टव्यं तमेवं विदित्वातिमृत्युमेति प्रपंचोपशमं शिवमद्वैतं चतुर्थं मन्यंते स आत्मा स विज्ञेय इत्यादौ।अत एव यदि षड्विधतात्पर्योपेतत्वेनाद्वैतश्रुतिप्राबल्यात्प्रत्यक्षादिविरोधं द्वैतसत्यत्वादिश्रुतिविरोधं चावधूयाद्वैतश्रुतिः स्वार्थमवबोधयति तर्हि तत्वमस्यहं ब्रह्मास्मीत्यादिरपि विशिष्टाद्वैतमेव बोधयतु। नेह नानेति श्रुतिरपि प्रपंचनिषेधबोधमात्रेण पर्यवसन्ना स्यात् । नतु तत्रानुपपत्तिज्ञानसाहित्येन तद्द्वारकाखंडार्थबोधेन अनुपपत्तिरूपत र्कस्यापि स्वतात्पर्यबलेनाकिंचित्करीकरणात् । किंचैकमेवाद्वितीयं स आत्मा तत्वमसि ऐतदात्म्यमिदं सर्वं तत्सत्यमित्यादिरूपेण बहुवारमभ्यासस्थले यदि स्वतंत्रद्वितीयादिराहित्यमर्थः स्यात् तर्हि बहुस्थलेषु मुख्यार्थत्यागापत्तिरिति तर्कोत्थापकतया खल्वभ्यासस्य तात्पर्यग्राहकत्वं । तत्रापि यदि अंततोखंडार्थलक्षणा तर्हि किमपराद्धं सजातीयद्वितीयादिरहितलक्षणया । कस्यचित्पदस्य बोधद्वयतात्पर्याद्यभावेन लाघवादेक एवाद्वितीयो सावश्वमेधः क्रतूत्तम इति भारतादौ एको रुद्रो नाद्वितीयोवतस्थे इति सगुणवाक्यादावखंडार्थबोधकत्वाभावेपि उक्तलक्षणादर्शनेन तादृशलौकिकव्यवहारदर्शनेन तादृशलक्षणायाः निरूढत्वेन शक्तितुल्यतया तस्या एव युक्तत्वाच्चेत्यपास्तं । उदाहृतश्रुतिभिरखंडार्थबोधस्यैव मोक्षहेतुतावगमेन प्रामाण्यशरीरस्यानधिगताबाधितसप्रयोजनार्थावगमकत्वरूपतया तन्निर्वाहाय बोधद्वयेपि तात्पर्यस्योररीकरणात् । तत्राद्यबोधस्याभ्यासानुसारात् द्वितीयस्य फलानुसारात् आद्यस्य व्यावहारिकं प्रामाण्यं अंत्यस्य तु तात्विकं प्रामाण्यं । इत्थं च मोक्षोपयोगिज्ञानविषयत्वाभावादज्ञातत्वेपि न विश्वसत्यत्वे श्रुतितात्पर्यं । अत एवापूर्वत्वसफलत्वोपपत्तीनां क्रमेण प्रामाण्यशरीरनिविष्टानधिगतत्वसप्रयोजनत्वाबाधितत्वनिर्वाहकतया तात्पर्यलिंगत्वं नैकैकस्य । अत एव देवप्रमितत्वाद्युपपत्तिबलात्सत्यत्वश्रुतिः स्वार्थपरेति प्रत्युक्तं । एतेनापौरुषेयश्रुतेः सादिप्रत्यक्षापेक्षाविरहेण निरपेक्षानुवादित्वेन दैवात्तत्संवादेपि न दोषः । देवताधिकरणे त्वत्सिद्धांतरीत्या मानांतराविरुद्धदेवताविग्रहासिद्धेः यः कुक्षिसोमपातम इत्याद्यन्यार्थकमंत्रार्थवादादेरिव सत्यताया अपि सिद्धिरिति प्रत्युक्तं । निरपेक्षत्वेपि प्रयोजनविरहेण तत्र तात्पर्यायोगात् । प्रबलाद्वैतश्रुतिविरोधेन देवताधिकरणन्यायानवताराच्चेति चेत् । अत्रोच्यते । विश्वत्वं नाम सर्वजगन्निष्ठ-

व्यासज्यवृत्तिधर्मविशेष एव । तदवच्छेदेन सत्यत्वबोधने तदवच्छेदकत्वेन गृहीततादृशधर्मस्य घटत्वाद्यवच्छिन्ने ज्ञानात्सत्यत्वसंशयो न भवति । एवं धर्मान्तरस्यापि ज्ञानेन च घटत्वावच्छिन्ने तादृशधर्माग्रहदशायां विश्वं सत्यमित्यादिवाक्यजन्यबुद्धेर्घटादिधर्मिकतादृशसंशयविरोधित्वमनुभवासिद्धं न स्यादिति वाच्यं । तादृशधर्माग्रहदशायामिष्टत्वात् । अन्यथा विश्वादिपदं तदादिपदवत् बुद्धिविषयतावच्छेदकावच्छिन्नोपस्थापकमित्यंगीकारे सर्वं प्रमेयं विश्वं प्रमेयमित्यादिवाक्यैः यावंतो घटत्वपटत्वादयः स्वरूपतोऽस्वरूपतो वा तत्तदवछिन्ननिखिलविषयकबुद्धिरेव नियमेन जायते वा कतिपयधर्मावछिन्नविषयिणी वा । आद्ये सर्वपदाधीनबुद्धिप्राक्काले सर्वेषामतीतानागतव्यक्तीनां तद्व्यक्तित्वादिनाऽप्युपस्थितेस्तेषां तत्कालीनशक्तिग्रहोपयोगिबुद्धिविषयतावच्छेदकत्वनिर्वाहायावश्यकतया वाक्यजन्यबोधस्याप्यावश्यकतादृशत्वकतया सर्वेषां विशेषरूपेण ज्ञातत्वात्सार्वज्ञापत्तिः । न चेष्टापत्तिः । तदुत्तरं स्वरूपतस्तदवच्छिन्नगोचरव्यवहारापत्तेः । सर्वपदजन्यबोधात्प्राक् तावद्धर्मावच्छिन्नोपस्थापकसामग्र्यभावेन शक्तिग्रहासंभवाच्च । न द्वितीयः । तदादिपदघटितवाक्यवत् सर्वः कपालजन्य एतत्कपालजन्य इति वाक्येन घटमात्रे तद्घटमात्रे वा तादृशविधेयावगाहिबोधापत्तेः । एकद्विमात्रबोधमात्रनिर्वाहाय सर्वपदघटितवाक्यस्य कुत्राप्यप्रयुज्यमानतयेष्टापत्तेः कर्तुमशक्यत्वात् । नच धर्मत्रयमारभ्यैव सर्वपदस्य बोधकत्वं तन्निर्वाहाय किंचिन्नियामकं कल्प्यत इति वाच्यं । तथा सति पृथिव्यादिचतुष्टयमात्रबोधाय प्रयुज्यमानं सर्वं स्पर्शवदिति वाक्यं प्रमाणं स्यात् । नहि कश्चित्तथा प्रयुंक्ते । तथा प्रयोगांगीकारे त्वत्पक्षे मुख्यार्थकत्वं दुर्वारं । मन्मते विशेष्यवाचकपदासमभिव्याहृतसर्वपदस्य केवलान्वयिव्यासज्यवृत्तिधर्मावछिन्नबोधकत्वादन्यत्र तु विशेष्यतावच्छेदकव्यापकव्यासज्यवृत्तिधर्मावछिन्नबोधकत्वादुक्तप्रयोगो नास्त्येव । अस्ति चेत् कथंचित्तन्मात्रवृत्तिव्यासज्यवृत्तिधर्मावछिन्नलाक्षणिकतया वा तादृशविशेष्यवाचकपदाध्याहारेण वा निर्वाह्य इति तादृशप्रयोगस्यामुख्यत्वं सर्वसंमतं संगच्छते । अत एव सर्वेभ्यो दर्शपौर्णमासाविति वाक्ये सर्वपदं प्रक्रांतपशुत्वपुत्रत्वाद्यन्यतमरूपावछिन्नत्वव्यापकव्यासज्यवृत्तिधर्मावछिन्नपरं । एतेभ्य इति विशेष्यपदं वा स्फुटत्वाच्छ्रुतावनुक्तमपि बोद्धॄणां प्रतीयते । नहि तत्र सर्वपदमसंकुचितार्थकमिति कस्यापि प्रेक्षावतः प्रत्ययः । त्वन्मते तु मुख्यार्थात्यागेन संकुचितत्वानुपपत्तेः । नच सर्वपदस्य मुख्यार्थकत्वेपि तस्य सर्वबोधकत्वात्तेन सर्वेषामबोधेन संकुचितत्वव्यवहार इति वाच्यं । घटादिमात्रबोधकतदादिपदस्थलेऽपि तादृशव्यवहारापत्तेः । अनंतानंतानिखिलरूपेण विशिष्टतत्तद्वस्तुबोधस्य कस्याप्यनुदयेनासंकुचितार्थकसर्वपदप्रयोगस्यैव लोकेऽलीकत्वापत्तेः । सर्वं प्रमेयं परमार्थमित्याकारा या प्रमा तदवछिन्नभेदस्यैव मिथ्यात्वनिरुक्तौ त्वया निविष्टताया उक्तत्वेन तच्छब्दोल्लिख्यबुद्धेः घटत्वपटत्वाद्यवच्छिन्ने परमार्थत्वावगाहित्वप्राप्त्या तस्य प्रमात्वोक्तेरसंगतेश्च । तादृशधियो ब्रह्मत्वमात्रावच्छिन्नमात्रविषयत्वे धर्मत्रयादिबोधकत्वं । न त्वेकद्व्यादिबोधकत्वमिति नियमभंगस्तत्त्यागेपि सिद्धसाधनता । ब्रह्ममात्रविषयकबुद्ध्यवच्छिन्नभेदस्य जगति त्वया मयाप्यंगीकृतत्वात् । नच सर्वेभ्य इत्यत्र विशेष्यपदाध्याहारे कथं संकुचितार्थत्वं शक्त्या स्वार्थात्यागादिति वाच्यं । शुद्धस्य केवलान्वयिधर्मत्वावच्छिन्नबोधकतया विशेष्यसमभिव्याहारे तत्त्यागेन विशेष्यतावच्छेदकव्यापकसर्वत्वमात्रबोधकत्वेन तथा व्यवहारोपपत्तेः । नच तादृशसर्वत्वस्य जन्यतानवच्छेदकतया पशुत्वादेश्च तदर्थतानवच्छेदकतया कथं तद-

वच्छिन्ननिरूपितकारणता यागे प्रतीयेत । तां विना कथं तदनुष्ठाने प्रवृत्तिरिति वाच्यं । तदुपलक्षितनिरूपितकारणताया एव तत्र प्रतीयमानत्वात् । अन्यथा पशुत्वादेस्तदजन्य पशुपुत्रादिसाधारणतया जन्यतानवच्छेदकत्वेन तत्राप्यगतेः । नच पश्वादिनिरूपित- प्रत्येककारणत्वाबोधेन तादृशसर्वत्वाश्रयनिरूपितैककारणताबोधेन विधेयभेदाभावाद्विधेय- भेदमाशंक्यैकपदोपात्तत्वरूपसमाधानस्य वार्तिककृदुक्तस्यासंगतिरिति वाच्यं । वाक्यानां फलीभूतबोध एव पर्यवसितत्वेन तादृशबोधे ऽनुष्ठानोपयोगिपश्वादिवृत्तिवैजात्यावच्छिन्न कार्यतानिरूपितकारणताभानस्य तव ममाप्यावश्यकतया तमादायैव शंकायाः एकपदो पात्तत्वेन समूहालंबनशाब्दजनकत्वरूपदोषाभाववत्वरूपसमाधानस्य च संगतेः । किंच भवन्मतेऽपि सर्वपदस्योपस्थितकतिपयरूपावच्छिन्नबोधकत्वे यत्र सर्वं सत्यमिति वाक्येन यादृशरूपावच्छिन्नानां बुद्धिस्थता तत्रैव सत्यत्वग्रहोदयेन तदन्यरूपावच्छिन्ने सत्यत्वा- दिसंशयानिवृत्तिस्तादृशवाक्यजन्यबोधोत्तरमिष्टैवेति । ममापि तत्र विश्वत्वाग्रहकाले ताद शसंशयांगीकारे किं बाधकं । परंतु तादृशकेवलान्वयिसर्वत्वग्रहः सर्वरूपावच्छिन्नेषु सर्वदा वर्तत एव । अत्यंताभावाप्रतियोगिव्यासज्यवृत्तिधर्मत्वेनैव तत्पदार्थतावच्छेदक- त्वात् । नतु तत्तद्धर्मावच्छिन्नसमुदायत्वेनासर्वज्ञदुर्ज्ञेयत्वप्रसंगात् । नापि व्यासज्यवृत्ति- धर्मत्वेन द्वित्वत्रित्वादीनामव्यावृत्तेः । तथा च तादृशसंशयः प्रायो न भवत्येव । तवैव परं स दुर्वारः । अपि च सर्वा पृथिवी गंधवतीत्यादिवाक्येन घटत्वावच्छिन्नपृथिवी गंधवती पटत्वावच्छिन्नपृथिवी गंधवतीति बोधस्त्वयांगीकार्यः । तथा च घटत्वसामा- नाधिकरण्येन गंधावगाहित्वात्तत्सामानाधिकरण्येन संशयानिवृत्तिप्रसंगः । मन्मते तु गंधव्याप्यत्वेन गृहीतसर्वत्ववत्पृथिवीत्वस्य घटे ग्रहादेव तत्संशयानुदयः । घटे पृथिवीत्वाग्रहकाले तादृशवाक्यस्य तत्संशयानिवर्तकतायास्तवापि संमतत्वात् । तस्माद्विश्वत्वरूपैकधर्मावच्छेदेन सत्यबोधकत्वे न काचिदनुपपत्तिः । यदपि विश्वपदस्य घटत्वादिरूपेण बोधकत्वपक्षे घटादौ परमाण्वादौ च सत्वबोधने घटाद्यंशेऽनुवादकत्वम- न्यांशे विधायकत्वं स्यादिति अभिहितं । तत्तुच्छं । स्वमतेऽपि नेह नानेति नेति नेतीत्यादि- श्रुत्या शुक्तिरजतादेः ब्रह्मण्यारोपितक्षणिकत्वादेर्मिथ्यात्वबोधने तदंशे सिद्धत्वेनानुवाद- कत्वमितरांशे विधायकत्वमित्युक्तदोषसाम्यात् । नच तासां श्रुतीनां तात्पर्यबलात्सिद्धार्थं विहायासिद्धार्थबोधकत्वं । यद्वा प्रपंचसत्वमात्रनिषेधकत्वं तेनैव तन्मिथ्यात्वसिद्धौ घटादीनां मिथ्यात्वबोधने तात्पर्याकल्पनादतो नानुवादकत्वमिति वाच्यं । अस्या अपि श्रुतः सिद्धघटाद्यंशं विहायासिद्धपरमाण्वाद्यंशे एव सत्यत्वबोधकत्वांगीकारात् । विश्वसत्यत्व एव सत्यत्वबोधनेन सर्वसत्वासिद्धौ विशिष्यापि घटादौ परमाण्वादावपि तद्बोधने तात्प- र्याकल्पनादिति साम्यात् । नच धर्मादावनुमानादिना सत्वप्राप्तिरस्तीति वाच्यं । प्रपंचमि- थ्यात्वस्यापि दृश्यत्वानुमानादिना ब्रह्मसत्यत्वस्यापि भ्रमाधिष्ठानत्वबाधावधित्वादिलिं- गेन प्राप्तत्वेन तन्मिथ्यात्वसत्यत्वश्रुतीनामप्यनुवादकत्वप्रसंगात् । श्रुतिसाहित्यं विना- मिथ्यात्वसत्यत्वे न सिध्यतः । अनुमानस्य दुष्टत्वात् । उपाधिप्रतिपक्षौ तु क्वनामातीवदु- र्वचावित्युक्तेः । तत्साहित्ये तु स्वोपजीवकेन न स्वस्यानुवादकत्वमिति चेत् समं धर्मादि- सत्वानुमानस्येति न तत्सत्वश्रुतेरनुवादकत्वं । यत्त्वनुमानेन ब्रह्मसत्वसिद्धावपि न तद्द्वा- रकाखंडार्थबोधकत्वमनुमानस्य । तत्सत्यमिति श्रुतेश्च तद्द्वारकाखंडार्थबोधकत्वान्नानुवाद कत्वमिति तत्तुच्छं । सत्यत्वांशे अनुवादकत्वापरिहारात् । धर्मादिसत्वश्रुतेरपि तथा वक्तुं शक्यत्वाच्च । अनुमित्यभिलापकब्रह्मसत्यमिति शब्देन तात्पर्यवशादखंडार्थबोधसंभवेन

अखंडार्थस्यापि सिध्दत्वेनानुवादकत्वापरिहाराच्च । नच श्रुतिजन्यबोध एवाज्ञाननिवर्तको न लौकिकवाक्याधीनोऽतोऽज्ञाननिवर्तकबोधजनकत्वात् न श्रुतेरनुवादकत्वमिति वाच्यं । विश्वसत्यत्वश्रुतेरपि तथैवेत्यवेहि । नच जडे नाज्ञानमिति वाच्यं । धर्मं न जानामीत्यनुभवेन तत्रापि तस्यावश्यकत्वात् । नच धर्मस्वरूपबोधकैरेव तत्सत्यत्वावगमात्तेनास्यानुवादकत्वमन्यथासत्वघटितप्रामाण्यस्य स्वतस्त्वं न स्यादिति वाच्यं । त्रिकालाबाध्यत्वस्येव व्यवहारकालाबाध्यत्वस्यापि प्रत्यक्षेणानुपलब्ध्या वा गृहीतुमशक्यत्वस्य त्वन्न्यायेन सिद्धतया तद्घटितस्य प्रामाण्यस्य स्वतो ग्राह्यत्वस्य वक्तुमशक्यत्वात् । अज्ञातमिथ्यात्वकघटाविषयकत्वरूपप्रामाण्यग्रहस्यैव प्रवृत्त्युपयोगितायास्त्वयोक्तत्वाच्च । अपिच धर्मांशेऽपि त्रिकालाबाध्यत्वघटितप्रामाण्यं धर्मादिस्वरूपबोधकश्रुतिजन्यबोधनिष्ठंचेत्सिध्दं नः समीहितं । तेनैव धर्मादीनां पारमार्थिकसत्त्वसिध्द्या मिथ्यात्वश्रुतेर्बाधः । व्यावहारिकसत्वं घटकं चेत् तदगृहीतपारमार्थिकसत्वावगाहिन्याः विश्वं सत्यमित्यादिश्रुतेः कथमनुवादकत्वं । अपि च ब्रह्मस्वरूपबोधकब्रह्मादिपदजन्यबोधे तत्सत्वभावात् तत्सत्यमित्यादिश्रुतेरनुवादकत्वं दुर्वारमेव । यदपि जगत्सत्यत्वादिज्ञानस्य निष्प्रयोजनत्वं तत्सत्यतां विना कस्याप्यर्थस्यानुपपत्त्यभावादिति तदपि न तां विना तत्प्रेरकत्वादिभगवद्गुणानां तत्सत्यत्वासिद्ध्या मिथ्याज्ञानस्यानर्थहेतुत्वेन तादृशगुणविशिष्टभगवद्ज्ञानमोक्षहेतुत्वस्य श्रुत्युक्तस्यानुपपत्तेः सत्वात्। तथाहि श्वेताश्वतरश्रुतिः 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्तेनामृतत्वमेतीति' जुष्ट इति तृतीयायाः सुपां सुलुगिति स्वादेशः जुषी प्रीतिसेवनयोरिति धातोः स्वसेवितेन तेन परमात्मना तत्प्रसादद्वाराऽमृतत्वमेतीत्यर्थः । यद्वा मत्वा ज्ञात्वा साक्षात्कृत्य वा तेन साक्षात्कारेण साक्षात्कृतपरमात्मना वा जुष्टः प्रीतस्तुष्टः प्रारब्धकर्माद्यपगमेनोत्तरत्रालेपेनेत्यर्थः । ननु तद्वाक्यस्य तत्वमतेः प्राक् प्रेरकत्वेन पृथक्त्वेन चोपलभ्यमानमात्मानमखंडस्वरूपं ज्ञात्वेत्यर्थः। एकधैवानुद्रष्टव्यमिति कैवल्यरूपपारिभाषिकैकत्वावच्छिन्नवाच्यैकशब्दोत्तरं धाल्प्रत्ययांतशब्दघटितया श्रुत्या शुध्दात्मज्ञानस्यैव मोक्षहेतुत्वावगमात् । यद्वा प्रेरकत्वादिगुणविशिष्टं ज्ञात्वेत्यर्थः । सगुणज्ञानस्य मोक्षं प्रति परंपरोपयोगस्य मयाप्यंगीकृतत्वात् । अत एव जुष्ट इत्युक्तं। तेन प्रेरकत्वादिगुणवत्तया ज्ञातेन परमात्मना जुष्टः ब्रह्मलोकप्रापणादिना प्रीतः तत्समाप्त्यनंतरममृतत्वमेतीत्यर्थः । तथा च तस्य ब्रह्मलोकादिहेतुत्वमेव श्रूयते । तथोत्तरत्रापि 'उद्गीतमेतत्परमंतुब्रह्म तास्मिंस्त्रयं स्वप्रतिष्ठाक्षरं च ॥ अत्रांतरं वेदविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ताः॥' 'तद्विात्मतत्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः॥ यदात्मतत्वे नतु ब्रह्मतत्वं दीपोपमेनेह युक्तः प्रपश्येत् ॥' इत्युत्तरवाक्यैरभेद एवोच्यते । श्रुत्यर्थस्तु प्रेरितारं मत्वा मुच्यत इति यदुक्तं तदुद्गीतमात्रं नतु मुक्तेः साक्षात्कारणबोधकं परमं शुध्दं तु ब्रह्म वेदविदो विदित्वा वेदांतवाक्यस्य तात्पर्यज्ञानद्वारा निश्चित्य साक्षात्कृत्य शुद्धब्रह्मणि लीनाः उपाधिमात्रोच्छेदेन शुध्दब्रह्मणैकीभूताः योनिमुक्ताः जन्महीना भवंतीति साक्षान्मुक्तिकारणोक्तिरित्यर्थः । कीदृशं परमं तत्राह । तस्मिन्परमे त्रयं स्थूलसूक्ष्मपंचीकृतभूतानि स्वप्रतिष्ठं अनादि अक्षरं अव्याकृतं चेत्येतानि संति । अत्र एतेषु आंतरं अधिष्ठानं ॥ श्वेताश्वतरीयोक्तवाक्यं प्रथमाध्याये तद्विात्मत्वमिति वाक्यं द्वितीयाध्यायस्थयुक्तत्रिरुन्नतमित्यादिना पूर्वोक्तयोगविशिष्टः सन् दीपोपमेन स्वप्रकाशेन येनात्मनस्तत्वेनानारोपितरूपेणाभिन्नं ब्रह्मणस्तत्वं पश्येत् तत्तु तदखंडमेव प्रकर्षेण श्रवणाद्युत्तरं सम्यग्वेदांतवाक्येन ईक्षित्वा एको द्वितीयशून्यः कृतार्थः भवति ।तदेव

ब्रह्म प्राप्नोति भूप्राप्ताविति स्मृतेरिति। तथाचाखंडात्मज्ञानस्यैव मोक्षहेतुत्वमनया श्रुत्योच्यत इति चेन्न। मतेः पूर्वं पृथक्त्वेन ज्ञातमित्याद्यव्याख्यानस्य श्रौताक्षरासंस्पर्शिनो हेयतायाःस्फुटत्वात्। पृथगात्मानमित्यस्य द्वितीयव्याख्यानमस्तु नाम। तथाप्युद्गीत-मित्यादेस्त्वदुक्तोऽर्थोऽसंगत एव। तथा च पृथगात्मानमित्यनेन भेदज्ञानेन नामृतत्वप्राप्ते-रंततः उक्तावपि तस्य तत्कारणत्वं सिद्ध्यत्येव। एतदन्यथासिद्धिनिर्वाहकस्य मध्ये कारणांतरस्याखंडसाक्षात्कारादेरंगीकारे मानाभावात्। ननूद्गीतमेतदित्यादेः कुतो नो-क्तार्थ इतिचेन्न। यत उद्गीतमित्यस्योद्गीतमात्रमित्यर्थकल्पनेऽश्रुतमात्रांतर्भावः। प्रेर-कत्वपृथक्त्वज्ञानस्य मोक्षहेतुत्वं स्वयमेवाभिधाय पुनस्तन्निषेधे व्याहतिप्रसंगात्। नच ब्रह्मलोकप्राप्त्यादिरूपफलमेवोच्यत इति वाच्यं। तथा सति जुष्टो भवतीत्येव वक्तव्यं स्यान्न तु तेनामृतत्वमेतीति अनुपयोगात्। वस्तुतस्तस्यैव मुख्यतया फलत्वप्रतीतेश्च। नच परंपरया तत्फलमिति वाच्यं। तावतापि भेदज्ञानादेः सप्रयोजनत्वप्राप्त्या व्रीह्यवघात प्रोक्षणादिवाक्यवत् जगत्सत्यत्वादिप्रतिपादकवाक्यानां स्वार्थे तात्पर्यानपायात्। नचेदं न स्वमतं किंत्वन्यमतमेवानूद्यत इति वाच्यं। सादिमतानामनादिश्रुत्यानुवादानौचित्यस्य त्वयैव भाषितत्वात्। श्रुतिप्राप्तस्यैव श्रुत्या निषेधे श्रुत्येरेव व्याहतिप्रसंगः। श्रुतितात्पर्या ज्ञानप्राप्तं निषिध्यत इत्यपि न सत्। इति गुह्यतमं शास्त्रमित्यादिना परमाप्ततमेन भगवता स्वप्रियमर्जुनं प्रति क्षराक्षरादिविलक्षणत्वादिविशिष्टस्वस्वरूपस्यैव शास्त्रपरमतात्पर्य विषयतायाः तद्ज्ञानस्य मोक्षहेतुतायाश्चोक्तत्वेन तस्य श्रुतितात्पर्याज्ञानाप्राप्तत्वात्। न चाखंडार्थबोधस्य मोक्षहेतुत्वश्रवणात्तस्याप्यन्योर्थः कल्प्यत इति वाच्यं। तादृशश्रुतेरेवा-भावात्। एकधेति श्रुतौ धाल्प्रत्ययबलेन सप्रकारकज्ञानस्यैव प्राप्तेरधिकस्याखंडार्थभंगे वक्ष्यमाणत्वात्। भेदस्य निंदितत्वे तद्ज्ञानस्य ब्रह्मलोकप्राप्तिकारणत्वस्याप्ययोगाच्च। तस्या पुनरावृत्तिसंपादकतया महाफलरूपत्वात्। एवं स्वप्रतिष्ठेत्यस्यानादिरिति व्याख्यानमुद-क्षरं। ब्रह्मान्यस्य सर्वस्य विनाशित्वादक्षरत्वं बाधितं। लीना ब्रह्मणीत्यत्राधिकरणसप्तम्या तत्परा इति तदासक्तिरूपतद्भक्त्युक्त्या च स्फुटं भेदावगमात्। उपाधिविनिर्मोकेण ब्रह्म-णैकीभूता इति व्याख्यानमसंगतमिति स्फुटमेव। त्रयमित्यस्य सूक्ष्मस्थूलेत्यादिव्याख्या-प्यप्रामाणिकी घटादित्रयस्यापि ग्रहणसंभवात्। अत्रांतरमित्यस्याधिष्ठानमित्यर्थोप्यप्रा-माणिकः उदक्षरश्च। द्वितीयमंत्रेपि। आत्मनस्तत्वेनाभिन्नं ब्रह्मरूपमिति व्याख्यानमसत्। अभिन्नमित्यश्रुतकल्पनं च स्फुटत्वात्। तदखंडमेवेति व्याख्यापि तथैव। इवशब्दस्यावधार णार्थतया व्याख्यानात्। तस्मान्नायं श्रुत्यर्थः किंतु पृथक्त्वतत्प्रयोजकप्रेरकत्वादिगुणवि-शिष्टात्मज्ञानस्य मोक्षहेतुत्वेऽभिहिते शंकोदेति। किमयं राजादिवत्स्वप्रेरक आत्मा कश्चन देवादिः स्यात् तद्ज्ञानस्यापि मोक्षहेतुत्वमनेनोच्यते उत कस्यचिन्नि यतस्यैव। नियतोपि स कश्चिद्ब्रह्मान्यो बहिष्ठश्च स्यात् तदा ब्रह्मविदाप्नोतिपरं श्रुतिः यो वेद निहितं गुहायामिति श्रुतिश्च बाध्यत इत्याशंक्य स्वाभिप्रायं व्यनक्ति। उद्गीतं मोक्षहेतुज्ञानविषयत्वेनोत्कृष्टतया गीतं प्रतिपादितमेतदात्मरूपं वस्तु दक्षिणान्नं वनुते यो न आत्मेत्यादिवद्विधेयापेक्षया प्रकृते नपुंसकलिंगता। परमं तु ब्रह्म परमेव ब्रह्म न त्वन्यः कश्चन येन ब्रह्मविदित्यादिश्रुतिविसंवादः स्यात्। ननु प्रेरकत्वा-दिरूपगुणविशिष्टः पूर्वमुक्तः।ब्रह्म तु शुद्धं अतः कथं तयोरैक्यमित्याशंक्यैतदन्यच्छुद्धमप्रामाणिक तदेवैतादृशमित्याह। तस्मिन्निति त्रयं उर्ध्वाधरमध्यरूपलोकत्रयांतर्गतं सर्वं भूत-भवद्भविष्यदात्मकं सर्वं।स्वप्रतिष्ठाक्षरमित्येकपदं बहुव्रीहिः। तादृशलोकत्रयादिप्रतिष्ठापका

क्षरशब्दवाच्यं श्रीतत्वसहितं च नियम्यतया स्थितमित्यर्थः।यद्वा स्वप्रतिष्ठापदेनैव श्रीतत्वं गृह्यते स्वातंत्र्यात्स्वशब्दवाच्यः परः प्रतिष्ठा यस्येति व्युत्पत्त्या।ब्रह्माक्षरं नाशरहितमित्यर्थः। यदूर्ध्वं गार्गि दिवोयदर्वाक्यदंतरा द्यावापृथिवी यच्चान्यद्भूतं भवद्भविष्यच्चेत्याचक्षते आकाश एव तदोतं च प्रोतं च एतस्मिन् खल्वक्षरेगार्ग्याकाश ओतश्च प्रोतश्चेति श्रुतिरेवोक्तव्याख्याने मानं। तत्किं राजादिवद्बहिरेव स्थितमित्याकांक्षां शमयन्मंत्रवर्णविरोधापनुत्तये गुहानिहितत्वमपि दर्शयितुमाह। तत्र एतेषु आंतरमंतरमिति वा पदच्छेदः। तथात्वे अंतःस्थितमंतःस्थित्वा रमणकृतमिति च क्रमादर्थः अंतःस्थित्वारमणकृदंतरः समुदाहृत इत्युक्तेः।यः पृथिवीमंतरो यमयत्येष त आत्मेति श्रुतेरुक्त एवांतरपदार्थो नाधिष्ठानत्वादिः। वेदविदः तात्पर्यज्ञानिनः विदित्वा तत्पराः श्रवणादिमाहात्म्यज्ञानेन विषयवैराग्यपूर्वकं तदासक्त्यात्मकस्नेहरूपभक्तिमंतः ततो ब्रह्मणि लीनाः तदेकध्यानरताः अपरोक्षज्ञानद्वारा योनिमुक्ताः जन्मादिराहित्यरूपमुक्तिभाजो भवंतीति प्रथमाध्यायस्थवाक्यार्थः।द्वितीयाध्यायस्थवाक्यस्य तु यदा यत्काले आत्मतत्वेन आत्मनःस्वामिनःतत्वेन नियामकत्वोपयुक्तपूर्णगुणत्वादिना ब्रह्मतत्वं परब्रह्मस्वरूपं प्रपश्येत् निश्चिततया जानाति विषयीकरोति वा तेन दीपोपमेन करणत्वार्थकतृतीयाबलाद्दीपसदृशं निर्मलं मनो लभ्यते। अर्थांतरपक्षेपि दीपसदृशं निर्मलमवच्छिन्नधारं ध्यानात्मकज्ञानं लभ्यते। अनंतरं देही तदा तत्काले आत्मत्वं स्वामित्वं स्वध्येयगुणं तदंतर्भूतस्वयोग्यगुणांश्चेत्यर्थः। आत्मत्वस्य सर्वतृणजीवमारभ्य सर्वसाधारण्येनावश्यकत्वेन च प्राधान्यात्तस्यैव स्वशब्देन ग्रहणं।समीक्ष्यापरोक्षीकृत्य तद्विशिष्टेश्वरमपरोक्षीकृत्येत्यर्थः। ब्रह्मणोऽ परिच्छिन्नत्वात्तद्ज्ञानोपासनादि न साकल्योपेतं योग्यतानुसारित्वरूपाल्पत्ववदेवेति बोधनायाल्पत्वार्थकेवशब्दप्रयोगः। तस्य प्रसमीक्ष्येत्यनेनान्वयः। भुक्तमिवेति यथा।गुणगुणिभेदवारणायाखंडार्थविषयकज्ञानवारणाय शाब्दापरोक्षवारणाय करणप्रकारादीनामुक्तिः।एकः पूर्वोत्तराघविनाशाश्लेषादिबलान्नानाजन्मादिसंपादककर्मादिकृतवैषम्यराहितत्वेनैकप्रकारोपेतः ततो वीतशोकः भगवत्प्रसादद्वारा शोकसाधनलिंगदेहभंगवान् कृतार्थः निष्पादितस्वरूपानंदाविर्भावरूपप्रयोजनवान्भवतीत्यर्थः। यदा पश्यः पश्यते रुग्मवर्णमिति श्रुत्या प्रायः संवादादुक्त एवार्थः। इयं च परेण स्वग्रंथे यथा पठित्वा व्याख्या कृता तदनुसारेण द्वितीयाध्यायस्थश्रुतिव्याख्या प्रदर्शिता। वस्तुतः द्वितीयाध्याये 'यथैव बिंबं मृदयोपलिप्तं तेजोमयं भ्राजते तत्सुधातं॥तद्वात्मतत्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः॥ यदात्मतत्वेन तु ब्रह्मतत्वं दीपोपमेनेह युक्तः प्रपश्येत्॥ अजं ध्रुवं सर्वतत्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः॥' इति मंत्रद्वयपाठःपुस्तकेषु दृश्यते।तत्राद्वैतचंद्रिकाकारोक्तं यदात्मतत्वेन तद्वात्मतत्वमित्यनयोः परस्परान्वितार्थकत्वमयुक्तं। तदुक्तरीत्या परस्परान्वितार्थकत्वे यथैव बिंबमित्येतद्दृष्टांतवाक्यस्यान्वयाभावः। तत्पूर्वं पंचात्मके योगगुणे प्रवृत्ते न तस्य रोगो न जरा न मृत्युरित्यारभ्य गंधःशुभो मूत्रपुरीषमल्पं योगप्रवृत्तिं प्रथमं वदंतीत्यनेन योगप्रवृत्तिफलकथनस्य समापितत्वेन तेन सहान्वयाप्रतीतेः। अजं ध्रुवमिति चरमवाक्यस्य पूर्वेण सहान्वितार्थकत्वाभावादसंगतिश्च स्यादतो नायं योजनाप्रकारः। किंतु जरामरणाभावरूपमोक्षात्मकफलं योगस्य यदुक्तं तदसंभावितं। अहमज्ञो दुःखीत्याद्यबाधितप्रतीतिसाक्षिकाज्ञत्वदुःखित्वादिस्वभावस्य जरामरणाभावोपलक्षित सर्वदुःखनिवृत्तिरूपमोक्षायोगात्। मोक्षस्य योगफलत्वे ज्ञानमात्रसाध्यत्वबोधकश्रुतिविरोधश्चेत्याशंकापरिहारायाज्ञानादिकं जीवस्यास्वाभाविकं योगपरिपाकवतां ब्रह्मज्ञानद्वारैव मोक्षो योगफलत्वेनाभिसंहितोऽ तो न कश्चिद्दोष इति प्रतिपादयितुं मंत्रद्वयं।

तदर्थश्च बिंबपदं लक्षणया ऽऽदर्शादिरूपस्वच्छद्रव्यपरं । लक्षणाबीजभूतसंबंधस्तु बिंबसदृशग्राहित्वं । तेन स्वच्छत्वलाभाल्लाक्षणिकप्रयोगसाफल्यं । तदिति श्रवणा द्यदिति लभ्यते । यथाशब्दस्य यथास्थितरूपेणेत्यर्थः । तथा च यद्बिंबं स्वच्छद्रव्यं मृदयोपलिप्तं मृत्तिकयोपलिप्तं हलंताट्टाप् मृदयोभ्यामुपलिप्तामिति वा । मृदयःशब्दौ निबिडातिनिबिडद्रव्योपलक्षणौ । अयःशब्दस्य सलोपः छांदसः। द्विरूपकोशासिध्धायशब्दो वाऽयं । तदेव द्रव्यं सुधातं सुधौतं । औकारस्याकारः छांदसः। धावतेः शुध्द्यर्थाद्दौणादिकःकर्मणि डाजज्वा। सम्यक् प्रक्षालितं तेजोमयं प्रकाशप्रधानं सद्यथा यथास्थितरूपेण भ्राजते स्फुरति। आत्मतत्वमपि तदिव स्वरूपतः स्वच्छमविद्याकामकर्मादि भिरस्वाभाविकैरावृतं तदपगमे स्वप्रकाशतया स्फुरति । प्रसमीक्ष्य सान्निध्यात्पूर्वोक्तात्म- तत्वादिविषयकस्फुटनिश्चयं संपाद्य एकः त्रिविधजीवेषु मध्ये प्रधानः मुक्तियोग्य इति यावत्। वीतशोकः सन् कृतार्थः निष्पन्नयोगफलरूपमुक्तिमान् भवतीत्यर्थः । ननु जीवरूपनिश्चय- स्यैव मोक्षकारणत्वमुक्तं स्यात् तच्च श्रुत्यंतरविरुध्दं । अस्वाभाविकानामपि दुःखहेतूनां सत्वात्कथं वीतशोकत्वमपीत्यत आह। यदात्मतत्वेनेति। दीपोपमेन समाधिपरिपाकशुद्ध्यो ज्वलेन मनसा विशेष्यानुक्तावपि करणत्वार्थकतृतीयाप्रयोगमहिम्नैव तल्लभ्यते।आत्मतत्वे- न जीवस्वरूपेण। तत्वैस्तत्वाभिमानिदेवैश्च विशेषणे तृतीया।प्रेरकत्वेन तद्विशिष्टं प्रथमाध्या योक्तप्रेरकत्वस्वभिन्नत्वविशिष्टं तदुपपादकाजत्वादिविशिष्टं ब्रह्मतत्वं यदा पश्यति तदा ज्ञात्वा ज्ञानोत्तरं सर्वपाशैर्मुच्यते भगवत्प्रसादद्वारा सर्वैर्दुःखहेतुभिरेव मुच्यतेऽतो नोक्तानुपपत्तिरिति भावः । भगवत्प्रसादस्य श्रुत्यंतरानुरोधाद्ध्याहारः। ज्ञानकाल इत्यनेन ज्ञानोत्पत्तिमारभ्य मोक्षपर्यंतस्यापिकालविशेषस्य विवक्षि- तत्वात् । ज्ञात्वेत्यनेन ज्ञानोत्पत्त्युत्तरकालस्य विवक्षितत्वात्तदाज्ञात्वेत्यनयोर्न विरोधः । अन्यथा यदा सर्वे प्रमुच्यंते 'कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्येतावदनुशासनं' इत्येवंजातीयकेष्वपि यदाशब्दानुरोधादध्याह्रियमाण तदाशब्दस्यानंतर्यार्थकाथशब्दस्य च विरोधापत्तेः। दीपोपमेनेत्येतदात्मतत्वस्य विशेषणं वा। करणस्य बहिरेव योग्यतया लाभः। अविद्याद्यसंसृष्टरूपतयोज्वलेनेत्यर्थः । तेन न केवलं बंधदशायां ब्रह्मणो जीवप्रेरकत्वं किंतु शुध्दस्वरूपेणावस्थानरूपमुक्तावपि प्रेरकत्वं लभ्यते।ब्रह्मतत्वमित्युक्त्याऽनारोपितब्रह्मस्वरूपं प्रेरकत्वादिगुणविशिष्टं नतु मायाशबलत्वेन परपरिकल्पितमारोपितरूपमिति लभ्यते। यद्वा जीवज्ञानस्यैव मोक्षहेतुत्वशंकावारकतया यदात्मतत्वेनेत्यर्धं तदा वीतशोक इत्यनेनान्वितं । दुःखहेतुसत्वात्कथं दुःखनिवृत्तिरिति शंकापरिहारायेश्वरे प्रेरकत्वोपयुक्तगुणज्ञानस्याप्यावश्यकत्वबोधनाय चोक्तार्थविवरणपरं द्वितीयार्धं । अजं शरीरतोप्युत्पत्त्यादिराहितं ध्रुवं निर्विकारतयैकप्रकारेणावस्थितं देवं जगत्सृ- ष्टिस्थितिसंहारनियमनादिरूपक्रीडाविशिष्टं।संहारादिप्रयुक्तदोषवतोज्ञानं कथं निर्दोषस्वरू- पाभिव्यक्तिरूपमोक्षसाधनमित्याशंक्य सर्वतत्वैर्विशुध्दमित्युक्तं। सर्वैः स्वकीयासाधारण- धर्मैरपि निर्दोषमेव संहारादेरपि लोकदुःखनिवर्तकत्वेन तदुपकारकत्वादित्यर्थः। यथाहुः। 'स्वापं प्रापयति श्रमापहृतये कल्पावसाने च यः' इति 'सोयं विहार इह मे तनुभृत्स्वभा- वसंभूतये भवति भूतिकृदेव भूत्याः' इति चेति । अत्राद्यश्रुतिस्थमृदयेत्यादेर्ज्ञानोत्तमशि- ष्येण विज्ञानात्मनाम्नैवं व्याख्या कृता। जकारस्थाने दकारः तथाच मृदयत्येतन्मृजयेति पदं भवति।मृजया मार्जकेन शुध्दिसाधनद्रव्येणोपलिप्तं सदनंतरं सुधातं प्रक्षालितं सत् यथा भ्राजत इति एवं सुधातमित्येतत् छांदसमित्येवोक्तं। एवं तदिवात्मतत्वमिति पाठो न धृतः।

तद्वात्मतत्वमिति पाठं धृत्वा वा शब्द उपमार्थतया व्याख्यातः। तद्वत्स तत्वं प्रसमीक्ष्येति पाठेऽप्ययमेवार्थ इत्युक्तं। तत्वशब्दस्यैवात्मतत्वपरत्वमिति तद्भावः।अस्माभिस्त्वाधुनिकेषु केषुचित्पुस्तकेषु तदिवेतिपाठस्यैव दृष्टत्वात् ब्रह्मानंदेनेवशब्दस्यैव धृतत्वेन तमेव धृत्वा व्याख्यातं। उक्तरीत्या पाठद्वयसत्वे वा शब्द उपमार्थः प्रथमपाठे। द्वितीयपाठे तत्वपदमेवा त्मतत्वपरमनुसंधेयमस्मद्व्याख्यायामपि। उक्तपरकृतव्याख्यायामुपलिप्तमित्यस्य वैयर्थ्यं। मृदया सुधातमित्यनेनैव पूर्णत्वात्। मन्मते तु पूर्वं स्वच्छमेवादर्शादिकं मृदालिप्तं न प्रकाशते प्रक्षालनानंतरं च प्रकाशते जीवस्वरूपमपीदानीं मृदादिस्थानीयैरज्ञानादिभिरा-वृतं तदपगमे तु ज्ञानानंदादिस्वाभाविकरूपविशिष्टं स्फुरतीत्यर्थलाभाय सार्थकं भवति। अत्राद्वैतचंद्रिकाकारस्य प्राचीनाचार्यविरोधोपि। उक्तविज्ञानात्मना तद्वात्मतत्वमित्येतस्य पूर्वार्धशेषत्वेन व्याख्यायाः कृतत्वात्। यदात्मतत्वेनेत्यस्य तु तदनन्वितत्वेन स्वातंत्र्येण व्याख्यातत्वात्। अनेन तु तदीयपाठमपहाय पाठांतरमेवेवशब्दघटितं धृत्वोक्तवाक्यद्वयस्य परस्परान्वितार्थकत्वेन व्याख्यानादित्यपि द्रष्टव्यं। तस्माद्भेदज्ञानादेर्मोक्षहेतुत्वात्तत्प्रतिपा-दनस्य सप्रयोजनत्वात्तत्र युक्तं श्रुतेस्तात्पर्यं। अपि च भगवतो जगत्कर्तृत्वादिगुणविशिष्ट-त्वप्रतिपादकवाक्यानां वेदेषु सत्वात्तस्यापूर्वत्वादुक्तरीत्या सप्रयोजनत्वादुपपत्तिसिद्धत्वेन अबाधितत्वेन तत्तात्पर्यस्यावश्यकत्वात्तदनुगुणतया तच्छेषभूतजगत्सत्यताप्रतिपादकानां यूपाहवनीयादिवाक्यवत्स्वार्थतात्पर्यमक्षतमेव। प्रत्युत तद्विरुद्धाद्वैतवाक्यानामेव दौर्बल्यं। तेषामुपासनाविधिशेषत्वान्न स्वार्थपरत्वमिति त्वखंडार्थभंगे निरसिष्यते सत्यत्वश्रुतीनां स-प्रयोजनत्व प्रतिपादनेन। अत एवेत्यनेन यद्दूषणमाशंक्य निराकृतं परेण तदपि समर्थितं। अत एव न निषेधवाक्यैकवाक्यता तेषामेवैताद्विरोधेन स्वार्थपरत्वाभावात्। एतेनैव निरपेक्ष त्वादपि नानुवादित्वमित्यपि समर्थितं। शक्त्यादिग्रहमादाय सापेक्षत्वोपपादने ऐक्यवाक्य-स्यापि तथात्वापत्तेः। अपिच घटादीनां सत्वस्य प्रत्यक्षसिद्धत्वेपि तद्दार्ढ्यार्थत्वान्न श्रुतेर्वैयर्थ्यं। नच प्रत्यक्षसिद्धेर्थे न वाक्यसापेक्षत्वं। तथात्वे अनुवादकवाक्यस्यैवाभाव प्रसंगात्। प्रत्यक्षमात्रेण वाक्यं विना प्रवृत्त्याद्यभावापातश्चेति वाच्यं। यत्र बलवत्तरवादि विप्रतिपत्त्यादिना अप्रामाण्यसंशयः तत्र दार्ढ्याय प्रमणांतरसंवादापेक्षणात्। अत एव भिन्नात्मसत्वबोधिका अस्तीत्येवोपलब्धव्य इति श्रुतिः आत्मसत्यत्वबोधनाय प्रवर्तते। नच देहभिन्नात्मनः प्रत्यक्षतैव नास्ति।तथात्वे चार्वाकादेस्तत्र विप्रतिपत्तिरेव न स्यादिति वाच्यं। प्रत्यक्षसिद्धे विप्रतिपत्त्यभावे गुणगुण्यभेदस्योपादानोपादेयाद्यभेदस्य प्रत्यक्षबलेन व्यव-स्थापनीयत्वेन तस्यावश्यकत्वे नैय्यायिकानामत्यंतभेदे विवादानुपपत्तेः। तस्मादस्फुट-प्रत्यक्षसिद्धे विप्रतिपत्तिर्भवत्येव। प्रत्यक्षस्यास्फुटत्वं च स्वप्रकारविरुद्धकोटिव्यावर्तकधर्म-साहित्याविषयकत्वं जातिविशेषो वा।न चैवमनुवादकवाक्याभावप्रसंगःअग्निर्हिमस्य भेषज-मित्यादेरेव सत्वात्। न चात्र स्वभाववादेनाप्रामाण्यबुद्धिवारणाय तदिति वाच्यं। तन्मात्र मधिकृत्य तद्वादस्याप्रसक्त्योक्तवाक्यस्य तदनिवर्तकत्वात्। किंच स्वभाववादेपि कारण-कार्यभावाद्युपेतं जगत् स्वत एवाविर्भूतं स्वत एव लीनं कूलपतनादिवन्न त्वीश्वरादिमूल-कमित्यभिप्रायः। अन्यथा स्वतृप्तये भोजनादौ प्रवृत्तिर्न स्यात्। तथा चाग्नेर्हिमनिवारण-कारणत्वे विवादाभाव एव। विवादसत्वे प्रत्यक्षसिद्धे विवादो नास्तीति त्वदुक्तिरसंगता-स्यात्। ननु सादिवादिविप्रतिपत्तिनिरासायानादिवेदप्रवृत्तिरयुक्तेति वाच्यं। वादा-नामपि प्रवाहतोऽनादित्वात्। श्रुतेरपि सर्गाद्यकाले ईश्वरसृष्टत्वात्। केवलमानुपूर्वी व्यत्यासाभावादपौरुषयेत्वव्यवहारः। अन्यथा सादिप्रत्यक्षसिद्धानुवादिन्यपि श्रुतिः

(टीका) अथापि स्यात्। अर्थापत्त्या शुक्तिरजतादेरंबरादेर्वाऽनिर्वाच्यता सेत्स्यति। तथाहि। यदत्यंतासन्न तत्प्रतीयते यथा नरविषाणं। यच्चात्यंतासन्न तद्बाध्यते यथात्मा। तदिहोभयान्यथानुपपत्त्यानिर्वचनीयतैवाश्रयितुं युक्तेति तत्राह।

(मूलं) **नचार्थापत्त्यानिर्वचनीयत्वासिद्धिः ॥३३॥**

(टीका) अर्थापत्तिः खलु नानुमानाद्भिद्यते। अनुमानं चाप्रासिद्धविशेषणतया निराकृतमिति नार्थापत्त्या च शुक्तिरजतादेरंबरादेर्वाऽनिर्वाच्यतासिद्धिः। अथवात्यंतासतो नरविषाणादेरपि तत्पदात्प्रतीतिसंभवेनासन्नप्रतीयत इति व्याप्त्यभावात् शुक्तिरजतादेरत्यंतासत्वेनैवोपपत्तेस्तथान्यथा विज्ञातस्य

---

कथं स्यात्। एतेन प्रवाहतो अनादिशून्यवादादिप्राप्तजगन्मिथ्यात्वानुवादिनी मिथ्यात्वश्रुतिः किं न स्यादिति न्यायामृतोक्तपक्षः सिध्यत्येव। तस्मात्सत्यत्वश्रुतीनामनुवादकत्वाभावाद्युक्तं तदुदाहरणमिति स्थितं। एतत्सर्वमनिर्वचनीयस्य सर्वथाऽप्रामाणिकत्वकथनोत्तरं सत्यत्वश्रुत्युदाहरणेन मिथ्यात्वश्रुतीनां व्याहतिपरिहारोपायाभावसूचनद्वारा दौर्बल्यं सूचनेन विश्वं सत्यं वशे विष्णोरित्यादिप्रमाणोदाहरणेनेश्वरस्वरूपप्रतिपादनशेषतया सत्यत्वश्रुतीनां सूचनेन सूचितं टीकाकृतापि। अथाप्युक्तरीत्या श्रुतीनां सत्यत्वप्रतिपादकतया तत्परत्वेऽपि अनिर्वचनीयं क्वचित्संभावितमित्यर्थकेन। अथापि स्यादिति शंकावाक्येन सूचितमिति न न्यूनता। अन्यथा लाघवान्नन्वित्योच्येतेति सर्वं चतुरस्रं। यदपि गुर्वद्वैतचंद्रिकायां याथातथ्यत इत्यस्य तथ्यं सत्यभूतमुपादानमनतिक्रम्येत्यर्थः। तेनोपादानसत्तातिरिक्तसत्ता नास्तीत्यर्थः। यथा शब्दोऽनतिक्रमार्थः इति व्याख्यातं तत्तु यथेति यथापदोत्तरवृत्तिप्रयोजकप्रयोऽभावेन तदनुपपत्तेरुपादानवाच्यश्रवणाच्चायुक्तमेवेति बालानामपि सुबोधमिति स्फुटमेवेति शिवं। अर्थापत्त्येति। परेण व्यवहारे भट्टनय इति वादिनार्थापत्तेः पृथक्परिगणितत्वात्तन्मतानुसारेणाशंका। अतः स्वमतेऽस्या अनुमानाबहिर्भावेन तद्दूषणेन दूषितत्वेपि न पौनरुक्त्यवकाशः। यदिति। असत्यपदमभावप्रतियोग्यर्थकं प्रागभावादिप्रतियोगिघटादिबोधकमपि भवतीत्यतोऽत्यंतेत्युक्तं। यथा नरविषाणमिति यथा प्रत्यक्षातिरिक्तप्रमाणानंगीकर्तुरपि लोकायतस्य परबोधनाय युक्त्याद्युपन्यासो यथा स्वमतसिद्धलोकरीत्याभिसंधिपूर्वकः तथा नरविषाणमित्यादिशब्दो ऽपि विकल्पजननद्वारा प्रकृतोपयोगी भवत्वित्यभिसंधिना परस्य व्यवहारोऽतोऽसत्प्रतीतिमनंगीकुर्वतः कथं तद्बोधेच्छया वाक्यप्रयोग इति शंकानवकाशः। विकल्पाख्यवृत्तीच्छयैव तत्प्रयोगात् विकल्पे प्रतीतिभेदांशे परस्य भ्रम इत्यवसेयं। अत्यंतसत् बाध्यत्वसामान्यशून्यं न बाध्यते त्रैकालिकनिषेधप्रतियोगित्वप्रकारकप्रमागोचरत्वरूपबाध्यत्ववन्न भवतीत्यर्थः। यद्वा ज्ञानोच्छेद्यत्वस्वरूपबाध्यत्ववन्न भवतीत्यर्थः। अतो न यथाश्रुते साध्यावैशिष्ट्यमिति शंकावकाशः। स्वमतमनुरुध्यानुमानपक्षोक्तदूषणेनेदमपि दूषितं भवतीत्याशयेन मूले हेत्वनुक्तिरित्यभिप्रेत्याह। अर्थापत्तिरिति। अनुमानं चेति। विमतं सदसद्विलक्षणं बाध्यत्वे सति प्रतीतत्वादिव्यतिरेक्यनुमानमित्यर्थः। तस्याः पृथक् प्रामाण्यमंगीकृत्याप्येतद्दूषणपरत्वं मूलस्याह। अथवेति। तत्पदादिति। नरविषाणमिति पदादिति

( टीका ) सम्यग्विज्ञानगोचरत्वस्य बाध्यत्वस्य सतश्चिदा (नंदा) त्मनोपि संभवे न सन्न बाध्यत इति व्याप्त्यभावादंबरादेस्सत्वेनैवोपपत्तेनार्थापत्त्याऽनिर्वचनीयतासिद्धिरिति व्याख्येयं । अत्यंतासतः प्रतीत्यनंगीकारे बाधकं चाह ।

[ मूलं ] असतःप्रतीतिं विनाऽसद्वैलक्षण्यज्ञानानुपपत्तेः ॥३४॥

( टीका ) यदि पराऽसन्नप्रतीयात्तदा शुक्तिरजतादेरसद्वैलक्षण्यं न जानीयात् । वैलक्षण्यज्ञानस्य प्रतियोगिज्ञानसापेक्षतानियमात् ।

---

अर्थः । तस्यापि सुबंतत्वरूपपदत्वमस्त्येव । समासशक्तिपक्षे शक्तिमत्वरूपपदत्वमपि । एतच्चाग्रे विवेचयिष्यते । यद्वा तत्पदादित्यस्य तदितिपदादित्यर्थः । तस्य च सर्वनामत्वान्नरविषाणबोधकत्वमक्षतमेवेति भावः । यद्यपि ज्ञाननिवर्त्यत्वादिरूपमेव बाध्यत्वं पराभिमतं तथापि तद्वक्ष्यमाणरीत्या जगत्यसिद्धं अर्थापत्तिश्च जगतोप्यनिर्वचनीयत्वसाधकत्वेन पराभिमता अतस्तत्साधारणमेव बाध्यत्वं निर्वाच्यं । तच्चान्यथाविज्ञातस्येत्यादिरूपमेवेति सित्धवत्कृत्याह । तथेति । चिदात्मन इति । क्षणिकत्वादिना गृहीतस्य स्थिरत्वादिना ग्रहविषयतायाः सत्वादित्यर्थः । अंबरादेरिति । आगमनिराकरणावसरे अद्भुतत्वादनिर्वाच्यमित्यादिना जगत्सामान्यनिर्वचनीयत्वबोधकवाक्यगत्युक्त्या जगत्सामान्यस्यापि प्रसक्तत्वेनार्थापत्तिशंकापि तत्सामान्यविषयिण्येवोचितेत्याशयेन मूलकारैस्तत्सामान्यमेव प्रस्तावितं । अत एव नच बाध्यं जगदिति वक्ष्यति । अतस्तदनुसारेणांबरादेरित्युक्तं । बाधक चेति । ननु कुतोऽर्थापत्त्या नानिर्वचनीयत्वासित्धिरित्यत आहेति उत्तरग्रंथावतरणे ऋजुमार्गेण संभवति कुतस्तन्मूलार्थे स्वयमेव हेतुमध्याहृत्य व्याख्यायासत्प्रतीत्यनंगीकारे बाधकमाहेत्यस्य लाभो भवति स चानुपपन्नः । मूलेऽसत्प्रतीतौ साधकस्यानुक्तत्वात् । अध्याहारे बीजाभावेन स्वोक्तव्याख्यारीत्याऽध्याहारस्याकिंचित्करत्वेनाध्याहारेण तल्लाभस्य वक्तुमशक्यत्वादिति चेन्न । असतः प्रतीतिं विनेत्युत्तरमूलस्याऽसत्प्रतीत्यनंगीकारेऽनिष्टप्रसंजकत्वेनासत्प्रतीतिमात्रसाधनोपयोगेप्यर्थापत्तौ साक्षाद्दूषणाप्रसंजकत्वेन मध्ये साक्षात्तद्दूषणाध्याहारस्यावश्यकत्वे तत्रासत्प्रतीतिसाधकमनुपन्यस्य तत्र व्याप्तिभंगस्य कर्तुमशक्यत्वेन तत्साधनाध्याहारस्याप्यावश्यकत्वेन बाधकं चाहेत्यवतारिकासंगतेः । एवं नच बाध्यं जगदिति मूलेन सद्विलक्षणत्वसाधकबाध्यत्वस्य जगत्यसित्धिरुक्ता । सा बाध्यत्वपदार्थसामान्यविषयिणी न संगच्छते । अन्यथा विज्ञातस्येत्यादिबाध्यत्वस्यासित्ध्यभावेन बाधितत्वात् । अतः पराभिमतबाध्यत्वविशेषविषयत्वस्यावश्यकत्वे तदुपरि शंका भवत्येव । जगति विद्यमानं यदन्यथाविज्ञातस्येत्यादिबाध्यत्वं तेनैव सद्विलक्षणत्वं सित्ध्यत्विति तच्छंकानिरासस्योत्तरत्राकरणेन तन्निरासोऽत्रैव मूलकृतामभिमतः । परंतु स्फुटत्वाच्छिष्यैरेवोह्य इत्याशयेन स्वशब्देन नोक्तोऽतः तन्निराकरणमप्यत्रैवाध्याहृत्य व्याख्यातमिति न किंचिदसमंजसं । प्रतियोगिज्ञानेति । क्वचिद्विकल्पत्वेन क्वचिद्ज्ञानत्वेन कारणत्वे गौरवात् । घटादिस्थले विकल्पासंभवेन ज्ञानत्वेन कारणताया उभयसित्धत्वेन सर्वत्रैव तथैव कारणत्वकल्पनादिति भावः । ननु तद्विषयकत्वमेव कारणतावच्छेदकमस्तु ज्ञानत्वनिवेशो प्रयोजनाभावात् । तथा च विकल्पस्याप्युक्तरूपेण कारणत्वं प्राप्तमेव । नच संस्कारेच्छादिबलादपि तदापत्तिरिति वाच्यं । उद्बुद्धसंस्कार-

स्थले प्रतियोगिस्मरणस्येच्छादिस्थले च तत्कारणतया च प्रतियोगिज्ञानस्यावश्यकतया तत्रेतरसामग्रीसत्वे तद्वैलक्षण्यग्रहोत्पत्तेः किंचित् क्षणविलंबेन तवाप्यानुभाविकतया क्षणादिविलंबस्य शपथैकनिर्णयत्वेन तत्र तादृशसंस्कारेच्छादिभिरेव कार्योत्पत्यंगीकारेण ज्ञानांतरस्य तत्राकल्पनात्। यदि चानुद्बुद्धसंस्कारस्थले कार्यवारणाय तदन्यत्वमत्र निवेशनीयं। तच्चानुद्बुद्धसंस्कारत्वं न जातिः किंतु तत्तदुद्बोधकाभावविशिष्टसंस्कारत्वमेव। तथा च तदवच्छिन्नभेदनिवेशे महागौरवाल्लाघवात् ज्ञानत्वजातिरेव निवेश्या। इत्थं च पूर्वोक्तस्थलेषु ज्ञानोत्पत्तिविलंबेन कार्यस्य विलंबः। तत्र प्रतियोगिस्मरणादिकल्पनादिसिद्ध एव। फलमुखगौरवस्यादोषत्वादिति विभाव्यते। तदा शशविषाणादिविषयकज्ञानासंभवेन तत्र विकल्पस्यैवाभ्युपगंतव्यतया तत्साधारणवैजात्यस्यैव जनकतावच्छेदकत्वाभ्युपगमेन तस्य विकल्पज्ञानोभयमात्रस्वीकारेण संस्कारान्यत्वस्यानिविष्टत्वेन गौरवानवकाशः। इतः पूर्वं वैजात्यस्यासिद्धावप्युक्तकारणतावच्छेदकघटकतयैव तत्सिद्धिसंभवात्। एवं चेच्छादिभ्यः कार्योत्पत्त्यनभ्युपगमेऽपि न क्षतिः। तथा चासतः प्रतीतिं विना सद्वैलक्षण्यज्ञानानुपपत्तेरित्येतदयुक्तमिति चेत् न। विकल्पस्य ज्ञानातिरिक्तत्वे मानाभावात्। यथा घटवद्भूतलमिति वाक्यजन्यबोधोत्तरं घटवद्भूतलं जानामि शाब्दयामीति प्रत्ययस्तथा शशविषाणमस्तीति वाक्यजन्यवृत्त्युत्तरमपि शशविषाणं शाब्दयामि जानामीत्यनुव्यवसायस्य सर्वसिद्धतया तादृशवृत्तौ ज्ञानत्वतद्व्याप्यशाब्दत्वयोरेव सत्वावगमाच्च। विकल्पाख्यधर्मस्य तत्रांगीकारे ज्ञानविकल्पोभयसाधारणवैजात्यांगीकारे च तथैव विकल्पयामीत्याद्यनुव्यवसायापत्तेः। नच तत्र दोषवशात्तद्धर्माग्रहः ज्ञानत्वादिधर्मग्रहश्च भवतीति युक्तं। तादृशबोधे कुत्रापि तद्ग्रहाभावेपि तत्र तद्धर्ममंगीकृत्य दोषवशात्तदग्रहनियमेन प्रतीयमानधर्मापलापेन तद्ग्रहस्य दोषमूलकत्वमिति च कल्पने घटस्य पटत्वं पटस्य घटत्वमंगीकृत्याप्युक्तरीत्या समाधानस्य वक्तुं शक्यत्वेन सर्वव्यवस्थोच्छेदप्रसंगः। न ह्यज्ञातशशविषाणासत्वकपुरुषस्य घटवद्भूतलमिति वाक्याच्छशविषाणमस्तीति वाक्यस्य प्रवृत्त्यादिकार्यजनने मात्रयाऽपि विशेषो ऽनुभूयते। न तद्वाक्यविकल्पाख्यज्ञानातिरिक्ताप्रामाणिकवृत्त्यंतरजनकत्वं कल्पयितुं संभावनापि स्यात्। तत्रासत्वग्रहदशायां तु घटादावसत्वग्रहदशायां तु घटवद्भूतलमित्यादिवाक्यगतिरेवात्रापीति न तत्रापि विशेषः। नच वृत्तयः पंचतय्यः क्लिष्टाक्लिष्टाः प्रमाणविपर्ययविकल्पनिद्रास्मृतय इति भगवता पतंजलिना योगसूत्रे वृत्तिविभागमभिधाय शब्दज्ञानानुपातीवस्तुशून्यो विकल्प इत्यनेन विकल्पाख्यवृत्तेः प्रमाणविपर्ययस्मृतिभ्यः पृथगभिधानात्। ज्ञानानां चैतदन्यतमात्मकत्वाद्ज्ञानवैलक्षण्यं विकल्पस्य निद्रावद्युक्तं। वस्तु शून्य इत्यनेनासद्विषयकत्वस्यैव विकल्पलक्षणत्वेनाभिहितत्वेन शशविषाणमित्यादिवृत्तेर्विकल्पत्वं सिद्धमिति वाच्यं। तत्र विकल्पो न ज्ञातमित्यनुक्तत्वेन ज्ञानविशेषस्य प्रमाणविपर्ययसंज्ञाकरणवदसन्मात्रावगाहिज्ञानव्यक्तेर्विशेषस्य विकल्पसंज्ञाकरणसंभवेन तदुक्तिमात्रेण लोकसिद्धज्ञानत्वानुभवस्य भ्रमत्वकल्पनायोगात्। वस्तुतस्तद्भाष्ये शब्दज्ञानेति सूत्रं धृत्वा स च प्रमाणोपारोही न विपर्ययोपारोहीत्याद्यभिधाय तद्यथा पुरुषस्य चैतन्यं पुरुषस्वरूपमिति तथा प्रतिषिद्धवस्तुधर्मानिष्क्रियः पुरुषः तिष्ठति बाणः स्थास्यति बाणः स्थित इत्युदाहृतं भवति । व्यपदेशवृत्तिः यथाचैत्रस्य गौरित्यनेन गोचैत्रयोर्विशेषणविशेष्यभाववदत्र भेदाभावान्मुख्यविशेषणविशेष्यभावो नास्तीति दर्शितं। एवं तट्टीकायां वाचस्पतिना व्यवहाराविसंवादादविपर्ययत्वं विशेषणविशेष्यभावाय भेदाभेदयोर्विकल्पितत्वान्न प्रामाण्यमित्यभिहितं। तथाच मतांतरे

प्रमाणत्वेन सिद्धज्ञानान्येव कयाचिद्विवक्षया विकल्पत्वेनोदाहृतानि। ननु शशविषाणमि त्यादिप्रतीतिः । तथाच पतंजलिग्रंथायां वस्तुपदस्य मुख्यार्थकत्वाद्वस्तुशून्य इत्यस्य मुख्याविषयक इत्यर्थः। भेदप्रयुक्तसंबंधस्योत्सर्गतो भेदाक्षेपकतया मुख्यत्वेन स्वरूपभूत चैतन्यादिसंबंधानाममुख्यत्वात्तदवगाहिप्रत्ययस्य वस्तुशून्यत्वकथनसंभवः। पतंजल्युक्ति मात्रस्यादर्तव्यत्वे त्वया तदुक्तसांख्यशास्त्रप्रामाण्यस्याभ्युपगंतव्यस्यानंदं ब्रह्मण इत्यादि वाक्यानां व्यावहारिकप्रामाण्यभावस्याप्यापातेन त्वदुक्तेरकिंचित्करत्वाच्च । निद्राया अपि सुखमस्वाप्स्वमिति परामर्शप्रयोजकज्ञानात्मकत्वस्यापि तद्भाष्य एवोक्तत्वेन निद्रादृष्टांत स्याप्यसंगतेश्च । तस्मादसत्प्रतीत्यैव तद्ज्ञानमुपपादनीयमिति यदत्र केनचित्प्रलपितं यत्त्वत्यंतासतो नरविषाणादेरपि तत्पदप्रतीतिसंभवेन नासत्प्रतीयत इति व्याप्त्यभावा च्छुक्तिरजतादेरत्यंतासत्वेनैवोपपत्तेस्तथाऽन्यथाविदितस्य सम्यग्ज्ञानगोचरत्वरूपबाध्य त्वस्य सतश्चिदात्मनोऽपि संभवेन सन्न बाध्यत इति व्याप्त्यभावादंबरादेः सत्वेनैवोपपत्तेः। न ख्यातिबाधान्यथानुपपत्त्या अनिर्वचनीयत्वसिद्धिरिति तन्न । नरविषाणादिशब्दादत्यंता सतः प्रतीत्यासिद्धेः। नरशब्दस्य नरसंबंध्यर्थकतया विषाणशब्दस्य शृंगमात्रस्य वाचितया तयोश्चात्यंतासत्वविरहेण तदन्यस्याशब्दार्थतया ततः प्रतीत्ययोगात्। न चैकार्थीभावलक्षण सामर्थ्यमेव तत्प्रयोजकं। तच्च विशिष्टैकार्थप्रतिपादकत्वं विनाऽनुपपन्नमिति नरसंबंधित्व विशिष्टशृंगरूपार्थस्य तस्मात्प्रतीतिरावश्यकीति वाच्यं । तथासति तादृशवाक्यजन्यबोधस्य निर्विकल्पतया संशयाद्यविरोधापत्तेः। नहि विशेषदर्शनशून्यस्य तादृशवाक्यजन्यबोधोत्तरं शृंगं नरीयं न वेति संशयो जायते। ननु संशयजनकशक्तेः कुंठितत्वापादनमेव प्रतिबंधकता। सा चोक्तवाक्यजन्यबोधस्यानुभवबलादंगीक्रियतेऽतो न दोष इति चेन्न । तादृशप्रत्यया नंतरं शशीयत्वेन शृंगं जानामीत्यनुभवापलापापत्तेः। अर्थांतरसान्निकृष्टसमुदायात्तदर्थासंनि कृष्टार्थांतरबोधस्यायुक्तत्वाच्च । न ह्येतद्वाक्यश्रवणात्पूर्वमुक्तविशिष्टज्ञानमस्ति येन तत्र तद्वाक्यशक्तिर्गृह्यते। इतरान्वितशक्तिवादेप्यन्वयविशिष्टस्यैव पदशक्यता। मन्मते विशिष्ट स्यानतिरिक्तत्वेऽपि विशेषणप्रकारेण तस्य भानमिति न क्वचिदनुपपत्तिः। नच दंडविशिष्टे दंडाभावाद्विशिष्टप्रत्ययो नियमेन भ्रमः स्यादिति वाच्यं। दंडविशिष्टो दंडशून्य इत्यस्य स चेतसामनुचितत्वात्। नचैवं दंडी दंडवानिति प्रतीत्यापत्तिरिति वाच्यं। प्रकारांतरेण तद्वारणे नास्माकं क्षतिः अविरुद्धत्वात्। अनिर्वाच्यवादेप्येकार्थीभावस्योपपादकत्वात् दंड विशिष्टे दंडवतो भेदाभावेन विशिष्टप्रतीतेरभावात्। अन्यथा घटो घट इति प्रतीत्यापत्ते र्दुर्वारत्वात्। प्रकारांतरेण तद्वारणे नास्माकं क्षतिः अविरुद्धत्वात्। अनिर्वाच्यवादेप्येकार्थी भावस्योपपादकत्वात् । परस्परनिरूप्यनिरूपकभावापन्नस्वघटकपदार्थविषयताशालिबोध परतारूपसामर्थ्यस्यैव समासशास्त्रे आश्रयणसंभवाच्च । परोक्षे अन्यथाख्यात्यभ्युपगमेऽ पि बाधकाभावात् । बाध्यत्वं नोक्तरूपमबाध्यत्वव्यतिरेकः। स्वाधिकरणनिष्ठाभावप्रतियो गित्वं ज्ञानत्वेन ज्ञानजन्यनाशप्रतियोगित्वं वाऽऽपादकं। सत्वमपि स्वप्रकारकधीविषयता व्यापकाभावप्रतियोगित्वाभाव इति नात्मन उक्तबाध्यत्वं सत्वव्याहतिप्रसंगात्। किंच शृंगार्थिना शृंगं क्वास्तीति पृष्टे यत्र गिरिदर्यां शशशृंगमस्तीत्युक्तं तत्र शृंगत्वानवगाह्य खंडासदवगाहिप्रत्ययस्य जनने तद्वाक्यजन्यबोधानंतरं शृंगार्थिनो गिरिदरीप्रवृत्तिर्न स्यात् । तत्र शृंगत्वभाने चान्यथाख्यातिर्दुर्वारैवेति किमनेन दुष्टकुचोद्येन। यत्तु असत्प्र तीत्यभावे असद्वैलक्षण्यज्ञानानुपपत्तिरिति तदसत्। नह्यसद्वैलक्षण्यमसत्प्रतियोगिको भेदः किंतु सत्तादात्म्यमात्रमित्युक्तत्वात्। ननु तत्साधनं व्यर्थमिति चेन्न । शून्यवादिना पर

मार्थसतोऽनंगीकारात्सत्तादात्म्यशून्यत्वाविरोधिनोऽनिर्वाच्यत्वस्य साधने तच्छून्यतामादाय जगतस्तेन तदन्येन वाऽर्थांतरतोद्भाव्येतेति तन्निरासाय तदावश्यकत्वात्। न चासत्ख्यात्यनभ्युपगमे तत्खंडनादौ प्रवृत्त्ययोगः। असत्प्रतीयत इति परोक्तप्रतिज्ञायाः अप्रामाण्यसमर्थनरूपे खंडने विजयार्थप्रवृत्तिसंभवात्। शशशृंगं असदिति वाक्यात्तु जायत एव प्रतीतिः सा तु व्यधिकरणप्रकारकत्वाद्विपर्यय एव। उक्तप्रतिज्ञायाः अप्रामाण्यसमर्थनं च प्रतीयमानत्वावच्छेदेन सत्तादात्म्यसाधनेनाप्युपपद्यते। शशशृंगमलीकमित्यादौ शशशृंगपदं तद्वाक्यपरं अलीकपदं चाप्रमाणवाक्यार्थकं। अन्यथा सत्यभेदविशिष्टार्थकत्वे भेदस्य भावाभावविलक्षणस्याभ्युपगमापत्तेः। तथा च भावाभावस्वरूपत्वान्नान्योन्याभावता पृथगिति विरुध्येत। लक्षणया तस्य सद्वृत्तिधर्मविशिष्टपरत्वे मुख्यार्थपरतादृशवाक्यार्थप्रतत्यिनुपपत्तिः। वस्तुतः सत्यवचा इत्यादौ प्रमाणे ऽपि सत्यपदप्रयोगात् तत्समानार्थकऋतशब्दोऽपि तदर्थकः तेनालीकं त्वप्रियेऽनृत इति न कोशविरोधः। निराश्रयस्यैव धर्मस्य स्वीकारे घटत्वादेरपि घटादतिरिक्त आश्रयः स्यात्। तत्रापि तस्य घटादतिरिक्त आश्रयो न सन्नित्यनुभवात्। अत्रापि ऋतभेदस्याश्रयो न सन्नित्यनुभवात्। किंचाविषयस्य ख्यातिर्वा न वा ख्यातिविषये विषयभेदस्य वक्तुमशक्यत्वादिति तस्याख्यातौ तत्खंडनायोगः। न च शशशृंगमसदिति मुख्यार्थपरं वाक्यमप्रमाणं स्यादिति वाच्यं इष्टत्वात्। नच नञतिरिक्तयादृशपदसमुदायाद्योऽर्थः प्रतीयते तादृशसमुदायतद्घटितसमुदाययोरन्यतराप्रामाण्ये तदितरप्रामाण्यमिति नियमभंगापत्तिरिति वाच्यं। अविषयो न सन्निति वाक्ये तवाप्यगते विषयभेदे आश्रयादेर्लक्ष्येन सत्वे तदसत्वे च वाक्यप्रामाण्यस्य दूरस्थत्वात् अप्रयोजकत्वात्। किंच शशविषाणादिशब्दादखंडार्थप्रत्यये नीलघटादिशब्दादपि तदापत्तिः। इष्टापत्तौ च नीलत्वघटत्वानाश्रयतया नीलघटपदेन तदुल्लेखायोग इत्यन्यत्र विस्तर इति तन्मदं। अत्यंतासत्यपि ज्ञानमर्थे शब्दः करोति हीति त्वदीयोक्तेः। असद्विषयकपरोक्षज्ञानस्य त्वत्प्राचीनैरंगीकृतत्वेन नरविषाणादिपदादसद्विषयकविकल्पाख्यवृत्तिपक्षस्य बहुशस्त्वद्गुरुणा अद्वैतचंद्रिकायामभ्युपगतत्वेन च तस्य सर्वथानुपपन्नत्वे तदभ्युपगमस्य त्वदाचार्यप्रेक्षावत्वापादकत्वप्राप्त्या शशविषाणादिपदेन ज्ञानस्य विकल्पस्य वोत्पत्तौ कस्याश्चिद्गतेरवश्यं त्वया वाच्यतया मन्मतेऽपि तद्रीतिसंभवेन मां प्रत्येतद्दूषणस्यासंगतत्वात्। नहि नरविषाणादिपदैर्विकल्पोत्पत्तिरप्यगृहीतपदवृत्तिकस्य जायते अनुभवविरोधात्। येन तत्र गतिर्मया न वक्तव्येति वक्तुं शक्येत। अपि च नरविषाणमसत् शशविषाणं यदास्ति तदानयेत्यादिवाक्यैर्नरविषाणबोधः नरविषाणपदेन सर्वनामतत्पदादिना च जायत इत्यनुभवसिद्धं। अन्यथा गिरिदर्यां नरशृंगमस्ति तदानयेति वाक्यश्रवणोत्तरं गिरिदरीगमनप्रवृत्त्यभावप्रसंगात्। स च बोधः व्यधिकरणप्रकारकोऽन्यथाख्यातिरूप इति विशिष्टानिर्वचनीयविषयक इति विशिष्टासद्विषयक इति त्रयः पक्षाः प्राप्ताः। तत्र न तावदन्यथाख्यातिपक्षस्त्वया वक्तुं शक्यः। अन्यथाख्यात्यंगीकारे अपसिद्धांतापत्तेः। अपरोक्षप्रतीतेरेवान्यथाख्यातित्वाभावो मत्सिद्धांत इति न वाच्यं। तस्यैव तथात्वाभ्युपगमे बीजाभावात्। तत्रापि व्यधिकरणरजतत्वप्रकारकशुक्तिविषयकत्वोपपत्तेः। अत्र यदनिर्वचनीयवादार्थे ब्रह्मानंदेनोक्तं तदुत्तरत्रोद्धाट्य दूषयिष्यामः। किंच ज्ञानानां वैलक्षण्यं विषयवैलक्षण्यनिबंधनं। अर्थेनैव विशेषो हि निराकारतया धियामित्युक्तेः। अन्यथा साकारवादापत्तेः। तथाचेदं रजतं रजतमिदमिति आकारस्वनिर्वाहाय परस्पराध्यासः। ततो रजतमिदमीविभ्रमो रजते तादा-

त्पयुत्पद्यत इति हि ते मतं। तथाच शशविषाणमस्तीतिबोधस्य एवं गौर्विषाणी शशो ह्रस्व इति समूहालंबनभ्रमातो गौर्ह्रस्वः शशो विषाणीति समूहालंबनभ्रमविषयताकृतवैलक्षण्यस्यैव परोक्षभ्रमे विशिष्टभानानंगीकर्त्रा त्वया ऽभ्युपगंतव्यतापत्त्या साकारवादापत्तिर्दुर्वारा। एवमपरोक्षभ्रमेऽपि रजतापरोक्ष्यानुरोधेन शुक्तौ रजतोत्पत्तेरंगीकर्तव्यत्वेऽपि रजते इदंतादात्म्योत्पत्तिस्वीकारवैयर्थ्यप्रसंगेन परस्पराध्याससिद्धांतभंगप्रसंगः। रजतमिदमित्याकारस्य तादात्म्येन प्रकारतानिरूपितविशेष्यतायाः रजते स्वीकारमात्रेण संभवेन तादात्म्यांतरोत्पत्तेः। तन्निर्वाहककार्यकारणभावादेश्च कल्पनेऽतिगौरवप्रसंगात्। तादृशप्रकारकत्वस्य दोषविशेषस्य तन्निर्वाहकतायास्तादात्म्योत्पत्तिपक्षेऽप्यावश्यकत्वात्। इत्थं च घटादौ सत्तादात्म्यमपि घटः सन्नित्याकारानुभवानुरोधान्न सिध्यतीति सत्प्रतियोगिकतादात्म्यस्य मिथ्यात्वलक्षणे निवेशे असंभवः स्यात्। सत्प्रतियोगिकतादात्म्यशून्यत्वरूपत्वदभिमतासत्वस्याप्रसिद्धिर्वा सिद्धत्वे तस्य केवलान्वयित्वप्राप्त्या सर्वासत्वप्रसंगश्च। नच सदनुयोगिकतादात्म्यमेव निवेश्यमिति वाच्यं। सत्प्रतियोगिकत्वोपलक्षिततादात्म्यमेव निवेश्यतेऽतो न चिद्भिन्नत्ववैयर्थ्यमिति विप्रतिपत्तिव्याख्यानस्य त्वदुक्तस्यासंगतत्वापत्तेर्दुर्वारत्वात्। अपिच सदनुयोगिकतादात्म्यं सत्येव वर्तत इति तच्छून्यत्वस्य जगति सत्वाज्जगतो ऽसत्वापातः। नच तादात्म्यं द्विष्ठमिति वाच्यं। तथात्वे शुक्तिरूप्ययोरेकस्यैव तादात्म्यस्य परस्परसंसर्गतया भानसंभवेनेदंप्रतियोगिकतादात्म्यांतरोत्पत्तिस्वीकारवैयर्थ्यापत्तेः। सदनुयोगिकतादात्म्यप्रतियोगिकत्वशून्यस्यैवासत्वे सतोप्यसत्वप्रसंगः। सत्सदिति प्रत्ययाभावेन सदनुयोगिकतादात्म्यप्रतियोगिकत्वस्य सत्यसत्वात्। नच ब्रह्मानंद इति प्रत्ययादानंदात्मकसतो ब्रह्मात्मकसदनुयोगिकतादात्म्यप्रतियोगित्वं प्राप्तमिति वाच्यं। ब्रह्मत्वानंदत्वोपहितयोः कल्पितत्वेन सद्रूपत्वाभावात्। तस्यापि सद्रूपत्वे आनंदरूपसत्प्रतियोगिकत्वविशिष्टतादात्म्यस्यैव ब्रह्मरूपसति सत्वेन चिद्भिन्नत्वव्यावृत्तिसंभवे तदुपलक्षिततादात्म्यनिवेशासंगतेर्जागरूकत्वात्। किंच व्यधिकरणप्रकारकज्ञानोपगमे ऽपरोक्षप्रतीत्यनुरोधेन रजतमात्रोत्पत्तिः स्वीक्रियतां। ननु तादात्म्यस्येदंनिष्ठशुक्तिरूपादितादात्म्यस्यैतत्संसर्गतया भानसंभवात्। तथाच संसृष्टरूपेणापीदंभोऽनध्यस्तत्वप्राप्त्याऽध्यस्तमेव हि परिस्फुरति। भ्रमेषु नान्यत्कथंचन परिस्फुरति। भ्रमेषु इदमर्थवस्त्वपि भवेद्रजते परिकल्पितं रजतवस्त्विदमित्यादिसंक्षेपशारीरकाद्युक्तिविरोधः स्यात्। एतेनेदं रजतमिति भ्रमे कदाचिदनिर्वचनीयरजते लौकिकपारमार्थिकरजततादात्म्यं भासत इत्यद्वैतचंद्रिकोक्तं प्राचीनाभिप्रायवर्णनमपि परास्तं। लौकिकरजतस्य तादात्म्ये नात्र भाने व्यधिकरणप्रकारकस्यापरोक्षभ्रमे ऽप्यंगीकारापत्त्या ऽनिर्वचनीयव्याप्त्यसिध्यापत्तेः। तत्रैवान्यत्रापि लौकिकसंनिकर्षाननुरागिणोपि लौकिकरजतस्येदमंशे एव भानोपपत्तेस्तत्राप्यनिर्वचनीयरजतोत्पत्तिवैयर्थ्यं च। नच तत्राप्यपरोक्षप्रतीतिनिर्वाहायानिर्वचनीयरजतोत्पत्तिः लौकिकरजते अलौकिक्येव विषयतेति वाच्यं। रजते विषयताद्वयाननुभवत् रजतं साक्षात्करोम्येवेत्यनुभवात्। तन्मते ज्ञानस्यासंनिकर्षत्वेन तत्र प्रत्यक्षीयालौकिकविषयत्वस्य वक्तुमशक्यत्वाच्च। यत्र लौकिकरजतस्यापींद्रियसंयोगः तत्रोक्तभ्रमांगीकारे तत्रानिर्वचनीयरजतोत्पत्तिर्व्यर्थैवेत्यध्यस्तमेव स्फुरतीत्यस्यायुक्ततैव। न चात्र रजताद्युत्पत्त्यनंगीकारे तत्र भ्रमविषयत्रैकालिकनिषेधप्रतियोगित्वावगाहिबाधबुद्धेर्भ्रमत्वापत्तिः। भ्रमे प्रतीयमानस्य कस्यापि तथात्वाभावादिति वाच्यं। तर्हि परोक्षभ्रमबाधेपि दीयतां दृष्टिः। तत्र विशेष्ये प्रकाराभावमात्रग्राहकत्वेन भ्रमहेत्वज्ञाननिवर्तकत्वतज्जातीयकार्यांतरोत्प-

स्यादिविरोधित्वादिरूपबाधकत्वांगीकारेऽपरोक्षभ्रमबाधस्यापि तथात्वं किं त्वद्भयादपगच्छति । किं च नरविषाणादिशब्दैर्व्यधिकरणप्रकारकसन्मात्रविषयकबोधजननांगीकारे नरविषाणमस्तीति बोधस्य विषाणे नरीयत्वांशे एव भ्रमत्वं न त्वस्तित्वांश एव भ्रमत्वमित्यायातं । तथाच नरविषाणं नास्तीति बाधस्य सर्वांशे प्रमात्मकस्य धर्मितावच्छेदकांशे प्रकारांशे च भ्रमत्वापत्तिः।तथाच भ्रमस्यैव बाधापेक्षया सम्यक्त्वं स्यात्। अत्रेष्टापत्तिं कृत्वा लोकमर्यादोल्लंघने उन्मत्तवदुपेक्षणीयत्वापत्तेः । तत्र विषाणे नरीयत्वाभावबोधनं समासघटकपदार्थस्याश्रमस्यमानपदार्थेऽन्वये समासस्यासाधुत्वापत्तेर्हेयं । नच नञर्थातिरिक्तार्थान्वय एवासाधुत्वमिति वाच्यं । त्वदुक्त्यतिरिक्तनियामकानुपलंभात् । शशविषाणमसत् अलीकं तुच्छं त्रिकालवृत्त्यभावप्रतियोगीत्यादावगतिप्रसंगाच्च । यत्तु शशविषाणमलीकमिति वाक्ये शशविषाणपदं तद्वाक्यलक्षकमलीकपदमप्रमाणपरमेवेति तत्तुच्छं । वन्हित्वेन गुंजापुंजावगाहिबोधजनकस्य न्हदो वन्ह्यभाववानिति वाक्यस्याप्रामाण्यसत्वात् । वन्ह्यभाववान् न्हदः शशविषाणवदसान्निति वाक्यस्यप्रामाण्यापत्तेः। नचेष्टापत्तिः । सर्वलौकिकविरुद्धार्थे इष्टापत्तेः कर्तुमशक्यत्वात् । नच तादृशशब्दघटितवाक्यसामान्यलक्षकमिति वाच्यं । तथात्वेऽपि गवादिलक्षकशशपदघटितस्य तीक्ष्णतात्पर्यकखरपदघटितस्य शशविषाणं सत् खरविषाणं च सदिति वाक्यस्य चाप्रामाण्याभावेन बाधात् । नच शशसंबंधित्वावच्छिन्नप्रकारतानिरूपितविषाणत्वावच्छिन्नविषयताशालिबोधतात्पर्यकतादृशानुपूर्वीसामान्यलक्षकं शशविषाणादिपदमिति वाच्यं । तर्ह्येवावच्छिन्नत्वं न संबंधित्वीयं प्रकारता निरूपिता न विशेष्यतेत्यादिबाधग्रहदशायां शशविषाणमसदित्यादिवाक्यानां सर्वानुभवसिद्धप्रमाजनकत्वाभावप्रसंगात् । त्वदुक्तरीतेरप्रामाणिकतया तदनुरोधेनेष्टापत्तेः कर्तुमशक्यत्वात् । किंच केनचिच्छशशृंगं सदित्युक्ते शशशृंगमसत् अत एतद्वाक्यमप्रमाणमित्याप्तो वदति । तद्वाक्यस्थशशशृंगादिपदस्य भवदुक्तलाक्षणिकत्वे तद्वाक्याप्रामाण्ये तद्वाक्यप्रामाण्यस्यैव हेतूकृतत्वप्राप्त्या साध्याविशिष्ट्यापत्तेः । तथा केनचिच्छशशृंगमसदिति केनचित्सदिति चोक्तौ संशयेन का प्रमेति पृष्टः प्रत्याहासदिति ज्ञानं प्रमाणं अन्यदप्रमाणमिति । तत्र व्यधिकरणप्रकारकत्वरूपाप्रामाण्यस्योभयत्र तुल्यत्वेन तथा वक्तुर्भ्रांतत्वापत्तेः । नहि तथा वक्ता भ्रांत इति कोऽपि प्रेक्षावान् वदति । विचारज्ञास्तथा वदंत्येवेति चेत् सर्वलोकाविरूद्धस्य विचारस्यैवाभासत्वेन तथा विचारकाणामेव भ्रांतत्वम् । एतेन नञतिरिक्तयादृशेत्याशंक्योक्तनियमस्याप्रयोजकत्वकथनं शशशृंगमलीकमिति मुख्यार्थवाक्यस्याप्रामाण्ये इष्टापत्तिकरणं च स्वमौर्ख्यज्ञापकमेवेत्यतिरोहितमेव। अलीकपदमुख्यार्थस्य कस्यचिदंगीकारे असत्प्रतीतिर्दुर्वारा एव । सद्भिन्नत्वेनैव ततो बोधोदयात्तस्य च लोकानां भ्रमत्वानाभिमानात् । अन्यथा तस्य मुख्यार्थस्यैवाभावप्रसंगेन सत्तादात्म्यशून्यत्वमेवासत्वमिति तव तत्पदार्थतावच्छेदकनिर्वचनानुपपत्तेः । नचानिर्वचनीयमेव तत्पदमुख्यार्थोऽस्त्विति वाच्यं । व्यधिकरणप्रकारत्वमेव भ्रमत्वमिति वदतस्तार्किकस्य मतेऽनिर्वचनीयाभावात् । मन्मते तथाऽस्त्विति चेत् तर्हि शशविषाणमिति वाक्यं मुख्यार्थकमेवास्तु किमनेन सर्वानुभवविरूद्धार्थकत्वव्यसनेन । अस्तु तर्हि शशविषाणादीनामनिर्वचनीयत्वमेवेतिवत्तर्हीदानीं स्वीकृतान्यथाख्यातिपक्षपरित्याजनेनेष्टसिद्धेः । किंचानिर्वचनीयवादेऽपि यदि शशविषाणमित्यादिवाक्यं व्यधिकरणप्रकारेण सद्बोधकमेवेत्याग्रहस्तर्हि शशविषाणसद्भावं मन्यमानेन केनचित्किं शशविषाणमिति प्रश्ने कृते तादृशेन केनचिद्भ्रांतेन कनक-

मयं तदिति लक्षणे अभिहिते लक्षणवाक्यस्य त्वन्मते प्रश्नविषयस्वरूपमात्रपरत्वात्। तेन प्रश्नवाक्यस्थविषाणपदबोध्यसद्व्यक्तिस्वरूपमात्रविषयकाखंडार्थबोधजनकत्वप्रसंगेन तस्य व्यधिकरणप्रकारकत्वाभावेनाप्रमात्वविरहात्तद्वाक्यप्रामाण्यापत्तिर्दुर्वारा। नहि तद्वाक्यप्रामाण्यं कस्यचित्प्रेक्षावतः संमतं। नच द्वारीभूतबोधस्य भ्रमत्वान्न तस्य प्रामाण्यमिति वाच्यं। तथासति विषं भुंक्ष्वेति लौकिकवाक्यस्य तत्वमसीत्यादिवैदिकवाक्यानां फलीभूतबोधमादाय व्यावहारिकपारमार्थिकप्रामाण्ययोरभावप्रसंगाभावात्। किंच नञ्घटितसमुदायतदघटिततत्समुदाययोरेकस्य प्रामाण्येऽन्यस्याप्रामाण्यमिति नियमस्य विना बाधकं परित्यागे सर्वनियमस्याप्युच्छेदप्रसंगः। न चाविषयः सन्निति सोऽसन्निति वाक्ययोर्व्यभिचार एवोक्तनियमेबाधकः। अविषयस्य ख्यायमानत्वे तत्र विषयभेदस्यायोगेन विषयभेदावच्छिन्ने सत्वासत्वावगाहिवाक्यद्वयजन्यबोधयोरपि अविषयत्वांशे भ्रमत्वनियमादिति वाच्यं। मन्मते व्यधिकरणप्रकारत्वं न भ्रमत्वं किंत्वसतः सत्वेनावगाहित्वं। सतोऽसत्वेनावगाहित्वमित्यस्याप्रामाणिकप्रतियोगिताकात्यंताभावविचारे व्यवस्थापितत्वेनाविषयो ऽसन्निति वाक्यं प्रमाणमेव। विषयभेदस्यैवासत्वेन तदवच्छिन्नस्याप्यसत्वानपायात्। अविषयः सन्निति वाक्यमप्रमाणमेवेति कुत्रापि व्यभिचाराभावात्। नच भवन्मते असत्पदस्य सत्यभेदावच्छिन्नार्थकत्वे स भेदः धर्मिस्वरूपो न वा। नाद्यः। असत्धर्मिकभेदस्यासत्वापत्तेः। न द्वितीयः। भावाभावस्वरूपत्वान्नान्योन्याभावता पृथगिति सिद्धांतभंगस्य प्रसंगता। असत्पदस्य सद्वृत्तिधर्मावच्छिन्नलाक्षणिकत्वेन शशविषाणमसदिति वाक्यप्रामाण्योपपादने मदुक्तरीत्या लक्षणया प्रामाण्योपपादने त्वदुक्तरीत्या लक्षणया प्रामाण्योपपादने कुतः प्रद्वेषः। असत्पदमुख्यार्थाभावप्रसंगश्चेति वाच्यं। भावाभावस्वरूपत्वादित्यस्य यो ऽन्योन्याभावधर्मी तत्स्वरूपत्वादित्यर्थः। धर्मिता च संयोगसंबंधेन कुंडबदरयोर्यादृशाधाराधेयभावः प्रत्याय्यते तद्विलक्षणः रूपादिनिष्ठाधाराधेयभावः तादृश एव भेदघटयोराधाराधेयभावः प्रत्याय्यतेऽतो भेदस्य घटादिधर्मतया घटस्वरूपेणैव सहभाननियमेन घट एवायमिति तन्निष्ठतद्व्यक्तित्वादिवत्प्रतीयमानत्वात्धर्मिस्वरूपत्वमभिहितं। अत्यंताभावादेः केवलसत्स्वरूपावगाहिप्रत्ययांतराभावान्नञुल्लेख्यप्रतीतिस्तु प्रतियोग्यधिकरणप्रतीतिविलंबितत्वेन वस्तुप्रतीतावेव प्रतीतत्वरूपतत्साधकाभावाद्विना प्रमाणमधिकरणस्याभावरूपत्वकल्पने नानाधिकरणेऽप्यभावत्वकल्पने गौरवं। प्रागभावत्वध्वंसत्वादिविशिष्टरूपेण नानाधिकरणानामुत्पत्तिनाशकल्पने च गौरवांतरं। अत्यंताभावस्याप्यधिकरणोत्पत्तिनाशादिना रूपांतरेणोत्पत्तिनाशकल्पने गौरवाच्चेति संसर्गाभावस्य पृथक्त्वमाश्रितं। 'उक्तयुक्त्यादीनां च व्यावृत्तिश्च स्वरूपता नान्योन्याभावता पृथगित्यादीनां च तत्र तत्राचार्यादाहृतप्रमाणानामनुग्राहकत्वमित्युपपादितमधस्तात्। तथा चासत एवाभावात्तत्धर्मिकघटादौ यादृशो भेदः तादृशो नास्त्येव। अत एव घटादिनाशे रूपादिवत्तात्धर्मिकभेदो नश्यत्येव। परंतु नष्टघटप्रतियोगिकभेदस्य विद्यमानघटात्मकस्य सत्वादेव न तस्य नष्टघटात्मकत्वापत्तिः। नष्टघटस्वरूपस्यैवाभावात् न तस्याप्येतदात्मकत्वमिति सिद्धांतः। इत्थं च असत्स्वरूपस्यैवाभावेन तत्धर्मिकभेदाभावे सति अलीकादिपदानि सद्वृत्तिधर्मरूपसाद्विलक्षणत्वावच्छिन्नबोधकानि। तादृशधर्मश्च त्रैकालिकनिषेधप्रतियोगित्वं। यद्वा असत्पदमात्रं तादृशधर्मत्वेन तद्बोधकं भवति। अलीकानि पदानि तु तादृशप्रतियोगित्वत्वावच्छिन्नत्वेनैव तान्बोधकानि स्युः। असुरा इत्यत्र सुराहितकारित्वरूपसुरविरुद्धत्वावच्छिन्नबोधका-

सुरपदस्य दैत्येष्वेव मुख्यत्वं। तद्भिन्नत्वेन घटादीनां कदाचिद्बोधकत्वेऽपि प्रचुरव्यवहारातिक्रमेण तत्रामुख्यत्वमेव । भवन्मते अज्ञानाविद्यादिपदानां भावरूपाविद्यायामेव मुख्यत्वं यथा तथाऽसत्पदं मुख्यार्थकत्वेपि नामुख्यार्थकं । एतदेवाभिप्रेत्य स्वकंटकोद्धारे असन्निष्ठो भेदो धर्मितावच्छेदकीभूतासत्वस्वरूप इत्यभिहितं यद्वा सत्पदं सद्भेदावछिन्नबोधकमेव भवतु। तादृशभेदस्तु पूर्वोक्तधर्मिरहित एव। किं त्वभावांतरवत्तादृशप्रतियोगित्वरूपासत्ववच्च बौद्धविशेषणत्वरूपसंबंधवानेव। भावाभावस्वरूपत्वादिति वाक्यं तु प्रागभावादिवद्भावभिन्न एव न भवत्यत्यंतभेदः किंतु धर्मिसत्वे तदात्मक इत्येतावन्मात्रपरं। उक्तभेदस्य धर्मिण एवाभावात्किमात्मकत्वं स्यात्। तथात्वेऽपि भावाभावविलक्षणत्वाभावाद्यथाश्रुतं मूलं न विरुध्यते। एतदेव परिभावयितुं धर्मिस्वरूपत्वादिति विहाय भावाभावस्वरूपत्वादित्याभिहितं। क्वचिद्बाधकसत्वे संकोचस्य सर्वैरपि क्रियमाणत्वात्। अन्यथा सत्तादात्म्यशून्यत्वं असत्वमिति त्वदुक्तौ सत्तादात्म्ये अनवस्थाभयेन सत्तादात्म्यांतरास्वीकारात् । तस्याश्च स्वस्मिन्नसत्वात् असत्वपरिहाराय सत्तादात्म्यवत्सत्तादात्म्यैतदन्यतरत्वाभाव इति संकोचस्तवाभिमतो न स्यात् । किंचाभावमात्रस्याधिकरणस्वरूपत्वं त्वयांगीक्रियते । तत्र त्वन्निरुक्तसत्तादात्म्यशून्यस्वरूपासत्वस्याभावरूपस्य किमधिकरणात्मकत्वं। तत्रासद्रूपाधिकरणस्यास्यैवाभावात् । तत्र या गतिर्धर्मधर्मिभावादौ सैव प्रकृते गतिरस्तु । नच सत्तादात्म्यशून्यत्वमेव मम नास्तिकस्य धर्म्यादिर्विंतेति । परंत्वसत्पदेन तद्बोधः व्यधिकरणप्रकारक एव जायत इति वाच्यं। तर्हि अभावांश एव सत्तादात्म्यस्य प्रतियोगितया भानांशे व्यधिकरणप्रकारकत्वमभ्युपेयं। तथा सति सत्तादात्म्यशून्यत्वमेवासत्वमित्यत्रैव त्वया निरुक्तस्य व्याहतिर्दुर्वारा । एवं नासदासीदिति श्रुतेः परोक्तभावाभावविलक्षणत्वार्थकत्वोक्तिर्न श्रद्धेयेत्यभिधाय श्रुतिस्थासत्पदस्य सत्तादात्म्यशून्यार्थकत्ववर्णनमप्यश्रद्धेयं स्यात्। श्रुतेस्तथात्वे व्यधिकरणप्रकारकबोधजनकत्वेनाप्रामाण्यावारणात्। नच मतांतरेण तदुक्तिरिति वाच्यं। तस्यैव निष्कृष्टमतत्वे तत्रासद्बोधनिर्वाहाय तत्रासदादिपदशक्त्यादेस्तत्राभ्युपगमस्यावश्यकतयाऽत्र तत्खंडनप्रयासः स्वारूढवृक्षच्छेदनप्रयासतुल्यः। तस्यानिष्कृष्टत्वे स्वमतेनानिर्वचनीयप्रामाण्योदाहरणावसरे बाधितश्रुत्यर्थमनभिधाय बाधितार्थवर्णनं शिष्यप्रतारणाय वा स्यात् बालभाषणतुल्यं वा । किं चैतन्मते ऽलीकादिपदानां कश्चिदर्थो वर्तते न वा। नो चेत्पदत्वव्याघातः । नचाप्रियत्वाद्यवच्छिन्ने शक्तत्वात्पदत्वोपपत्तिः सत्तादात्म्यशून्यत्वादिबोधं लक्षणया संपादयतीति वाच्यं। अलीकं त्वप्रियेऽनृत इति कोशविरोधापत्तेः। सत्तादात्म्यशून्यत्वस्यप्रसिद्ध्या तत्र लक्षणग्रहादेर्भ्रांतानामेव वक्तव्यतया सदर्थकालीकपदप्रयोक्तॄणां वैदिकानां लौकिकानां भ्रांतत्वप्रसंगश्च। इष्टापत्तौ च सर्वेषां तत्कल्पनापेक्षया तवैव तत्कल्पनं वरं वर्तते चेदसत्यपि पदशक्तिरागतैव । नच तान्यनिर्वचनीयशक्तान्येवेति वाच्यं । अर्थापत्त्यवतरणात्प्राक् अनिर्वचनीयस्य सिद्धत्वेनालीकपदव्यवहारोच्छेदप्रसंगः। सिद्धत्वे लोकानामलीकपदव्यवहारमूलज्ञानेनालीकपदेन च तस्य सिद्धत्वेन व्यर्थस्तत्रार्थापत्त्याद्युपन्यासः । नच त्रैकालिकप्रतियोगित्वावच्छिन्नवाच्यान्येव तानीति वाच्यं । किं तादृशप्रतियोगित्वमनिर्वचनीयत्वसमनियतमुत व्यापकमन्यत्रापि वर्तते । नाद्यः न द्वितीयः । तदाश्रयस्यासतः प्रतीतिं विना तद्वृत्तित्वासिद्ध्या तत्प्रतीत्यावश्यकत्वापत्तेः। न प्रथमः। तन्मात्रेणानिर्वचनीयसिद्ध्या सत्तादात्म्यांशसाधनवैयर्थ्यापत्तेः । नच शून्यवादिना परमार्थसदनंगीकारात्सत्तादात्म्यशून्यत्वाविरोधिनोऽनिर्वाच्यत्वस्य साध्यत्वे तेन तदन्येन वा अर्था-

तरतोऽद्वाच्येतेति तत्साधनं सार्थकमिति वाच्यं। तथापि स्वार्थानुमितौ तत्साधनस्याकिंचित्करत्वप्रसंगात्। उक्तप्रतियोगित्वे सत्तादात्म्यशून्यत्वाविरोधित्वग्रहसद्भावेऽपि बाधकाभावात्। परमार्थसद्वस्तुमात्रस्य बौद्धं प्रति साधनमात्रेण कृतार्थतया तं प्रत्यपि सत्तादात्म्यसाधनस्यानुपयोगात्। अन्यथा केनचिद्वाच्यत्वशून्यत्वोक्तौ तदविरोधित्वग्रहनिरासाय तदपि साधनीयं स्यात्। इतराव्यावर्तकत्वेन सत्तादात्म्यवाच्यत्वयोः केवलान्वयित्वे विशेषाभावात् मिथ्येतिनासत्यत्वं साध्यते किं त्वनिर्वचनीयत्वमिति त्वत्पूर्वाचार्योक्त्यसंगतेश्च। असत्वाख्यधर्मस्यैवेदानीं त्वया प्रसिद्धीकृतत्वात् यत्त्वित्यादिना नूद्योक्तत्वादित्यंतेन दूषणाभिधानं तु हेयं। त्वदाचार्यैः प्रत्येकसदसत्वाभ्यां विचारपदवीं न यत् गाहते तदनिर्वाच्यमिति न सन्नासन्नसदसदिति असद्भेदव्यवहारस्य शतशः कृतत्वेन तत्र प्रतियोगिज्ञानं विना तद्भेदज्ञानानुपपत्तिरूपदोषस्य संगतत्वात्। अन्यथा सत्पदार्थतावच्छेदकस्यैवाप्रसिद्धौ सत्तादात्म्यवदर्थकसत्पदादिकं विहाय बुद्धिपूर्वकं व्यधिकरणधर्मप्रकारकबोधजनकनञ्द्वयप्रयोगे स्फुटमप्रेक्षावत्वप्रसंगात्। एतेनासतोऽप्रतीतावपि असत्प्रतीयत इति परोक्तप्रतिज्ञायाः व्यधिकरणप्रकारकबोधजनकत्वरूपाप्रामाण्यसमर्थनरूपखंडनाय विजयार्था प्रवृत्तिः। खंडनं च प्रतीतिविषयत्वावच्छेदेन सत्तादात्म्यसाधनेनापि भवतीति निरस्तं। व्यधिकरणप्रकारकत्वव्यवस्थापनस्यैव खंडनरूपत्वे स्वपूर्वाचार्यवचनानां न सती नासती मायेत्यादिपुराणश्रुतिवाक्यानां असतोऽप्रतीतावपीत्यादिस्ववाक्यस्यातथात्वस्यावर्जनीयतया स्वपूर्वाचार्यवचनश्रुतिपुराणस्ववाक्यादेरत्यखंडकत्वं प्रथमत एव स्वगले पतितमित्यपसिद्धांतादिना निगृहीतस्य कुतः परविजयावसरः। नहि प्रतीयमानसामान्यं सत्तादात्म्यवदिति प्रतिज्ञाय तूष्णीं स्थितौ परस्य जयो भवति। किंतु असतः प्रतीत्यंगीकारे तस्य प्रतीतिविषयत्वोपयुक्तधर्माभावाद्युपन्यासेन तथाप्रयोगे चागतं स्ववाक्यस्याप्रामाण्यं। अपि च त्वया प्रतीयमानत्वावच्छेदेन सत्तादात्म्यसाधने परेणापि सत्तात्म्यं न प्रतीयमानत्वव्यापकमिति प्रतिज्ञायासत्पदप्रयोगं विहाय यथा त्वया व्यवहारः क्रियते तदनुसारेण तथा व्यवहारः कर्तुं शक्यत इति कथं परपराजयः। यदपि सत्यवचा इत्यादौ प्रमाणेपि प्रयोगात्सत्यपदं प्रमाणवाचीति तत्समानार्थक ऋतशब्दोपि तद्वाची। अतो ऽ नृतशब्दस्याप्रमाणवाचित्वात्तद्वाचित्वेन विहितालीकपदमप्यप्रमाणवाच्येवातोऽलीकं त्वप्रिये ऽनृत इति न कोशविरोध इति तन्मंदं। सत्यस्य वचो यस्येति विग्रहाश्रयणेन वा सत्पदस्य तद्विषयके लक्षणयैव वा तादृशव्यवहारोपपत्तौ तत्रापि शक्तिकल्पने मानाभावात्। अन्यथा लक्षणोच्छेदप्रसंगात्। तस्मादलीकादिपदानामसद्वाचकत्वानुरोधेनासत्प्रतीतिरंगीकर्तव्यैव। किं चावृत्तमिथ्यात्वकरजताद्यवगाहित्वरूपप्रामाण्यकं ज्ञानं प्रवर्तकमिति ते मतं तत्र शशविषाणाज्ञाने बाधबुद्ध्युत्तरमपि तादृशप्रामाण्यस्याव्याहतत्वात्तत्र विषाणार्थिनः प्रवृत्त्याद्यापत्तिः प्रामाण्यभावबुद्धेर्भ्रमत्वापत्तिश्च। शशविषाणमस्तीति वाक्यजन्यबोधोत्तरं विशिष्टशशविषाणविशेष्यकास्तित्वप्रकारकज्ञानवानहमित्यनुव्यवसायविरोधश्च। व्यधिकरणप्रकारकत्वे अनुव्यवसायानादरे तु शशीयत्वेन विषाणं प्रत्येमीत्यनुभवविरोधादखंडासद्विषयकत्वमित्यनुपपन्नमिति त्वद्दूषणमप्ययुक्तं स्यात्। यत्तूक्तं निराश्रयस्यैव धर्मस्य स्वीकारे घटातिरिक्तो घटत्वाश्रयो असन्निति प्रतीत्यनुरोधात् घटत्वादेरपि घटातिरिक्ताश्रयः स्यादिति तन्मंदं। किमनया प्रतीत्या घटे विद्यमानस्यैव घटत्वस्यैवासद्वृत्तित्वमापाद्यते उतान्यादृशस्य। नाद्यः। आपादकाभावात् उक्तप्रतीतिर्हि घटातिरिक्तस्य घटत्वाश्रयस्यासत्वं विषयीकुर्वाणा विशेषणीभूते घटत्वेप्यसत्वं विषयीकरोत्येव। असति

बाधके विशिष्टविषयकत्वस्य त्यागायोगात् । ननु तस्य सत्वं घटातिरिक्तसंसृष्टघटत्वस्य घटातिरिक्ते घटत्वमसत् घटातिरिक्ते घटत्वं नास्तीति निर्विवादप्रमांतरानुरोधेनासत्वस्य सिध्दत्वेन तत्र सत्वावगाहित्वेभवदुक्तप्रतीतेर्भ्रमत्वस्यैव प्राप्त्या तेन विषयासिध्यनापादनात्। प्रमात्मकप्रतीतेस्त्वसद्‌घटत्वावगाहितया तस्य सद्घटावृत्तित्वात् । नाद्वितीयः । अत्र प्रतीयमानघटत्वतदाश्रयादीनां सर्वेषामप्यसत्वेन तस्य वृत्तित्वापादनायोगात् । एवं ज्ञेयभिन्नमसदिति प्रमा ज्ञेयभेदेऽप्यसत्वमवगाहते। सत्यसति कुत्रापि ज्ञेयभेदो नास्तीति प्रतीत्या तदसत्वस्यैव प्रमांतरसिध्दत्वात् । तथा च ज्ञेयभिन्ने कथं ज्ञेयत्वमिति शंकानवकाशः । नचैवं रीत्या ऽनृताभिन्नमसदिति प्रतीतिबलाद्दतभेदाश्रयमेवं ज्ञेयत्वादिकं चासति न सिध्येदिति वाच्यं । अनृतासदादिशब्दानां पर्यायत्वेन तत्पदोल्लेखिप्रतीत्या सद्भेदपुरस्कारेणैवासतोभानेन तन्निष्ठसद्भेदे असत्वावगाहिनः असत्ये सत्वं नास्तीति प्रमांतरस्याभावेन सत्यभूतसद्भेदाश्रयत्वमेवासतः सेत्स्यति। एवमेतावंतं कालं यच्छशविषाणममनिषं तदसदेवेति प्रतीत्या ज्ञानतद्विषयत्वादौ तावत्कालसत्वस्य तद्विषयीभूतशशविषाणादावसत्वस्यैव विषयीकृतत्वात्। एतत्ज्ञानविषये शशविषाणे विषयत्वं नास्ति। तदसत्वग्राहकप्रतीत्यंतरभावाच्च तन्निष्ठत्वे ज्ञेयत्वादीनां सत्वमेव सिध्यति । नच युक्त्या शशविषाणादौ विषयत्वं नास्ति असति असत्वं नास्तीति प्रमोदेतीति वाच्यं। तादृशयुक्तिजन्यबोधे असतो भानाभानाभ्यां व्याहत्या असति ज्ञानविषयत्वाभावावगाहित्वे तस्य प्रमात्वस्यैवासिध्देः । एवमसत्वेन भासमाने असत्वाभावावगाहित्वे आहार्यत्वप्राप्त्या तस्य युक्तिजत्वप्रमात्वयोगाच्च । नच सद्भेद एव नास्तीति त्वया वक्तुं शक्यं। तथात्वे सर्वसत्यतापातात्। अनिर्वचनीयस्याद्याप्य सिध्दतया पारमार्थिकव्यावहारिकसाधारणसत्वावच्छिन्नभेद एव सिध्द इति वक्तुमशक्यत्वेन पारमार्थिकसत्वस्यैव केवलान्वयित्वप्रसक्तेः। असदनृतादिपदानां पदत्वव्याघातात् भ्रममात्रजनकत्वप्रसक्त्या प्रेक्षावतां तत्पदव्यवहारायोगापाताच्च । नच सत्तादात्म्यशून्यत्वमेवासत्पदार्थतावच्छेदकमिति वाच्यं । तर्हि तस्य सत्रयावृत्तेरसदाश्रयत्वस्यैव प्राप्त्याऽसतो विषयतादिर्दुर्वारतैव । किंच सत्तादात्म्यशून्यत्वेपि यथा सत्तादात्म्यशून्यस्य विषयत्वादिकं यथा सतोपि चेत्किं बाधकं। नच सत्तादात्म्यवत्सत्तादात्म्यैतदन्यतरत्वाभाव एवाविषयत्वादौ प्रयोजक इति वाच्यं । कुत एतदभ्युपगमः । सत्तादात्म्यस्य विषयतादेरनुभवासिध्दत्वादिति चेन्न। अत्राप्यनुभवस्य तुल्यत्वेनैतद्घटितान्यतमत्वाभाव एव प्रयोजकोऽस्तु । एतदन्यतमत्वाभावाश्रयः क इति चेत् यस्य ज्ञानं नास्ति स एवेत्यवेहि । मास्त्वेव वा तदभावस्तत एव ज्ञानाविषयत्वं केवलान्वय्यस्तु । नच सत्तादात्म्यं सत्स्वरूपत्वाज्ज्ञानविषय इति वाच्यं । सत्तादात्म्यशून्यसत्तादात्म्यस्वरूपांगीकारवत् मदभिमतासत्यप्यंगीकर्तुं शक्यत्वात् । तस्मादसतोपि ज्ञानविषयत्वं युक्तमेव । ज्ञानविषयत्वासत्वादिराश्रयं विना कथं तिष्ठति चेत् । तिष्ठतीत्यस्य कोऽर्थः । यदि कालसंबंधो इति तर्हि नैय्यायिकनये गगनादेरिवास्तु कालसंबंधे देशवृत्तित्वस्याप्रयोजकत्वात् । अत एव ध्वंसप्रागभावयोः प्रतियोगिसमानदेशत्वादाश्रयनाशजन्यरूपादिनाशो देशे विशेषणतया वर्तमान एव कालवृत्तिरत एव रूपनाशवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्वं पृथिवीलक्षणमिति नैय्यायिकसिध्दांतः संगच्छते । यदि च तध्दर्मता कथं स्यात् निरूपकाभावादिति । तदा निरूपकाभावेपि प्रातीतिकी धर्मताऽस्तु । संयोगसमवायाद्यवच्छिन्नधर्मत्वादीनां परस्परसमवायांतरवैचित्र्यवदत्रापि तदुभयवैलक्षण्यसंभवात् । प्रातीतिकत्वं स्वनुभवादिसिध्दभ्रमाभावादिनिष्ठधर्मितासाधारणं ।

(टीका) नहि केनाप्यविदिताद्घटाद्वैलक्षण्यं पटस्य ज्ञातुं शक्यते।

घटादिघटत्वादिनिष्ठधर्मतावैजात्यमेव। अनुभवानादरे तु रूपादिनिष्ठघटधर्मताघटादिनिष्ठभूतलधर्मताऽभावनिष्ठभूतलधर्मत्वादीनामपि वैलक्षण्यासिद्धिप्रसंगः। एतदभिप्रायेणैव सुधायां जिज्ञासाधिकरणे बौद्ध एव धर्मधर्मिभाव इति असत्स्थले उपपादितं। लिंगपादसुधायां चाभावस्थले प्रतीतिक एव संबंध इत्युपपादितं। स च धर्मधर्मिभावः विशेषणविशेष्यभाव शब्देन प्राचीननैय्यायिकैर्व्यवहृतः। चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणत्वात्तादृशे विशेष्यत्वादिना घटाभाववद्भूतलं भूतले घटाभाव इति विलक्षणप्रतीतिजनकतया उपपादितः। फलीभूतज्ञानीयप्रकारताविशेष्यतयोर्ज्ञानपूर्वमपि विद्यमानयोः संबंधत्वं तत्राभिमतामिति चेदस्तु का क्षतिः। प्रकृतेप्यसद्विषयकज्ञानीयविशेष्यत्वप्रकारत्वयोरेव धर्मधर्मिभावरूपताभ्युपगमसंभवात्। असति धर्मिताया अपि विशेष्यतारूपत्वात्। न चोक्तप्रकारत्वादीनां धर्मधर्मिभावात्मकत्वे इदं रजतमिति प्रत्ययानुरोधाद्रजतत्वं शुक्तिधर्मः स्यादिति वाच्यं। नेदं रजतमिति बाधानुरोधेन तस्य धर्मधर्मिभावरूपत्वाकल्पनात्। अभावासदादिस्थले तु बाधानुदयेन तत्कल्पनात्। अत एव पातंजलयोगसूत्रभाष्ये टीकाकृता वाचस्पतिना शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति सूत्राभावविवरणावसरे सांख्यमते भावाभावयोः वस्तुकृतसंबंधाभावात् बुध्या विकल्पितः एव संबंधः। स चाबाधित एव लौकिकानामिति तत्प्रत्ययो न विपर्ययः किंतु विकल्प एवेत्युपपादितं। यदत्र नव्यनैय्यायिकैरभावप्रतीतौ तत्तत्कालीनतत्तद्भूतलादिकं संबंधितया भासत इत्युच्यते तदुत्तरत्र निराकरिष्यामः। इत्थं च सत्तादात्म्यशून्यत्वरूपासत्वस्य निराश्रयस्यैव तद्धर्मत्ववदनुभवबलाद्विषयत्वात्यंताभावप्रतियोगितादीनां अपि तथात्वे न किंचिदसमंजसं। संविदेव हि भगवती सर्वत्र शरणमिति। यदपि नरविषाणादिशब्दादत्यंतासतः प्रणीत्यसिद्धेरित्यादि तदप्ययुक्तं। नरविषाणमित्यादिसमासनिष्ठयैकार्थीभावरूपसमासशक्त्या वा तदनंगीकारेऽपि तादृशपदसमभिव्याहाररूपाकांक्षाबलेन वा तात्पर्यग्रहादिरूपदोषसहितेन विशिष्टबोधसंभवात्। तज्ज्ञाननिष्ठविशिष्टनिरूपितविषयितानिरूपकस्यासत्वादेव तस्यासद्विषयकत्वसंभवात्। यदत्रोक्तं अखंडासद्विषयत्वे बोधस्य निर्विकल्पत्वापत्तिः। शृंगं नरीयं न वेति संशयनिवृत्त्यनुपपत्तिः शशीयत्वेन शृंगं जानामीत्यनुभवालापापत्तिरिति तदसत्प्रतीतिसिद्धांतापरिज्ञानात्। तथाहि नरविषाणं नरस्य विषाणमित्यादिवाक्येन नरपदादीनां स्वार्थे शक्तिज्ञानादिसहकृतेन जायते यो बोधः तत्रासत्वबोधकासहकृतत्वे असत्पदादिसत्वे वा तदसत्वे वा तादृशसामग्रीबलात्तत्र सत्वं भासते। एतत्तत्वं वा प्रामाणिकाप्रतियोगिकात्यंताभावविचारेऽभिहितं। तथाच सत्वविशिष्टशशविषाणं प्रत्येमीत्यनुभवसिद्धा काचन विषयिता वर्तते सा दोषप्रयोज्या भ्रमस्य दोषजन्यत्वनियमात्। शशप्रकारितानिरूपिता विषाणविषयितापि तथैव दोषप्रयोज्या। तत्र संसर्गमात्रस्यासत्वं। न चैवं व्यधिकरणप्रकारकत्वप्रसंगेनापसिद्धांतः। भ्रमे भासमानसंसर्गप्रतियोगित्वं चेदधिकरणत्वं तादृशव्यधिकरणप्रकारकत्वमिष्टमेव। सुधायां प्रत्यक्षस्थले समीपस्थयोराम्रपनसयोर्यत्राम्रे पनसतादात्म्यं भासते तत्र तत्तादात्म्यमात्रमसत्। प्रकारीभूतपनसस्य चक्षुःसन्निकृष्टस्यैव भानात्। उत्तरत्र तादात्म्यमात्रस्य एक एवायं चूतः नेमावेकाविति बाधितत्वानुभवादित्यनेन सत्प्रकारकत्वस्य संसर्गासत्वमात्रेण भ्रमत्वस्योपपादितत्वात्। अत्रापि नास्ति कुत्रापि शशविषाणं विषाणं नैव शशीयमिति संसर्गस्य तद्घटितविशिष्टस्य च बाधितत्वानुभवात्। तादृशसंसर्गे बाधानुभवात्प्राक् तद्बुद्धेः विषाणं न शशीयमिति बुद्धिविरोधित्वं वर्तत एवेति न तस्यानुपपत्तिः।

नापि शशीयत्वेन विषाणमनुभवामीत्यनुभवविरोधः। नच संसर्गोऽपि सन्नेव स्यात्। तत्सं-बंधावच्छिन्नतत्प्रकारनिष्ठप्रतियोगिताकाभावस्यैव विशेष्ये बाधबुध्ध्या विषयीक्रियतामिति वाच्यं। अत्यंताभावस्याप्रामाणिकप्रतियोगिकत्वनियमस्यैव पूर्वमुपपादितत्वेन धर्मसंबं-धादिनिष्ठप्रतियोगितावच्छेदकत्वादिप्रक्रियायाः अप्रामाणिकत्वस्य व्यवस्थापनीयतया तत्र विषाणे शशीयत्वं नास्तीति भासमानात्यंताभावस्याप्रामाणिकसंसर्गप्रतियोगित्वेनैव पर्य-वसानेन संसर्गासत्वस्यैव सिध्धेः। तत्संसृष्टशशीयत्वविषाणादीनामपि तत्सिध्धेः। प्रामाणि कप्रतियोगिताकात्यंताभावस्याभ्युपगमपक्षेऽपि अत्र भासमानसंसर्गस्यान्यत्र सत्वावगा-हिमानांतरस्याभावात्। विषाणमपि सत् शशीयत्वं च सत् परंतु नानयोस्संबंधस्सन्निति सं-बंधासत्वस्यैव प्रत्ययाच्च। ननु संबंधोपि सन्न परंतु नानयोरस्तीति संबंधोपि सत्यत्वावगाहि प्रत्ययोऽस्तीति चेत् अस्तु तथापि नानयोः सन्निति तत्प्रतियोगिकतदनुयोगिकसंसर्गास-त्वविषयीकरणस्य तत्प्रत्यये निवारणात्। नच संसर्गनिष्ठतत्प्रतियोगिकत्वादावसत्वं विषयी-क्रियतामिति वाच्यं। प्रथमप्रत्यये भासमानार्थेषु मध्ये कस्यचिदसत्वावगाहिप्रतीत्या तत्रा-भासमानप्रतियोगित्वादौ तद्विषयीकरणायोगात्। प्रतियोगित्वादीनां विशिष्टबुध्धिविषयतां-गीकारे तस्यासत्वेप्यस्मदभिमतसिध्धेः। प्रत्यक्षे असन्निकृष्टसंसर्गभानायोगेन दोषबलादेव असत्संसर्गभानवत् शाब्दे अयोग्यान्वयभानाय पदेषु दोषबलाच्छक्त्यंतराधानस्यावश्य-कत्वे तादृशशक्तेरसद्विषयकत्वस्यैव युक्तत्वात्। सत्संसर्गस्य कस्यचिद्भानांगीकारे विनिग-मकाभावेन सर्वेषामपि सत्संबंधानां भानप्रसंगात्। न चात्रापि तथा असत्स्वयमिति प्रभेदा भावेनात्र विद्यमानसांसर्गिकविषयतानिरूपकं नास्तीत्यस्यैवासत्संसर्गभानपदार्थत्वाद्विनिग मनाविरहाप्रसक्तेः। सत्सु विनिगमनाविरहादेवास्य पक्षस्याश्रितत्वेनात्र तस्याप्रसक्तेः। अन्यथा नैय्यायिकनये संबंधघटकतया कालासिद्धिप्रसंगात्। ननु यदि योग्येतरान्वि-तार्थे पदानां शक्तिरिति अयोग्यान्वयबोधार्थं पदे शक्त्यंतराधानस्वीकारे तादृशान्वयवद-र्थानामेव पदशक्यत्वादयोग्यान्वयसाहित्येन बोध्यमानार्थेऽपि शक्त्यंतराधानप्राप्त्या तत्र तत्र बोध्यमानानां सर्वेषां असत्वस्यैव प्राप्त्या सन्मात्रख्यातिवादप्रसंग इति मैवं। तवापि प्रत्यक्षस्थले शक्त्यंतराधानस्यावश्यकत्वे उक्तदोषतौल्यात्। शाब्दस्थले शक्त्यं-तराधानस्यावश्यकतया सर्वांशेऽपि प्रातिभासिकभानस्य व्यधिकरणप्रकारकत्वस्य चाप-त्तेस्तौल्याच्च। यदंशे बाधितत्वानुभवः तन्मात्रे शक्त्यंतराधानेन समाधानस्येहापि साम्यात्। अपि चान्वयांशे शक्तेः कुब्जत्वात्स्वरूपसत्वे वोपयोगिनी प्रकाराद्यंशे तु ज्ञातै-वेति तव मतास्थितिः। तत्र विषाणादौ तत्पदशक्तेर्भासमानान्वयाप्रतियोगिविषयिण्या अन्यादृश्या एव भाने विषाणे विषाणपदवाच्यमित्यादेः कारणीभूतज्ञानस्य सर्वानुभव-विरुध्धभ्रमत्वापत्तेरवश्यं पदांतरसंनिधानेनाधेयशक्तिस्वीकार आवश्यके तत्स्थाने दोष-सहकारेणासद्विषयकतादृशशक्त्यंतराधानमेव युक्तं। उत्तरकाले शशविषाणादेः स्वरूपतो बाधितत्वानुभवात्। सिद्धांतरीतिस्त्वन्यत्रप्रकटीकृता तत एवानुसंधेया। तस्माच्छाब्द भ्रमे सतः सदवगाहित्वमेव प्रत्यक्षादिभ्रमाणामसदवगाहित्ववादिनां युक्तं। असतः सत्वे नावगाहित्वं सतश्च सत्वेनावगाहित्वमित्येकरूपभ्रमत्वस्य सर्वसाधारण्यात्। प्रत्यक्षे ऽनिर्वचनीयत्वावगाहित्वाद्बाधितार्थावगाहित्वं शाब्दानुमित्यादिव्यधिकरणप्रकारकत्वम-भ्युपगम्यान्यादृशभ्रमत्वमित्यंगीकारे तस्य भ्रमप्रमाभिन्नवृत्त्यंतरमित्यंगीकारे चाप्रामाणिक द्वैविध्यकल्पनाप्रयुक्तगौरवं स्फुटमेव। इदमत्रावधेयं। सिद्धांते शशविषाणं नास्तीति वाक्यानां सर्वसिध्धप्रामाण्यं दुरुपपादं। नञर्थाभावांशे प्रतियोगितया शशविषाणभानस्य

दुरुपपादत्वात् । तथाहि किं शशविषाणयोरन्वयः सहजशक्त्या भासते उताहितशक्त्या-ऽथवा शक्तिं विनैवाथवा लक्षणया । नाद्यः । पदानां योग्येतरान्वयज एव सहजशक्तेः सत्वेनात्र प्रतीयमानान्वयस्य तथात्वाभावात् । न द्वितीयः । दोषाणामेवायोग्यशक्त्याधायकत्वेन तदधीनबोधस्याप्रमाणत्वेन क्लृप्ततयोक्तवाक्याप्रामाण्यापातात् । न तृतीयः । शक्तिं विना समभिव्याहाररूपाकांक्षाबलादेव अन्वयभानांगीकारे पदवृत्तिविषयस्यैव शाब्दे भानमिति नियमस्य त्यक्ततयाऽन्वये शक्तेरेवासिद्धिप्रसंगात् । अत एव न चतुर्थः । सर्वत्र लक्षणयैव संभवे तत्र शक्तेरेवासिद्धिप्रसंगादपसिद्धांताच्चेति । इदमत्र तत्वं । शशविषाणपदात् प्रतियोग्युपस्थित्यनंतरनञर्थान्वयबोधो वाच्यः । तत्र समभिव्याहारविशेषशशाद्यर्थतात्पर्यज्ञानादीनामेव हि शक्त्यंतराधायकत्वं दोषस्य अनुगतत्वात् । तत्र नञाद्यसमभिव्याहारस्थले सत्वेनैव तादृशान्यवादिकं भासते । ज्ञानसामान्यसामग्र्या सत्वभासकस्यौत्सर्गिकत्वात् । निषेधबोधकसामग्रीसमावेशे तु प्रतियोग्युपस्थापकसामग्र्याः सत्वासत्वौदासिन्येनैव प्रतियोगी प्रथमतो भासते। अनंतरं च निषेधबुद्ध्या विषयीक्रियत इत्युक्तमप्रमाणिकप्रतियोगिकात्यंताभावविचारे । तथाच दोषप्रयोज्यसत्वविषयतैव भ्रमत्वनियामिकाऽत उक्तस्थले समभिव्याहारादिभिराहतशक्त्यैव फलीभूतबोधे प्रतियोगिकोटिनिविष्टतया योग्यान्वयभानेऽपि सत्वेन तस्य विषयीकरणात्तस्य भ्रमत्वाभावान्न तद्वाक्यस्याप्रामाण्यप्रसक्तिरिति । ननु तथापि शशविषाणादिकं संसृष्टरूपेणासदित्युक्तं। तथात्वे संसृष्टत्वविशिष्टस्यासत्वं शुद्धस्य सत्वमित्येकस्यैव सदसदात्मकत्वमभ्युपगतं स्यात् । न चैतद्युक्तं । अत्यंतासतः सत्तादात्म्ये अत्यंतासत्वविरोधात् । तत्र शुद्धतादात्म्ये बीजाभावाच्च । अतस्तत्र शुद्धतादात्म्यापन्नतयोत्पत्तेरावश्यकत्वे अनिर्वचनीयवाद एव पर्यवसानं स्यात् । बाधितस्य सत्तादात्म्यापन्नतयोत्पत्तेरेव तत्सिद्धांतादिति चेन्मैवं । यतः शशविषाणमित्यादिबोधे विशिष्टव्यवहारनिर्वाहिकैका विषयिता शशविषाणमित्यादिव्यवहारनिर्वाहिकाश्चापराः। ताश्चैकज्ञानस्वरूपा अपि विशेषशक्त्या अंशांशिभावापन्नाः भवंति । समूहालंबने तु महाविषयतानंशभूताः काश्चन विषयिताः वर्ततेऽतस्तासां वैलक्षण्यादिव्यवस्था घटते । विषयितानां ज्ञानस्वरूपत्ववादिना नैय्यायिकेनाप्येकज्ञानात्मकविषयतानां प्रकारताविशेष्यतारूपत्वव्यवस्थावत् । अद्वैतिनामप्येकब्रह्मात्यंताभिन्नानां सत्यज्ञानानंदादीनां कल्पितभेदेन घटादौ सदंशो भासते आनंदांशो न भासते इति व्यवस्थावच्च तत्रांशभूतविषयतामात्रनिरूपकाणां शशादीनां सत्वमेव । विशिष्टव्यवहारनिर्वाहकांशिभूतविषयितानिरूपकाविशिष्टमसत्संसर्गविषयितानिरूपकमसदेव । तादृशं च न शुद्धविषाणादितादात्म्यापन्नं येनानिर्वचनीयवादः स्यात् । तत्र विशिष्टोत्पत्तौ मानाभावात् । नष्टपदार्थावगाहिशाब्दबोधस्थले विशेष्यस्याभावेन व्यवहारांतरगोचरसूक्ष्मावस्थामात्रेणोत्पत्तिकल्पने मानाभावेनानिर्वचनीयपदार्थोत्पत्तेर्वक्तुमशक्यत्वात् । तत्रानिर्वचनीयोत्पत्त्यंगीकारे तदानीमुत्पन्नमिदानीं नष्टमिति प्रतीत्यापत्तेः । तद्ग्रहप्रतिबंधकांतरकल्पने उत्पत्तिविनाशतत्सामग्र्यादिरूपानंतपदार्थकल्पने गौरवात् । त्रैकालिकनिषेधप्रतियोगिना कालसंबंधघटितोत्पत्त्यंगीकारे व्याहतेश्च । तस्यानिर्वचनीयवादस्य दुष्टत्वात् । एवं संसृष्टरूपेण विषाणादिकं मिथ्येति प्राचां व्यवहारस्याप्ययमेवार्थः । सांसर्गिकविषयतागर्भितांशिविशेषरूपविषयितानिरूपकमसदिति । इदमेव ह्यसद्विषयकं त्वज्ञानस्य सन्मात्रनिरूपितांशविशेषरूपविषयतांगीकारान्नासन्मात्रख्यात्यापत्तिः न वा शशादिपदेन तदुल्लेखानुपपत्तिः। अनुमंतमेतत्तार्किकाणामपि यतस्तैर्नीलपर्वतः कांचनमय इति ज्ञाने धर्मितावच्छेदकितायाः

(टीका) अथैवं ब्रूयात् अस्त्येवासतोपि परोक्षप्रतीतिगोचरता अपरोक्ष-प्रतीतिगोचरतां तु न मन्य इति तत्राप्यसतः प्रतीतिं विना सद्वैलक्षण्यज्ञानानुपपत्ते रित्येवोत्तरं। यद्यत्यंतासतोऽपरोक्षप्रतीतिविषयता न स्यात् तर्हि प्रातिभासिकतयाऽर्थक्रियानर्हस्य रजतस्य यदसत्प्रातिभासिकवैलक्षण्यं तदपरोक्षज्ञानं भ्रांतस्य नोपपद्येत।

प्रकारितान्यत्वे पर्वतो नीलो न वेति संशयप्रतिबंधकत्वानुरोधेन पर्वतो नील इति ज्ञानांतरविषयितासजातीया नीलप्रकारितानिरूपितपर्वतविशेष्यता विशेषणज्ञानजन्यतावच्छेदकत्वानुरोधेन पर्वतत्वनिरूपिता का च प्रकारिता तन्निरूपिता च काचनानवच्छिन्नविशेष्यता पर्वतनिरूपिताऽऽसां च परस्परमवच्छेद्यावच्छेदकभावापन्नत्वं तत्ज्ञानस्य समूहालंबन वैलक्षण्याय स्वीक्रियते। एवं तत्ज्ञानीयविषयतात्वरूपसामान्यधर्मावच्छिन्ननिरूपितानिरूपक तात्पर्याप्त्यधिकरणमसत्। प्रत्येकं विषयतानिरूपकाणि संतीत्यपि स्वीकृतं। इत्थं च तदीयावच्छेद्यावच्छेदकभावस्य निराकरिष्यमाणत्वात्। तत्स्थाने विषयितानामंशांशिभावः मया स्वीकृतः। तदभिमतपर्याप्तेर्विचारावसरत्वात्। विषयितानिरूपकं तु विशिष्टमिति प्रमायाः स्वीकृतं। भ्रमविषयतानिरूपकं तु नास्तीति तदसत् इति। ते तु भ्रमविषयितानिरूपकतात्पर्याप्त्यधिकरणमप्रसिद्धमिति नास्तीति च शतशः कालासंबंध त्रैकालिकनिषेधप्रतियोगिनि तादृशविषयितानिरूपकत्वं व्यवहरंतः तन्मूलभूतज्ञानवंतोप्यसन्न ज्ञानविशेषतानिरूपक इति स्वव्याहतमेव वदंतो विषयत्वं सत्वव्याप्यमित्यादिरीत्या स्ववचनमेव व्याकुर्वते। मन्मते तु सार्वलौकिकवैदिकव्यवहारतन्मूलभूताबाधितानुभवानुरोधेन तादृशविषयितानिरूपकेऽत्यंताभावप्रतियोगित्वादिना ज्ञानविषयत्वमेव स्वीक्रियत इति न किंचिदसमंजसं। एतेन किंचन शशशृंगादिशब्दादित्यादिकं निरस्तं। शशादिशब्दोल्लिखप्रयोजकीभूतशशादिनिरूपितविषयतानामपि समर्थितत्वात्। विस्तरस्तु दूषणावसरे दूरीकरिष्यत इत्यलं। तस्मान्न व्यधिकरणप्रकारकबोधजनकत्वं युक्तं। शशविषाणमस्तीतिवाक्यानां नाप्यनिर्वचनीयबोधजनकत्वं। तत्सिद्धेः कुत्राप्यद्याप्यभावेन यदसन्न तत्प्रतीयत इति व्याप्तेः शशविषाणादौ भंगज्ञानस्यार्थापत्तेः प्राक् सुस्थिरत्वात्। तस्यानिर्वचनीयत्वसाधनाय प्रयत्ने ऽनवस्था। शशविषाणादिरूपानिर्वचनीयोत्पत्त्यंगीकारस्य गौरवादिना दूषितत्वाच्च। यदपि स्वमते तद्विशिष्टे तत्सत्तामभ्युपगम्य विशिष्टानिर्वचनीयभाने विशेषणीभूतशशीयत्वादेरपि भानमिति समाधानं तत्तुच्छं। त्वन्मते उक्तरीत्याश्रयणे बाध्यत्वविशिष्टेऽप्यबाध्यत्वप्राप्त्या ऽद्वैतहानिप्रसंगात्। न ह्यबाध्यत्वधर्मसंबंधसाम्ये शुद्धादस्य विशेषः तादात्म्यस्योभयत्र साम्यात्। तदुपलक्षितस्वरूपं न विशिष्टमिति चेत् तत्धर्मसंबंधसाम्ये विशिष्टस्वरूपस्य न तथात्वमिति वचनस्य रिक्तत्वात्। तस्माद्व्यधिकरणप्रकारकत्वानिर्वचनीयविषयकत्वयोरयोगाच्छशविषाणमित्यादिवाक्यजन्यबोधो ऽसद्विषयक एवेति स्थितं। एवं पूर्वं शशविषाणादेरुपस्थितत्वे तदुत्तरतत्पदस्य तच्छक्ततापयुपपद्यते। तत्पदस्य बुद्धिविषयतावच्छिन्नशक्तत्वादसतोऽपि तथात्वे तच्छक्तत्वे बाधकत्वाभावाद्विषयतानिरूपकत्ववच्छक्तिनिरूपकत्वेऽपि बाधकाभावादित्यन्यत्रविस्तरः। यस्त्वत्र वैयात्येनान्यथाविज्ञातस्येत्यादिटीकादूषणोद्यमः स चोत्तरटीकापरिज्ञानमूलक एवेति तदेतत्सर्वमभिप्रेत्य असतः परोक्षप्रतीतिविषयतामाश्रित्य शंकते। अथैवमिति। अस्त्येवेति। एवकारस्तस्यावश्यकत्वमाह। अपरोक्षेति न मन्य इति। तस्येंद्रियसंनिकर्षाधीनत्वेनासति तदयोगादिति भावः। असच्च तत् वैलक्षण्यं चेति कर्मधारयः। वैलक्षण्यपदं प्रातिभासिकवैलक्षण्यपरमित्याशयेनाह। यदीति।

( टीका ) तथा चाप्रवृत्तिः प्रसज्ज्येतेति ॥

इष्टापत्तिरित्यत आह । तथाचेति । अयं भावः परमते न तावद्रजतत्वप्रकारकज्ञानमात्रं प्रवर्तकं । प्रातिभासिकरजतसाधारणस्य तस्येष्टताऽनवच्छेदकत्वात् । नच प्रकृते इष्टत्वं इष्टसाधनत्वरूपमेव । सुखदुःखाभावयोरन्यतरत्वाभावेन साक्षादिष्टत्वाभावात् । साधनता च स्वरूपयोग्यतैव न तूपधायकत्वं । उपधायकत्वस्य फलोत्पत्तेः प्राक् सर्वत्र प्रतिबंधकसत्वादिशंकया संदिग्धत्वेन तन्निश्चयायोगेनेष्टसाधनत्वनिश्चयाधीनप्रवृत्तिविलयप्रसंगात् । तथाच स्वरूपयोग्यता कोमलदंडादिवत्प्रातिभासिकरजतेऽपि स्वीक्रियत इति अनतिप्रसक्तत्वात्कथं रजतत्वं नेष्टसाधनतावच्छेदकमिति वाच्यं । दंडेन कोमलतादशायां घटाजननेपि दृढत्वदशायां तेनैव घटोत्पत्तेरानुभाविकत्ववदसंजातबाधग्रहविषयेणापि प्रातिभासिकरजतेन कदाचिदपि रजतोचितार्थक्रियाजननेन तत्रस्वरूपयोग्यतायां मानाभावात् । अन्यथा द्रव्यत्वप्रमेयत्वादीनामपि रजतसाध्यार्थक्रियासाधनतावच्छेदकत्वापातात् । तस्मात्प्रातिभासिकभेदविशिष्टरजतत्वमेवेष्टसाधनतावच्छेदकं वाच्यमतस्तत्र रजते प्रातिभासिकवैलक्षण्यभानं स्वीकर्तव्यं । तच्च न पारमार्थिकं अद्वैतहानेः । रजते आरोपितस्य ब्रह्मस्वरूपत्वायोगात् । नापि व्यावहारिकं इदं प्रातिभासिकमेव न वास्तवमिति । ब्रह्मप्रमेतरबाध्यत्वात् नापि प्रातिभासिकं। यत्र तस्यारोपस्य रजतस्य प्रातिभासिकतयाऽज्ञानावच्छेदकतया तदवच्छिन्नाज्ञानपरिणामत्वायोगात् । शुक्त्यवच्छिन्नाज्ञानपरिणामत्वांगीकारे साक्षात्तदवच्छिन्नचित्यारोपितत्वापत्त्या रजतधर्मत्वायोगः । अन्यथैककपालावच्छिन्नदिगारोपितयोः घटकपालरूपयोः परस्परधर्मिधर्मभावापत्तेः । इत्थं च सत्तात्रयाभावादसत्वमेव वक्तव्यमिति असतः प्रातिभासिकवैलक्षण्यस्यापरोक्षप्रतीतिविषयत्वमागतमेव । एवं तत्र रजते भासमानं प्रातिभासिकवैलक्षण्यं सत्वेन भासते न वा। आद्ये तत्र भासमानं सत्वमपि सत्वेनैव प्रतीयत इत्यंगीकारे तदप्येवं तदप्येवमित्यनवस्था। द्वितीये चागतैवासतोप्यपरोक्षप्रतीतिः सत्वेना प्रतीयमानत्वादेव तस्यासत्वसिद्धेरिति ।अत्र वदंति ।इदं रजतमिति भ्रमे रजते प्रातिभासिक वैलक्षण्यभानांगीकारे बीजाभावः । रजतत्वमात्रस्येष्टतावच्छेदकत्वात् । नच प्रातिभासिकरजतादेरपि रजतोचितक्रियाकारित्वापात्तिः इष्टापत्तेः।अन्यथा स्वाप्नकामिनीसंभोगादेर्व्यावहारिकधातूत्सर्जनादिजनकत्वस्य स्वाप्नवृक्षादेः स्वसमानसत्ताकफलादिकार्यजनकत्वस्य चानुपपत्तेः। एवं बहिः प्रतीतवंशोरगादेर्भयकंपादेर्जनकत्वाभावापत्तेः। नच तत्र तज्ज्ञानमेव जनकमिति युक्तं। मन्मते प्रातिभासिकाकाराविद्यावृत्तेस्तत्प्रातिबिंबितत्वविशिष्टचिद्रूपज्ञानस्य च प्रातिभासिकतया तावतापि प्रातिभासिकस्यार्थक्रियाकारिताया अवर्जनीयतया विनिगमनाविरहेण विषयीभूतोरगादेरपि कारणत्वाक्षतेः। नचैकौषधिविशेषे आरोपितादौषधिविशेषाद्रोगविशेषनिवृत्त्यापत्तिरिति वाच्यं।क्वचित्तथाभावोपलंभेन तत्स्थलीयरोगनिवृत्तेर्यादृच्छिकत्वकल्पनापेक्षया तज्जन्यत्वस्यैव कल्पयितुमुचितत्वेनेष्टत्वात् । क्वचित् स्थलांतरेपि तेन कार्यजननाभावस्य व्यावहारिकेणापि तेन कार्याजननवददृष्टविशेषादिना प्रतिबंधेनैवोपपत्तेः । अथवा रजतत्वसंसर्ग एव व्यावहारिकप्रातिभासिकसाधारणे एकं वैजात्यं तदवच्छिन्नसंसर्गस्तु नेष्टतावछेदकतावछेदकः । व्यावहारिकसंसर्गमात्रनिष्ठं अपरवैजात्यं तदवच्छिन्नस्विष्टजनकतावछेदकतावछेदकस्तेन संबंधेन रजतत्वभानादेव प्रवृत्तेः । नच प्रातिभासिके रजते भासमानो रजतत्वसंसर्गः कथं व्यावहारिकः स्यात् । प्रातिभासिकानुयोगिकत्वादिति

वाच्यं । प्रातिभासिकत्वानुयोगिकत्वस्य संबंधाव्यावहारिकतायामतंत्रत्वात् । अन्यथा प्रातिभासिकरजतनिष्ठव्यावहारिकवैलक्षण्यस्यापि प्रातिभासिकत्वापत्त्या व्यावहारिकवैलक्षण्यस्याप्यसिद्धिप्रसंगात् । यद्वा व्यावहारिकसत्वाविशिष्टरजतत्वमेवेष्टतावच्छेदकमस्तु व्यावहारिकत्वमधिष्ठानगतं स्वयं व्यावहारिकमेव रजते भासत इति प्रवृत्त्युपपत्तिः। तथा च प्रवृत्त्यनुरोधात्प्रातिभासिकवैलक्षण्यं न भासत एव। अवश्यमित्थमेवाभ्युपेयं । अन्यथा तस्य भेदत्वमात्ररूपेणेष्टतावच्छेदककोटिप्रविष्टत्वेतिप्रसंगात्प्रातिभासिकत्वावच्छिन्नप्रतियोगिकभेदत्वेनैव तथात्वस्यावश्यकत्वे तेनैव रूपेण प्रवर्तकज्ञाने भानस्यावश्यकप्राप्त्या प्रातिभासिकत्वाद्यनुपस्थितिदशायां प्रतियोगितावच्छेदकाविशिष्टज्ञानाभावेन तद्वैलक्षण्यास्फूर्त्यां प्रवृत्त्यभावापत्तेः। यदपि प्रातिभासिकवैलक्षण्यभानपक्षे तस्य रजतावच्छिन्नाज्ञानकार्यत्वाद्ययोगादसत्वमेवेति तदप्यसत् । तस्य शुक्त्यज्ञानकार्यताया एवाभ्युपगमात् । न च तस्य रजतधर्मत्वायोग इति वाच्यं । तदवच्छिन्नाज्ञानकार्यस्य तद्धर्मत्वमिति नियमाभावात् । तथात्वे रूपादीनामपि घटादीनामिव मूलाज्ञानकार्याणां तद्धर्मत्वानुपपत्तिप्रसंगात् । मूलाज्ञानस्य चिन्मात्राश्रितत्वेन घटानवच्छिन्नत्वात् । नच प्रातिभासिकेयं व्यवस्थेति युक्तं । स्वाप्नानां सर्वेषां मूलाज्ञानकार्यत्वात् । नन्वेवं कपालघटतंत्वादीनामविशेषेण चित्यारोपितत्वेन तंतोरपि घटतादात्म्यवारणाय तदवच्छिन्नाज्ञानपरिणतत्वमेव तत्तादात्म्यनियामकं वाच्यं । अवस्थाज्ञानानामप्यनादितया पूर्वं विद्यमानानां भाविकपालावच्छिन्नत्वे बाधकाभावात् । अन्यथा नित्यत्वेन संयोगाद्यभावस्यागंतुकमूलाद्यवच्छिन्नत्वाभावापत्तेः । न चोक्तरीत्या व्यवस्था ज्ञानजन्यत्वे प्रातिभासिकत्वापत्तिः शुक्तिरजतादेरिवेति वाच्यं । अवच्छेदकनियम्यत्वायावस्थाज्ञानसहितमूलाज्ञानपरिणामत्वाभ्युपगमेन शुक्तिरजतादेर्मूलाज्ञानमात्रजन्यत्वाभ्युपगमेन वैलक्षण्यसंभवादिति चेत् । मैवं । मूलाज्ञानपरिणामत्वमात्रेणोपपत्ताववस्थाज्ञानपरिणामरूपत्वस्याप्यंगीकारे गौरवात् । कपालादेस्तादृशाज्ञानावच्छेदकत्वेऽपि तत्स्वभावस्यैवाश्रयणीयतया घटाद्यवच्छेदकतायामपि तस्यैव नियामकत्वसंभवात्। एवं च तदवच्छिन्नाज्ञानजन्यत्वस्य तत्धर्मतायां तत्तादात्म्ये वा प्रयोजकत्वविरहान्न प्रातिभासिकवैलक्षण्यस्य रजतावच्छिन्नाज्ञानजन्यत्वाभावेन तद्धर्मत्वाभाव आपादयितुं शक्यः। प्रातिभासिकवैलक्षण्यविशिष्टरजतस्यैव शुक्त्यज्ञानकार्यत्वोपगमात् भीषणत्वादिविशिष्टस्यैव भुजंगस्य रज्ज्वज्ञानकार्यतावत् । यदप्युक्तं तद्वैलक्षण्यं कथं भासत इति तत्र तत्वेनैव तस्य भानांगीकारात् । वस्तुतस्तु प्रातिभासिकवैलक्षण्यं न भासते रजतमेव सत्वेन भासते सद्रजतमिति प्रतीतेरिति वस्तुस्थितिः । नच तत्सत्वस्यापि सत्वेन भानेऽनवस्थाभयेन तत्र सत्वस्याप्रतीतौ तदसदेवेति प्राप्तमेवेति वाच्यं। अधिष्ठानवृत्तिसत्वस्य तत्र स्वरूपत एव भानांगीकारेणानवस्थाभावात् । अधिष्ठानवृत्तिसत्वस्य व्यावहारिकत्वात् । अन्यथा सत्वस्यापि पुनः सत्वेन भानावश्यकत्वे त्वन्मतेऽप्यनवस्थायाः दुर्वारत्वापत्तेः। तस्माद्युक्तमेवोक्तं सर्वमिति । अत्रोच्यते । यत्तावदुक्तं प्रातिभासिकरजते रजतोचितक्रियास्वरूपयोग्यत्वं स्वीक्रियत इति तदसत् । तथात्वे तत्र प्रातिभासिकत्वग्रहोत्तरमपि इष्टसाधनत्वव्याप्यरजतत्वग्रहानपायेनेष्टसाधनत्वग्रहद्वारा प्रवृत्त्यापत्तेर्दुर्वारत्वात् । नच प्रातिभासिकत्वस्य कोमलदंडत्वस्येवानुपधायकत्वव्याप्यतया तन्निश्चयेन न प्रवृत्तिरनुपधायकत्वनिश्चयस्य प्रवृत्तिविरोधित्वादिति वाच्यं।स्वाप्नकामिनीसंभोगतादृशरजतादौ उपधायकत्वस्य त्वयैव भाषितत्वेन प्रातिभासिकत्वस्य त्वन्मतेऽनुपधायकत्वव्याप्यस्य वक्तुमशक्यत्वात् । नच तत्र मिथ्यात्वग्रह एव प्रवृत्तिविरोधीति वाच्यं। मिथ्यात्वस्य कार्येनुपधायकत्वस्य तज्ज

नकत्वस्य वा भावं प्रत्यव्याप्यत्वे तद्ग्रहविरोधित्व एव बीजाभावात्। अन्यथा मिथ्यात्वाभाव ग्रहस्यापि विरोधितापातादविशेषात्। न चानुभवबलादेव तस्य तथात्वमस्त्विति वाच्यं। अनुभवस्य कारणत्वाभावग्रहसंपादकतयैव विरोधितायाः अनुभवसिद्धत्वेन स्वातंत्र्येण विरोधिताया एवानुभवविरोधित्वात्। एतेनाज्ञातमिथ्यात्वकरजतादिज्ञानत्वमेव प्रवर्तकतावच्छेदकमतोऽबाध्यत्वस्य तत्तुल्यन्यायापन्नव्यवहारकालाबाध्यत्वस्य वा प्रत्यक्षागोचरतया घटादिज्ञानेषु तद्घटितप्रामाण्यस्य साक्षिणा गृहीतुमशक्यत्वात्प्रवृत्त्यनुपपत्तिरूपो दोषो नास्तीति समाधानं निरस्तं।मिथ्यात्वस्य प्रवृत्तिप्रयोजकेष्टसाधनत्वाव्यावर्तकत्वे तत्तज्ज्ञाननिवेशे बीजाभावस्योक्तत्वात्।किं चाज्ञातमिथ्यात्वकरजतज्ञानमेव प्रवर्तकमित्यस्य पुरोवर्तिरजतविशेष्यक मिथ्यात्वकप्रकारकज्ञानाभावे वैकक्षणावच्छिन्नत्वघटितसामानाधिकरण्यप्रत्यासत्त्या विशिष्टं रजतज्ञानमिति निष्कर्षः अंगीकर्तव्यः। अन्यथा पुरुषांतरसंबंधिनं तत्पुरुषीयं कालांतरीणं रजतमिथ्यात्वज्ञानं चादाय ज्ञानत्वावच्छिन्नभेदनिवेशे प्रवर्तकतावच्छेदकधर्मशरीरस्यैव दुर्लभत्वापत्तेः अत्यंताभावं निवेश्य तस्य व्याप्यवृत्तित्वांगीकारे मिथ्यात्वग्रहदशायामपि प्रवृत्त्यापत्तेः। तत्कालतत्पुरुषनिवेशे चाननुगमापत्तेः। इत्थं च मिथ्यात्वविषयकत्वस्यैव ज्ञाने ऽप्रामाण्यरूपतया तस्य विषयमिथ्यात्वग्रह एव पर्यवसानादप्रामाण्यज्ञानानास्कंदितरजतादिज्ञानमेव प्रवर्तकं न प्रामाण्यनिश्चयापेक्षेति स्फुटः प्रामाण्यस्वतस्त्वसिद्धांतपरित्यागः। न चाज्ञातमिथ्यात्वकत्वं भावरूपाज्ञानघटितमेव। तथाच रजतविषयकत्वादिकं ज्ञानग्राहकसाक्षिवेद्यं रजतादेर्ज्ञानावच्छेदकतया साक्षिभास्यत्वात् मिथ्यात्वज्ञानं त्वज्ञानावच्छेदकतया साक्षिभास्यं सर्वं ज्ञाततयाऽज्ञाततया वा साक्षिवेद्यमिति विवरणोक्तेरिति विशिष्टप्रामाण्यावगाहित्वं ज्ञानग्राहकस्य प्राप्तमिति नापसिद्धांत इति वाच्यं। यतो रजतादिग्रहोत्तरमिदं मिथ्यात्वेन न जानामि रजतं तु पश्यामि इति व्यवहारमूलभूतग्रहस्तव नैय्यायिकस्य समानः। परं त्वयं भावरूपाज्ञानविषयत्वे युवयोर्विप्रतिपत्तिगोचरः। न चायं प्रामाण्य निश्चयरूपस्तथात्वे तस्येदमित्थमेवेति विषयावधारणप्राप्त्या विषयसंशयानुपपत्तिप्रसंगात्। तन्मूलज्ञानप्रामाण्यसंशयाभावात्। तथा चास्य प्रामाण्यनिश्चयरूपता भवतांगीकृता कथमुपपद्यते। नच प्रामाण्यनिश्चयोत्तरमपि तन्नाशोत्तरं पुनः संशयः स्वतः प्रामाण्यवादिनः सिद्ध इति वाच्यं। स्यादिदं यदि प्रामाण्यविषयकं स्यात् न चैवं। तथात्वे नैय्यायिकस्य प्रथमतस्तादृशाकारज्ञानस्य सिद्धत्वेन प्रामाण्यपरतस्त्वविचारारंभस्यैव साहसिकत्वापत्तेः। नच तादृशाकारज्ञानं नैय्यायिकस्यासिद्धमिति वाच्यं। प्राथमिकप्रत्यक्षे यो यो धर्मो न भासते तेन रूपेण न जानामीति ग्रहोत्पत्तौ विवादाभावात्। अन्यथा घटदर्शनोत्तरं घटत्वेनेमं जानामि न पटत्वेनेति प्रत्ययस्याप्यभावप्रसंगात्। पटत्वे नेममद्राक्षं न वेति संशयस्य अद्राक्षमेवेति विपर्ययस्य चाप्यापातात्। नच रजतं प्रमिनोमीत्येव मन्मते प्राथमिकज्ञानाकारः तन्नैयायिकासिद्ध इति वाच्यं। मिथ्यात्वेनागृहीतरजताद्यवगाहित्वस्यैव प्रामाण्यरूपत्वे तद्ग्रहावश्यकत्वे तन्मूलकतादृशाकारत्वस्यापि नैय्यायिकस्य प्राप्त्याऽस्य स्वतो ग्राह्यत्वविप्रतिपत्तिगोचरप्रामाण्यरूपत्वाभावस्यैवोच्यमानत्वात्। नच भावरूपाज्ञानस्य तन्मते अभावात्। कथं तद्घटितप्रामाण्यभानं नैय्यायिकस्योच्यत इति वाच्यं। प्रामाण्यशरीरे भावरूपाज्ञानस्य तत्वेन निवेशे तत्स्वरूपस्यैव नैय्यायिकस्यासिद्ध्या तत्र स्वतः परतस्त्वविवादस्य दूरोत्सारितत्वापत्त्या ज्ञानविरुद्धत्वेन निवेशनीयत्वेनोक्तदोषस्य दृढत्वात्। किं चाज्ञातं यन्मिथ्यात्वं तदाश्रयरजतावगाहित्वं प्रामाण्यमुत मिथ्यात्वेनाज्ञानविषयीभूतरजतावगाहित्वं वा। नाद्यः। सत्यरजतज्ञाने लोकानां प्रामाण्य-

व्यवहारप्रसंगात् । नच तदपि वस्तुतो मिथ्येति वाच्यं । तस्य त्वत्सिद्धांतत्वेपि लोकानां सत्यरजते मिथ्यात्वाभावस्यैव गृहीतत्वेन प्रामाण्यव्यवहाराभावप्रसंगात् । भ्रम एव पूर्वक्षणे इदं प्रमाणमिति व्यवहारप्रसंगाच्च । ब्रह्मस्वरूपमात्रावगाहिनि ज्ञाने उक्ताप्रामाण्याभावापाताच्च । न द्वितीयः । रजतभ्रमकाले तस्य मिथ्यात्वेनाज्ञाततयोक्तधर्मस्य भ्रमसाधारणस्य प्रामाण्यरूपत्वायोगात् । अपि चेदं मिथ्या न वेति संदेहदशायामपि भावरूपाज्ञानस्य त्वन्मते निर्विवादतया तद्घटितोक्तप्रामाण्यनिश्चयावरणप्रसंगः । किं चोक्तरूपं यदि प्रामाण्यं तर्हि तुल्ययुक्त्या सत्यत्वेन मिथ्यात्वाभावेन वा गृह्यमाणरजताद्यवगाहित्वं भ्रमत्वं स्यादिति प्रामाण्यग्रहवेलायां नियमेनाप्रामाण्यभानप्रसंगः। तथा च युगपत्प्रवृत्त्यप्रवृत्त्योरापसरेप्रामाण्यस्वतस्त्वं च स्यात् । एवं चोक्तरीत्या ऽनुपपत्तौ प्रवर्तकप्रामाण्यशरीरेपि विषये प्रातिभासिकवैलक्षण्यनिवेशावश्यकत्वे तद्ज्ञाननिर्वाहायापि रजतभ्रमप्रमादौ रजते प्रातिभासिकवैलक्षण्यभानाभ्युपगमस्यावश्यकता । ननु रजतादिज्ञानत्वमेव प्रवर्तकतावच्छेदकमस्तु रजतमात्रस्येष्टस्वरूपयोग्यत्वात् । नच तत्र मिथ्यात्वग्रहोत्तरमपि प्रवृत्त्यापत्तिरिति वाच्यं । रजताभावप्रत्यक्षस्यैव रजतमिथ्यात्वग्रहरूपतया तेन रजतोपादानाज्ञाननाशपूर्वकं रजतस्य नाशितत्वादेव न तत्र नष्टे घटादाविव प्रवृत्तिरिति चेन्न । अनुमानशब्दादिना मिथ्यात्वनिश्चयोत्तरं प्रवृत्त्यापत्तेरवारणात् । दोषाधीनरजतप्रतीतेरनुवृत्तत्वेन रजतस्य नष्टत्वात् । यदपि प्रातिभासिकादपि यदृच्छया कार्यदर्शनात्तस्यापि स्वरूपयोग्यत्वमिति तदप्यसत् । यदृच्छयैवेदं जातं नानेनेत्यबाधितानुभवविरोधेन तस्याकारणत्वात् । अन्यथा यदृच्छयेत्यस्याभावप्रसंगात् । तस्मात्केवलरजतादेर्न कारणत्वमिति प्रातिभासिकवैलक्षण्यजनकतावच्छेदककोटौ निवेशनीयमेव । नच स्वाप्नकामिन्याः धातूत्सर्गकारणत्वं न स्यादिति वाच्यं । इष्टापत्तेः । तज्ज्ञानस्यैव कारणत्वात् । नच विनिगमकाभावः । कामिन्यसत्वदशायामपि उत्कटरागादिना कामिनीस्मरणादिनापि तदुत्पत्त्या ज्ञानकारणतायाः क्लृप्तत्वात् । अन्यथा स्वाप्नशरीर एव कामिन्याश्लेषादिसत्वात् तत्रैव धातूत्सर्गं विहाय बहिः शरीरे तथात्वे बीजाभावः । अत एव रजतत्वापेक्षया रजतज्ञानत्वस्य कारणतावच्छेदकत्वे गौरवमप्यकिंचित्करं । एवं स्वप्नफलादिकमपि साक्षादेवाविद्याकार्यं न वृक्षादिद्वारेति न कस्यापि प्रातिभासिकस्य कारणत्वं । अन्यथा स्वप्ने जलसेकादिरूपक्लृप्तसहकार्यभावे तदुत्पत्त्यभावापत्तेः । नच यादृशजातिविशेषविशिष्टस्य स्वप्न एव भानं तज्ज्ञानकारणताया अक्लृप्तत्वेन सुखदुःखकार्यविशेषे तस्यैव कारणत्वं लाघवात्सिध्यतीति वाच्यं। जागरे कदाचिदप्यननुभूते तत्कारणसंस्काराभावेन स्वप्ने दर्शनस्यैवाभावात् । देशे दिगंतरे च प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवतीति श्रुतेश्च । स्मृतिरूपः परत्र पूर्वदृष्टावभासोऽध्यास इति वदद्भिस्त्वदाचार्यैरपि अध्यासस्य कारणत्रयजन्यताया नियमनाच्च । कथंचिदंगीकारेपि सजातीयेषु ज्ञानकारणत्वदर्शने तत्कार्यविशेषेषु तज्ज्ञानकारणकत्वस्यैव कल्पयितुमुचितत्वात् । अन्यथा ऽतीतलिंगमौनिश्लोकादिस्थले ज्ञानकारणता क्लृप्त्या सर्वत्र लिंगज्ञानत्वशाब्दज्ञानत्वादिना सर्वसिद्धा न स्यात् । वर्तमानलिंगादिस्थले विनिगमनाविरहेण लिंगकारणताया अप्यावश्यकतापत्तिः । किंच स्वप्नमात्रदृष्टवस्त्वधीनत्वेन भवदुक्तसुखादिकार्यविशेषे तस्य तज्ज्ञानस्य वा कारणत्वं न कल्प्यते । अन्यत्र तस्याक्लृप्तत्वात् स्वाप्नान्वयव्यतिरेकप्रतीतेर्भ्रमत्वेन कारणत्वासिद्धेः । किंतु कार्यमात्रजनकत्वेन क्लृप्तादृष्टविशेषादेरेवेति वक्तुं शक्यं । नच रजतादिज्ञानस्यापि प्रातिभासिकत्वात्तस्य जनकत्वेपि प्रातिभासिकस्यापि कारणत्वमागतमेवेति वाच्यं । ज्ञानस्य बाधवैधुर्येण प्रातिभासिकत्वस्यासिद्धेः ।

नच रजतं तत्ज्ञानं चोच्छिन्नं चेति बाधप्रत्ययोऽस्त्येवेति वाच्यं।तस्य ज्ञाने विनाशावगाहित्वेन त्रैकालिकनिषेधप्रतियोगित्वानवगाहनात्।तथात्वे रजतज्ञानमपि कदाचिदपि नास्तीति बुद्ध्यापत्तेः। नहि तथानुभवो लोकानां।अन्यथेदमाकारज्ञानमुच्छिन्नमिति व्यवहारानुसारादिदमाकारवृत्तेरपि प्रातिभासिकत्वापत्तेः।न चोच्छिन्नमित्यस्य नष्टार्थकत्वे रजते तदन्यथानुपपत्तिः। तस्य सिद्धांते असत्वादिति वाच्यं। मन्मते रजतनाशाप्रतीतेः तादृशव्यवहारसत्वे यथासंभवमुक्तवाक्ये उच्छिन्नपदस्यार्थद्वयेन सामंजस्यात्। नच शुक्त्यज्ञानस्य ब्रह्मज्ञानेतरबाध्यतया प्रातिभासिकस्य रजताद्युपादानतया ऽर्थक्रियाकारित्वमस्तीति वाच्यं। अस्य रजतानिर्वचनीयसिध्युत्तरकालकत्वात्। अज्ञानस्वरूपस्यैव ममासिद्धेश्च। अस्तु वा कस्यचित्प्रातिभासिकस्य तद्यथायथं रजतादीनामभिमतकटकादिकार्यविशेषजनकता। व्याप्यशरीरे तु प्रातिभासिकव्यावर्तकविशेषणमावश्यकमेव। प्रातिभासिकरजतस्य तादृशकार्यविशेषं प्रति कदाप्यकारणत्वात्। सत्यरजतादिप्रतीत्युत्तरेष्टसाधनताग्रहमूलकप्रवृत्तेरभ्रांतिमूलकत्वस्य सर्वसिद्धत्वात्। यदपि सर्वत्र पूर्वं प्रातिभासिकत्वग्रहानियमात्तदवच्छिन्नभेदो न ग्रहीतुं शक्य इति तदसत्। प्रातिभासिकवैलक्षण्यपदेन प्रातिभासिकव्यावृत्तिप्रयोजकस्य तदवृत्तिधर्मविशेषस्य विवक्षितत्वात्। तच्च व्यावहारिकसत्वं तत्समनियतं तद्व्याप्यधर्मांतरं वेत्यन्यदेतत्। यदपि तादृशवैलक्षण्यस्य रजते भानपक्षे शुक्त्यज्ञानकार्यत्वात्प्रातिभासिकमेवेत्यभिहितं तदसत्। तस्य रजताज्ञानकार्यस्यापि शुक्त्यज्ञानोपादानकस्य रजतधर्मत्वांगीकारेऽपि तस्य तत्कालोत्पन्नस्य रजतनिष्ठेष्टसाधनतावच्छेदककोट्यप्रविष्टतया तत्ज्ञानेनेष्टसाधनत्वग्रहायोगेन प्रवृत्त्यनुपपत्तिः। तत्साधारणरूपेण प्रातिभासिकवैलक्षण्यस्य जनकतावच्छेदककोटौ निवेशे रजतत्ववत्तस्यापि प्रातिभासिकनिष्ठतया तद्घटितधर्मस्य जनकतावच्छेदकत्वायोगः। तत्रापि प्रातिभासिकवैलक्षण्यस्य प्रातिभासिकतादृशवैलक्षण्यव्यावर्तनाय जनकतावच्छेदककोटौ निवेशे तद्ग्रहं विना पुनः प्रवृत्त्ययोगात्। तत्रापि पुनस्तादृशवैलक्षण्यांतरांगीकारे जनकतावच्छेदककोटौ अनवस्थितविशेषणपरंपरानिवेशेन तस्य दुर्ग्राह्यतया प्रमाधीनप्रवृत्तिविलयापत्तेः। तस्मात्तस्यासत्वमंगीकृत्य मन्मते सद्रजतभानपक्षे वक्ष्यमाणरीत्या दोषः परिहर्तव्य इति असतः प्रातिभासिकवैलक्षण्यस्यापरोक्षविषयता दुर्वारैव। अपिच रजते भासमानप्रातिभासिकवैलक्षण्यं प्रातिभासिकं नोपगंतुं शक्यं। स्वस्मिन् स्वसमानसत्ताकस्वभेदस्याभ्युपगंतुमशक्यत्वात्। अन्यथा घटेपि स्वसमानसत्ताकघटभेदस्य सत्वापातात्। प्रातिभासिकस्य प्रातिभासिकवैलक्षण्याविरोधप्राप्त्या घटवृत्तिरूपज्ञानस्य रसज्ञानं प्रतीव प्रातिभासिकत्वबुद्धेस्तद्विलक्षणत्वग्रहान्निवर्तकतापत्तेः। तस्य व्यावहारिकत्वपारमार्थिकत्वे तु पूर्वमेव निरस्ते इति बलादसत्वमेवापतितं। यदपीदं वृत्तिसत्वसंसर्गो रजते अध्यस्यते सत्वस्य तत्संसर्गस्य वा सत्वेन भानं तु नापेक्षितं। अन्यथापि तवापि तद्दोषप्रसंग इति तदसत्। रजतत्वमात्रस्य जनकतावच्छेदकत्वे ऽतिप्रसंगात्तत्कोटौ सत्वस्य निवेशे तत्र व्यावहारिकप्रातिभासिकसाधारणरूपावच्छिन्नसंसर्गेण सत्वनिवेशे प्रातिभासिकरजतस्यापि कारणत्वप्रसंगात्। व्यावहारिकमात्ररूपावच्छिन्नसंसर्गेण तन्निवेशे रजते तेन संबंधेन सत्वाप्रतीत्या कारणत्वग्रहायोगेन प्रवृत्त्यभावापातात्। अतो व्यावहारिकप्रातिभासिकसाधारणरूपावच्छिन्नसंसर्गेण भानमंगीकृत्य प्रातिभासिकव्यावर्तकरूपभानेनैव प्रवृत्तिनिर्वाहे कर्तव्ये उपपादितरीत्या असतो अपरोक्षप्रतीतिविषयत्वं दुर्वारं। किं चेदंत्वरजतसंसर्गस्य सत्वरजतसंसर्गस्य वा रजते भासमानप्रातिभासिकवैलक्षण्यस्य वा सत्वेन भानांगीकारे सत्ता-

दात्म्यापन्नस्वरूपस्य सत्वेन प्रतीत्यर्हत्वस्याभावेन सद्रूपत्वस्याप्यभावेनासत्वस्यावर्जनीयतया असतो अपरोक्षप्रतीतिविषयता दुर्वारा। सत्वेन प्रतीत्यंगीकारे तत्र भासमानसत्वसंसर्गस्य तत्संसृष्टसत्वस्य सत्वेन भानानंगीकारे पुनस्तदवस्थः प्रसंगः। पुनस्तस्यापि तथात्वांगीकारे अनवस्था। यत्र पर्यवसानं तस्यैवासत्वं। नचेयमनवस्था प्रामाणिकी येनावस्थितिविषयधारायाः भानं स्वीकर्तुमुचितं। न चेदं रजतमिति भ्रमे तादृशसंसर्गादौ सत्वाभावेऽपि तत्संसर्गः सन्निति प्रतीत्यंतरबलात्तत्र सत्वसिद्धिरिति वाच्यं। एतदतिरिक्ततन्मात्रावगाहिप्रत्यक्षाभावात्। शाब्दानुमित्योस्तु शशविषाणसत्वावगाहिप्रत्ययाविशेषपरिहारस्याशक्यत्वात्। न चेदंत्वरजतत्वयोः संसर्गे यत्सत्तादात्म्यं वर्तते तत्र सत्तादात्म्यांतरं न स्वीक्रियत एव। तद्वसत्वं दुर्वारमिति न शंक्यं। स्वस्यैव साधारत्वसंभवादिति वाच्यं। अत्यंताभावे आधाराधेयभावानुपपत्तौ कथंचिदुपहितानुपहितभेदमंगीकृत्य तत्स्वीकारे तादृशभेदस्यापि भ्रमे प्रतीतिं विना सिध्ययोगाद्भेदसंबंधादिष्वप्युक्तदोषो दुर्वारः। इदंत्वरजतसंसर्गे सत्तादात्म्यभाने तत्र संसर्गाध्यासस्यावश्यकतया तत्संसर्गविषय एव पुनरुक्तदोषात्। एतेन सत्तादात्म्यसदेतदन्यतरत्वशून्यत्वमेवासत्वमंगीकृत्य सत्तादात्म्ये सत्तादात्म्याभानेऽपि नासद्भानमिति जल्पनमपि निरस्तं। उक्तसंसर्गादावपि सत्वसंसर्गमादाय दोषस्य दुर्वारत्वात्। अन्यतरत्वेन निवेशे यद्यदसतो अपरोक्षप्रतीतिविषयता मया स्वीक्रियते तत्सर्वं निवेश्यान्यतमत्वेन परिष्कारस्य कर्तुं शक्यत्वेनापरोक्षप्रतीतिविषयत्वेनासत्वप्रतिक्षेपद्वाराऽनिर्वचनीयत्वासिध्देः। यदप्यभिहितं सत्वस्य सत्वेन भानावश्यकत्वे तवाप्येष दोषः समानः। नो चेन्ममापि नास्तीति तदसत्। मम मते सत्वे सत्वस्य स्वतः सिध्धाधाराधेयभावांगीकारेण प्रतीतावपि स्वांशे प्रकारतया स्वरूपत एवांगीकारेण कुत्रापि दोषाभावात्। न चैवं भवन्मते इत्युपपादितमेव। यदत्र गुरुचंद्रिकायामभिहितं मन्मते सत्ता सतीति न प्रतीतिः। अतः सत्तायां सत्वास्वीकार इति तन्न सत्। सतीति प्रत्ययाविषयत्वे सद्विलक्षणत्वस्यावर्जनीयतया तुच्छत्वापत्तेर्दुर्वारत्वात्। सत्तादात्म्यमादाय तद्वारणे तेनैव घटादाविव सत्वप्रतीतिरवर्जनीयतया तादृशप्रत्ययानंगीकारस्यानुचितत्वात्। नन्वनवस्थादोषादिसंधाने घटादिरूपसर्वपदार्थे व्यवस्थापनमशक्यं स्यादतः आपातत एव रजतादिप्रतीतिकार्यमुपपादनीयमिति तत्र कुत एतद्युक्त्यनुसंधानेनासत्प्रातिभासिकवैलक्षण्यभानसिध्धिरिति चेन्न। घटादिविशिष्टेषूक्तदोषस्य निरशिष्यमाणत्वात् अर्थापत्त्या शुक्तिरजतादेरनिर्वचनीयत्वसिध्धिवेलायां उक्तबाधकस्फूर्त्यावश्यकत्वे असत्वपक्षान्यथाख्यातिपक्षपरित्यागपूर्वकमेतत्कल्पस्वीकारे बीजाभावात्। सर्वत्र बाधकसाम्यात्। वस्तुतः असत्वपक्षस्यानुपदं वक्ष्यमाणरीत्या दुष्टत्वाभावाच्च। ननु शुक्तिरजतादिप्रतीतौ भवन्मते रजतादौ सत्ता भासते न वा। द्वितीये रजते इष्टसाधनत्वानुमापकलिंगासिध्धिः। रजतज्ञाने सद्रजतावगाहित्वरूपप्रामाण्यनिश्चयायोगः तथाच प्रवृत्त्यभावः। आद्ये रजतभासमानसत्वे सत्वसंशयकालेऽपि प्रवृत्त्यादिवारणाय सत्वेपि सत्वनिश्चय आवश्यकस्तत्राप्येवं तत्राप्येवमिति रीत्याऽनवस्थापत्तिः। यदि च तत्रासत्वग्रह एव विरोधी न तत्र सत्वग्रहापेक्षेति ब्रूषे तर्ह्यसत्वेनागृह्यमाणरजतादिज्ञानत्वं प्रवर्तकतावच्छेदकं जातमिति ममापि तथैव अस्त्विति कुतो मम प्रवर्तकप्रामाण्यशरीरे प्रातिभासिकवैलक्षण्य निवेशः। कुतस्तरां तद्भाननिर्वाहाय रजते प्रातिभासिकवैलक्षण्यभानमतः पूर्वोक्तप्रवर्तकप्रामाण्यशरीरे विषयप्रातिभासिकवैलक्षण्यमित्याद्यसमंजसमिति चेन्न। यतो मन्मते भ्रमप्रतीते रजतत्वादिधर्माणां अनंगीकारेण तन्मात्रे स्वेष्टसाधनत्वव्याप्यतया सत्यरज-

(टीका) किं निबंधनश्चायमसतोऽपरोक्षप्रतीतिगोचरतानंगीकारः। क्वचिज्ज्ञानस्यानालंबनत्वेऽन्यत्राप्यनाश्वासप्रसंग इति चेत् तत्किं परोक्षप्रतीतेरसद्विषयत्वेनानाश्वासप्रसंगः। समानश्चायं प्रसंगः प्रातिभासिकविषयप्रत्ययांगीकारेऽपि। बाधकाद्विवेक इति चेत्—

---

तादौ तन्मात्रेणेष्टसाधनत्वप्रमोदयेनाभ्रांतस्य प्रवृत्तिनिर्वाहः। व्यवसाये तत्प्रामाण्यावगाहिन्यनुव्यवसाये च रजतादिरूपविषयस्य सत्वेन भानं सत्वे च सत्वं स्वरूपत एव भासत इति सदर्थावगाहित्वरूपप्रामाण्यभानेनैव प्रवृत्त्यादिनिर्वाहः। प्रामाण्यशरीरे च विषये सत्वस्यैव निविष्टत्वेनासति सत्वेन भानस्थले च तत्र भासमानसत्वस्य वस्तुतोऽसत्त्वेन सत्वविशिष्टावगाहित्वरूपप्रामाण्यस्यापादयितुमशक्यतया प्रामाण्यशरीरेऽपि विशेषणानवस्थाविरहात्। यत्र तु गृहीते प्रामाण्ये पुनर्दोषादिवशात्सत्वसंदेहस्तत्र पुनर्विषयनिश्चयतत्प्रामाण्यनिश्चययोर्निर्वाहाय प्रमाणांतरान्वेषणं न पुनरसत्वेनागृह्यमाणविषयज्ञानत्वं प्रवर्तकतावच्छेदकं। तथात्वे प्रामाण्यस्वतस्त्वभंगापत्तेरुक्तत्वात्। भ्रमे तु यादृशी प्रमीयविषयता संनिकर्षादिप्रयोज्या तादृश्येव दोषप्रयोज्या स्वीक्रियते तन्निरूपकं त्वसदिति। तथा च तादृशभ्रमात्मकेष्टसाधनताज्ञानप्रामाण्यभ्रमादिना भ्रमस्थले प्रवृत्तौ न किंचिद्बाधकं। तव मते तु सत्यरजतज्ञानोत्तरप्रवृत्त्यादीनामेवाभ्रांतस्य निर्वाहाय पूर्वोक्तप्रातिभासिकवैलक्षण्यादिनिवेशस्य जनकतावच्छेदकप्रामाण्यशरीरादावावश्यकत्वात् पूर्वोक्तसर्वदूषणान्यपरिहार्याणीति मूलटीकोक्तं युक्ततममेवेत्यलं। एवं विपक्षे बाधकेनासतोऽपरोक्षप्रतीतिं समर्थ्य अप्रयोजकत्वादपि असत्वमपरोक्षप्रतीतिविषयताभावव्याप्यं सत्वमसद्विलक्षणत्वं सत्तादात्म्यपर्यवसन्नं वा परोक्षप्रतीतिविषयताव्यापकमिति च पक्षं निराकुरुते। कि निबंधन इति। अनाश्वास इति। इदं रजतमिति असद्रजतस्य विषयत्वांगीकारे निर्विषयकत्वमेवागतं। विषयो नास्तीति अस्यासद्विषयकत्वमित्यस्याभिन्नार्थकत्वात्। तथा चापरोक्षज्ञानत्वस्य निर्विषयकत्वसामानाधिकरण्ये घटादिप्रत्यक्षेष्वपि तादृशधर्मसाधारणधर्मदर्शनेन विशेषादर्शनेन च निर्विषयकत्वसंदेहेन च तद्विषयासिद्ध्या घटादिगोचरप्रवृत्त्यादिकार्यविलयापात इति अनुकूलतर्कसत्वान्नाप्रयोजकतेति भावः। नच रजतस्यासत्वेऽपि शुक्तेरेव विषयीभूतायाः सत्वात्कथं तादृशज्ञानस्य निर्विषयप्रसक्तिरिति वाच्यं। विशिष्टैकार्थविषयकैकज्ञाने एकस्य सत्वमेकस्यासत्वं न वक्तुं शक्यं। सदसदुपरागाभावेन सदसदुभयघटितावैशिष्ट्यायोगात्। अत एकस्य प्रकारीभूतरजतस्यासत्वे तदुपरक्तं सर्वमसदेवेति प्राप्तमिति पराभिमानात् तमेव न च वयमित्यादिनाऽनुपदमेव निराकरिष्यति। परमुखेनैव समाधिं वाचयितुं प्रतिबंदीं सूचयन् उत्तरयति। तत्किमिति। अनाश्वासप्रसंगो न इति यत् तत्किं केनोपपाद्यं तदेवालोचयेत्यर्थः। बाधकाद्विवेक इत्यादि त्वयोच्यमानं ममापि सममिति हृदयं। असतः परोक्षप्रतीतेः प्राक् व्यवस्थापितत्वान्न कश्चित्क्षुद्रोपद्रवः। अपरोक्षस्थल इव परोक्षस्थलेपि अनिर्वचनीयस्यैव भानमिति व्यधिकरणप्रकारकत्वमेव परोक्षज्ञानस्येति वाऽऽग्रहकरणेप्याह। समानश्चेति। प्रत्ययेति। अपरोक्षप्रत्यक्ष इत्यर्थः। तस्यैव प्रक्रांतत्वात्। यद्बाधितप्रत्ययसामान्यस्य प्रातिभासिकविषयकत्वमंगीकृत्यासद्विषयकप्रत्ययानंगीकारेऽपीत्यर्थः। शुक्तिरजतादिप्रत्यये व्यवहारकालबाध्यार्थक्रियानर्हपदार्थविषयकत्वसत्वे पूर्वोपपादितरीत्या घटादिप्रत्यये अनाश्वासेन घटादौ प्रवृत्त्याभावप्रसंगः सम इत्यर्थः। बाधकादिति।

(टीका) समं प्रकृतेऽपि। नच वयं शून्यवादिन इव रजतज्ञानं निरालंबनं ब्रूमः। शुक्तिविषयतांगीकारात्। केवलं स्वविषयं शुक्तिकाशकलमत्यंतासद्रजततयाऽवगाहत इत्यसद्विषयमुच्यते रजतज्ञानस्य शुक्तिकाविषयत्वं संविद्विरुद्धमिति चेन्न। रजतज्ञानस्येति कोर्थः। यदि रजतविषयस्येति तदाऽसिद्धिः।

---

व्यवहारकालीनबाधग्रहविषयीभूतार्थविषयकज्ञानत्वस्यैवार्थक्रियानर्हार्थविषयकत्वव्याप्यताग्रहेण घटादिज्ञाने तद्वैलक्षण्यग्रहात्तज्ज्ञानोत्तरं प्रवृत्त्याद्युपपत्तिरित्यर्थः। सम प्रकृतेपीति। मन्मते यदंशे बाधितमित्यंतस्यासत्त्वं तद्विषयकत्वांशे ज्ञानस्याप्रामाण्यमिति नियमांगीकारेण घटादिज्ञानेषु वैलक्षण्यात्तदुत्तरं प्रवृत्त्याद्युपपत्तिरित्येतन्मतेऽपि समानमित्यर्थः। ननु नोक्तरीत्या साम्यमुपपादयितुं शक्यं। मन्मते रजतादेर्मिथ्यात्वावगाहिप्रत्यय एव बाधः। मिथ्यात्वं च प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वे सति सत्तादात्म्यापन्नत्वं। तादृशमिथ्यात्वे बाधकप्रत्ययेन विषयीकरणीये रजतादौ निषेधप्रतियोगित्वं तत्तादात्म्यानुयोगिनि सत्वमवश्यं विषयीकरणीये तेन विना विशिष्ट मिथ्यात्वावगाहित्वासिद्धेः। तथाच भ्रमविषयीभूतेष्वेव कस्यचित्प्रातिभासिकत्वात् कस्यचिदतथात्वाज्ञानत्वे प्रातिभासिकमात्रविषयकत्वव्याप्तिग्रहो न घटते। मात्रार्थानंतर्भावेण व्याप्तिग्रहो प्रवृत्त्यादिविरोधी। घटादिविषयकज्ञाने किंचिदंशे प्रातिभासिकविषयकत्वग्रहेण घटादौ तत्संशयेऽपि बाधकभावाभावाभ्यां अन्यतरानिर्णयोपपत्तेः। न चैवं भवता वक्तुं शक्यमुक्तयुक्त्येदं रजतमिति ज्ञानेष्वसन्मात्रविषयकत्वस्यावश्यकत्वे बाधबुध्याऽपि सर्वत्रासत्वस्यैव विषयीकर्तव्यतया तदृष्टांतेन ज्ञानत्वे ऽसन्मात्र विषयकत्वरूपनिरालंबनत्वव्याप्तिग्रहेण घटादिज्ञानोत्तरं तत्र निश्चयस्यैव जातत्वेन बाधकभावाभावयोरकिंचित्करत्वात्प्रवृत्त्यनुपपत्तिर्दुर्वारैवेति परस्य पूर्वोक्ताभिमानमूलकामाशंकां निरसितुमभिमानमेव निराकरोति। नच वयमिति। चोऽवधारण इति। नैव ब्रूम इति वा। निरालंबनमेवेति वा संबंधः। शून्यवादिवैलक्षण्यरूपविशेषार्थकः सन्वयमित्यनेन संबध्यते। यद्वा समं प्रकृतेपीत्यंतग्रंथेन पराभिमानमंगीकृत्यैव समाहितमिदानीमभिमानमेव निराकरोति। नचेति। नापीत्यर्थः। शुक्तीति। केवलमिति। शुद्धं ननु भासमानरजततादात्म्यापन्नमिति अनिर्वचनीयमतवैषम्योपपादनं। यद्वा स्वजनकसंनिकर्षानुयोगित्वरूपाविषयता शुक्तावेव न रजतेऽपि इत्येतत्सूचनाय केवलमित्यभिहितं। एतच्च रजतज्ञानस्येति शंकोत्थापनाय। अन्यथा शुक्तिरजत इति समूहालंबनस्य शुक्तिविषयकत्वदर्शनात्कथं संविद्विरोध इति शंका स्यात्। केवलपदेन रजतविषयकत्वव्यवच्छेदपूर्वकशुक्तिविषयकत्वोक्तौ तत्संभवात्। रजतज्ञानस्येति शुक्तिविषयत्वं केवलशुक्तिविषयत्वं यद्वा रजतज्ञानस्येदं रजतमिति रजतमात्रविषयकत्वेनानुभूयमानज्ञानस्येत्यर्थः। तेन समूहालंबनव्युदासः। संविद्विरुद्धमिति अनुव्यवसायविरुद्धमित्यर्थ इत्येके। 'अत्र ब्रूमो य एवार्थो यस्यां संविदि भासते॥ वेद्यः स एव नान्यद्धि वेद्यं वेद्यस्य लक्षणं॥ इदं रजतमित्यत्र रजतं चावभासते॥ तदेव तेन वेद्यः स्यान्न च शुक्तिरवेदनात्॥ तेनान्यस्यान्यथा ज्ञानं प्रतीत्यैव पराहतं॥ परस्मिन् भासमाने हि न परंभासते यतः॥' इति संविद्विरुद्धत्वस्वरूपोपदर्शकनयवीथीवाक्यानुसारेण विचार्यसंवित्स्वभावविरुद्धमित्यर्थ इत्यन्ये। आसाद्धेरिति। स्वजनकसंनिकर्षानुयोगित्वरूपविषयतानिवेश इत्यादिः

( टीका ) यदि रजतमिति ज्ञानस्येति तदा परस्यैव संविद्विरोधः । यदिदं रजतमित्यमनिषि सा शुक्तिकैवेति प्रतीतेः यदाकारं यद्विज्ञानं तत्तद्विषयमिति तु प्रमितिनिष्ठेयं व्यवस्था । एतेनापरोक्षज्ञानस्येंद्रियसमुत्थत्वादिंद्रियाणां चार्थसन्निकृष्टानामेव ज्ञानहेतुत्वादसता च सन्निकर्षायोगान्नासद्विषयापरोक्षज्ञानमिति परास्तं । शुक्तिसन्निकृष्टेनेंद्रियेण दोषवशाद्रजततया तज्ज्ञानजननांगीकारात् ॥

---

रजतसंन्निकर्षस्य मतद्वये ऽप्यनंगीकारात् । परमते ज्ञानस्य संनिकर्षत्वविरहात् । मन्म तेऽपि यदत्र पूर्वं यदनुभूतं तत्संस्कारादिना तत्रैव तद्भासत इति नियमात् । साक्षात्कारत्वाख्यजातिस्थानापन्नविलक्षणविषयतायास्तदप्रयोज्यत्वाद्विनिगमनाविरहेण नानारजतभानापत्तेश्च । नालौकिकसंनिकर्षस्य तत्र हेतुता । केवलमारोप्यमाणसजातीयस्मरणादेस्तद्भ्रमे स्वातंत्र्येणैव हेतुत्वस्य स्मर्यमाणारोपस्थले कल्पनादिति भावः । रजतमिति । ज्ञानस्येति । तादृशव्यवहारानुकूलशक्तिमत्ज्ञानस्येत्यर्थः । यदिदमिति । इदंविषयकरजतशब्दोल्लेखादिप्रयोजकविषयताश्रयज्ञानवानहमित्यर्थः । सेति । विधेयापेक्षया स्त्रीलिंगः । यदिदमित्यत्र तु सामान्यापेक्षया नपुंसकता । अभिलापकवाक्ये इदंपदार्थविषयकत्वं तत्सन्निकर्षजन्यत्वं यदि प्रतीयते तदा तदन्वयव्यतिरेकज्ञानं तत् । यदि च तत्प्रयोज्याविषयतैव तदा तत्ज्ञानं भ्रमानुव्यवसायात्मकमेवेति विवेकः । ननूत्पन्नानां घटादिज्ञानानां इदं घटस्य ज्ञानं न पटस्य पटस्य ज्ञानं न घटस्येति व्यवस्थार्थं यन्निरूपितोल्लेखाकारापरपर्यायविषयतावद्यत् ज्ञानं तत्तन्निष्ठस्वजनकसन्निकर्षाश्रयत्वरूपाविषयताकमिति व्याप्तिरंगीकर्तव्या । तथा च घटशब्दादिव्यवहारानुकूलतादृशविषयितानिवेशबलाद्घटानुयोगिकस्वकारणसंनिकर्षजन्यत्वमनुमाय घटस्य ज्ञानमित्यादि व्यवहरतीति वक्तव्यं । तच्चेदानीं न घटते । रजतोल्लेखिज्ञानस्य रजतसन्निकर्षाजन्यत्वेन व्यभिचारादित्यत आह । यदाकारमिति । प्रमितीति । तथाचाबाधितानिरूपितविषयतैव हेतुरित्यर्थः । यद्वा यदुल्लेखवद्यत् ज्ञानं तद्वस्तुतस्तन्निरूपिततादृशोल्लेखारूयविषयतावदित्येव व्याप्तिः शंककस्याभिमता । यदुल्लेखवत्त्वं यत्तात्पर्यकशब्दव्यवहारानुकूलविषयतावत्त्वं । समाधानं तु अबाधितस्वनिरूपकत्वं तादृशविषयतायां देयं । आद्ये घटस्य ज्ञानमित्यत्र तत्सन्निकर्षजन्यत्वरूपविषयत्वं षष्ठ्यर्थः । द्वितीये तु तन्निरूपितविषयितैवेति विवेकः । तद्विषयमिति वाक्यस्याप्युक्तानुसारेणार्थद्वयं प्रथमकल्पे । नित्यज्ञाने व्यभिचारवारणाय जन्यत्वं देयमिति भावः । असतो अपरोक्षत्वे परोक्तबाधकांतरमाशंक्य निराकरोति । एतेनेति । यदि रजतज्ञानस्येति तदासिद्धिरिति ग्रंथेन शुक्ताविव रजते विषयत्वाभावोपपादनेनेत्यर्थः । परास्तमिति । ज्ञाने सन्निकर्षप्रयोज्या या रजतविषयताया अनंगीकारादिति भावः । ननु सन्निकर्षाप्रयोज्यत्वे साऽऽकस्मिकीति प्राप्तं । तथा च विनिगमकाभावात्सर्वपदार्थोल्लेखोऽपि स्यादित्यत आह । शुक्तीति । रजततया तज्ज्ञानजननांगीकारात् । रजतोल्लेखिशुक्तित्वाविषयकज्ञानांगीकारात् । तथा च संनिकर्षाप्रयोज्यापि दोषप्रयोज्यैव सा विषयता तस्याननुगतस्य तादृशभ्रमहेतुत्वांगीकारान्न रजतभ्रमे रंगोल्लेखः । अन्यथा तवाप्यगतिः स्यादिति भावः । अत्र वदंति । असद्रजतस्य भानं न स्वीकर्तुमुचितं अपरोक्षप्रतीतिविषयतानिरूपकत्वस्य तज्जनकसंनिकर्षाश्रयत्वव्याप्यत्वात् । असति चेंद्रियसंनिकर्षायोगात् । न चाबाधितत्वमपि व्याप्यकोटौ निवेश्यमिति वाच्यं । सामान्यत एतस्य व्याप्यत्वे तादृशसंनिकर्षस्यैकस्यैव प्रयोजकत्वं ।

अन्यथा प्रयोजकांतरकल्पनापत्तिरसति दोषस्यापि संबंधाभावेन तस्य प्रयोजकत्वासंभवेनाकस्मिकत्वापत्तिश्चेत्यनुकूलतर्कसचिवव्याप्तिग्राहकप्रमाणेनाबाधितत्वाघटितस्यैव व्याप्यत्वेन निश्चितत्वात्। नच सुरभि चंदनमिति विशिष्टज्ञानीयाविषयितानिरूपकत्वस्य सौरभे सत्वेऽपि करणसंनिकर्षाभावाद्व्यभिचारः। संयुक्तसमवायसत्वेपि तस्य चक्षुःसन्निकर्षत्वविरहात्। कालिकादिसंबंधमादाय सन्निकर्षस्याव्यावर्तकत्वेन करणसंनिकर्षसत्वादस्मिन् ज्ञाने अयं विषयस्तदभावादनयं विषय इत्यादिव्यवस्थाया असित्थ्यापत्त्या स्वप्रयोजकसंबंधस्यैव सन्निकर्षपदार्थत्वादिति वाच्यं। तत्रापि करणानिरूपितस्य ज्ञानलक्षणसन्निकर्षस्य सत्वात्। न चात्रापि तथास्त्विति वाच्यं। सत्यरजतविषयकस्मृतिसंस्कारयोरेव सत्वेनासद्रजते सन्निकर्षस्यायोगात्। नच विभ्रमांतरगोचरासद्रजतगोचरसंस्कारादिरेव संनिकर्षोऽस्तु। प्राथमिकविभ्रमेऽपि जन्मांतरीयासद्रजतगोचरसंस्कारादिरेव तथास्तु। संसारस्यानादित्वात्। फलबलेन जन्मांतरीयसंस्कारोद्बोधस्यापि कल्पनादिति वाच्यं। इदं रजतमिति प्रत्ययस्य तत्कालोत्पन्नानिर्वचनीयरजतावगाहित्वेनाप्युपपत्त्या जन्मांतरीयसंस्काराद्युद्बोधकस्य कल्पनाया अप्रामाणिकत्वात्। एतज्जन्मन्येव दृष्टापूर्वचैत्रादेर्यत्र प्रथमतो विभ्रमस्तत्रागतेश्च। किंच प्रत्यक्षीयलौकिकविषयता तज्जनकेंद्रियनिरूपितलौकिकसंनिकर्षवत्वव्याप्येति नियमः। असंनिकृष्टानामपि प्रत्यक्षे भानवारणाय लौकिकविषयतासंबंधेन प्रत्यक्षं प्रति इंद्रियसंनिकर्षस्य कारणत्वावधारणात्। रजते च लौकिक्येव विषयता रजतं पश्यामि साक्षात्करोमि इत्याद्यनुभवात्। यत्र लौकिकी विषयता तद्विषयकत्वावच्छेदेनैव चाक्षुषत्वसाक्षत्कारत्वयोरनुव्यवसायगम्यत्वात्। अन्यथा सुरभि चंदनमिति प्रत्यक्षोत्तरं सौरभं पश्यामि साक्षात्करोमीत्याकारस्य चंदनं पश्यामीत्यादाविवापत्तेः। वस्तुतस्तु यत्र सुरभि चंदनमिति ज्ञानं सौरभांशे स्मरणात्मकं चंदनांशे प्रत्यक्षात्मकमेव स्वीक्रियते तत्र सौरभं स्मरामीत्येवानुव्यवसायस्वीकारात्। न चैतदलौकिकमिति वाच्यं। सौरभस्मरणस्य विशिष्टप्रत्यक्षहेतुतया ऽवश्यमभ्युपगंतव्यतया ज्ञानादीनां ज्ञातैकसत्वेन तदनुव्यवसायस्यावश्यकत्वात्। नच तदंशे उद्बुद्धसंस्कारस्यैव हेतुत्वान्न स्मरणं तत्रांगीकार्यमिति वाच्यं। तर्हि संस्कारस्यातींद्रियतया फलमात्रकल्प्यत्वेन स्मृतिरूपकार्याभावे तत्कल्पकस्यैवाभावेन संस्कारोद्बोधस्यैवासित्थ्यापत्तेः। नच सौरभस्य प्रत्यक्षे भानानुपपत्तिरेव तत्कल्पकेति वाच्यं। असन्निकृष्टभानस्य वा तत्क्षणतद्दृष्टादीनामेव सन्निकर्षघटकत्वादिसित्थ्यापत्त्या वा संस्कारस्यासिद्धेः। न चोक्तरीत्या सुरभिचंदनमित्यत्र स्मरणत्वस्वीकारे जातित्वानुपपत्तिः। चाक्षुषत्वादिना सांकर्यादिति वाच्यं। तस्य दोषत्वे मानाभावात्। संशयत्वनिश्चयत्वयोरव्याप्यवृत्तिजात्योर्नैय्यायिकैकदेशिनामिवानयोरप्यांशिकत्वस्वीकारे बाधकविरहात्। तथा च विषयतायां लौकिकत्वमनिवेश्यैव व्याप्त्यंगीकारेऽपि न व्यभिचारः। परंतु तत्र स्मरणानुभवरूपक्रमिकज्ञानद्वयांगीकारे सौरभवत्वेन चंदनं जानामीत्यादिविशिष्टज्ञानानुभवविरोधेनैकज्ञानमेवांगीकृत्य तत्रांशिकजातिद्वयस्वीकारात्प्रत्यक्षत्वाश्रयस्य तस्यैव सौरभे विषयतायाः सत्वात्। व्यभिचारवारणाय प्रत्यक्षत्वावच्छिन्नाधिकरणतैव व्याप्यत्वेनांगीकर्तव्या। तत्र स्मरणत्वावच्छिन्नाधिकरणताया एव सत्वान्न व्यभिचारः। वस्तुतस्तु तत्र स्मरणात्मकप्रत्यक्षात्मकवृत्तिद्वयप्रतिफलितचैतन्यैक्याज्ज्ञानैक्येऽपि वृत्त्योर्भिन्नत्वात्प्रत्यक्षात्मकवृत्तेर्व्याप्यकोटावाकाराख्याविषयतायाः निवेशात्प्रत्यक्षत्वावच्छिन्नानाधिकरणत्वानिवेशेऽपि क्षत्यभावः। तथा भवन्मते लौकिकविषयतया विषयतासामान्येन वा रजते प्रत्यक्षसत्वादिंद्रियलौकिकसंनिकर्षाभावात्

व्यभिचारो दुर्वारः स्यादिति नासङ्गानं युक्तं। न चोक्तव्याप्तौ भ्रमत्वघटकाविषयताभेदो निवेश्यतां असन्निकृष्टभानापत्तिवारणं तु दोषविशेषस्य हेतुत्वेन निर्वहति । प्रत्यक्षविषयता इंद्रियसंनिकर्षदोषैतदन्यतरप्रयोज्येति नियमो ऽस्त्विति वाच्यं। संकोचे बीजाभावेन सामान्यत एव विषयतां निवेश्य व्याप्तिग्रहात्। असति दोषसंसर्गस्यायोगेन व्यधिकरणतया तत्र दोषस्य प्रयोजकतायाः विचारासहत्वात्। तस्मात् व्यापकसंनिकर्षाश्रयत्वं असतो व्यावर्तमानं व्याप्यमपरोक्षप्रतीतिविषयत्वं व्यावर्तयति। अपि चेष्टतावच्छेदकपुरोवर्तिवैशिष्ट्यावगाहिज्ञानस्य प्रवर्तकतया सद्रजतरजतत्वयोर्भाने तस्येष्टतावच्छेदकत्वाभावेन तज्ज्ञानात्प्रवृत्त्यनुपपत्तिः। तस्मात्तत्रानिर्वचनीयरजतोत्पत्तिरेव स्वीकर्तव्येति। अत्रोच्यते। रजतस्योत्पत्त्यंगीकारेऽप्येतद्दोषतादवस्थ्यात्। तथाहि तत्र रजतस्य चाक्षुषत्वमंगीक्रियते न वा। आद्ये। तत्रैव विषयतासंबंधेन वा चाक्षुषप्रत्यक्षाधिकरणे इंद्रियसंनिकर्षाभावात् त्वदुक्तनियमस्य व्यभिचारापत्तिः। नच रजतोत्पत्तिद्वितीयक्षणे इंद्रियसंयोगात्तदुत्तरक्षणे रजतचाक्षुषं तस्मिन्नेव क्षणे रजतं पश्यामीत्यनुव्यवसायोऽपि मन्मते साक्षिण एव ज्ञानग्राहकतया तस्य पूर्वमेव सत्वेन चाक्षुषोत्पत्तिकाल एव तत्संबंधेन तादृशाकारत्वसंभवात्। एतेन रजतसन्निकर्षेण तत्प्रत्यक्षोपगमे रजततत्सन्निकर्षतत्प्रत्यक्षतदनुव्यवसायानां क्रमिकत्वप्राप्त्या रजतस्मरणादितृतीयक्षणे तादृशानुव्यवसायानुभवविरोधोपि परास्तः। तत्स्मरणक्षण एव रजतोत्पत्तेस्तद्द्वितीयक्षणे तत्संयोगस्य तृतीयक्षण एव रजतव्यवसायकाल एवोक्तरीत्याऽनुव्यवसायस्य मयाऽपि स्वीकृतत्वात्। त्वन्मते ऽपि विशिष्टवैशिष्ट्यगोचरजन्यप्रत्यक्षस्य विशेषणतावच्छेदकप्रकारकनिर्णयजन्यत्वेनानुव्यवसायस्य व्यवसायरूपविषयजन्यत्वेन च तृतीयक्षण एवानुव्यवसायस्यावश्यकतया मन्मत इव त्वन्मतेऽपि व्यवसायकाल एवानुव्यवसायं स्वीकृत्य क्षणैकविलंबप्रयुक्तानुभवविरोधस्य वक्तुमशक्यत्वादिति वाच्यं। प्रातिभासिकरजतस्य प्रथमादिक्षणे प्रत्यक्षविषयत्वमपहाय तृतीयक्षणे इव चाक्षुषांगीकारे प्रातिभासिकत्वस्यैवानुपपत्तेः। स्वकालस्वव्यापकत्वस्वोपादानाज्ञानाश्रयपुरुषप्रत्यक्षकत्वरूपप्रतिभासमात्रशरीरवत एव प्रातिभासिकत्वात्। अन्यथा सत्यरजतस्याऽपि प्रातिभासिकत्वापत्तेः। न चाविद्यातिरिक्तदोषप्रयुक्तभानत्वं पल्लवाविद्याकार्यत्वं वा प्रातिभासिकलक्षणमस्तु तच्च तृतीयक्षण एव तत्प्रत्यक्षांगीकारेऽप्यविरुद्धमिति वाच्यं। तृतीयक्षण एव इंद्रियसन्निकर्षजन्यत्वे घटादाविवांतःकरणवृत्तित्वस्यैव प्राप्त्या भ्रमत्वविद्यातत्प्रयुक्तस्यातिरिक्तदोषजन्यत्वस्यैवासिद्ध्यापत्तेः। अविद्यावृत्तित्वासिद्ध्याऽपसिद्धांतापत्तिश्च। तस्योक्तरीत्या भ्रमत्वासिद्धौ तद्विषयस्य पल्लवाज्ञानकार्यत्वस्याप्यसिद्ध्या तल्लक्षणस्याप्यसंभवाच्च। नच बाधितत्वात्तत्प्रतीतेर्भ्रमत्वासिद्धिरिति वाच्यं। पूर्वक्षणद्वय इव बाधोत्तरमपि स्थितस्यैवाप्रतीतिसंभवेन तदुच्छेदकत्वरूपबाधकत्वस्यैवासिद्धेः। उक्तरीत्या प्रतिभासमात्रशरीरत्वे प्रतीत्युच्छेदस्यैव तदुच्छेदरूपतया तन्निर्वाहकस्य बाधकत्वासिद्धेश्च। तदभावावगाहितामात्रेण बाधकत्वे घटप्रतीत्युत्तरकाले जायमानायाः दोषाद्यधीनघटाभावप्रतीतेर्बाधकत्वापत्तेश्च। नच सा नाप्रमेति वाच्यं। तदभावावगाहित्वमात्रस्य बाधकरूपत्वे भावाभावप्रतीत्योः परस्परबाधकत्वसंभवेनाबाधितार्थावगाहित्वतदभावरूपप्रमात्वाप्रमात्वरूपव्यवस्थायाः एवासिद्ध्यापत्तेः। प्रातिभासिकस्याज्ञायमानतया क्षणद्वयावस्थानकल्पने मानाभावाच्च। तन्मूलकाप्रामाणिकपरंपराकल्पनायोगाच्च। न चापरोक्षप्रतीतिनिष्ठविषयितानिरूपकत्वस्य संनिकर्षाश्रयत्वव्याप्यत्वानुरोधेनैतत्सर्वं कल्प्यत इति वाच्यं। उक्तरीत्या व्याप्यकोटाव-

बाधितत्वस्य वा विषयितायां भ्रमत्वाघटकत्वस्य वा निवेशेनैव सामंजस्ये उक्ताप्रामाणिककल्पनायाः असंगतत्वात्। न चोक्ततर्कग्रहसचिवं व्याप्तिग्राहकप्रमाणं सामान्यत एव व्याप्तिं गृण्हातीति वाच्यं। उक्तप्रतीतिविषयरजत एव व्यभिचारग्रहेण व्याप्तिग्राहकप्रमाणस्यानवतारात्। उक्तप्रतीतिविषयत्वनिर्वाहकसंनिकर्षनिर्वाहाय क्षणद्वयस्थितिकल्पने अन्योन्याश्रयः स्यात्। अप्रामाणिकबहुकल्पनातो भ्रमकारणत्वेन क्लृप्तदोषस्य भ्रमानिष्ठताद्दशविषयिताप्रयोजकतया तन्निरूपकत्वे प्रयोजकत्वौचित्यात्। नच तदधिकरणासंबद्धतया तद्याधिकरणं कथं प्रयोजकमिति वाच्यं। देशस्यासत्वेन तद्वृत्तित्वाभावेऽपि कालांतर्भावेण सामानाधिकरण्येन दोषाणां ताद्दशनिरूपकत्वं प्रति प्रयोजकत्वोपपत्तेः। अन्यथा वन्ह्यार्द्रेंधनयोरुभयोर्धूमप्रयोजकत्वे गौरवं। वन्हिमात्रस्य धूमसामग्रीत्वकल्पनालाघवमित्येवंरूपतर्कसाचिवं वन्हिसहचारग्रहादिकं सामान्यत एवार्द्रेंधनप्रभवत्वादिकमनिवेश्य वन्हौ धूमव्याप्तिग्राहकं स्यात्तदनुरोधेनायोगोलकादावतींद्रियधूमविशेषसिध्दिप्रसंगः। अथ रजतस्य प्रथमादिक्षणे साक्षिभास्यत्वमेव स्वीक्रियते। तृतीयादिक्षणेषु चाक्षुषमिति न प्रतिभासमात्रशरीरत्वानुपपत्तिः न वा चाक्षुषत्वानुपपत्तिरिति चेन्न। प्रथमतस्ताद्दशा विद्यावृत्तेः स्वीकारे इदमाकारवृत्त्युपहितचैतन्यतादात्म्यापन्नाविद्यावृत्त्युपहितचैतन्यमात्रेण ताद्दशवृत्तिद्वयप्रतिफलितचैतन्यैक्येन वा रजतप्रतिभासेन तद्गोचरप्रवृत्त्यादिकार्योपपत्तौ पुनस्तच्चाक्षुषस्वीकारे मानाभावात्। नच रजतं पश्यामीत्यनुभवबलात् चाक्षुषमंगीक्रियत इति वाच्यं।तर्ह्यतदतिरिक्तस्य वृत्तिविषयकानुव्यवसायरूपानुभवस्य अभावेन तत्कल्पकमानांतराभावेन तदसिद्धिप्रसक्त्या पूर्वोक्तप्रातिभासिकत्वानुपपत्तिरूपदोषस्य दुर्वारत्वात्।त्वन्मते एवोक्तरीत्या चाक्षुषेदमाकारवृत्त्युपहितचैतन्ये तादात्म्येनारोपमात्रेण ताद्दशानुभवोपपत्तेश्च। विनश्यदवस्थापन्नेदंसंनिकर्षेण रजतभ्रमस्थलेऽपि रजतं पश्यामीत्यनुभवेन तत्रोत्पन्नरजतस्य तृतीयक्षणादौ चाक्षुषस्योपपादनायोगेन अविद्यावृत्तेरेव ताद्दशानुभवगोचरत्वस्यावश्यकत्वाच्च। तत्रापि चक्षुःसंनिकर्षस्य क्षणत्रयावस्थानकल्पने मानाभावात्। नच स्वप्ने अंधतामापन्नस्य स्वाप्नरजतादिगोचरश्रवणादिसद्भावेऽपि रजतं पश्यामीत्यनुभवाभावात्। प्रातिभासिकेऽपि चाक्षुषवृत्तेरेव पश्यामीत्यनुभवनिर्वाहकत्वमावश्यकं। अन्यथेतरपदार्थानामिव श्रूयमाणरजतस्यापि मायोपहितचैतन्ये मनोवच्छिन्न चैतन्ये वा कल्पितत्वेन स्वाप्नांधत्वाभावदशायां रजतं पश्यामीत्यनुभवस्येव तद्दशायामपि तदापत्तेरिति वाच्यं। तत्रांधतादशायां रजतविषयकज्ञानस्यैव तत्रारोपितत्वसंभवेन वस्तुतस्तत्सत्वमभ्युपगम्य तच्चाक्षुषाभावोपपादने बीजाभावात्। अनावृत्तचित्संबंधस्यैवापरोक्षरूपतयाऽऽवरणभंगविषयोपरागद्वारा तन्निर्वाहायैव बहिष्ठे वृत्तेरभ्युपगततया प्रातिभासिकरजते आवरणाभावादेः स्वतःसिध्दतया तत्र वृत्त्यभ्युपगमस्य वैय्यर्थ्याच्च। चक्षुःसंप्रोयगजत्वे रजतचाक्षुषस्य प्रमात्वापात्तिः। अंतःकरणवृत्तित्वस्य प्रमात्वव्याप्यत्वस्य त्वत्सिध्दांतत्वात्। नहि साप्यविद्यावृत्तिश्चक्षुःसंयोगस्य तत्र हेतुत्वे मानाभावात्। पूर्वाविद्यावृत्तावेव व्यभिचाराद्गौरवाद्वैय्यर्थ्याच्च। अपिच प्रथमक्षणे रजते अविद्यावृत्तिरूपस्यैव साक्षात्कारस्य विषयतासंबंधेन सत्वेपि इंद्रियसंप्रयोगाभावाद्यभिचारः। उत्तरक्षणे तत्रेंद्रियसंयोगस्य त्वदभ्युपगतत्वेऽपि पूर्वक्षणे अभावात्। भवदीयप्रयोज्यप्रयोजकभावरूपानुकूलतर्कानुगृहीतव्याप्तेस्ताद्दशविषयतापूर्वकालावच्छिन्नेंद्रियसंयोगघटितत्वात्। नचाविद्यावृत्तिर्न साक्षात्कार इति वक्तुं शक्यते। लिंगादिरूपकारणांतराजन्यत्वेन ज्ञानस्यैवाभावापातात्। नहि भ्रमः कृत्यादिवन्न ज्ञानं तथात्वे रजतं जानामीत्यनुभवानुपपत्तेः।

भ्रमरूपसाक्षात्कारातिरिक्ते साक्षात्कारे इंद्रियसंयोगस्य कारणत्वमभ्युपगम्य विषयतासंबंधेन तादृशसाक्षात्कारं प्रतींद्रियसंप्रयोगस्य व्यापकत्वाभ्युपगमे कथमसद्रजतभाने नैय्यायिकादिरीत्या देशांतरस्थरजतभाने वाऽनुपपत्तिः। तत्र विषयतया भ्रमान्यसाक्षात्काररूपव्याप्यस्यैवाभावात्। एवं चाक्षुषं प्रति चक्षुःसंयोगस्य कारणत्वं एवमिंद्रियांतरस्थले ऽपि परिकल्प्याविद्यावृत्तौ चाक्षुषत्वाद्यभावे ऽपि साक्षात्कारत्वमभ्युपगम्य चाक्षुषं प्रति चक्षुःसंप्रयोगस्य व्यापकत्वकल्पनेऽपि नास्माकं काचित्क्षतिः। नियमशरीरनिविष्टचाक्षुषत्वस्य चक्षुस्संयोगाव्यवहितोत्तरत्वरूपत्वऽविद्यावृत्तावपीदं चक्षुःसंयोगाव्यवहितोत्तरत्वसत्वाद्व्यभिचारः। जातिरूपत्वे मन्मते चाक्षुषत्वादिजातेरेवानंगीकारादंगीकारेऽपि भ्रमे तदनभ्युपगमेन त्वदुक्तनियमव्यभिचारस्य परिहर्तुं शक्यत्वेनऽसद्रजतभाने बाधकाभावात्। ननु मम चाक्षुषदंवृत्त्यवछिन्नचितिरजतस्य तादात्म्येनाध्यस्तत्वात्तस्य तादृशचिद्रूपचाक्षुषविषयत्वादेव पश्यामीत्यनुभवोपपत्तिः। तव तु उक्तज्ञानस्य चाक्षुषत्वाभावे कथं रजतं पश्यामीत्यनुभवः उपपद्यत इति चेत् तावतापि तादृशचाक्षुषविषयरजते इंद्रियसंप्रयोगाभावेन व्यभिचारपरिहाराय तत्र चाक्षुषत्वानंगीकारस्यैव युक्तत्वात्। दृशिप्रयोगस्य शब्दजन्यापरोक्षज्ञानेऽपि 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' 'तमसः पारं दर्शयामास योऽस्माकमविद्यायाः परंपारं दर्शयति' इत्यादावंगीकृतत्वेन पश्यामीत्यादिव्यवहारस्याप्यपरोक्षज्ञानसामान्यविषयकत्वसंभवेन रजतचाक्षुषासाधकत्वात्। अन्यथा व्याप्यकोटौ भ्रमान्यत्वस्य निवेशे अंतःकरणवृत्तेरेव वा आकाराख्यविषयतासंबंधेन व्याप्यत्वस्यांगीकारे गौरवात्। मन्मते। तथैव निर्वाहस्योक्तत्वाच्च। अपि चाविद्यावृत्तेः संनिकर्षं विनोत्पत्तिवदंतःकरणवृत्तेरपि तथैवोत्पत्तिसंभवेनोक्तनियमस्याप्रयोजकत्वं। एतेन रजतादेः चाक्षुषं नांगीक्रियत इति प्राग्विकल्पितद्वितीयपक्षांगीकारोऽपि निरस्तः। अविद्यावृतिवदंतःकरणवृत्तेरपि संनिकर्षं विनैवोपपादनस्य संभवेन रजतविषयकत्वावच्छेदेन चाक्षुषत्वाभावेऽपीदमाकारचाक्षुषवृत्तिविषयत्वादेव रजतं पश्यामीति व्यवहारानुभवयोरुपपत्तेः। रजतविषयकज्ञानस्य चाक्षुषत्वांगीकारे बाधकाभावात्। रजतविषयकत्वावच्छेदेन चाक्षुषत्वावगाहित्वस्य रजतं पश्यामीत्यनुभवे ममाप्यसिद्धेः। इदं विषयकचाक्षुषे रजतनिरूपितोल्लेखितावगाहित्वस्यैवांगीकृतत्वात्। किं चासतोऽपरोक्षविषयत्वं नास्तीत्यत्र कीदृशमसत्वं निविष्टं। निरुपाख्यत्वादीनां तदप्रतीतिशिरध्युत्तरकालीनानां आपरोक्ष्याभावसाधनायोपन्यासायोगात् त्रैकालिकनिषेधप्रतियोगित्वस्य तथात्वे तु शुक्तिरजते तथात्वं त्वयाऽप्यंगीकृतमिति कथं तस्यापरोक्षप्रतीतिविषयत्वांगीकारः। नच चिति तादात्म्येन तदुत्पत्तेर्मयांगीकृतत्वात्तत्संबंधेन मन्मते तस्यापरोक्ष्यं। उत्पत्तिरहितत्वे सति तादृशनिषेधप्रतियोगित्वस्य त्वयांगीकारात्। ज्ञानेन सह विषयविषयिभावनिर्वाहकसंनिकर्षायोगात् तन्न घटते। व्याप्यमपि तादृशप्रतियोगित्वे सत्युत्पत्तिराहित्यरूपं सत्तादात्म्यशून्यत्वरूपमेव वाऽसत्वमिति न कोपि दोष इति वाच्यं। त्रैकालिकनिषेधप्रतियोगिनःकालसंबंधरूपोत्पत्तिस्वीकारस्य उक्तप्रतियोगित्वरूपबाध्यत्ववतस्तच्छून्यरूपसत्तादात्म्यस्य च व्याहतत्वात् व्याहतोत्पत्तिस्वीकारापेक्षया साक्षात्करणसंन्निकर्षस्यैवांगीकारेण ज्ञानविषयत्वोपपादनसंभवेनांतर्गडूत्पत्तिस्वीकारस्य प्रयोजनाभावात्। दोषाणां रजतोत्पत्तौ वा सद्रजतेन सहैवेंद्रिये संनिकर्षोत्पत्तौ वा हेतुत्वमित्यत्र विनिगमकस्य कालत्रयनिषेधप्रतियोगिनः कालसंसर्गांगीकारे व्याहतिरूपस्य सत्वात्। नच चित एव ज्ञानत्वेन तद्विषयत्वं तादात्म्यरूपमेवेति ज्ञानविषयत्वांगीकारे चिति तादात्म्येन रजतोत्पत्तिरवर्जनीयेति वाच्यं।

आकाराख्यविषयत्वानां वृत्तिनिरूपितानां तवाप्यावश्यकत्वेन चित्तादात्म्यस्य विषयतारूपत्वासिद्धेरग्रे निराकरिष्यमाणत्वाच्च। शुक्तिरजतादेरनिर्वचनीयत्वरूपतृतीयप्रकारासिद्धेः प्राङ्नेहनानास्ति किंचनेत्यादीनां व्याहतिपरिहारोपायाभावेन तेषां स्वार्थानिर्णायकत्वेन गहननिविष्टतया अद्वैतसिद्धेरप्यभावेन स्वार्थानुमाने प्रवृत्तस्य त्वत्प्रतिक्रियामवलंब्य व्याहत्युद्धारे अन्योन्याश्रयस्यासकृदावेदितत्वाच्च। ननु दोषाणां भ्रमप्रयोजकत्वं उभयसिद्धं। तत्र रजतप्रकारतानिरूपितेदंविषयताशालिचाक्षुषत्वस्य तत्कार्यतावच्छेदकत्वापेक्षया रजतत्वमेव कार्यतावच्छेदकमस्तु लाघवात्। कार्यतावच्छेदकस्तु तादात्म्यादिसंबंधोऽस्तु। यथायथं विषयात्मकरणादिनिष्ठदोषाणां कारणत्वानुरोधेनेति रजतोत्पत्तिसिद्धिरिति चेन्न। संदिग्धस्थल एव लाघवस्यावकाशो नतु विषयबाधानिश्चयस्थले तस्यानुमानरूपतया बाधितार्थाननुमापकत्वात्। इत्थं च बाधप्रमासिद्धत्रैकालिकनिषेधप्रतियोगित्वस्य व्याहतितर्कानुग्रहेणोत्पत्त्यभावव्याप्यत्वेन निश्चितस्य प्रबलबाधकस्य रजते गृहीतत्वात्कथं लाघवेन तत्सिद्धिः। बाधेन तदविषयीकरणे भास्करसिद्धोत्पत्तिमेव स्वीकृत्य तस्य तत्कालोत्पन्नव्यजनवातादिवत्सत्त्वस्यैव स्वीकर्तुं शक्यत्वे मिथ्यात्वस्यैवासिद्धिप्रसंगात्। अध्यक्षासिद्धस्य रजतस्योत्पत्तिमत्वे विनाशित्वे च घटादिवत्तादृशरजतज्ञानवच्चोत्पत्तिनाशयोः प्रतीतिप्रसंग इति तर्कपराहतत्वेन च लाघवमात्रेण न रजतोत्पत्तिसिद्धिः। लाघवमात्रेणार्थसिद्धौ लाघवात्साध्यसामानाधिकरण्यज्ञानत्वादिना अनुमितिहेतुत्वं स्वीकृत्य व्यभिचारग्रहेप्यनुमितेरेष्टव्यतापातात्। त्रैकालिकनिषेधप्रतियोगिनः उत्पत्त्यंगीकारतुल्यन्यायत्वात्। एवं साध्याभाववदवृत्तित्वरूपव्याप्तिज्ञानकारणत्वापेक्षया व्यापकताज्ञानस्य कारणत्वे अभावो न हेतुसमानाधिकरण इत्यादिभिन्नविषयकबहुप्रत्यक्षेषु अनुमितिसामग्रीत्वेन प्रतिबंधकत्वाकल्पनाल्लाघवमिति युक्त्या तत्कारणतासिद्धिवत्पक्षांशे भासमानधूमे घटकालीनत्वावगाहिपरामर्शस्य कारणत्वे धूमो न घटकालीन इत्यादिभिन्नविषयकप्रत्यक्षेषु अनुमितिसामग्रीत्वेन प्रतिबंधकत्वाकल्पनप्रयुक्तलाघवेन तस्यापि कारणत्वापातात्। निश्चितव्यभिचारकत्वाल्लाघवं तत्राकिंचित्करं चेत्प्रकृतेऽपि व्याहतिरूपबाधकसाम्यात्कथं लाघवेन रजतत्वमवच्छेदकं स्यात्। नच रजते उत्पत्तिप्रत्ययः किं रजतप्रतीतिसमये आपाद्यते उत बाधसमये। नाद्यः। प्रतीतिसमये स्थिरशुक्तितादात्म्येन ग्रहस्यैव विरोधित्वात्। नाशप्रत्ययस्तु तदा तस्यानष्टत्वादेव नापादयितुं शक्यः। न द्वितीयः। बाधसमये उत्पत्तेरंतरितत्वादेव न तद्ग्रहः। नाशग्रहं प्रति तु तत्र तदत्यंताभावग्रहस्यैव विरोधित्वात् न शुक्तौ रजतनाशग्रह इति वाच्यं। एकस्मिन्नेवेदंपदार्थे नाशात्यंताभावयोः स्वीकारे अत्यंताभावनाशाविरोधप्राप्त्या तद्ग्रहस्य कपाले घटात्यंताभावग्रहस्य घटनाशग्रहं प्रतीवाप्रतिबंधकत्वात् प्रकृत एव प्रतिबंधकत्वकल्पनस्य त्वप्रामाणिकत्वात्। ननु रजतात्यंताभावग्रहकालीनस्तन्नाशग्राहकसामाग्र्यभाव एतद्ग्रहाभावव्याप्यत्वेन तत्प्रतिबंधक इत्युच्यते। निषेधप्रतियोगित्वधीः प्रतिबंधिकेत्युक्तेरत्रैव तात्पर्यमिति चेन्न।तद्ग्राहकसामग्र्यभावस्यैव तद्ग्रहाभावव्याप्यतया तत्रात्यंताभावग्रहकालीनत्वांशस्य वैयर्थ्येन तत्तात्पर्येणापि तादृशोक्तेरसंगतत्वात्। ननु चक्षुःसंयुक्तविशेषणतादिकाले तद्ग्राहकसामग्र्यभावस्योपपादयितुं अशक्यत्वात् तदत्यंताभावग्रहसामग्री प्रकृते दोषविधया स्वाभावघटितसामग्रीविघटिकेत्येतल्लाभाय तदुक्तिरिति चेन्न। कपालस्थ घटनाशादिग्रहे अदृष्टस्यात्रैव दोषविधया प्रतिबंधकत्वस्य कल्पनायोगात्। एतेनोत्पन्नत्वनष्टत्वे प्रतीतिकाले मिथ्यात्ववदावृत्ते अनुमानादिरूपप्रमाणवृत्त्या ज्ञायेते एवेत्यपि प्रत्युक्तं। तत्सिद्ध्युत्तर-

कालीनत्वादेतत्कल्पनस्य घटादावदृष्टस्यात्रैव कल्पनापत्तेश्च। प्रमाणवृत्त्या तदभावावपि आवृत्तौ ज्ञायेत इत्यपि वक्तुं शक्यत्वाच्च। उत्पन्नत्वादिग्राहकाणामेव प्रामाण्यमित्यस्याप्यसिद्धेः। यदपि स्थिरीभूतशुक्तितादात्म्यग्रहस्तदुत्पत्तिग्रहविरोधीति तदपि न स्थिरीभूतमृत्तादात्म्यग्रहेण घटादेः स्थिरांतःकरणाविद्यातादात्म्यादिग्रहेण ज्ञानादेश्चोत्पत्तिग्रहप्रतिबंधापत्तेः। अत्रैव तत्कल्पनेचादृष्टस्यैव कल्पनापत्तिरनंतानां तत्क्षणतत्कालीनवायुसंयोगादीनां प्रतिबंधकतामादाय विनिगमनाविरहान्महागौरवं। अपिच दोषाणां भवन्मते रजतत्वावच्छिन्नं तद्ज्ञानत्वावच्छिन्नं प्रतिच कारणत्वकल्पनाधिक्याद्गौरवं। ननु मन्मते दोषाणां ज्ञानं प्रति कारणत्वं न कल्प्यत एव। नच शुक्तिविशेष्यकरजतज्ञानत्वावच्छिन्नस्याकस्मिकत्वापत्तिः। बाधाभावकार्यतावच्छेदकतयैव तदवच्छिन्नस्योत्पत्तिसंभवात्। नच सर्वदा तदुत्पत्त्यापत्तिः। इंद्रियसंनिकर्षरजतसंस्कारादेस्तत्सहकारित्वाभ्युपगमात्। नच रजतप्रागभावस्य रजतं प्रति कारणतायाः क्लृप्तत्वात्तेनैव रजतोत्पत्तिरस्तुदोषस्य तु रजतज्ञानत्वमेव कार्यतावच्छेदकं स्यात्। तादृशरजतोत्पत्तिं प्रति तद्ज्ञानोत्पादकसामग्र्याः व्यापकत्वाभ्युपगमेन तत्सहितरजतसामग्र्येव रजतजनिकातः सर्वदा न रजतोत्पत्त्यापत्तिरित्यपि वक्तुं शक्यत्वेन विनिगमकाभावात्। दोषकार्यतावच्छेदकत्वं रजतज्ञानत्वस्य दुर्वारमिति वाच्यं। रजतज्ञानत्वापेक्षया रजतत्वस्य कार्यतावच्छेदकत्वे लाघवस्यैवात्रापि नियामकत्वात् इति चेन्न। विषयानुपाधिकस्य रजतादिप्रवृत्तिप्रयोजकधर्मस्य ज्ञान एवाकरेऽव्यवस्थापिततया ऽत्रापि चाग्रेऽव्यवस्थापनीयतया तादृशवैजात्यस्यैव कार्यतावच्छेदकत्वांगीकारे अत्रापि गौरवानवकाशात्। यत्र शुक्लपटादि, घटसजातीयाकारतया संपादयित्वा व्यवस्थापितं तत्र रक्तपित्तादिदोषवशात् रक्तघटभ्रमोत्पत्तिस्तत्र रक्तघटत्वस्य कार्यतावच्छेदकत्वे गौरवात्। तादृशस्थले ज्ञानवृत्तिवैजात्यस्यैव कार्यतावच्छेदकत्वस्य युक्तत्वेन तत्साजातीयतयाऽन्यत्रापि तथैवाभ्युपगमस्य युक्तत्वाच्च। पूर्वं वैजात्यस्यासिद्धावपि दोषकार्यतावच्छेदकतयैव लाघवात्ज्ञाने वैजात्यं सिध्यतु। ज्ञानोत्पत्तिविनाशादेरुभयसिद्धत्वेन तत्र धर्मकल्पने लाघवाद्रजतत्वस्य कार्यतावच्छेदकत्वे तदाश्रयीभूतरजतोत्पत्तितदुपादानतत्प्रागभावाद्यनंतकल्पनाप्रयुक्तगौरवात्। धर्मिकल्पनातो धर्मकल्पनायाः ज्यायस्त्वात्। नच लाघवाद्रजतत्वस्य पूर्वसिद्धस्यैव जन्यतावच्छेदकत्वसिद्धौ तदनुरोधीदंगौरवं फलमुखत्वान्न दोषावहं। असिद्धधर्मस्य तज्जन्यतावच्छेदकत्वस्य च कल्पनापेक्षया सिद्धधर्मस्यैव जन्यतावच्छेदकत्व कल्पनस्य त्वन्न्यायेनैव युक्तत्वमिति वाच्यं। रजतत्वस्य कार्यतावच्छेदकत्वग्रहवेलायामेवोक्तगौरवप्रतिसंधानस्य प्रेक्षावतामवर्जनीयतया तस्य फलमुखत्वाभावात्। उक्तगौरवमनादृत्य जातेः कार्यतावच्छेदकत्वमात्रे लाघवमात्रेण उक्तकार्यकारणभावांगीकारे सुवर्णत्वघटत्वादीनामपि दोषकार्यतावच्छेदकत्वानिवारणात्। रजतोत्पत्तिस्थले अनंततत्तद्रूपावच्छिन्नोत्पत्तिं स्वीकृत्य तत्र सुवर्णादेस्तत्वादेर्वाऽऽवृतत्वं कल्पनीयं स्यात्। नचैवं सर्वत्राप्येवं वक्तुं शक्यत्वेन फलमुखगौरवस्य अदोषत्वोच्छेदः स्यादिति वाच्यं। यत्रानन्यथासिद्धेन स्वव्याहतिप्रबलप्रमाणांतरबाधशून्येन योऽर्थः सिध्यति तस्य च यावता विना नोपपत्तिस्तदुपयुक्तप्रमेयांगीकारे गौरवस्यादोषत्वं। तत्र पूर्वप्रमाणफलमेव मुखं यत्कल्पनायामर्थापत्तिप्रमाणरूपं तादृशगौरवस्यैव फलमुखगौरवप्रामाणिकगौरवपदार्थत्वात्। गौरवरूप तर्कस्यादोषत्वंतु श्रुतदृष्टाद्यर्थापत्तिसिद्धार्थाभावमादाय विपर्ययापर्यवसायित्वेन यथा यागस्य स्वर्गसाधनत्वस्य निर्वाहायापूर्वकल्पने यथा समासप्राबल्यान्निषादस्थपतेर्यागाधिकारसिद्धौ

तन्मात्रोपयोगिविद्याकल्पने, लोके व्यापारद्वारा साक्षाद्वोभयथा कारणानां दृष्टत्वेन यागस्य क्षणिकत्वग्रहस्य कारणत्वग्रहाविरोधितया श्रुत्या कार्यकारणभावग्रहो निराबाध एव सामान्यतो जायत एवेति न तत्र पूर्वमपूर्वकल्पनाप्रयुक्तगौरवानुसंधानं। एवं निषादस्थ-पतेः न यागाधिकार इति प्रबलप्रमाणरूपबाधकविरहात्स्वव्याहत्यादिविरहाच्च वाक्य-स्वरसतस्तद्बोधे पूर्वं विद्याकल्पनादिप्रयुक्तगौरवाननुसंधानमतस्तदनंतरमेव तन्निर्वाहाय कल्प्यमानाविद्यागौरवान्न तद्बाधनायेष्टं उपजीव्यविरोधात्। एवं विशिष्टज्ञानाभावस्यानुमिति पूर्वमनिश्चितत्वेन संदिग्धत्वे बहुस्थलेषु विशिष्टज्ञानस्य जनकत्वे सिद्धे तस्य ज्ञानद्वय-साधारणरूपापेक्षया विशिष्टज्ञानत्वस्य लाघवानुसंधानं कारणतावच्छेदकत्वं व्यवस्थापयति। तन्निर्वाहाय क्वचित्संदिग्धस्थले अनुमितिनिरूपकार्येण विशिष्टज्ञानकल्पनं। तत्र प्रागभावा-द्यंगीकारगौरवंकार्यलिंगकप्रबलानुमानसिध्यार्थे विपर्ययापर्यवसायित्वान्न दूषणं। क्वचिद-नुमितौ विशिष्टज्ञानाभावस्यैव पूर्वं निश्चये वा तत्समकक्षापन्नरूपांतरविशिष्टज्ञानांतररूप प्रतिबंदेरुपस्थितौ वा तन्मात्रस्य तन्निश्चयो न भवत्येव। अन्यथाऽऽभाससमानयोगक्षेम त्वस्यानुमानदूषणत्वाभावापातात् अत एव तादृशानुभवपक्षमवलंब्य त्वया ज्ञानद्वयस्यापि कारणत्वं विहाय व्याप्त्युद्बुद्धसंस्कारसहितपक्षधर्मताज्ञानस्यानुमितिकारणत्वमंगीकृतं एवमन्यत्रापि द्रष्टव्यं। इत्थं च दोषाणां रजतकारणत्वग्राहकप्रमाणाभावादुक्तप्रतिबंदेरपरि-हाराच्च रजतोत्पत्तिसिध्धेरेवाभावात् न फलमुखत्वं गौरवस्येति तद्दोषतादुर्वारैव। नच ज्ञानानां वैलक्षण्यस्य विषयनिबंधनत्वाद्रजतज्ञानत्वसिध्ये रजतत्वस्य कार्यतावच्छेदकत्वं न सुवर्णादीनां बीजाभावादिति वाच्यं। लाघवमात्रेणेदानीं रजतत्वस्य कार्यतावच्छेदकत्व-व्यवस्थापननिर्भरेणैव रजतोत्पत्तिं व्यवस्थापयितुं परेण प्रारब्धतया तत्र ज्ञानेपि सुवर्णज्ञान त्वमावृतमिति वा सुवर्णत्वस्य तत्र सत्वेपि आवृतत्वादेव तदाकारज्ञानं न जातं किंतु रज-ताकारमेव जातमिति वक्तुं शक्यत्वेन सुवर्णत्वादिप्रतिबंदिदानस्य युक्तत्वात् उक्तनियमा-वष्टंभनतत्कल्पनं तु तादृशनियमनिरासेन निराशिष्यते। किंच मास्तु ज्ञाने वैजात्यं तथापि रजतत्वस्य कार्यतावच्छेदकत्वेऽपि ज्ञानवृत्तिधर्मस्याप्रमात्वस्य दोषकार्यतावच्छेदकत्वमवश्य-मभ्युपेयं। अन्यथा बाधाभावादेः ज्ञानसामान्यसामग्रीघटकतया दोषस्याप्रमात्वावच्छिन्न-सामग्रीकोटावनिवेशे अप्रमात्वस्य परतस्त्वानुपपत्त्याऽपसिध्धांतापत्तेः। नच रजतरूपविष-यजननद्वारा तज्जनकत्वात्तस्य परतस्त्वोपपत्तिरिति वाच्यं। रजततदविद्यावृत्त्योरेक-कालीनत्वेन कार्यकारणभावानापन्नतया तद्द्वारादोषकार्यत्वोक्तेरयोगात्। घटद्वारा दंडस्यापि घटप्रमाप्रयोजकतया प्रमात्वस्यापि परतस्त्वापत्तेश्च। नच शुक्तिरूपेदंविशेष्यकरजतज्ञानं तादृशबाधाभावकार्यं अप्रमारूपं भवतीति तस्य बाधाभावकार्यतयैव परतस्त्वोपपत्तिरिति वाच्यं। तादृशज्ञानत्वज्ञानमात्रेण तत्राप्रमाव्यवहारानुदयेन बाधितरजतावगाहित्वस्यैवाप्र-मात्वरूपतया तस्य दोषकार्यतावच्छेदकत्वस्यावश्यकत्वात्। तथा च रजतत्वस्यापि कार्यताव च्छेदकत्वं गौरवान्न युक्तमेव। नच दोषजन्यावगाहित्वमेवाप्रमायाः परतस्त्वमितिवाच्यं। उत्सर्गतः ज्ञानस्वभावभूतं प्रामाण्यं तिरस्कृत्याविद्यमानाप्रमात्वाद्याधायकत्वे हि तस्य दोषत्वं अप्रमात्वस्य तज्जन्यतावच्छेदकत्वेन तत्प्रयोज्यतया परतस्त्वं प्रामाण्यस्य तु किंचिज्जन्यतानवच्छेदकतया स्वतस्त्वमिति विशेषः संगच्छते। इदानीं त्वप्रमात्वस्यापि किंचिज्जन्यतानवच्छेदकत्वेन प्रामाण्याविशेषापत्त्या चाकचक्यादेरप्यप्रमा विषयजनकत्वेन प्रमाविषयीभूतघटादिजनकदंडादितो अविशेषापत्त्या च तत्परतस्त्वस्य तेषां दोषत्वस्य च सांकेतिकत्वापत्त्या अप्रामाण्यस्वतस्त्ववादिसांख्यमतप्रवेशोनाप-

सिद्धांतो दुर्वार एव नहि भट्टेन संकेतमात्रं क्रियते येन 'व्यवहारे भट्टनय' इति वदतस्तवापसिद्धांतोऽपि न स्यात् प्रमेयवैलक्षण्याभावे उक्तसंकेतमात्रेण प्रमाभ्रमयोरुक्तस्वतस्त्वपरतस्त्वादिगोचरत्वत्प्राचीनव्यवहारस्य निष्प्रयोजनकतया बालभाषितत्वापत्तेश्च। अपिच भ्रमस्य दोषकार्यत्वे अविद्यातिरिक्तदोषजन्यप्रतीतिकत्वरूपत्वदाचार्योक्तप्रातिभासिकलक्षणस्यासंभवापातः। ज्ञानरजतयोः समानकालिकत्वेन विषयाजन्यतया विषयद्वारा प्रयोज्यत्वस्याप्यभावेन जन्यपदस्य प्रयोज्यार्थकत्वेऽप्यसंभवानिस्तारात्। अपिच भ्रममात्रवृत्तितावदन्यतमत्वस्य अखंडभेदरूपस्य तावन्मात्रविषयकबुद्धिविषयतायाः समानाकारनानाज्ञाननिरूपितायाश्चैकाया अखंडायाः रजतत्वतुल्यतया कार्यतावच्छेदकत्वं संभवत्येव। नच तयोः स्वरूपतो भानाभावेन कार्यतावच्छेदककोटौ रजतत्वतुल्यतया ऽवच्छेदकत्वप्रतिबंधयोग इति वाच्यं। तयोरपि स्वरूपतो भाने बाधकाभावात् जात्यतिरिक्तस्य स्वरूपतो भानाभावनियमस्य मिथ्यात्वलक्षणे सर्वं प्रमेयं परमार्थमिति बुद्धेः ज्ञाननिवर्त्यत्वाभावरूपपारमार्थिकत्वस्यापि स्वरूपतः प्रतियोगितावच्छेदकत्वं वदता त्वयैव त्याजितत्वात्। किं चैकस्यैकेनैव दोषेण रजतभ्रमे भानाभावेन दोषत्वस्याप्यखंडधर्मस्याप्यभावेन चाकचक्यत्वादिनैव कारणत्वे वाच्ये तस्य रजतत्वावच्छिन्नं प्रति वा प्रातिभासिकरजतादौ तत्तत्पुरुषनिरूपितत्वस्वीकारेण तत्पुरुषनिरूपितरजतत्वावच्छिन्नं प्रति वा कारणत्वे दोषांतरजन्यरजते व्यभिचाराद्रजतत्वमात्रस्य जन्यतावच्छेदकत्वे रजतावयवजन्यरजतेऽपि व्यभिचारात्तत्तद्दोषविशिष्टत्वस्य कार्यतावच्छेदककोटावावश्यकत्वे तत्तद्दोषजन्यरंगवंगाद्यसंग्रहापत्त्या रजतत्वादिकमनिवेश्य तत्तद्दोषविशिष्टत्वमात्रस्य कार्यतावच्छेदकत्वसिद्धेरवर्जनीयतया तस्य ज्ञानमात्रवृत्तित्वं मयाभ्युपेयते। रजतज्ञानस्योत्पन्नत्वाद्यनुभवात्। रजते तदननुभवेन दोषकार्यत्वस्यासिद्ध्या कथं रजतत्वस्य दोषकार्यतावच्छेदकत्वानुरोधेन रजतोत्पत्तिसिद्धिः। यदपि रजतस्य दोषजन्यत्वे रजतावयवादिक्लृप्तरजतकारणानां कार्यतावच्छेदककोटौ तत्तदवयववैशिष्ट्यस्य निवेशाद्गौरवं आशंक्यानंतदोषाणां कार्यतावच्छेदककोटौ रजतादिप्रकारतानिरूपितसंसर्गतानिरूपितत्वविशेष्यतात्वयोः विशेष्यतानिरूपितत्वसंसर्गतात्वयोः संसर्गतानिरूपकत्वप्रकारतात्वयोश्च विशेष्यविशेषणभावे विनिगमनाविरहेणानंतकार्यकारणभावापत्त्या महागौरवं। ज्ञानकार्यत्वपक्षे रजतकार्यत्वपक्षे च कतिपयकार्यकारणभावतदवच्छेदकाद्याधिक्याद्गौरवं। एवं बाधाभावकार्यत्वमपि रजतत्वादिनैवेति ततोऽप्यनिर्वचनीयसिद्धिः। इदं विशेष्यतानिरूपितसंसर्गतानिरूपितस्वप्रकारताकचाक्षुषसमवायसंबंधेन वा तादृशचाक्षुषसंबंधेन वा रजतत्वविशिष्टस्यैव कार्यत्वे प्रथमे प्रकारतायां रजतत्वावच्छिन्नत्वानिवेशेन द्वितीये तस्य च समवायस्य चानिवेशेन ज्ञानकार्यत्वापेक्षया लाघवादित्याद्यभिहितं तदप्येतेनैव निरस्तं। दोषविशिष्टत्वेनैव तादृशज्ञानानां कार्यतया भवदुक्तकार्यकारणभावादेस्तत्राभावात् बाधाविशिष्टान्यत्वस्य बाधाभावकार्यतावच्छेदकत्वोररीकरणेऽतिलाघवेन. त्वदुक्तकार्यकारणभावासिद्ध्या रजतोत्पत्त्यसिद्धेः पूर्वोक्तघटसुवर्णादीनामप्युक्तसंबंधेन कार्यत्वमादाय विनिगमनाविरहस्य दुर्वारत्वाच्च। तत्र ज्ञाने सुवर्णविषयकत्वसत्त्वेऽपि तदाकारत्वमावृतमिति कल्पनागौरवादेस्त्वद्रीत्या फलमुखत्वेनादोषत्वात्। अपि च रजतज्ञानस्य बाधाभावकार्यत्वस्याप्यभावे तस्याकस्मिकत्वापत्तिः॥ नच तादृशसंबंधेन रजतोत्पादकसामग्रीबलात्तादृशचाक्षुषतोत्पत्तिस्तत्संबंधोत्पत्तिं विना तेन संबंधेन तदुत्पत्तेरसिद्धेरिति वाच्यं। समवा-

यस्य नित्यत्वेन संबंधोत्पत्तिं विना संबंधिरूपाद्युत्पत्तिदर्शनेन संबंध्युत्पत्तेः संबद्धोत्पत्त्य-व्याप्यत्वात्। प्रकृतसंबंधरूपचाक्षुषस्य संबंधविशेषणाकार्यत्वे आत्मनि तदीयसंबंधविशेषनियमासिद्धिप्रसंगात्। अत्र कथंचित्ज्ञानत्वावच्छिन्नं प्रत्यात्मनः कार्यकारणभावबलेन समवायनियमोपपादनेऽपि रजतप्रतियोगिकशुक्त्यनुयोगिकतादात्म्यं प्रति दोषस्य कारणत्वाकल्पने तत्संबंधनियमासिद्धिः। तस्यावृत्तित्वं वा स्यात्। आद्ये घटादेरपि रजततादात्म्यवत्वस्यापत्त्या घटादिष्वपि कार्यतावच्छेदकसंबंधेन कार्याधिकरणेषु तेन संबंधेन कारणाभावाद्व्यभिचारः। तस्यावृत्तित्वे संबंधिनोप्यवृत्तित्वं स्यात्। संबंधः अवृत्तिस्तेन संबंधेन किंचिद्वृत्तिरित्यस्यासंगतत्वात्। तादात्म्यस्य जन्यस्य कारणं विनाऽनुपपन्नत्वेन दोषेतरस्य कारणत्वाप्रसक्तेस्तादात्म्यं प्रति दोषस्य कारणत्वे तु इदमनुयोगिकत्वरजतप्रतियोगिकत्वतादात्म्यत्वादीनां मिथोविशेष्यविशेषणभावे विनिगमकाभावेन बहुकारणत्वापत्त्या रजतोत्पत्तिपक्षे रजतकारणत्वतादृशबहुतरतादात्म्यस्थलीयकार्यकारणभावकल्पनाधिक्याद्गौरवं। ज्ञानसंबंधनियमाय तत्र गतिकल्पनस्योभयमतेऽपि साम्यात्। एतेन रजतावयवादीनां रजतं प्रति कारणत्वे व्यभिचारवारणाय रजतादिदोषकार्यता अवच्छेदकतासंबंधेन विशेषणतासंबंधेन वा वाच्या। ध्वंसादेस्तु समवायेन संयोगादिना वाच्या। बाधानवतारे तत्र तेन संबंधेन तद्विशिष्टबुद्धिरिष्टैव तवापि तद्विशिष्टबुद्धेरिष्टत्वादित्यपि परास्तं। तत्कारणत्वतत्संबंधकारणत्वयोरुभयोः कल्पनागौरवस्य दुर्वारत्वात्। तादात्म्येन रजतस्यानुत्पत्तौ तादात्म्येन रजतप्रकारकत्वानुपपत्तिस्तदुभयतादात्म्यस्यालीकतापत्त्या अपरोक्षप्रतीतिविषयत्वानुपपत्तेः। अन्यदीयतादात्म्येन प्रकारत्वे व्यधिकरणप्रकारकत्वेनान्यथाख्यातेरेव प्राप्त्या व्यर्थः प्रयासः। न ह्यन्यथाख्यातिमतेऽपि सर्वसंबंधैः प्रकारस्य विशेष्यतावैय्यधिकरण्यमस्ति कालिकादिना तत्सामानाधिकरण्यात्। व्यधिकरणसंबंधेन भाने सर्वेषां ज्ञानानां विशिष्टविषयकत्वनियमभंगेन भ्रमस्य द्व्याकारतासिद्धये परस्पराध्यासस्वीकारानुपपत्तिश्च। न चायं न तादात्म्येन रजतावगाहीति वाच्यं। नेदं रजतमिति बाधधीप्रतिबध्यत्वतादृशशाब्दादिप्रतिबंधकत्वयोरनुपपत्तेः अस्या अपि प्रतिबंधकत्वकल्पनमप्रामाणिकं गौरवपराहतं। एवं ध्वंसादिस्थलेऽप्यूह्यं। नच अन्यसंबंधघटितबाधानवतारदशायां तवापि तादृशप्रतीतेर्दुर्वारतेति वाच्यं। बाधाभावमात्रस्य सामग्रीत्वाभावेन तेन संबंधेन रजतादिप्रकारकज्ञानकार्याद्यभावेन तादृशज्ञानासिद्धौ तत्सामग्र्या अप्यकल्पनात्। नहि बाधाभावमात्रं सामग्री तथात्वे संयोगेन घटप्रत्यक्षकाले साक्षात्परंपरारूपतदितरसकलसंबंधघटितबाधग्रहानियमेन कस्यचित् व्यधिकरणसंबंधस्यावश्यंभावनापत्त्या शुद्धप्रमामात्रविलोपप्रसंगः। अन्यथाख्यातिवादिनो मते त्वन्मते दर्शितबाधकाभावेन तादृशापत्ताविष्टापत्तेःकर्तुं शक्यत्वाच्च। यद्यपि रजतोत्पत्तौ रजतावयवादिक्लृप्तकारणानां व्यभिचारवारणाय कार्यतावच्छेदके स्वस्ववैशिष्ट्यनिवेशादनंतघटपटादिस्थले गौरवं मन्मते। त्वन्मते तु ततोपि महागौरवं। तथाहि। गोत्वघटत्वादिप्रत्यक्षेषु सास्नाकंबुग्रीवाद्यवच्छिन्नेंद्रियसंयोगवत्समवायस्य ब्राह्मणत्वादिप्रत्यक्षे शुद्धमातापितृजत्वनिश्चयस्य शुक्तित्वादिप्रत्यक्षे नीलपृष्ठत्वादिनिश्चयस्य उत्पलनैल्यादिप्रत्यक्षे सौरभवत्संयुक्तसमवायस्येत्यादिबहुहेतुतायां भ्रमस्थले व्यभिचारवारणाय कार्यतावच्छेदकस्थले स्ववैशिष्ट्यं निवेश्यं। तथाच तत्कार्यतावच्छेदककोटिप्रविष्टचाक्षुषत्वघटत्वादिविषयकत्वैः सह विशेष्यविशेषणभावे विनिगमनाविरहेण अनंतकार्यकारणभावः। मन्मते तत्र भ्रमस्याविद्यावृत्तित्वेन तत्र चाक्षुषत्वानंगीकारेणैव व्यभिचाराप्रसक्तेस्तत्र कारण-

वैशिष्ट्यानिवेशेन गौरवानवकाशादिति तदप्यसारं। मन्मते चाक्षुषत्वस्य भ्रमेऽनंगीकारेऽपि क्षतिविरहस्योक्तत्वात्। त्वन्मतरीत्याऽप्युक्तलाघवानुसारेण भ्रमस्थले चाक्षुषान्यवृत्तिमात्रांगीकारेणोपपत्तौ रजतादिविषयोत्पत्तेरसिद्धेः। नैय्यायिकमतेऽपि विषयतात्ववदखंडेनैव लौकिकविषयतात्वेन भ्रमविषयताव्यावृत्तेन विषयत्वसंबंधेन प्रत्यक्षस्य कार्यत्वे व्यभिचारानवकाशेन कारणवैशिष्ट्यानिवेशात्। नच रजतत्वघटत्वादौ भ्रमीयविषयतायाः लौकिकत्वाभावे रजतत्वं साक्षात्करोमीति प्रत्ययानुपपत्तिः तन्निष्ठलौकिकविषयतायास्तत्रनियामकत्वादिति वाच्यं। दोषविशेषप्रयोज्यविषयताया अपि तत्र नियामकत्वांगीकारात्। कारणवैशिष्ट्यनिवेशे कार्यतावच्छेदककोटौ पुनर्विषयविशेषविषयकत्वचाक्षुषत्वादेरनिवेशेन गौरवानवकाशाच्च। भ्रमविषयेऽपि चाक्षुषस्य त्वदंगीकृतत्वेन तत्पक्षे तवाप्येतद्दोषस्य दुर्वारत्वाच्च। तदेतत्सर्वं पररीतिमनुरुध्योक्तं। वस्तुतः सिद्धांते कार्यताकारणतादिनिरूपितस्वरूपसंबंधरूपावच्छेदकत्वनिरासपूर्वकमनतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्यैवाग्रे व्यवस्थापनीयतयोक्तविशेष्यविशेषणभावापन्नपदार्थघटितसमनियतानां धर्माणां कार्ये विद्यमानानां तस्यापरिहार्यतया कस्य कल्पनाप्रयुक्तगौरवलाघवविचारावकाश इति तु तत्वं। यदपि पित्ताधिक्यन्यूनत्वाभ्यां शंखे पीतिमोत्कर्षापकर्षयोर्दर्शनात्तत्र पीतस्य-पित्तगतस्यैव भानांगीकारे पुरुषांतरस्यापि दर्शनप्रसंगेन तस्यातींद्रियत्वावधारणात् शंख एव पीतो जायत इत्यवश्यं वाच्यं। कार्यगतोत्कर्षापकर्षयोः कारणगतोत्कर्षापकर्षमूलत्वादिति तन्न। दोषातिशयतन्न्यूनत्वाभ्यां उत्कृष्टापकृष्टपीतरूपावगाहिप्रमासजातीयविषयताशालिभ्रमस्यैवांगीकारात्। त्वन्मत इव मन्मतेपि तत्तदपेक्षाबुद्धिजन्यद्वित्वपरत्वादिवत्तत्पुरुषीयपित्तगतपीतिम्नस्तत्पुरुषीयाध्यक्षयोग्यतांगीकाराद्वा सर्वसामंजस्ये पीतोत्पत्तेरप्रामाणिकत्वात्। यदपि रजतरंगादीनामेकत्र विभ्रमस्थले नानापदार्थोत्पत्तिस्तवाधिका तत्समसंख्याकज्ञानोत्पत्तिस्तूभयसिद्धेति स्वमते गौरवमाशंक्य अन्यथाख्यात्यसत्ख्यातिवादिमतेऽपि यत्रैकत्रैककाले बहूनां पुरुषाणां रजतभ्रमस्तत्र बहूनां ज्ञानानां कल्पनया गौरवं। * मन्मते तु तत्रैकस्या एव रजतव्यक्तेस्तत्पुरुषीयसाक्षितापन्नशुक्त्याद्यवच्छिन्नचिद्भास्यत्वोपपत्तेः। नच तत्तदंतःकरणावच्छेदेन चैतन्यगताविद्यापरिणामस्य रजतादेरैक्यानुपपत्तिरिति वाच्यं। एकस्या एवाविद्यायाः तत्तदंतःकरणावच्छेदेन संभवात्। नानाविद्याभिरप्येकशुक्त्यवच्छिन्नचिन्निष्ठाभिरेकरजतादिसंभवात्तत्परिणामस्याप्यैक्यसंभवात्। किंच प्रथमप्रवृत्तोपयुक्तयुक्तिभिर्भ्रमविषयोत्पत्त्यावश्यकत्वे व्यक्तिकल्पनारूपगौरवस्य चरमस्य फलमुखत्वेनादोषत्वं। अन्यथाऽनुमितौ विशिष्टज्ञानत्वेन हेतुताकल्पने ज्ञानद्वयोत्तरं विशिष्टज्ञानकल्पने परेषां गौरवं स्यात्। एतेन रजतादेरुत्पत्त्यनंतरं तस्य चाक्षुषाद्युत्पत्त्यभ्युपगमपक्षेऽविद्यावृत्तिकल्पनपक्षे चोभयोत्पत्तिकल्पने गौरवमित्यादिकं परास्तं। असदुपगतरजताद्युत्पत्तिक्षण इव तदुत्तरक्षणेऽपि चाक्षुषस्योपगमाच्च। सामग्रीसत्वे कार्योत्पत्तेर्दुर्निवारत्वादिति तदप्यकिंचित्करं। त्वदुक्तस्थले रजतैक्येऽपि तद्ज्ञानैक्यांगीकारे चैत्रमैत्रज्ञानयोरभेदावगाहिबुद्धेरापत्तेः। नहि तत्र ज्ञानैक्यमनुभूयते नच स्वीयज्ञाने चैत्रेण मैत्रीयत्वं नानुभूयते तस्यावृतत्वादिति वाच्यं। तत्काले चैत्रेणैकेन नेत्रे निमीलिते मैत्रादीनां दर्शनस्य तथैव सत्वेन चैत्रदर्शनस्यापि सत्वेनेदानीं रजतं पश्यन्नेवास्मीति चैत्रस्यानुभवापत्तेः। तेषु पुरुषेषु कस्यचिद्बाधग्रहे उत्पन्ने ऽन्येषामपि रजतभानानुपपत्तेः। बाधेन सर्वसंबंधिज्ञाननाशस्यावश्यकत्वात्। अन्यथा तस्यापि भ्रमानुच्छेद-

* टिप्पणी अभानापादकाज्ञानमपि प्रमां न चैतन्यनिष्ठमिति मताभिप्रायेणेदं।

प्रसंगः। उक्तरीत्या रजतोत्पत्तेर्दूषितत्वेन फलमुखत्वाभावेन सर्वस्याप्युक्तगौरवस्य दूषकत्वाच्च। अविद्यास्वरूपादेर्निराकरिष्यमाणत्वे तत्परिणामत्वाद्युक्तेरयोगाच्च। किंच एकेनानुगतेन दोषेण बहुषु शुक्तिशकलेषु रंगरजतवंगनागादिविषयक एक एव भ्रमस्तत्र परस्परविलक्षणत्वेनानुभूयमानानां तत्रैक्यस्य वक्तुमशक्यत्वात्तत्र नानापदार्थोत्पत्तिकल्पने दोषस्य तत्तद्व्यक्तिरूपनानापदार्थकारणत्वकल्पने च महागौरवं। मम तु तत्र ज्ञानस्यैकत्वेन तद्बहुत्वाभावात्तद्दोषस्य तन्मात्रं प्रति कारणताकल्पनाच्चातिलाघवं। नच रजतत्वावच्छिन्नं प्रति चाकचिक्यरूपानुगतदोषस्थले कार्यकारणभावलाघवानुरोधे युक्त्याऽनिर्वचनीयोत्पत्तिसिद्धौ अन्यत्रापि तत्कल्पनं प्रामाणिकत्वान्न दोषावहमिति वाच्यं। एतत्स्थले उक्तलाघवानुसारेणानिर्वचनीयोत्पत्तिनिरासे अन्यत्रापि तथाभावः कुतो न स्यात्। अन्यतरमध्ये भवदभिमतार्थधिय एव प्राथमिकत्वस्य त्वया शपथेन व्यवस्थापनीयत्वात्। नच सच्च त्यच्चाभवदित्यादितैत्तरीयश्रुतौ सत्यं चानृतं च सत्यमभवदिति अनृतशब्दितप्रातिभासिकस्योत्पत्तिः श्रूयते प्राणा वै सत्यमिति श्रुतौ सत्यशब्दस्य व्यावहारिकेऽपि प्रयोगेण तद्विरुद्धप्रातिभासिकस्यानृतशब्दार्थत्वात्। नच सत्यानृतशब्दयोः प्रमाणाप्रमाणवाक्यपरत्वमिति वाच्यं। तस्य सच्च त्यच्चाभवदित्यादिना व्यावहारिकसृष्टेः पूर्वं उक्तत्वेन पुनस्तत्कथनवैय्यर्थ्यात्। अन्यथा रूपादेरपि पुनःसृष्टिकल्पनापत्तेः। इत्थं चोक्तश्रुत्यनुगृहीतानामस्मदीययुक्तीनां बलवत्वात्सर्वेऽपि त्वदुक्तदोषाः आभासीभवंतीति वाच्यं। उक्तश्रुतीनां तैत्तरीयभाष्ये आचार्योदाहृतप्रमाणानुसारेणान्यपरत्वात्। अनिर्वचनीये शक्तिग्राहकप्रमाणाभावेन तत्परत्वे मानाभावाच्च। व्यावहारिकविरुद्धत्वेन तत्पदार्थत्वे पारमार्थिकस्यापि तत्पदार्थत्वापत्तेः। प्रमाणाप्रमाणवाक्यरूपशास्त्ररूपवाक्यबलेनैव सर्वेषां पुरुषार्थसाधनानुष्ठानादिषु प्रवृत्तिदर्शनेन तेषां लोकहिताहितजनकेषु प्राधान्यात्। तद्विवक्षया रूपादिकं विहाय अस्यैव ब्राह्मणपरिव्राजकन्यायेन पृथगुक्तिसंभवाच्च। अन्यथोक्तवाक्ये सत्पदेनैव सर्वव्यावहारिकप्रातिभासिकानां सत्तादात्म्यापन्नानां गृहीतत्वेन त्यदादिसर्वपदादिवैय्यर्थ्यं स्यात्। विवक्षाविशेषेण सार्थक्ये प्रकृतेऽपि तथाऽस्तु तस्मात्कस्या अपि श्रुतेरनुग्राहकत्वाभावाद्भवदुक्तयुक्तीनां तर्काप्रतिष्ठानादितिन्यायेन त्वद्रीत्या मद्रीत्या कामाच्चनानुमानापेक्षेति न्यायेनाभासत्वान्नानुभवसिद्धासत्ख्यातिबाधकत्वमन्यथाख्यातिबाधकत्वं वा। न चेंद्रियेणासन्निकृष्टं सद्रजतं भासत इति वाच्यं। अंजनसहकृतेंद्रियेण निखातधनप्रत्यक्षादिवत् योगसहकारेण देशकालविप्रकृष्टपदार्थप्रत्यक्षवच्च दोषसहकारेण देशकालविप्रकृष्टपदार्थप्रत्यक्षोपपत्तेस्तद्भासकत्वमेव युक्तं दृष्टानुसाराल्लाघवाच्च। सामान्यलक्षणायां गदाधरेणासन्निकृष्टस्यापि पर्वतधूमसंयोगस्य लौकिकप्रत्यक्षे संसर्गविधया भानाभ्युपगमाच्च। पदार्थकरणकशाब्दस्याकरे निरस्तत्वेन मानसोपनीतादिभाननिर्वाहाय ज्ञानलक्षणासन्निकर्षस्यावश्यकत्वे तेनापि तद्भानस्य युक्तत्वाच्च। अतो न त्वदुक्तबाधकानां अन्यथाख्यातिपक्षेऽवकाशः किं त्वन्यत्राचार्योक्तानामेवेत्यन्यत्र विस्तरः। यदपि पुरोवर्तिरजतत्वरूपेष्टतावच्छेदकोभयवैशिष्ट्यावगाहिज्ञानस्य प्रवृत्तिकरणत्वादसद्रजतावगाहित्वे प्रवृत्त्यनुपपत्तिरिति तदप्यसत्। सत्यरजतावगाहिज्ञाने यादृशी रजतशब्दादिप्रयोगप्रयोजकीभूता शक्तिरूपविषयिता तादृश्येव दोषप्रयोज्यविषयता भ्रमे स्वीक्रियते। अथवा सत्यरजतज्ञानतदन्यरजतभ्रमेषु रजतज्ञानत्वाख्यवैजात्यं रजतार्थिप्रवृत्तिजनकतावच्छेदकं स्वीक्रियते तत एव प्रवृत्त्यादिकमुपपद्यत इति किमनिर्वचनीयरजतोत्पत्तिस्वीकारेण। अन्यथा यादृशकामिनीव्यक्तिविशेषस्यैव तद्व्यक्तित्वेनेष्टत्वं तत्र तद्व्यक्तेरन्यभ्रमेण प्रवृत्तिर्न स्यात्।

तद्व्यक्तित्वस्यैकमात्रवृत्तित्वेन भ्रमोत्पन्नानिर्वचनीयव्यक्तावभावेन तत्रेष्टतावच्छेदकपुरोवर्ति-वैशिष्ट्यावगाहित्वाभावात्प्रवृत्त्यनुपपत्तिः। नहि प्रातिभासिकव्यावहारिकसाधारण्यस्य रजतत्वे स्वीकारवत्तद्व्यक्तित्वस्यापि प्रातिभासिकव्यावहारिकोभयसाधारण्यमुक्तिसंभवं। तथात्वे तस्योभयादिवृत्तित्वेन जातिरूपत्वस्यैवापत्तेः। तत्सजातीयं तद्व्यक्तित्वांतरं जायते चेत् तस्येष्टतावच्छेदकत्वेनागृहीतत्वात्। अत एव रजतत्वसमवायत्वादीनां भ्रमविषय उत्पत्तौ तस्यापूर्वव्यक्तेरिष्टतावच्छेदकत्वेनागृहीतत्वात्प्रवृत्त्यनुपपत्तिरिति त्वयैवाभिहितं। नच कामिनीशरीरनिष्ठं वैजात्यमेवेष्टतावच्छेदकमिति वाच्यं। तत्र तस्य कथंचिद्युक्तिसंभवेऽपि तद्रजतत्वतद्रूपादर्येत्रेष्टतावच्छेदकता तत्रोक्तानुपपत्तेः दुर्वारत्वात्। ननु तद्रजतत्वं तद्व्यक्तित्वं प्रातिभासिकव्यक्तौ व्यावहारिकसंबंधेन वर्तते न चोभयवृत्तित्वानुपपत्तिः। स्वसमानसत्ताकधर्मिद्वयावृत्तित्वस्यैवोभयावृत्तिपदार्थत्वांगीकारादितिचेन्न। उक्तरीत्या कल्पनायाः प्रातिभासिकोत्पत्तिसिद्ध्युत्तरकालिकतया प्रथमत एव उक्तबाधकबलेन ज्ञानवृत्तिकल्प्तधर्मेण प्रवृत्त्यादेरन्यथासिद्धत्वग्रहेण प्रातिभासिकोत्पत्तेरेवासिद्धेः। अन्यथाऽन्योन्याश्रयात्। यत्र तद्व्यक्तित्वतद्रूपादेरिष्टतावच्छेदकस्य नाशोत्तरं कालांतरे अज्ञाततन्नाशकस्य तदवच्छिन्नारोपात्प्रवृत्तिस्तत्रागतेश्च। नाह नष्टं तद्व्यक्तित्वादिकमारोप्यमाणे व्यावहारिकसंबंधेन वर्तते इत्युक्तिसहं सचेतसां। न वा तद्व्यक्तिनाशेऽपि तन्निष्ठं तत्स्वरूपं तद्व्यक्तित्वं न नश्यतीत्यपि युक्तं। तस्याखंडस्याश्रयातिरिक्तस्य नित्यस्य सद्भावे मानाभावात्। तद्रूपस्थले सर्वथानुपपत्तेश्च। नच नष्टमपि तद्रूपं संस्कारात्मना विद्यमानं प्रातिभासिके वर्तते इति वाच्यं। तद्घटादिरूपतज्जनकस्यात्राभावेनात्र तदुत्पत्त्याद्ययोगेन तत्संसर्गायोगात्। अन्यथा अधिकरणप्रकारकत्वापत्तेः संस्कारावस्थायाः अपरोक्षभाने अनुपयोगात्। संस्कारात्मना स्थितस्येष्टतानवच्छेदकत्वात्। अन्यथा पाकेन तद्रूपनाशेऽपि तद्घटे प्रवृत्तिप्रसंगात्। अप्रामाणिकबहुकल्पनापत्तेश्च। तस्मात्तादृशस्थले ज्ञानवृत्तिवैलक्षण्यादेव प्रवृत्त्यादेरावश्यकत्वेन सर्वत्रापि तथात्वौचित्येन व्यर्थमनिर्वचनीयरजताद्युत्पत्तिकल्पनं। ननु रजतभ्रमेण रजतस्वरूपस्य लब्धात्मनो विषयीकृतत्वादेव सिद्धिः। नच तस्योत्पन्नस्य सत्त्ववता शुक्त्यादिवत्सत्वे कुतस्तद्विलक्षणा प्रातीतिकी सत्ता,यावत्स्वप्रतिभासं स्वसत्तायाः शुक्त्यादिसाधारण्यादिति वाच्यं। सत्यस्य सत्यमित्यादिश्रुत्या सत्तायामपि तादात्म्यस्योक्तत्वेन तारत्वादिरूपाखंडोपाधिसत्वेषूत्कर्षापकर्षस्यानुभवबलादेव स्वीकारात्। अत एव स्वाप्नशुक्तेस्तदारोपितरजतयोरुभयाः प्रातिभासिकत्वेऽपि तत्रारोपितरजतनिष्ठ उक्तरूपसत्तायाः न्यूनत्वादधिष्ठानविषमसत्ताकवस्त्ववभासो भ्रम इति भाष्यकारीयतात्पर्यविषयीभूतभ्रमलक्षणस्य नाव्याप्तिरिति चेन्न। यद्रजतममनिषं सा शुक्तिकैवेत्युत्तरकालीनानुभवेन पूर्वज्ञाने मत्वादिविशिष्टशुक्तिविषयकत्वस्यैव विषयीकृतत्वेनानुभवासिद्धेः। असत्वग्रहविरोधिग्रहविषयत्वस्यैव सति नानातादृशधर्मेषु कल्पने गौरवादप्रमाणिकत्वात् श्रुतेरर्थांतरपरत्वात् सत्यतोत्कर्षपरत्वे श्रुतौ पंचमीप्रयोगापत्तेः। तस्याः प्रामाण्यायोगाच्च। अथापि स्यात् ज्ञानवैलक्षण्यात् प्रवृत्त्याद्यभ्युपगमेऽपि प्रातिभासिकरजतोत्पत्तिर्दुर्वारा। ज्ञानानां वैलक्षण्यं विषयवैलक्षण्यनिबंधनमेव नतु स्वतः कारणविशेषादितो वा अन्यथाऽयं घट इत्यादिज्ञानानां करणसामर्थ्यादिना घटाद्याकारतासंभवेन घटपटादिज्ञानानां मिथो वैलक्षण्यसंभवेन घटादीनां ज्ञानतादात्म्यापन्नतद्धर्मत्वप्राप्त्या साकारवादप्रसंगेन बहिर्विषयविलोपापत्त्या बाह्या एव विजयेरन्। अत एवोक्तमुदयनाचार्यैः 'अर्थेनैव विशेषो हि निराकारतया धियां'

इति। इत्थं च इदं रजतमिति भ्रमस्येदं च रजतं चेति समूहालंबनतो वैलक्षण्यसिद्धये तद्विषयविलक्षणरजततादात्म्यापन्नशुक्तिरूप्यावैशिष्ट्यविषयकत्वमवर्जनीयमिति तन्निर्वाहायानिर्वचनीयरजतोत्पत्तिरावश्यकीति। मैवं। उक्तनियमबलेनानिर्वचनीयरजतोत्पत्तेरसिद्धेः। यत उदयनाचार्याणामपि प्रमात्मकज्ञानानामेव वैलक्षण्यं विषयवैलक्षण्यनिबंधनमभिमतं। अन्यथा अन्यथाख्यातेस्तत्संमततया तत्र विशिष्टस्याप्रसिद्धतया भानायोगेनेदं रजतमिति धियः इदं च रजतं च तादात्म्यं चेति समूहालंबनतो वैलक्षण्यानुपपत्तेः। रजतप्रकारतानिरूपितशुक्तिविषयतयैव तत्रेतरवैलक्षण्यनिर्वाहः। वस्तुतः प्रमाया अपि न सर्वत्र विषयवैलक्षण्येन वैलक्षण्यं। रक्तदंडवान् पुरुष इत्याकारस्य रक्तदंडत्वावच्छिन्नप्रतियोगिताकत्व विशिष्टसंयोगेन पुरुषांश एव दंडविशेषणतापन्नरक्तदंडत्वादेरवगाहिनो रक्तदंडत्वविशिष्टवैशिष्ट्यावगाहिज्ञानात् विशेष्ये विशेषणं तत्र च विशेषणांतरमिति रीत्या पुरुषे रक्तदंडावगाहिस्वावच्छिन्नप्रतियोगिकत्वविशिष्टसंयोगेन पुरुष स्वातंत्र्येण रक्तदंडत्वं चावगाहमानश्च यः समूहालंबनप्रत्ययः तस्य विषयतावैलक्षण्यं विना निर्वोढुमशक्यत्वात्। ज्ञानद्वयेऽपि पुरुषे दंडस्य दंडे च रक्तत्वदंडत्वयोः पुरुषे च स्वावच्छिन्नप्रतियोगिकत्व विशिष्टसंयोगेन रक्तदंडत्वस्य भानाविशेषात्। अतः प्रथमे रक्तदंडत्ववृत्तिपुरुषविशेष्यतानिरूपितप्रकारतादंडविशेष्यतानिरूपितप्रकारतयोरवच्छेद्यावच्छेदकभावः, समूहालंबने च न स इति विषयितावैलक्षण्यमेव तन्निर्वाहकं। किंच विषययोः परस्परं भेदस्य ज्ञानभेदप्रयोजकत्वे घटपटाविति समूहालंबनस्य भेदापत्तिः। ननु यदन्यार्थविषयिकज्ञानं यत् तत् तद्विषयकज्ञानभिन्नमिति न व्याप्तिर्येनोक्तसमूहालंबने व्यभिचारः स्यात्। किंतु यद्ज्ञानं यद्ज्ञानाद्भिन्नं तत्तद्विषयभिन्नविषयकमित्येव। भेदोऽपि न वास्तवः किंतु तदपर्याप्तविषयतापर्याप्त्यधिकरणत्वरूपः। तेन मेयत्ववान् वन्हिरभिधेयत्ववांश्च वन्हिरिति ज्ञानयोर्न व्यभिचारः। नच नैय्यायिकानां विशिष्टस्य विशेष्यविशेषणतत्संबंधानतिरिक्तत्वान्मेयत्वविशिष्टवन्ह्यपर्याप्तत्वं नाभिध्येयत्वविशिष्टवन्हिविषयताया इति वाच्यं। यतः प्रत्येकं विशेष्यताप्रकारतारूपविषयतानां तद्व्यक्तित्वेन प्रत्येकवृत्तितद्व्यक्तित्वावच्छिन्नपर्याप्तत्वेऽपि तद्ज्ञानीयविषयतात्वेन विशेष्यविशेषणसंसर्गादिघटितविशिष्टपर्याप्ततया तादृशविशेष्यविशेषणसंसर्गादिसाधारणव्यासज्यवृत्तिधर्मस्य तत्पर्याप्त्यनुयोगितावच्छेदकत्वं स्वीक्रियते। यद्यपि विशिष्टद्वयविषयकसमूहालंबनस्थले तद्ज्ञानविषयतात्वं तादृशविषयताद्वयसाधारणमतो विषयतात्वं ज्ञानविषयतात्ववदतिप्रसक्ततया न पर्याप्त्यवच्छेदकं तथापि तत्र मुख्यविशेष्यताद्वयनिरूपिताविषयिताद्वयस्य परस्परभिन्नत्वात्तत्तद्विषयितानिरूपितविषयतात्वमेव पर्याप्तिप्रतियोगितावच्छेदकं भ्रमविषयिताया अप्युक्तपर्याप्तिर्वर्तत एव। परंतु प्रमीयविषयितापर्याप्त्यनुयोगितावच्छेदको यो व्यासज्यवृत्तिधर्मस्तदवछिन्ननिरूपकताकाधिकरणता देशकालयोः स्वीक्रियते। पर्वते प्रमेयवन्हिरिदानीं प्रमेयवन्हिरिति प्रत्ययात् भ्रमविषयतापर्याप्त्यवच्छेदकतादृशधर्मावछिन्नाधिकरणता तु न कुत्रापि। इदानीं कांचनमयवन्हिः पर्वते कांचनमयवन्हिरिति प्रमाभावात्। इत्थं च यद्ज्ञानभिन्नज्ञानत्वं यत्र तत्र तद्ज्ञाननिष्ठयत्किंचिन्मुख्यविशेषितानिरूपितविषयतात्वावछिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावछेदकभिन्नस्वीयतादृशपर्याप्त्यनुयोगितावछेदककमिति भ्रमप्रमासाधारण्येनायं नियमः। तेन यथाश्रुते प्रमेयवान् अभिधेयवानिति ज्ञानयोर्विषयवैलक्षण्यस्योपपादयितुमशक्यत्वेऽपि उक्तनिष्कर्षे न दोषः। प्रमेयत्वप्रमेयतदाश्रयघटितत्रित्वाभिधेयत्वघटितत्रित्वयोः तत्तत्पर्याप्त्यवछेदकयोर्भिन्नत्वात्।

एवं रक्तदंडवान् पुरुष इति विशिष्टवैशिष्ट्यज्ञानीयविषयतापर्याप्त्यवच्छेदकं रक्तदंडत्व-रक्तदंडरक्तदंडत्वावच्छिन्नप्रतियोगिकत्वसंयोगपुरुषवृत्तिरेको व्यासज्यवृत्तिधर्मः समूहालंबने च विशेष्ये विशेषणमिति या पुरुषविषयता तत्पर्याप्त्यवच्छेदकं रक्तत्वावच्छिन्नप्रतियोगितानिरूपकत्वाघटितसमुदायत्वं परंपरासंबंधावच्छिन्नरक्तदंडत्वप्रकारतानिरूपितपुरुषविषयतापर्याप्त्यवच्छेदकं तु तादृशदंडत्वसंबंधपुरुषघटितं दंडाघटितमेव समुदायत्वमिति रीत्या त्रयाणां विलक्षणत्वान्न तत्राप्युक्तनियमस्य व्यभिचारः उक्तनियमानुरोधेनैव नव्यैः प्राचीनोक्तमवच्छेदकताख्यविषयतायाः विशिष्टवैशिष्ट्यबोधे स्वीकारेण तस्य विशेष्ये विशेषणमिति ज्ञानाद्वैलक्षण्यमनादृत्य विशेषणतावच्छेदकस्य परंपरासंबंधभानादिना तद्वैलक्षण्यमुररीकृतं। प्राचीनपक्षे ज्ञानद्वये भासमानविषयाणां न्यूनाधिकभावाभावेनोक्तपर्याप्त्यवच्छेदकवैलक्षण्यस्य वक्तुमशक्यत्वात्। इत्थं च अन्यथाख्यात्यंगीकाराभावपक्षे भ्रमविषयरजतादिघटितसमुदायत्वरूपपर्याप्त्यवच्छेदकमनिर्वचनीयोत्पत्तिं विना न निर्वहति। असति संख्यारूपसमुदायोत्पत्तेरयुक्तेरिति चेन्न। त्रैकालिकनिषेधप्रतियोगिनो विप्रतिषिद्धोत्पत्त्यंगीकारापेक्षयोत्पत्तिमनपेक्ष्यैव तत्र संख्यादिरूपसमुदायत्वस्य गुणादिसाधारण्यानुरोधेनापेक्षाबुद्धिविशेषविषयत्वरूपसमुदायत्वस्य वा उक्तानुरोधेनैवान्यथाख्यातिपक्षस्यैव वांगीकर्तुमुचितत्वेनानिर्वचनीयोत्पत्त्यसिद्धः। वस्तुतस्तूक्तनियम एव न संगच्छते। तादृशपर्याप्त्यवच्छेदकरूपस्यैव दुर्निरूपत्वात्। नच विशेष्यविशेषणोभयसाधारणव्यासज्यवृत्तिधर्म एव स इत्युक्तमिति वाच्यं। तथात्वे घटवद्भूतलमिति ज्ञानीयविषयतापर्याप्त्यवच्छेदकीभूतघटघटत्वसमवायसंयोगभूतलत्वभूतलवृत्तिषट्कत्वस्य किंचिद्देशवृत्तितानवच्छेदकतया भ्रमविषयतापर्याप्त्यवच्छेदकरूपाविशेषेण भ्रमविशिष्टाप्रसिद्धिवत् प्रमाविशिष्टस्याप्रसिध्यापातात्। अन्यथा घटघटत्वसंयोगादिषट्कवदिदमिति प्रत्ययापत्तेः। नच विशेष्यविशेषणभावापन्नपदार्थेषु पर्याप्तो विलक्षण एव व्यासज्यवृत्तिधर्मः। स चाधेयतानवच्छेदकोपि आधेयतापर्याप्त्यवच्छेदको भवतीति वाच्यं। विशेषणतद्विशेषणादौ आधेयत्वाभावे तदतिप्रसक्तस्य व्यासज्यवृत्तिधर्मस्य तत्पर्याप्त्यवच्छेदकत्वायोगात्। तत्पर्याप्तेरपि तदात्मकस्वरूपसंबंधरूपत्वात्। अन्यथा गगनघटोभयत्वस्याप्याधेयतावच्छेदकत्वापत्तेः कालिकेन वन्ह्यभाववान्ह्रदो विशेषणतया वन्ह्यभाववानिति ज्ञानाद्विशेषणतया वन्ह्यभाववान्ह्रदः कालिकेन वन्ह्यभाववानिति ज्ञानस्य वैलक्षण्यानुपपत्तेश्च। उभयत्र विषयसाम्यात् अथोक्तधर्मो न संख्यादिरूपः किंतु घटवद्भूतलमित्यादिज्ञानीयविषयता यादृशी तादृग्विषयतारूपा। नच समानविषयतायाः कथं स्वसमानविषयतांतरपर्याप्त्यवच्छेदकत्वमिति वाच्यं। द्वित्वं प्रति द्वित्वांतरस्येवावच्छेदकत्वोपपत्तेरिति चेन्न। ज्ञानभेदेन विषयताभेदे मानाभावेन समानाकारज्ञानीयविषयतैक्येन तस्यावच्छेद्यावच्छेदकभावायोगात्। ज्ञानभेदेन विषयताभेदेऽपि तादृशविषयतानां प्रत्येकव्यक्तौ वृत्तित्वेन तादृशविशेषणविशेष्यनिखिलसाधारणपर्याप्तिं प्रत्यवच्छेदकत्वायोगात्। नच तादृशविषयितायाअप्येतादृशी पर्याप्तिवर्तते सैव तस्यावच्छेदिका तस्या अपि तत्पूर्वं विद्यमानाऽन्येति वाच्यं। जन्यघटितविशिष्टे प्रथमतः उत्पन्नज्ञानीयविषयतायाः पर्याप्तेर्वक्तुमशक्यत्वात्। न चेश्वरीयज्ञानविषयत्वं तत्राद्यक्षणे वर्तत इति वाच्यं। तत्पर्याप्तेरेव वक्तुमशक्यत्वात्। नच तत्समानकाले योगिनामपि तद्ज्ञानसत्वात्तद्विषयत्वैतद्विषयत्वयोः परस्परावच्छेद्यत्वमिति वाच्यं। तादृशावच्छेद्यावच्छेदकभावे मानाभावात्। अन्यथा समानकालनिरूपरसयोरप्य

वच्छेद्यावच्छेदकभावापत्तेः। अत एव साध्यसामानाधिकरण्यावच्छेदकरूपवत्वमिति लक्षणस्य स्वरूपसंबधरूपावच्छेदकत्वघटनया परिष्कारखंडनावसरे समानकालीनयो रूपरसयोर्नाव-च्छेदकत्वं इत्युक्तं। विशेषनिरुक्तौ दीधितिकृता एतन्न्यायेनैव द्वित्वस्य द्वित्वांतरावच्छेदक-त्वमप्यपास्तं। आद्यद्वित्वेऽगतेः। अस्तु वा एतद्यथातथा उक्तविषयतारूपधर्मस्य विशेष्य-विशेषणरूपाधेयानाधेयसाधारण्यात्कथं व्यासज्यवृत्तिधर्मैकपक्षदोषनिस्तारः। नच वन्हिमत्पर्वतवानयं देश इति प्रमाबलादेव वन्हिविशिष्टपर्वतरूपविशिष्टे आधेयतापर्याप्तेः सत्वात् उक्तविशिष्टवृत्तिधर्मस्याधेयतापर्याप्त्यवच्छेदकत्वं वन्हिमद्न्हदवानिति प्रमाभावात् भ्रमीयविषयतारूपपर्याप्त्यवच्छेदकधर्मस्य नाधेयतापर्याप्त्यवच्छेदकत्वमिति वाच्यं। वन्हि-मत्पर्वतवानिति ज्ञानस्य पर्वतांश एवाधेयत्वाद्यवगाहित्वात् विशिष्टातिरिक्तत्वादिनैव सर्वो पपत्तौ उक्ताप्रमाणिककल्पनायोगाच्च। किं चोक्तरीत्या तत्समानाकारज्ञानांतरविषयतायाः एतद्ज्ञानीयविषयतापर्याप्त्यवच्छेदकत्वे घटवद्भूतलमिति विशिष्टवैशिष्ट्यावगाह्यैतद्ज्ञा-नीयविषयतायाः पर्याप्तिं प्रति तत्समानाकारज्ञानांतरविषयतायाः अवच्छेदकत्वं। विशेष्ये-विशेषणमिति रीत्या जायमानैतद्ज्ञानीयविषयतायाः पर्याप्तिं प्रति तु तत्समानाकारज्ञानां-तरविषयतायाः अवच्छेदकत्वमित्येतावन्मात्रेणोपपत्त्या उक्तनियमानुरोधेन नव्यानां विशि-ष्टवैशिष्ट्यबोधे अधिकावगाहित्वासिद्धेश्च। किंच घटवद्भूतलमिति समानविषयकज्ञानेषु-घट इत्यादिसमानाकारज्ञानेषु च परमते च सोयं देवदत्त इत्यादिनानावाक्यजत्यबोधेषु एक स्वरूपमात्रावगाहिषु बोधेषु चिन्मात्ररूपाखंडार्थविषयकेषु 'सत्यं ज्ञानं' 'यथा महामत्स्यः' तत्वमसीत्यादिपदार्थशोधकवाक्यमहावाक्यजन्यनानाबोधेषु विषयवैलक्षण्याद्ज्ञानवैलक्ष-ण्यमिति यथाश्रुतनियमस्योक्तरीत्या नैय्यायिकमतानुसारेण कृतनिष्कर्षस्य च विशिष्टाति-रिक्ततावाद्यद्वैतरीत्या तद्ज्ञानविषयातिरिक्तविषयकत्वं विषयवैलक्षण्यमिति निष्कर्षस्य च व्यभिचारापरिहारात्। विषयतायाः विषयतांतरपर्याप्त्यवच्छेदकत्वपक्षस्योक्तरीत्याऽसंभव-दुक्तिकतया तत्पक्षे नैय्यायिकनये व्यभिचारपरिहारस्यानादरणीयत्वात्। अथ वैलक्षण्यं प्रवृत्तिविशेषनिर्वाहकत्वसंशयविशेषनिवर्तकत्वानिवर्तकत्वादिरूपं तथा च यद्ज्ञानं यद्ज्ञा-नानिवर्त्यसंशयनिवर्तकत्ववत् यद्ज्ञानानिर्वाह्यप्रवृत्तिनिर्वाहकत्ववद्वा तत्तद्ज्ञानविषयाविल-क्षणाविषयकमिति नियमपर्यवसानं। नैयायिकमते तु साध्यार्थः पूर्ववदेव। अद्वैतसिद्धांते तूक्तनियमानुसारादेव विशिष्टांगीकाराद्यथाश्रुत एव। तथाच पूर्वोक्तसमानाकारज्ञानेषु परस्परानिवर्त्यसंशयानिवर्तकत्वान्न व्यभिचारः। दंडपुरुषसंयोगा इतिज्ञानानिवर्त्यस्य पुरुषो दंडी न वेति संशयस्य निवर्तके दंडी पुरुष इति विशिष्टज्ञाने उक्तहेतुसत्वात्समू-हालंबनविषयविलक्षणविशिष्टविषयकत्वरूपसाध्यस्यापि सत्वादन्यत्रापि एवमेव सत्वान्न कुत्रापि व्यभिचारः। एवं प्रवृत्तिजनकत्वस्य हेतुत्वे तज्जननशक्तिरूपस्वरूपयोग्यत्वमेव विवक्षणीयं। अनुपधायकसंग्रहानुरोधात् समानाकारकज्ञानद्वयमध्ये एकस्याप्रामाण्यज्ञाना-स्कंदितत्वे तदनिवर्त्यसंशयनिवर्तके समानाकारज्ञानांतरे व्यभिचारवारणाय अप्रामाण्यज्ञाना नास्कंदितत्वं यद्ज्ञाने निवेश्यं उक्तज्ञानस्य यद्ज्ञानपदेनोपादानाभावात् न व्यभिचारः। इत्थ चेदं च रजतं चेति समूहालंबनानिवर्त्यसंशयनिवर्तके इदं रजतमिति भ्रमे तद्वि-षयविलक्षणरजतविशिष्टेदंपदार्थरूपविलक्षणविषयकत्वस्यावश्यकतया तन्निर्वाहाय रजतो-त्पत्तिरावश्यकीति चेन्न। एवमपि सत्यज्ञानादिवाक्यजन्याखंडार्थबोधस्य ब्रह्मणि सत्यत्वादि-संशयनिवर्तकतया महावाक्यार्थबोधस्य तु जीवेशभेदसंशयादिनिवर्तकतयोक्तवैलक्षण्य-शालिनोश्चिन्मात्रविषयकयोर्विषयवैलक्षण्याभावात् व्यभिचारो दुर्वार एव। किंच इदं रज-

तमिति भ्रमे ह्याकारत्वानुरोधेन ज्ञानवैलक्षण्यानुरोधेन विषयवैलक्षण्यसित्ध्या परस्परा ध्यासस्त्वया समर्थितः। तत्रेदं रजतमिति भ्रमस्यैकत्वे नैकास्मिन्नेव ज्ञाने आकारद्वयांगीकारात्तदाकारज्ञानानिवर्त्यसंशयानिवर्तकत्वतदनिर्वाह्यप्रवर्तकत्वाद्यभावेन हेत्वासित्ध्या विषयवैलक्षण्यासित्ध्या परस्पराध्यासासित्ध्यापत्तेः। समानाकारज्ञानीयविषयतैक्यमभ्युपेत्य तद्विषयतातिरिक्ता,या विषयता तन्निरूपकविशिष्टातिरिक्तविशिष्टनिरूपितेति विषयतामंतर्भाव्यैव नियमपरिकल्पने ज्ञाने अर्थातिरिक्तेन विषयितारूपेण विशेषणेन विशिष्टत्वं तादृशविषयतानां चार्थसंबंधमनपेक्ष्यैव परस्परव्यावर्तत्वग्रहस्तावदावश्यकः इत्यागतं । अन्यथा विषयवैलक्षण्यसिद्धिं विना विषयतानां तदाश्रयज्ञानानां च परस्परवैलक्षण्यग्रहाभावापत्त्या परस्पराश्रयप्रसंगेन विषयवैलक्षण्यसिद्धिरयुक्ता स्यात् तथा चार्थेनैव विशेष इत्ययुक्तमेव । ननु संत्येव ज्ञानेषु स्वतो विशेषास्तेऽपि अर्थविशेषसंबंधनिबंधना एव । ननु करणसामर्थ्यनिबंधनाः । करणसामर्थ्यनिबंधनत्वे ज्ञानेष्वेव स्वजनकसामर्थ्येन तत्तादात्म्यापन्नघटाद्याकारसंभवेन बहिर्विषयविलोपापत्तिरतो भ्रमेऽनुभवसित्धाकारपदवाच्याविषयतानिर्वाहाय तादृशाविशिष्टद्वयस्यावश्यकतेति चेन्न । भ्रमस्थले अविद्याया एव ज्ञानार्थोभयरूपतया युगपत्परिणामांगीकारेण ज्ञानस्याद्यक्षणे निर्विषयत्वायोगेन तत्र विषयताया अपि तेन सहोत्पन्नत्वेन समानकालिकत्वेन प्रयोज्यप्रयोजकभावस्य विनिगमकाभावेन वक्तुमशक्यत्वेन त्वन्मते तथा नियमस्य वक्तुमशक्यत्वात् । अनुमित्यादिज्ञाने विषयस्याकारणतया करणबलेनैव विलक्षणाकारतायाः आवश्यकत्वाच्च । न चैवं साकारवादनिरासानुपपत्तिः । त्वदीयनियमस्य साकारवादित्वेनैव तेनानंगीकारेण त्वया तथानियमांगीकारेऽपि तन्निरासानुपपत्तितौल्यात् । तस्मात्तन्निरासः स्वव्याघातादिरूपप्रकारांतरेण कर्तव्यः । तथाहि घटादिज्ञानं साकारं ननु स्वभिन्नविषयकमित्यादिरूपं सहोपलंभनियमाद्युक्तिजज्ञानं स्वभिन्नविषयकं उत न वा । आद्ये अनुमित्यात्मकस्य स्वस्यैव स्वभिन्नघटज्ञानादिविषयकत्वप्राप्त्या ज्ञानसामान्यं साकारमित्यस्य व्याहतिः । स्वभिन्नज्ञानाद्यविषयकत्वे ज्ञानसामान्यं विषयभिन्नमित्यादिशब्दाभिलाप्याकारस्यानुमित्यभिन्नत्वे घटज्ञानादौ स्वविषयाभेदासित्ध्या पुनस्तादृशार्थस्य व्याहतिरतो ज्ञानभिन्नो विषयोऽगीकर्तव्य इति । अत्रेदं रजतमिति भ्रमोत्तरं इदं रजतं रजतमिदं इदं रजततादात्म्यवद्रजतं चेदं तादात्म्यवदिति नानाव्यवहारात्तदभिलापकारणीभूतनानाकारा अंगीकर्तव्या इति तदनुरोधात्तादात्म्यवत्तादात्म्यं तत्तादात्म्यवत्तादात्म्यादेरपि अध्यासापत्तिरिति अनंततादात्म्यादेरुत्पत्त्यापत्तिः । न चैतत्तवेष्टं तादात्म्यतादात्म्यादेस्त्वयानंगकृतत्वात् । नच तत्र तादात्म्यवत्तादात्म्यवदित्याकारता नास्त्येव इदं रजतमित्याकारस्यैव तादृशसर्वव्यवहारहेतुत्वोपपत्तेरिति वाच्यं । तेनैवाकारेण रजतमिदमिति व्यवहारस्यापि संभवेन रजते इदं तादात्म्याध्यासस्याप्यसिद्धिः । नच विनिगमकाभावः रजतस्य भ्रमात्पूर्वं असिद्धत्वेन तदध्यासे अधिष्ठानत्वायोगादज्ञानाद्यनवच्छेदकत्वाच्च । तथापि तत्कल्पने तन्निर्वाहककार्यकारणभावादिकल्पनागौरवस्यैव विनिगमकत्वादिति ज्ञेयं । किंच ज्ञानवैलक्षण्ये विशिष्टविषयवैलक्षण्यमिति नियमांगीकारे शशविषाणमस्ति नरविषाणमस्तीति वाक्यद्वयजन्यबोधमादाय यथाश्रुते निष्कर्षे च सर्वत्र व्यभिचारः । तत्रान्यथाख्यातेरसत्ख्यातेर्वाऽभ्युपगतत्वेन विशिष्टविषयस्य तत्रोत्पत्त्यनंगीकारात् । तत्राप्यनिर्वचनीयोत्पत्तिरेव स्वीक्रियत इत्यस्यान्योन्याश्रयादिदुष्टत्वात् । नच तत्र विकल्पाख्यवृत्तिरेव स्वीक्रियतेऽतो न तद्ज्ञानं ज्ञानत्वनिवेशेनैवोक्तनियमस्वीकारान्न व्यभिचार इति वाच्यं । विकल्पानामपि परस्परप्रवृत्त्या-

(टीका) न वयमन्यथा विज्ञातस्य सम्यग्विज्ञानगोचरत्वं बाध्यत्वं ब्रूमः येन सतस्तदस्तीति व्याप्तिभंगस्स्यात् । किंनाम ज्ञाननिवर्त्यत्वमित्यत आह ।

[मूलं] नच बाध्यं जगादित्यत्र किंचिन्मानं ॥ ३९ ॥

(टीका) न तावज्ज्ञाननिवर्त्यत्वमंबरादौ प्रत्यक्षसिद्धं अप्रतीतेः । न चानिर्वचनीयहेतुना सिद्धं परस्पराश्रयप्रसंगात् । दृश्यत्वादयस्तु निराशिष्यंते । 'ज्ञाते द्वैतं न विद्यते' इत्याद्यागमस्यान्यपरत्वमन्यत्रोपपादितम् ।

---

दिकार्यवैलक्षण्यदर्शनेन विलक्षणत्वात्तस्य विषयवैलक्षण्यं विना विषयतावैलक्षण्येनैव निर्वाहवत् ज्ञानस्थलेपि तथैव निर्वाहसंभवात् । अत्र विषयवैलक्षण्यस्याप्रयोजकत्वेनासित्धेः। किंच विकल्पे व्यभिचारदर्शनेन ज्ञानस्थल एवेतिवत् भ्रमे व्यभिचारदर्शनेनाबाधितज्ञानानामेवायं नियमः । भ्रमे तु दोषबलादेव दिलक्षणविषयतत्यंगीक्रियतां । किमनुभवविरुत्धरजतोत्पत्तिकल्पनया तद्व्यक्तिभ्रमस्थले उक्तदोषो न विस्मर्तव्यः । नच भ्रमस्य विषय विनैव विलक्षणविषयताशालित्वे प्रमायामपि तथाभावशंकयार्थसित्धिः कथं स्यादिति वाच्यं । भ्रमविषयस्यार्थक्रियानर्हत्वे प्रमाविषयेपि तथाभावशंकया प्रवृत्त्युच्छेदस्तवापि कुतो न स्यात् । बाधाबाधाभ्यां व्यवस्थेति तु समानं । ज्ञानज्ञेययोस्तादात्म्यस्यैव विषयविषयत्वाद्रजतोत्पत्तिं विना विषयिविषयभावानुपपत्तिरिति तु निराकरिष्यते । तस्मात्केनापि प्रकारेणानिर्वचनीयोत्पत्तेः स 'धयितुमशक्यत्वादनिर्वचनीयमप्रमाणिकमेवेति स्थितं । अत्र यद्ज्ञाननिर्वाह्यप्रवृत्त्यादिनिर्वाहकं यद्यथार्थज्ञानं तत्तद्विषयविलक्षणविषयकमिति नियमः। विषये वैलक्षण्यं च भेदविशेषोभयस्थलानुरोधेन तदनिष्पाद्यकार्यनिष्पादकत्वं तथा च दंडपुरुषसंयोगा इति समूहालंबनानिर्वाह्यविशिष्टविषयकप्रवृत्तिनिर्वाहके दंडी पुरुष इति ज्ञाने तद्वैलक्षण्यसत्वात्तद्विषयविलक्षणदंडिरूपविशिष्टविषयकत्वस्यावश्यकतया दंडिरूपविशिष्टस्य सिद्धिः । दंडयादीनां शुत्धानिर्वाह्यकार्यनिर्वाहकत्वं शुत्धानिर्वाह्यकार्यकारित्वं च दंडी प्रेषानान्वाह हलोहितोष्णीषा ऋत्विजः संचरंतीत्यादिश्रुतिभिर्विशिष्टस्य विनियोगात् शुत्धानिर्वाह्यापूर्वनिर्वाहकत्वादिना सित्धं । नच दंडसंयोगादेः पुरुषनिष्ठजनकतायामवछेदकत्वांगीकारेणोपपत्तौ किंविशिष्टरूपेण तत्परिणामकल्पनयेति वाच्यं । तथात्वे तंतुसंयोगादिकस्यैव कारणतावछेदकत्वादिना तंत्वनिर्वाह्यशीतनिवर्तनादिविलक्षणकार्यसंभवे द्रव्योत्पत्तेरेवासित्ध्या परमाणुपुंजवादापत्तेः।तस्मात्परस्परविलक्षणकार्यनिर्वाहकत्वाविलक्षणप्रतीतिभ्यां तदंगीकार इव विशिष्टदंडाद्युत्पत्तिः सिद्धांते ऽगीकृता । अधिकमन्यतोऽवगंतव्यमित्यलं । अनिर्वचनीयत्वहेतुनेति । एतदन्येन सदसद्विलक्षणत्वादिनेत्यर्थः। तेनास्यापि मिथ्यापदार्थतावच्छेदकतयाऽनिर्वचनीयत्वरूपत्वेनैव साधने साध्याविशिष्टतेति परास्तं । इत्याद्यागमस्येति । आदिपदेन 'विद्वान् नामरूपाद्विमुक्तः' 'तरंत्यविद्यां विततां हृदि यस्मिन् निवेशित' इत्यादेः संग्रहः। अन्यत्रेति । विष्णुतत्वनिर्णयादावित्यर्थः। ननु दृष्ट्वैव तं मुच्यते नापरेण इति श्रुतावितरासहितदर्शनेन बंधापगमरूपमुक्तिर्विदुष उच्यते। सा च विद्यया सत्यस्य बंधस्य आत्मनो विश्लेषेण न घटते सत्यस्य ज्ञानेन विश्लेषस्य कुत्राप्यदृष्टत्वात् अतोऽधिष्ठानज्ञानेन शुक्तिरजतादेरप्रतीतिरूपनिवृत्तिरिव निवृत्तिर्वाच्येति रीत्या ज्ञानान्मोक्षाभिधानं जगतो ज्ञाननिवर्त्यत्वमाक्षिपतीति शंकां निवारयति।

(टीका) ज्ञानान्मोक्षाभिधानं चान्यथैवोपपादितम्। अतो ज्ञाननिवर्त्यत्वं चेद्बाध्यत्वं तर्हि तस्य वियदादावभावात्कस्यानुपपत्त्या तत्र सद्विलक्षणत्वप्रतिपत्तिः स्यात्। ननु ज्ञाननिवर्त्यत्वमस्माकं शुक्तिरजतादेरपि नास्ति यथोक्तं नहि नाशोऽसतो भवेदिति, अतः किं जगद्ग्रहणेन। मैवं।

---

ज्ञानान्मोक्षाभिधानमिति। अन्यत्रेति। सत्यस्यापि पापस्य सेतुदर्शनेन विनाशरूपनिवृत्तिदर्शनादज्ञानेन बंधापगमरूपमुक्त्यभिधानं बंधसत्यत्वेनाप्युपपन्नमिति श्रुतार्थापत्तेः अन्यथोपपत्तिरूपो दोषोऽभिहित इत्यर्थ। अत इति। जगति तत्सत्त्वे प्रमाणसामान्याभावादित्यर्थः। तस्याभावादित्यनेन संबंधः। ज्ञाननिवर्त्यत्वं चेदिति। स्वाधिष्ठानसाक्षात्कारक्षणत्वव्यापकस्वप्रतीतिपूर्वत्वाभावकत्वादिरूपवक्ष्यमाणत्रैकालिकनिषेधप्रतियोगित्वपर्यवसितं चेदित्यर्थः॥ चेदित्यनेनान्यथाविज्ञातस्य सम्यग्विज्ञानगोचरत्वस्य सिद्धत्वेऽपि न तस्य सद्विलक्षणत्वसाधकत्वमित्यर्थं स्मारयति। परोक्तलक्षणवाक्यस्थनिवर्त्यपदस्य ध्वंसप्रतियोग्यर्थकत्वाभिमानिनः शंकामुद्भाव्य निरस्यति। नन्वित्यादिना यथोक्तमिति। अनुव्याख्याने श्रुतिपाद इत्यर्थः। जगद्ग्रहणेनेति। जगत्पदस्य सत्यजगत एवोपस्थापकत्वेनासत्यस्य रूप्यादेरनुपस्थापनात् तत्र बाध्यत्वं नास्तीत्युक्तौ शुक्तिरजतादौ तद्वर्तत इति व्यंजनया लभ्यते। विशेषनिषेधस्य शेषविध्यनुज्ञारूपत्वात् तच्चायुक्तं। मिथ्याशब्दोऽनिर्वचनीयमित्यारभ्य प्रक्रांतस्य शुक्तिरजतस्याग्रहणान्न्यूनत्वं चेति भावः। ननु पूर्ववाक्ये रजतादेरपि नास्तीत्युक्तौ अपिपदेन जगतोऽपि ग्रहणेन तत्र ज्ञानजन्यनाशप्रतियोगित्वं नास्तीत्यागतं तदनुपपन्नं। स्वमतेपि सेतुदर्शनादिना ब्रह्महत्यादिनाशस्य भगवत्साक्षात्कारेणाप्रारब्धमोक्षपरिपंथिसर्वकर्मनाशस्यांगीकारात्। 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन' क्वचिद्ज्ञानं जनयन् भस्मकुर्यादित्यादिवचनात्। ज्ञानेन मोहो नष्ट इति प्रतीत्या मोहशब्दिताज्ञानादेर्दुःखादेश्च नाशांगीकारेण बहुस्थलेषु बाधात्। न चैतदतिरिक्तजगत एवापिपदेन समुच्चय इति वाच्यं। ज्ञाननिवर्त्यत्वरूपधर्मस्य जगत्सामान्ये सद्विलक्षणत्वसाधनाय परेणोपन्यस्ततयैतत्सामान्ये ज्ञाननिवर्त्यत्वमेतन्मूलेन प्रतिक्षेप्यं। अन्यथा यत्किंचिज्जगति तत्प्रतिक्षेपेऽपि अन्यत्र तेन सद्विलक्षणत्वरूपानिर्वचनीयत्वसिद्ध्याऽनिर्वचनीयत्वस्य सर्वत्र प्रसिद्धत्वादेवेत्युक्तमयुक्तं स्यात्। तथा चैतद्वाक्यस्थजगत्पदस्य सर्वजगत्परत्वावश्यकत्वे एतदुपरि शंककस्य यदि अपिशब्देन वियदादिघटादिमात्रग्रहस्तर्हि ज्ञाननाश्येषु कर्मादिषु ज्ञाननाश्यत्वे प्रमाणसत्वात् सामान्यतो माननिराकरणमयुक्तमित्येव शंकनीयं। कंठत उक्तार्थ एव बाधकरूपत्वात् तद्विहाय वैय्यर्थिनिकार्थ एव तच्छंकायाः जगत्पदस्यासद्ग्राहकत्वमप्युपलक्षणत्वादिना स्वीक्रियत इत्युक्त्याऽपि परिहरणीयतया दुर्बलाया एव करणस्यानुचितत्वादिति चेन्न। यतः शंककस्य यथाश्रुतं ज्ञानजन्यनाशप्रतियोगित्वं पराभिमतं लक्षणत्वेन नाभिमतं तस्योत्तरज्ञाननाश्यपूर्वज्ञाने स्मृतिनाश्यसंस्कारे चातिव्याप्तेः पराभिप्रायविषयत्वायोगात्। परंतु ज्ञानत्वव्याप्यधर्मावच्छिन्नजनकताकध्वंसप्रतियोगित्वं स्मृतेः संस्कारनाशकत्वे मानाभावान्नातिव्याप्तिः। उत्तरज्ञानस्य तु नोत्तरज्ञानत्वेन तद्व्यक्तित्वादिना वा नाशकत्वं किंतु योग्यविभुविशेषगुणवृत्तिप्रतियोगितासंबंधेन नाशत्वावच्छिन्नं प्रति स्वाव्यवहितपूर्वक्षणवृत्तित्व-

सामानाधिकरण्योभयसंबंधेन योग्यविशेषगुणत्वेन गुणत्वेन वा स्वाव्यवहितपूर्वत्व-संबंधेन * वस्तुत्वेन वा कारणत्वस्यांगीकारेण तद्व्यापकधर्मेणैव उत्तरगुणत्वादेः सामान्यतः अनुगतत्वाभावात् । अत्रोक्तकार्यकारणभावेषु द्वितीयतृतीयपक्षयोरपेक्षाबुद्ध्येस्तृतीयक्षणे नाशवारणाय स्वोत्पत्त्यधिकरणक्षणध्वंसोत्पत्त्यधिकरणक्षणसंबंधत्वतादात्म्योभयसंबंधेनापेक्षाबुद्धित्वेन प्रतिबंधकत्वं कल्प्यते । यद्वा साक्षात्कारत्वघटितधर्मावच्छिन्नकारणताकनाशप्रतियोगित्वं वा तत् । ब्रह्मज्ञानस्य शुक्तिसाक्षात्कारस्य च साक्षात्कारत्वेनैवाभानापादकाज्ञाननाशकत्वं । अन्यथा परोक्षज्ञानेनाऽपि तन्निवृत्त्यापत्तेः । नच सेतुदर्शनजन्यनिवृत्तिप्रतियोगिब्रह्महत्यादावतिव्याप्तिः । सेतुं दृष्ट्वेति वचनाच्चाक्षुषत्वेनैव तस्य जनकत्वेन साक्षात्कारत्वेनाजनकत्वात् । यद्यपि दृशिः साक्षात्कारसामान्येपि प्रयुज्यते तथाप्यंधो घटं पश्यतीति स्वारसिकप्रयोगाभावात् दृशिश्चाक्षुष एव निरूढ इति प्रथमोपस्थितलाघवात्तस्यैव ग्रहणं युक्तं । नच शुक्तिज्ञानमपि चाक्षुषत्वेनैव निवर्तकं अन्यथा शुक्तिस्पार्शनेऽपि तत्रारोपितरजतनिवृत्त्यापत्तेरिति वाच्यं । तत्र त्वगिंद्रियेण शुक्तित्वप्रकारकस्पार्शनानुदयेन द्रव्यत्वादिप्रकारकेदंत्वावगाहिचाक्षुषस्येवाधिष्ठानतत्वाप्रकारकत्वेन तस्यानिवर्तकत्वेऽपि क्षत्यभावात् । अन्यथा त्वचा वन्हिप्रत्यक्षेऽपि चक्षुषा वन्ह्यन्यत्वग्रहापत्तेः । क्वचिद्भिन्नेंद्रियजन्यप्रत्यक्षस्याप्रतिबंधकत्वानुभवश्च तस्याप्रामाण्यग्रहानुरोधात् । तत्र व्यंजकाभावेनाधिष्ठानतत्वास्फुरणाद्वा स्फुरणे तु भ्रमनिवृत्तिर्भिन्नेंद्रियजन्यज्ञानेनापीष्टैव तथैवानुभवात् । न चोपादानसाक्षात्कारत्वावच्छिन्नजनकताकप्रवृत्त्यात्मकनाशप्रतियोगिनि तत्प्रागभावेऽतिव्याप्तिरिति वाच्यं । प्रागभावानंगीकारात् तथात्वे नाशत्वेन जन्यताया विवक्षणात् । यद्वेतरनिरपेक्षसाक्षात्कारजन्यनाशप्रतियोगित्वं तत् सेतुदर्शनादेः पापनिवर्तकत्वं छत्रपादुकधारणाद्यभावस्वकृतदोषोद्घाटनाद्यनेकनियमजन्यादृष्टसहकृतस्यैव । अन्यथा तन्नियमविधानवैय्यर्थ्यापत्तेः । नच ब्रह्मसाक्षात्कारस्यापि श्रवणादिनियमादृष्टसहकृतस्यैवाज्ञाननिवर्तकत्वात्प्रपंचे तदयोगः । श्रवणादिनियमादृष्टादेः साक्षात्कारोत्पत्तावेव हेतुत्वात् । अन्यथा भाषाप्रबंधादिनार्थज्ञानसंपादनेन साक्षात्कारापत्तेः । नच सेतुदर्शनस्थलेऽपि तथैवास्त्विति वाच्यं । नियमं विनाऽपि सेतुगमनमात्रेण तद्दर्शनस्य सत्वेन व्यभिचारेण नियमादृष्टस्य तत्राहेतुत्वात् । तत्र दर्शनमात्रस्य पापनिवर्तकत्वे दैवादागतयवनादेरपि तत्प्रसंगात् । ननु भवन्मतेऽपि भाषाप्रबंधांतर्गतेनाद्वैतपरेण तत्वमस्यादिवाक्यसमानार्थकेन वाक्येनात्मापरोक्षसंभवेन तत्र श्रवणादिनियमादृष्टाभावात् व्यभिचारः। नचापरोक्षप्रतीतिर्नोदेतीति युक्तं ज्ञानापरोक्षस्य त्वन्मते विषयीभूतब्रह्मस्वाभावाधीनतया तत्वमस्यादिवाक्याधीनाखंडाकारवृत्तेरिव भाषाप्रबंधजन्यवृत्तेरप्यपरोक्षत्वस्यावर्जनीयत्वात् । नच भाषया ज्ञानमेव न जायत इत्युक्तं सर्वानुभवापलापापत्तेः। नच साक्षात्कारे वैजात्यमज्ञाननिवर्तकतावच्छेदकं स्वीकृत्य तदवच्छिन्नं प्रति श्रवणादिनियमादृष्टस्य कारणत्वांगीकारान्न व्यभिचार इति वाच्यं । सेतुदर्शनस्थलेऽपि तथैवांगीकारसंभवेन तत्रोक्तव्यभिचारायोगात् । दैवादागतयवननिष्ठदर्शने उक्तवैजात्यस्याभावेन तद्दोषस्यापि वारणाच्चेति चेन्न । आत्मनो ध्यानसहकृतमनोजन्यसाक्षात्कारविषयत्वाभ्युपगमपक्षे उक्तव्यभिचारानवकाशेन तद्रीत्यैव एतल्लक्षणसंभवात् । सेतुदर्शनेन पापनिवृत्तौ नियमादृष्टस्य सहकारित्वमात्रत्वेन सर्वोपपत्तौ तत्र साक्षात्कारे वैजात्यांगीकारे मानाभावात् । सर्वलक्षणेषु तन्निवर्त्यतदभिन्नतत्प्रयुक्तान्यतमत्वं विवक्षणीयं तेन

* टिप्पणी—कालिकविशेषणताविशिष्टपूर्वत्वसंबंधेन वस्तुत्वेन वा

साक्षाद्ज्ञाननिवर्त्याज्ञानतदुपादानकेषु अज्ञानप्रयुक्तानादिदृश्येष्वपि नाव्याप्तिः । एवं क्रमेण लक्षणत्रयं । एतच्च सत्यवस्तुव्यावृत्तं मिथ्यानिष्ठमेवेति पराभिमान इत्यभिमतं । तदुपर्युक्तशंका संगच्छत एव । तदुपरि समाधानग्रंथस्य तु एतेषामपि लक्षणानां अनुपदं वक्ष्यमाणरीत्या मिथ्यात्वलक्षणत्वायोगात् पराभिमतमन्यदेव। तत्र जगद्ग्रहणं सार्थकमिति भावः । यद्वा नैतान्यपि लक्षणानि पराभिप्रेततया शंककेन ज्ञायंते तेषां विचारासहत्वात् । तथाहि आद्यस्य द्वितीयस्य च सेतुदर्शनजन्यनाशप्रतियोगिपापेऽतिव्याप्तिः । तस्य साक्षात्कारत्वेन निवर्तकत्वात् तस्य ज्ञानत्वव्याप्यत्वाच्च । नच सेतुदर्शनस्य चाक्षुषत्वेन निवर्तकत्वमिति न द्वितीयलक्षणातिव्याप्तिरिति वाच्यं । अंधस्यापि तत्स्थानं प्रति भक्त्यादिपूर्वं गंतुः ब्रह्महत्यादिनिवृत्तिदर्शनेन चाक्षुषस्पार्शनसाधारणसाक्षात्कारत्वस्यैव जनकतावच्छेदकत्वौचित्यात्। दृशेश्चाक्षुषे व्यवहाराधिक्यमात्रेण चाक्षुषस्यैव ग्रहणे 'दृष्ट्वैव तं मुच्यते नापरेण' 'द्रष्टव्यः श्रोतव्यो मंतव्यः' इत्यादिश्रुतावपि दृशिग्रहणात् ब्रह्मचाक्षुषत्वेनैव प्रकृतेऽज्ञानादिनाशकत्वापत्त्या जगत्युक्तलक्षणाभावः स्यात् । नच 'विद्वान् नामरूपाद्विमुक्तः तमेवं विद्वानमृत इह भवति' इति श्रुतौ ज्ञानसामान्यग्रहणान्न चाक्षुषस्यैव हेतुत्वं युक्तमिति वाच्यं । सामान्यस्य विशेषवाक्यानुसारेणैव पर्यवसानस्य कर्तव्यत्वात् । अन्यथा परोक्षज्ञानापातवाक्यजनितज्ञानेनाऽपि मुक्त्यापत्तेः । नच रूपहीनं ब्रह्म कथं चाक्षुषे स्फुरतीति वाच्यं । चित्रावयविनि रूपानंगीकारपक्षे तदीयमहत्वादेरेव शक्तिविशेषेण चाक्षुषादिकारणत्ववदत्रापि महत्वे वा चक्षुःसंयोगे वा तादृशशक्तिस्वीकारेणोपपत्तेः । नच 'यच्चक्षुषा न पश्यति न चक्षुषा पश्यति कश्चिदेनं' इत्यादिश्रुतिविरोधात् कथं तच्चाक्षुषमिति वाच्यं । नीरूपस्यापि ब्रह्मणः कालवच्चाक्षुषस्य त्वया भाषितत्वेन श्रुतिविरोधस्य त्वयैव परिहर्तव्यत्वात्। सत्वोपहितं दृश्यते शुद्धं तु न दृश्यते इति मयोच्यत इति चेत् द्रष्टव्य इत्यादिश्रुतिस्वारस्याय केवलचक्षुषा न दृश्यत उपनिषदर्थश्रवणमनननिदिध्यासनावासितमनःसंयुक्तेन चक्षुषा दृश्यत इत्यपि विरोधस्य परिहर्तुं शक्यत्वात् । एतेन ब्रह्मण औपनिषदत्वोक्तिरपि न प्रतिकूला । सगुणस्य दिव्यचक्षुषा दर्शनस्य दिव्यं ददामि ते चक्षुरित्यादिना गीतादावभिहितत्वेन तदनातिदूरस्य निर्गुणस्यापि तथात्वौचित्याच्च । एवमपि तच्चाक्षुषानंगीकारे 'यद्वाचाऽनभ्युदितं' 'यतो वाचो निवर्तंते' 'यन्मनसा न मनुते' इत्यादिश्रुतिभिः वाङ्मनसागोचरत्वावगमेन शाब्दापरोक्षाविषयत्वं मानसापरोक्षाविषयत्वं च न स्यात् । तत्र संकोचेऽत्र किं न स्यात् । प्रत्युत दृशिग्रहणसामर्थ्याच्चाक्षुषविषयत्वाभ्युपगम एव युक्त इत्युक्तं । एवं प्रियवस्तुदर्शनस्पार्शनसाक्षात्कारमात्रेण तद्विरहजनितदुःखनिवृत्तिदर्शनात्तत्रापि तद्वस्तुसाक्षात्कारत्वावच्छिन्नकारणताकनाशप्रतियोगिदुःखेऽतिव्याप्तिः। एवं 'तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयते एवमेव हैवं विदि सर्वे पाप्मानः प्रदूयंते' इति श्रुत्या 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन' इत्यादिवचनैर्ब्रह्मसाक्षात्कारत्वेनाप्रारब्धकर्मनाशकत्वस्योभयमतसिद्धत्वात्तादृशकर्मस्वतिव्याप्तिश्च । एतेन तृतीयलक्षणमप्यपास्तं। प्रियवस्तुसाक्षात्कारातिरिक्तासाधारणकारणांतरस्य दुःखनिवृत्तौ ब्रह्मसाक्षात्कारातिरिक्तासाधरणकारणांतराणां अप्रारब्धनिवृत्तौ अनुपलंभेन तत्र तत्रोभयस्मिन्नप्यतिव्याप्तेः। साधारणकारणविवक्षायां तु अज्ञाननिवृत्तेरपि कार्यत्वेनादृष्टेश्वराद्यपेक्षया ज्ञानशुक्तिरजतादिषु लक्षणगमनासंभवः। मोक्षस्यापीश्वराधीनत्वश्रवणात् । ब्रह्मसाक्षात्कारसाध्याज्ञाननिवृत्तिमादाय जगत्यप्युपपादयितुं अशक्यत्वाच्च । अपि च प्रारब्धनाशात्प्रतिभासनाश इति स्मृत्या सविलासाज्ञाननाशे ब्रह्मसाक्षात्कारेण जननीये प्रारब्ध-

कर्मरूपप्रतिबंधाभावरूपासाधारणकारणस्य श्रवणात्तन्निरपेक्षसाक्षात्कारजन्यत्वाभावाज्जगत्यव्याप्तिः। एवं चित्रलिखितसिंहचाक्षुषसाक्षात्कारेणेतरानिरपेक्षेण रोगविशेषनिवृत्तिदर्शनात्। कूर्मेक्षणमात्रेण तच्छिशुक्षुधानिवर्तनदर्शनाच्च। तत्राप्युक्तलक्षणातिव्याप्तिरेव। एवं दूरदशगमनादिनियमादृष्टस्य साक्षात्कारे नातिशयाधायकत्वं। साक्षादेव पापनिवृत्तौ हेतुत्वं ब्रह्मसाक्षात्कारे श्रवणादिनियमादृष्टस्योपयोगो न तज्जन्यफले उपयोग इत्यस्य नियंतुमशक्यत्वेन सेतुदर्शननिवर्त्यपापातिव्याप्तेरपरिहारश्चेति। यत्तु अत्र लक्षणे साक्षात्कारत्वावछिन्नकारणतेत्यस्य साक्षात्कारत्वव्याप्यकारणतेति विवक्षणात् शुक्तिचाक्षुषत्वेन तन्निवर्त्यत्वेपि शुक्तिरूप्येन बाध्यत्ववैकल्यमिति तदप्यसत्। उक्तस्थलेष्वतिव्याप्तेरपरिहारात् इतरनैरपेक्ष्येणेति विवक्षोत्तरं साक्षात्कारत्वव्याप्यत्वस्य कारणतायां निवेशे प्रयोजनाभावाच्चेति। एवं गुरुचंद्रिकोक्तरीत्या आधुनिकपरिष्कृतलक्षणद्वयमप्यनभिमतं विचारासहत्वात्। तथाहि ज्ञानप्रयुक्तताव छेदकीभूतध्वंसत्वानिरूपकत्वं ज्ञानप्रयुक्तस्वसमानसत्ताकस्वनिष्ठतादात्म्यं प्रतियागित्वावछिन्नप्रतियोगिताकाभावकत्ववत्प्रतियोगित्वं वा लक्षणं। ज्ञानात् सर्वं दृश्यं नष्टमिति विद्वद्व्यवहारानुरोधेन तत्वज्ञानस्य तदधिकरणचरमक्षणस्य वा स्वस्वेतरसकलदृश्यनाशरूपत्वाभ्युपगमात्। तन्निष्ठध्वंसत्वरूपानुयोगितानिरूपकत्वं सर्वदृश्येषु वर्तत इति लक्षणसंगतिः। द्वितीये जगन्मात्रस्य ब्रह्मनिष्ठतादात्म्यप्रतियोगित्वात्तस्य जगत्समसत्ताकत्वात्तदवछिन्नप्रतियोगिकाभावो ज्ञानप्रयुक्त एव। तत्प्रतियोगित्वं जगति शुक्तिरूप्यनिष्ठतत्समसत्ताकशुक्त्यनुयोगिकतादात्म्यप्रतियोगित्वावछिन्नप्रतियोगिताकाभावोऽपि बाधप्रयुक्त इति तत्प्रतियोगित्वं शुक्तिरूप्यादाविति लक्षणसंगतिः। घटादिनिष्ठकपालाद्यनुयोगिकतादात्म्यप्रतियोगित्वावच्छिन्नप्रतियोगिकाभावस्य मुद्गरपातादिप्रयुक्तस्याभावप्रतियोगिनि मिथ्यात्वाव्यवहाराद्ज्ञानप्रयुक्तेति रजतेऽपि शुक्तितादात्म्यस्य जगत्यपि ब्रह्मतादात्म्यस्य परस्पराध्यासानुरोधादावश्यकतया ज्ञानप्रयुक्तदवाछिन्नाभावप्रतियोगिनि ब्रह्मणि शुक्तौ च तद्वारणाय स्वसमानसत्ताकेतितादात्म्यविशेषणं स्वसमानसत्ताकत्वं ब्रह्मान्यविषयकज्ञानबाध्यत्वतदभाववत्वान्यतररूपेण स्वसजातीयत्वमत एतदर्थापत्यादिप्राक् सत्त्वत्रैविध्यादेरद्यापि अप्रसिद्धावपि नोक्तबाध्यत्वाप्रसिद्धिरिति। तत्राद्यलक्षणं पूर्वोक्तक्रमेण सेतुदर्शनादिनिवर्त्यपापादिष्वतिव्याप्तं। नच पूर्वोक्तसर्वस्थलेषु सेतुदर्शनादिना पापादिस्थूलरूपं निलीनमेव भवति। सत्कार्यवादाभ्युपगमेन सृष्टिप्रलयादावनुगतं किंचित्कार्यरूपं संस्काराभिधमस्माकमपि सांख्यानामिवानुमतं। तस्य च सांख्यमतेनानुच्छेदोऽस्मन्मते च विद्वान्नामरूपाद्विमुक्तः ज्ञात्वा देवं विमुच्यते सर्वपाशैरित्यादिश्रुतिप्रामाण्यात् ज्ञानेन ध्वंसरूपोच्छेदः स्वीक्रियते। तथाचेदानीं पापादिनिरूपितं ध्वंसत्वं न कुत्रापि येन सेतुदर्शनादिकार्यतावच्छेदकं स्यात्। शुक्तिरजतादेस्तु बाधोदयात् प्राक् चक्षुर्निमीलनादिना तिरोधानमेव। बाधेन तु नाश एव पुनरप्रतीतिस्तत्र ज्ञानप्रयुक्ततावच्छेदकध्वंसत्वनिरूपकत्वस्य शुक्तिरजतादौ सत्वात्तत्र मिथ्यात्वव्यवहारः। पूर्वोक्तातिव्याप्तिस्थलेषु ज्ञानप्रयुक्ततावच्छेदकध्वंसत्वनिरूपकत्वस्य सेतुदर्शनात्तिरोहितत्वज्ञानेऽप्यगृहीतत्वान्न मिथ्यात्वव्यवहारापादनमिति वाच्यं। इदानीमपि सेतुदर्शनेन पापादिकं नष्टं। अपरोक्षदर्शनेनाप्रारब्धकर्मादि नष्टमित्यादि विद्वद्वैदिकव्यवहारप्रामाण्यानुरोधेनेदानीं तस्य नाशस्यैवाभ्युपगमात्। तिरोधानमात्रांगीकारे शुक्तिरजतादीनामपि नष्टमुत्सन्नमित्यादिलौकिकप्रतीत्यातिरिक्तप्रमाणाविषयत्वेन तस्य च तिरोधानविषयतायास्त्वदभिमतत्वेन ध्वंसासिद्ध्या तत्रोक्तबाध्यत्वासिद्ध्या सद्विलक्षण

त्वसित्ध्ययोगात्। किंच जगत्यपि तादृशनाशः कथं सिध्यति नामरूपाद्विमुक्त इत्यादिश्रुतेः। तद्विश्लेषमात्रविषयकत्वेनोपपत्तेः। मुचेस्तादृशध्वंसार्थकत्वाग्रहे 'रथस्थं केशवं दृष्ट्वा सर्वपापैः प्रमुच्यते' इति आदिप्रमाणानुसारेण पापादेरपि दर्शनेन ध्वंसो दुर्वारः। अर्थवादवाक्यमेव दर्शनस्तुतिपरं न स्वार्थपरमिति चेत्विद्वानित्यादिवाक्यमपि तथा किं न स्यात्। स्तुतेरपि फलपर्यवसानं विना निरर्थकत्वात्। ब्रह्मज्ञानफलदर्शकमिदं स्वार्थपरमित्येतदपि तादृशकेशवदर्शनफलपरमिदमपि स्वार्थपरमेवेति समानमेव। तादृशार्थवादेन विधिसिद्धेस्तस्य निष्फले अयोगात्। तस्मादयुक्तमेवाद्यलक्षणं। द्वितीयमपि न युक्तं। रजतनिष्ठशुक्त्यनुयोगिकतादात्म्यप्रतियोगित्वावच्छिन्नाभावस्य तदधिकरणत्वस्य वा शुक्तौ सदा विद्यमानस्यैव बाधेन विषयकिरणमात्रस्य कृतत्वेन तादृशाभावस्य ज्ञानप्रयुक्तत्वोक्तेरत्यंतासंभावितत्वात्। जगदभावस्यात्मस्वरूपस्य तदन्यत्वेऽपि तत्र सर्वदावृतत्वेन विद्यमानस्य ज्ञानप्रयुक्तत्वायोगात्। अन्यथा तस्य त्रैकालिकत्वानुपपत्त्या त्रैकालिकेत्यादिलक्षणासंभवापत्तेः। नहि तद्विषयत्वमात्रेण तत्प्रयुक्तत्वं चरमवृत्तिविषयस्यात्मनस्तत्प्रयुक्तत्वापातात्। नच ज्ञानाद्रजतमुच्छिन्नं विद्वान्नामरूपाद्विमुक्त इत्यादिप्रतीतिश्रुतिभ्यः सार्वकालिकाभावं प्रति ज्ञानस्य प्रयोजकत्वमवगम्यते। धनवान् सुखीत्यादौ धनसुखयोरिवोद्देश्यतावच्छेदकविधेयभावमहिम्ना विद्वत्तानामरूपविमोचनरूपोक्ताभावयोः प्रयोज्यप्रयोजकभावबोधनेन सार्वकालिकेप्यागंतुकप्रयोज्यत्वं स्वीक्रियते प्रमाणावगते कथंतायोगादिति वाच्यं। ध्वंसाद्यर्थकत्वस्यैव तत्र स्फुटमवभासेन त्वदुक्तार्थस्य कथमप्यलाभात्। अन्यथोक्तरथस्थं केशवं दृष्ट्वेति वाक्यस्यापि तादृशार्थकताया * दुरपन्हवतयोक्तातिव्याप्तेर्दुर्वारत्वापातात्। यदपि साजात्यघटकतया ब्रह्मान्यविषयकज्ञानबाध्यत्वं निविष्टं तदप्येतद्रूपंचेत् आत्माश्रयः। एतत्सजातीयांतरघटितंचेत् अनवस्था। शुक्त्यादिव्यावृत्तमन्यदर्शंचेत् तस्यैव ज्ञानमात्रं निवेश्य सर्वसाधारण्येन परिष्कर्तुं शक्यत्वात्प्रयासस्य बकबंधतुल्यत्वात्। तस्मात् ज्ञानप्रयुक्तं स्वस्वीयसंस्कारोभयध्वंसकत्वमेव लक्षणं पराभिमतमिति शंककस्याभिमतं। चरमक्षणस्य स्वस्वेतरसकलदृश्यनाशत्वं स्वीक्रियते यद्वा तत्वसाक्षात्कारस्य स्वेतरदृश्यनाशरूपत्वं स्वनाशत्वं च स्वद्वितीयक्षणावच्छेदेन स्वीक्रियते तथा च ज्ञानप्रयुक्तस्य चरमनाशस्य सर्वपदार्थतत्संस्कारनाशरूपत्वात्सर्वत्र लक्षणसंगतिः। शुक्तिसाक्षात्कारेण रजतस्य संस्कारसहितस्य नाशात्तत्रापि लक्षणसंगतिः। सर्वेषामपि पदार्थानां स्वसूक्ष्मावस्थारूपसंस्काराभ्युपगमान्न घटादावप्रसित्ध्या व्याप्तिः। सेतुदर्शनजीवन्मुक्तिकालीनब्रह्मसाक्षात्कारादिभिः पापप्रारब्धकर्मप्रभृतीनां स्वरूपेण नाशेपि संस्काररूपेणावस्थानान्न तेष्वतिव्याप्तिः। विदेहकैवल्यप्रापकचरमसाक्षात्कारस्यैव सकलदृश्योच्छेदकत्वात्। नच विद्वान्नामरूपाद्विमुक्त इति श्रुतौ मुचेःप्रयोगबलात् संस्कारनामरूपनाशस्य ज्ञानप्रयोज्यत्वांगीकारे 'रथस्थं केशवं दृष्ट्वा सर्वपापैः प्रमुच्यते' 'सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यामपोहति' 'एवं हैवास्य सर्वे पाप्मानः प्रदूयंते' इति श्रुतिबलात् पापादीनामपि ससंस्काराणामेव नाशसित्ध्यापत्त्या तत्रातिव्याप्तिः पूर्वोक्तलक्षणेष्विवात्रापि दुर्वारेति कथमेतल्लक्षणं शंककाभिमतमिति वाच्यं। ज्ञात्वा देवं मुच्यते सर्वपापैः

* टिप्पणी—ब्रह्मनिष्टतादृशान्यतररूपांतर्गताभावात्मकरूपेण तत्सजातीयं यत्संनिकृष्टजगदनुयोगिकतादात्म्यप्रतियोगित्वं तदवच्छिन्नाभावप्रतियोगिनि ब्रह्मणि अतिव्याप्तिस्तु तस्य व्यतिरेकप्रतियोगित्वव्यवस्थापनं विना न वक्तुं शक्येति तदुपेक्षा.

( टीका ) नहि ज्ञाननिवर्त्यत्वं नाम ज्ञानेन विनाशः परस्याभिमतः

---

रिति श्रुतौ सर्वपदस्यासंकुचितवृत्त्यनुरोधेन स्थूलसूक्ष्मसर्वबंधनाशस्य ज्ञानप्रयुक्तत्वाव-गमात्। तत्समाख्यया विद्वानित्यादिश्रुतीनामपि तादृशार्थकत्वात् प्रकृते संस्कारसहि-तस्य ज्ञानेन नाशसिद्धावपि पापादिपदानां स्थूलावस्थापन्नवस्तुवाचितया सर्वपदसमभि-व्यवहारेपि संस्कारनाशासिध्या तत्प्रतिबंदेरनवकाशेन पूर्वोक्तातिव्याप्तेरत्रानवकाशादित्य भिप्रायात्। अत्रोत्तरज्ञाननाश्ये पूर्वविशेषगुणऽतिव्याप्तिवारणाय स्वीयसंस्कारनिवेशः। स्मृतिनाश्यस्वसंस्कारकानुभवातिव्याप्तिवारणाय स्वनिवेशः। स्मृतेः संस्कारानाशकत्वे स्वेति न देयं। ज्ञानप्रयुक्तस्वसंस्कारध्वंसकत्वमात्रस्य सम्यक्त्वात्। एवं चैतल्लक्षणं स्वमते कुत्रापि जगति नास्ति यथा तथा शुक्तिरजतादावपि नास्तीति किं जगद्ग्रहणेनेति शंका युक्तैवेति समाधत्त मैवमिति । नहीति । हीत्यनेन पराभिमतत्वाभावे बाधकानां स्फुटत्वं सूचयति । तथाहि । यस्य क्षणस्य सर्वदृश्यप्रतियोगिकत्वं ध्वंसत्वं स्वीक्रियते तस्य स्वप्रतियोगिकत्वं स्वीक्रियते नवा । आद्ये स्वस्य स्वप्रतियोगिकध्वंसत्वांगीकारे ध्वंसप्रतियोगिनारेककालवृत्तित्वायोगात् । स्वात्मक-प्रतियोग्यधिकरणकालस्य स्वात्मकध्वंसवत्वांगीकारे स्वव्याहतिः। प्रतियोग्यधिकरण-कालवृत्तेर्ध्वंसत्वांगीकारे तस्य पारिभाषिकतापत्तेः । नच प्राभाकरमते ज्ञानप्रागभाव-ध्वंसयोरात्मस्वरूपतया ज्ञानाधिकरणकालस्यैवात्मरूपतत्प्रागभावध्वंसवत्वांगीकारान्नायं विरोधः संमत इति वाच्यं। ज्ञानेच्छाधर्मादिकालेऽपि तन्नाशभाविष्यत्वयोः प्रतीतिप्रामाण्य वारणायात्मन्यनुयोगितारूपध्वंसत्वप्रागभावत्वयोः सामग्रीनियम्यत्वानादित्वयोः स्वीका-रात् तद्विशिष्टाधिकरणकालस्य प्रतियोग्यधिकरणत्वाभावनियमाक्षतेः । नच प्रकृतेऽपि तथाऽस्त्विति वाच्यं। सर्वदृश्यनिरूपिताया एवानुयोगितायाः स्वनिरूपितत्वात्तद्विशिष्ट-स्वनिरूपिताधिकरणकालस्य दृश्यत्वरूपप्रतियोगितावच्छेदकविशिष्टस्वनिरूपिताधिकर-णत्वस्वीकारध्रौव्येण व्याहतेरपरिहारात्। नच तत्क्षणरूपध्वंसे दृश्यत्वतादृशानुयोगि-तयोः सत्वेप्यन्यतरस्य कालनिरूपिताधेयतावच्छेदकत्वानंगीकारात् न व्याहतिरिति वाच्यं। तादृशानुयोगित्वावच्छिन्नाधिकरणतानंगीकारे विरोधिनोऽभावात् सर्वदृश्याना-मपि तत्क्षणस्येवानुवृत्तिप्रसंगः। तत्काले दृश्यत्वावच्छिन्ननिरूपकताकविलक्षणाधिकरणता न स्वीक्रियते इत्येतदसंगतमेव । तदुपलक्षिताधिकरणतातिरिक्तद्विशिष्टाधिकरणतायां मानाभावादंगीकारे वा प्रकृते तत्सत्वाभावे बीजाभावात्। आधेयदृश्ये दृश्यत्वसत्तातिरि-क्तनियामकस्य निरूपयितुमशक्यत्वात्। स्वस्य स्वप्रतियोगिकध्वंसत्वानंगीकारे तस्य ध्वंसां तरानंगीकारे आत्मवदनुवृत्तिप्रसंगेन नित्यत्वं स्यात्। ध्वंसाभावेऽपि नानुवृत्तिरित्येतद्बा लभाषणं अननुवृत्तिपदार्थानिरूपणात्। ध्वंसांतरांगीकारे तस्याप्युच्छेदाभावे पुनर्दृश्यसा-मान्योच्छेदरूपमोक्षासिद्धिः उच्छेदे तस्याप्येवमित्यनवस्था। आत्मैव सर्वदृश्यनाश इति चेत् तत्र विद्यमानसर्वदृश्यत्वध्वंसत्वरूपानुयोगितायाः ध्वंसांगीकारानंगीकारयोरुक्तदूष-णगणापरिहारात्। उत्तरोत्तरध्वंसानां नाशकसामग्र्यनिरूपणाच्च। यत्तु चरमक्षणश्चरमवृ-त्तिर्वा स्वस्वेतरसर्वदृश्यप्रतियोगिकध्वंसत्वेनांगीक्रियते तथापि न व्याहतिः। प्रतियोग्याधि करणकालपूर्वस्य प्रतियोग्यधिकरणकालपूर्वकालसामान्यस्य वा तत्ध्वंसत्वविशिष्टाधिकर-णत्वाभाव इति वादिद्वयसिद्धनियमेन निखिलातिप्रसंगवारणसंभवे ध्वंसांतराकल्पने लाघ वेन त्वदुक्तिनियमस्यानादरणीयत्वादिति तत्तुच्छं। नियमो हि तद्ग्राहकप्रमाणानुसारेणैव

कल्प्यः न त्वन्मनोनुसारेण। इत्थं च लोके यदि कश्चिदपि ध्वंसत्वविशिष्टः सन् प्रतियोग्यधिकरणकाले वर्तमानस्तदधिकरणकालपूर्वसामान्ये ऽवर्तमान उपलभ्येत तर्हि तदनुसारेणास्मदुक्तनियमं परित्यज्य भवदुक्तनियमः स्यात् न चैतत्कुत्रापि दृष्टचरं। प्रतियोगितद्ध्वंसौ मिलिताविदानीं स्त इति कस्यापि प्रत्ययाभावात्। नच प्रतियोगिनः प्रागभावनाशकतामते प्रागभावतद्ध्वंसरूपप्रतियोगिनोरेकक्षणे मेलनमस्तीति वाच्यं। तन्मते प्रतियोगिनस्तद्ध्वंसरूपत्वाभावेनातिरिक्तस्यैव द्वितीयक्षणे उत्पत्त्यंगीकारेणास्मदुक्तनियमाक्षतेः। अन्यथा स्वस्यैव स्वोपधायकतापत्तेः। नच प्रकृतस्थलानुसारेणैव त्वदुक्तनियमस्त्यज्यत इति युक्तं। तथा सति सर्वव्यवस्थायाः स्वाभ्युपगमनिबंधनत्वापत्तेः। नच चरमक्षणादिरूपध्वंसस्य ध्वंसांतराकल्पनालाघवमेवैतान्नियामकमिति युक्तं। अन्यत्रापि तथात्वापत्तेः। नच ज्ञात्वा देवमिति श्रुत्या सर्वदृश्यानां युगपन्नाशावगमात्तन्निर्वाहायाद्वितीयत्वादिश्रुत्युक्ताद्वितीयत्वादिनिर्वाहाय चैतत्सर्वं कल्प्यत इति वाच्यं। ज्ञात्वा देवमिति श्रुतौ पाशशब्दितदुःखसाधनानामेव नाशश्रवणेन सर्वनाशानवगमात्। अन्यथा पाशपदवैयर्थ्यापत्तेः। न चात्मव्यावृत्त्यर्थं पाशपदमिति युक्तं। तत्संबंधं विना जडानां दुःखाजनकत्वात्। जडवदात्मनोऽपि दुःखप्रयोजकतया पाशपदेनापि तदव्यावृत्तेः। ज्ञात्वेत्यादिश्रुतिभिः ज्ञानोत्तरमेव दृश्यनाशावगमेन ज्ञानस्य सर्वदृश्यनाशरूपताया अनेन वाक्येनाप्रत्ययाच्च। समानकालीनत्वस्य त्वाप्रत्ययार्थस्य क्वचिदृष्टत्वेन तत्समानकालिकत्वस्य मोचनशब्दितनाशे बाधनेन तत्वज्ञानतादृशनाशयोरैक्यं प्रतीयते। समानकालीनयोरेकस्यापि वा रूपभेदेन प्रयोज्यप्रयोजकभावः स्वीक्रियत इति एतत्स्वमनोरथाप्तये श्रुतिमातुः कचाकर्षणमात्रं। कर्मणा ज्ञानमातनोति ज्ञानेनामृतीभवतीत्येवंजातीयकश्रुतिपुराणादेर्बहुशः उपलंभेन तेन कार्यकारणभावस्यैव प्रतीत्या तदभेदाप्रत्ययात्। उक्तप्रयोज्यप्रयोजकभावाभ्युपगमश्च स्वेच्छामात्रमूलकः। अत एव विद्वान्नामरूपाद्विमुक्त इत्यादौ ज्ञानसामग्रीवल्लक्षकं विद्वत्पदं नामरूपविमोचनरूपज्ञाने तत्प्रयोज्यत्वमुद्देश्यतावच्छेदकविधेयभावमहिम्ना भासते। एवं ज्ञात्वेत्यादिस्थलेऽपि। एवं च त्वाप्रत्ययस्य प्रचुरप्रयोगसिद्धोत्तरकालिकत्वस्याप्यपरित्यागः इत्यपि प्रत्युक्तं। स्वेच्छामात्रेण निर्निमित्तं लक्षणांगीकारे ब्रह्मपरवाक्यस्यापि शून्ये लक्षणाया उक्तवाक्ये एवमुक्त इत्यादेरात्महानिरूपमोक्षलक्षकत्वादेरपि संभवेन लाघवेन शून्यवादस्यैव श्रुत्याभिप्रेतत्वप्राप्तेः। नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमित्यनेन नामरूपविमोचनोत्तरं पुरुषप्राप्तिरूपक्रियाश्रवणात्तस्यैव सर्वदृश्यनाशत्वे तदुत्तरत्र क्रियाश्रवणानुपपत्तेश्च। अधिकमन्यत्रानुसंधेयं। अद्वितीयश्रुतीनामनिर्वचनीयसिद्धेः प्राग्व्याहत्या अलब्धात्मनां नैतच्छ्रुत्यनुग्राहकत्वं। अणोरणीयानित्यादिश्रुतीनां व्याहत्यभावात्परेषां ब्रह्मकारणत्वादिश्रुतीनामिवापूर्वार्थत्वात्स्वार्थपरत्वानिश्चयात्तदुपपादकतया प्रमाणांतरसिद्धाचिंत्यशक्तिराश्रियत इति नास्माकं त्वन्मत इव प्रकृतवाक्यार्थसिद्ध्यर्थमेवाप्रामाणिकव्याहतपरंपराश्रयणमित्याद्याकरे व्यक्तं। लाघवायैव प्रकृते लोकासिद्धं प्रतियोगिध्वंसयोरसमानकालिकत्वानियमं परित्यज्य नियमांतराश्रयणे लोकसिद्धं कारणस्य साक्षात् व्यापारघटितसंबंधेन वा कार्याव्यवहितप्राक्क्षणवृत्तित्वं परित्यज्योभयसिद्धं कारणस्य कार्योत्तरकालानुत्पन्नत्वमात्रनियममंगीकृत्याभेदे प्रयोज्यप्रयोजकभावादिकमिव व्यवहितस्य फलोपधायकत्वमभ्युपेत्य यागस्वर्गयोः कार्यकारणभावोपपादनसंभवेन अपूर्वकल्पनायाः निर्मूलत्वापत्त्या तद्विलयापत्तेश्च। ध्वंसांतराकल्पने लाघवमितिवत्तदभावाकल्पने लाघवमिति वक्तुं शक्यत्वाच्च। तत्वज्ञानस्य चरमक्षणानां तत्कालीनानंतवायुसंयोगाव्यक्तीनां

वा सर्वदृश्यध्वंसत्वं कल्प्यत इत्यत्र विनिगमकाभावादतिरिक्तध्वंससिद्धेश्च। यदत्र प्रतियोगिप्रागभावयोरिव ध्वंसप्रतियोगिनोरप्यभेदो व्याहत इत्याशंक्य प्रतियोगिदेशनियमाय कल्प्यमानकारणताकप्रागभावस्य प्रतियोगिभेदकधर्मवत्वेनैव सिद्धेरित्युक्तं तदत्यंतमसंगतं। ध्वंसरूपकार्यं प्रति लाघवात् प्रतियोगिरूपप्रागभावस्यैव तद्देशनियमाय कल्पनीयतया प्रतियोगिध्वंसयोरपि भेदवत्वेनैव सिद्धेः। अत्र यदुक्तमधिकं तत्त्वरत्नपरीक्षायां द्रष्टव्यमिति तत्तत्खंडनावसर एवाधिकनिरासेन निराकृतं भविष्यति। यदपि स्वस्य स्वध्वंसत्वं न घटते प्रतियोगिजन्याभावस्यैव ध्वंसत्वादित्याशंक्यानुयोगिताविशेष एव ध्वंसत्वं प्रतियोगिन्यपि कालविशेषावच्छेदेन स्वीक्रियते। जन्याभावत्वस्य ध्वंसत्वे कपालरूपजन्यघटरूपादावतिव्याप्तेः। भावभिन्नत्वनिवेशे घटादीनां स्वप्रागभावध्वंसत्वानुपपत्तेरिति तन्न। प्रतियोगिनि कालविशेषावच्छेदेन ध्वंसत्वाभ्युपगमे प्रतियोगिध्वंसयोरेककालसत्वेनाविरोधितया ध्वंससद्भावेपि प्रतियोग्यनुवृत्तरुत्तरक्षणेषु प्राप्त्या तादृशध्वंसत्वं पारिभाषिकं स्यात्। अन्यथा प्रतियोगिनि सर्वदा विद्यमानप्रमेयत्वाभिधेयत्वादीनां तत्ध्वंसत्वरूपत्वं किमिति नोच्यते। नच प्रतियोगिनि यदा ध्वंसत्वं तदुत्तरक्षणे प्रतियोग्यननुवृत्तिरिति न प्रमेयत्वादीनां तथात्वमिति वाच्यं। तथात्वे उत्तरक्षणे प्रतियोग्यभावेऽवश्यं वाच्ये तस्यैव ध्वंसत्वं सर्वसंमतमस्तु किमर्थमेकस्मिन् क्षणे प्रतियोगिनि ध्वंसत्वस्याप्रमाणिकस्याभ्युपगमः। यथोक्तं। अभूत्वा भवनमुत्पत्तिर्भूत्वाऽभवनं ध्वंस इति त्वदीयचरमक्षणे तत्वज्ञाने वा ध्वंसत्वाभ्युपगमे उत्तरत्र क्षणस्यैवाभावेन त्वन्मते तत्र तदभावस्य वक्तुमशक्यत्वे तादृशतत्वज्ञानचरमक्षणतन्निष्ठध्वंसत्वादिरूपप्रपंचसंबंधेन न शुद्धात्मरूपेणावस्थानरूपमोक्षप्रसक्तिः। न चोपादानगतोत्तरावस्था ध्वंस इति मते कपालाद्यभिन्नतादृशावस्थाविशेषस्य ध्वंसत्वे घटकपालयोरैक्याद्घटेपि ध्वंसत्वमागतमिति वाच्यं। परिणामिन एकत्वे ऽपि तादृशावस्थाविशेषघटादिरूपपरिणामानामत्यंतविलक्षणत्वात्परिणामिनापि भेदाभेदसत्वेनोक्तस्यानुपपत्तेः। अन्यथा कपालमृत्पिंडादिना जलाहरणाद्यापत्तेः लक्षणदूषणमप्ययुक्तं। भावप्रतियोगिकध्वंसस्यैवैतल्लक्षणलक्ष्यत्वात्। अन्यथा घटाभावाभावात्मके घटे अव्याप्त्या नित्यसंसर्गाभावत्वमत्यंताभावत्वं न किं त्वनुयोगिताविशेष एवेति घटस्यैव घटात्यंताभावत्वं स्वीकर्तव्यं स्यात् अविशेषात्। एतेन चरमक्षणतत्संबंधयोरेव परस्परं ध्वंसत्वमिति प्रत्युक्तं। प्रतियोगिध्वंसयोः समानकालीनत्वायोगात्प्रामाणिकत्वादिरूपपूर्वोक्तदोषाणामविशेषात्। तस्मात्ध्वंसस्य तत्वज्ञानजन्यतापक्षाश्रयणेन परिष्कारो न युक्त एव। अपि च संस्कारस्य संस्काराभावादनादिजीवेशतद्विभागादीनां संस्काराभ्युपगमे बीजप्रमाणयोरभावाच्च। तेषां स्वीयसंस्काराप्रसिद्ध्या ज्ञानप्रयुक्तस्वस्वीयसंस्कारोभयध्वंसकत्वलक्षणस्याव्याप्तिः सामान्यधर्मावच्छिन्नप्रतियोगिताकध्वंसाभ्युपगमाभावे असंभवश्च। तस्मादुक्तमयुक्तं। एतेन ज्ञानप्रयुक्तोच्छेदप्रतियोगित्वं वा तत् उच्छेदश्च स्वस्वीयसंस्काराधिकरणकालनिष्ठतादृशान्यतराधिकरणकालपूर्वत्वाभाव एव। तत्प्रतियोगित्वं च परंपरया तन्निरूपकत्वं। तथा च स्वस्वीयसंस्काराधिकरणकालनिष्ठतदन्यतराधिकरणकालपूर्वत्वाभावकत्वं पर्यवसितमिति परास्तं। अनादिदृश्यसंस्कारतत्वज्ञानतत्समानकालिकवायुसंयोगादिष्वव्याप्तेः तत्वज्ञानतत्समानकालिकानामुत्तरक्षण एवोच्छेदेन तन्नाशोत्तरविद्यमानतत्सूक्ष्मरूपसंस्कारप्रसिध्यभावात्। अपि चोच्छेदरूपतादृशाभावस्य नाशो वर्तते न वा। नाद्यः। तन्नाशस्यापि नाशांतराभ्युपगमे अविश्रांतनाशधारापत्त्या न कदापि शुद्धात्मस्वरूपमोक्षाशा। क्वचिद्विश्रांतौ तस्यैव नाशाभावेनात्मस्वरूपारोपिततया सिद्ध्या न निष्प्रपंचब्रह्म-

रूपावस्थितिरिति पूर्वोक्त एव दोषः। अविद्यानिवृत्त्युत्तरमपि प्रतीयमानानां तेषां उच्छेद-काभावादात्मस्वरूपमात्रानुबंधित्वाच्च कदाचिदप्यनिवृत्तेश्च। नद्वितीयः। तस्यैव नाशेनोत्तरत्रापि अनुवृत्त्या स्वपदेनोपादेये तस्मिन् स्वस्वीयेत्यादिलक्षणगमनायोगः। स्वाधिकरणक्षणे तादृशान्यतराधिकरणीभूतक्षणपूर्वत्वसत्वात्। दृश्याधिकरणक्षणे दृश्याधिकरणक्षणपूर्वत्वाभाव एवोच्छेद इति सामान्यतो दृश्यत्वेन निवेशेन परिष्कारे तादृशोच्छेदरूपाभावस्य नाशानाशपक्षद्वयेऽप्युक्तलक्षणाव्याहतेः तद्रूपस्य दृश्यस्य तन्नाशरूपदृश्यस्य वानुच्छिन्नतया सत्वात्। ननु तादृशोच्छेदस्य ध्वंसो नास्त्येव। ध्वंसाप्रतियोगित्वरूपं पारिभाषिकं नित्यत्वं घटत्वादीनामिवेष्टं। परंतु चरमक्षणावधितदुत्तरं कार्यजनकादृष्टाभावान्न कस्याप्युत्पत्तिरिति क्षणानामप्यनुत्पत्तिः। इत्थं च न स्वत्वेन घटितलक्षणस्याव्याप्तिः स्वाधिकरणस्य चरमक्षणस्य स्वाधिकारणीभूततत्क्षणनिरूपिततत्पूर्वक्षणप्रसिद्धपूर्वत्वाभाववत्वात्। नापि दृश्यत्वेन सामान्यतो निवेश्य कृतपरिष्कारस्य स्वरूपाप्रासिद्धिरूपव्याहतिः। न चोच्छिद्यमानपदार्थानां ध्वंसप्रतियोगित्वनियमः घटत्वादीनां तु नोच्छेदोऽद्यापि सिद्धोऽस्मत्संमतश्च येन तत्रोक्तनियमस्य व्यभिचारः स्यात्। तथाचोच्छिद्यमानत्वादेव ध्वंसप्रतियोगित्वस्य वर्जनीयतया पूर्वोक्तसर्वदोषो दुर्वार एवेति वाच्यं। स्वाप्नव्याघ्रशुक्तिरजतादीनामुक्तोच्छेदशालिनामपि घटादीनां मुद्गरप्रहारापातादिनेव ध्वंसानुपलंभेन व्यभिचारेणोक्तनियमस्यैवायोगादिति चेन्न। मुद्गरपातादिद्वितीयक्षणे घटानुपलब्धिवत् शुक्तिसाक्षात्काराद्द्वितीयक्षणे जाग्रद्द्वितीयक्षणे वा शुक्तिरजतस्वाप्नव्याघ्राद्यनुपलब्धेः अविशेषाद्घटो नष्ट उच्छिन्नो ध्वस्तो गत इत्यादिवत्। स्वाप्नव्याघ्रबंधादिकं शुक्तिरजतादिकं च नष्टमुत्सन्नं गतं ध्वस्तमिति व्यवहाराविशेषात् एकस्य ध्वंसो अन्यस्य नास्तीत्युक्तेरनिर्वचनीयवादिनः तव साहसत्वात्। नहीतोऽन्यत् घटध्वंससाधकस्य शृंगमस्ति। शुक्तिसाक्षात्काराद्वितीयक्षणे रजताभावसत्वे तस्यैव ध्वंसरूपत्वं पूर्वक्षणे सत्तादात्म्यापन्नतया विद्यमानो यस्तद्द्वितीयक्षणे प्रमीयमाणतत्प्रतियोगिकाभावस्यैव ध्वंसत्वात्। घटादिस्थले ऽप्येतदतिरिक्तविशेषादर्शनात्। तथा च कथमुक्तनियमस्य व्यभिचारः कथं वा तमवष्टभ्य प्राप्तदूषणपरिहारः स्यात्। ननु शुक्तिरूप्यादौ ध्वस्तं गतमित्याकारो मुख्यार्थालंबनः सार्वजनीनः प्रत्ययो नास्त्येव। तथात्वे त्वया तदसत्वं नांगीक्रियेत काचित्कव्यवहारस्तद्ज्ञानध्वंसविषयकः। तथा चाधिष्ठानसाक्षात्कारोत्तरं प्रतीयमानोऽभावो न ध्वंसः तत्कालेऽविद्यमानस्य तदुत्तरक्षणे प्रतीयमानस्यैव ध्वंसत्वात्। अयं तु पूर्वमपि विद्यमान एव। रजतप्रतीत्यपगमे प्रतीयतेऽतोऽत्यंताभाव एव सः। घटादौ तु नैवं। व्यवहारकाले तदुत्तरं ध्वंसस्यैव प्रतीतेर्निर्विवादत्वादिति मत एवैतन्निरुक्तेः कृतत्वात्। तत्रोक्तस्वाप्नव्याघ्रशुक्तिरजतादावुक्तव्यभिचारो युक्त एवेति चेन्न। तर्हि अधिष्ठानसाक्षात्कारः रजतप्रतीतिमात्रविरोधी रजतप्रतीतावपगतायां पूर्वसिद्धरजताभावः स्वयमेव प्रतीयत इत्यागतं। तथा च रजताधिकरणक्षणनिष्ठरजताधिकरणक्षणपूर्वत्वाभावे ज्ञानस्योपयोगाभावेन तादृशोच्छेदस्य ज्ञानप्रयुक्तत्वाभावात्तत्वज्ञानस्थलेऽप्येवं रीतेः सत्वादुक्तलक्षणस्यासंभव एव। नच ज्ञानेन रजतप्रतीतिनिवृत्तौ प्रतीतिमात्रशरीरस्य रजतस्य निवृत्तिप्राप्त्या रजतक्षणे तदधिकरणक्षणपूर्वत्वाभावो लभ्यत इत्यस्त्येव ज्ञानस्योपयोग इति वाच्यं। रजतप्रतीत्यप्रतीतिभ्यामेव रजतस्य क्षणसंबंधासंबंधयोरंगीकारे द्वितीयक्षणे विद्यमानतदसंबंधस्य तत्ध्वंसरूपतयोक्तनियमस्य व्यभिचारायोगात्। प्रतीत्यधीनस्य तात्कालिकस्य वा क्षणसंबंधस्य रजतेऽनंगीकारे च रजताधिकरणक्षणाप्रसिद्ध्या व्याप्तिरसंभवो वा स्यात्। अस्तु वा ध्वंसाभावस्तस्य तथापि स्वस्वीयसंस्कारा

धिकरणक्षणनिष्ठतदन्यतराधिकरणक्षणपूर्वत्वाभावकत्वरूपं * संस्कारघटितं चोच्छिद्य-मानत्वं शुक्तिरूप्यादौ घटादौ च क्रमात् स्वस्वीयसंस्काराभाववत्स्वोत्तरक्षणकत्वस्य स्वाभाववत्स्वोत्तरक्षणकत्वस्य व्याप्यं दृष्टमिति तद्बलादेव त्वदभिमतोच्छेदोत्तरक्षणतद्वृत्त्य भावादिप्राप्तौ तस्याप्युच्छेदपरंपराप्राप्त्या ध्वंसपक्षोक्तदोषः सामान्यतो दृश्यत्वेन घटित-लक्षणस्य स्वरूपालाभश्च दुर्वार एव। न चैवं संसारदशायां स्वाधिकरणक्षणेषु स्वनिष्ठ-बंधाधिकरणक्षणपूर्वत्वाव्यभिचारदर्शनेन तादृशव्याप्तिसिद्धौ तद्बलात् त्वदभिमतमुक्त्य-सिद्धिप्रसंगः। विपक्षे बाधकाभावेन सहचारदर्शनमात्रस्याप्रयोजकतया तत्र व्याप्त्यन-भ्युपगमे प्रकृते ऽपि तथा ऽस्त्विति श्रुतस्त्वदुक्तदूषणावकाश इति वाच्यं। तीर्णोहि सर्वान् शोकान् हृदयस्य भवति ज्ञात्वा देवं मुच्यते सर्वपाशैरित्या द्यनेकमोक्षश्रुतिबाधितत्वेन तादृशनियमानंगीकारात् त्वदभिमतोच्छेदबोधकस्य कस्यापि वाक्यस्याभावेन त्वदुत्प्रेक्षामात्रस्य अनाद्यनंतं जगदेतदीदृक् प्रवर्तते नात्र विचार्यमास्ति गौरनाद्यंतवतीत्यादिजगदनुच्छेदबोधकप्रमाणानुगृहीताव्यभिचारसहचारदर्शनगृहीतनिय-मबाधकत्वायोगात्।प्रामाणिकपरित्यागस्यैव विपक्षे बाधकत्वात्। नहि कार्यकारणभावादि-रेव सर्वत्र व्याप्तिग्राहकः।रसरूपसंख्यापरिमाणपृथिवीत्वद्रव्यत्वादीनां व्याप्त्यसिद्धिप्रसं गात्। अत उक्तदूषणं युक्तमेव। अपिच तत्वज्ञानतत्क्षणतन्निष्ठतादृशक्षणपूर्वत्वाभावरूपोच्छे दादीनां ध्वंसाप्रतियोगित्वं स्वीकृत्य तदुत्तरं क्षणादिरूपदृश्यानुत्पत्तिमात्रेण तपृक्तोच्छे-दापगमे तस्य प्रमेयत्वादिवत् तत्स्थित्यविरोधेन तैस्तत्समानकालिकपदार्थैर्ब्रह्मणः संसृष्ट-तयैवावस्थानान्निष्प्रपंचब्रह्मानंदप्रकाशरूपमोक्षासिद्धिः। नन्वस्त्वेतद्दूषणं लक्षणस्य तु किमागतमिति चेत्।यत्धर्मज्ञानं सदिति व्यवहारविरोधि तत्धर्मस्यैव मिथ्यापदार्थतावच्छेद कत्वेन तदितरस्यातथात्वात् प्रमेयत्वादिवत्तदविरोधिनोऽस्य धर्मस्य मिथ्यापदप्रवृत्ति-निमित्तत्वायोगात् लक्षणत्वानुपपत्तिरेव। मिथ्यापदार्थत्वावच्छेदकस्यैव निर्वाच्यत्वात्। अन्यथा जडत्वमेव मिथ्यात्वमिति कुतो नोच्येत। इतरभेदानुमापकत्वपक्षेपि सर्वथा ध्वंसा प्रतियोगिनः सत्प्रतीतिगोचरस्यापरिछिन्नब्रह्मवदमिथ्यात्वप्राप्त्या अलक्ष्यतायाः अवर्जनी यतया तत्साधारण्स्यैतल्लक्षणस्यातिव्याप्तिरेवोक्त दूषणे पर्यवस्यति। किंच तवा विद्वान् ततः परं न भेदोस्तीति श्रुत्यादिव्यवहाराणां तत्वज्ञानोत्तरं किमपि नास्तीत्यादित्वद्व्यव-हाराणां च प्रामाण्यं न वा। आद्ये तेनैव तत्वज्ञानाद्युत्तरोत्तरक्षणादिसिद्धेस्त्वल्लक्षणव्या-हतिः। अंत्ये मुक्त्यनंतरं किमपि नास्तीत्यस्याप्रामाण्ये तदुत्तरकालादिसद्भावप्राप्त्या-पुनरुक्तव्याहतिः। नचैतद्वाक्यानामुक्तोच्छेदे लक्षणया तात्पर्यांगीकारान्नाप्रामाण्यमिति वाच्यं। उक्तलक्षणया बोधस्य कीदृशार्थमादाय पर्यवसानमिति वादिना शिष्येण वा पृष्टे तदनंतरं किमपि द्वैतं नास्तीत्युत्तररूपत्वद्वाक्यस्यैवेदानीमुक्तविकल्पेन दूषणदानात्। अन्यथा तव मूकत्वं स्यात्। श्रुतीनामपि प्रतीयमानद्वारीभूतबोधविपर्यीभूतार्थे व्यावहा-रिकप्रामाण्यस्याप्यभावे कर्मादिप्रतिपादकवाक्यानां ब्रह्ममात्रलक्षणया तद्बोधकत्वमात्र माहत्य कर्मादावपि व्यावहारिकप्रामाण्यत्यागस्याविशेषेणापत्त्या स्फुट एव नास्तिकवादः। नन्वंगीक्रियत एवास्मद्वाक्यस्य श्रुतीनां च व्यावहारिकप्रामाण्यं तदर्थमाविद्य-कोपि मुक्त्युत्तरकालः स्वीक्रियते। यदा व्यवहारः क्रियते तदा तद्विषयस्य स्वर्गनरकादि वत्सत्वात्। तत्वज्ञानेन सोप्युच्छिद्यत एवेति उक्तोच्छेदनिर्वचनमपि वानुपपन्नमिति चेन्न।

* टिप्पणी।—अस्मन्मते संस्काराभावात्तद्घटितोच्छेदस्य बाधकमुपादाय दोषदानविरहः

तर्हि व्यवहारदशायामेवोक्तनिर्वचनस्य कर्तव्यतया व्यवहारकाल एव बद्धपुरुषाविद्याकल्पिततत्वज्ञानादिरूपद्वयाधिकरणकाले व्यवहारदशायामेव बद्धपुरुषाविद्याकल्पितक्षणत्वकालत्वादिरूपद्वयाधिकारणकालपूर्वत्वस्य व्यावहारिकस्यैव सत्वात्कथं लक्षणसंगतिः । अन्यथा लक्षणांतरेष्वपि व्यवहारदशापन्नपदार्थानादाय दोषो न परिहर्तव्यः स्यात् । न चानयोर्मात्रयापि विशेषोस्ति। नच स कालो बद्धपुरुषाविद्याकल्पितोपि न मायाचित्संबंधाद्यात्मकः स एव लक्षणे निविष्ट इति वाच्यं । तर्हि शुक्तिरजतादिवत्तस्य प्रातिभासिकत्वस्यैव प्राप्त्योक्तश्रुतीनां अप्रामाण्यं दुर्वारं । व्यवहारकाले बाधाभावान्न दोष इति चेन्न । उक्तोच्छेदबोधकश्रुतियुक्त्यादिभिरेव बाधितत्वात् । अन्यथा शून्यवाद्यविद्याकल्पितार्थेषु शून्यवादिवाक्यानामपि व्यावहारिकप्रामाण्यानपाये त्वद्वाक्यानामपि व्यावहारिकप्रामाण्यवत्वेनाविशेषात्तत्खंडनादौ प्रवृत्त्याद्यनुपपत्तेः । एवमिदानीं मुक्त्युत्तरकालस्य कल्पितत्वे इदानीं तदुपलंभप्रसंगः । भविष्यत्त्वेन कल्पनायां भविष्यत्काले तदुपलब्धिप्रसंगात् त्वदुक्तार्थव्याहतेः। * अन्यथा सत्कारणत्वाभाववादिकल्पितार्थनिराकरणाय तद्धैक आहुरित्यादिश्रुतिप्रवृत्त्यनुपपत्तिरित्यादिबहुदोषदुष्टत्वान्न किंचिदेतत् । एतेन ब्रह्माधिकरणकालस्य ब्रह्माधिकरणकालपूर्वत्वाभावसत्वात्तस्यापि उच्छेदापत्तिः । सदेव सोम्येदमग्र आसीदित्यादिश्रुतिस्मृतीनां व्यावहारिकप्रामाण्यरक्षणाय ब्रह्मणोऽपि कालवृत्तित्वाभ्युपगमादिति दूषणमाशंक्य परिहृतं । तदन्योन्याभाववतः तदधिकरणकालस्य तदधिकरणकालपूर्वत्वानधिकरणत्वमुच्छेद इत्युक्तावुक्तदोषाभावात् । ब्रह्मज्ञानोत्तरत्वस्यापि शुद्धे ब्रह्मण्याविद्यकस्याभ्युपगमेन तस्य च ब्रह्माधिकरणकालतया तत्पूर्वभावस्य च तदत्यंतभिन्ने काले क्वाप्यभावादिति निरस्तं । आविद्यकतत्कल्पनापक्षासंगतेरुक्तत्वात् । क्षणादीनां स्वाभाविकत्वे नैय्यायिकरीत्या कालोपाधिरूपसमानकालिकबहुक्षणानां अभावेन स्ववृत्तित्वस्यैव सत्वात् । अन्योन्याभावरूपाविशेषणोपादाने उक्तोच्छेदस्य तत्र वक्तुमशक्यत्वादनुपयोगाच्च ❀ । तद्विशेषणदानस्यासंगतत्वाच्च । नच तत्वज्ञानोत्तरत्वादेराविद्यकस्य ब्रह्मणि कल्पने तदुपहितकालस्य ब्रह्मस्वरूपत्वप्राप्त्या तद्रूपकालस्य ब्रह्माधिकरणीभूतस्य ब्रह्माधिकरणकालपूर्वत्वाभावादुच्छेदापात्तवारणाय तदन्योन्याभावनिवेशसार्थक्यं । भेदमात्रनिवेशे उपहितस्य केवलेन भेदाभेदसत्वात्तद्दोषतादवस्थ्यं स्यादत अन्योन्याभावपदमत्यंतभेदार्थकमिति वाच्यं । ब्रह्मण्याविद्यकस्योत्तरकालसंबंधस्य कल्पनेनैव तत्वज्ञानोत्तरत्वप्रतिपादकश्रुतीनां प्रामाण्यसंभवे कालत्वस्य ब्रह्मणि कल्पने मानाभावात् । अभेदे आधाराधेयभाववारणाय पुनस्तत्र भेदकल्पनाया आवश्यकत्वे प्रथमत एव भिन्नकालसंबंधस्यैव कल्पयितुमुचितत्वात् । अन्यथा सांसारिककालत्वस्यापि वैरूप्यपरिहाराय ब्रह्मण्येव कल्पनापत्त्या सर्वत्रासंभव एव स्यात् । मुक्तौ जडाभावादेव लक्षणसंगतिरिति चेत्तर्हि स्वपदेन ब्रह्मग्रहणस्य कर्तुमशक्यत्वादेव सर्वदोषवारणसंभवात् स्वदुपपादनस्यानुपयोगापत्तेः । नच भिन्नकालकल्पने उक्तविवक्षया ब्रह्मोच्छेदरूपदोषस्य परिहारायोगादेवं कल्प्यत इति वाच्यं । स्वविवक्षानिर्वाहाय गौरवाश्रयणस्यानुचितत्वात् । एतद्दोषस्य स्वान्यूनसत्ताकस्वाधिकरणकालस्य स्वाधिकरणकालपूर्वत्वाभाव इति विवक्षयापि परिहर्तुं शक्यत्वात् । मिथ्यात्वसिद्धेः प्रागन्यूनसत्तादिप्रक्रियाया इव त्वदुक्ताविद्यकोत्तरत्वादिकल्पनाप्रक्रियाया अप्यसिद्धत्वेन प्रतिवा-

* टिप्पणी—कल्पितार्थमादायैव प्रामाण्ये ❀ तथाच क्षणेष्वव्याप्तिरितिभावः

दिनः तदसिद्धिरूपदोषस्योभयत्र तौल्यात्। तस्मान्न किंचिदेतत्। यत्तूच्छेदस्तू च्छिद्यमानधर्मपरिपतितेषु जायते अस्ति वर्धत इत्यादिषु षट्सु भावविकारेषु परस्परसमानाधिकरण्यस्योचितत्वेनोपचयोत्पत्त्यादियुक्ते दृश्यवर्गे विद्यमानश्चरमक्षण-संबंधो ध्वंसः स न त्वतथाविधात्मनिष्ठ इति न तस्योच्छेदापत्तिः । एवं च दृश्याधिकरणक्षणनिष्ठः दृश्याधिकरणक्षणपूर्वत्वाभाव एवाधिकरणात्मा चरमदृश्यस्य ब्रह्म-साक्षात्कारस्य चरमो विकार एक एवाविद्यातत्प्रयुक्ततद्वृत्तीनामुच्छेदरूपः। तंतुनाश इव पटतदवयवतद्विकाराणां। न चोच्छेदस्याप्युच्छेदावश्यंभावः भावविकाराणां पुनः संजा-तीयभावविकारांतराभावात् । अन्यथोत्पत्तेरप्युत्पत्त्यंतरमित्यनवस्थापत्तेरिति तदपि एतत्पारष्कारस्य पूर्वमेव दूषितत्वादकिंचित्करं । उत्पत्तेरप्युत्पत्तिव्यवहारस्य अस्तित्व-स्याप्यस्तित्वव्यवहारस्य लोके सत्वादनवस्थाभावात्तस्यैव स्वाश्रितत्वं प्रमेयत्वादिवदंगी-क्रियते। नाशादेर्नाशव्यवहाराभावात्स्वान्यस्य स्वस्य वोच्छेदस्याश्रयो न भवत्येवातस्तद्-दृष्टांतेनोक्तोच्छेदस्य स्वीयोच्छेदरूपत्वाभावेन तस्यानुच्छिद्यमानत्वरूपध्वंसाप्रतियोगि-त्वस्यैव प्राप्त्या पूर्वोक्तदोषानिस्तारात्। तंतुनाशदृष्टांतस्तु विषमः। तस्य पटादिप्रतियो-गिकत्वेऽपि स्वप्रतियोगिकत्वाभावेन बाधकाभावात्। प्रकृते चोक्तोच्छेदरूपनाशस्य प्रति-योगिसंबंधित्ववत्स्वसंबंधित्वे स्वस्यापि स्वप्रतियोगित्वप्राप्त्या तत्रोक्तदोषाणां जागरूक-त्वात्। न चैतन्मते चरमक्षणसंबंधस्यैव ध्वंसत्वेन तस्य प्रतियोगिसमानकालिकत्वस्याव-र्जनीयत्वेन प्रतियोगिध्वंसयोरैक्यांगीकारेऽभिहितानां भावाभावयोरेकक्षणवृत्तित्वानुप-पत्त्या व्याहत्यादिदोषाणामेतत्पक्षे नावकाश इति वाच्यं। एवमपि परेण दृश्याधिकरणक्षणे दृश्याधिकरणक्षणपूर्वत्वाभावस्यैवोच्छेदरूपतया पर्यवसानस्य कृतत्वेन तत्र पूर्वोक्तदोष-स्यानिस्तारात् । नच पूर्वमते एतदन्यध्वंसस्यांगीकृतत्वात्तदप्रतियोगित्वे उक्तोच्छेदे चरमक्षणे वांगीकृते स्थिरत्वप्राप्त्या निष्प्रपंचब्रह्मावस्थानानुपपत्तिलक्षणदोषोऽभिहितः। एतन्मते चास्यैवोच्छेदरूपतया तच्छालिन्युक्तोच्छेदे नित्यत्वाप्रसक्त्या कथं तद्दोषावकाश इति वाच्यं। यतो घटादीनां चरमक्षणो नाम घटाधिकरणक्षणप्रागभावानधिकरणक्षणः तत्संबंधो ध्वंसः इत्युक्तौ घटाधिकरणक्षणे घटक्षणप्रागभावाधिकरणत्वरूपपूर्वत्वा-भाव इत्यर्थे पर्यवस्यतीति त्वया एवं चेत्यभिहितं। तस्य च घटनिष्ठत्वाभावे कथं तस्यो-च्छिद्यमानधर्मत्व क्षणवृत्तित्वविशिष्टस्य घटावृत्तित्वात्। उपलक्षितस्य निवेशे नित्येषु कालिकसंबंधेन प्रागभावानाधिकरणेषु वर्तत इत्यनुच्छिद्यमानधर्मिसाधारणस्य प्रमेयत्वादि वदुच्छेदरूपत्वानुपपत्तिः। पूर्वत्वस्य तत्क्षणवृत्तिध्वंसप्रतियोगित्वरूपस्य निवेशेऽप्येष दोषः समानः। तद्ध्वंसत्वशरीरेऽन्यध्वंसस्य निवेश इत्यनवस्था बाधिका । अतः स्वाधिकरण क्षणनिष्ठस्वाधिकरणक्षणपूर्वत्वाभावकत्वं पूर्वत्वाभाववत्क्षणसंबंधरूपं पर्यवस्यति। अस्य च प्रतियोगिवृत्त्युच्छेदपदार्थत्वस्य त्वयांगीकारेऽपि नायमेव ध्वंसः तथात्वे तत्क्षणसंबंध-काले घटो नंक्ष्यतीति व्यवहारो न स्यात्। स्याच्चैतत्क्षणे घटो नश्यतीति। नचेष्टापत्तिः। अस्मिन् क्षणे उच्छिद्यत इति व्यवहारवत् अस्मिन् दिवसे उच्छिद्यत इत्यादिव्यवहारात् घटाधिकरणदिवसपूर्वत्वाभाववद्दिवससंबंधित्वस्य घटाधिकरणमासपूर्वत्वाभाववन्मास-संबंधस्याऽपि उच्छेदरूपत्वप्राप्त्या समभिव्याहृतादिवसादिपदानां घटाधिकरणदिवस-परत्वस्यैव त्वद्रीत्या प्राप्त्यैतद्दिवसे नश्यति एतन्मासे नश्यतीति व्यवहारस्यास्मिन्दिवसे स्थास्यति न नश्यति इति व्यवहाराभावस्य च प्रसंगः। क्षणस्य सूक्ष्मकालतया विशिष्टदुर्विज्ञेयतया तत्रेष्टापत्तिसंभवेऽपि सर्वजनविरुध्दे चेष्टापत्तेः कर्तुमशक्यत्वात्।

यस्य ज्योतिःशास्त्रेण षष्ठीतिथ्याद्यक्षणे पितृमृतिग्रहः तस्य त्वद्रीत्या पंचम्यंत्यक्षण एव नाशप्राप्त्या नाशाधिकरणतिथौ श्राद्धविधायकप्रमाणबलात् पंचमीश्राद्धापत्तिः। अन्यथा तद्वाक्ये वृथालक्षणकल्पनाप्रसंगः। एवमंत्यशब्दज्ञानयोः क्षणिकत्वपक्षे उत्पत्तिनाशयोरैक्यमेव स्यात्। तस्मान्नायं नाशः किंतु तादृशचरमक्षणाद्वितीयक्षणे प्रतीयमानोऽपलापानर्हो घटाभाव एव नाशः। भवदुक्तक्षणसंबंधस्य नाशत्वे घटो नश्यति नष्ट इतिवत्तन्नाशो नश्यति नष्ट इत्यपि प्रतीतिः स्यात्। एवं चोक्तो ध्वंसरूपो अभाव उत्तरक्षणे घटानधिकरणत्वनिर्वाहकतया भवदुक्तोच्छेदरूपविशिष्टाभावनिर्वाहकः। इत्थं च तत्वज्ञानोत्तरक्षणानंगीकारे तादृशचरमवृत्तेर्नाशाप्राप्त्या त्वदभिमतोच्छेदस्य स्वाश्रयसत्तानियतस्थितिकतया तस्य स्थिरतायास्त्वद्वाङ्मात्रेण निवारयितुमशक्यतया पूर्वोक्तदोषस्य दुर्वारतैव। एतेन चरमवृत्त्यात्मकाविकारस्य सर्वदृश्यनाशरूपविकारभूतस्य न विकारापेक्षेत्यधिष्ठानमात्रपरिशेष इत्यपि निरस्तं तत्स्थिरतायाः समर्थितत्वात्। एवं सर्व दृश्योछेदरूपचरमवृत्त्यात्मकाविकारस्य किमधिकरणं दृश्यांतरं ब्रह्म वा। आद्ये तस्याप्युच्छेदेन भाव्यमित्यनवस्था। द्वितीये सापेक्षनिरपेक्षयोश्च तयोरभेदासंभव इत्यनुच्छेदस्तस्येत्यनुपपत्तिमाशंक्य वृत्तिनिष्ठोच्छेदस्य वृत्त्यधिकरणकत्वेन तदात्मकत्वादंतःकरणाद्यभावेन वृत्तिरूपोच्छेदाधिकरणप्रश्न एव पर्यवसानमित्यभिप्रेत्य ब्रह्मनिष्ठतत्तादात्म्यरूपसंबंधस्यापि तद्वज्जन्यतया कालोपाधित्वेन तयोः समानकालिकत्वेन परस्परं कालिकेनाधाराधेयभावप्रतिपादनं प्रत्युक्तं। देशविधया तदधिकरणे पृष्टे कालविधया तदधिकरणकथनस्यासंगतत्वात्। देशविधयाऽधिकरणशून्यस्य कालिकेन वृत्त्यदृष्टेः। कथंचित् क्वचित्सत्वेऽपि तस्य प्रकृते तथात्वे मानाभावात्। तथात्वे पूर्वमधिकरणात्मेत्यनेन तादृशोच्छेदस्याधिकरणात्मकत्वकथनादुक्तचरमवृत्तितत्तादात्म्ययोः परस्परवृत्तित्वेन परस्परात्मकत्वप्राप्त्यैकतरमात्रपरिशेषापातेन त्वदुक्तेरसांगत्यपरिहारात्। ब्रह्मसाक्षात्कारनिष्ठदृश्याधिकरणकालपूर्वत्वाभावरूपोच्छेदं प्रति तत्वज्ञानजनकसामग्र्येव कारणं स्वस्य वा समानकालिकस्यापि प्रयोजकत्वमित्यप्ययुक्तं। एकसामग्रीनियम्ययोः प्रतियोगितन्नाशयोः कुत्राप्यदृष्टत्वेन एकसामग्रीनियम्यत्वे तस्य तदुच्छेदरूपत्वस्यैवात्यंतासंगतत्वात्। अन्यथा स्वस्यैव स्वोच्छेदरूपत्वं कुतो न कल्पयसि अविशेषात्। समानकालिकयोः प्रयोज्यप्रयोजकभावांगीकारेऽपि तत्पक्षे कारणानिरूपणेनाकारणकार्योत्पत्तिप्रसंगः। अनादित्वे अस्य प्रयोजकत्वोक्तेरत्यंतमयोगः उत्तरकालिकस्य पूर्ववर्तिनं प्रति प्रयोजकत्वादर्शनात्। उच्छेदरूपध्वंसस्योच्छेद्यात्प्राक्कालिकत्वप्राप्त्या प्रतियोग्यधिकरणकालपूर्वकालस्य तद्ध्वंसाधिकरणत्वाभाव इति भवदुक्तनियमस्यापि परित्यागः कृतः इति सम्यक् परीक्षकरीतिरनुसृता। रूपभेदेन स्वस्यैव कार्यकारणभावोपपादनमप्यसंगतं। स्वरूपयोग्यत्वस्य कथंचित्संभवेऽपि स्वस्य स्वोपधायकत्वस्य व्याहतत्वात्। पूर्ववृत्तितानिर्वाहकेण केनचिद्रूपेण स्वस्यैव पूर्ववृत्तित्वं मतं चेत् तादृशं रूपमंतःकरणत्वादिकमेवेति स्वसामग्रीकारणतापक्ष एव पर्यवसानं। तत्रच दोषोभिहित एवेति न किंचिदेतत्। यदप्युक्तरूपोच्छेदः उक्तविकारांतरसमानाधिकरणो न तथाविधात्मनिष्ठ इति न तस्योच्छेदापत्तिरिति तदप्यसत्। स्वाधिकरणकालनिष्ठस्वाधिकरणकालपूर्वत्वाभावस्योच्छेदरूपत्वे तस्यात्मनिष्ठस्य विकारांतरासामानाधिकरण्येपि उच्छेदरूपत्वं किं गच्छति तत्स्वरूपे विकारांतरसामानाधिकरण्यस्य निविष्टत्वात्। अन्यथा तत्समानाधिकरणमन्यदेव। किंचित्प्रकृते उच्छेद इत्यस्यैव उक्तत्वे एतावदायासस्य वैफल्यापत्तेः। यदपि आत्मन उच्छेदवारणाय तस्य कालासंबंधमुपेत्य तथात्वेऽपि परमार्थसत्वमभ्युपेत्य गगनादीनां

(टीका) तेनाधिष्ठानयाथात्म्यज्ञानेनाविद्यायां विलीनायां तदुपादानकं रजतं स्वयमेव निवर्तत इत्यंगीकृतत्वात्। किंनाम प्रतिपन्नोपाधौ निषेधप्रतियोगित्वम्।

---

तथात्वं न्यायवित्संमतमित्यभिहितं। ननु तथात्वे त्रैकालिकनिषेधप्रतियोगिनः शशविषाणादेः सत्वापत्तेर्वारयितुमशक्यत्वादनुपादेयं। अत एव साध्यतावच्छेदकसंबंधधर्मिकोभया भावघटितलक्षणमपहाय प्रतियोगिताधर्मिकोभयाभावघटितलक्षणमनुसृतं दीधितिकृता। अत एव भट्टाचार्येणाऽपि गगनादीनां कालासंबंधित्वे पारमार्थिकत्वानुपपत्तिरित्यवतारितं तस्मात्ध्वंसघटितलक्षणं तत्सजातीयमुच्छेदघटितलक्षणं च परिष्कर्तुमयुक्तमिति। ननु परस्यायुक्तभाषित्वादेवोक्तरीत्या बाधकसत्वेपि तल्लक्षणं कथं न संमतमिति ज्ञायत इत्यत आह। तेनेति। अधिष्ठानयाथात्म्यज्ञानेन स्वजन्यपटुतमसंस्कारसहिताधिष्ठानापरोक्षज्ञानेन। विलीनायां नष्टायां। स्वयमेव तन्नाशाधीननाशप्रतियोगितां विनैव। निवर्तते नास्ति नासीन्न भविष्यतीति बाधबुद्धिविषयीभूतं भवतीत्यर्थः। तदुपादानकत्वमप्यत्रैव नियामकं। नतु नाश इति सूचनाय तदुपादानकत्वोक्तिः। इत्यंगीकृतत्वादिति। अत एवाद्वैतचंद्रिकायां ज्ञाननिवर्त्यत्वलक्षणव्याख्यावसरे मूलोदाहृतविवरणवाक्यव्याख्यायामज्ञानस्य निवृत्तिस्तत्प्रयुक्तस्य तु बाध एवेत्यभिहितं। यद्वाऽविद्यायां विलीनायामित्यस्य त्रैकालिकनिषेधप्रतियोगित्वेन गृह्यमाणायामित्यर्थः। स्वयमेवेत्यादेर्नाशं विनेति पूर्वोक्त एवार्थः। तत्रैव उक्तविवरणवाक्ये निवृत्तिपदमत्यंताभावपरमपि वार्तिकानुसारादित्यादिना मूलोदाहृतवार्तिकमवतार्य तदर्थोक्तेः। वार्तिकं तु 'तत्वमस्यादिवाक्यार्थसम्यग्धीजन्ममात्रतः॥ अविद्यासहकार्येण नासीदस्ति भविष्यति॥' इति। अज्ञानस्यावर्तमानत्वेप्यतीतकार्यासहितरूपेणातीतत्वादासीदित्यस्य प्रसक्त्या नासीदिति निषेधसंभव इति भावः। अदृष्टादिकारणसत्वादग्रे भाविता यज्जातीयकार्यस्य प्रसक्ता तज्जातीयस्यादृष्टाद्यभावादज्ञानप्रयुक्तादभावो न भविष्यतीत्यनेन बोध्यत इत्यर्थः इत्यद्वैतचंद्रिकायामेवास्यार्थः स्पष्टः। तरंगिण्यां तु अभावे कालत्रयसंबंधो बोध्यत इति श्लोकार्थ उक्तः। तेषां मतेन अर्थ एव मुख्यविशेष्यतया भासत इत्यभ्युपेयं। तथाचोक्तपक्षद्वयेऽपि अज्ञानप्रयुक्तरजतादीनां नाशाभावप्राप्तेर्न नाशघटितलक्षणं तस्य परमसिद्धांते संमतं। इदानीं तन्निष्कृष्टपक्षस्यास्माभिर्दूष्यत्वात्परैर्ध्वंसाद्यभ्युपगमेन कथंचित्कृतलक्षणानामनादरणीयत्वमेवेति भावः। तर्हि किं तस्याभिप्रेतमित्यत आह। प्रतिपन्नोपाधाविति नन्वेनदयुक्तं परैः स्वग्रंथेऽत्यंताभावघटनया प्रकारांतरेण परिष्कृतत्वात्। तथाहि ज्ञाननिवर्त्यत्वं वा मिथ्यात्वं। न चोत्तरज्ञाननिवर्त्ये पूर्वज्ञानेऽतिव्याप्तिः। मुद्गरघातनिवर्त्यघटादावव्याप्तिश्चेति वाच्यं। ज्ञानप्रयुक्तावस्थितिसामान्याभावकत्वस्य विवक्षितत्वात्। अवस्थिति र्द्वेधा स्वरूपेण कारणात्मना च। सत्कार्यवादाभ्युपगमात्। एवं च घटादेः स्वरूपेणावस्थित्यभावस्य मुद्गरपातादिप्रयुक्तत्वेऽपि कार्यकारणात्मनावस्थितिसाधारणोक्तावस्थिति सामान्याभावस्य ब्रह्मज्ञानप्रयुक्तत्वान्नाव्याप्तिः। न वा सिद्धसाधनं। अत एव न वियदादेर्ब्रह्महत्यादेरिव सेतुदर्शनादिना ब्रह्मज्ञानेन नाशसिद्धावपि मिथ्यात्वासिद्ध्याऽर्थांतरं। तुच्छस्यावस्थितिसामान्याभावसत्वेपि तस्य ज्ञानप्रयुक्तत्वाभावान्न तत्रातिव्याप्तिः। शुक्तिरजतादेरपरोक्षप्रतीत्यन्यथाऽनुपपत्त्या प्रतिभासकालेऽवस्थित्यंगीकारान्न बाधकं विना तद्विरह इति न साध्यविकलता। नच घटादेरेकावस्थितिविशेषविरहस्य ज्ञानाप्रयुक्तत्वेन।

घटावस्थितिसामान्यविरहस्य ज्ञानाप्रयुक्तत्वाद्विशेषाभावातिरिक्तसामान्याभावानभ्युपगमे घटादावव्याप्तिर्दुर्वारैव। ज्ञानप्रयुक्तविरहप्रतियोग्युपादानकत्वाविवक्षायां तादृशाज्ञानोपादानके घटादावव्याप्तिविरहेऽप्यनाद्यविद्यादावव्याप्तिर्दुर्वारैवेति वाच्यं । यथा मण्याद्यसमवधानकालीनस्य कारणाभावप्रयुक्तदाहाभावस्य तत्तत्कालीनतत्तद्दाहाभावत्वेन मण्याद्यप्रयुक्तत्वेपि तत्समवधानकालीनतत्तदभावस्य दाहसामान्याभावत्वेन तत्प्रयोज्यत्वं । एवं घटादीनां स्वरूपेणावस्थितिविरहस्य ब्रह्मज्ञानप्राक्कालीनस्य तत्वेन तदप्रयोज्यत्वेऽपि स्वसमानविषयकाज्ञानतत्प्रयुक्तान्यतरत्वावच्छिन्नप्रतियोगिताकाभावत्वेन तत्प्रयोज्यत्वस्य निष्प्रत्यूहत्वात्। विद्वान्नामरूपाद्विमुक्त इति श्रुत्या धनवान् सुखीत्यत्र सुखे धनप्रयोज्यत्ववत् नामरूपसामान्यविरहरूपमुक्तौ विद्वत्तायाः प्रयोजकत्वावगमात् शुक्त्यादेस्तत्वज्ञानादिदानीं तदज्ञानतत्प्रयुक्तान्यतरन्नास्तीति सार्वजनीनानुभवाच्च । अस्मिन्पक्षे अभावद्वैताभ्युपगमाच्च न (१)शंकांतरावकाशः। अथवा ज्ञानप्रयुक्तोऽधिष्ठानतत्वज्ञानव्यापको योऽवस्थितिसामान्यस्य स्वस्वीयसंस्कारान्यतरस्याभावस्तत्प्रतियोगित्वं तत् । भवति च या याऽप्रामाण्यज्ञानादिशून्यसाक्षात्कारिप्रमा सा स्वसमानविषयकाज्ञानक्षणावृत्तिः।या या स्वजन्यपटुतमसंस्कारसहितोक्तप्रमा सोक्ताज्ञानतत्संस्कारक्षणावृत्तिः । सहितांतोपादानादुक्तसहितान्यशुक्त्यादिप्रमाया उक्तसंस्कारक्षणवृत्तित्वेऽपि न व्यभिचारः । अत एव जीवन्मुक्तनिष्ठब्रह्मप्रमाऽपि तादृशक्षणवृत्तिः। या योक्तप्रमा सा सोक्तस्वसमानविषयकाज्ञानतत्प्रयुक्ततत्संस्कारान्यतरवत्कालपूर्वभिन्ना । तथा च तादात्म्येनोक्तप्रमां प्रति स्वाधिकरणक्षणवृत्तित्वसंबंधेनोक्ताज्ञानतत्संस्कारान्यतरस्याभावः उक्ताज्ञानप्रयुक्ततत्संस्कारान्यतरस्य स्वाधिकरणकालपूर्वत्वसंबंधावच्छिन्नाभावश्च व्यापक इति अज्ञानतत्प्रयुक्त (२) तत्संस्कारेषु सत्वालक्षणसमन्वयः । तथाच तादात्म्यसंबंधेन स्वजन्यपटुतमसंस्कारसहितप्रमां प्रति तादृशोक्तज्ञानं प्रति वा व्यापको योऽभावस्तन्निरूपितायाः स्वसमानविषयकत्वकालिकविशेषणतोभयसंबंधावच्छिन्नप्रतियोगिता या च तादृशी स्वप्रयोजकाज्ञानमानविषयकत्वस्वाधिकरणकालपूर्वत्वोभयसंबंधावच्छिन्ना प्रतियोगिता तदन्यतरावच्छेदकस्वस्वीयसंस्कारान्यतरत्वकत्त्वमिति निष्कर्षः । प्रतियोगिता च स्वव्यधिकरणसंबंधाद्यनवच्छिन्ना (३) ग्राह्या । प्रयोजनं तु स्वयमूह्यं (४) ।एतेन दंडादिनिवृत्तस्य घटाद्यवस्थाविशेषस्य ज्ञाननिवर्त्यत्वेऽपि ज्ञानप्रयुक्तावस्थाविशेषविरहमादायान्यतरत्वेतराभावत्वेन लक्षणसमन्वये अर्थांतरत्वापत्तिरिति निरस्तं । यादृशज्ञानप्रयुक्तो अवस्थाविरहविशेषः तादृशज्ञानस्य तदीयावस्थांतराधिकरणकालपूर्वत्वादिमत्वे उक्तलक्षणासंभवात्तादृशकालपूर्वं ज्ञानादिशून्यत्वे च मिथ्यात्वेनैव सिद्ध्याऽर्थांतरानवकाशात्। नच साक्षात्कारिप्रमेत्यादिनियमो न संभवति । सन् घट इत्यादिप्रमायाः न स्फुट इत्यादिप्रमायाः आपातवेदांतजन्यप्रमायाश्च त्वन्मते ब्रह्मप्रमात्वेन स्वीकृतायाः स्वसमानविषयकाज्ञानकालवृत्तित्वेन व्यभिचारात् विशेष्यताख्यविषयतामादायैव ज्ञानाज्ञानयोः समानविषयकत्वं त्वया वाच्यं। न समानप्रकारकत्वमादायाखंडार्थकवेदांतजन्मज्ञानतन्निवर्तनीयाज्ञानयोस्तदभावात् तच्चोक्तप्रमयोरस्तीति वाच्यं ।

(१) अवस्थित्यभावे लक्षणगमनाय तस्याप्यभावांतरं तस्याप्येवमेवमिति रीत्याऽनवस्थाशंकेत्यर्थः ।

(२) तयोः संस्कार इति विग्रहः ।

(३). व्यधिकरणधर्मावच्छिन्नप्रतियोगिता मादायार्थांतरवारणायादीति ।

(४) अज्ञानस्य घटादिवदविषयकत्वेन कालवृत्तित्वाभावेन वा गगनादेरिव पर्यवसानप्रयुक्तार्थांतरवारणरूपमित्यर्थः । वस्तुतस्तु जगतोऽज्ञानाप्रयुक्तत्वेनैवार्थांतरम् ।

सन् घट इत्यादिप्रमायाः घटाद्युपहितसद्विषयकत्वेन मूलाज्ञानस्य शुद्धविषयकत्वेन समान विषयकत्वस्य दूरनिरस्तत्वात् । उक्तप्रमायां शुद्धस्य भानेऽपि स्वविषयतानिरूपकत्वस्य संबंधकोटौ निवेशान्नानुपपत्तिः। ज्ञानेच्छयोरिव ज्ञानाज्ञानयोरपि समानाकारयोर्विषयताभेदे मानाभावेन वृत्तिनिरूपिताकाराख्यविषयताया एवाज्ञाननिरूपितत्वोपगमात् । साक्षात्कारत्वं च परोक्षान्यज्ञानत्वादिरूपमन्यदेवेत्यन्यदेव वैतत्। एवं च मूलाज्ञानीया या जीवत्वब्रह्मत्वोपलक्षिताविषयिता तन्निरूपकत्वस्य न स्फुट इत्यादिज्ञानादावसत्वान्न दोषः। अधिकं शास्त्रारंभसमर्थनटीकायां द्रष्टव्यं । आपातवेदांतजन्यप्रमायाश्च न परोक्षत्वं तथात्वेऽपि नाप्रतिबत्धापरोक्षत्वं तदेव च लक्षणे निविष्टं । यद्वा ज्ञानेन हि अज्ञानतत्परिणामादिदृश्यसामान्यस्यात्यंताभावः स्वोत्पत्तिद्वितीयक्षणावच्छिन्नः साध्यते स चाभावः स्वान्यसर्वदृश्यविरोधी क्षणिकस्साध्यत्वं च प्रयोज्यतारूपमन्यद्वेति न कश्चिद्दोषः। क्षणिकश्चायं न्यायविदां क्षणिककशब्दवत् महाप्रलयवच्च अतोऽस्य त्रैकालिकत्वमसिद्धं। अस्तु वा त्रैकालिकत्वं उक्तक्षणप्रत्यासन्नः स एव सर्वदृश्यविरोधी । यत्तु अत्यंताभावस्य स्वप्रतियोगिना दैशिक एव विरोधो न कालिक इति तन्न । कालिकसंबंधेन प्रतियोग्यधिकरणे कालिकसंबंधेन वृत्तावपि कालिकसंबंधावच्छिन्नप्रतियोगिताकाभावस्य कालिकसंबंधेन प्रतियोग्यधिकरणे स्वरूपसंबधेनावृत्तित्वरूपविरोधस्य सर्वसंमतत्वात् । विद्वान्नामरूपाद्विमुक्त इति श्रुतिसिद्धाभावस्य पुरुषोत्प्रेक्षामात्रासिद्धत्वाभावाच्च उक्तात्यंताभावस्य ध्वंसप्रतियोगित्वानुपगमेन नानवस्थितध्वंसधारापत्तिः। एवं चैतल्लक्षणानां जागरूकत्वात् भवदुक्तपर्यवसानायोगः । अथैतल्लक्षणान्यनुपपन्नान्येव । आद्यलक्षणस्य सर्वाद्वैतमते अयोगः। घटादौ ज्ञानानिवर्त्यावस्थाविशेषसद्भावाविरोधिन एतद्धर्मस्य मिथ्यात्वरूपत्वायोग इति दूषणद्वयं स्वयमेवाभिहितं । किंच शुक्तिरजतादावव्याप्तिः तदीयकारणावस्थारूपाज्ञानस्य ज्ञाननिवृत्तत्वे मानाभावात् । नच शुक्त्यादेस्तत्वज्ञानात्तदज्ञानतत्प्रयुक्तान्यतरन्नास्तीति सर्वजनसिद्धानुभव एव मानमिति वाच्यं । शुक्त्यवच्छिन्नचिद्विषयकाज्ञानस्य रजतोत्पत्त्यर्थमेव कल्पनीयस्यातींद्रियत्वेन तदभावस्य प्रत्येतुमशक्यत्वेनोक्तप्रतीतेः पुरुषाश्रिताज्ञानाभावादिविषयकत्वात् तस्य च रजताद्यनुपादानत्वेनोक्तप्रतीतेः तत्र मानत्वायोगात् । नच चिदैक्यात्तदवच्छिन्नाज्ञानमपि साक्षिभास्यं । तथात्वे पुरुषांतरनिरूपिताज्ञानस्यापि भानापत्तेः। आरोपे सति निमित्तानुसरणमिति न्यायस्य सर्वसंप्रतिपन्नस्थलविषयत्वात् । एवं येन रूपेण भासमाने प्रयोज्यता भासते तद्रूपावच्छेद्यत्वं तत्र भासत इत्यवश्यमभ्युपेयं । अन्यथा मण्यसमवधानकालीनदाहाभावः मणिप्रयुक्तः मणिमान् कारणाभावप्रयुक्तदाहाभाववान् तत्तत्कालीनतत्तद्दाहाभाववानित्यादिस्वारासिकप्रयोगस्य धनवान् प्रमेयवान् गुणवानिति प्रयोगस्य चापातात् । तस्मिन्नेव दाहाभावादौ रूपांतरेण प्रयोज्यतायास्त्वयैवोपपादितत्वात् । एवं च नामरूपाद्विमुक्तः मुच्यते सर्वपाशैरित्यादौ नामत्वावच्छिन्नाभावरूपत्वावच्छिन्नाभावोपस्थिततत्पाशत्वावच्छिन्नाभावानामेव बोधनेन त्वदुक्ताज्ञानतत्प्रयुक्तान्यतरत्वावच्छिन्नप्रतियोगिताकाभावत्वेनानुपस्थितत्वेनोपस्थितिरूपस्य तु ज्ञानप्रयोज्यतानवच्छेदकत्वेन तत्र प्रयोज्यप्रयोजकभावबोधस्योक्तश्रुतिभिरनुत्पादादत्रापि मानाभाव एव ।नच नामत्वं रूपत्वं वा तदन्यतरत्वं वाऽज्ञानतत्प्रयुक्तसर्वसाधारणं येन तदवच्छिन्नाभावत्वमपि प्रयोज्यतावच्छेदकमिति वक्तुं शक्यं स्यात्। तयोः परस्परमेव व्यावृत्तत्वात्।अन्यतरत्वस्यापि अव्याकृते अनादिदृश्येषु चावृत्तेः।'तदेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते' 'नामरूपे व्याकरवाणि' इत्यादिश्रुतिभिः पंचीकृतभूतमात्राविकार

वृत्तित्वावगमात् । एवं ज्ञात्वेत्यादिश्रुतौ सर्वपाशपदेन तत्तत्पाशत्वावच्छिन्नाभाव एव प्रतीयते । सर्वपदसमभिव्याहारात् सर्वपदस्योपस्थिततत्तद्रूपावच्छिन्नवाचितायाः सर्वेभ्यो दर्शपूर्णमासावित्यादाविवाद्वैतचंद्रिकायां वार्तिककारादिसंमत्या व्यवस्थापितत्वात्। अन्यथा पाशत्वव्यापकव्यासज्यवृत्ति सर्वत्वधर्मावच्छिन्नाभावस्य सर्वदा संसारिषु विद्यमानस्यापुरुषार्थत्वेन ज्ञानफलत्वोक्त्ययोगात् । न चोक्तस्थले अज्ञानतत्प्रयुक्तान्यतरत्वावच्छिन्नाभावत्वेन बोधो लक्षणयेति वक्तुं युक्तं बाधकाभावात् । स्वाभ्युपगतनिर्वाहाय लक्षणाश्रयणेऽतिप्रसंगस्याभिहितत्वात्। मणिसमवधानस्थलेऽपि तन्निष्ठमणिसमवधानोत्तरदाहाभावाधिकरणतातन्निष्ठाधेयत्वयोर्मणिप्रयोज्यत्वस्योभयसिद्धस्योपगमेनैवेदानीं अत्र दाहाभावो मणिप्रयुक्त इत्यादिव्यवहारस्य सविशेषणे हीति न्यायेनोपपत्तौ अनाद्यभावे मणिपूर्वकालीने रूपांतरेण तत्प्रयुक्ततायाः अप्रामाणिकतया तद्दृष्टांतेनात्रापि तथोक्तेरत्यंतासंगतत्वात् । प्रकृते ज्ञानप्रयुक्ततादृशाधिकरणतापरिष्कारस्त्वसंभवदुक्तिकः। तस्य सर्वभावोच्छेदकत्वेन तत्प्रयोजकत्वोक्तेरयोगात् । तादृशाधिकरणतारूपभावस्यैव सत्वेन मोक्षायोगश्च । द्वितीय लक्षणमप्ययुक्तं पूर्वोक्तरीत्याऽनादिदृश्यसंस्कारादिष्वव्याप्तेः । स्वसंस्काराप्रसिद्ध्या स्वपदेन तेषां ग्रहणायोगात् । ज्ञानाज्ञानयोरेकामाकारताख्यविषयतामंगीकृत्य नियमे व्यभिचारं परिहृत्य लक्षणपरिष्कारोऽप्यसंगतः । अज्ञानस्य शुद्धचिति शुक्त्याद्यवच्छिन्नचिति च संबद्धतया तादात्म्यरूपविषयतायाः कथंचिदुक्तिसंभवेप्याकाराख्यगौणविषयतायां मानाभावात् । न चात्राहमज्ञोऽहं घटं न जानामीति प्रत्ययबलात्तत्सिद्धिरिति वाच्यम् । तत्र घटविषयकज्ञानविरुद्धत्वपुरस्कारेणाविद्यात्वरूपजात्यवच्छिन्नावगाहितायाः असुरादिपदाधीनप्रत्ययवत्त्वदाचार्यैरभ्युपगतत्वेनाज्ञानस्य तादृशविषयतानिरूपकत्वासिद्धेः। नच विनिगमकाभावात्समभिव्याहृतपदार्थभूतघटादिविषयकत्वमज्ञान एव प्रतीयतामिति वाच्यम् । घटं जानामीच्छामीति प्रतीतिभिस्तेषां सविषयकत्वसिद्धेरेव विनिगमकत्वात् । न चात्र मम मोह इति प्रतीत्या मोहशब्दिताज्ञानस्य सविषयकत्वसिद्धिरिति वाच्यम् । तत्र मोहशब्दस्य तत्कार्यमिथ्याज्ञानवाचित्वात् । अत एवात्रैव मा भगवन्मोहांतमापीपदिति श्रुतौ याज्ञवल्क्यस्य मोहप्रापकत्वाभिधानं मैत्रेय्याः संगच्छते । अन्यथाऽनाद्यविद्यायाः याज्ञवल्क्यवचनानधीनत्वेन तत्कथनासंगतिप्रसंगात् । 'तमो मोहो महामोहः तामिस्रः क्रोध एव च ॥ अविद्या पंचपर्वैषा प्रादुर्भूता महात्मनः' इति स्मृतौ तमःशब्दितावरकवस्त्वपेक्षयातिरिक्तस्य विपर्ययस्य मोहशब्देनाभिधानात् । 'तमस्तु शार्वरं विद्यान्मोहश्चैव विपर्ययः ॥ तदाग्रहो महामोहः' इति स्मृत्यंतरे मोहशब्दस्य विपर्ययपरत्वेन व्याख्यातत्वाच्च । अस्तु वा पुरुषनिष्ठाज्ञानस्य कथंचित्सविषयकत्वोपगमः। विषयनिष्ठाभानापादकाज्ञानस्य रजतोत्पत्तिनिर्वाहमात्रप्रयोजनानुरोधेन कल्प्यस्य सविषयकत्वं त्वप्रामाणिकमेव । तथा चोक्तलक्षणे स्वसमानविषयकत्वघटितोभयसंबंधस्य स्वप्रयोजकाज्ञानसमानविषयकत्वघटितोभयसंबंधस्य च व्यधिकरणतया व्यधिकरणसंबंधानवच्छिन्नोक्तोभयसंबंधावच्छिन्नप्रतियोगित्वाप्रसिद्ध्याऽसंभवः। तदनिवेशे व्यधिकरणसंबंधावच्छिन्नोक्तप्रतियोगिताशालित्वेऽपि न मिथ्यात्वं । तादात्म्यरूपविषयतां निवेश्य परिष्कारे तु सन् घट इति प्रतीतौ शुद्धस्यापिभानात्तत्र मूलाज्ञानस्य तादात्म्यरूपविषयतासत्वात्तत्समानकालिकत्वाच्च व्यभिचारो दुर्वारः । समानप्रकारत्वादिकं तु न निवेशनार्हं। अखंडाकारवृत्तेस्तथात्वाभावेन मूलाज्ञानस्यापि शुद्धचिद्विषयकत्वेनातथात्वेन विरोधायोगात्। लक्षणे च तादृशसंबंधावच्छिन्नप्रतियोगितायाः व्यधिकरणसंबंधानवच्छिन्नत्वा

योगेन मूलाज्ञानतत्प्रयुक्तादौ लक्षणगमनायोगात्। एतेन जीवत्वब्रह्मत्वोपलक्षितनिरूपितविषयतायाश्चरमवृत्तिमूलाज्ञाननिरूपितत्वं स्वीक्रियते न स्फुट इत्यादिप्रमायां सा नास्तीत्येतदपि परास्तम्। ताटस्थ्येन तदवच्छिन्नविषयताया एव तदुपलक्षितविषयतारूपतया मूलाज्ञानीयविषयतायास्तथात्वे मानाभावात्। अधिकं त्वत्कृतशास्त्रारंभटीकाख्यग्रंथस्य खंडने विवेचयिष्यामः। अप्रतिबद्धापरोक्षप्रमैव लक्षणे निवेश्येत्यप्ययुक्तम्। प्रारब्धकर्मरूपप्रतिबंधकाभावनिवेशे शुक्तिप्रमाद्यसंग्रहेण तत्र लक्षणगमनायोगः। सामान्यतः अप्रतिबद्धत्वं स्वजन्यकार्यप्रतिबंधकाभावकालीनत्वादिकं तु न निवेशनार्हं। शुक्त्यादिप्रमाजन्यकार्यांतरकार्यांतरप्रतिबंधकांतरादृष्टादेः क्वचिन्निश्चयस्य सर्वत्र संशयस्य च संभवेन तत्रोक्तमिथ्यात्वस्य दुर्ग्रहत्वापत्तेः। नापि स्वजन्याज्ञाननिवृत्तिप्रतिबंधकत्वेन एतत्पक्षे ज्ञानस्याज्ञाननाशकत्वस्य त्यक्तत्वेन तथानिवेशासंभवात्। अन्यथा निवर्तकस्य निवृत्तिपूर्वकालसत्वावश्यकत्वेन तयोरेकक्षणे मेलनप्राप्त्या कालिकेन तयोर्विरोधाभावेनासंभवापत्तेः। एवं पूर्वोक्तरीत्या शुक्त्यादौ एकस्यैव पुरुषस्य कालभेदेन सजातीयभ्रमजनकनानाज्ञानेषु या या पटुतमेत्यादित्वदुक्तनियमस्य व्यभिचारात्तादृशप्रातिभासिकेषु लक्षणागमनायोगः। एवं ब्रह्मज्ञानाबाध्यसंजातबाधभ्रमविषयेषु प्रातिभासिकेषु यादृशप्रातिभासिकनिवर्तकमेकमेवापेक्षात्मकं जातं तेष्वपि लक्षणगमनायोगः। न चैवमुक्तस्थले स्वसमानविषयकपटुतमसंस्कारसहितप्रमाया अप्रसिद्धावपि प्रसिद्धतादृशप्रमाव्यापकोक्तोभयसंबंधावच्छिन्नप्रतियोगितामादाय लक्षणसंगतिरिति वाच्यम्। तर्हि एतादृशधर्मस्य तन्निवर्तकप्रमानुत्पत्त्याऽपि तत्र निर्वोढुं शक्यस्य सत्यत्वाविरोधितया मिथ्यात्वरूपत्वानुपपत्तेः। न चोक्तोभयसंबंधावच्छिन्नप्रतियोगितायाः समानाधिकरणसंबधावच्छिन्नत्वानुसारात्तत्प्रतियोगिन्यज्ञानप्रयुक्तत्वासिध्या मिथ्यात्वासिद्धिरिति वाच्यं। ज्ञाननिवृत्तिं विना तन्मात्रेण तदसिद्धेः। सत्यत्ववादिनाऽपि अज्ञानप्रयुक्तभयादीनां मिथ्यात्वानंगीकारात् अज्ञाने मिथ्यात्वासिद्धेश्च। न ह्यज्ञानत्वमेव मिथ्यात्वं नापि तत्तत्प्रयुक्तान्यतरत्वं उक्तदोषात्। तथात्वे वा तत्साधनस्यैव वक्तव्यतयोक्तप्रयासासंगतेः। अपि च चरमवृत्तावज्ञानप्रयुक्तस्य जगतः स्वाव्यवहितपूर्वकालिकत्वसंबंधघटितोभयसंबंधावच्छिन्नप्रतियोगिताकाभावस्य चरमवृत्त्यधिकरणक्षणस्य नैय्यायिकाभिमतचरमध्वंसमहाकालरूपक्षणानामिवानिवृत्तत्वेन स्थितावपि तदुत्तरकालानुत्पत्त्यापि संभवेनोक्तप्रतियोगित्वं जगति तादृशकालसंबंधितया स्थिरत्वेनाप्युपपन्नमिति न मिथ्यात्वरूपं। एवमन्यान्यप्यत्र लक्षणे दूषणान्यूह्यानीत्यलं। तृतीयमप्येतेनैव परास्तं। द्वितीयक्षणक्षणावच्छिन्नत्वेन साध्यस्याभावस्य तत्क्षणस्य च स्थिरत्वावारणात् तस्य सर्वदृश्यविरोधित्वमप्यसंगतं। स्वस्वाधिकरणक्षणस्ववृत्तितादृशविरोधित्वादिधर्माणां स्वकालेऽनुवृत्तेः। एवं तस्य ज्ञानप्रयोज्यत्वमप्यप्रामाणिकं इत्युक्तमेव। कालिकसंबंधावच्छिन्नप्रतियोगिताकाभावस्य विरोधव्यवस्थापनमप्यसंगतं। तस्य कालावृत्तित्वेऽपि जगतः कालसंबंधं विना गगनादिवत्त्वन्मतसिध्यब्रह्मवत् स्थितिसंभवे नार्थांतरानिस्तारात्। एवमन्यदपि गुरुचंद्रिकाद्युक्तमनयैव दिशा निरसनीयमित्यलं। एवं चोक्तलक्षणानामप्ययोगात् त्रैकालिकनिषेधप्रतियोगित्व एव पर्यवसानं कृतमिति चेन्न। एवमन्यथाऽनुवादकत्वानिस्तारात्। विवरणे हि त्रैकालिकनिषेधप्रतियोगित्वरूपं बाध्यत्वं अभिधाय ज्ञाननिवर्त्यत्वस्य बाध्यत्वरूपतायाः पृथगभिधानात्। नहि परोक्तमयुक्तं भवति इत्येतावता तस्यान्यथानुवादो युक्तः। न चैतन्मूलेन जगति निराकार्यं बाध्यत्वं न ज्ञाननिवर्त्यत्वरूपं किंतूक्तरूपं।

(टीका) नच तच्छुक्तिरजतादौ नास्तीति शक्यते वक्तुम्। नात्र रजतमभूदिति प्रतिषेधस्य प्रमितत्वात्। ततः सार्थकं जगद्ग्रहणम्। शुक्तिरजताद्येवार्थापत्त्या यदि सदसद्विलक्षणतया सिषाधयिषितं। त (देदं दू) द्वैतदूषणं न घटत इति चेत्। मा घटिष्ट। प्रागुक्तदूषणेनार्थापत्तेर्दूषितत्वात्। किंच। जगति सत्वानुपपत्त्यर्थमुपन्यस्तं बाध्यत्वं परेण सत्यमंगीक्रियते मिथ्या वा। आद्येऽपसिद्धांतादिप्रसंगाद्वितीय एवांगीकार्य इत्याह—

(मूलं) **बाध्यत्वमपि हि तेषां मिथ्या ॥ ३६ ॥**

(टीका) अपिशब्दो युक्तिसमुच्चयार्थः। न केवलं जगत्। किंतु बाध्यत्वमपीति वा। तेषां हीति सत्यत्वागीकारेऽपसिद्धांतादिकं सूचयति।

---

तत्र जगद्ग्रहणं सार्थकमिति टीकाभाव इति वाच्यम्। तथात्वे ज्ञाननिवर्त्यत्वरूपबाध्यत्वाश्रयणेनैतन्मूलावतरणस्य तत्रैव संभावितप्रमाणनिरासस्य चासंगत्यापत्तेः। नहि ज्ञाननिवर्त्यत्वं तन्नाश इति पराभिमतमित्यारभ्य ज्ञाननिवर्त्यत्वस्यैवात्र पर्यवसानस्य स्फुटप्रतिभासाच्चेति चेत्। अत्रोच्यते। यद्यपि विवरणे लक्षणद्वयमेवाभिहितं तथापि ज्ञाननिवर्त्यत्वं प्रथमलक्षणार्थभूतत्रैकालिकनिषेधप्रतियोगित्वसमकक्षापन्नमेव तदभिमतं नतु नाशघटितं। त्रैकालिकनिषेधप्रतियोगिनः स्वाधिकरणकालोत्तरकालासंबंधरूपनाशस्य विप्रतिषिद्धत्वेन लक्षणयोः परस्परव्याहतिप्रसंगात्। उक्तरीत्या तद्वाक्यैरध्यत्यंताभावस्यैव रजतादेरवगमेन रजतादेर्ध्वंसानुक्तेः। मतभेदेन लक्षणद्वयपरत्वे तदभिमतस्य नाशस्य वक्तव्यतापातात् न त्वत्यंताभावस्योक्तिः लोकेऽपि रजतादेर्नाशाननुभवाच्च। इत्थं च प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वसमकक्षापन्नमेव किंचिन्निर्वाच्यं। तच्च स्वात्यंताभावाधिकरण एव प्रतीयमानत्वं तादृशत्रैकालिकनिषेधप्रतियोगित्वेन प्रमाविषयत्वादिकं अन्यद्वा किंचित्। चित्सुखेन स्वात्यंताभाव एवेति लक्षणकरणं त्वेतदर्थरूपतयैवास्तु। तल्लाभस्तु ज्ञानेन बाधज्ञानेन निवर्त्य यत्र स्वयं प्रतीयते तस्मात्सकाशान्निवर्त्य तद्विशेष्यकप्रतीतिगोचरो न भवति। नतु वस्तुतः अपूर्वस्वासंबंधो* त्पत्त्येत्यर्थकरणे एतत्परिचितयोरुक्तलक्षणयोः सुज्ञानत्वात्। एतादृशलक्षणानि शुक्तिरजतादौ अस्माकं सम्मतानीति जगद्ग्रहणस्य सार्थक्यमिति टीकाशयात्। अत एव ज्ञाननिवर्त्यत्वलक्षणेनैतन्मूलमवतार्य तस्य प्रथमलक्षणे पर्यवसानं कथयता पर परिष्क्रियमाणानां असामंजस्यमपि ध्वनितं। ज्ञाते द्वैतं न विद्यते इत्यादीनि परमते वाचारंभणश्रुत्यैककर्तृव्यायोक्तार्थतात्पर्यकाणि भवंतीति टीकायामुट्टंक्य निराकृतानि। इत्थं च किंनामेति टीकायां मूले प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वमित्यस्य तत्पर्यवसितं किंचिदित्यर्थः। लाक्षणिकनिर्देशस्य तु ज्ञाननिवर्त्यत्वस्योक्तपर्यवसाने पूर्वोक्तरीत्या युक्तिसूचनमेवेति नान्यथाऽनुवादशंकापीति सर्वं चतुरस्रं। शुक्तिरजतादौ कुतस्तदंगीकार्यं येन तद्वा तत्पर्यवसितमन्यद्वा तत्र स्यादित्यत आह। नात्रेति। अभूदित्युपलक्षणं। नास्ति न भविष्यति इत्यपि ग्राह्यं। त्रिकालग्राहकेण साक्षिणैवात्यंताभावे कालत्रयसंबंधावगाहित्वसंभवात्। भूतकाले निषेधाकारप्रदर्शनं तु तादृशप्रतीतिकाल एव सत्तायाः प्रसक्तत्वादिति ध्येयम्। प्रागुक्तेति। असद्वैलक्षण्यसाधकापरोक्षप्रतीतिगोचरत्वस्यान्यथोपपत्तिरूपदूषणेनेत्यर्थः। अपसिद्धांतादीति। जगद्धर्मतया ब्रह्मातिरिक्तत्वादित्यर्थः। आदिपदेन।

---

* टिप्पणी—संबंधध्वंसेत्यर्थः

( टीका ) किमत इत्यत आह ।

(मूलं) **तस्यच मिथ्यात्वेऽबाध्यत्वमेव सत्यं स्यात् ॥३७॥**

( टीका ) यदा जगतो बाध्यत्वमपि मिथ्या तदात्मवन्मिथ्याभूतबाध्यत्वेन जगतोऽबाध्यत्वमेव सत्यं स्यात् । तथाच न केवलं प्रमाणाभावेन जगतो बाध्यत्वाभावः । किन्नाम परन्यायेनापि । न केवलं बाध्यत्वाभावात्तदनुपपत्त्या सद्विलक्षणत्वासिद्धिः । प्रत्युताबाध्यत्वस्य सत्यत्वात्सत्यत्वमेव सिध्यति ।

---

दृश्यत्वादिहेतूनां तत्र व्यभिचारः एकमेवाद्वितीयमित्यादिश्रुत्यर्थानुपपत्तिश्च ग्राह्या। उक्तप्रतियोगित्वरूपबाध्यत्वस्य भावरूपतया भावाद्वैतपक्षेऽपि तस्यानिस्तारादिति भावः । आत्मवदिति । मिथ्याभूतस्ववृत्तिबाध्यत्वकत्वाबाध्यत्वयोः शुद्धात्मन्येव व्याप्तिग्रहादिति भावः । नच निर्धर्मके तत्र कथं व्याप्तिग्रह इति वाच्यं । स्वसमानसत्ताकधर्माभाववत्वस्यैव तत्वात् । अन्यथा शुद्धत्वपारमार्थिकत्वादेरप्यसिद्ध्यापातादित्याशयात्। ननु मिथ्याभूतस्वनिष्ठबाध्यत्वकत्वेन हेतुना जगत्यबाध्यत्वसाधने सिद्धसाधनं । तत्र बाध्यत्वस्य तद्भावस्य चोभयोर्मिथ्यात्वेन स्वसमानाधिकरणात्यंताभावप्रतियोगित्वरूपमिथ्यात्वनिर्वाहाय तद्भावस्य तत्र सत्वात् । न चाव्याप्यवृत्तित्वमात्रे पर्यवसानं न मिथ्यात्व इति वाच्यं । अधिकरणताद्वयस्याप्यनवच्छिन्नत्वाभ्युपगमात् । नच विरोधः । न्यूनाधिकसत्ताकत्वेन विरोधपरिहारे ऽन्यतरस्य प्रातिभासिकत्वं पारमार्थिकत्वं वा स्यात् इति वाच्यं । उभयोः समसत्ताकत्वेऽपि विरोधानंगीकारात् । तदुक्तं ' विरुद्धमिति क नः संप्रत्ययः ' इति । न चैवं शास्त्रवैय्यर्थ्यं । एकस्यार्थस्य साधने बाधने वा कृतेऽन्यतरापरिहारादिति वाच्यं। एकतरनिर्णयस्यापरबुद्धिविरोधद्वारा प्रवृत्त्यादिकार्यनिर्वाहाय तदुपपत्तेः। नच सत्यभूताबाध्यत्ववत्वं साध्यमिति वाच्यम् । आत्मातिरिक्तस्य सर्वस्य मिथ्यात्वेनात्मन्यपि सत्यभूताबाध्यत्वाभावेन व्याप्त्यसिद्धेरिति चेन्न । आत्मनिष्ठाबाध्यत्वस्य मिथ्यात्वे तत्रोक्तलक्षणनिर्वाहाय तद्भावरूपबाध्यत्वस्य तत्र स्वीकारापत्त्या ब्रह्मजगतोरविशेषापत्त्या ब्रह्म सत्यं जगन्मिथ्येति विशेषो न स्यात् । एवं जगति ब्रह्मणि विद्यमानस्यासत्वाभावस्य जैनोक्तसप्तभंगित्वाभावस्यापि मिथ्यात्वनिर्वाहानुरोधेन तद्भावरूपासत्वसप्तभंगित्वयोरप्यापत्तेः । नच ब्रह्मणि जगति वा तेषामन्य एवाभावास्तन्मिथ्यात्वसिद्ध्येऽनुसर्तव्याः। तद्भावपरंपरयाऽनवस्थापत्तेः। न च 'अनवस्थादयो दोषाः सत्तां निघ्नंति वस्तुनः । अद्वैतिनां ते सुहृदो जगतस्तत्प्रसंजकाः ' इति खंडनोक्तेनानवस्थादयोऽस्माकं दोषा इति वाच्यम्। अनवस्था भयेन मूलभूतमिथ्यात्वस्यैव हानिप्राप्त्या मूलक्षतेः। तस्माज्जगति बाध्यत्वस्य मिथ्यात्वसिद्ध्यनुरोधेनांगीक्रियमाणो बाध्यत्वाभावः तत्र सत्य एव स्वीकर्तव्यः । ब्रह्मणि बाध्यत्वस्य मिथ्यात्वसिद्ध्येंऽगीक्रियमाणतद्भाववत् । सच ब्रह्मस्वरूपमेवेत्यंगीकर्तव्यमन्यथाऽद्वैतहानिप्रसंगात् । तावताऽपि बाध्यत्वाभावस्य यादृशसंबंधेन ब्रह्मणः सत्यत्वाभ्युपगमस्तद्वज्जगतोऽपि तदवर्जनीयमेवेत्यभिप्रायात् । तथा चाधिकसत्ताकाभावस्य न्यूनसत्ताकाभावस्य च न विरोधित्वं किंतु समसत्ताकस्येति मतेनैव परेण सर्वेषां मिथ्यात्वं स्वाधिकसत्ताकाभावघटितमेव निर्वाच्यमित्युक्तदूषणं घटते । परन्यायेनैव दूषणस्योपक्रांतत्वात्। यद्वक्ष्यति न केवलं प्रमाणाभावेन किंतु परन्यायेनेति। ननु समसत्ताकयोर्भावाभावयोरेकत्र सत्ताभ्युपेयत एव। मिथ्यात्वमपि स्वान्यूनसत्ताकस्वसमा-

नाधिकरणाभावप्रतियोगित्वमेव। अतो ब्रह्मणि जगति बाध्यत्वाबाध्यत्वे द्वे अपि मिथ्या स्वप्न प्रतीतगजतदभावोभयवत्। नच ब्रह्मजगतोरविशेषापातः ब्रह्मणः अबाध्यत्वोपलक्षितस्वरूपस्य बाधावधिरूपस्य ज्ञानानिवर्त्यत्वात् अन्यथा बाधस्य निःसाक्षिकत्वापत्तेः। जगतस्तु स्वरूपमप्युच्छिद्यतेऽतो विशेषः। नच घटतदभावग्रहयोः परस्परप्रतिबध्यप्रतिबंधकभावानुपपत्तिः रूपरसग्रहयोरिवेति वाच्यम्। सामानाधिकरण्याग्रहदशायां प्रतिबंधकत्वोपपत्तेः कालिकसंबंधावच्छिन्नाकाशाभावत्वावच्छिन्नाभावस्य तदभावरूपगगनाभावस्यचानवच्छिन्नसामानाधिकरण्यशालिनोरपि ग्रहस्य परस्परप्रतिबंधकत्वोपलंभात्। अत एवाव्याप्यवृत्तित्वग्रहस्योत्तेजकता। रूपरसादीनामपि सामानाधिकरण्याग्रहदशायां प्रतिबंधकत्वमिष्टमेव। परंतु पटुतमसंस्कारवशान्नियमेन सामानाधिकरण्यं भासत एवेत्यप्रतिबंधकत्वानुभवः। असामानाधिकरण्यग्रहकाले प्रतिबंधकतायाः तवापीष्टत्वात्। मया तु सामानाधिकरण्यासामानाधिकरण्यौदासीन्येन तत्प्रत्ययानंगीकारात् तादृशग्रहकाले न प्रतिबंधकत्वापादनमस्माकं। न चैकस्मिन्नुभयोः सत्वे रूपपरिमाणयोरिवोभयोरेकदैव प्रत्यक्षं स्यान्नैव वा स्यात्कथमेकस्यैव ग्रहः स्यादिति वाच्यं। बाध्यत्वस्यावृतत्वात् अत एव तदनुपलंभरूपसामग्रीबलादबाध्यत्वस्य प्रत्यक्षमनुपलब्धिरूपप्रमित्यंतरं वा युक्तं। सर्वत्र समसत्ताकाभावस्यैव मिथ्यात्वोपपादकत्वमित्यत्र निर्बंधाभावादधिकसत्ताकाभावमादायैव जगन्निष्ठासत्वाभावसप्तभंगित्वाभावादीनां मिथ्यात्वोपपत्त्या न जगति सप्तभंगित्वासत्वाद्यापत्तिः। स्वान्यूनसत्ताकाभावस्यैव मिथ्यात्वघटकत्वात्। एवं च ब्रह्मणि बाध्यत्वाभावस्य बाध्यत्वसामान्याभावरूपसत्वानाश्रयत्वादात्मदृष्टांतो न युज्यते। किंचित्कालाबाध्यत्वब्रह्मज्ञानेतराबाध्यत्वरूपसत्यत्वस्य निवेशे तादृशाबाध्यत्वस्य जगत्यस्माकं सम्मतत्वात् सिद्धसाधनमर्थांतरता चेति चेन्न। समसत्ताकयोर्भावाभावयोरेकत्र समावेशस्य विचारासहत्वात्। तथाहि किं सर्वत्र मिथ्यात्वशरीरे तस्यैव निवेशे संभवत्यधिकसत्ताकाभावांतरकल्पनं व्यर्थमिति सर्वत्र समसत्ताकभावाभावांगीकारः उत तस्य मिथ्यात्वाघटकत्वेऽपि तत्रापि प्रमाणसद्भावात्। नाद्यः। तथात्वे ब्रह्मजगन्निष्ठासत्वाभावसप्तभंगित्वाभावादीनां तत्समसत्ताकतत्प्रतियोगिभूतासत्वसप्तभंगित्वेनैव मिथ्यात्वस्योपपादनीयतापत्त्या सर्वस्यासत्वाद्यापत्तिः। असति च सत्वापत्तिश्च। पटे घटत्वाभावस्य मिथ्यात्वनिर्वाहाय तदभावरूपघटत्वस्य तत्रांगीकारापत्त्या पटे घटत्वं घटे पटत्वं इति सर्वसांकर्यापत्तेश्च। तन्निष्ठघटत्वाभावाभावस्य घटत्वादतिरिक्तत्वे पटे घटत्वाभावो नास्तीति वाक्यस्याप्रामाण्यं। घटत्वं नास्तीति वाक्यस्य प्रामाण्यमिति व्यवस्थाभावप्रसंगोऽप्रामाणिकाभावांतरकल्पनाप्रसंगश्च। अपि च शुक्तौ रजताभावस्य रजतसमानसत्ताकस्यैव रजतमिथ्यात्वघटकत्वप्राप्त्या बाधज्ञानस्यापि प्रातिभासिकविषयत्वेन प्रामाण्यानुपपत्तिः। तत्रान्यादृशाभावभाने तत्प्रतियोगित्वेन मिथ्यात्वव्यवहारानुपपत्तिः। अपि चैकस्य साक्षात्कारेणापरस्य तन्मूलाज्ञानस्य च निवृत्तौ रजताभावसाक्षात्कारेण रजततदुपादानाज्ञानयोरिव रजतप्रत्यक्षेण तदभावतदुपादानाज्ञाननिवृत्त्यापत्त्या पुना रजताभावादिविषयकबाधानुत्पत्तौ भ्रमानिवृत्तिरेव स्यात्। पुनरज्ञानांतरेण रजताभावांतरोत्पत्तिकल्पनेऽनंताप्रामाणिकतादृशाभावकल्पना स्यात्। तस्य नास्ति नासीन्न भविष्यतीति कालत्रयसंबंधत्वेन प्रतीत्यनुपपत्तेश्च। न चैतत्पक्षे एकज्ञानेनापरस्य तिरोभाव एव स्वीक्रियत इति वाच्यं। तथात्वे वन्हाववन्हित्वभ्रमवेलायां वन्हित्वस्य तिरोधानप्राप्त्या दाहानुत्पत्तिप्रसंगात्। ब्रह्मणि बाध्यत्वाबाध्यत्वयोः उभयोस्तुल्यत्वे तत्र बाध्यत्वबोधकशून्यवादिवाक्यस्याबाध्यत्वबोधकत्वद्वाक्यस्य श्रुतीनां च प्रामाण्ये अविशेषेण तान्नि

राकरणाद्यनुपपत्तिश्च। नच मद्वाक्यतादृशश्रुतीनामबाध्यत्वोपलक्षितस्वरूपपरत्वाद्विशेष इति वाच्यं। बाध्यत्वोपलक्षितस्वरूपपरत्वस्य तद्वाक्येऽपि तौल्यात्। बाध्यत्वोपलक्षितं कथं स्वरूपं भवतीति चेत् तर्हि तत्राबाध्यत्वस्य त्वयांगीकारेऽपि तदपरित्यागात्तवापि कथं तात्सिद्धिः। अबाध्यत्वमपि मयांगीकृतमिति चेत् सर्वमिथ्यात्ववादिना तेन तस्य मिथ्यात्व सिद्धये तत्राबाध्यत्वं स्वीकृतमेवेति साम्यात्। किंचैकस्मिन्नधिकरणे उभयोर्निरव-च्छिन्नवृत्तिकत्वे तयोः परस्पराभावात्मकत्वं पारिभाषिकं स्यादतस्तत्ज्ञानयोः प्रतिबध्यप्रति बंधकभावोऽप्ययुक्त एव। अन्यथा प्रमेयत्वाभिधेयत्वयोर्भावाभावात्मकत्वं तत्ज्ञानयोःपरस्पर प्रतिबंधकत्वं च स्यादविशेषात्। असामानाधिकरण्यस्यापि त्वन्न्यायेन सामानाधिकरण्या विरोधित्वे तद्ग्रहसाहित्यासाहित्ययोरपि प्रमेयत्वग्रहवदकिंचित्करत्वमेव। रूपरसयोः सामानाधिकरण्यासामानाधिकरण्यौदासीन्येन प्रत्ययानुपपत्तिरप्ययुक्ता। तथात्वे तत्र कदापि सामानाधिकरण्यसंशयानुदयप्रसंगात्। निःसाक्षिकनिरवधिकबाधाभावात् ब्रह्म-स्वरूपसिद्धिरित्ययुक्तं। त्वन्मते धर्मसामान्याभावावगाहिबाधबुद्धिवत्किमपि नास्तीति बाधसंभवात्। निःसाक्षिकत्वं तु तवाप्यवर्जनीयं चरमवृत्तिक्षण एवाज्ञानाभावांगीकारेणा-ज्ञानोपाहितचिद्रूपसाक्षिणो अभावात्। शुद्धचितस्तु ग्राहकत्वादिधर्मविधुरत्वात्। नच वृत्त्युपहितचिदेव वृत्तिग्राहिकेति वाच्यं। वृत्तेरज्ञानवदनादित्वाभावेनोत्पत्स्यमानस्य तस्य साक्षिणि प्रथमक्षणे उपधानेन साक्षित्वसंपादकत्वे द्वितीयक्षणे स्वस्यैव नाशेन ग्राह्यत्वा-योगात्। अन्यथा स्वोपहितसाक्षिणा प्रतीतिमात्रशरीरत्वस्य सिध्यंगीकारे आत्माश्रया-पत्तेः वृत्तिबाधस्य निःसाक्षिकतायाः दुर्वारत्वाच्च। तस्याः स्वयमेव बाधत्वमिति न वाच्यं। शून्यमतेऽपि प्रथमक्षणे स्वस्वान्यसर्वबाधस्यात्मैव साक्षी ततो न किंचिदिति सुवचत्वात्। कालिकसंबंधावच्छिन्नाकाशाभावत्वावच्छिन्नाभावतदभावयोः तादृशाभावत्वा-दिना रूपेण नैकस्मिन्नधिकरणे निरवच्छिन्नवृत्तित्वं। तादृशवृत्तित्वमेव मिथ्यात्वघटकयो-र्वाच्यं। अन्यथा तद्वदेव मिथ्यात्वासिद्धिप्रसंगात् दृष्टांतो विषमः। तस्मात्त्वाधिक-सत्ताकाभाव एव मिथ्यात्वघटकस्तत्ज्ञानं स्वोपादानाज्ञाननिवर्तकतया स्वनिवर्तकं। स्वप्र-तीतिकाले आवृतं स्वज्ञानं तु न तन्निवर्तकं। अतो रजतनिवर्तकतदभावो व्यावहारिको जग न्निवर्तकस्तु पारमार्थिको ब्रह्मस्वरूपभूत इत्येव कथंचिदुक्तिसहं। नापि प्रमाणांतरानु-सारेणेति पूर्वोक्तद्वितीयः पक्षः मिथ्यात्वस्याधिकसत्ताकाभावेनैवावश्यमुपपादनीयत्वे समसत्ताकस्वसमानाधिकरणाभावांतरे मानाभावात्। स्वप्नप्रतीतगजाभावस्य जागृ-त्कालाबाधितत्वेन व्यावहारिकस्यापि स्वप्ने भाने बाधकाभावेन स्वाप्नगजतदभावयोरुभयो रपि प्रातिभासिकत्वासिद्धेः। उपपादितं चैतदन्यत्र ¶ तस्मादात्मदृष्टांतेनैतत्साधनं युक्तं। नन्वेवमपि जगदबाध्याबाध्यत्ववत् बाध्यबाध्यत्ववत्वादात्मवदिति युक्तं स्यात्। तन्न घटते आत्मनि बाध्यत्वस्य प्रातिभासिकत्वेन तद्बाधकबाध्यत्वाभावस्य व्यावहारिकस्यैवो-ररीकरणात्। तत्र सर्वथा बाध्यत्वस्याभावेन तद्घटितसाध्यवैकल्यं सुस्थिरं। साध्या-प्रसिद्धिश्चेति चेन्न। जगदबाध्यत्वोपलक्षितस्वीयकेवलरूपकं बाध्यत्वप्रकारकभ्रमगोचरत्वा दात्मवदिति प्रयोगे दृष्टांतासिद्धिसाध्याप्रसिद्ध्योरभावादुक्तवाक्यस्यात्रैव तात्पर्यात्। नच जगतः केवलरूपमात्मैवेति सिद्धसाधनमिति वाच्यं। तस्य केवलात्मस्वरूपत्वे आत्मनोऽपि जडत्वस्य जगतोऽपि सच्चिदानंदात्मकत्वस्याप्यापत्तेः। एतद्वारककेवलरूपत्वस्य निर्वक्तुम शक्यत्वात्। साध्ये केवलरूपत्वं नाम किमितिचेत् आत्मस्थलेऽपि त्वया व्यवह्रियमाणं

¶ टिप्पणी—सुधायां फलाध्याये

यादृशं तादृशस्यैव मयाऽपि निर्वक्तुं शक्यत्वात् । न चासति प्रतिपन्नोपाधिघटितबाध्यत्वाभावेन तत्र बाध्यत्वज्ञानं भ्रम एवेति तत्र व्यभिचार इति वाच्यं। असतस्त्वन्मते † अधिष्ठानत्वायोगेन तत्र तद्भ्रांतेर्वक्तुमशक्यत्वात् । मन्मते असतः प्रतीत्यंगीकारेण प्रतिपन्नोपाधिघटितबाध्यत्वस्य तत्रापि सत्वेन तत्र तज्ज्ञानस्य भ्रमत्वाभावेन हेतोरेवाभावात् । बाध्यत्वमत्र त्रैकालिकनिषेधप्रतियोगित्वमात्रं विवक्षितं। तेन कस्यचिदसतोऽन्यत्रानारोपितस्य तादृशबाध्यत्वभ्रमविषयत्वेऽपि न व्यभिचारः। न चैवमपि शुक्तिरूप्ये मन्मते व्यभिचारः जगतीव तत्रापि प्रतीयमानबाध्यत्वस्य मिथ्यात्वेन तत्प्रकारकभ्रमविषयत्वात् इति वाच्यं । व्यवहारकालबाध्यबाध्यत्वभ्रमविषयत्वस्य विवक्षितत्वात् । शुक्तिरूप्यादौ तज्ज्ञानस्य सर्वेषां व्यवहारकालाबाध्यत्वात् । जगति मिथ्यात्वरूपबाध्यत्वस्य व्यवहारकाल एव बाधितत्वात् । अन्यथा तदर्थं प्रवृत्याद्यनुपपत्तिप्रसंगात् । देहात्मैक्यारोपानंगीकारान्न तत्र व्यभिचारः। अन्यथा तत्र बाध्यत्वग्रहस्य व्यवहारकालाबाध्यत्वे तन्मूलकप्रवृत्त्यनुपपत्त्या तत्र हेतुसत्वावश्यकत्वेन व्यभिचारापत्तेः। वस्तुतः मिथ्याभूतस्वविशेष्यकप्रतीतिविषयबाध्यत्वकत्वलिंगेन बाध्यत्वाभाव एव जगत्यात्मदृष्टांतेन साध्यते । शुद्धत्वात्मत्वादिवत्कल्पितोऽपि स शुध्दात्मा साधारणत्वेनैव स्वीक्रियतेऽतो जगति परेण तदनंगीकारात् न सिद्धसाधनं । यद्यपि जगत्यबाध्यतादात्म्याध्यासे तदीयाबाध्यत्वस्यापि संबंधः तत्राध्यस्यते । अत एव सन् घट इत्यादिप्रत्ययस्य घटादावबाध्यत्वावगाहित्वं अस्य लौकिकप्रत्यक्षरूपत्वानंगीकारेऽपि परोक्षरूपताया अंगीकृतत्वात् । तथाच पुनः सिद्धसाधनमिति तथापि स्वोपहिततादात्म्याप्रयोज्यस्वरूपसंबंधेन ब्रह्मणीव जगत्यपि साधनान्न सिद्धसाधनं । नन्वथापि शुक्तिरूप्ये परमते ऽ नैकांत्यं तन्निष्ठबाध्यत्वस्यापि परमते मिथ्यात्वात् । पक्षकोटिनिक्षेपे च त्वन्मते बाध इति चेन्न । मिथ्यात्वेनोभयसिद्धभिन्नत्वविशेषणस्याधिकस्य निवेशात् । तूलाज्ञानादिरूपपरासिद्धपदार्थेषु परेणानिर्वचनीयत्वस्य मया चासत्वस्यचांगीकृतत्वादत्यंताभावप्रतियोगित्वरूपमिथ्यात्वेनोभयासिद्धत्वान्न व्यभिचारः । नच तन्मात्रस्य कुत्रापि व्यभिचाराभावादितरांशस्य वैय्यर्थ्यमस्य परिचायकत्वेन तत्तद्भेदकूटस्य निवेश एव तात्पर्यमित्युक्तावपि स एव दोषस्तन्मात्रस्य व्यभिचारानुपलंभादिति वाच्यम् । व्याप्तिग्रहौपयिकस्य व्यभिचारावारकस्यापि सार्थकत्वस्य पूर्वमुपपादितत्वेन तद्ग्राहकतया सार्थक्यात् । अन्यथा तन्मात्रस्य सत्यत्वे प्रयोजकत्वशंकाया निरासानुपपत्तेः । तन्निवेशे तु परस्परविरूद्धयोरेकतरमिथ्यात्वे परस्य तत्सत्यत्वमिति सर्वलोकावगतसामान्यनियमस्य विना प्रमाणं भंगप्रसंग इत्यनुकूलतर्कोत्थापनद्वारा व्याप्तिग्रहसंभवात् । यद्वा शुक्तिरजतमिथ्यात्वे मिथ्यात्वं प्रमाणाभावेन निराकृत्यायं हेतुः प्रयोक्तव्य इत्याशयः । यद्वा मिथ्यात्वेनोभयासिद्धं स्वस्मिन् प्रतीयमानमिथ्यात्वं तत्संबंधित्वमेव हेतुस्तथा च न कुत्रापि व्यभिचारो नापि विशेष्यदलवैय्यर्थ्यं । वस्तुतः शुक्तिरूप्यादिनिष्ठमिथ्यात्वादीनामपि जगदंतःपातितया पक्षकोटिनिक्षिप्ततया तत्र सत्यत्वसंदेहस्यैव सत्वेन तद्दशायां शुक्तिरूप्ये मिथ्याभूतस्वप्रतीयमानमिथ्यात्वकत्वरूपहेतुग्रह एव न घटते । विशेषणतावच्छेदकस्य संदिग्धत्वेन तद्घटितहेतुग्रहायोगात् । प्रतियोगितावच्छेदकाविशिष्टप्रतियोगिनिर्णयाभावेन तदवच्छिन्नहेतुप्रतियोगिकाभावसंदेहस्याप्ययोगेन संदिग्धव्यभि-

† टिप्पणी—असद्विशेष्यकबाध्यत्वप्रकारकभ्रमे तस्याधिष्ठानत्वसिद्धये तस्याज्ञानावच्छेदकत्वं वक्तव्यं। तच्च नास्तीति भावः ।

चारस्याप्यभावात्। कथंचित् तत्संदेहाहितसंदेहः संभवतीत्युक्तावपि तस्य व्याप्तिग्रहाविरोधित्वात् उक्तानुकूलतर्कस्य जागरूकत्वाच्चेति सारं । नन्वबाध्यत्वसाधनेऽपि तत्सत्यत्वस्यानेनासिद्ध्याऽर्थांतरं । अबाध्यत्वस्य सत्यत्वात्सत्यत्वमेव सिध्यतीत्युत्तरत्र कथनायोगश्च तत्सिद्ध्युपायाभावात्। तस्य साध्यकोटौ निवेशे दृष्टांते साध्यवैकल्यमुक्तमेवेति चेन्न । तत्साधकस्यैव तत्सत्यताग्राहकत्वात् । अन्यथा सत्यं ज्ञानमित्यनेन ब्रह्मणि सत्वबोधने तत्सत्यतायां प्रमाणांतरान्वेषणपरंपरया ब्रह्मसत्ताया जगतीवारोपितत्वशंकानिवृत्तिर्न स्यात्। साध्यकोटौ अबाध्यत्वे सत्यत्वनिवेशेऽपि न दृष्टांते साध्यवैकल्यं परेण ब्रह्मस्वरूपभूताबाध्यत्वस्यैव केवलं कल्पितभेदेन धर्मताया अंगीकृतत्वात्। अत एवोक्तं पंचपादिकायां। आनंदो विषयानुभवः सत्यत्वं चेति संति धर्माः अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासंत इति । केवलं भेदोपहितरूपेण मिथ्यात्वमिति । अतो नार्थांतरादिकं नापि ग्रंथविरोधः । ननूत्तरत्राबाध्यत्वस्य सत्यत्वात्सत्यत्वमेव सिध्यतीति ग्रंथेन सत्यभूताबाध्यत्वेन सत्यत्वसाधनं प्रतीयते तत्कथं संगच्छते । अबाध्यत्वस्यैव सत्वेन तेनैव तत्साधने साध्याविशिष्टतापातादिति चेन्न । यतः पंचम्यर्थो न ज्ञाप्यत्वं किंतु प्रयोज्यत्वं सिद्धिपदार्थभूतप्रमान्वयिविषयसत्वस्य तत्प्रमानिर्वाहकत्वान्न दोषः । अथवा सत्यत्वं सद्विलक्षणत्वाभाव इत्यर्थः । तथाच घटत्वेन घटभेदाभावसाधनवद्दोषाभावात् । ननु मिथ्याभूतमिथ्यात्वकत्वेऽपि जगति मिथ्यात्वमेवास्त्वित्यप्रयोजकोऽयं हेतुः । नच लोके यत्र प्रतीयमानयत्धर्मस्यं मिथ्यात्वं तन्निष्ठतदभावस्य बाध्यत्वरूपसत्यत्ववत्वमिति सामान्यतो व्याप्तेः। सत्वेन तज्जातीयेऽत्रैव तद्वैषम्यकल्पने अप्रामाणिकाभ्युपगमप्रसंगः। अन्यथा धूमांतराणां अग्निकारणकत्वेऽपि पर्वतीयधूमस्य तत्कारणकत्वं न स्वीक्रियत इति वदंतं प्रत्युत्तराभावप्रसंगेनानुमानकथोच्छेदप्रसंगात्। सामान्यतोऽवधृतकार्यकारणभावत्यागे प्रामाणिकार्थत्यागवदत्रापि तत्सत्वात् । विरुद्धधर्माणां स्वभावतः सर्वलोकैरुक्तनियमैरवधृतस्वभावत्वात् । अन्यथा पूर्वं अपरिचितस्यापि पदार्थस्य शब्दादिनाधिकरणविशेषे मिथ्यात्वग्रहवतस्तदभावसत्यताग्रहपूर्वकप्रवृत्तेरनुभवसिद्धाया अपलापप्रसंगात् । अत एव ब्रह्मातिरिक्ते सत्यतायाः कुत्राप्यनंगीकारात् तत्सत्यताघटितव्याप्तिर्ममासिद्धेत्यपास्तं । लोकानुभवसिद्धस्य विना प्रमाणेन भ्रांतत्वकल्पनया सिद्धांतविशेषांगीकारेण प्रवृत्तौ वाद्यंतरेणाप्रयोजकत्वव्यभिचारादीनामदूषकत्वं मया ऽभ्युपगम्यत इत्युक्तौ तवोपायाभावेन निरुत्तरत्वप्रसंगात् । तवापि यत्र यो मिथ्या तत्र तदधिकरणसत्ताकतदभाव इति व्याप्तेरंगीकृतत्वेन व्यावहारिकबाध्यत्वस्य मिथ्यात्वे तदभावस्य सत्यत्वेनैव पर्यवसानादिति वाच्यं । लोकेऽपि यदभावावृत्तियद्धर्मावच्छिन्नस्य यत्र येन संबंधेन मिथ्यात्वं तत्र तद्धर्मावच्छिन्नाभावः सत्यः। यदभावसाधारणयत्धर्मावच्छिन्नस्य यत्र येन संबंधेन मिथ्यात्वं तत्र तादृशाभावोऽपि तेन संबंधेन मिथ्यैवेति व्याप्तिः। अत एव कालिकसंबंधेनाभावत्वप्रमेयत्वाद्यवच्छिन्नस्यात्मनि मिथ्यात्वे तदवच्छिन्नाभावोऽपि तेन संबंधेन मिथ्यैव। अन्यथा कालिकसंबंधावच्छिन्नाभावत्वावच्छिन्नाभावस्यात्मनि कालिकेन सत्वापत्तेः।एवं च नेह नानेति श्रुत्या प्रसक्तैःसर्वैःसंबंधैः दृश्यत्वावच्छिन्नस्य ब्रह्मणि मिथ्यात्वबोधनेन जगन्निष्ठबाध्यत्वतदभावादीनां मिथ्यात्वस्यैव प्राप्तेः। लोकानुभववैषम्यानंगीकारेण भवदीयस्य विपक्षे बाधकतर्कस्यानुत्थितेरितिचेन्न । यत्राधिकरणे यस्य येन संबंधेन सत्वं तत्रानवच्छिन्नवृत्तिकस्य तत्र विद्यमानस्य वाऽभावस्य तत्संबंधावच्छिन्नप्रतियोगितायां तत्साधारणधर्मो नावच्छेदक इत्येव नियमः । अभावीयवृत्तिश्च भावाभावसाधारणविशेषणतापक्षे विशेषणतासंबंधेन स्वीयानुयोगि-

तावच्छेदकसंबंधेन वा यथामतं निवेश्यमतो न कश्चित्क्षुद्रोपद्रवः। इत्थं च कालिकसंबंधाव-च्छिन्नप्रमेयत्वावच्छिन्नाभावस्य कालिकेनात्मा वृत्तित्वाद्दोषाभावः। प्रकृते तु दृश्यत्वावच्छि-न्नस्य येन संबंधेन प्रसक्तिस्तेनैव संबंधेन तदवच्छिन्नाभावबोधने श्रुतेस्तात्पर्यं बोध्यमा-नाभावसाधारणाद्दृश्यत्वस्य तादृशप्रतियोगितावच्छेदकत्वायोगेन वाक्यार्थस्य व्याहते-राकरे बहुधा दर्शितत्वात्। अन्यथाऽत्र किमपि स्वरूपसंबंधेन नास्ति अभावः स्वरूपसंबं-धेन नास्तीत्यादिवाक्येषु लौकिकपरीक्षकयोः प्रामाण्यबुद्धिः स्यात्। नच तथा लोका-नामभिमानोऽनुभवविरोधात्। यदि च नानापदेन घटत्वपटत्वादिधर्मावच्छिन्नानामुपस्था-पनेन घटत्वावच्छिन्नाभावो ब्रह्मणि एवं पटत्वावच्छिन्नाभावो ब्रह्मणीति बोधस्तदापि सर्वं मिथ्यात्वसिद्ध्ये घटत्वावच्छिन्नाभाववान् तत्वावच्छिन्नाभाववानिति बोधस्तदा व्याहति-रेव। लोके भावाभावयोरनवच्छिन्नसंसर्गेणैकत्रैकग्रहाविषयत्वात्। अन्यथा धनेच्छया प्रवर्त-मानं प्रति तदभावबोधकत्वं तत्प्रवृत्तिनिरोधाय प्रेक्षावतां न स्यात्। तदभावबोधेऽपि तद्ग्रहानिवृत्तौ तदिच्छाया अनुच्छेदानुपपत्तेः। भिन्नाभिन्नविषयकनानाबोधांगीकारे वाक्य-भेदापत्तिर्वाक्यस्य प्रामाण्यचिंतायामुभयत्र प्रामाण्यग्रहानुपपत्तिरन्यथा परमतनिराकर-णादौ प्रवृत्त्यनुपपत्तेः। घटाभाववान् घटाभावाभाववानिति बोधो यदि घटान्याभावविषयक-स्तदा तस्य मिथ्यात्वसिद्ध्ये पुनस्तदभावांतरस्यैवं तस्यापि तस्यापीत्यनवस्थितविषय-धारापत्त्या सर्वमिथ्यात्वग्रहस्य जन्मसहस्रेणाप्यभावप्रसंगः। नच घटाभाववान् तदधिकस-त्ताकतदभाववानिति बोधस्तस्य चाधिकसत्ताकस्य पारमार्थिकत्वेनैव प्रतीतत्वान्न तान्मि-थ्यात्वबोधनायाभावांतरं तस्य बोधनीयमिति ब्रूषे तदा तादृशाभावस्याधिकरणीभूतब्रह्म-भिन्नत्वे शुद्धाद्वैतासिद्धिः। अधिकसत्ताकत्वे प्रतीयमानाभावतत्प्रतियोगिनोरेकानाहार्य-ज्ञानगोचरत्वायोगश्च। तादृशाभावाधिकरणतातत्संबंधानामपि मिथ्यात्वबोधनाय तदभावस्यापि बोधनीयतया आहार्यत्वं दुर्वारमेव। घटसंयोगशून्यः संयोगेन घटवानि-त्यस्यापि व्याहतत्वात्। तादृशाभावस्य ब्रह्मात्मकतया सत्यत्वमित्युक्तावपि शुद्धस्य तथा-त्वेप्युक्तवाक्यबोधिताभावत्वोपहितस्य तदधिकरणत्वादीनामपि मिथ्यात्वबोधनस्यावश्य-कत्वेन स एव दोषः। तेषामप्यत्यंताभेदे आधाराधेयभावसंबंधत्वादीनामयुक्तत्वेन तदुप-हितस्य ब्रह्मान्यत्वस्यावश्यकत्वात्। पारमार्थिकत्वाकारेण दृश्यसामान्याभावबोधकत्वस्य व्यधिकरणाधर्मावच्छिन्नाभावपक्षमंगीकृत्याभ्युपगमेपि तादृशाभावसंबंधादीनामपि पुन-स्तेन रूपेणाभावांतरादिभानांगीकारेऽनवस्था। तेन रूपेण दृश्यसामान्यं नास्तीति बुद्धेरपि तादृशव्यधिकरणधर्मविशिष्टदृश्यरूपप्रतियोगिग्रहविरोधित्वोपपत्तये प्रातिभासिकतादृशा-भावमादाय श्रुतेर्मिथ्यात्वापर्यवसानवारणाय च तादृशाभावांशे पारमार्थिकत्वावगाहित्व-मावश्यकं। पारमार्थिकत्वेन तस्याप्यभावग्रहे प्रतियोगिबुद्धिविरोधित्वाभावस्य लौकिकपा-रमार्थिकत्वादिधर्मेण घटाभावाभावग्रहस्यानुभवासिद्धत्वात्। तादृशाभावस्य पारमार्थिक-त्वप्राप्तौ व्याहतेरवर्जनीयत्वात्। किंच पारमार्थिकत्वस्यानंदादिवद्ब्रह्मासाधारणधर्मत्वग्रहे तदवच्छिन्नाभावबोधनस्यानुपयोगः। प्रपंचस्य सत्यत्वेऽपि संभवात्। पारमार्थिक इत्या-कारकबुध्यवच्छिन्नाभावबोधने तासामननुगतत्वेन विनिगमकाभावेन श्रुतेः तदवच्छिन्ना-भावेषु तात्पर्ये * वाक्यभेदः। त्रैकालिकनिषेधप्रतियोगित्वाभावरूपधर्मेण तदभाव-बोधने तस्यापि तेन रूपेणाभावबोधनं विनाऽखंडब्रह्मासिद्धिप्रसंगात्। तदभावस्यापि बोधने अधिकरणीभूतब्रह्मणोऽप्यभावबोधकत्वापत्त्या शून्यवादसाधकतापत्तेर्व्याहते-

* टिप्पणी—अननुगतरूपेण नानार्थबोधे तात्पर्यावश्यकत्वादितिभावः।

रावश्यकत्वात् । तस्मात्कथमपि तादृशश्रुतीनां सर्वनिषेधकत्वं न युक्तं । तदभिप्रायेणैव सुधायामुक्तं । समानमेतद्यावज्जीवमहं मौनीत्यादिवाक्यप्रामाण्यचिंतायामिति । ननु अस्मन्मते भावाभावयोर्विरोध एव नास्ति। कुतो व्याहत्यादि। तथा हि किं तद्बुध्योः परस्परप्रतिबंधकत्वानुरोधेन सोंगीऽकर्तव्यः उतैकज्ञानस्यापरस्मिन् भ्रमत्वज्ञापनानुरोधेन उतैकज्ञानस्यापरोपादानभूताज्ञाननिवर्तकत्वानुरोधेन अथवा तयोरेकज्ञानस्य स्वविषयापेक्षयाऽन्यूनसत्ताकविषयकत्वस्यापरज्ञाने स्थापकत्वानुरोधेन ।नाद्यः । मण्याद्यसमवधानकाले वन्हाव्याप्यवृत्तिशक्तेरेवाभ्युपगमेन मन्मते कस्यापि कुत्राप्यप्रतिबंधकत्वात् । न द्वितीयः । (१) सन्मात्रनिष्ठस्वान्यूनसत्ताकाभावप्रतियोगित्वाविशिष्ठविषयकधीत्वस्यैव भ्रमत्वरूपत्वेन स्वविरोधिस्वाभाववन्निष्ठविशेष्यताकस्वप्रकारकधीत्वस्य भ्रमरूपत्वाभावेन तच्छरीरनिर्वाहाय तज्ज्ञापनाय वा स्वभावे स्वविरोधानपेक्षणात्।अत एव परस्परसमानाधिकरणयोरपि स्वाप्नगजतदभावयोर्बाध्यबाधकधीविषयत्वमुक्तमद्वैतसित्ध्यादौ संगच्छते। तयोः परस्परसामानाधिकरण्यज्ञानेन परस्परमेकदैव मिथ्यात्वग्रहोदयात् । तस्यैव बाधकत्वपदत्वात् । नापि तृतीयः। तथात्वे एकाश्रये परस्थित्यावश्यकत्वेन विरोधवार्ताया एवाभावात् । नापि चतुर्थः। तद्विषयकप्रमाणस्य तत्परत्वादिरूपप्राबल्यमात्रेण तन्निर्वाहेण विरोधानपेक्षणात्। नच भावाभावावविरुद्धाविति व्यवहारापत्तिर्मिथ्यात्ववादिनामिष्टत्वात् । लोकानां वाद्यंतरादीनां च तद्विरुद्धत्वव्यवहारस्य मया भ्रांतिमूलत्वांगीकारात् । नहि वाद्यंतरसंमतमेवाभ्युपेयमिति नियमः । प्रतितंत्रसिद्धांतभावप्रसंगादितिचेन्न । एवमपि लोकमर्यादातिक्रमेऽतिप्रसंगस्य प्रागभिहितत्वेन भावाभावज्ञानयोः परस्परज्ञानकाले परस्परानुत्पत्त्यन्यतराप्रामाण्यादेः स्वव्याहत्याद्युपेतार्थे वाक्यतात्पर्याभावादिसकलमर्यादापालनस्यावश्यकत्वेन व्यवस्थाभावे जयपराजयसाधनबाधनादिव्यवहारानुपपत्त्या व्याहत्यादेर्दूषणतात्वस्यावश्यकत्वे एतादृशोक्तिशतेनापि व्याहतेरपरिहारात् । व्याहतवाक्यवदस्या अपि श्रुतेर्भवदुक्तार्थे प्रामाण्यायोग एव । किंचाभावज्ञानकाले तत्प्रतियोगिज्ञानजनकनिष्ठशक्तिविघटकत्वांगीकारे तदेव प्रतिबंधकत्वं । प्रकृते च परीक्षकबुद्धिभिः उक्तवाक्यप्रामाण्यचिंतायामेकस्याभावस्य ब्रह्मणि विषयीकरणे तदभावग्रहजनकशक्तिविघटनेन तदभावग्रहानुपपत्तौ तन्मिथ्यात्वं न सित्ध्यत्येव । एवं दृश्यसामान्यस्य मिथ्यात्वग्रहाय तदभावे गृहीते तन्मिथ्यात्वनिश्चयाय तदभावग्रहे परस्परं स्वान्यूनसत्ताकाभाववति स्वप्रकारकत्वरूपभ्रमत्वग्रहस्योभयत्राप्युत्पत्त्या व्यावहारिकप्रामाण्यस्यापि श्रुतेरसित्धिप्रसंगः । नच तादृशानुपपत्तिज्ञानेनैवाखंडार्थधीर्जायत इति वाच्यम् । लोके भूतले च घटो नास्ति तदभावो नास्ति अभावसामान्यं नास्तीति व्याहतवाक्येनाखंडभूतलादेर्ज्ञानस्य जननेन प्रामाण्ये व्याहतिमात्रोच्छेदापत्त्या तादृशवाक्यस्य तादृशबोधजनकत्वरूपाप्रामाण्यस्यैव त्वयाप्यनुसरणीयत्वेन लौकिकवैदिकवाक्ययोर्व्युत्पत्तावविशेषेणात्रापि तादृशबोधजननायोगात् । तादृशानुपपत्तिज्ञानेनार्थांतरपरत्वांगीकारे प्रजापतिरात्मनोवपामुदखिददिति वाक्येनानुपपन्नस्यात्मवपोत्खननस्यैव व्यावहारिकमिथ्यात्वस्याप्यसिद्धिप्रसंगश्च । न्यूनसत्ताकत्वादिकं यदि ब्रह्मज्ञानेतराबाध्यत्वतद्बाध्यत्वादिरूपं तर्हि ब्रह्मादिपदार्थाज्ञानिनां लोकानां भ्रमत्वव्यवहारोच्छेदप्रसंगश्च । अन्यादृशं तु लोकावगातिविषयीभूतं दुर्वचं । लोकानां यत्र यस्य पारमार्थिकत्वं जानंति तत्तदभावस्यावृत्तित्वं गृहीत्वैव भ्रमत्वं गृण्हंति तथैव व्यवहरंति । अत्र घटाभावो न वर्तते ऽतोऽत्रैतावत्कालपर्यंतं मम घटाभाव

(१) मात्रशब्दः कात्स्न्यर्थवाची तेन घटादिनिष्ठाभावप्रतियोगिव्यावहारिकरजतप्रमायां नातिव्याप्तिः ।

(टीका) ननु बाध्यत्वं मिथ्येत्यनेनैव जगति बाध्यत्वासिद्धिरुक्ता। तत्किमुत्तरेण वाक्येन। मैवं। नहि मिथ्येत्यसत्वं परोऽङ्गीकुरुते। परन्यायेन चेह दूषणमुपक्रांतं। अतो व्याप्तिबलेनैव बाध्यत्वाभावमबाध्यता सत्यतया सत्यत्वं चोपपादयितुमुत्तरो ग्रंथः।

---

भ्रमोऽभूदिति ननु घटाभावोऽत्र न्यूनसत्ताक इति। किंच स्वाधिकसत्ताको वा स्वसमानसत्ताको वाऽभावः प्रतियोगिनः न विरुद्धसत्त्वकश्रुत्या सदेव सौम्येदमग्र आसीदित्यादि श्रुत्यैकवाक्यतापन्नया जगत्तदभावयोः सामानाधिकरण्यबोधनं प्रत्यक्षेण संयोगतदभावयोरवच्छेदकं भेदेनेवानयो· श्रुतिबलादेकत्रानवच्छिन्नवृत्तिरेव सिध्यति एकत्र संख्यापरिमाणयोरिव। परंतु एकत्र विद्यमानयोस्तादृशपदार्थयोरेकश्रुतिबलात्कश्चित्प्रतियोग्यनुयोगिभावाख्यः संबंधः सिध्यति। न चैतावता निष्प्रपंचत्वसिद्धिरागता। भावपक्षस्याधिकस्यैवाभावाख्यपदार्थस्यैवेति तच्छ्रुत्या सिद्धेः। नच तयोः परस्परसामानाधिकरण्यमात्रेण तयोर्मिथ्यात्वं सिध्यति। घटतदभावौ निरवच्छिन्नवृत्तिकावेवैकत्र तिष्ठत इति विप्रलंभकवाक्याद्भ्रम्यतो घटे मिथ्यात्वबुद्ध्यापत्तेः। न चेष्टापत्तिस्तस्य शुक्तिरजतादाविव घटे प्रवृत्त्यभावप्रसंगात्। अपिच सामानाधिकरण्यसत्वे तद्ग्रहणोत्तरमनुपपत्तिग्रहे बीजाभावेन तन्मात्रपर्यवसन्नतयाखंडार्थबुद्धेस्तद्वाक्यादनुदयप्रसंगः। अन्यथा सगुणवाक्यादप्यखंडार्थबोधद्वारा तत्सिद्धिः स्यात्। नन्वत्र प्रतियोग्यभावयोरेकत्र ज्ञाने उभयत्र समसत्ताकत्वधीरन्यतरस्मिन्नधिकसत्ताकत्वधीर्वा जायत इति वाच्यं। किं तावता तन्निष्ठतद्व्यक्तित्वादिज्ञानवत्वस्यानुपपत्तिग्रहरूपत्वाभावात्। अधिकसत्ताकत्वादेर्दुर्ग्रहत्वस्योक्तत्वान्मिथ्यात्वासिद्धेः प्राक् तदसिद्धेश्च। एकतरप्रमाणस्य प्राबल्यमन्यतरसत्तायाः न्यूनत्वज्ञापकमित्ययुक्तं। समानाधिकरणपदार्थेषु मध्ये कस्यचित्पदार्थे प्रमाणविशेषस्याधिक्येन प्रवृत्तेरन्यत्र तन्न्यूनसत्ताकत्वज्ञापकत्वे विधिपरवाक्यानुसारेण तत्समानाधिकरणधर्मांतराणां न्यूनसत्ताकत्वापातः। प्रतियोग्यनुयोगिभावस्य नियामकत्वेपि अव्याप्यवृत्त्यभावस्थलेपि एकस्मिन्प्रमाणविशेषप्रवृत्तावपरस्य तथात्वप्रसंगः। शुक्तित्वग्राहकप्रमाणबलाद्रजतस्य तथात्वासिद्धिप्रसंगश्च। अधिकमुक्तं वक्ष्यते चेति दिक्। तस्माद्बाध्यत्वाबाध्यत्वयोरेकत्र निषेधग्राहकमानस्य सर्वथा संभवात्पूर्वोक्तानुकूलतर्कसाचिव्येनोक्तानुमानेन जगत्सत्यत्वसिद्धिर्युक्तैव। एतदेव परिभावयितुमुत्तरत्र व्याप्तिबलादित्युक्तं। व्याप्तेरुक्तरीत्यानुकूलतर्कादिगृहीतत्वेन दार्ढ्यादित्यर्थः। हेतुसिद्धिमात्रं परन्यायेन विवक्षितं। अत एव तावतोक्तप्रमेयस्य परसिद्धत्वेपि न परन्यायेनेह दूषणमुपक्रांतं इति ग्रंथविरोधः। अंगीकुरुत इति। किंत्वनिर्वचनीयमिति वाक्यशेषः। तथाच प्रतियोगिव्यधिकरणहेत्वभावस्यैव तन्मतेऽसिद्धिरूपत्वात्तेन प्रतियोगिभूतबाध्यत्वस्याप्यंगीकारान्नासिद्धिरुद्भावयितुं शक्येति भावः। बाध्यत्वाभावं पत्सत्यत्वं। यथाश्रुते बाध्यत्वाभावमात्रस्य परांगीकारेणैव प्राप्तत्वात्तत्र व्याप्तिबल प्राप्त्युक्तेरसंगतिप्रसंगः। पूर्वोपदर्शितरीत्या व्याप्तिबलेनाबाध्यतासत्यतासिद्धेरनुमानफलत्वादुक्तव्याख्योपपत्तिः। सत्यत्वं सद्विलक्षणत्वाभावः। बीजंतु पूर्वमेवोक्तं। जगतीत्यादि।

सत्वोपहिततादात्म्यद्वारा सत्यत्ववतोपि तेन सद्विलक्षणत्वस्यार्थापत्त्या साधिततया साक्षा

(टीका) अत एव तस्य च मिथ्यात्वे बाध्यत्वाभाव इति नोक्तं। अनिर्वचनीयस्य निराक्रियमाणत्वान्मिथ्यात्वमसत्त्वमेव पर्यवस्यतीति बाध्यत्वासिद्धिः पूर्ववाक्येनैव शक्योपपादनेति चेत् सत्यं। मार्गांतरमेतदित्यदोषः। न केवलं बाध्यत्वाभावाज्जगति सद्विलक्षणत्वानुपपत्तिः। किंतु सच्छब्दार्थविकल्पानुपपत्तेश्चेति भावेन विकल्पमाह।

**(मूलं) सद्विलक्षणत्वं च सज्जातिविलक्षणत्वं सन्मात्रविलक्षणत्वं वा ॥ ३८ ॥**

(टीका) इह केचिज्जातिरेव पदार्थ इत्यातिष्ठंते। अपरेतु जातिविशिष्टा व्यक्तिरिति मन्यंते। अन्येतु स्वरूपमेवेति संगिरंते। तत्राद्ये मते सत्सत्ता जातिः। द्वितीये सत्ताविशिष्टा व्यक्तिः। तदुभयाभिप्रायेणोक्तम् सज्जातीति। सतो जातिः सज्जातिः। तथा सत्वं जातिर्यस्य तत्सज्जातीति। तृतीयमतानुसारेणोक्तं सन्मात्रेति। सन्मात्रं स्वरूपेणैव सत् न जात्या। अत्र सच्छब्दार्थ एव विकल्प्यते। वैलक्षण्योक्तिस्त्वनुवादमात्रं दूषणसौकर्यायेति ज्ञातव्यम्। ननु सत्यमबाध्यमिति परेणांगीकृतम् तदपि कस्मान्न शंक्यते। सत्यं। तथासति यदबाध्यं न तद्बाध्यते इति व्याप्य व्यापकभावानुपपत्तिस्स्फुटैवेति निर्दलत्वेन शंकानर्हत्वात्। आद्यपक्षद्वयं दूषयति।

**(मूलं) जात्यंगीकारे सद्बहुत्वम् ॥ ३९ ॥**

(टीका) सच्छब्दार्थत्वेन सच्छब्दप्रवृत्तिनिमित्तत्वेन वा सत्ताजात्यंगीकारे सतां बहुत्वमनेकत्वमंगीकर्तव्यं स्यात्।

---

त्तद्विरोधिग्रहलाभाय तत्साधनमुपयुज्यते। अत एवेति। एतद्ग्रंथस्यासिद्धिमात्रपरत्वाभावादेवेत्यर्थः। शक्योपपादनेति। तथाच तन्मात्रेणार्थापत्तेर्दूषितत्वात्परंपरयासिद्धिसमर्थनाय वाक्यगौरवप्रयुक्तमिति भावः। असिद्ध्युद्भावनमेव मुख्यं जगत्सत्यत्वं तु तदुपयुक्ततयार्थात् सिध्यतीति शंककाभिमानः। अन्यथा सत्यतां साधयितुमिति ग्रंथेनैव तद्ग्रंथप्रयोजनस्यासिद्ध्युपपादनातिरिक्तस्याभिहितत्वात्पुनरसिद्ध्युपपादनमात्रेण तद्वैयर्थ्यशंकाऽसंगतिः स्यात्। मार्गांतरमिति। अर्थापत्तेः साक्षाद्बाधप्रदर्शनपूर्वकमसिद्धिसूचनरूपमित्यर्थः। अदोषः। प्रकृतोपयुक्ताधिकार्थसूचनान्न ग्रंथाधिक्यदोष इत्यर्थः। बाध्यत्वाभावादिति। सत्यभूतबाध्यत्वाभावादित्यर्थः। सद्विलक्षणत्वासिद्धिरिति उक्तरीत्या बाधादसिद्ध्या चेत्यर्थः। विकल्पानुपपत्तेः। विकल्पपूर्वकानुपपत्तेरित्यर्थः। आतिष्ठंते भट्टा इत्यर्थः। मन्यंते नैय्यायिकाः। संगिरंते जरन्नैय्यायिकाः। न जात्या। सत्ताजातिरूपशक्यतावच्छेदकेन। व्याप्यव्यापकभावानुपपत्तिरिति। अभेदे व्याप्यव्यापकभावानुपपत्तेः प्राचीनैरंगीकृतत्वात्।

(टीका) लक्षणव्याघातप्रसंगेनैकस्मिन्नुपदेशादिनैव संगतिग्रहणाद्युपपत्त्या वैयर्थ्यप्रसंगेन च जातिवादिभिर्जातेरनेकाश्रयताश्रयणात् । सद्बहुत्वं च सदद्वैतवादिनामनिष्टम् । अथ बहूनि व्यावहारिकाणि संति संतीति नेदमनिष्टमिति चेत् । एवं तर्हि जगदेव सदिति न सद्विलक्षणम् । अथ सद्बहुत्वमनंगीकृत्य शशविषाणादिप्रतिषेधवदयं प्रतिषेधः क्रियत इति चेन्न । तथासति जातिजातिमद्वैलक्षण्यसाधनेऽर्थांतरतादिप्रसंगात् ॥ तृतीयं दूषयति ।

(मूलं) सन्मात्रविलक्षणत्वं चेत्सिद्धसाधनता ॥४०॥

(टीका) चेच्छब्दो यद्यर्थे । सद्विलक्षणत्वशब्दार्थस्तर्हीति शेषः । सिद्धसाधनता अर्थापत्तेरिति शेषः । कथमित्यत आह ॥

(मूलं) ब्रह्मवैलक्षण्यांगीकारात् ॥४१॥

(टीका) सत्तासंबंधमंतरेण स्वरूपत एव सद्ब्रह्मैव परेणांगीकृतम् । तद्वैलक्षण्यं च तद्विपरीतलक्षणयोगो वा तल्लक्षणराहित्यं वा तत्तादात्म्याभावो वा तत्सर्वं जगत्यस्माभिरंगीकृतमेवेति कथं न सिद्धसाधनता । सद्वादिना जगतो यत्सत्त्वमंगीक्रियते तदभावः सद्विलक्षणत्वमिति चेन्न । सद्वादिना प्रतिपन्नोपाधौ निषेधानर्हत्वलक्षणस्य सत्वस्यांगीकृतत्वात् ।

---

नव्यनये तत्संभवेपि परार्थस्थले तदुपन्यासायोगादितिभावः । अनिष्टमिति । यद्यपि तस्याबाध्यैक्यवादिनस्तद्बहुत्वमेवानिष्टं तथापि यदा जगति सत्ताजात्यवच्छिन्नप्रतियोगिकभेदः साधयितुमभिलषितस्तदा तदैक्यमेव अभिमतं स्यात् । अन्यथा तत्साधनानुपयोगप्रसंगादित्याशयेनेदमभिहितं । ब्रह्मैव परेणांगीकृतमिति । तादात्म्याभावो वेति । तत्संबंधावच्छिन्नप्रतियोगिताकाभावो भेद इति यावत् । तथाच व्यधिकरणधर्मावच्छिन्नप्रतियोगिकभेदानंगीकारात्तदंगीकारेण सिद्धसाधनप्रसंगात्तन्निष्ठप्रतियोगिताकभेद एव साध्यः विशिष्य ब्रह्मैवोपादाय तद्भेदपर्यवसायी । ब्रह्मातिरिक्तस्य सत्पदार्थतापक्षस्येदानीं त्यक्तत्वात् । व्यासज्यवृत्तिधर्मावच्छिन्नभेदो नास्त्येव । अस्ति चेदपि स्वस्मिन्नेव स्वस्य तादात्म्येन स्वरूपतो भानांगीकारेण तदवच्छिन्नप्रतियोगिताकभेदस्तन्निमित्तसिद्धसाधनवारणाय निवेशनीयः । एतेन व्यधिकरणधर्मावच्छिन्नभेदाभ्युपगमेपि न दोष इति ध्येयं । प्रतिपन्नोपाधाविति । अत्र प्रतिपन्नत्वं प्रतियोगिकोटावविवक्षितं । तत्वविवेकटीकायां कूर्मरोमादीनामनारोपितत्वं येषामसतां तेष्वतिव्याप्तिवारणाय प्रतीतत्वे सतीति विशेषणस्योपात्तत्वेन प्रकृते च तादृशासत्स्वतिव्याप्तिप्रसंगात् । प्रामाणिकप्रतियोगिकात्यंताभावांगीकारपक्षे उपाधिपदं सर्वदेशपरं । गगनादेः समवायेन सर्वदेशावृत्तित्वमते सत्यपदं संबंधाधिकरणसापेक्षार्थबोधकमिति गगनं सर्वत्र समवायेन मिथ्येति व्यवहारो गगनं सर्वत्र सम

(टीका) तत्र च दोषस्योक्तत्वात् । तदेवं नानिर्वचनीये प्रमाणमस्तीति (सिद्धं) स्थितम् । एवं साधकप्रमाणाभावेनानिर्वचनीयं निरस्य बाधकेनापि निराचष्टे ।

---

बाधेन सत्वं नेति व्याहार इष्टः। प्रामाणिकप्रतियोगिकात्यंताभावानंगीकारे उपाधिपदं त्रैकालिकपदं चाभयं सर्वदेशावृत्तित्वसर्वकालवृत्तित्वरूपविशेषणद्वयसमर्पकतयात्यंताभावरूपधर्मिपरिचयाय। न चैकेनैवालं । प्रागभावप्रध्वंसयोः प्रतियोगिदेशमात्रवृत्तित्वेन प्रतियोगिपूर्वोत्तरकालमात्रवृत्तित्वेन चान्यतरेणैव तद्वारणात् उपाधिपदस्य सर्वदेशार्थकत्वाभावे तस्याव्यावर्तकत्वेन वैयर्थ्यं चेति वाच्यं । त्रैकालिकोपाधिपदयोर्विकल्पेन वा तत्परिचायकबाहुल्येन झटिति तद्धर्मिपरिचयाय वोपादानसंभवात्। प्रामाणिकप्रतियोगिकात्यंताभावपक्षे च देशांतरनिष्ठाभावप्रतियोगिनि सति सत्वानुपपत्तिपरिहाराय प्रतिपन्नोपाधिपदयोर्विकल्पेन सार्थकता । तथाच प्रामाणिकप्रतियोगिकात्यंताभावानंगीकारे अत्यंताभावप्रतियोगित्वाभाव एव सत्वं तदंगीकारे तु सर्वदेशवृत्त्यभावप्रतियोगित्वाभावः । स्वप्रकारकधीविषयनिष्ठात्यंताभावप्रतियोगित्वाभावो वा सत्वं। एवं यत्र सत्वमुपपादनीयं तदेव। यादृशकूर्मरोमादेर्न कुत्राप्यारोपस्तत्र स्वप्रकारकप्रतीतेरप्रसिद्ध्या नातिव्याप्तिः। अत्र यद्यपि स्वघटितप्रतियोग्यप्रसिद्ध्योक्ताभावोऽपि स्वस्मिन् कूर्मरोमादौ वर्तत इत्यतिव्याप्तिस्तथापि तादृशप्रतियोगियद्यत्तत्त्द्भेदकूटस्य विवक्षितत्वान्न दोष इति ध्येयं । अनुभूयमानारोपीयप्रकारेष्वव्याप्तिवारणाय स्वप्रकारकधीविषयताव्यापकत्वमभावे देयं । यद्वा परेण निरुच्यमानं यादृशबाध्यत्वं तदभाव एव सत्यत्वमित्यनेनाभिप्रैति । अत्यंतासद्व्यावर्तकं सत्वेन प्रतीत्यर्हत्वं तन्मते यादृशं तदेव सत्वेनाप्रतीतासद्व्यावर्तकं भवतीति स्फुटमित्याशयेन विशेष्यदलान्नकिरिति ज्ञातव्यं । तर्हि तदवच्छिन्नभेद एव साध्यमस्तु तत्राह । तत्र चेति । दोषस्येति । व्याप्तिग्रहानुपपत्तिसिद्धसाधनतासिध्यादिरूपदोषस्येत्यर्थः। आद्यपक्षे अत्यंताभावप्रतियोगित्वाभावरूपसत्वावच्छिन्नभेदसंदेहदशायां पक्षे तद्घटितबाध्यत्वरूपहेतोरपि संदिग्धतैवेत्यसिद्धिः । द्वितीयपक्षे तृतीयपक्षेपि सत्वेन प्रतीत्यर्हत्वविशिष्टस्योक्तबाध्यत्वस्यैव साध्यतया प्राप्तत्वेन तस्य च पक्षे बाध्यसंदेहाधीनसंदेहकत्वेन पक्षे साध्यसंदेहदशायां हेतोरपि संदिग्धतैव। बाध्यत्वस्यासत्साधारण्ये तत्र विशिष्टसाध्यस्य व्यभिचार एव । अर्थापत्तौ च सत्वेन प्रतीत्यर्हत्वस्य बाध्यत्वहेतुसाध्यकोटावप्रवेशेपि संदिग्धासिद्धिर्दुर्वारैवेति शुक्तिरूप्यमात्रस्य पक्षत्वे सिद्धसाधनमेवेति भावः । परे तु अर्हपदप्रयोगानर्थक्यपरिहारायोक्तासद्विशेषातिव्याप्तिपरिहार एव तत्पदप्रयोजनं वक्तव्यं । निषेधप्रतियोगित्वयोग्यता च निःस्वरूपत्वं कालासंबंधत्वं अर्थक्रियाकारित्वाभावश्चेत्येवमादिः । तदभावः सत्वं सत्स्वरूपत्वकालसंबंधत्वादिः तद्रूपसत्वस्यांगीकारादित्यर्थः । तद्वत्वाभावादिरेव साध्यत इत्यत आह । तत्र चेति । शुक्तिरजतादौ सिद्धसाधनता। जगति तत्साधने बाध इति दोषस्येत्यर्थः। उक्तत्वात्। उक्तप्रायत्वात् । पूर्वं सत्यभूताबाध्यत्वेनात्मवत् कालसंबंधत्वादेरपि जगति साधनसंभवेन तनैवास्यापि सिध्दत्वमिति भावः। आत्मनस्तु जगत्कारणत्वादिश्रुत्यनुरोधात्कालसंबंधत्वादिकं सिद्धमिति न दृष्टांतासिद्धिः । तत्साधनसत्वे (१) अनुभवसिद्धेऽपि वादिवाक्योक्तयुक्त्याभासादिजनितशंकानिरासवदे (२) तत्साधनमपि युज्यत इति भाव

---

टिप्पणी—(१) आत्मनीति शेषः (२) जगति सत्वसाधनम् पूर्वोक्तहेतुकं इत्यर्थः ।

**(मूलं) नच कयापि युक्त्या मानेन वा भेदनिराकरणं भवति॥४२॥**

(टीका) यदि वियदादिकमनिर्वचनीयमंगीक्रियते तदा भेदस्य भेदिनो भिन्नत्वेऽनवस्थाप्रसंगोऽभिन्नत्वे भेद-भेदिनोरन्यतराभावप्रसंग इत्यादिकया युक्त्या मायामात्रमिदं द्वैतमित्यादिना मानेन वा यत्परेण स्वशास्त्रे भेदनिराकरणं क्रियते तदनुपपन्नं स्यात्। ननु युक्तेर्मानत्वे कथं पृथग्ग्रहणम्। अमानत्वे कथं निराकरणांगत्वमिति चेदित्थम्। युक्तिरागमेतिकर्तव्यतात्वेन स्वयममानमपि निराकरणाद्यंगं भवतीति परेणांगीकृतम्। तदनुवादश्चायमिति। कुतोनिर्वचनीयवादिनो भेदनिराकरणं न संभवतीत्यत आह।

**(मूलं) अंगीक्रियमाणत्वात्॥४३॥**

(टीका) अनिर्वचनीयत्वं हि सदसद्विलक्षणत्वं वैलक्षण्यं च भेदो वा भेदव्याप्तं वा। एवं चानिर्वचनीयमंगीकुर्वता भेदस्यांगीक्रियमाणत्वादंगीकारनिराकरणयोर्व्याहतत्वान्न भेदनिराकरणं संभवति। इष्यते च तदतो नानिर्वचनीयांगीकारो युक्तः॥ सदसद्विलक्षणत्वं नाम सत्वासत्वानाधारत्वेन भेद इति चेन्न। (सत्वासत्वानाधारत्वमेव सदसद्वैलक्षण्यं न भेद इति चेन्न)। सत्वविकल्पनिराकरणेन निरस्तत्वात्। निराकरिष्यमाणत्वाच्च। सदसद्विलक्षणत्वं मिथ्याभूतमंगीक्रियते। भेदस्तु पारमार्थिक एव निराक्रियते। तत्कथं भेदांगीकारानिराकरणयोर्विरोधः। नहि मिथ्याभूतं चंद्रभेदमंगीकृत्य पारमार्थिकतन्निरासे विरोधो भवतीत्यत आह।

**(मूलं) अनिर्वचनीयासिद्धेश्च सद्विलक्षणत्वमसद्विलक्षणत्वं च मिथ्येत्यविलक्षणत्वमेव सत्यं स्यात्॥४४॥**

(टीका) यदि विरोधपरिहाराय जगतः सद्विलक्षणत्वमसद्विलक्षणत्वं च मिथ्येत्यंगीक्रियते तदाऽनिर्वचनीयस्योक्तरीत्या प्रमाणाभावेनासिद्धेर्मिथ्याशब्दस्य तदर्थत्वानुपपत्तावसदर्थत्वे चांगीकार्ये जगतस्सदसदात्मकत्वं सत्यं प्रसज्येत। स्तंभे स्तंभवैलक्षण्यस्यासत्वे स्तंभात्मकत्वस्य सत्यत्ववदिति।

---

इत्याहुः। इत्यादिकयेति। आदिना नच विशेषणविशेष्यापेक्षया भेदसिद्धिरित्यादेर्ग्रहणं। इत्यादिनेत्यादिपदेन 'ज्ञाते द्वैतं न विद्यते' इत्यादेः संग्रहः। निरस्तत्वादिति। तथाच सद्विलक्षणत्वानिवेशपक्षे (१) इदमभ्युच्चयदूषणं। रीत्यंतरानुसरणे तु पूर्वोक्तमेव दूषणमिति भावः। निराकरिष्यमाणत्वादिति। सदसदात्मकतावत्प्रतिषेधसमुच्चयस्यापि विरुद्धत्वेनेत्यादिनेत्यर्थः। जगतः सदसदात्मकत्वं प्रसज्येतेति। नन्वनिर्वचनीयं साधकप्रमाणा-

---

टिप्पणी—(१) मूलोक्तदूषणमित्यर्थः

(टीका) अथवाऽनिर्वचनीयं साधकप्रमाणाभावेन बाधकसद्भावेन च निराकृत्य लक्षणानुपपत्त्यापि निराकरोति। अनिर्वचनीयासिद्धेश्च ॥

---

भावेन निराकृत्य बाधकेनाऽपि निराचष्ट इत्युपक्रांतं। इदानीं तु अनिर्वचनीयप्रमाणाभावम भिप्रायासत्वपक्ष एवेदं दूषणमभिहितं। तथाच कथं न पूर्वोत्तरविरोध इति चेन्न। यतोऽत्रानिर्वचनीयांगीकारे स्वव्याहतत्वादिरूपबाधकप्रदर्शनार्थमयं ग्रंथः प्रवृत्तः। तत्रांगीकारनिराकरणयोर्व्याहतिपरिहाराय पारमार्थिकभेदनिराकरणं मया क्रियत इत्युक्ते तत्रानेन ग्रंथेनेदमुच्यते। लोके सत्वासत्वौदासीन्येन प्रतीतिर्नास्तीति स्थितिः। तत्रेदं सद्विलक्षणमित्यादिवाक्यं सद्विलक्षणत्वं पारमार्थिकत्वेनैव बोधयति। तन्निषेधवाक्यमपि सत्वनिषेधरूपमसत्वं भेदे सत्वेनैव बोधयतीत्येकत्र विरुद्धे सत्वासत्वे बोधयतोर्वाक्ययोर्व्याहतिरेवं (१) सद्विलक्षणत्वं जगत्यसत्वरूपं। तदभावेऽभिहिते तदेव सत्वमित्येवं जगतः सत्वासत्वोभयप्राप्त्या व्याहतिर्वचनविरोधस्य विषयविरोधमूलत्वादित्यभिहिते तत्र जगति निषिध्यमानोपि भेदः सत्वाभाववानपि नासत्ववान् जगति सद्भेदसत्वेपि न तन्निराकरणेन पुनः सत्वमतो न व्याहतिरनिर्वचनीयस्य तृतीयप्रकारस्यांगीकारादित्याशयेन शंकितं। तन्न घटते। तत्र प्रमाणाभावेन तेन रूपेण भेदादिजगतां बुद्ध्यावनारोहेणोक्तवाक्याभ्यामुप पादितरीत्या विरुद्धधर्मवत्त्वेनैव प्रतीयमानत्वाद्व्याहतिर्दुर्वारैवेति। तथाच कथं पूर्वोत्तरविरोधः। ननु एवं तर्ह्यनिर्वचनीयांगीकारमूलकत्वं कथमस्य दोषस्य तत्परित्यागोपजीवनेनैव तद्दोषस्य प्राप्तत्वात्। एवं प्रमाणाभावोपजीवने नैव च प्रवृत्तिश्चास्य दोषस्य। तथा चानिर्वचनीयांगीकारे इति तत्पक्ष एव बाधकप्रतिज्ञा। एवं प्रमाणाभावेन निराकृत्य बाधकेन चेत्यत्रेनोक्ताप्रमाणाभावानुपजीविरीत्यंतरेण निराकरणप्रतिज्ञा च विरुध्यत्येवेति चेन्न। भेदं निराकुर्वतोऽपि परस्य पुनर्भेदोक्तिः स्वाभ्युपगतानिर्वचनीयनिर्वाहार्थैवेति उक्तबाधकस्य तन्मूलत्वाद्व्याहतेः। अत एव मूलव्याख्यावसरे यदि वियदादिकमनिर्वचनीयमंगीक्रियत इति तदेवापादकं कृतं। अत एवावतारिकावाक्येऽनिर्वचनीयपदं तदंगीकारपदमित्यदोषः। प्रमाणाभावानुपजीवने तु न कस्यापि बाधकस्य प्रवृत्तिः। प्रमाणसिद्धार्थबाधनाक्षमत्वात्। अत एव समुच्चायकच (२) शब्दप्रयोगः पर्यवसानभेदेन दूषणांतरत्वमिति न मिथ्याशब्दस्याभिप्रायांतरकल्पनाप्रयुक्तदोषांतरत्वमस्येति सर्वं समंजसमेवेति। तथाच जगत इत्यस्य भेदादिरूपस्येत्यर्थः। प्रसज्येतेति। तथाच विषयविरोधापरिहारात्स्व वचनविरोधो दुर्वार इति भावः। अथवेति। व्याख्यानांतरज्ञापकं स्वयमेव वक्ष्यति। नन्वे

---

टिप्पणी—(१) अनिर्वचनीयलक्षणे सद्वैलक्षण्योपादानेन तद्बोधकवाक्येन वैलक्षण्यरूपभेदे सत्वं गृहीतं। पुनर्भेदं निराकुर्वता त्वया वैलक्षण्यं नास्तीति वक्तव्यतया स्ववाक्येनैव भेदे अत्यंताभावप्रतियोगित्वरूपमसत्वं बोधितमिति व्याहतिरिति भावः। (२) अपि।

(टीका) अनिर्वचनीयमित्यनिर्वचनीयलक्षणम् । तस्यासिद्धेश्च नच भेदे विकल्पो युज्यत इति संबंधः । तथाहि । न तावन्निर्वचनानर्हत्वमनिर्वचनीयत्वं, मूकीभावप्रसंगेनासंभवित्वात् । नापि सत्वासत्वाभ्यां निर्वक्तुमशक्यत्वं, प्रत्येकं लक्षणत्वे सदसतोरनिर्वचनीयतापातात् । समुच्चितस्य तथात्वे सतोऽसतश्च सदसदात्मकत्वाभावेन तत्प्रसंगानिवारणात् । सत्वेन निर्वक्तुमशक्यत्वे सत्यसत्वेन निर्वक्तुमशक्यत्वमिति चेन्न । सदसदात्मकतावत्प्रतिषेधसमुच्चयस्यापि विरुद्धत्वेनासंभवित्वात् । अनिर्वचनीयवादिनो विरोधोऽसिद्ध इति चेन्न । अनिर्वचनीयसिद्धौ विरोधासिद्धिस्ततो लक्षणसिद्ध्यानिर्वचनीयसिद्धिरिति परस्पराश्रयप्रसंगात् । स्यादयं विरोधः । यदि निषेधसमुच्चयस्तात्विकस्स्यात । नचैतदस्ति । तस्यापि मिथ्यात्वांगीकारादित्यत आह । " **सद्विलक्षणत्वमसद्विलक्षणत्वंच मिथ्येत्याविलक्षणत्वमेव सत्यं स्यात्** " निषेधसमुच्चयपक्षनिराकरणसूचनार्थं द्विर्विलक्षणत्वग्रहणं अन्यथा सदसद्विलक्षणत्वमित्यवक्ष्यत् ।

---

तत्पक्षे उक्तपंचम्यर्थहेतुत्वं क्वान्वेति । पूर्वोक्तार्थस्य हेत्वाकांक्षाविधुरत्वादित्यतश्चाह । नच भेद इति । अनिर्वचनीयतापातादिति । तथा च प्रत्येकं तयोरतिव्याप्तिरित्यर्थः । यद्वा समुच्चितस्य सामानाधिकरण्यापन्नसत्वासत्वाभावद्वयस्य तथात्वे लक्षणत्वे इति नार्थः उत्तरदूषणासंगतिप्रसंगात् । किंतु समुच्चितस्य परस्परसामानाधिकरण्यापन्नस्य सत्वस्यासत्वस्य च तथात्वे अनिर्वचनीयलक्षणीभूताभावप्रतियोगित्वे इत्यर्थः । सत्वविशिष्टासत्वाभावादेर्लक्षणत्व इति यावत् । तत्प्रसंगेति । अतिव्याप्त्यसंभवेत्यर्थः । असत्प्रतियोगिकाभावांगीकारेऽतिव्याप्तिरन्यथा प्रतियोग्यप्रसिद्ध्याऽसंभव इति भावः । पूर्वभागः प्रतियोग्यप्रसिद्धिमूलकोभयोपपादक इति ज्ञेयं । सत्वेनेत्यादि । सत्वाभाववत्वे सत्यसत्वाभाववत्वमित्येवार्थः । निर्वक्तुमशक्यत्वमित्युक्तिस्तु 'प्रत्येकं सदसत्वाभ्यां विचारपदवीं न यत् ॥ गाहते तदनिर्वाच्यमाहुर्वेदांतवेदिनः ॥' इति तदुक्तिसूचनाय । विरुद्धत्वेनेति । असत्वाभावरूपसत्वेन सह सत्वाभावस्य विरुद्धत्वेनेत्यर्थः । विरोधोऽसिद्धः इति । तन्मते असत्वाभावस्य सत्वरूपत्वानंगीकारादिति भावः । निरुपाख्यत्वरूपासत्वाभावसाधने ऽसतः ख्यायमानत्वात् तत्साधनेप्यनिर्वचनीयासिध्यापत्त्यास्मदभिमतासत्वाभाव एव साधनीयस्तथा च विरोधो दुर्वार एवेत्याशयेनाह । अनिर्वचनीयेत्यादिना । मिथ्यात्वेति । त्वया बाधकेन तदभावः साधनीयः । सच मिथ्यात्ववादित्वेन स्वत एव मयाभ्युपगत इति त्वदुक्तिवैयर्थ्यमेवेति भावः । अन्यथेति । पूर्वोक्तार्थमात्रे मूलकृतां तात्पर्यं चशब्दस्त्ववधारणाद्यर्थकतया कथंचित्साधयितुं शक्य

(टीका) ननु प्रपंच एव धर्मी नास्तिकस्य सदसदात्मकत्वमापाद्यत इति चेन्न। परेणाप्यसत्वस्यानगीकृतत्वात्। एवमनिर्वचनीयासिद्ध्या साध्यभेद विषय-विकल्पनिरासेनापसिद्धान्तादिप्रतिज्ञादोषनिराकरणं कृतं। एतमेव न्यायं हेत्वादिदोषनिरासेऽतिदिशति।

(मूल) **एवमेव हेत्वादिष्वपि विकल्पो निराकरणीयः ॥४९॥**

(टीका) अत्र हेतुशब्देन तदर्थो मुक्तत्वमुच्यते। आदिपदेन दृष्टांतगते मुक्तत्वभिन्नत्वे गृह्येते। विषयसप्तमी चेयं। किमनिर्वचनीयं मुक्तत्वं हेतूक्रियते। उत पारमार्थिकं। आद्ये बाध्यसिद्धिः। द्वितीये प्रतिवाद्यसिद्धिः। 'न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थते'ति तेनांगीकृतत्वात् एवं दृष्टांतेपि मुक्तत्वभिन्नत्वे यद्यनिर्वचनीये विवक्षिते तदा वादिनं प्रति दृष्टांतस्य साधनादिविकलता। यदा पारमार्थिके तदा प्रतिवादिनं प्रति तथा। तत्साधने पुनर्दृष्टातानुसरणेऽनवस्थेति। आसतामेते विकल्पदोषाः। विकल्प एवायं पुरोवदनिर्वचनीयासिध्या निराकरणीय इति॥ नन्वत्राधिकाशंका-भावात्किमतिदेशेन। उदाहरणभेदेनातिदेशोत्वपर्यवसानं स्यात्। सत्यं। तथाप्येकत्रोक्तो न्यायोऽन्यत्रानुसंधेय इति मंदान्व्युत्पादयितुमतिदश इत्यदोषः। अथापि स्यात्। नानेनानुमानेन मुक्तौ भेदस्सिध्यति, असिद्धेः प्रमाणविरोधाच्च। तथा ह्येकस्यैव परमार्थसतः परब्रह्मणोऽनाद्यविद्याविलसितो हि जीवेश्वर-जडरूपोयं भेदप्रपंचो न परमार्थः।

---

इत्याशयेनेदमेव व्याख्यानांतरबीजतयोक्तं। असत्वस्येति। तथा च तन्मतस्थित्यदूषणांतरादिधर्मितावादिदमपि युक्तमेवेति भावः। पूर्वोक्तरीत्या व्याहतावेव पर्यवसानमत्रापि द्रष्टव्यं। पचम्यंतप्रकृतिलिंगवचनस्यैव हेतुपदार्थतया तत्र विकल्पानवसरादाह। हेतुपदेनेति। मंदानिति। अन्यथा पूर्वमनिर्वचनीयासित्ध्या भेदे विकल्पानुपपत्तेरुक्तत्वेन विशिष्योक्त्या ऽन्यत्रेदं दूषणं न घटत इति मंदानां शंका स्यादित्यर्थः। अथापि। भेदे विकल्पपूर्वकदूषणस्य पूर्वोक्तक्रमेण निरासेपि। स्यात् वक्ष्यमाणं संभावितमित्यर्थः। यद्यप्यनिर्वचनीयप्रसित्धिनिराकरणेनैव दृश्यत्वाद्यनुमानानि अपि पूर्वोक्तरीत्या दूषितप्रायाण्येव तथापि तस्यैव स्फुटीकरणपूर्वकमधिकदोषप्रदर्शनपरोत्तरग्रंथसंदर्भोत्थापनायाभ्युपगमवादेनापाततः शंकाप्रदर्शनमित्यदोषः। तत्र मुक्तत्वहेतोरसित्ध्युपपादनाय ब्रह्मातिरिक्तस्य मिथ्यात्वमुपपादयितुं प्रक्रियामाह। एकस्यैवेति। सजातीयविजातीयस्वगतभेदत्रयरहितस्येत्यर्थः। अथवैकस्यैव परमार्थसत इत्यस्य स्वभिन्नपरमार्थसद्रहितस्येत्यर्थः। कुतस्तदन्यस्यापारमार्थिकत्वमित्यत आविद्यकरजतादीनां तथा दर्शनादित्याशयेन प्रपंचस्याविद्यकत्वमुपपादयति। अनादीति। आत्माश्रयानवस्थादिपरिहारायेदं। जीवेश्वरेति। तयोरपि तत्धर्मोपहितरूपेण मिथ्यात्वमिति द्रष्टव्यं। भेद इति। भिद्यत इति व्युत्पत्त्या भेदवत्परं। सर्वस्य स्वरूपतो मिथ्यात्वे घटादीनामिव स्वरूपतोऽपि मुक्त्यन्यथाभावापत्त्या शास्त्रस्य निरधिकारिकत्वं स्यात्।

(टीका) ब्रह्मैवाविद्यादिप्रतिबिंबितं खलु बालैर्जीव इति ईश्वर इति चाभिलप्यते । जडप्रपंचस्तु स्वरूपेणैवाविद्योपादानको ब्रह्मविवर्तः । अत्रच विवादपदं मिथ्या दृश्यत्वाज्जडत्वात्परिच्छिन्नत्वाच्छुक्तिरजतवत् । विमता आत्मानः परमात्मनस्तत्त्वतो न भिद्यंते आत्मत्वात् परमात्मवदित्याद्यनुमानं मानं । 'वाचारंभणं विकारो नामधेयं'। 'नान्योऽतोस्ति द्रष्ट'इत्यादिश्रुतिश्च। सैवाविद्याकर्तृत्वभोक्तृत्व

---

एवमुत्तमः पुरुषस्त्वन्यःइत्युक्तेश्वराभावे तदुपासनाविधीनां निर्विषयत्वं च स्यादित्यत आह। अविद्यादीति । आदिना शुद्धसत्वात्मकमायाग्रहणं । तथा चाविद्याप्रतिबिंबो जीवः । मायाप्रतिबिंब ईश्वर इत्यर्थः । यद्यप्यन्येपि परोक्ताः प्रकाराः संति तथापि वक्ष्यमाणदूषणानां सर्वपक्षेऽपि साम्यात् । नच मायाविना मायेत्यादिवचनद्वयोदाहरणेनाचार्यैरेतत्पक्षस्यैव निराकरिष्यमाणत्वाच्चोपलक्षणत्वेन कश्चिदेकः पक्षो दर्शितः । बालैः । अनिवृत्ताविद्यैः । ब्रह्मविवर्तः स्वबाधावधित्वे सति स्वप्रतियोगिकतादात्म्यानुयोगियद्ब्रह्मतत्प्रतीयमान इत्यर्थः । अस्वाभाविकान्यथाभावो विवर्त इत्यादितदुक्तेरत्रैव पर्यवसानात् । अविद्योपादानक इत्यस्य तत्परिणाम इत्यर्थः । स्वाभाविकान्यथाभावस्यैव परिणामत्वेनोक्तत्वात् । स्वबाधानवधिस्वप्रतियोगिकतादात्म्यानुयोगि यत्तज्जन्यत्वं तत्परिणामत्वमिति निष्कर्षः।उभयानुगतोपादानत्वं तु स्वतादात्म्यवत्कार्यजनकत्वं ज्ञातव्यं । विमता आत्मान इति । अत्र जीवपदवाच्यत्वं वोपलक्षणविधया दुखित्वादिकं वा पक्षतावच्छेदकमवच्छेदकावच्छेदेन साध्यमभिलषितं । परमात्मन इति । सर्वज्ञत्वाश्रयचेतनादित्यर्थः । भेदस्य स्वरूपतो निषेधाभावपक्षे बाधवारणाय । तत्वत इति । पारमार्थिकत्वेनेत्यर्थः । व्यधिकरणधर्मावच्छिन्नाभावश्चायमतो न बाधः । आत्मत्वादिति । व्यक्तीनां कल्पितस्वसमानसत्ताकभेदवत्वेनात्मत्वजातिः पक्षदृष्टांतयोरस्तीति भावः । मिथ्यात्वे अभेदे च क्रमात् श्रुतिद्वयमनुसंधेयं । नान्योत इति । अतः अंतर्यामितया प्रकृतात् ब्रह्मणः सकाशात् अन्यो भिन्नो द्रष्टा जीवो न भवतीत्यर्थः । ननु मायारूपाविद्योपादानकपदार्थानां मायिकपदार्थांतरवन्मिथ्यात्वेऽपि कर्तृत्वभोक्तृत्वादीनां आत्मना सह प्रतीयमानानां आत्मस्वरूपवत्सत्यत्वेऽद्वैतानुपपत्तिर्दुर्वारैव । नहि कर्तृत्वादिकमपि मायिकमिति युज्यते । लोके मायया बहिष्ठानामेव पदार्थानां उत्पत्तिदर्शनेन साक्षिसिद्धे मायाजन्यत्वानुपलंभात् । मायिकपदार्थदर्शनादिना सुखदुःखाद्युत्पत्तावपि तत्र दर्शनस्यैव हेतुत्वेन मायाया अहेतुत्वात् । अन्यथा मायिकसर्पादेरिव सुखादावपि बाधोदयप्रसंगादित्यत आह । सैवेति । या विक्षेपशक्तिविशिष्टा ईश्वरोपाधिभूता मायेत्युच्यते सैवावरणविक्षेपशक्तिविशिष्टा सती अविद्यापदाभिधेया जीवोपाधिस्तद्भेदे मानाभावादिति भावः । न चैकमुक्तौ सर्वमुक्त्यापत्तिः । तत्तज्जीवावरणशक्तिविशिष्टाऽविद्यानिवृत्तेरेव मोक्षत्वोपगमेनोक्तदोषाभावात् । न चाविद्यायाः स्वरूपतः कदापि निवृत्त्यभावप्रसंगेनात्मवत्पारमार्थिकत्वापत्तिरिति वाच्यं । एतन्मते संसारप्रवाहस्यानंतत्वानभ्युपगमेन चरमजीवमुक्तिदशायामेव समस्तशक्तिविशिष्टस्वरूपस्यैव निवृत्तिसद्भावात् । ईश्वरीयमायावृत्त्याद्यात्मकज्ञानानामपि जीवादृष्टाधीनत्वेन जीवाभावे तदीयजगत्सृष्ट्यादेरप्यभावेन तदुपाधिमायाया अपि विलयेनेश्वरस्यापि निवृत्तेरंगीकारादिति बोध्यं । कर्तृत्वेत्यादि । अत्राविद्योपादानकांतःकरणनिष्ठमेव कर्तृत्वादिकं तादृशांतःकरणतादा-

(टीका) —दोषसंसर्गाध्यासप्रवाहरूपसंसारस्योपादानं संसारनिवर्तकेन चात्मज्ञानेनावश्यमविद्या निबर्हणीया। सतिचैवं बंधस्यैव परमार्थतोऽभावात्कुतो मुक्तत्वं कुतो वा मुक्तौ भेदः स्यात्। बहुजीववादे भेदे विद्यमानेपि नासौ मुक्तप्रतीतिगोचर इति न तस्य नियम्यत्वोपयोगित्वमिति।

---

त्मयस्य आत्मन्यध्यासे तत्धर्मभूतकर्तृत्वादिसंसर्गस्यात्मन्यध्यासेनाहं कर्तेत्यादिव्यवहारादय उपपद्यंते। भीषणत्वादिविशिष्टसर्पस्य रज्जौ तादात्म्याध्यासे तदीयभीषणत्वादिधर्मसंसर्गाध्यासादिदं भीषणमित्यादिव्यवहारवदिति एकः पक्षः।अंतःकरणवृत्तिकर्तृत्वाद्यतिरिक्तमात्मनि कर्तृत्वाद्यंतरं तत्प्रतिबिंबभूतमध्यस्यते स्फटिकमणौ जपाकुसुमसंन्निधानाल्लौहित्याध्यासवदित्यपरः पक्षः। अत्र प्रथमकल्पाभिप्रायेणेदं। यद्वा दोषाश्च तत्संसर्गाश्चेत्यर्थाश्रयणे पक्षद्वयस्यापि संग्रहः। अविद्योपहितचैतन्यस्यैव साक्षिरूपतया साक्षिचैतन्यग्राह्याणामपि तेषां ग्रहः। अविद्योपहितसाक्ष्यात्मक एवाध्यासस्तस्यापि मिथ्यात्वात्तदुपादनमज्ञानं भवतीत्यविद्यायास्तादृशाध्यासोपादानत्वमुक्तं। विषयोपहितरूपेणोत्पत्तिविनाशशालित्वात्प्रवाहत्वोक्तिर्युक्ता। यद्वा कर्तृत्वाद्यंशेऽप्यविद्यावृत्तिः स्वीक्रियत इति मते तस्यैवाध्यासरूपत्वात्तं प्रत्यविद्योपादानं भवत्येवेति भावः। अविद्याशक्तिविशेषविशिष्टाविद्यानिर्वहणीया तत्तज्जीवाद्यावर्तनीया जीवस्यैकत्वपक्षे निवर्तनीयेत्यर्थः। अविद्यायां निवृत्तायां तदुपादानकः संसार स्वयमेव विलीयत इति भावः। अत्र विश्वमिथ्यात्वप्रसिद्धिनिर्वाहकं मोक्षेऽपि विद्यमानस्य मिथ्यात्वायोगात्प्रमाणबाधोपपादकं चेत्युभयोपपादकं विश्वमिथ्यात्वानुमानं मुक्त आत्मनि परमात्मभेदसाधनपक्ष एव साक्षात्प्रमाणबाधसंपादकं। द्वितीयमनुमानं तत्र परमात्मभेदत्वेनैव साध्यतायामपि पारमार्थिकत्वेन तदवगाहित्वं प्रमाणानां स्वाभाव्यादिति भेदसाधको मनुते। तत्र पारमार्थिकत्वेन तादृशभेदाभावधीर्विरोधिनी भवत्येव। उत्पन्नानुमितावप्रामाण्यग्राहकतया बाधरूपता त्वनुमानद्वयस्यापीति द्रष्टव्यं। तथापि प्रकृते कथमसित्यध्यादीत्यतस्तदुपपादयति। सति चैवमिति। उक्तार्थस्य प्रामाणिकत्वेन दार्ढ्ये सतीत्यर्थः। बंधस्यैवेति। दुःखादेरित्यर्थः। कुतो मुक्तत्वमिति त्रैकालिकनिषेधप्रतियोगिन उत्तरकालमात्रवृत्त्यभावरूपध्वंसप्रतियोगित्वायोगेन बंधध्वंसरूपमुक्तत्वस्वरूपमेवासित्यर्थं। यदि बंधसंसर्गाभाववत्वं तदापि तस्यासिद्धिरेव। शुत्याद्वैतांगीकारेण मुक्तिदशायां तस्याप्यभावात्। केवलमिदानीं बद्धपुरुषकल्पितधर्मपुरस्कारेण व्यवहारकरणेऽपि तेषां भवदभिमतपारमार्थिकभेदसाधनाक्षमत्वादिति भावः। कुतो वा मुक्तौ भेदः स्यादिति। सिध्येदित्यर्थः। उक्तरीत्या बाधादिति भावः। ननु जीवस्याविद्याप्रतिबिंबत्वपक्षेऽपि यैर्बहुजीववाद एवाश्रितः अंतःकरणोपाधिकत्वेन च बहुजीववादो वा तन्मते बद्धमुक्तव्यवस्थायाः सत्वात्कथं प्रमाणबाध इत्यत आह। बहुजीवेति। भेद इति। मुक्तप्रतियोगिकभेदे संसारिणि ईश्वरे च विद्यमानेऽपीत्यर्थः। ननु मुक्तभेदे विद्यमानेऽपीत्यर्थः। मुक्ते भेदाधिष्ठानत्वादिधर्मस्यायोगात्। मुक्तप्रतीतिगोचर इति। मुक्तविशेष्यकप्रतीतिगोचर इत्यर्थः। तथा च बाध एवाश्रयतासंबंधेन साधन इति भावः।ननु मुक्ते तदभावेपि नियामकेश्वरे तत्सत्वभावत्येव। तस्य नियामकत्वसंभवेन भेदाक्षेपपूर्वकस्येश्वरानिष्ठमुक्तानियामकत्वाक्षेपस्य बहुजीवमते

( टीका ) तत्र तावदनुमाननिरासायोक्तदोषानतिदिशति ।

( मूलं ) दृश्यत्वाद्यनुमानेष्वप्येत एव दोषाः ॥ ४६ ॥

( टीका ) विवादपदमनिर्वचनीयं बाध्यत्वादित्यादेर्येऽप्रसिद्धविशेषणत्वादयो दोषा उक्ताः एत एव दृश्यत्वाद्यनुमानेष्वपि द्रष्टव्याः । तथाहि । मिथ्याशब्देनानिर्वचनीयत्वमुच्यते । असत्वं वा । नाद्यः । अप्रसिद्धविशेषणत्वापातात् । न द्वितीयः । अपसिद्धांताप्रसंगात् । अथानिर्वचनीयासतोः समानं मिथ्यात्वं । तस्मिन्ननेनानुमानेन सिद्धेऽसत्वे च बाधितेऽनिर्वाच्यतासिद्धिरिति चेन्न । मिथ्यात्वसामान्यस्योभयसंप्रतिपन्नस्याभावात् ।

---

असंभवादेकजीवमत एव भेदसामान्यविलयेन नियामकत्वाक्षेपसंभवादुक्तानुमानं तन्मत एव संभवतीति कथं बहुजीववादांगीकारेण दूषणदानमित्यत आह। न तस्येति । भेदाभावेन मुक्ते नियम्यत्वस्य तन्नियतस्याभावात्तत्सापेक्षनियामकत्वमपीश्वरे न घटत एवेति तन्मतेऽपि मुक्तभेदाभावेन नियामकत्वाक्षेपसंभवात्तच्छंकापरिहाराय बहुजीववादेपि मुक्ते भेदसाधनस्यावश्यकत्वात्तत्र बाधोद्भावनं युक्तमेवेति भावः। अन्ये तु भेदे विद्यमानेऽपीति बद्धपुरुष कल्पिते स्वप्रतियोगिके ईश्वरप्रतियोगिके च भेदे विद्यमानेऽपीत्यर्थः। तथा च कथं बाधः। भेदमात्रस्य ईश्वरभेदमात्रस्य वा पारमार्थिकत्वाविशेषितस्य साध्यत्वात्तत्र पारमार्थिकत्वेन भेदाभावसाधकस्याबाधकत्वादिति भावः । नासाविति । मुक्तप्रतीतिगोचर इति । मुक्तनिष्ठप्रतीतिगोचर इत्यर्थः । मास्त्वित्यत आह । न तस्येति । तथा चेदानीं नियम्यत्वोपयोगिभेद एव विप्रतिपत्तौ उक्तभेदसाधनस्य सिद्धसाधनार्थांतरादिग्रस्ततया तद्वारकविशेषणपुरस्कारेण पारमार्थिकभेद एव साध्योऽतस्तस्य बाधो युक्त एवेति भावः । नच भेदे मुक्तवृत्तिप्रतीतिविषयत्वाभिधानमनुपयुक्तं किमर्थमुच्यते । नहि नियम्यस्य वस्तुनो नियामकभेदवत्वेन स्वज्ञानं नियम्यतायामुपयोगि । तथात्वे जडस्यानियम्यत्वापत्तेरिति वाच्यं । स्वसमानसत्ताकभेद एव तत्रोपयोगी अन्यथा मैत्रकल्पितेन चैत्रनिष्ठतया भासमानचैत्रभेदेन चैत्रस्य स्वनियम्यतापातात् । तथाच मुक्ते बद्धपुरुषाणां प्रतीयमानभेदः न तत्समसत्ताकः । तथात्वे तस्य पारमार्थिकत्वापत्त्या मुक्तस्य स्वानंदादिवदनावृतत्वं स्यात् । तथाच न तत्समसत्ताक इत्यत्र तात्पर्यात् । यद्वा जडानां स्वरूपलाभादिनियम्यतासंभवे ऽपि चेतने तस्य तदभावाद्व्यापारविशेषादिषु तेन नियम्यत्वं वाच्यं । तच्च चेतने स्वस्य नियामकाद्भिन्नत्वे नोपलब्धिमत्वेन व्याप्तमेवोपलब्धमिति व्यापकाभावोपपादनाय तस्य सार्थक्यमित्याहुः । तावदिति । आगमनिरासस्तु उत्तरत्र करिष्यत इति भावः। अप्रसिद्धविशेषणत्वादिति । पूर्वं शुक्तिरजतादावपि तत्प्रसिद्ध्यभावस्योपपादितत्वादिति भावः । प्रतिज्ञादोषत्वेन प्रथमप्राप्तत्वात् पूर्वमस्यैवोक्तत्वाच्चातिदेशावसरे तस्यैव ग्रहणं कृतं । दृष्टांते साध्यवैकल्यं तत्र तत्सजातीये च हेतुसत्वे व्यभिचारश्चानुसंधेयः । अपसिद्धांतेति । अस्य स्वयं श्रुत्यर्थनिर्णयाय स्वार्थानुमानत्वे बाध एव दोषोऽनुसंधेयः । उभयेत्यादि । स्वार्थानुमानपक्षे अनिर्वचनी

(टीका) सद्विवेकस्य मिथ्याभावस्य साध्यत्वान्नाप्रसिद्धविशेषणता, नापसिद्धांतोऽपीति चेत्। किमिदं सत् जातिर्वा, जातिमद्वा, स्वरूपसद्वा। प्रथम द्वितीययोः सद्बहुत्वापत्तिः। तृतीये ब्रह्मविवेकस्य मयाप्यंगीकृतत्वा (क्रियमाणत्वा) त्सिद्धसाधनता भेदनिराकरणानुपपत्तिश्च। बाध्यत्वं मिथ्यात्वमिति चेन्न। बाध्यत्वमपि हि तेषां मिथ्या। सत्यत्वे दृश्यत्वादीनां तेनैवानैकांत्यापातात्। दृश्यत्वाद्यभावे चासाध्यत्वाद्यापत्तेः। बाध्यत्वस्य च मिथ्यात्वेऽबाध्यत्वमेव सत्यं स्यात्, आत्मवत्। किंच दृश्यत्वादयः सत्याश्चेन्मायावादिनोऽसिद्धाः। तैरेवानैकांत्यं च। यद्यसंतोनिर्वाच्या वा तदा तत्ववादिनोऽसिद्धाः नच सत्यासत्ययोर्दृश्य (त्वादिसा) त्वसामान्यमुभयसंप्रतिपन्नमस्तीत्येषा दिक्।

---

याप्रसित्धेः प्रागनिर्वचनीयासदुभयवृत्तित्वेन गृह्यमाणधर्मस्याभावादित्यादि पूर्वोक्तदिशार्थोऽनुसंधेयः। सत्यत्वे बाध्यत्वस्येत्यादिः। अनैकांत्येति। अंशे बाधवारणाय तस्य पक्षबहिर्भावावश्यकत्वाद्वा पक्षादिविभागात्प्राग्व्याप्तिग्रहवेलायामेव व्यभिचारस्यावश्यकत्वाद्वेय मुक्तिरिति भावः। असाध्यत्वाद्यापत्तेरिति। मिथ्यात्वसाधकप्रतिज्ञाविषयत्वानुपपत्तेस्तत्साधकस्य दृश्यत्वादेस्तत्रानंगीकारेणेत्यर्थः।आदिपदेन ज्ञेयत्वप्राप्त्या जडतया स्वप्रकाशत्वस्याप्यभावेन तत्सित्ध्युपायाभावादसत्वापत्तिपरिग्रहः। नच बाध्यत्वस्य सत्यत्वांगीकारपक्षे दृश्यत्वस्य तत्र सत्वासत्वविकल्पेन दूषणार्थमेतद्ग्रंथस्य प्रवृत्तत्वात्कथं प्रतिज्ञाविषयत्वानुपपत्तिरूपदूषणमुच्यते इष्टापत्तेरिति वाच्यं। वस्तुगत्या सित्धांते दृश्यत्वानंगीकारपक्षे दूषणार्थमेतद्वाक्यस्य प्रवृत्तत्वेन भवदुक्तरीतेरनंगीकारात्। अत एव सत्यत्व इत्यस्यात्र नावृत्तिः। यदि चोक्तविकल्पपूर्वकदूषणपरत्वमस्य ग्रंथस्य तदाऽसाध्यत्वाद्यापत्तेरित्यस्य प्रकृतानुमितिविषयत्वाभावव्याप्तिग्रहविषयत्वाभावाद्यापत्तेरज्ञेयत्वात्तस्येत्यर्थः। अनैकात्यं चेति। तत्र दृश्यत्वाद्यनंगीकारे चाज्ञानासित्धिरिति भावः। उभयसंप्रतिपन्नमस्तीति। एतत्तत्वं प्रागभिहितं। अत्र परोक्तमिथ्यात्वपरिष्कारांतरमाशंक्य तन्निरासोप्यनयैवदिशा कतर्व्य इत्याह। एषा दिगिति। तथाहि। यदुक्तं परैस्तु सदसद्विलक्षणत्वं मिथ्यात्वं। तच्च न तत्ववादिनं प्रति साध्यं येनाप्रसिद्धविशेषणत्वं स्यात्। येन तांत्रिकैकदेशिना शुक्तिरजतादौ तदंगीकृत्य जगति तत्सद्भावे विवादः क्रियते तं प्रत्येव। तत्ववादिनं प्रति तु स्वप्रकारकधीविषयताव्यापकात्यंताभावप्रतियोगित्वाभावरूपं यत्सत्वं तद्व्यतिरेकस्तादृशप्रतियोगित्वरूपः साध्यते। तस्य च तन्मते शुक्तिरूप्यादौ प्रसिद्धत्वान्नाप्रसिद्धविशेषण त्वावकाशः। न चैवमसत्वेन पर्यवसानापत्त्यार्थांतरता। सत्तादात्म्यरूपासदविलक्षणत्वस्य पक्षकोटौ निवेशेन तद्वारणात्। सत्तादात्म्येऽपि सत्तादात्म्यस्य स्वस्यैव स्वीकारात् सत्तादात्म्यतत्वान्यतरवत्वस्यैव पक्षतावच्छेदककोटौ निवेशाद्वोपपत्त्या न तस्य पक्षबहिर्भावः। साध्यकोटौ सत्वेन सत्तादात्म्यवत्वेन वा परोक्षप्रतीतिविषयत्वं निवेश्यं। तच्च शुक्तिरजतादावपि तत्ववादिनांगीकृतमिति न तस्य साध्याप्रसिद्धिः। असतः प्रतीत्यनंगीकारे यथाश्रुतमेव रमणीयमिति तदसत्। सत्तादात्म्यस्य पूर्वं साध्यकोटौ निवेशपक्षे

अभिहितदूषणानां अत्राप्यविशिष्टत्वात्। इदं रजतं सत् घटः सन्नित्यादिप्रतीत्या घटरजता दाविव तुच्छं सदिति प्रतीत्या तुच्छेपि सत्तादात्म्यस्यावर्जनीयतया तेनासत्वप्रतिक्षेपासंभवाच्च। न च तत्र कालसंबंध एव प्रतीयते न त्वबाध्यतादात्म्यं। सदसतोरेकबुद्धिविषयत्वादिति वाच्यं। असत्वव्यावर्तकस्यासदवगाहिप्रतीत्यविषयत्वनियमे कालसंबंधस्यापि तथात्वेन तद्विषयकत्वस्य वक्तुमशक्यत्वात्। तदनंगीकारे अबाध्यतादात्म्यभाने बाधकाभावेन त्वद्वाक्यमात्रस्यासाधकत्वात्। किंच त्रैकालिकनिषेधप्रतियोगितदप्रतियोगिनोरेकज्ञानविषयत्वं नास्तीति नियमांगीकारे घटः सन्नित्यादिप्रतीतेरप्यनुपपत्तिः। सत्तादात्म्यशून्यस्य सद्विषयकप्रतीत्यविषयत्वमित्यांगीकारे घटादिवत्तुच्छेप्युक्तप्रतीत्या तादात्म्यं वर्तत इति वदंतं प्रति तस्यानुत्तरत्वात्। घटः सन्न तुच्छमिति प्रतीतेरपलापापत्तेश्च। नच तुच्छं सदिति प्रतीतेर्विकल्पत्वेनाहार्यत्वेन वा न तद्विषयतया तादात्म्यसिद्धिरिति वाच्यं। तत्रापि सत्तुच्छं तुच्छं सदित्याकारवैलक्षण्यसिद्धये तयोरपि परस्परतादात्म्यस्यावश्यकत्वात्। विषयतावैलक्षण्येनैव तत्र वैलक्षण्ये घटादिज्ञानेऽपि तथात्वसंभवेन तत्रापि तव सत्तादात्म्यासित्ध्यापत्तेः। नहि विकल्पादीनां विषयतावैलक्षण्येन वैलक्षण्यं। ज्ञाने तु विषय वैलक्षण्येनैवेत्यत्र राज्ञामाज्ञास्ति। न चाहार्यज्ञानाविषयतादात्म्यस्यैव पक्षतावच्छेदककोटौ निवेशान्न दोष इति वाच्यं। कालासंबंध्यर्थकतुच्छपदघटितवाक्यजन्यबोधस्यानाहार्यत्वेन तद्विषयस्य तादात्म्यस्याहार्यज्ञानाविषयत्वात्। नच त्रैकालिकनिषेधप्रतियोगित्वसत्तादात्म्यशून्यत्वाद्यवच्छिन्नार्थकतुच्छपदघटितवाक्याभिलाप्याहार्यबोधे तदेव तादात्म्यं विषय इति वाच्यं। ज्ञानानां विलक्षणाकारनिर्वाहकतानुपपत्तिप्रसंगात्। अन्यथा सत्प्रमेय सामान्यं तुच्छमिति ज्ञाने सन् घट इति प्रतीतिसिद्धतादात्म्यस्य धर्मिकोटौ भानापत्याहार्यज्ञानाविषयसत्तादात्म्यस्यैवासिद्धिप्रसंगात्। सत्तुच्छं सन् घट इत्याद्यांशिकाहार्यज्ञानविषयत्वस्य सर्वतादात्म्येषु सत्वाच्च अनाहार्यज्ञानाविषयत्वस्योपादाने तद्विकल्पविषयः सन् इत्याद्यनाहार्यप्रतीतिविषयीभूततादात्म्यमसत्यपि दुर्वारं। तादात्म्ये तादात्म्य वत्वं त्वन्मते न घटत इति पूर्वमेवोक्तमतो न तादात्म्यसंग्राहकः प्रथमकल्पः संभवति। उक्ततादात्म्यस्यासत्वाव्यावर्तकत्वेन तादृशान्यतरवत्वानिवेशोऽपि विफलः। सत्तादात्म्यस्यासत्वव्यावर्तकत्वांगीकारेऽपि तस्य तेनैव रूपेणासत्वबुद्धिविरोधितयोक्तान्यतररूपेण तद्बुध्यविरोधित्वाच्च ज्ञानवैलक्षण्ये विषयवैलक्षण्यस्य नियामकतां निराकृत्यासत्ख्यातेर्व्यवस्थापितत्वेन तन्निर्वाहकतयांगीकृतस्य भ्रमविषयीभूततादात्म्यस्यैवाभावेन जगति सत्तादात्म्यस्यैव तन्मिथ्यात्वपक्षेऽयोगेन पक्षाप्रसित्धेर्दुर्वारत्वाच्च। एतेन सत्वेनापरोक्षविषयत्वपक्षोप्यपास्तः। असतोपि सत्वेनापरोक्षप्रतीतेर्व्यवस्थापितत्वेन तस्यासत्वाव्यावर्तकत्वात्। किंच गुरुत्वादीनामपरोक्षाविषयत्वात्पक्षकोटौ निवेशे तेषां पक्षत्वाभावः साध्यकोटौ निवेशे च बाधः स्यात्। नच गुरुत्वादीनामीश्वरापरोक्षगोचरत्वान्नैष दोष इति वाच्यं। तेषामीश्वरापरोक्षविषयत्वं न तावद्देवदत्तादीनामिवेंद्रियद्वारा निर्गतांतःकरणवृत्त्यभिव्यक्तचित्तादात्म्यादिरूपं। तस्य शरीरादेस्त्वन्मतेऽभावात्। मायया नटवदैंद्रजालिकवद्वा विग्रहप्रदर्शने ऽपि अंतकरणतादात्म्याध्यासाभावेन तं प्रत्यन्यस्यावृतत्वे तस्यास्मदादिवदज्ञत्वापत्त्या तदनंगीकारेणोक्तरीतेस्तत्रायोगात्। सृष्ट्याद्यक्षणे स्वशरीरकारणभूतादृष्टादेर्जगत्कारणभूतादृष्टादेश्च ग्रहणाभावप्रसंगेन तन्निमित्तकजगन्निर्माणानुपपत्तेः। परंतु केवलं मायावृत्त्यात्मकं द्रष्टृत्वादिप्रतिपादक-

श्रुत्याद्यनुसारात्तत्राप्यपरोक्षत्वाख्यः कश्चन धर्मोऽगीकार्यः । सच जातिरूप उपधिरूपो वेत्यन्यदेतत् । तदीयाकाराख्यविषयतैव निवेश्या तादात्म्यस्योक्तरीत्याऽयोगात् । परस्य तादृशतादात्म्यरूपविषयत्वाप्रसिध्या पक्षसाध्याप्रसिद्ध्योरन्यतरापातात् । तथाच तादृशापरोक्षविषयत्वस्य गुरुत्वादौ तदन्यजगति च सत्वेऽपि तस्यासत्वाविरोधितयाऽर्थांतरंतादवस्थमेव । तस्य परोक्षप्रतीतिविषयत्वाविशेषात् । न हीश्वरस्यासद्विषयकज्ञानमेव नास्तीति वक्तुं शक्यते । परकीयवाक्यश्रवणादेः पुराणेष्वीश्वरस्य शतशः श्रवणेन (१) तत्प्रयुक्तशशविषाणं नास्तीत्यादिवाक्यैस्तत्प्रतीतेरावश्यकत्वात् । न हीश्वरप्रतिवचनप्रश्नादिषु तन्न प्रयोक्तव्यमिति नियमोऽस्ति । तथात्वे ईश्वरस्य नासदासीत् न सती नासती मायेत्यादिश्रुतिस्मृत्यर्थज्ञानाभावापत्तिश्च । नच मायोपहितचिद्रूपस्येश्वरस्यैव जगदुपादानत्वान्मायोपादानकं सर्वं तत्रैव कल्पितं। तत्र ह्यनावृतमितीश्वरीयमप्यनावृताचित्तादात्म्यरूपमापरोक्ष्यं गुरुत्वादौ वर्तत इति तन्निवेशो युक्त इति सांप्रतं। मतद्वयासिद्धत्वेन तन्निवेशायोगस्योक्तत्वात् । अभानापादकाज्ञानाभावोपहितचिति त्वन्मते साक्षात्कारत्वजातेः स्वीकृतत्वेन प्रतिवादिनस्तादृशाश्रयासिद्धावप्यन्यत्रैव तादृशजातेः स्वीकृतत्वेन जातिमात्रस्योभयसिद्धत्वेनतादृशाकाराख्यविषयतानामप्युभयसिद्धत्वेनोक्तरीत्यैव निवेश्यत्वात् । तत्र चार्थांतरस्याभिहितत्वात् । मायोपहितचिदुपादानकत्वे जगतः तादात्म्यरूपविषयत्वमात्रेण तस्य सर्वज्ञत्वोपपत्तौ तदीयाकाराख्यविषयतायां मानाभावेनेश्वरीयापरोक्षविषयत्वस्य गुरुत्वादौ वक्तुमशक्यत्वात् ।(नच सत्तादात्म्यप्रकारकत्वरूपविषयत्वयोर्विषयब्रह्मरूपसामान्यधर्मस्वीकारात्तेनैव रूपेण निवेशे नैष दोष इति वाच्यं। तत्सत्वे मानाभावात् ।)· नच सत्तादात्म्यप्रकारकापरोक्षविषयत्वनिवेशान्नार्थांतरमसति सत्तादात्म्यप्रकारकापरोक्षविषयत्वायोगादिति वाच्यम् । यतो लोकानां सन् घटः सत्यो घटः सदिदं रजतं मिथ्येदं रजतमिति प्रतीतिबलेनैव प्रवृत्तिनिवृत्त्योरुपलंभात् । तादृश्येव प्रतीतिरनुभवासिद्धा नतु सत्वानवगाहिनी सत्तादात्म्यवदित्यवगाहिनी। तथा च सन् घट इत्यादिप्रतीतिविलक्षणतादृशतादात्म्यप्रकारकापरोक्षप्रतीत्यप्रसिद्ध्या तन्निवेशे पूर्वोक्त एव दोषः। यदि च तस्या एव प्रतीतेः सत्तादात्म्यप्रकारकत्वमंगीक्रियते तदा मिथ्यात्वग्रहाविरोधिनस्तादृशग्रहस्य सर्वानुभवविरुद्धतया तद्विरोधिनस्तादृशग्रहस्य त्वया परोक्षत्वेनैवाभ्युपगतत्वेन तत्प्रकारकापरोक्षप्रतीतेर्निवेशयितुमशक्यत्वात् । अन्यथा तेनैव मिथ्यात्वानुमानस्य प्रत्यक्षबाधसंभवेन सत्यत्वस्य प्रत्यक्षायोग्यत्वव्युत्पादनवैफल्यापत्तेः । नच तदंशे अपरोक्षत्वं न निवेश्यत इति वाच्यम् । तर्हि त्वन्मते उपनीतभानानंगीकारेण तत्प्रकारकापरोक्षप्रतीत्यसिद्धेः कथंचिदुपपादनेऽपि यद्यपरोक्षविषयत्वमेवासद्व्यावृत्तं तदा सत्तादात्म्यप्रकारकत्वनिवेशवैयर्थ्यं । यद्यव्यावृत्तं तदा सत्तादात्म्यांशे परोक्षस्य स्वांशे अपरोक्षात्मकस्यासद्ज्ञानस्योत्पत्तावपि बाधकाभावेन तन्निवेशे ऽप्यर्थांतरतादवस्थ्यमेव । किंच गुरुत्वादावुक्तापरोक्षविषयत्वस्येश्वरीयसाक्षात्कारमादायोपपादने ईश्वरस्य भ्रांतत्वप्रसंगेन तदभ्रांतत्वप्रतिपादिकानां 'निरनिष्टो निरवद्यः' 'अवितथदृक् साक्ष्युभयं तदीक्ष्यते' इत्यादिश्रुतिस्मृतीनामप्रामाण्यापत्तिः । नच सत्तादात्म्येन रूपेण गुरुत्वादिविषयकत्वेपि तत्र सत्वानवगाहनात्प्रत्युत मिथ्यात्वेनैव

टिप्पणी—(१) परोच्चारित इत्यर्थः ।

तदवगाहनान्नातस्तत्ज्ञानं भ्रम इति वाच्यम्। मिथ्यात्वग्रहाविरोधितादृशज्ञानाभावस्योक्तत्वेन तस्य मिथ्यात्वविरोधिधर्मविषयकत्वावश्यकत्वेन तत्ज्ञानस्य भ्रमत्वापत्तेरपरिहार्यत्वात्। अत एव तत्र तस्य मिथ्यात्वावगाहित्वमप्यनुपपन्नमाहार्यत्वापातात् किंच जगति मिथ्यात्वग्रहे तद्विषयप्रवृत्तिपालनादिनामयोगः। लोके मिथ्यात्वेन तन्निश्चयमात्रस्य तद्विघटकत्वदर्शनात्। मिथ्यात्वेन निश्चिते मूर्खोन्मत्तादेरपि प्रवृत्तेरदर्शनात् नच ऐंद्रजालिकस्य स्वसृष्टपदार्थेषु मिथ्यात्वनिश्चयवतोऽपि तत्पालनादिप्रवृत्तिर्दृष्टेति वाच्यं। वैषम्यात्। तस्यैंद्रजालविद्यापालनविषय एव प्रवृत्तेस्तस्या मिथ्यात्वेनागृहीतत्वात्। किंच स्वभ्येषु स्वप्रयोजनेषु स्वव्यापारानिष्ठतत्साधनत्वेषु स्वस्मिंश्च सत्यत्वग्रहात् प्रवृत्तिः। नहि तत्रापि मिथ्यात्वग्रहोत्तरं तस्यापि प्रवृत्तिर्दृष्टा। तथात्वे स्वप्ने स्वदृष्टराजादेः सोपाधिकभ्रमविषयीभूत (स्थलीय) स्थाण्वारोपितगृहीतमिथ्यात्वकपुरुषादेश्च मनोरंजनाद्युद्देश्येन प्रवृत्त्यापत्तेः ईश्वरस्य स्वघटितनिखिलपदार्थेषु मिथ्यात्वग्रहात्कथं प्रवृत्तिसामान्यस्य 'पुण्येन पुण्यं लोकं नयति' इत्याद्युक्तविशेषव्यवस्थायाश्चोपपत्तिः। मन्मते तु स्वेष्टसाधनत्वज्ञानं विना दयामात्रेण लोकानां प्रवृत्तिदर्शनेन तद्वदीश्वरस्य स्वप्रयोजनानुसंधानमात्रं विना प्रवृत्तेर्दैवस्यैष इत्यादिप्रमाणमनुरुध्यांगीकारेऽपि तादितरसर्वव्यवस्थायाः संभवेन न काचिदनुपपत्तिः। नच ममापि स्वप्नदृष्टराजादिप्रवृत्तिवदीश्वरप्रवृत्त्युपपत्तिरिति वाच्यम् तथात्वे ईश्वरस्यापि जीवकल्पितत्वपक्षपर्यवसानेनेश्वरपालितत्वादिव्यवस्थापनप्रयासवैफल्यमेवेत्यलं। किंच सत्तादात्म्यशून्यत्वं तत्प्रकारकापरोक्षप्रतीतिविषयत्वशून्यत्वं वा यद्यसत्वं तदोक्तविशेषणं तद्व्यावर्तकतयार्थांतरवारकं स्यात्। न ह्येतद्युक्तं। सत्तादात्म्यशून्यत्वस्य तत्प्रकारकापरोक्षप्रतीतिविषयत्वशून्यत्वस्य ब्रह्मण्यपि सत्वात् संबंधप्रतियोग्यनुयोगिभावस्य भेदनियतत्वात्। अन्यथा तादात्म्यस्यैव त्वन्मते विषयत्वरूपतया चिद्रूपज्ञानस्य सविषयकत्वापत्तेः। विषयताया अतिरिक्तत्वेऽपि तादात्म्यवत्तस्य स्वप्रतियोगिकत्वानुयोगिकत्वोपपत्त्या स्वविषयकत्वापत्तेर्दुर्वारतापातात्। कल्पितभेदेन क्वचित्तदुपादानस्यासंगत्यापत्तेश्च। नच संयोगे एकप्रतियोगिकत्वानुयोगिकत्वे दृष्टे इति वाच्यम्। तत्रापि घटः स्वेन संयुक्त इत्यादिप्रतीत्यापत्त्या मम सम्मत्यभावात्। नच तत्प्रतियोगिकत्वविशिष्टसंयोगानुयोगितैव तद्व्यवहारे नियामकेति वाच्यम्। संयोगे तत्प्रतियोगिकत्वसत्त्वे तस्यान्यनिष्ठानुयोगितानिरूपकतावच्छेदकत्ववदेतन्निष्ठानुयोगितानिरूपकतावच्छेदकत्वस्याप्यनपायात्। प्रतीतिरेव नियामकेति चेत्तर्हि संयोगव्यक्तिभेद एव स्वीक्रियतां तदैक्यस्याननुभाविकत्वात्। किं संयोगाधिकरणता त तत्प्रतियोगिकत्वावच्छिन्ननिरूपितसंयोगाधिकरणता प्रतियोगिकत्वनिष्ठनिरूपकतावच्छेदकत्वादिकल्पनागौरवव्यसनेन। एतेन तद्घटसंयोगस्य तद्घटे सत्वेन तद्घटस्तद्घटवानिति प्रतीत्यापत्तिवारणाय तद्भेदसामानाधिकरण्यविशिष्टसंयोगादिरेव तत्संसर्गतया भासत इति प्रत्युक्तं। संयोगस्यैव भिन्नत्वेनोक्तकुसृष्टचयोगात्। अस्तु वा तव मते संयोगैक्यानुभवसत्वे तत्र कथं चिदंगीकारः। नैतावता दृष्टांतमात्रेण विना प्रमाणमिच्छामात्रेण तादात्म्यादिस्थले तथा स्वीकारो युज्यते तथात्वे विषयता स्थलेऽपि तथात्वापातात्। नच स्वतादात्म्यस्यान्यत्रायोगेन स्वस्मिन्नेव वक्तव्यतया स्वस्य प्रतियोगित्वानुयोगित्वे अवर्जनीये इति वाच्यं। तावताऽप्युपहितरूपेण भेदवत्व एव तदंगीकारात्। अन्यथा घटो घट इति प्रत्ययप्रसंगात्। तथाच सत्वोपहिततादात्म्यस्य सत्वोपहिते तद्वाराशुद्धेप्यभावात्तस्यासत्वापत्तिदुर्वारा। नच सत्वोपहितस्य शुद्धे

आरोपितत्वात् तत्प्रतियोगिकतादात्म्यं शुद्धे अक्षतमिति वाच्यं । तर्हि सत्वोपहितस्य मिथ्याभूतस्य जगदनधिष्ठानत्वेन तत्र सत्तादात्म्यस्य परस्पराध्यासानुरोधेनासिध्या जगति तत्तादात्म्यमयुक्तमेव । सत्वोपलक्षितस्याधिष्ठानत्वे तु सुतरां तथा । कार्यकाले ऽविद्यमानस्य तदन्वयिधर्मांतरपरिचायकस्यैवोपलक्षणपदार्थतयाऽसदधिष्ठानकत्वस्यैव प्राप्तेश्च शुद्धस्यैव सत्वोपलक्षितत्वेन तत्प्रतियोगिकतादात्म्यस्य शुद्धे अभावेन तत्रासत्वापत्तेर्दुर्वारत्वात् । तादृशतादात्म्यशून्यत्वस्यासत्वरूपयोगाच्च । किंच नीलघटयोर्यादृशं तादात्म्यं तादृशमेव ब्रह्मणि जगतोंगीकृतं चेत् तत्स्वरूपैक्यमवर्जनीयं स्यात् । तथा च ब्रह्मस्वरूपस्य मिथ्यात्वं जगत्स्वरूपस्य सत्यत्वं वा स्यात्। शुक्तिरजतादिस्थलेऽप्येष एव दोषः । तथाच आनंदादितौल्यं घटादौ कथं वार्यते । इदं सर्वं यदयमात्मेत्यादीनां बाधायां सामानाधिकरण्योक्तिरप्ययुक्ता स्यादानंदो ब्रह्मेत्यादिवदेव स्यात् । एतेन स्वसमान सत्ताकतत्तादात्म्यं स्वस्य तत्स्वरूपत्वे तंत्रमित्यपास्तम् । अखंडैकरसब्रह्मणि स्वसमानसत्ताकानंदतादात्म्यासंभवात्तत्स्वरूपतानुपपत्तेः । परस्परतादात्म्याध्यासानुरोधेन घटे स्वसमानसत्ताकब्रह्मतादात्म्यसत्वेन ब्रह्मात्मकताया दुर्वारत्वाच्च । तथाच नीलघटादितादात्म्यवैलक्षण्योपेतं नैय्यायिकादिसिद्धसमवायविषयतादिस्थानीयं किमप्यंगीकार्यमिति तस्यैकप्रतियोगिकत्वानुयोगिकत्वं निर्युक्तिकमेव । किंच तादात्म्यस्यैकत्वे सन् घटः घटः सन्नित्यादिप्रतीत्योरेकतादात्म्यभानापत्त्या विषयवैलक्षण्यप्रयुक्तप्रतीतिवैलक्षण्यायोगः । विलक्षणानुयोगिताभानं त्वयुक्तं संबंधप्रतियोगित्वादीनां विशिष्टबुद्धौ भाने मानाभावात् । तथात्वे वोक्तकुसृष्ट्यपेक्षया तादात्म्यभेदस्योचितत्वाच्च । तथा सति सत्तादात्म्याभावे तत्प्रकारकापरोक्षप्रतीतिविषयत्वं सुतरां तत्र नास्तीति तस्यासत्वापत्त्या तस्यासत्वरूपत्वमनुपपन्नमिति । नच सत्तादात्म्यप्रकारकप्रतीतिविषयत्वाभावस्य ब्रह्म जाधारण्येऽपि तदभावरूपसत्तादात्म्यप्रकारकप्रतीतिविषयत्वस्यासद्व्यावर्तकत्वमक्षतमेवेति पक्षकोटौ साध्यकोटौ वा निवेशेन बाधकमिति वाच्यम् । इतरविशेषणवैय्यर्थ्यापातात् अनुमानदूषणानां बहूनामुक्तत्वाच्च । यत्तु सत्वेन प्रतीत्यर्हत्वमेवासत्ववारणाय निवेश्यं तच्च सदसदुभयवाचक तदादिपदभिन्नपदवाच्यतावच्छेदकावच्छिन्ने सत्वेन प्रतीयमानत्वं । न चैवमपि कालासंबंधि सदिति प्रतीतिमादायोक्तदोषतादवस्थ्यं । न ह्यस्ति नियमः सत्तादात्म्यशून्यत्वमेव तुच्छादि पदवाच्यतावच्छेदकं न कालासंबंधित्वादिकमिति वाच्यम् । सत्वेन प्रतीयमानत्वमित्यत्रासद्व्यावर्तकत्वेनाभिमतसत्तादात्म्यकालसंबंधित्वानां यावतामेव विशिष्योपादेयतयोक्त दोषानवकाशादिति । शशशृंगं सदिति प्रतीतिमादायोक्तदोषस्तच्छब्देनासद्बोधनिरासेन निराकरणीय इति । तदसत् । शशशृंगमित्यादितोप्यसद्बोधस्योपपादितत्वेनोक्तदोषदार्ढ्यात् । असत्वव्यावर्तकत्वेनाभिमतधर्मेषु यत्किंचिद्धर्मवत्वमात्रस्य पक्षे निवेशेन निर्वाहे उक्तप्रयासस्य विफलत्वात् । न चोक्तत्रैकालिकनिषेधप्रतियोगित्वरूपसाध्यस्यानिर्वचनीयसिद्धेः प्राक् असत्येन गृहीतत्वेनासद्व्यावर्तत्वेन गृहीतधर्मे उक्तसाध्यव्यावृत्तत्वेनापि गृहीतत्वापत्त्या तद्रूपावच्छिन्ने उक्तसाध्यविधेयकानुमित्युत्पत्त्ययोगः । तस्यानुमितिवेलायामसद्व्यावर्तत्वेनागृहीतत्वे तस्य पक्षविशेषणत्वेपि न तेनासत्वमादायार्थांतरवारणमित्यसद्व्यावृत्तत्वेन गृह्यमाणधर्मप्रकारकप्रतीतिविषयत्वमात्रं निवेशितमिति वाच्यं। उक्तधर्मस्याप्यसद्व्यावर्तत्वेन ग्रहाग्रहयोरुक्तदोषतादवस्थ्यात् । किं चोक्तसाध्यबलेनासत्वशंककस्योक्तप्रतीयमानत्वरूपधर्मज्ञानेऽपि घटत्वादिनामप्यसन्मात्रवृत्तित्वेप्युक्तोभयवाचकपदाभिन्नपदवाच्यतावच्छेदकत्वानपायात्। तदवच्छिन्ने सत्वप्रतीतिर्भ्रमत्वस्य चावश्यकतया सत्वपर्यवसानावार-

णेनार्थांतरनिरासायोगात्। अन्यथा सद्व्यावर्तकधर्मेषु प्रकृतसाध्याभावस्यापि निविष्टतया तद्वत्त्वेन प्रतीयमानजगति प्रकृतसाध्यासिद्ध्यभावापातात्। नच घटत्वादीनामसद्वृत्तित्वज्ञानादेवार्थांतरनिरासो भवतीति वाच्यम्। तर्हि जगद्वृत्तिधर्मस्य पक्षतावच्छेदकस्य तथात्वेनैव वारणसंभवे उक्तविशेषणस्यैव वैयर्थ्यात्। असन्मात्रवृत्तित्वेन गृह्यमाणं प्रकृतसाध्यवद्व्यावर्तत्वस्यापि जगद्वृत्तिधर्मे ग्रहेण बाधापत्तेश्चेति न किंचिदेतत्। यत्तु अबाध्यं सर्वं प्रमेयमिति यत्किंचिद्धीविषयत्वमेव सत्वं तदभाव एव प्रकृते साध्यघटकः। न चात्र कल्पेऽबाध्यं सर्वं प्रमेयमित्यादिप्रतीतौ आबाध्यत्वेन तदुपहितब्रह्मणो विषयत्वे शुद्धस्याविषयत्वात् शुद्धेऽतिव्याप्तिः। तद्धर्मप्रकारकप्रतीतौ तद्धर्मोपहितस्यैव विषयत्वमित्यन्यत्र व्यवस्थापितत्वात् उपहिते अव्याप्तिश्च। शुद्धब्रह्मणः सप्रकारकवृत्तिवेद्यत्वाभ्युपगमेऽप्यनेकघटितसत्वस्य तत्र बाधितत्वेनोक्तवाक्यस्य प्रामाण्यानिर्वाहश्चेति वाच्यं। पदार्थतावच्छेदकविशिष्टपरत्वशून्यतद्वाक्यतात्पर्यविषयलक्षणाग्रहाद्यजन्यबोधविषयताया एव तदर्थत्वात्। नच विशिष्टार्थपरत्वशून्यातादृशवाक्याद्विना लक्षणादिकं शाब्दबोधासंभव इति शंक्यं। विशिष्टपरत्वशून्यतानिश्चयसहकृतविशिष्टशक्तिग्रहादेवोपलक्षितार्थविषयकशाब्दबोधाभ्युपगमात्। उपपादितं चैतदन्यत्र। सर्वपदं चाशेषार्थपरतातात्पर्यग्राहकमतो न काचिदनुपपत्तिरिति तत्तुच्छं। तात्पर्यमात्रानुसारेण विशिष्टशक्तौ विशेष्यमात्रबोधकत्वे घटो न जातिमानिति बाधकाले घटो जातिमानिति वाक्येन स्वरूपतो द्रव्यत्वप्रकारकस्य द्रव्यं घट इति बोधस्यापत्तेरविशेषात्। जातिमद्व्याप्यवानिति परामर्शकाले स्वरूपतो जात्यवच्छिन्नविधेयकानुमितिर्जायतामितीच्छाबलाद्वह्निमानित्याद्यनुमित्यापत्तेश्च। प्रामाणिकस्य त्वत्पक्षस्यान्यत्रोपपादितस्य निरस्तत्वेन शंकितातिव्याप्त्यव्याप्तिस्थैर्यात्। नच तादृशानुमितिस्तदानीं त्वया ऽप्यभ्युपगम्यते प्रकृत एव वैषम्यनियामकमानाभावात्। तादृशप्रमापरिचयापरिचयादिप्रयुक्तदूषणस्य पूर्वमेवाभिहितत्वाच्च। तादृशविषयत्वोपहिते तदभावासत्वेनाव्याप्तेश्च। अशेषत्वस्य अन्यस्य फलीभूतबोधेऽभावेन तत्तात्पर्यग्रहस्य वैयर्थ्यं। द्वारीभूतमादाय तदुपपादने पदार्थतावच्छेदकविशिष्टपरत्वशून्यत्वोपलक्षितबोधजनकत्वयोरुपपादनायोगश्च। उपलक्षितबोधस्य तद्धर्मप्रकारकत्वे उपहिताव्याप्तेर्दुर्वारत्वात्। यदपि गुरुचरणास्तु सत्वं सत्वोपहितं तादात्म्यं सत्ता च सिद्धांतेऽबाध्यत्वोपलक्षितब्रह्मस्वरूपभूता परमते च तत्तद्घटादिरूपविषयसत्तात्मिका। तत्र सिद्धांते आनंदो विषयानुभवः सत्यत्वं चेति संति धर्मा इति पंचपादिकानुसारेणोक्तसत्ताया अधिकरणत्वमपि ब्रह्मणि कल्पितं स्वीक्रियते। सा चाधिकरणता स्वोपहितब्रह्मण्येव स्वीक्रियते ननु शुद्धे। सत्वोपहिततादात्म्यं च शुद्धेऽपि स्वीक्रियते। एवं च स्वाभाविको यः सत्वसंबंधस्तदुपहितप्रतियोगिकस्यानौपाधिकस्य केवलोपहितभावेन तादात्म्यस्य प्रतियोगिव्यधिकरणात्यंताभावसत्वाभावशब्देन विवक्षितः। सत्तायाश्च सत्पदशक्यतावच्छेदकत्वेन मतद्वयसाधारणरूपेण साध्यकोटौ निवेशः। अतो न ब्रह्मसत्ताया विशेष्योपादाने सिद्धसाधनं। तत्तत्स्वरूपसत्वोपादाने अंशे बाधः। उक्तसत्तानामन्यतमत्वेन निवेशेऽपि तथेत्यादिदूषणावकाश इत्याहुरिति तदप्यसारं। समीचीनत्वादेरपि सत्पदशक्यतावच्छेदकतायाः कोशादिबलेनानपवादेन तदभावसाधने बाधात्। शक्यतावच्छेदके तत्तद्भेदकूटनिवेशेपि घटः सन्नित्यादिवाक्यस्य व्यावहारिकमपि प्रामाण्यं वर्तते न वा। नेति पक्षे शुक्तिरजतं सत् घटः सन्निति वाक्यप्रयोक्तॄणां भ्रांतत्वाभ्रांतत्वव्यवस्थायोगः। व्यवहारकालाबाध्यत्वसाम्ये घटांशे व्यावहारिकप्रामाण्यं

सदंशे नास्तीति वैषम्यस्य वाङ्मात्रेणासिद्धेश्च। आद्ये घटादौ सच्छब्दव्यवहारे उक्तता-दात्म्यं भासते अन्यदेव किंचिद्वा। आद्ये पुनर्बाधः। तत्तद्भेदकूटस्यापि निवेशे ब्रह्मव्यक्ति-मात्रवृत्तितदभावसित्ध्या पुनः सित्धसाधनता। अन्यस्यैव तथात्वांगीकारे तस्यापि शक्य-तावच्छेदकरूपत्वेन संग्रहे बाधः। तत्तद्भिन्नत्वेन विशेषणे पुनः सिद्धसाधनता। ननु तत्त-च्छक्यतावच्छेदकभिन्नस्योक्ततादात्म्यस्य न ब्रह्मवृत्तितद्यक्तित्वेनाभावः सित्ध्यति येन सित्धसाधनता स्यात्किंत्वनुगतोक्तरूपावच्छिन्नाभावः। सच घटादेर्मिथ्यात्वेन विना न पर्यवस्यति। उक्ततादात्म्यस्य ब्रह्मनिष्ठतादात्म्यत्वेन शक्यतावच्छेदककोटिप्रविष्टत्वा-भावेन अबाध्यत्वोपहितोक्ततादात्म्येनैव शक्यतावच्छेदकतया घटादावबाध्यत्वसत्वे उक्तशक्यतावच्छेदकानपायेन प्रकृतसाध्यायोगेन मिथ्यात्वसित्धेरवर्जनीयत्वादिति चेन्न। उक्ततादात्म्यावच्छिन्नशक्तेर्ब्रह्ममात्रवृत्तित्वं वा घटादावपि सत्वं वा। द्वितीये तत्र व्याव-हारिकप्रामाण्यानुरोधादप्युक्तशक्यतावच्छेदकसत्वस्यावश्यकत्वात्पूर्वोक्तो बाध एव। हर्यादिपदवन्नानार्थकत्वं स्वीकृत्य तदीये ब्रह्ममात्रनिष्ठशक्तेरवच्छेदकमुक्ततादात्म्यमित्या-द्यपक्षांगीकारोऽपि न युक्तः। ब्रह्ममात्रनिष्ठशक्तिंप्रत्यानंदादेर्लघुरूपस्यैवावच्छेदकत्वसं-भवे उक्तगुरुरूपस्यावच्छेदकत्वे मानाभावात्। नहि सच्छब्दस्य ब्रह्ममात्रवृत्युक्तधर्मावच्छि न्नशक्तिग्राहकं श्रुत्यादिकं कोशादिकं वा मानमस्ति। येन गुरुत्वेऽप्युक्तधर्मस्य प्रमाण बलाच्छक्यतावच्छेदकत्वं स्वीक्रियत इति वक्तुं शक्येत। नच परमार्थतावाच्छिन्ने सत्पदस्य-लोके शक्तेः क्लृप्तत्वात्तदवच्छिन्न एव लोकानां ब्रह्मप्रपंचसाधारणव्यवहारस्तस्य प्रपं-चांशे भ्रमत्वसित्धये उक्तपरमार्थत्वाभावः साध्यत इति वाच्यं। सन् घट इत्यादिप्रती-तीनां व्यावहारिकप्रामाण्यानुपपत्तेरुक्तत्वात्। उक्ततादात्म्यरूपसत्वस्य तेनैव रूपेणाभा-वसाधनसंभवे उक्तशक्यतावच्छेदकत्वरूपेणाभावसाधनस्य शिरोवेष्टनन्यायग्रस्तत्वात्। तस्यास्य च साधने असत्वपर्यवसानापत्त्याऽर्थांतरताया जागरूकत्वाच्च। उक्तसत्ताया अधिकरणत्वं स्वोपहिते ब्रह्मणि चेत् आधाराधेयभावः कल्पितभेदेनैव वाच्योऽत्यंताभिन्ने आधाराधेयभावायोगात्। तथाच कल्पितभेदवतो मिथ्यात्वेन तस्यैव सत्वोपहितत्वप्राप्त्या सत्तादात्म्यमपि केवलोपहितभावेन विद्यमानं तत्रैव स्यात् नतु शुत्ध इति। मिथ्यामात्र-वृत्ति कथं सत्यत्वं तदभावसाधने च कथं न सिद्धसाधनता अंशेबाधादिकं न स्यात्। अत एव तादृशतादात्म्यं शुत्धेपि स्वीक्रियत इत्यशुत्धं। सत्वं स्वोपहित एव स्वीक्रियते। तादात्म्यं तु शुत्धेपीत्यस्य त्वदिच्छाया एव नियामकत्वापाताच्च। एतेन सत्वावच्छिन्नप्रति-योगिकभेदवत्त्वासत्वावच्छिन्नप्रतियोगिताकभेदवत्वोभयवत्वं मिथ्यात्वं। परमते च घटो न सत्वपर्याप्त्यवच्छेदकताकभेदवान् घटो न सन्निति वाक्यप्रामाण्यापत्तेरतो न सित्ध-साधनं। यद्वा यावंति सद्वृत्तित्वानि तत्तदभावकूटवत्धर्मवत्वं सद्विलक्षणत्वं व्याहत्या द्युत्धारः प्राग्वदित्यप्यपास्तं। सत्पदवाच्यत्वेन सत्पदार्थनिवेशे उक्तबाधानिस्तारात्। ब्रह्ममात्रवृत्तिसत्वेन निवेशे सित्धसाधनानुत्धारात्। असत्वमादायार्थांतरवारणायासत्वा भावताद्विलक्षणत्वयोर्निवेशे व्याहत्यपरिहारात्। त्वदुक्तपूर्वोक्तरीतीनां निरस्तत्वात्। निर्ध र्मिके ब्रह्मणि सत्वासत्वरूपधर्मद्वयाभावेनातिव्याप्तेश्च। नच निर्धर्मिकत्वादेवोक्ताभावद्वय-मपि नास्तीति वाच्यं। उक्तहेतोरुक्तसाध्यस्य ब्रह्मणि सत्वासत्वाभ्यां व्याहतेः। नच निर्ध-र्मकत्वाद्ब्रह्मण्यतिव्याप्तिरिति वदतस्तवापि कथं न व्याहतिरिति वाच्यम्। अहृदयवाचा मत्हृदयमेवोत्तरं इति न्यायेन परीत्यैव तथा व्यवहारात्। नच परीत्यनुसरणे परोक्त-रीतिभिरतिव्याप्तिनिरासोऽपि भवतीति कथमतिव्याप्तिरिति वाच्यम्। अतिव्याप्त्युप-

युक्तन्यायमात्रं परोक्तमाहृत्यान्यं निराकृत्यातिव्याप्तेरभिधानात्। परोक्तसर्वरीत्यनुसरणे तेन सह विवादस्यैव पर्यवसानापत्त्या परोक्तसर्वरीत्यनुसरणाभावात्! अन्यथा तव पररीतिमनुरुध्य वैतंडिकतया तत्खंडनाद्यभावापत्तेः। नच मदीयं निर्धर्मिकत्ववचनं धर्मसामान्यमिथ्यात्वद्वारा स्वरूपमात्रबोधपर्यवसायीति वाच्यम्। मदीयमातिव्याप्तिवचनमपि ब्रह्मणोप्यनिर्वचनीयत्वापादनद्वारा सर्वशून्यतापादनपर्यवसायीत्यवेहि। नच ब्रह्मणि सत्वाभावेपि सद्रूपत्वान्न शून्यत्वमिति वाच्यं। जगतोऽपि सत्वाभावेऽपि सद्रूपत्वेनाप्युपपत्त्या न मिथ्यात्वमित्यपि वक्तुं शक्यत्वात्। न चैकेनैवानुगतब्रह्मरूपसत्वेन सर्वत्र सादित्यनुगतव्यवहारोपपत्तौ सर्वत्रसत्स्वभावत्वकल्पने गौरवरूपतर्कसहकृतानुमानेन मिथ्यात्वेनैव पर्यवसानान्नैवमिति वाच्यम्। धर्माभावात्। सत्ता नास्तीति वदतः सद्रूपत्वधर्मांगीकारायोगेन धर्मं विनैव ब्रह्मविषयिणी सदिति प्रतीतिः प्रमेत्यंगीकृतं स्यात्। तथा घटादिविषयिणी सदिति प्रतीतिः प्रमा स्यादित्यापादने कस्यापि धर्मस्याधिकस्याकल्पने गौरवोक्तेरसंगतत्वात्। नच शशविषाणं सदिति प्रतीतिप्रामाण्यवारणाय तद्विषयेषु स्वभावरूपवैलक्षण्यकल्पनं दुर्वारमिति वाच्यं। ब्रह्मण्यपि स्वभावाख्यधर्मांगीकारे निर्धर्मकत्वहान्यापातेन तं विनैव तत्प्रतीतिप्रामाण्यदर्शनेनात्रापि तथैव वक्तव्यत्वात्। शशविषाणादिप्रतीतौ दोषस्तूभयोः समः। प्रत्युत घटादौ मिथ्यात्वरूपधर्मकल्पन एव परस्य गौरवमिति प्रतितर्कपराहतेः। किंच ब्रह्मणः सद्रूपत्वेन सदिति प्रतीतिगोचरता जगतस्तु तत्संबंधात्तत्प्रतीतिरित्यंगीकारे रूपं रूपीति प्रत्ययवत्सत्ता सदिति प्रत्ययवच्च तत्सत्यं घटः सत्य इति प्रतीत्योर्वैलक्षण्यानुभवापातश्च। न चेष्टापत्तिः। सत्यं ज्ञानमिति वाक्यजन्यबोधस्येदं रूपमिति ज्ञानस्यारूपित्वग्रहाप्रतिबंधकत्वमिवासत्वग्रहाप्रतिबंधकत्वमपि स्यात्तस्यापि स्वातंत्र्येण प्रतिबंधकत्वकल्पने तवैव गौरवं। किंच सन् घट इत्यादिप्रतीतौ अविद्योपहितस्य वा शुद्धस्य वा ब्रह्मण एव स्वरूपतः प्रकारत्वांगीकारे तस्य द्रव्यत्वप्रकारकबुध्यविशेषात् मिथ्यात्वग्रहविरोधित्वस्य सर्वानुभवसिद्धस्यानुपपत्तिः। तस्या अपि स्वातंत्र्येण प्रतिबंधकत्वकल्पने तवैवाप्रामाणिककल्पनागौरवं। ब्रह्मवदिदमिति ज्ञानस्य मिथ्यात्वाभावभिन्नसत्तारूपधर्मविशेषवदिति ज्ञानस्यापि प्रतिबंधकत्वापत्तेश्च। घटत्ववानयमिति ज्ञानस्य स्वरूपतो घटत्वानवगाहिनोऽपि घटेतरावृत्तित्वघटितघटत्वत्वेन घटत्वावगाहिनो घटत्वव्याप्यवत्ताज्ञानमुद्रया अघटत्वज्ञानप्रतिबंधकत्वदर्शनात्। किंच सत्तादात्म्यसंबंधस्य घटादावनंगीकारे घटः सन्निति व्यवहारानुपपत्तिः। अन्यथा रूपसंबंधं विनापि वायू रूपवानिति प्रत्ययापत्तिः। तत्स्वीकारे च घटादीनामेव मुख्यसत्पदार्थत्वेन सद्रूपत्वं ब्रह्मण एवासद्रूपत्वमिति विपरीतमापद्यते। अन्यथारूपस्यैव रूपिपदमुख्यार्थत्वं घटस्य नीरूपपदार्थत्वं स्यात्। अपिच प्रत्येकं घटादौ सत्तादात्म्याख्यसंबंधस्तत्प्रतियोगित्वं सत्तायां त्वया कल्पनीयमिति तवैव गौरवं मम तु त्वदभिमततादात्म्यस्थानीयैः स्वरूपसत्वैरेव सर्वत्र सद्व्यवहाराद्यंगीकारात् ब्रह्मण्यपि स्वरूपसत्वांगीकारेण वैरूप्याभावात्। मम घटादौ स्वरूपसंबंधस्त्वदभिमततादात्म्य (१) संबंधतुल्यः। सत्तादात्म्ये सदिति प्रतीत्युपपादनवत् सत्वेपि सदिति प्रतीत्युपपादनसंभवात्। नव स्वरूपसत्वानामननुगतत्वादनुगतप्रतीत्यनुपपत्तिः। अनुगतधर्मानंगीकर्तुर्घटादिप्रतीतीनामिवास्याप्युपपादनसंभवात्। सत्तादात्म्यवदिति प्रतीतेरि-

टिप्पणी—(१) तादात्म्यस्य संबंध इत्यर्थः।

वानुगमकधर्मांगीकारेणास्याप्युपपादनसंभवाच्च । नच तर्हि नाममात्रे विवादपर्यवसानं स्यादिति वाच्यं । तादात्म्यस्य त्वयान्यसंबंधत्वांगीकारेणान्यत्र तत्प्रतियोगित्वस्य तत्रान्यप्रतियोगिकत्वस्य परस्पर(स)तादात्म्याध्यासानुरोधेन घटादितादात्म्यस्यान्यत्र तत्प्रतियोगित्वादीनां च कल्पनापेक्षयाऽतिलाघवेन महावैलक्षण्यात् । एतेन शुत्धब्रह्मणः स्वरूपतः प्रकारत्वोपपत्तिरित्यपि निरस्तं । परस्परतादात्म्यभानानुरोधेन शुत्धे विशेष्यत्वस्याप्यवर्जनीय(१)त्वापत्तेः । किंच तादात्म्येन वा ऽन्येन वा संबंधेन शुत्धब्रह्मणो घटादौ भाने घटादेरेव प्रतिपन्नोपाधित्वप्राप्त्या तत्र सत्वनिषेधे ब्रह्मण एव तादृशनिषेधप्रतियोगित्वरूपमिथ्यात्वं दुर्वारं । तस्य संसृष्टरूपेण मिथ्यात्वांगीकारे घटादेरपि तथैवास्तु । प्रमाणवैषम्यस्य निराकृतत्वान्निराकरिष्यमाणत्वाच्च । नच घटादौ सत्तादात्म्यं त्वदभिमत-(२)ज्ञानविषयत्वस्थानीयमिति तवैव सत्वांतरांगीकारात् गौरवमिति वाच्यं । सत्वस्य विषयकोटावनिवेशे विषयवैलक्षण्यस्य ज्ञानवैलक्षण्यनिर्वाहकत्वसित्धांतहानिप्रसंगादसत एव प्रतीतिरित्यापाताच्च । त्वयापि मदभिमतविषयतास्थानीयाकाराख्यविषयतांगीकारेण तादात्म्यकल्पनस्याधिकत्वाच्च । यत्तु सद्रूपत्वात् ब्रह्मणि सत्वात्यंताभावोऽपि नास्ति । सद्रूपत्वं च सत्वोपहितप्रतियोगिकतादात्म्यानुयोगित्वं तादात्म्यं च विशिष्टकेवलभावेन बोध्यं । एवंच ब्रह्मणि सत्वस्यास्वीकारेऽपि सत्वात्यंताभावोपि नास्ति स्वाश्रय इव स्वाश्रयीव केवलरूपेपि तदभावानभ्युपगमात् । अन्यथा गगनैकदेशवृत्तिविहंगमसंयोगादेर्गगनावृत्तितया गगने तदत्यंताभावस्वीकारापत्तिरिति तत्तुच्छं । केवलरूपे सत्वं नास्ति सत्वात्यंताभावो नास्तीति प्रतीतिद्वयांगीकारस्य व्याहतत्वात् । तत्र सत्वं नास्तीति प्रमामनंगीकृत्य तदभावो नास्तीति प्रमामात्रांगीकारे सत्वास्वीकारस्य वाङ्मात्रत्वमेव । गगनैकदेशवृत्तिसंयोगस्य गगनभागांतरवृत्तित्वास्वीकारेऽपि तदवृत्तित्वास्वीकारात् । दृष्टांतोपि विषमः । नच भागद्वयस्येव शुद्धब्रह्मस्वरूपे विशेषस्त्वयाऽभ्युपगतः येनेदं युक्तं स्यात् । केवलरूपे भेदकल्पनादेरप्ययोग एव । अन्यथा कल्पितं सत्वं स्वीक्रियतां कुत इयं निष्प्रामाणिककल्पना । किंच सत्वं विनाऽपि शशविषाणं सदित्यादिप्रत्ययवत् ब्रह्मजगतोरपि तथा प्रत्ययसंभवात्सर्वशून्यत्वापत्तिः । नच जगतो निस्वरूपत्वापादने अर्थक्रियाद्यनुपपत्तिरनिर्वाच्यत्वापादने त्विष्टापत्तिस्तृतीयप्रकारस्तु शून्यताया दुर्निरूप इति वाच्यम् । अधिष्ठानवृत्तिसत्वाकारानुगमं विनाऽपि तत्प्रतीतिसंभवेन सदधिष्ठानकत्वाभावस्यैव शून्यतारूपत्वेनापादनीयत्वात् । नच जगद्भ्रमबाधकज्ञानविषयस्य ब्रह्मणो बाधकज्ञानाभावात् सत्वं बलात्सिध्यति । तस्यापि बाधकज्ञानांगीकारे तज्ज्ञानविषयस्यापि बाधकांतरेण भाव्यमित्यनवस्था । यत्र पर्यवसानं तद्ज्ञानविषयस्यैव मया ब्रह्मत्वेनाबाधितत्वेन सत्यत्वस्याप्यंगीकारेण जगतस्तदधिष्ठानकत्वप्राप्त्या नोक्तोपादानमिति वाच्यं । नैव किंच नास्तीति ज्ञानस्यैव स्वपरसर्वबाधकत्वसंभवात् तद्विषयतया अबाध्यस्यासिद्धेः । श्रुत्यादिमानकृतवैषम्यं तु ब्रह्मजगतोर्ब्रह्मणोऽपि मिथ्यात्वे प्रमाणमस्तीत्यनेन मूलकृदेव निरशिष्यत्यधिकमखंडार्थभंगे वक्ष्यते । यत्तु बाध्यत्वाभावरूपसत्वं ब्रह्मणि स्वीक्रियते भावरूपधर्मानंगीकारेऽप्यभावरूपधर्मांगीकारात् । नचैवं तदाश्रयत्वादिभावधर्माणामप्यापत्तिः अभाववत्पदवाच्यतापत्तिश्चेति वाच्यं । अभावाश्रयत्वादेरभावब्रह्मोभयाबहिर्भावात् । अभावादिभिन्नस्वसमसत्ताकधर्म-

टिप्पणी—(१) निर्धर्मितावच्छेदककस्वत्वविशेष्यकघटादिप्रकारकत्वापत्तिरिति भावः ।
(२) ज्ञानस्य ब्रह्मत्वाद्विषयतायास्तादात्म्यत्वादिति भावः।

शून्यत्वस्यैव निर्विशेषत्वरूपत्वात् । एतन्मते विषयादिपदवाच्यता स्वीक्रियते । न चापसिद्धांतः । अभावान्य (१) स्वज्ञानाबाध्यधर्मप्रवृत्तिनिमित्तकशब्द (२) वाच्यत्वाभावस्यैव मतांतराद्व्यावृत्तस्य तदर्थत्वादिति । तत्तु ब्राह्मणाचारविरुद्धाचारः कर्तव्य इतिम्लेंछगुरूपदेशमनुकरोति निर्विशेषत्वावाच्यत्वश्रुतिसंकोचावश्यकत्वे प्रमाणांतरसिद्धकल्याणगुणतत्प्रवृत्तिनिमित्तकशब्दवेद्यत्वाद्यनुरोधेन सत्वादिगुणराहित्याद्यर्थकत्वस्य साकल्येन शब्दावेद्यत्वाद्यर्थकत्वस्य च संभवे तद्विद्वेषेणैवोक्तार्थानुसरणात् । ब्रह्मादिपदावाच्यत्वमभाववत्पदादिवाच्यत्वमित्यत्र विशेषप्रमाणानुपलंभात् । यत्तु असतः सत्वेन प्रतीत्यनंगीकारे सत्वेन प्रतीत्यर्हत्वं यथाश्रुतमेव साध्विति तत्तु तद्धैक आहुरिति श्रुत्याऽसतः सत्वेन प्रतीत्युक्तेर्हेयं । एतदर्थस्तूतरत्र विवेचितोनुसंधेयः । तस्मात्सदसद्विलक्षणत्वलक्षणमयुक्तमेव । एवं प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वं नेह नानेति श्रुत्यर्थनिर्णयाय साध्यत इत्यपि न सत् । नेह नानेति श्रुतेरेकत्र भावाभावोभयबोधकत्वे व्याहतेस्तद्बोधस्य आहार्यत्वापत्तिरूपदोषस्याभिहितत्वेनानुमानेऽपि तादृशदोषस्य दुर्वारत्वात् । नच श्रुत्यनुमानाभ्यामेकत्र बोध्यमानयोर्भावाभावयोर्विरुत्धत्वानवगाहनान्नाहार्यत्वं तज्जन्यबोधस्येति वाच्यं । तथात्वे श्रुत्यादिप्रामाण्यबलेन एकत्र विद्यमानपदार्थयोः प्रतियोग्यनुयोगिभावमात्रसिद्धावप्यव्याप्यवृत्तिभावाभावयोरिव व्याप्यवृत्त्योरपि स्वरूपापहाररूपमिथ्यात्वासित्ध्या निर्विशेषब्रह्मासित्धिरूपदूषणस्य प्रागेवाभिहितत्वात् । नच रूप्यादौ तथात्वे मिथ्यात्वमुपलब्धं । किं तावता सर्वश्रुतीनां तात्विकप्रामाण्यलाभाय दृष्टविरुत्धार्थे एवैतादृशः स्वीक्रियतां । त्वयैव चेदमभिहितं । प्रतियोगितावच्छेदकसंबंधेन प्रतियोगितावछेदकविशिष्टाधिकरणे तेन संबंधेन तत्धर्मावच्छिन्नाभावो व्याप्यवृत्तिर्न दृष्ट इति चेन्मा दर्शि नहि सर्वात्मना दृष्टजातीयमेव बोधनीयमिति नियम इति । एवमुत्तरत्रापि। अस्तु प्रत्यक्षानुरोधेनाभावः प्रतियोगिविरुत्ध इति नियमस्येव श्रुत्याद्यनुरोधेन व्याप्यवृत्तिरभावोऽपि प्रतियोगिविरुत्ध इति नियमस्यापि परित्यागः । उक्तं च विरुत्धमिति नः क्व संप्रत्यय इतीति च । तस्माद्व्याहत्या योऽर्थः श्रुत्यादिभिः सित्ध्यति तात्पर्यवशात्तत्र तदनुरोधेन प्रत्यक्षसित्धार्थवैलक्षण्यमंगीकृत्य प्रत्यक्षसिद्धनियमे संकोचः । यथा यन्न दुःखेन संभिन्नमित्यादिश्रुत्या लोकविलक्षणसुखादिसिद्धौ यत्सुखं तन्नाभिलाषोपनीतमित्यादिप्रात्यक्षिकसहचारसित्धनियमस्य प्रत्यक्षविषयीभूतार्थविषयकत्वेन संकोचः कल्प्यते । अत एव भगवत्करचरणादीनामभेदस्याणुमहत्वादीनां च युगपद्वृत्तित्वस्य बोधवेलायां तयोर्भावाभावरूपत्वाभावेन व्याहत्यभावेन श्रुतितात्पर्यबलात्तत्सिद्धौ तेषां लोकविलक्षणत्वकल्पनया प्रात्यक्षिकनियमस्य संकोचः । अन्यथाऽलौकिकार्थसित्धिरेव दुर्लभा स्यात् । क्वचिन्मृदब्रवीत् उत्ताना हवै देवगवा वहंतीत्यादेर्यथा श्रुतस्यार्थस्य प्रतिपादनवेलायां व्याहत्यभावेऽपि प्रत्यक्षसित्धव्याप्तिकानुमानविरोधात्तत्परित्यागस्तु तत्र शब्दानामनेकार्थत्वेनाबाधितस्याप्यर्थस्य तात्पर्याभावे परित्यागस्य लौकिकस्थलेऽपि दृष्टत्वात्प्रकृतवाक्यस्य जडस्यैव वक्तृत्वतात्पर्यकत्वग्राहकप्रमाणानवतरणेनाबाधितार्थांतरतापरता निश्चयेन । किंच व्याहतेरपरिगणने प्रमाणप्राबल्यदौर्बल्यचिंताऽप्ययुक्ता स्यात् । श्रुतिद्वयेन विरुत्धार्थद्वयप्रतीतौ तयोरेकत्रासमावेशादेकानुसारित्वे परस्य कल्पनीयेऽन्यतरस्यैव परिग्रहाय प्राबल्यादिचिंताविरुत्धार्थयोरेकत्र श्रुतिबला

टिप्पणीः—(१) विषयत्वमपि ग्राह्यं (२) घटादौ प्रसिद्धस्य

त्समावेशांगीकारे कुतोयमायासः। अव्याप्यवृत्त्योर्भावाभावयोरविरुद्धत्वस्यैव दर्शनादस्तु तत्र बोधकत्वं तत्राप्यविरुत्धत्वाग्रहदशायां संयोगवान् संयोगाभाववानिति वाक्यमबोधकमेवानुभवसित्धं। वस्तुतः अव्याप्यवृत्त्यभावस्यापि निराकरिष्यमाणत्वाद्भावाभावयो र्विरोध एव। तस्माद्भावाभावयोर्विरुत्धत्वानवगाहने त्वदभिमतमिथ्यात्वसित्धिरवगाहने च श्रुतेरनुमानस्य च तादृशबोधजनकत्वस्यैवाभावो दुर्वार एव। किंच सर्वदृश्यस्य तन्निष्ठमिथ्यात्वस्य च मिथ्यात्वे श्रुत्याऽनुमानेन वा बोधिते मिथ्यात्वेनागृह्यमाणमिथ्यात्वविषयकत्वरूपप्रामाण्यस्य श्रुतिवाक्यजन्यबोधे गृहीतत्वाभावप्राप्त्या तत्र व्यावहारिक प्रामाण्यासित्धिप्रसंगेनाबाधकत्वात्तदुपन्यासादौ प्रवृत्त्यभावप्रसंगः। मिथ्यात्वेनागृह्यमाण तद्विषयकत्वरूपप्रामाण्यग्रहस्यैव प्रवृत्त्याद्युपयुक्ततायास्त्वयाभिहितत्वात्। दृश्यत्वरूप सामान्यधर्मपुरस्कारेण सर्वमिथ्यात्वनिश्चयाय मिथ्यात्वावच्छेदकीभूतदृश्यत्वग्रहबलेन तन्मिथ्यात्वनिश्चयस्यावर्जनीयत्वात्। नच स्वाप्नार्थतदभावोभयनिषेधकवाक्ये प्रामाण्य ग्रहो लोकानां दृष्ट इति वाच्यं। स्वाप्नरजतं नास्ति तदभावोपि नास्तीति वाक्यस्य तदभावत्वावच्छिन्नाभावबोधकस्य व्याहतत्वस्यैव सर्वलोकसंमतत्वात्। एवमेतल्लक्षणनिविष्टस्याभावनिष्ठान्यूनसत्ताकत्वादेः श्रौतपदबोध्यतया सदेव सौम्येदमग्र आसीदिति शाखांतरस्थवाक्येन सहैतद्वाक्यस्यैकवाक्यतायां मानाभावाच्चैतत्श्रुतेर्मिथ्यात्वबोधकत्वायोगः। पारमार्थिकत्वेन निषेधपरत्वे स्वरूपतो निषेधपरत्वे श्रुतेर्व्याहतिप्रकारः पूर्वमेव दर्शितः। न चेहेत्यस्य सदेव सोम्येदमग्र आसिदिति वाक्यजातप्रतिपाद्यजगत्तादात्म्यापन्नं ब्रह्म नार्थः। तथात्वे मिथ्यात्वशरीरप्रविष्टस्वप्रकारकधीविषयत्वाबोधनेन श्रुतेर्मिथ्यात्वबोधकत्वाभावापत्तेः। स्वसमानाधिकरणाभावप्रतियोगित्वरूपमिथ्यात्वबोधकत्वपक्ष एव तथार्थः। इदानीं तु इहेत्यस्य जगत्तादात्म्यापन्नत्वेन प्रतीयमानार्थकत्वमेव। तथाच कथमाहार्यबोधजनकत्वं श्रुतेरुच्यते। घटप्रकारकप्रतीतिविषयीभूतं घटशून्यमित्यस्याहार्यत्वाभावादिति वाच्यं। तथात्वे तच्छ्रुत्याप्रतिपादितार्थो नास्तीति निषेधे तच्छ्रुतेरप्रामाण्यमेतच्छ्रुत्यैवबोधितं स्यादिति श्रुतेरुन्मत्तवाक्यतापातः श्रुतित्वाविशेषेण स्वस्याप्यप्रामाण्यापत्तेर्दुर्वारत्वात्। सत्यज्ञानादिश्रुतितात्पर्यविषयीभूते असत्वविरोधिसद्रूपत्वादिकं किमपि नास्तीत्यर्थस्यापि वक्तुं शक्यत्वेन शून्यवादापत्तेरिति दिक्। तथाच श्रुत्यनुग्रहाभावात्स्वसमानाधिकरणाभावप्रतियोगित्वरूपमिथ्यात्वस्वरूपमेव दुर्लभं। पारमार्थिकत्वेन निषेधघटितत्वेपि श्रुत्यर्थ निरासप्रस्तावोक्तबाधकानामविशेषात्। एतेन प्रतिपन्नोपाधिनिष्ठस्वान्यूनसत्ताकाभाव प्रतियोगित्वं मिथ्यात्वमिति न किंचिदनुपपन्नं। यद्वा प्रातिभासिकनिष्ठं यत्स्वसमानाधिकरणाभावप्रतियोगित्वं विनाशिनिष्ठं यदप्रातिभासिकस्य स्वसमानाधिकरणात्यंताभावस्य प्रतियोगित्वं तयोरन्यतरवत्वं प्रतिपन्नोपाधीत्यादेरर्थः। अत्रच शुक्तिरजतादेरनिर्वाच्यतासाधनानंतरमेव अनुमानस्य प्रवर्तनीयतया एतदनुमानात्पूर्वं ब्रह्मान्यविषयकज्ञानजन्यनाशप्रतियोग्यज्ञानप्रयुक्तस्य भ्रमादेः प्रातिभासिकशब्दार्थस्य तदन्यत्वरूपाप्रातिभासिकस्य च माध्वमते प्रसित्धत्वेपि तत्र; स्वसमानाधिकरणात्यंताभावप्रतियोगित्वस्याप्रसित्ध्या दृष्टांतस्य साध्यविकलतेति दूषणानवकाशः। किंच माध्वं प्रति स्वप्रकारकधीविशेष्यताव्यापकात्यंताभावप्रतियोगितामात्रं साध्यते।तेन प्रातिभासिकस्यात्यंताभावादेरनभ्युपगमेन सित्धसाधनतादेरुपन्यासायोगात्। मद्रीत्योक्तसाध्यस्य पारमार्थिकत्वाविरोधित्वेपि तद्रीत्या तथात्वानपायात्। यदि चास्मद्रीत्यापि साध्यस्य तथात्वमावश्यकं। अन्यथा

सिद्धसाधनताया अभावेऽप्यर्थांतरता दुर्वारैवेत्युच्यते । तदा मिथ्यात्वघटकात्यंताभावे प्रातिभासिकान्यत्वविशेषणस्योपादानान्नासंगतिः । प्रातिभासिकं च परमते सदलीकं वाऽस्तूभयथापि तदन्यत्वं नाप्रसिद्धं । नच स्वप्रकारकधीविशेष्यत्वव्यापकात्यंताभावे प्रातिभासिकान्यत्वनिवेशो न संभवति । अधिकरणात्मकाभाववादिमते शुक्तिरजतादावारोपिते रंगे हेतोः सत्वेन व्यभिचारादिति वाच्यं । तादृशरंगादेः प्रामाणिकत्वे स्वप्रकारकधीविशेष्यताव्यापकात्यंताभावा*प्रतियोगित्वप्रातिभासिकान्यत्वोभयाभावस्यैव प्रतियोगित्वांतेन विवक्षणीयतयोक्तदोषानवकाशात् । प्रातिभासिकान्यत्वस्यैव पक्षविशेषणकोटौ निवेशाच्च न प्रातिभासिकत्वमादायार्थांतरता । यद्वा व्यावहारिकपारमार्थिकान्यतरनिष्ठं यत्प्रातिभासिकाभावप्रतियोगित्वं यच्चाविनाशिनिष्ठं व्यावहारिकाभावप्रतियोगित्वं तदन्यत्स्वसमानाधिकरणाभावप्रतियोगित्वमुक्तवाक्यार्थः । अत्रान्यतरांतेन व्यावहारिकेत्यनेन च ब्रह्मान्यविषयकज्ञानाबाध्यस्य प्रातिभासिकशब्देन ब्रह्मान्यविषयकज्ञानजन्यनाशप्रतियोग्यज्ञानप्रयुक्तस्य च विवक्षणान्नानुमानात्प्राक् सत्ताभेदासिद्धिनिबंधनो दोषः। वस्तुतः परमते तादृशप्रतियोगिताद्वयस्य सत्वेऽलीकत्वेपि वा तद्भेदस्य नाप्रसिद्ध्यवकाशः। न चात्र साध्यवैकल्यं । स्वाधिकरणेत्यनेन स्वनिरूपितत्वस्वसजातीयनिरूपितत्वोभयाभावतो विवक्षणात् । साजात्यं च कालसंबंधतदभावान्यतररूपेण बोध्यं । शून्यवादापत्तिवारणाय सत्तादात्म्यमपि पक्षविशेषणमुपादेयं । स्वाधिकरणसन्निकृष्टेत्यादिवाच्यं । न चैवमपि शुक्तिरजतादेरलीकतया अविनाशित्वेन तन्निष्ठादुक्ताभावप्रतियोगित्वादन्यस्य तन्निष्ठस्याभावप्रतियोगित्वस्याप्रसिद्ध्या साध्यवैकल्यं दुर्वारमिति शंक्यं । अविनाशीत्यनेन कालसंबंधित्वविशेषितस्याविनाशिनो विवक्षणीयत्वादिति परिष्कारप्रकारोऽपि निरस्तः प्रतिपन्नोपाधीत्यनेन स्वप्रकारकधीविशेष्यविवक्षणे पूर्वलक्षणस्यापि तथैव परिष्कृतत्वात्स्वान्यूनसत्ताकत्वादेरपि तत्रार्थांतरवारणायावश्यकतया अत्रापि असत्ववारणस्य यथाश्रुतान्यूनसत्ताकत्वेन संभवेऽत्रेव पूर्वत्रापि संभवेनासद्वैलक्षण्यरूपसत्तादात्म्यं पूर्वत्रापि व्यर्थं । नो चेदत्राप्यावश्यकं । तथाच पूर्वलक्षणाविशेषापत्तिः । तत्र च दोष उक्त एव । अत एव किंचेत्याद्ययुक्तमेव । एतत्प्रमेयस्य पूर्वलक्षणार्थतयोक्तत्वेनैतल्लक्षणार्थतया कथनासंगतेः । यदि तु प्रतिपन्नोपाधीत्यस्य स्वाधिकरणेत्यर्थस्तदा स्वसमानाधिकरणाभावेत्यादिलक्षणस्वरूपमप्रसिद्धमेव । भावाभावयोर्विरोधस्य पूर्वमेव बहुश उपपादितत्वात् । यदपि साध्यप्रसिद्ध्युपपादनायोभयाभावस्याधिकरणतायां निवेशनं तदपि वैयर्थ्यादनुपादेयमेव । एकमात्रवृत्तिरूपावच्छिन्ननिरूपकताकाधिकरणतानां सर्वत्र सत्वेन तासां चोभयानिरूपितत्वेनोभयाभाववत्तयोभयाभाववदधिकरणतात्वावच्छिन्नस्यापि केवलाधिकरणतात्वावच्छिन्नवत्केवलान्वयितयाऽधिकरणतायामुभयाभावस्याव्यावर्तकत्वात् । अत एव साजात्यादिपरिष्कारोपि वृथैव । तथा चोभयाभाववदधिकरणतावन्निष्ठाभावप्रतियोगितामात्रसाधने सिद्धसाधनमेव । घटस्य स्वानधिकरणपटाधिकरणदेशनिष्ठाभावप्रतियोगित्वात् । अधिकरणतायां [पुनः] स्वनिरूपितत्वोपादाने पुनः साध्यवैकल्यं । तादृशाधिकरणताव्यापकत्वाविवक्षणे च तत्समानाधिकरणभेदप्रतियोगितावच्छेदकत्वाभावो भेदप्रतियोगितावच्छेदकत्वाभावसमानियत इति केवलान्वय्यभावप्रतियोगित्वमेवोक्तं

टिप्पणी— * अत्यंताभावे प्रातिभासिकान्यत्वं वर्तत एव। अन्यथा स्वमतेम पूर्वोक्तार्थांतरानिरासापत्तेः

स्यात् । तस्य च गगनादिवत्सत्यत्वेप्युपपत्त्याऽर्थांतरमेव। अत्र भेदगर्भस्वसजातीयानिरूपिताधिकरणतामात्रं तु निवेश्य साध्यवैकल्योद्धारः कर्तुं शक्यस्तथात्वे असत्त्वमादायस्वनिरूपिताधिकरणतासिद्धिमादाय वार्थांतरमेव दुर्वारं बोध्यं । स्वानिरूपितत्वघटितोभयाभावबोधकपाठसत्वेप्येष एव दोषः । उभयाभावपर्यंतानुसरणं विफलमित्यधिकमिति ध्येयं । यदपि शून्यवादापत्तिवारणाय सत्तादात्म्यं निविष्टं तदपि पूर्वमेव निरस्तं । तद्दोषवारणायैव सन्निष्ठत्वं वा अभावे देयमित्युक्तं । तत्र वक्तव्यं शून्यवादो नाम जगतः सदनधिष्ठानकत्वेनात्यंतासत्त्ववादः। अथवा अबाध्यवस्त्वेव नास्तीति वादः। नाद्यः। शशिविशाणाद्यत्यंतासतो अभावस्य सत्वेपि वृत्तितया भावे तद्वृत्तित्वमात्रेण तस्यात्यंतासत्वाव्यावृत्तेः । अधिकरणतावत्त्येव सत्वानिवेशे चतुर्थलक्षणे वक्ष्यमाणरीत्या तदसिद्धिर्द्रष्टव्या। द्वितीये किमबाध्यस्य सर्वथाप्रसिद्धिकाल उक्तानुमानेनैव तत्सिध्यर्थं तन्निवेशः उत तत्प्रसिद्धिकाले जगन्मिथ्यात्वसाधनावसरे । नाद्यः। तस्य सर्वथा प्रसिद्धौ तद्घटितसाध्यस्यैवाप्रसिद्धिः स्यात् । सदिति प्रतीतिविषयत्वादिना कथंचिन्निवेशे तादृशविषयस्यैव बाध्यत्वांगीकारान्न तेनाबाध्यसिद्धिः । न द्वितीयः । जगन्मिथ्यात्वसाधनेपि ब्रह्माबाध्यत्वहान्यभावेनोक्तशून्यवादाप्रसक्तेः। यदपि मन्मते ब्रह्मज्ञानान्येत्यादिना भ्रमस्यैव प्रातिभासिकपदार्थस्य प्रसिद्धिरित्यभिहितं तदस्मन्मतापरिज्ञानमूलकं । मन्मते तूलाज्ञानानंगीकारेण ज्ञानप्रागभावस्यैव तथा व्यवहारात् । ज्ञानविरुद्धत्वेन निवेशे विरोधस्य वध्यघातकभावरूपत्वे प्रागभावस्य प्रतियोग्यनाश्यत्वात् तदसंग्रहः । यत्तु गुरुचंद्रिकायां सत्ताभेदस्यैतदनुमानात्प्राक् असिद्धि * माशंक्य मिथ्यात्वविप्रतिपत्तिवेलायां भावाभावयोर्विरोधासिद्ध्याऽनुमित्यनंतरमन्यूनसत्ताकत्वादिकं सिध्यतीत्युक्तं तदसत्। विरोधग्रहाभावे विप्रतिपत्तेरेवाभावप्रसंगात् । यदपि उक्तलक्षणघटकाभावस्य पारमार्थिकत्वपक्षे द्वैतव्याघातपरिहाराय ब्रह्मस्वरूपत्वाभिधानं । तदप्ययुक्तं । प्रतियोगिसापेक्षस्याधेयताशालिनो निरपेक्षेण शुद्धेनाभेदायोगात् । नच त्वन्मते सापेक्षभेदस्य निरपेक्षधर्म्यैक्यवदुपपत्तिरिति युक्तं । मन्मते रूपभेदेनोभयसंभवात् । नच ममापि तथास्त्विति वाच्यं । अभावत्वोपाहितस्य मिथ्यात्वेन पारमार्थिकत्वोक्त्यसंगतेः । नच तदीयं केवलरूपं सत्यमिति वाच्यं । तस्य स्वाधिकरणावृत्तित्वेन लक्षणाघटकत्वेन प्रश्नाविषयत्वात् यदप्येतत्प्रसंगे अविद्याविषयत्वोपाहितस्य ब्रह्मणो दृश्याधिष्ठानत्वेनेहेति श्रुतिबोध्यत्वानुपपत्तिरधिष्ठानस्याध्यस्ताधिकसत्ताकत्वनियमादिति बाधकपरिहारायाध्यस्तबाधकाबाध्यस्वीयकेवलरूपकत्वमेव तत्र तंत्रमित्यभिहितं तदप्यसत् । एवं सति बाध्यत्वविशेषाभावस्यैवाधिष्ठानताप्रयोजकत्वप्राप्त्या लाघवात् व्यवहारकालाबाध्यत्वमात्रेण शुक्त्यादेरिव ब्रह्मणोऽधिष्ठानत्वोपपत्तौ सर्वथा अबाध्यत्वांगीकारस्य निष्प्रयोजनकत्वापत्तेः। बाधस्य निःसाक्षिकत्वं तु तव मतेऽप्यविशिष्टमिति पूर्वमेवाभिहितं। शुद्धस्याधिष्ठानत्वमपि न युक्तं । अधिष्ठानत्वादिधर्मकल्पनावतः शुद्धत्वस्यैव विचारासहत्वात् । अधिकमग्रे वक्ष्यते । यदपि भेदवदत्यंताभावस्यापि अधिकरणस्वरूपत्वमेव परमते युक्तं । भेदस्य भेदे भेदपरंपराऽनवस्थाया इवात्यंताभावस्य भेदे तदत्यंताभावत्वाभावतत्वात्यंताभावपरंपरयाऽनवस्थासाम्यादिति प्रसंगादभिहितं । तदप्रामाणिकप्रतियोगिकात्यंताभावविचारावसरे

* टिप्पणीः—तथाच स्वसामानाधिकरण्यं अभावे निवेशयितुमशक्यं विरोधशामकस्य सत्ताभेदादेरस्फुरणादिति शंकाभावः ।

एवापहास्तितं । यत्तु शशविषाणं नरविषाणं नेति प्रत्ययस्य कथं स्वरूपभेदपक्षे-प्रामाण्यमिति तन्न । अस्याः प्रतीतेः घटो न भवति पट इत्यादेरिव परस्परतादात्म्यरूपा-सत्प्रतियोगिकात्यंताभावविषयकत्वांगीकारात् । प्रपंचितमेतदधस्तादिति । ज्ञाननिवर्त्य-त्वरूपमिथ्यात्वं तु पूर्वमेव निरस्तं । यदपि स्वात्यंताभावाधिकरण एव प्रतीयमानत्वं मिथ्यात्वं तदर्थश्च सत्वावच्छिन्नस्वनिष्ठप्रकारतानिरूपितविशेष्यताव्यापकात्यंताभावप्रति-योगित्वं सत्वावच्छिन्नस्वाधिकरणताव्यापकस्वात्यंताभावकत्वं सत्वसमानाधिकरणस्वा-वच्छिन्नाधिकरणताव्यापकतावच्छेदकं यद्धर्मावच्छिन्नप्रतियोगिकात्यंताभावत्वं तद्धर्मवत्वं वा सत्वं वा बाध्यत्वोपलक्षिततादात्म्यं शुद्धचितः इंद्रियागोचरत्वेऽपि शाब्दादिज्ञानमा-दाय लक्षणसमन्वयः । शुद्धस्य वृत्त्यविषयत्वे अबाध्यत्वोपहिततादात्म्यमेव तदिति तदपि न ।भावाभावयोर्विरोधस्य पूर्वं व्यवस्थापितत्वेन लक्षणस्य व्याहतत्वात्। नच विष मसत्ताकयोरविरोध इति वाच्यं । अद्यापि सत्ताभेदासिद्धेः । प्रातिभासिकस्य निराकृत-त्वात् । अविरोधे वा प्रमेयत्वादिसामानाधिकरण्यवत्तत्सामामाधिकरण्यस्यापि स्वरूपा-विघातकत्वात्प्रमेयत्वादौ अनवच्छिन्नवृत्तिके स्वप्रतियोगिकत्वसिध्द्याऽप्यनुमानश्रुत्योः कृतार्थत्वापाताच्च । न चैतत्सिद्धेर्निष्प्रपंचब्रह्मसिध्द्यननुगुणत्वान्नात्र श्रुतेस्तात्पर्यं कल्प्यमिति वाच्यं । अविरुध्दव्याप्यवृत्त्यभावतत्प्रतियोगिनोरेकत्र प्रतिपादनस्यापि तद-ननुगुणतायाः पूर्वमुपपादितत्वात् । अपि चैतल्लक्षणस्य सत्तादात्म्ये अव्याप्तिः स्वस्मिन् वृत्तित्वस्य तत्र निराकृतत्वात् । अपिच सत्तादात्म्यस्य घटादाविवासत्यपि पूर्वोपपादित-रीत्याऽवर्जनयितया तत्रातिव्याप्तिः। तत्र तदसिद्धौ घटादावपि तदसिध्द्याऽसंभवः। किंच सत्वोपहिततादात्म्यस्य पूर्वोपपादितरीत्या तत्राभावात्तादात्म्यनिरूपितप्रतियोगित्वानु-योगित्वयोरपि सत्तादात्म्यांतरस्वीकारे तत्प्रतियोगितायामप्यन्येत्यनवस्थाभयेन सत्ता-दात्म्यस्य तयोरप्यभावात्तत्राप्यव्याप्तिः । सत्तादात्म्यस्य द्विष्ठत्वे उपलक्षिततादात्म्यस्य शुध्देऽपि ब्रह्मणि सत्वात्तदवच्छिन्नाभावप्रतियोगित्वं जगतीव ब्रह्मण्यपि दुर्वारं । प्रति-योगितावच्छेदकधर्मवत्वे तत्सत्वावश्यंभावादन्यथा सत्वेन सदलीकोभयाभावीयन्यूनवृत्ति धर्मावच्छिन्नप्रतियोगितामादाय सिद्धसाधनतावारकविशेषणदाने(१)तस्यासंग्रहप्रसंगात्। (२) किंच ब्रह्ममात्रे कल्पितज्ञानत्वानंदत्वादिधर्मावच्छिन्नाभावप्रतियोगित्वं तदाश्रये ब्रह्मणि वर्तत इत्यतिव्याप्तिः । इदानीमत्र नानंद इति प्रत्ययेनानंदत्वोपहितस्य मिथ्या-त्वानुरोधेन तदत्यंताभावस्यावश्यमभ्युपगमात् । न चोपहित एव तद्वर्तते न शुध्द इति वाच्यं । शुद्धघटादौ प्रतियोगित्वानवगाहने तत्राप्युपहित एव प्रतियोगितासत्वात् । ननू-पहितवृत्तिप्रतियोगित्वं शुद्धेपि वर्तत इति तन्मिथ्यात्वसिद्धिः। ब्रह्मणि तु तत्सत्यमित्यादि श्रुत्यनुरोधेनोपहितनिष्ठमिथ्यात्वादिधर्माः न स्वीक्रियंते न तथा घटादाविति चेत्तर्हि जगत्सत्यताबोधकेषु विश्वं सत्यमित्याद्यागमेषु दीयतां दृष्टिः। किंच प्रथमनिरुक्तौ असत्य तिव्याप्तिः। ' तद्धैक आहुरसदेवेदमग्र आसीत्तस्मादसतः सज्जायेतेति कथं खलु सौम्यैवं स्यात् कथमसतः सज्जायते ' इति श्रुत्या निराकरणार्थं असतः सत्वप्रतीतेरनुदितत्वात् । सत्वावच्छिन्नप्रकारतासंभवात् । न चासतः सत्वप्रतीतिराहार्यतया तद्विषयीभूतार्थस्य व्याहततयातिनिर्दलपक्षनिरासार्थं श्रुत्यानुवादायोगात्सदेव सौम्येदमग्र आसीदित्या-दिश्रुत्यर्थाभाव एवानूद्यत इति वाच्यं । नेह नानेतिश्रुत्यर्थावसरे परस्परविरुद्धत्वा-

टिप्पणीः—(१) प्रतियोगितायाः । (२) सत्वावच्छिन्नत्वस्य प्रकारतायामेव विशेषणे त्वाह किंचेति ।

नवगाहिभावाभावज्ञानस्यानाहार्यतायाः तयोरविरोधस्य च त्वयैव भाषितत्वेन त्वत्सदृशस्य कस्यचिद्विरोधानवगाहितादृशज्ञानोत्पत्तौ बाधकाभावात्। निरुपाख्यत्वरूपासत्वावच्छिन्नं घटः सन्नित्यादिप्रतीतौ भासमानं त्वया लक्षणे निवेशितं यादृशं सत्वं तत्प्रकारकत्वे भावाभावरूपत्वाभावेनाहार्यत्ववार्ताया अप्यभावाच्च। नच तथावादी कोऽपि नास्तीति वाच्यं। यथाश्रुतशून्यमते संभवात्। अत एव न निरुपाख्योपादानता जगतः सदन्वयादिति विवरणावतारिकारूपस्य निरुपाख्यकारणतावादिनं प्रति निरुपाख्यत्वहेत्वसंगतेराहेति तत्वदीपनवाक्यस्य बौद्धो यदि निरुपाख्यं कारणमिति ब्रूयात्तदा तं प्रत्याहेत्यभिप्रायो अद्वैतचंद्रिकायां वर्णितः। कथंचिदपि बौद्धमतत्वाभावे तथाभिधानमसंगतमेव स्यात्। अन्यथा वेदांती ब्रूयादिति कुतो नोच्यते। किंच शून्यस्यैव संवृतियोगादिव त्वन्मते ब्रह्मण अज्ञानवशात्कल्पितधर्मवत्तया जगद्विवर्तोपादानतया सत्वादिधर्मशून्यतया असद्रूपत्वेन प्रतीतिरुपपद्यत एव। अथवा श्रुतितात्पर्यापरिज्ञानप्राप्तमतस्यैवानुवादोऽस्तु। 'असद्वा इदमग्र आसीत्ततो वै सदजायत तस्मात्तत्सुकृतमुच्यते असदेवेदमग्र आसीत् तन्मनो कुरुत असतः सदजायत' इत्यादिश्रुतीनां उपलंभे एकजातीयानां नानास्थले श्रुतत्वेन बहुबाधन्याय्यत्वबुध्या व्याहतार्थेऽपि कथंचिद्व्याहतिपरिहारभ्रमेण यथाश्रुतार्थे तात्पर्यभ्रमसंभवात्। न वा श्रुतीनामद्वैततात्पर्यग्रहवत् इष्टापूर्तं मन्यमानावरिष्ठमित्यादीनामिव श्रुतितात्पर्यापरिज्ञानप्राप्त्याप्यनुवादकत्वं युक्तं। न चातिनिर्दलत्वान्निराकरणायोगः कथंचिद्व्याहतिपरिहारेण प्रवृत्तस्य व्याहतेरेव दृढीकरणेन निराकरणसंभवात्। अत एव युक्त्यंतरमनभिधाय कुतस्तु खलु सोम्यैवं स्यात् कथमसतःसज्जायेतेत्यनेन व्याहतिरेव तदभिमतमार्गांतरासंभवाभिप्रायेण दृढीकृता। अन्यथैकत्र सप्तभंगित्वादेरतिविरुद्धस्य निराकरणाय नैकस्मिन्नसंभवादित्यधिकरणप्रवृत्तिर्न स्यात्। सदेवेति श्रुत्यर्थाभावोऽनूद्यत इत्यर्थ एवायुक्तः। यतः सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायत इति कुतस्तु खलु सौम्यैवं स्यादिति होवाच कथमसतः सज्जायेतेति सत्त्वेव सौम्येदमग्र आसीदित्यारभ्योत्तरत्र तेज आदिसृष्टिः श्रूयते। तत्र सदेवेति वाक्येन सतोवस्थानमात्रस्योक्तत्वेन सतः सदुत्पत्तेरनाभिधानात् तस्मादसतः सज्जायेतेति वाक्यानुपपत्तिः। यस्मात्सदग्रकाले नास्ति तस्मात्सतः सज्जायते अग्रकाल इति न युक्तं। पूर्ववाक्ये एतद्वाक्ये च अस्त्यस्य प्रतिषेधार्थकस्य नञन्यस्य सत्पदेनासमस्तत्वाद्विशिष्टवाक्यार्थाभावबोधकत्वोपपत्तिः। अग्र इत्यस्य तस्मादित्युत्तरवाक्येप्यनुवर्तनेनाग्रकाल एव सतः सदुत्पत्तेर्निषेधादिदानीं तदुत्पत्तावपि न विरोध इति श्रुत्यर्थो भवत्संमतः। तत्र पूर्ववाक्येन सतः सदुत्पत्तेरनुक्तत्वात्तस्मादित्यनेन तन्निषेधस्याप्रसक्तनिषेधरूपत्वापत्तेः। अग्र इत्यस्यानुवृत्तिप्रसंगश्च। * एकेनाकारेण विशिष्टार्थस्य प्रतिषेधोपपत्तौ प्रत्येकं तदुपादाने बीजाभावश्च। उत्तरत्र सतः सदुत्पत्त्यनंगीकारबाधकतया कथंचिदित्यादिवाक्यार्थस्यासंगतिश्च। सतःसदुत्पत्त्यनंगीकारेऽपि सांख्यरीत्या सत्कार्याभिव्यक्तिसंभवेन व्याहत्याद्यभावात् कथमित्यनेन सतः सदुत्पत्त्यनंगीकारस्य विरुद्धत्वोक्त्यसंगतेस्तन्निरासकबाधकांतरस्यैव वक्तव्यतापाताच्च। नच बौद्धेन जागराद्यक्षणीयाहमिति प्रत्ययस्याकस्मिकताया

टिप्पणी— * अकारेणेति छेदः

इवाद्यकार्योत्पत्तेरप्यकारणिकायाः स्वीकृतत्वान्नैय्यायिकादिभिर्गुणादिप्रपंचस्य द्वितीयस्य प्रलये स्वीकृतत्वात्तदुभयमतेप्यद्वितीयसतः सकाशात्सदुत्पत्त्यनंगीकारात्तदुभयमतानुवादोऽयमिति वाच्यं। तथात्वेप्युत्तरवाक्यस्य तत्र वाधकप्रतिपादकत्वाभावरूपासंगतेर्दुर्वारत्वात्। तादृशाभावस्य तैरवश्यमंगीकृतत्वात्परमाणुद्वयसंयोगाद्द्रव्योत्पत्तिमंगीकुर्वतस्तस्य सत्यद्वितीयत्वाभावावश्यकत्वाच्च। न चोक्ताभावानुवादमुखेनाकारणकार्योत्पत्तिः सद्द्वयादुत्पत्तिरेवाद्यकाल इत्येतत्प्रमेयं दूष्यत्वेनाभिमतं। कथंचिदिति वाक्ये त्वकारणकार्योत्पत्तौ विरोधरूपबाधकं सद्द्वयादुत्पत्तौ चैकसदनुगमानुभवरूपं वाधकमभिप्रेतमिति वाच्यं। श्रौतपदादर्थतो वा ऽ स्यालाभेनाश्रुतकल्पनाश्रुतहान्योरापातात्। नहि सतः सदुत्पत्त्यभावो द्वितीयसदवस्थानाभावो वा कारणकार्योत्पत्तिसद्द्वयादुत्पत्तिं विनाऽनुपपन्नः सत्तामेवाभिव्यक्त्यादिनोपपत्तेरुक्तत्वात्। तथाच कथं तदाक्षिप्तः स्यात्। सतः सदुत्पत्त्यभावः कथमित्यनेनापि कथमुक्तनिष्कृष्टदूष्यप्रमेयद्वयंबाधकद्वयं च लब्धं तस्य तदनाक्षेपकत्वस्योक्तत्वात्। कथंचिदार्थिकत्वानयने अवश्यवक्तव्यार्थमनभिधाय कथंचिदुपयुक्तक्लिष्टार्थाभिधाने श्रुतेरसंगतेः स्फुटत्वात्। सत्ताजात्यभ्युपगमवतः तस्य घटत्वानुगमवत्सदेकाकारानुगमानुभवस्य वाधकरूपत्वायोगाच्च। तस्मादस्मदभिमत एव श्रुत्यर्थः। तत्र हि जगदुत्पत्तिप्रतिपादनाय स्वतंत्रस्य परब्रह्मणः सत्तामभिधाय तत्स्थेम्ने तद्विरुद्धमतनिरासाय श्रुतिप्राप्तस्य समयप्राप्तस्य वा शून्यमतस्यानुवादः। नैय्यायिकस्येश्वरकारणत्वाविरोधित्वान्न तस्यानुवादः। कार्यजातमंगीकृत्य तदुत्पादकाचिंतायां सत्कार्यवादिसांख्यमतस्याप्रसक्तत्वान्न तस्याप्यनुवादः। मृत्पिंडादिदृष्टांतप्रदर्शनमुखेन पूर्वमुपपादितस्य ब्रह्मणो जगत्कारणत्वेन प्राधान्यस्यैव मतांतरव्यवच्छेदपूर्वकं दर्शनीयतया जगतः कार्यत्वांशे विवादायोगात्। तथाचासदेवेदमग्र आसीदित्युक्तौ तन्मात्रस्य स्वाभिमतब्रह्मकारणत्वाविरोधितया तस्मादसतः सज्जायत इति तद्विरोध्युत्कीर्तनस्योपयोगः।सिद्धांते व्याहतेरेवोपपादनेन तन्निराकरणं साधु संगच्छते। तस्मादिति निगमनवाक्ये ऽप्यसद्वैलक्षण्येन सतो जगत्कारणत्वोपयुक्तधर्मोपपादनाय तु सत्त्वेवेति तुशब्दोपादानं। भवन्मते पूर्वश्रुत्यर्थस्यैव निगमने तत्रास्यानुक्ततया तद्वैय्यर्थ्यं। कुतस्तु खलु इत्यस्य स्वयमसतः सर्वधर्मरहितस्य कुतः संवृत्यादिसंबाधात्सत्वं स्यान्न कस्मादपि स्वयंनिर्विशेषे संवृत्याद्ययोगादित्यर्थः। परतोऽपि कारणतानियामकपूर्वकालसंबंधाद्यभावे तेन सज्जायेतेति कथमित्यादेरर्थः। श्रुतिप्राप्तिरसन्मतस्य श्रीमद्भाष्ये असदधिकरणे अभिहितं। तथा श्रुतिप्राप्तमेवासन्मतमत्र निषिध्यते समयस्योपरि निषेधादिति। केचित्तु श्रुतावसदिति द्वितीयांतं पदं तथाच सत्वादिधर्मरहितत्वांगीकाराद्वस्तुतः असंतमेव निर्विशेषमेकमेवाद्वीतीयमग्रे आसीदित्याहुरिति श्रुत्यर्थ इत्याहुः। अन्यत्समानं। तथाचासतः सत्वप्रतीतिरनुदितैवेत्याहुः सदेवेत्यादिश्रुत्यर्थाभावानुवादकत्वपक्षेऽप्यसतः सत्त्वेन प्रतीतिर्दुर्वारा। तादृशाभावस्वरूपस्य सत्वासत्वौदासीन्येन बुद्धावनारोहात्तथात्वे वा तावन्मात्रज्ञानस्य तत्रासत्वज्ञानस्य वा तेषामदोषावहत्वेन दूषणार्थं तदनुवादासंगतिप्रसंगेन तत्र सत्वबुद्धेरेव तेषां वाच्यत्वेनाहुरित्यस्य सत्वेनाहुरित्यस्याश्रयणीयत्वात्। न च तत्र सत्वबुध्युदयेप्युक्ताभावो नासत् किंत्वनिर्वचनीयः स चापरोक्षेनिर्वचनीयख्यातेरन्यथाख्यातेर्वांगीकारादिति वाच्यं। तस्य निरासेन सत्ख्यातेरेव व्यवस्थापितत्वात्। एतेनात्र सत्वासत्वशब्देन न तावदर्थक्रियाकारित्वतदभावौ विवक्षितावित्यादिना ऽभिहितस्य नवीनोक्तदोषस्य नावकाशः। त्वया + नू घटः पटोस्तीत्यादिप्रतीतौ घटादौ यादृशसत्वं भासत इति स्वीक्रियते तदेव लक्षणे निवे-

इयमन्यथा असंभवाद्यापत्तेः तत्प्रकारकप्रतीतिरेव मया असत्युपपादनीया साचाहार्यत्वा दिविरोधपरिहारेणोपपादिता च । आसीदिति तेषामभिलापकवाक्यबलेन घटादिसमकक्षत्वस्यैव मानसिद्धेः । तथाच त्वदीयविकल्पदूषणादिकमसंगतमेव । तस्मात्प्रथमलक्षणस्यासत्यतिव्याप्तिर्दुर्वारा । द्वितीयतृतीयनिरुक्त्योरप्यधिकरणतानिवेशेनैवासत्यतिव्याप्तिवारणात्सत्वानिवेशो व्यर्थः । नच वृत्त्यनियामकसंबंधेनापि घटादेर्मिथ्यात्वोपपादनायाधिकरणत्वस्थाने संबंधिता यदि निवेश्यते तदाऽलीकविषयकज्ञानेऽलीकानिरूपितविषयतासंबंधवत्यलीकाभावसत्वात्तत्प्रतियोगिन्यलीकेऽतिव्याप्तिवारणाय तन्निवेश इति वाच्यं । नेह नानेति श्रुत्या ब्रह्मणि सर्वप्रपंचाभावस्य प्रमितत्वेऽपि वृत्तिरूपज्ञाने आकाराख्यविषयतासंबंधेन तत्संबंधिनि तत्संबंधावच्छिन्नतदभावसत्वे मानाभावेन तत्रातिव्याप्त्यप्रसक्तेः। चिद्रूपज्ञानस्य नालीकविषयकत्वं सदसतोस्तादात्म्यरूपविषयिविषयभावाभावात् । आकाराख्यविषयतायाश्चिदनिरूपितत्वात् । तथात्वे तथैवोपपत्तौ दृग्दृश्ययोराध्यासिकसंबंधासिद्धिप्रसंगात् । नच शुक्तिरूप्ये परमते दृष्टांते साध्यवैकल्यपरिहाराय स्वानिरूपितत्वस्वसजातीयनिरूपितत्वघटितोभयाभाववदधिकरणतैव निवेश्या । एवं चोक्तसाध्यस्यासत्साधारण्यात्पक्षे सत्वमादाय पर्यवसानवारणाय कालसंबंधित्वं विशेषणं देयं । जगतः सदनधिष्ठानत्वे शून्यमतपर्यवसानवारणाय सामानाधिकरण्येन सत्वविशिष्टत्वरूपं सत्वावच्छिन्नत्वं अधिकरणतायां देयमिति वाच्यं । अबाध्यस्योक्तानुमानात्प्राक् क्वचित्प्रसिद्धौ जगतः सदनधिष्ठानकत्वेपि शून्यमताप्रसक्तिः । अप्रसिद्धत्वे प्रकृतसाध्यस्य तद्घटितस्याप्रसिद्धिरिति पूर्वोक्तदोषानिस्तारात् । अनिर्वचनीयसिद्धेः प्राक् असन्मात्रप्रसिद्धोक्तसाध्यव्यावर्तकत्वस्यासत्वव्यावर्तकत्वेन गृहीतकालसंबंधे वर्जनीयतया तस्य पक्षविशेषणत्वे तदवच्छिन्ने साध्यानुमित्युत्पत्त्ययोगस्योक्तत्वाच्च । कालसंबंधिन्यपि ब्रह्मणि सत्वे कालसंबंधिन्यपि जगति तुच्छत्वं किं न स्यात् । अस्य पारिभाषिकत्वे तस्यापि कुतो न पारिभाषिकत्वं । किंचोक्तानुमानस्य श्रुतेश्च सन्निष्ठकिंचिदनिरूपिताधिकरणतामादायापि पर्यवसानसंभवान्न मिथ्यात्वसिद्धिः। व्याप्यवृत्तिभावाभावयोर्विरोधपरित्यागस्यैतदनुमानबलादेव स्वीकारापेक्षयाऽधिकरणतासामान्ये किंचिन्निरूपितत्वनियमपरित्यागस्यैवाव्याहतत्वेनोचितत्वात् । निष्प्रपंचब्रह्मासिद्धेस्त्वन्मतेऽप्ययोगस्योपपादितत्वाद्विति चतुर्थमपि लक्षणमसदेवेति । यदपि सद्विविक्तत्वरूपं पंचमलक्षणं तच्च दोषासहकृतप्रमाणविषयभिन्नत्वं दोषस्याननुगतत्वात्तन्निवेशासंभवे स्वभिन्नविषयकाज्ञानप्रयुक्तधीविषयत्वं विशिष्टलक्षणं पर्यवसितं । स्वविषयकाज्ञानप्रयुक्तधीविषयत्वं वा तेन शुद्धब्रह्मण इदं रजतं न सदित्यादि सोपाधिकभ्रमेषु नञर्थप्रतियोगितया विषयत्वेऽपि न क्षतिः। ततः ज्ञानस्य शुक्त्यज्ञानस्यापि चिद्विषयकत्वात् । शुद्धब्रह्मणो वृत्तिव्याप्यत्वमत एवेदं लक्षणमतो न धीविषयत्वांशातिरिक्तवैयर्थ्यमिति तदप्यसत् । अनाद्यविद्योपहितचिद्रूपसाक्षिवेद्याविद्यायामव्याप्तेः । अनादिसाधारणप्रयोज्यत्वानिवेशे च शुक्त्यज्ञानप्रयुक्तरजतज्ञानात्प्रवृत्त्यनंतरं मार्गे कस्याचिदिष्टानिष्टयोर्ग्रहे शुक्त्यज्ञानादिदं ज्ञानात्सर्वमिदमुत्पन्नमभूदिति प्रतीत्या तत्प्रयोज्यत्वानपायात्तद्विषयातिव्याप्तेः। न चाविद्यादौ तादृशशाब्दभ्रमादिकमादाय लक्षणसंभव इति वाच्यं । स्वाविषयकाज्ञानप्रयुक्तधीविषयत्वस्य भूतलवृत्ति इदं रजतमिति प्रतीतिमादाय भूतलेदंत्वशौक्ल्यादावपि सत्वान्मिथ्यात्वव्यवहारापत्तिः। किंच मन्मते मूलाज्ञानाद्यप्रसिद्ध्या अज्ञानसामान्यस्य च सविषयकत्वानंगीकारेण चाज्ञानत्वजातिपुरस्कारेण निवेशे दृष्टांते साध्यवैकल्यं । तादृशजात्यप्रसिद्ध्या साध्याप्रसिद्धिश्च ।

(टीका) एवं सामान्यतोऽनुमानानि निरस्य विशेषतो निराचिकीर्षुर्दृश्यत्वानुमानस्य तावद्दोषांतरमाह ।

(मूलं) आत्मनोपि दृश्यत्वादनैकांतिकता च ॥ ४७ ॥

(टीका) शुक्तिरजतादेः सपक्षस्येव विपक्षस्यात्मनोऽपि दृश्यत्वादनैकांतिकता । साध्यमिथ्यात्वसंबंधानियमाभावश्च दृश्यत्वस्य भवति । अनैकांतिकश्चोर्ध्वतादिवत्संदेहहेतुत्वान्न साध्यं साधयति । नन्वात्मनो दृश्यत्वमेव कुत इति चेत् न । 'आत्मा वा अरे द्रष्टव्यः' । 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया' इत्यादिश्रुतेः । विपक्षे बाधकं चाह ।

(मूलं) न चात्मनो दृक्कर्मत्वं विना तद्ज्ञानत्वं ॥४८॥

(टीका) तद्ज्ञा (नत्वेऽ) नाभिमतस्येति शेषः। भवतीति वक्ष्यमाणेन संबंधः। प्रकृतत्वाद्दृश्यत्वमिति वक्तव्ये दृक्कर्मत्वमिति दृश्यत्वव्याख्यानमतिप्रसंगस्फुटीकरणार्थं तदयमर्थः । यद्यात्मनो दृश्यत्वं न स्यात् तदा वेदांतवाक्यजनितविज्ञानस्यात्मज्ञानत्वं न स्यात् । दृशंप्रति कर्मत्वं हि दृश्यत्वं । आत्मकर्मकं ज्ञानमेवात्मज्ञानं ।

---

ज्ञानविरोधित्वेन निवेशे प्रागभावादिकमादाय सिद्धसाधनं । मूलप्रकृतेरेव निर्विषयतयोपादानकारणतामादाय अर्थांतरं दोषविधया कारणतामादाय पर्यवसाने बीजाभावात् । तुच्छं शशविषाणं घटकालीनमिति भ्रमविषयतामादाय तुच्छेऽति व्याप्तिस्तत्कारणाज्ञानस्य तुच्छविषयकत्वात् । अज्ञानप्रयोज्यविषयतां निवेश्यारोपित एव तत्सत्तामंगीकृत्याऽतिव्याप्तिपरिहारे ब्रह्मण्यतिव्याप्तिवारणाय स्वाविषयकेत्यस्य वैयर्थ्यं तन्नियमस्याप्रामाणिकता च। अज्ञानवशादेव शुक्तिभ्रमविषयोऽभूदिति प्रतीत्या शुक्त्यादिनिष्ठविषयतानामप्यज्ञानप्रयोज्यत्वानुभवात् । यत्तु यथाश्रुतप्रमाणसिद्धभिन्नत्वलक्षणेऽवांतरवाक्यादिना प्रत्यक्षादिना च ज्ञातब्रह्ममात्रविषयत्वाद्वेदांतवाक्यजन्यं नानधिगतार्थविषयकं चिदनृतव्यावृत्त्यादिविशिष्टब्रह्मज्ञानं च बाधितार्थविषयकत्वान्न प्रमाणमिति लक्षणे सर्वांशे प्रमानिवेशेऽप्रसिद्धिः। किंचिदंशे प्रमानिवेशे जगन्न सदित्यादिसदंशप्रमात्मकज्ञानविषयत्वाद्भेदसाधने बाध इति दोषपरिहाराय जीवत्वब्रह्मत्वनिरूपिताज्ञानविषयत्वस्य स्वप्रकाशब्रह्मण्यपि स्वीकारात् । तन्निवर्तकं तत्वमस्यादिवाक्योत्थज्ञानमज्ञाननिवर्तकत्वरूपानधिगतार्थविषयकमेवेत्यभिधानं तत्वखंडार्थविचारावसरे तस्य निरासिष्यमाणत्वादनुपादेयमेवमन्येषामपि पराभिमतपरिष्कारप्रकाराणां निरासः सुधीभिरनुसंधेय इत्युपरम्यते । दृश्यत्वानुमानस्येति । दृश्यत्वरूपलिंगस्येत्यर्थः । तावदिति । जडत्वादिकं क्रमानुसारेण निरासिष्यत इति भावः । साध्यमिथ्यात्वेत्यादि । इदमेकमेवांतिके यस्यासावेकांतिकः न एकांतिकोऽनेकांतिकः तस्य भावोऽनेकांतिकतेति व्युत्पत्तिलब्धार्थप्रदर्शनपरमिति ज्ञातव्यं । मतविशेषसिद्धदूषकताबीजं दर्शयति । अनेकांतिकश्चेति । दृशं प्रति कर्मत्वं हि दृश्यत्वमिति । यत्प्रत्ययस्य कर्मत्वार्थकत्वादिति भावः। आत्मकर्मकमेव।

(टीका) तथाच आत्मनो दृश्यत्वाभावे कथमात्मज्ञानं संभवेत् । अकर्मणः कर्मतया ज्ञानव्यावर्तकत्वे व्याघातात् ॥ आत्मज्ञानाभावे किं बाधकमित्यत आह ।

(मूलं) तदज्ञाननिवृत्तिश्च तेन भवति ॥ ४९ ॥

(टीका) नेत्यनुवर्तते । अतिप्रसंगसमुच्चये चशब्दः । यदा वेदांतजनितविज्ञानमात्मज्ञानं न स्यात् तदात्माज्ञाननिवृत्तिस्तेन न स्यात् । तदज्ञानेनैव तदज्ञाननिवृत्तिदर्शनात् । तथाच वेदांतानां वैय्यर्थ्यं स्यात् । अथवाऽऽत्मनो दृक्कर्मत्वानंगीकारेऽतिप्रसंगांतरमेतत् । तथाहि । यद्यात्मनो दृक्कर्मत्वं न स्यात्तदा तदज्ञानं नाम न स्यात् । सति पुष्कलकारणे तत्कर्मकज्ञानप्रतिबंधकं हि तदज्ञानं ।

---

चेति । प्रकारांतराणां निरसिष्यमाणत्वादिति भावः । आत्मज्ञानमिति । मुक्तिहेतुत्वेन त्वदभिमतमात्मज्ञानमित्यर्थः अतिप्रसंगसमुच्चय इति । पूर्वमूलेऽनुवर्तमानमेतन्मूले च भवतीत्येतस्यादिति एतत्समानार्थकमव्ययं । तथाच पूर्वातिप्रसंगेनास्यातिप्रसंगस्य समुच्चये चशब्द इत्यर्थः । अथवेति । एतन्मूलं पूर्वमूलोक्तातिप्रसंगे इष्टापत्तिपरिहारकातिप्रसंगांतरपरतयैव न व्याख्यायते । किंतु तत्समकक्षातिप्रसंगांतरपरतयैव व्याख्यास्यत इति भावः । सति पुष्कल इति । ज्ञानोत्पादकसामग्रीसत्यामित्यर्थः । प्रतिबंधकं तन्निष्ठकार्यानुकूलशक्तिविघटकं परस्यापि मते प्रतिबंधकाभावस्य कारणत्वानंगीकारादिति भावः । अत्र तदनुकूलशक्तिविघटकत्वमेव तत्प्रतिबंधकत्वं । पुष्कलकारणोक्तिस्तु तदनुमापकतया । अन्यथैककारणकाले कार्यानुत्पत्तेः कारणांतरविरहादपि संभवेन तदसिद्धेः । ननु तत्कर्मकज्ञानप्रतिबंधकस्य तदज्ञानरूपत्वे तन्निवृत्तिः कदापि न स्यात् । ज्ञानेन ह्यज्ञानस्य निवृत्तिर्वाच्या । तत्सद्भावे च ज्ञानोत्पत्तिरेव न घटते । प्रतिबंधककाले कार्योत्पत्तेरेवायोगादिति चेन्न । सामान्यतज्ज्ञानसामग्रीविघटकत्वेपि विशेषदर्शनादिकारणविशेषाधीनज्ञानविशेषे तादृशाज्ञाननिवर्तकशक्त्यभ्युपगमात् । तादृशज्ञानसामग्रीवृत्तिशक्तिविघटकत्वस्य तत्रानभ्युपगमात् । नच तस्यापि तदज्ञानत्वाविशेषे तदप्रतिबंधकत्वे बीजाभावः । सिद्धेः प्रत्यक्षसमानविषयकानुमितिप्रतिबंधकत्वेपि तत्समानविषयकप्रत्यक्षोपनीतभानाद्यविरोधित्वदर्शनात् । नच वेदांतवाक्यश्रवणादितः प्रागात्मज्ञानमुत्पन्नं चेदज्ञानस्य भवदुक्तप्रतिबंधकत्वायोगः । इदानीमपि तस्यानुत्पन्नत्वे तत्सामग्र्या एवाक्लृप्ततया तन्निष्ठशक्तिविघटकत्वादिरूपप्रतिबंधकत्वं कुतो ज्ञानस्य वक्तव्यं । शुक्त्यज्ञानादिस्थलेप्येवमेवेति असंभवीदं लक्षणमिति वाच्यं । यज्जातीयस्थलांतरे यादृशसामग्रीसमवधाने सति यादृशकार्यं जायते तज्जातीयनिखिलकारणसमवधानसत्वेऽपि प्रकृते तादृशज्ञानरूपकार्यानुत्पत्तौ तन्निष्ठशक्तिविघटकं किंचित्कल्प्यते । यथा शुक्त्यंतरे शुक्तित्वप्रकारकज्ञानं केवलचक्षुःसंयोगालोकसंयोगादिभिरेव विशेषदर्शनानपेक्षैर्जायते । तैरेवैतच्छुक्तिस्थलेपि शुक्तित्वप्रकारकज्ञानानुदये तच्छुक्तिविघटकं किंचित्कल्पनीयं । विशेषदर्शनादिसाहित्ये च क्लृप्तसामग्रीशक्तौ कुंठिभावलक्षणावस्था विशेषस्याभ्युपगमात् । पुनरुद्बोधेन बुध्या शुक्तित्वप्रकारकज्ञानोत्पत्त्या तदज्ञाननिवृत्तिर्जायते । नच तत्र विशेषदर्शनस्य सामग्रीघटकता मणिस्थलीयदाहे औषध्यादीनां सामग्रीघटकत्वापत्तेः । न चोक्त-

( टीका ) संबंधांतराऽनिरूपणात्।

जकानां तत्स्थलीयदाहं प्रत्येवं कारणत्वं कल्प्यते । तन्निष्ठशक्तिकुंठीभावनिवर्तकत्वं वा कल्प्यत इत्यत्र विनिगमकाभाव इति वाच्यं । तस्य दाहं प्रत्येव कारणत्वकल्पने दाहे तत्कार्यतावच्छेदकतया नानावैजात्यकल्पनापत्तेः उत्तेजकानामननुगतत्वात् । अन्यथा दाहसामान्यकारणकोटौ निवेशे व्यतिरेकव्यभिचारापत्तेः नच कुंठीभावनिवृत्तिकारणतायामपि व्यभिचारवारणाय तत्र वैजात्यं त्वयापि कल्पनीयमिति साम्यमिति वाच्यं । तस्य तवाप्यावश्यकत्वात् । अन्यथोत्तेजकद्वितीयादिक्षणे वन्ह्यादिरूपक्लृप्तकारणस्यापगमेऽपि दाहधारापत्तेः । त्वन्मते विजातीयदाहसामग्रीशरीरे वन्हेरनिविष्टत्वात् । नच यच्छुक्तिज्ञानं पूर्वं जातं तस्या एव शुक्तेः कालांतरे इदंत्वेन ज्ञानमात्राद्रजतत्वेन भ्रमः । तत्र तदज्ञानस्य तच्छुक्तिप्रथमज्ञानप्रतिबंधकत्वापत्तिः । न चेद्द्वितीयज्ञानप्रतिबंधकत्वानुपपत्तिः । अज्ञानस्यानादित्वेन प्रथमज्ञानप्राक्काले नास्ति द्वितीयज्ञान प्राक्काले उत्पन्नमिति वक्तुमशक्यत्वादिति वाच्यं । तदज्ञाने तत्कालीनसामग्रीनिविष्टशक्तिविघटकताया एवानुभवानुसारेण स्वीकारात् । एवं घटादीनामपरोक्षत्वादिंद्रियसंनिकृष्टघटादिबोधकवाक्येन तद्विषयकापरोक्षज्ञानं जायते । तथाचापरोक्षत्वमात्रेण ब्रह्मसजातीय स्थले क्लृप्तपदपदार्थोपस्थित्यादिजातीयैः पदार्थोपस्थितितात्पर्यज्ञानादिसमुदायैर्ब्रह्मापरोक्षमिदानीं न जायते । मनननिदिध्यासनादिसहकृततत्वमस्यादिवाक्येन जायत इति मते पूर्वं तत्वमस्यादिवाक्ये ब्रह्मापरोक्षशक्तिविघटकत्वमज्ञाने स्वीक्रियते । मनननिदिध्यासनाभ्यामुत्तेजकीभूताभ्यां तन्निष्ठशक्त्युद्बोधे तदपरोक्षं न जायते । अत एव मनननिदिध्यासनयोः श्रवणांगत्वं । ततस्तदज्ञाननिवृत्तिरित्यभ्युपगमेऽज्ञानप्रतिबंधकतापक्षस्य क्षोदसहत्वात् । यद्यपि ज्ञानस्याज्ञानसमानकालिकत्वाभावः परेषां परमः सिध्दांतस्तथापि ज्ञानस्याज्ञाननाशकत्वस्यापि परैर्व्यवहृतत्वात् । तन्मते तयोर्मेलनस्य क्षणमात्रकाले ऽवश्यंभावमंगीकृत्य ज्ञानस्य तन्निवर्तकत्वोक्तिः । यद्यपीदं प्रतिबंधकत्वं न परसंमतं तथापि प्रकारांतरासंभवात्तस्याज्ञानमिति व्यवहारे उक्तरीत्या कथंचित् प्रतिबंधकतामुपपाद्य स एव षष्ठ्यर्थसंबंधघटको वक्तव्य इति प्रसाध्य तत्कर्मकज्ञानानंगीकारे तस्याप्यनुपपत्तिरिति दूषणे तात्पर्यं । अत एवोक्तप्रतिबंधकतोपपादनरीतिसूचनायात्मनो ज्ञानविषयत्वप्रतिपादकश्रुतिमात्रं विहायापरोक्षज्ञानविषयताप्रदर्शकश्रुत्युदाहरणं कृतमिति प्रतिभाति । यत्तु तत्कर्मकज्ञानप्रतिबंधकमित्यस्य तत्कर्मकज्ञाननिवर्त्यत्वरूपविरोधविशिष्टमित्येवार्थोऽतः प्रतिबंधकत्वाद्युपपत्तये नोक्तश्रमः सफल इति तन्न । सति पुष्कलकारण इत्यस्य वैयर्थ्यापत्तेः । नच सति पुष्कलकारणे जायमानं तत्कर्मकज्ञानमित्यर्थः । नित्यस्वरूपभूतज्ञानस्याज्ञानाविरोधितया तद्व्यावर्तनायेदमिति वाच्यं । घटादिकर्मकत्वस्य स्वकर्मकत्वस्य परैरनंगीकृतत्वेन तेनैव तद्व्यावृत्तेः । पुष्कलपदानर्थक्याच्च । जन्येत्युक्तिमात्रेण संभवे एतावदुक्तेरसंगतेश्च । व्याप्यव्यापकभावादेरबोधनेन नित्यज्ञानसंग्रहेऽपि व्यभिचाराद्यप्रसक्त्या तत्कर्मकज्ञानत्वेन जन्यज्ञानमादायैवाज्ञानस्य त्वदुक्तप्रतिबंधकत्वस्य वक्तुं शक्यत्वेन कारणेत्यंतस्य कथमपि सार्थकीकरणायोगाच्च । ननु संबंधांतरस्यापि संभवादयमेव संबंधः कुत आदरणीय इत्यत आह । संबंधांतरेति । आनिरूपणात् मां प्रति त्वया निरूपयितुमशक्यत्वादित्यर्थः। संयोगसमवाययोस्त्वयाऽनंगीकारादंगीकारे साक्षात्संबंधेनैव विषयस्याज्ञानाश्रयत्वप्राप्त्या घटो ज्ञः अज्ञाज्ञमित्यादिव्यवहारप्रसंगः। चैत्रो ज्ञ इत्यादिवाक्यप्रामाण्याद्यनु-

(टीका) आत्माज्ञानाभावे च तन्निवृत्तिलक्षणमोक्षश्च न स्यात्। इति शास्त्रवैयर्थ्यं स्यादिति। नन्वात्मनो दृक्कर्मत्वाभावेऽपि वेदांतवाक्यजनितज्ञानस्याकारसमर्पकतया व्यावर्तकत्वमंगीक्रियत एव। अतः आत्मकर्मकत्वाभावेप्यात्माकारं वेदांतवाक्यजनितविज्ञानं भविष्यति। तेन न कोप्यतिप्रसंगः। द्रष्टव्यः इत्यादिश्रुतयश्च तत्परत (यैवोप) योपपत्स्यंते। नचात्मकर्मत्वेन विनात्माकारत्वं विज्ञानस्य कथमिति वाच्यं। यथा खलु शशविषाणशब्दात्तदाकारं विज्ञानमुत्पद्यते। नच शशविषाणस्य कर्मता संभवति। सकलसामर्थ्यविधुरस्य कारकताया एव दुर्लभत्वात्। तदिहापि वेदांतवाक्यसामर्थ्यादनात्मकर्मकमपि विज्ञानमात्माकारमुत्पत्स्यते। को दोष इत्यह आह।

(मूलं) न च तदाकारं ॥ ५० ॥

(टीका) आत्मनो दृक्कर्मत्वं विनेत्यनुवर्तते। स्यादेवं। यदि तदाकारं ज्ञानमुत्पद्येत। न चात्मनो दृक्कर्मत्वं विनात्माकारं ज्ञानमुत्पद्यते। कुत इत्यत आह।

(मूलं) अतद्विषयत्वादेव ॥ ५१ ॥

(टीका) यथाऽनात्मविषयत्वाद्वेदांतवाक्यजनितविज्ञानमात्मज्ञानं न भवतीत्युक्तं। तथा तत एव तदात्माकारमपि न भवतीत्येवकारसंबंधः। अनात्मविषयमपि तदात्माकारं कुतो न स्यादित्यत आह।

(मूलं) तद्विषयत्वमेव हि तदाकारत्वं ॥ ५२ ॥

(टीका) हि शब्दो हेतौ। यस्मात्तद्विषयत्वमेव तदाकारत्वं ज्ञानस्य नान्यत्। तस्मादात्मविषयत्वाभावादात्माकारमपि तन्न भवति। व्याघातादिति। कुतस्तद्विषयत्वमेव तदाकारत्वमिति चेत्। परिशेषात्।

---

पपत्तिः। विषयविषयिभावादौ मानाभावः। तत्रास्याज्ञानमित्यादौ सप्तम्यर्थविषयत्वस्य ज्ञान एवान्वयात्। नच विनिगमकाभावान्नञर्थाज्ञान एवान्वयोऽस्त्विति वाच्यं। घटं न जानातीत्यादौ द्वितीयार्थभूतविषयत्वस्य नञर्थ एवान्वये धात्वर्थानन्वयेन कर्मार्थकद्वितीयानुपपत्तिप्रसंगेन ज्ञानान्वयस्यैव क्लृप्तत्वात्। स्वरूपसंबंधस्वीकारेपि घटो ज्ञ इति प्रतीतिर्दुर्वारैव। साक्षात्संबंधस्यैव सत्वात्। आध्यासिकसंबंधांगीकारे इदमवच्छिन्नचित्यध्यस्तरजतादाविदं रजतमित्यादिव्यवहारवदिदमाद्यवच्छिन्नचित्येवाज्ञानाध्यासे इदमज्ञानमिति चिदज्ञानमिति च प्रतीतिप्रामाण्यापत्तिरिति भावः। आत्मा ज्ञानमेव माऽस्तु येन तत्रात्मसंबंधघटकतयाऽऽत्मज्ञानं सिध्येदित्यत आह। आत्मज्ञानेति। निवृत्तिर्ध्वंसः। दृक्कर्मत्वमेव हेतुत्वेनाभिमतं तच्च नात्मनीत्याशयेन तदुपपादयति। नन्वित्यादिना। अनात्मकर्मकमपीति। आत्माकर्मकमपीत्यर्थः। अनात्मविषयत्वादिति। आत्माविषयकत्वात्।

(टीका) तथाहि। तदाकार एवाकारो यस्येति वा, तदाकार इवाकारो यस्येति वा, स आकारो यस्येति वा तदाकार विज्ञानमित्यभिधातव्यं। प्रकारांतरासंभवात्। तत्र तावत्प्रथमद्वितीयपक्षावनुपपन्नावित्याह।

(मूलं) नहि ज्ञानज्ञेययोरेकाकारता ॥ ५३ ॥

(टीका) सति हि ज्ञानज्ञेययोरेकाकारत्वे तदाकार एवाकारो यस्येति संभवेत्। न चैतदस्ति। अनुपलंभात्। एकैव सत्ता ज्ञानज्ञेययोराकारोस्तीति चेन्न। अनुगतसत्ताया अनंगीकारात्। सत्तैकाकारत्वे च वेदांतवाक्यजनितविज्ञानमात्माकारमेव कुतः। घटाकारमपि तत्स्यात्। नापि परेणात्मनि सत्तानामाकारोऽगीक्रियते। निराकारतांगीकारादिति। एवं नहि ज्ञान-ज्ञेययोरेकाकारता सदृशाकारतास्ति। येन तदाकार इवाकारो यस्येत्युपपद्येत। अत्यंतसादृश्यस्यानुभवबाधितत्वात्। किंचित्सादृश्यस्य प्रागेवातिप्रसंजकत्वादिति योज्यं। तृतीयेपि पक्षे न तावत्साक्षाज्ज्ञेयं ज्ञानस्याकारः संभवति। आधाराधेयभावाभावात्। अतःप्रकारांतरासंभवे परिशेषाद्विषयतया व्यावर्तकत्वेन स आकार इव यस्य तत्तदाकारमिति वक्तव्यं। तथाच तद्विषयत्वमेव तदाकारत्वं संपद्यते। ततश्च वेदांतवाक्यजनितं विज्ञानमात्मविषयं न चेत्तदा तदाकारमपि न भवेदिति युक्तमेवेति।

---

एवमुत्तरत्रापि। तदाकारं त्विति। तदाकारत्वपदाधीनप्रमितिविषय इत्यर्थः। इतीति। इति व्युत्पत्त्येत्यर्थः। अभिधातव्यं निरूपणीयं। तावदिति। तृतीयपक्षस्य सर्वथा दूष्यत्वाभावादिवार्थमंतर्भाव्य तस्यैवांगीकारात्तावदित्युक्तं। ननु मूलकारैस्तृतीयपक्षदूषणस्योत्तरत्राकृतत्वात्कथं तावदित्युक्तिरिति चेत् न। ज्ञानज्ञेययोरिति निर्धारणसप्तमी ज्ञेयस्येति योग्यतया संबंधः। एकपदं मुख्यार्थकं। तथाच ज्ञानज्ञेययोर्मध्ये ज्ञेयस्य ज्ञानमुख्याकारता नेत्यभिप्रायकतयोत्तरत्र तृतीयपक्षेत्यादिना स्वयमधृत्वा व्याख्यास्यमानत्वेन तदभिप्रायकतया तावदित्युक्तिसंभवात्। प्रथमकल्पे यावदाकारो वा यत्किंचिदाकारो वेति विकल्पं हृदि निधायाद्यं दूषयति। सति हीति। अनुपलंभादिति। ज्ञाने घटत्वादिसत्ताया अनुभवबाधितत्वादित्यर्थः। द्वितीयं शंकते। एकैवेति। आत्मनो निराकारत्वेनैव द्विती * यस्यापि पक्षस्य दूषितप्रायत्वेपि घटादिज्ञानसाधारण्येन दूषणांतरं वक्तुं मूलं प्रकारांतरेण योजयति। एवमिति। इति वक्तव्यमिति। एकपदस्य मुख्यार्थत्वमादृत्य मुख्याकारत्वे निराकृतेऽमुख्याकारत्वं व्यंजनया लभ्यत इति भावः।

टिप्पणी— * टीकायां विकल्पितस्येति ज्ञेयं

(टीका) यदि तर्हि तद्विषयत्वमेव तदाकारत्वमतद्विषयत्वात्तदाकारं नेति व्याप्य-व्यापकयोरभेदापत्तिरित्येतदप्यनेन निरस्तं । नहि तदाकारत्वं तद्विषयत्वमिति पर्यायावेतौ । किंनाम सामान्य-विशेष वचनौ । परिशेषसिद्धं तु पर्यवसानमभिप्रेत्य तद्विषयत्वमेव तदाकारत्वमित्युक्तमिति । नन्वात्मनो दृक्कर्मत्वाभावे वेदांतवाक्यजनितविज्ञानस्यात्माकारत्वं नोपपद्यत इति प्रतिज्ञाया तत्कर्मत्वादेवेति हेत्वभिधानं तत्कर्मत्वमेव हि तदाकारत्वमित्युपपादनं चोचितं । अतद्विषयत्वादेवेत्यादितु केन संगच्छते । मैवं । शशविषाणशब्दात्तदाकारं ज्ञानमुपजायत इति तावत्साक्षिसिद्धं । नतु तत्सकर्मकं । तथा वेदांतवाक्यजनितं विज्ञानमनात्मकर्मकमप्यात्माकारं किं न स्यादित्येतदाशंकानिवृत्तये ज्ञानं प्रति कर्मत्व-विषयत्वयोर्विशेषाभावसूचनाय कर्मोपक्रमेण विषयव्यवहारस्य सार्थकत्वात् । तथाहि शशविषाणशब्दादुपजायमानं ज्ञानं सविषयं निर्विषयं वा । निर्विषयत्वे ज्ञान मेव न स्यात् घटवत् । सविषयत्वे कथमकर्मकं स्यात् । विषयस्यैव कर्मत्वात् । अथ कथं शशविषाणस्य सकलसामर्थ्यविकलस्य कर्मत्वमिति चेत् । विषयत्वमपि कथं । न । विषयत्वं नाम वस्तुसामर्थ्यं किं नाम कारणसामर्थ्याद्यदुल्लेखि ज्ञानमुपजायते । स विषय इत्युच्यत इति चेत् । अथ ज्ञानंप्रति कर्मत्वमपि किमाधिकं पश्यसि । जनकत्वमिति चेन्न । ज्ञानं प्रत्यर्थस्य क्वापि जनकतासंमतेः ।

---

अनेनेति । अवयवव्युत्पत्तिलभ्यार्थांतरानिराकरणपूर्वकं तत्र परिशेषकथनद्वारा तदाकारत्वपदजन्यप्रमितिविषयत्वरूपसामान्यसूचनेनेत्यर्थः । तथाच तद्विषयकत्वाभावात्तदाकारत्वपदजन्यप्रमितिविषयाभाववानिति हेतुहेतुमद्भावो बोध्य इति भावः। केन संगच्छत इति। कर्मत्वविषयत्वयोर्भेदादिति भावः । सकलसामर्थ्यविकलस्येति । सामर्थ्यस्य कारणत्वरूपस्य कालसंबंधव्याप्यत्वादिति भावः । यदुल्लेखि । यद्व्यवहारादिप्रयोजकशक्तिरूपविषयताशालि । स इति । तादृशविषयतानिरूपक इत्यर्थः । ज्ञानं प्रतीति । गत्यादिनिरूपितकर्मत्वस्य संयोगाश्रयत्वरूपत्वादेवमुक्तं । जनकत्वमिति । जनकत्वसमानाधिकरणमेव तादृशविषयतानिरूपकत्वमित्यर्थः । कर्मत्वस्य कारकत्वव्याप्यत्वाकारकत्वस्य क्रियाजनकत्वरूपत्वादित्याशयः । असंमतेरिति । विषयसत्वेनेत्यादिः । तेन चैत्र ईश्वरं वा स्वमात्मानं वा जानातीत्यादौ विषयस्य कारणत्वेऽपि न क्षतिः । तादृशकारणत्वमेव सार्वत्रिकत्वाद्वक्तव्यमिति भावः । तथाच यत्क्रियास्थले यादृशकर्म प्रसिद्ध्यति अधिकरणादिकं च प्रसित्स्यति तत्र तावदन्यतमत्वमेव तत्क्रियाकारकत्वं क्रियाजनकत्वं तु प्रायिकं । अन्यथा ईश्वरो घटं जानात्यसतीत्यादिस्थले तदीयज्ञानसत्वयोर्नित्यत्वेन घटेश्वरयोः कर्मकर्तृकारकत्वानुपपत्तिरिति भावः । ननु विषयस्य प्रत्यक्षान्वयिव्यतिरेकित्वेन तत्कारणत्वावधृत्या कारणत्वग्रहः

(टीका) अपरोक्षज्ञानेपि कर्मणो न ज्ञानोत्पत्तौ व्यापारः। केवलं करणसन्निकर्षनिष्पत्तावेव तत्सत्तोपयुज्यते। यत्र तु शाब्दादौ ज्ञाने विनापि विषयसत्वेन करणसन्निकर्षोत्पत्तिस्तत्रासतोपि कर्मत्वे किमनुपपन्नं।

---

सामान्यत एव विषयत्वेन जन्यज्ञानत्वेन जायते। यद्विशेषयोरिति न्यायादित्यतः तमेवादौ वस्तुस्थितिमनुरुध्य दूषयति। अपरोक्षज्ञानेपीति। ज्ञानोत्पत्तौ व्यापार इति। न ज्ञानोपधायककोटौ निवेश इत्यर्थः। सन्निकर्षनिवेशस्यावश्यकत्वेन नास्यान्यथासिध्दत्वादिति भावः। ननु तर्हीन्द्रियाणामप्यन्यथासिध्यापत्तिरुक्तरीत्या। यदि च स्वतंत्रान्वयव्यतिरेकशालित्वेनावधृतकारणताकत्वात्तन्निर्वाहायैव सन्निकर्षकारणत्वस्य कल्पनेन न तस्यान्यथा सिध्दिरुपजीव्याविरोधादिति ब्रूषे विषयस्यापि तथात्वमेवास्तु वैषम्यस्योपपादयितुमशक्यत्वादिति चेन्न। ज्ञानत्वेन प्रत्यक्षजातीयानुमित्यादिस्थले विषयं विनाप्यतीतादिविषयकानुमित्याद्युत्पत्तिदर्शनात्। कारणीभूतलिंगज्ञानपरामर्शरूपव्यापारादिकं विना तदुत्पत्त्यदर्शनात्। करणव्यापारादीनामवश्यक्लृप्तत्वेन तज्जातीयप्रत्यक्षेऽपि तथैव कार्यसंभवे तत्सहभूतविषयस्यान्यथासिध्दताया एवोचितत्वात्। अन्यथा चाक्षुषप्रत्यक्षमात्रेऽनेकद्रव्यत्वस्य (द्रव्य) समवेतद्रव्यसमवेतत्वरूपस्य कारणत्वापत्तेः। गौरवात्तस्य कारणत्वानंगीकारेऽत्रापि तथास्तु। विषयत्वमात्रं प्रत्यक्षाकारणेषु ज्ञानलक्षणादिना भासमानेषु तदिंद्रियायोग्यातींद्रियनष्टविषयादिष्वातिप्रसक्तं। विषयतात्वव्याप्यो लौकिकत्वाख्यधर्मश्चेदपि स एव दोषस्तदिंद्रियायोग्येपींद्रियांतरयोग्ये नष्टे वा लौकिकविषयत्वानपायेन तत्तत्प्रत्यक्षे तेषां तेषां विषयानां कारणत्वापत्तेः। तत्तत्प्रत्यक्षं प्रति तदीयलौकिकविषयत्वावाच्छिन्नस्य कारणत्वमिति विशेषकार्यकारणभावांगीकारे यत्र दोषविशेषबलेन नष्टपदार्थभानं तत्र तन्साक्षात्करोमीति प्रत्ययानुरोधेन लौकिकविषयत्वावश्यकत्वाद्व्यभिचारः। एतेन घटवृत्तिलौकिकविषयतासंबंधेन प्रत्यक्षे घटत्वेन हेतुत्वपक्षोऽपि परास्तः। उक्तस्थल एव व्यभिचारात्। तत्तद्दोषाप्रयोज्यलौकिकविषयत्वाधिकरणत्वस्य कार्यतावच्छेदकत्वे गौरवं। इंद्रियसंनिकर्षकार्यतावच्छेदककोटौ तन्निवेशस्तूभयसम्मतः। घटत्वपटत्वादिनानाधर्माणां कारणतावच्छेदकत्वे गौरवं। एवं तादात्म्यत्वस्य तद्वृत्त्यसाधारणधर्मत्वरूपस्य कारणतावच्छेदकसंसर्गतावच्छेदकत्वे च गौरवं। एवं विनश्यदवस्थापन्नघटादिविषयस्थले घटलौकिकचाक्षुषवारणाय विषयकारणत्ववादिना तस्य कार्यकालवृत्तित्वेन कारणत्वांगीकारे सुखादिसाविकल्पकेषु तदभावाद्व्यभिचारः। तस्य पूर्वकालमात्रवृत्तित्वमात्रेण कारणत्वांगीकारे वैरूप्यात्पुनर्गौरवमेवेति दिक्। नन्वस्तु फलीभूतज्ञाने संनिकर्षेण विषयस्याऽन्यथा सिद्धत्वं विषयकारणयोः सन्निकर्षार्थमपि विषयसत्तापेक्षायामपि कथमसतो विषयत्वरूपकर्मत्वमित्यत आह। यत्र त्विति। शाब्दादाविति। सप्तम्यर्थनिरूपितत्वं करणत्वेऽन्वेति। तथाच शब्दज्ञानलिंगज्ञानयोरेव कारणत्वात् तत्संनिकर्षस्य तत्र व्यापकतया तदीयवृत्तिमत्वेन भासमानत्वरूपत्वात्तस्य च तज्ज्ञानकालेऽविद्यमानयोरतीतानागतयोरिव सर्वथाऽविद्यमानस्यासतोऽपि संभवेन न किंचिदपि बाधकं। असतः प्रतीतिस्तु पूर्वं निपुणतरमुपपादितेति भावः। गत्यादिस्थले यादृशं तादृशमेव ज्ञानकर्मत्वमपीत्याशयेन शंकते।

( टीका ) ननु कर्तुरन्यत्वे सति क्रियाजन्यफलाश्रयत्वं कर्मत्वं । यथा गतिजन्यसंयोगाश्रयत्वं ग्रामस्य। नच शशविषाणदीनां ज्ञानजन्यफलाश्रयत्वमिति कथं कर्मतेति चेन्न। तत्रापि ज्ञानेन शाब्दव्यवहारजननात् । साक्षात्तदाश्रितं फलं नास्तीति चेत् । एवं तर्हि ज्ञानकर्ममात्रे तदभावेनाव्यापकं कर्मलक्षणं स्यात् । ज्ञाततायाश्चान्यत्र निराकृतत्वात् । एतेन आत्मनि प्रकाशरूपे ज्ञानजन्यप्रकाशोदयासंभवादात्मनो दृक्कर्मत्वं विना तद्ज्ञानत्वं न स्यादित्याद्यतिप्रसंगो विपर्ययापर्यवसायीत्येतदपि निरस्तं । किंच ज्ञानजन्यफलाश्रयत्वं चेज्ज्ञानकर्मत्वं तदा दृश्यत्वहेतुः प्रतिवादिनो सिद्धःस्यात् ।

---

नन्विति । संयोगस्योभयत्राप्युपपत्तेः कर्तर्यतिव्याप्तिवारणाय कर्तृभिन्नेति । फलसंबंधमात्रविवक्षायां प्रकृते न हानिः * साक्षात्संबंधस्तु ज्ञानस्थले सर्वत्रासंभवीत्याह । तत्रापीति । शब्दादीति । आदिना प्रवृत्त्यादिग्रहः। शब्दसंबंधश्च तज्जन्यशाब्दविषयत्वमेव। क्वचिच्छाब्दादीति पाठः । तत्रापि प्रथमज्ञानस्य शब्दप्रयोगद्वारा शाब्दज्ञानमपि फलं भवतीति तथोक्तिः। इदं तु तुष्यत्विति न्यायेनोक्तं । वस्तुतस्तु ज्ञानस्थले नैतत्संभवति । उदासीनारण्यस्थानेकपदार्थदर्शनस्थले केषुचित्प्रवृत्तिनिवृत्तिरागद्वेषव्यवहाररूपस्य कस्यापि फलस्यासंबंधत्वेनासार्वत्रिकत्वात्तान् जानाति चैत्र इति व्यवहारानुपपत्तेरिति अवधेयं । ननु ज्ञाततारूपफलं तत्रापि संभवतीत्यत आह । ज्ञाततया इति । अन्यत्रेति । न परिच्छेदककार्यैव प्रमाणमिति च। प्रमेत्यनेन भक्तिपादीयानुव्याख्यानेनेत्यर्थः। एतेनेति । साक्षात्फलाश्रयत्वघटितकर्मत्वस्य वक्तुमशक्यत्वेन परंपरया तत्संबंधस्य तद्घटकत्वोपपादनेनेत्यर्थः । प्रकाशोदयासंभवेनेति । वैयर्थ्यरूपयुक्तिपराहतत्वेनेत्यर्थः । घटादीनामप्रकाशात्मकानां दीपादिप्रकाशेन व्यवहारादिदर्शनेऽपि दीपस्य प्रकाशरूपस्य प्रकाशांतरसंबंधं विनाऽपि व्यवहारदर्शनेनात्मन्यपि तथैव संभवे घटादाविव तत्र प्रकाशोदये वैयर्थ्यादिति भावः । यद्वाऽनवस्थारूपयुक्तिपराहतत्वेनेत्यर्थः । प्रकाशेऽपि व्यवहारार्थं प्रकाशांतरांगीकारे तत्राप्येवं तत्राप्येवमित्यनवस्थेत्यर्थः । विपर्ययापर्यवसायीति । तत्र युक्तिबाधादितिभावः । इत्येतदपीति । कर्मत्वलक्षणे फलसंबंधः साक्षादेव निविष्टः निविष्टं फलं वा फलत्वेन निविष्टं किंतु ज्ञाततात्वप्रकाशत्वादिरूपेण हेतूकृतमपि तदैवेत्यभिप्रायेण यत्परेषां दूषणमित्यर्थः । निरस्तमिति । उक्तरीत्या निवेशे स्वरूपासिद्धिसाधनाप्रसिद्ध्याद्यापातेन फलत्वेनैव फलं निवेश्य साक्षात्परंपरासाधारणसंबंधमात्रं निवेश्यैव हेतूकर्तव्यतयात्मनि व्यवहारादिरूपफलस्य विषयत्वरूपसंबंधसत्वादित्यर्थः । प्रतिवादिन इति । ज्ञाततानिराकर्तुः तत्ववादिन इत्यर्थः । ज्ञाततायास्त्विति पंक्त्या कर्मलक्षणमेव निराकृतमतोऽस्य ततो भेदः । ज्ञाततात्वेन ज्ञानजन्यफलत्वेन वा निवेश्य साक्षात्संबंधमेवोपादाय ज्ञाततामादाय हेतूपपादनपक्षे च पूर्वं ज्ञाततानिराकरणस्यैव दोषतयाभिधाने ज्ञातताव्यवस्थापननिराकरणोपर्यैव भारः स्यादतः तदंगीकारपक्षेऽपि

---

* टिप्पणी—आधारतानियामकः ।

( टीका ) ज्ञाततांगीकारिभिरपि नित्यानुमेयेषु तदनंगीकाराद्भागासिद्धः स्यादिति । अथ मतं माभूद्वेदांतवाक्यजनितं विज्ञानमात्माकारतयात्मज्ञानं । तथाप्यात्माज्ञाननिवर्तकतयात्मसंबंधितया तद्ज्ञानं भविष्यति । किमात्मनो दृक्कर्मत्वेन । नचात्मनो दृक्कर्मत्वाभावेऽज्ञानस्यात्माज्ञानत्वमपि दुर्घटमित्युक्तमिति वाच्यं । आत्माश्रिताज्ञानमात्माज्ञानमित्यंगीकारात् । नच वक्तव्यं ज्ञातव्येनात्मना ज्ञानं व्यावर्तनीयं । नचाज्ञानं तमाश्रयते किंतु ज्ञातारमेव । वस्तुतो भेदाभावेपि ज्ञातृज्ञेय भावसिद्धये यादृशतादृशस्यापि भेदस्यांगीकृतत्वात् । अतः कथमात्माज्ञानं निवर्तयदपि ज्ञानमात्मज्ञानं स्यादिति । अज्ञानस्य ज्ञातव्यपरब्रह्माश्रयत्वोररीकरणादिति तत्राह ।

**( मूलं ] न ह्यज्ञानस्य घटाश्रयत्वं ब्रह्माश्रयत्वं वास्ति ॥ ५४ ॥**

( टीका ) हि शब्दो हेत्वर्थे । वा शब्द उपमायां । यथा खलु न घटाज्ञानस्य घटाश्रयत्वं एवमज्ञानत्वान्न ब्रह्माज्ञानस्यापि तदाश्रत्वमस्ति । अन्यथा घटाज्ञानस्यापि तदाश्रयत्वप्रसंगात् । यत एवं न ब्रह्माज्ञानं तदाश्रयं तस्मान्न तन्निवर्तयदपि ज्ञानं ब्रह्मज्ञानमिति । ननु घटाज्ञानमेव नास्ति । ज्ञानोत्पत्तेः प्राक्प्रमाणवैकल्यादेव ज्ञानाभावोपपत्तेः । उत्पन्ने तु ज्ञाने तत एव सुतराम् । अज्ञानकल्पकाभावात् । अतो यदज्ञानं न तद्विषयाश्रितमिति व्याप्तौ कथं घटाज्ञानं दृष्टांतीक्रियते । कस्य वा घटाश्रयत्वमापाद्यते । ब्रह्माणि तु स्वयंप्रकाशमानेऽपि तत्स्वरूपानवभासस्यानन्यनिमित्तत्वाद्भावरूपमज्ञानं कल्प्यत इति ।

---

दूषणमाह । ज्ञातेति । नित्यानुमेयेषु चक्षुरादिषु अतींद्रियाणां अतीतादीनांचोपलक्षकमेतत् । निवर्तकतया संबंधतयेति । निवर्तकत्वरूपसंबंधतयेत्यर्थः । तथाच वेदांत जनितविज्ञानाविषयत्वस्यात्मन्यभावेऽपि आत्मज्ञानमिति व्यवहारगोचरत्वं सर्वसिद्धं तस्य घटत इति भावः । आत्माश्रितामिति । जीवाश्रितत्वाभिमानेन शंकते । न चेति । आत्मना व्यावर्तनीयमिति । वेदांतजन्यज्ञाननिवर्त्याज्ञानं शुक्त्यादिज्ञाननिवर्तनीयाज्ञानाद्भिन्नत्वेन ज्ञापनीयमित्यर्थः । नचेति । तथा चेदानीमाश्रयाश्रयिभावेनैवाज्ञानं प्रति व्यावर्तकत्वं ज्ञातव्यात्मनो भवदभिमतं न घटत इत्यर्थः । यादृशतादृशभेदेति । व्यवस्थानिर्वाहकानिर्वचनीयभेदेत्यर्थः । ज्ञातव्यपरब्रह्मेति । चिन्मात्रेत्यर्थः । वेदांतैश्चिन्मात्रस्यैव ज्ञेयत्वात् । सार्वज्ञादिगुणशालिनो बिंबभूतब्रह्मपदार्थस्य मिथ्यात्वेन वेदांताज्ञेयत्वात् । अत एव परपदं । हि शब्दोक्तहेतुं साध्यप्रदर्शनपूर्वकं विवृणोति । यत इत्यादिना । प्रमाणप्रयोजनयोरभावाज्जडे * अज्ञानं नास्तीति परमतं । तत्र प्रमाणाभावः स्फुटः । घटं न जानामीत्यादिप्रतीतेर्वक्ष्यमाण रीत्या तदज्ञानभावाविषयकत्वेन घटाद्यवच्छिन्नचिद्विषयत्वेन वोपपत्तेरतः प्रयोजनाभावमेवोपपादयन्नाशंकते । नन्विति । न ह्यज्ञानं व्यसनतयेष्यते किंतु प्रकाशे सत्यपि तत्कार्या-

---

* टिप्पणी— विषयसप्तमी ।

(टीका) मैवं। घटोऽपि यदान्यात्मनावभासते। तदेंद्रियप्रवृत्तावपि घटत्वाग्रहणस्यानन्यनिमित्तत्वात्तत्राप्यज्ञानस्य परेणांगीकार्यत्वात्। अन्यथा शुक्तिकाज्ञानमपि न स्यात्। यदि तर्हि न विषयाश्रितमज्ञानं। क्व तदाश्रितमित्यत आह।

(मूलं) पुंगतमेव हि तमः ॥ ५५ ॥

(टीका) पुंगतं ज्ञातृपुरुषगतं। तम इव तमोऽज्ञानं ज्ञानप्रतिबंधकत्वात्तमोग्रहणमुत्तरत्रोपयोक्ष्यते। प्रमाणेन हि विषयाश्रितत्वे निराकृते परिशेषतो ज्ञातृगतत्वं सिध्यति। हिशब्दस्त्वहमज्ञो घटमहं न जानामीत्याद्यमनुभवमप्यप्रमाणं दर्शयति।
प्रमाणांतरं चाह।

(मूलं) ज्ञानेन निवर्तते ॥ ५६ ॥

(टीका) तम इति वर्तते। यथाखलु तमः प्रकाशसमानाश्रयमेव तेन निवर्तते। नव्याश्रयं तथाऽज्ञानमपि ज्ञानेन निवर्तत इति ज्ञानसमानाश्रयमेव भवितुं युक्तं। ज्ञानाश्रयश्च ज्ञातैवेत्यज्ञानस्यापि स एवाश्रयो युक्तः। ननु यथा तमोविषयसंबद्धमेव सज्ज्ञानप्रतिबंधकमुपलभ्यते। प्रकाशस्थेनांधकारस्थितघटस्यानुपलभ्यमानत्वात्। अंधकारस्थेनापि प्रकाशस्थितस्योपलब्धेः तथा ज्ञानप्रतिबंधकेनाज्ञानेनापि विषयाश्रितेन भवितुं युक्तमिति विषयाश्रितत्वेप्यज्ञानस्य प्रमाणमस्ति। न चैवमचेतनाश्रयाज्ञानमंगीकुर्वतो मायावादिनोऽपसिद्धांतापत्तिः। शुक्त्याद्यवच्छिन्नचैतन्याश्रयतोररीकरणात्। अवश्यं चैतदेवं शुक्त्याद्यवच्छिन्नचैतन्याश्रयं खल्वज्ञानं तद्रूपमाच्छाद्य रजतादिरूपांतरोपादानं भवितुं युक्तं।

---

भावो यत्रानुभवसिद्धः तन्निर्वाहाय तत्प्रकाशकार्यप्रतिबंधकतया घटादौ ज्ञानोत्पत्तेः प्राक् अप्रकाशस्वरूपे तस्मिन् प्रकाशप्रसक्त्यभावेन तत्कार्यव्यवहारप्रतिबंधार्थं तत्कल्पने बीजाभावात्। ज्ञानोत्पत्त्यनंतरं तद्व्यवहारादेः सत्वेन तत्प्रतिबंधस्यैवाभावात्। चैतन्यस्य स्वप्रकाशत्वात्तदभिन्नापरिच्छिन्नानंदादेरिदानीं स्फुरणवारणाय तत्राज्ञानं भावरूपमवश्यं कल्पनीयमिति प्रघट्टिकार्थः। यद्यपि तमः साक्षान्मूलाविद्याजन्यमिति परेषां सिद्धांतः। तथा सति तमोरूपकार्येण कारणमज्ञानं गृहीतुं शक्यं तथापि तस्याप्रामाणिकत्वाभिप्रायेण वाऽवस्थाज्ञानानामेवेदानीं दृष्टांततया प्रसक्तत्वात्। तदभिप्रायेण वा तत इवेति व्याख्यातं उत्तरत्रेति। उत्तरमूलाभिप्रेतेऽर्थे दृष्टांततयोपयोक्ष्यत इत्यर्थः। उररीकरणादिति-ताद्विषयताऽपि तादात्म्यरूपा शुक्त्यवच्छिन्नचैतन्यस्यैव। शुक्तित्वविशिष्टस्य तन्निरूपिताव्याप्यवृत्तितानिर्वाहिकावच्छेदकतैवेति ज्ञेयं। ननु पुरोवर्तिनं तत्वतो न जानामीति प्रत्ययेन जीवचैतन्यस्यैवाज्ञानाश्रयत्वावगाहनात् कथं शुक्त्यवच्छिन्नचिदाश्रितत्वमित्याशंक्य तत्प्रतीतौ जीवनिष्ठपरमनसिद्धज्ञानप्रागभावस्थानाभिषिक्ताज्ञानावगाहित्वेऽपि शुक्त्याद्यवच्छिन्नचैतन्ये रजतादिरूपकार्योत्पत्त्यनुरोधेन तदुपादानतया तत्राज्ञानकल्पनमावश्यकमित्याह। अवश्यमिति। आच्छाद्येति। दोषसाहित्येनाच्छाद्येत्यर्थः। दोषाश्च क्वचित्पुरुषनिष्ठा

( टीका ) एवं तर्हि ज्ञानस्यापि प्रकाशवद्विषयसन्निकर्षेणैवाज्ञाननिवर्तकत्वप्रसंग इति चेत्। नेदमनिष्टं। प्रकाश (रूपं सा) स्वभावं सावयवमंतःकरणमदृष्टेंद्रियादिसहकृतं ध्रुवादिविषयपर्यंतं दीर्घप्रभाकारेण परिणमत इत्यंगीकारात्।

रागादयो विषयनिष्ठस्वादृश्यादयश्च। एवं तर्हीति। अज्ञानांधकारयोः साम्यमादृत्य विषयसंबंधस्यैवाज्ञानस्यावरकत्वे। प्रकाशस्वभावमिति। वृत्तेरज्ञाननिवर्तकत्वसामर्थ्यबोधनायेदं। सावयवमिति। परिणामविशेषसंभवोपपादनाय। तथाच देहस्थांतःकरणभागोऽहंकाराख्यः कर्तेत्युच्यते। तत्प्रतिबिंबितं वा तदवच्छिन्नं जीवचैतन्यं प्रमातृदेहविषयमध्यभागस्थपरिणामो वृत्तिर्दंडाकाराज्ञानरूपक्रिया। तत्प्रतिबिंबितं तदवच्छिन्नं वा चैतन्यं प्रमाणं। विषयव्यापकस्तद्भागो विषयस्य ज्ञानकर्मत्वसंपादकमभिव्यक्तियोग्यत्वमित्युच्यते। तत्प्रतिबिंबितं तदवच्छिन्नं वा चैतन्यं प्रमितिः। प्रमेयं त्वज्ञातं ब्रह्मचैतन्यं विषयगतं। तदेव ज्ञातं सत्फलं। फलं नाम भग्नावरणा चित् तत्संबंधश्च। मतांतरे तु विषयाकारवृत्तिप्रतिबिंबितमधिष्ठानचैतन्यमनधिष्ठानभूतसर्वगतजीवचैतन्यं वा ज्ञानं तत्तादात्म्यं घटे तद्विषयतारूपं। अथवा वृत्तिसंबंधेन भग्नावरणाधिष्ठानचिदेव ज्ञानं तत्तादात्म्यं विषये विद्यमानं तद्विषयत्वरूपं। प्रथमकल्पे आध्यासिकसंबंधस्याधिष्ठानप्रतियोगिकस्याध्यस्तनिष्ठस्य विषयप्रकाशाप्रयोजकतयाऽनुपयुक्तता स्यात्। अंतःकरणपरिणामभूतवृत्त्यवच्छिन्नचैतन्यतादात्म्यस्यैव वृत्तिप्रतिबिंबितचैतन्यतादात्म्यस्यैवोत्पत्तिसंभवेन विषयापरोक्षसंभवात्। तथा चाध्यस्तत्वं विनाऽपि दृश्यत्वोपपत्तावनुमानमप्रयोजकं स्यादिति द्वितीयकल्पादरः। तमेव भांतमनुभाति सर्वमिति श्रुत्यानुकूल्यात्। तत्राधिष्ठानभूतस्वप्रकाशचैतन्यतादात्म्यरूपानुसरणस्यैव विषयप्रकाशहेतुत्वोक्तेः। परंपरया हेतुत्वस्यागतिकगतित्वात्। वृत्त्यवच्छिन्नचित्तादात्म्यविशिष्टविषयाधिष्ठानचैतन्यमेव फलमित्युच्यते। वृत्त्यवच्छिन्नचैतन्यतादात्म्येन भग्नावरणा चित् ज्ञानमित्युच्यत इत्यपि केचित्। वृत्तौ ज्ञायतेऽनयेति करणव्युत्पत्त्या ज्ञानपदं प्रवर्तते। वृत्तीनां तु जडेषु आकाराख्यविषयता नतु तादात्म्यरूपा साच चैतन्य एव। पूर्णानंदावरकाज्ञानाभिभावकवृत्तेः पूर्णानंदे तादात्म्यरूपाविषयतायाः क्लृप्तत्वात्। जडेष्वाकाराख्यविषयतानंगीकारे रूपाद्याकारवृत्तिसंश्लेषस्य रसादावपि सत्वात्तद्भानापत्तेः। तादृशाकाराख्यविषयताः अंगीकरणीयाः। तन्मात्रांगीकारे परोक्षवृत्त्याऽपि रूपादिभानापत्तेः। संश्लेषांगीकारोपि अत्र जीवचैतन्यं सर्वतादात्म्यापन्नत्वेन सर्वगता याऽविद्या तत्प्रतिबिंबरूपं भूतं तदुपहितरूपं वा। उभयथाप्यविद्याकृतपरिच्छेदराहित्यात्सर्वगतं। तत्रापि जीवो जगदुपादानमनुपादानं चेति पक्षद्वयं। तत्र जीवस्य जगदुपादानत्वपक्षे घटादिविषयैः सह तत्प्रकाशकजीवचैतन्यस्य तादात्म्याख्योपरागस्य सर्वदा सत्वात्सर्वदा तद्भानवारणाय घटाद्यवच्छेदेनावृतत्वं मन आद्यवच्छेदेनानावृतत्वं अत एव मनस्तद्गतसुखादेः स्वसत्ताकाले नियमेन भानं। मनःपरिणामभूतधर्मादेर्मनोवच्छिन्नब्रह्मचैतन्यादेः आवृतत्वं स्वीक्रियते। एतन्मते आवरणभंगार्थमेव वृत्तिः। जीवस्य जगदनुपादानत्वे स्वप्रतिबिंबाश्रयाविद्यासंबंधित्वरूपसंबंधस्य सर्वत्र सर्वदा सत्वात्सर्वदा भानापत्तेर्वारणाय तत्संबंधस्य भासकत्वाप्रयोजकत्वात् घटादिभानार्थमसंगस्य तस्योपरागार्था वृत्तिः। एतन्मते स्वप्रतिबिंबाधारवृत्तिविषयत्वमेव घटादौ भासकं। अंतःकरणसुखदुःखादीनां स्वच्छत्वेन तत्र जीवचैतन्यस्य प्रतिबिंबनात्। स्वप्रतिबिंबाधारत्वमेव मुख्यं भासकं सर्वदाऽस्तीति सर्वदा तद्भानं। मनस्त्वसुखत्वादीनां चित्प्रतिबिंब-

(टीका) अत एव न ह्यज्ञानस्य घटाश्रयत्वमिति दृष्टांतोपि प्रत्यूढः घटाज्ञानस्यापि तदाश्रयत्वप्रसंगश्चेति। तदिदमसत् अनुमानस्य तर्कपराहतत्वात्। तथाहि यदेतद्घटे पाषाणत्वाद्यारोपनिमित्तमज्ञानं तद्घटयाथात्म्यज्ञानेन निवर्तते न वा। नेतिपक्षे भ्रांतेरनुच्छेदप्रसंगः। प्रथमपक्षेऽतिप्रसंगमाह।

(मूलं) विषयाश्रयं चेदज्ञानं निवर्तते। तर्ह्येकेन ज्ञातस्य घटस्यान्यैरज्ञातत्वं न स्यात् ॥ ५७ ॥

नौपयिकं स्वच्छत्वं स्वीक्रियते। सर्वदा तद्ज्ञानस्यानुभवसिद्धत्वात्। स्वप्रतिबिंबाधारत्ववत्तदाश्रयतादात्म्यादेरपि भासकत्वाभ्युपगमाद्वा मनस्त्वादीनां भानोपपत्तिः। न चैवं मनआदितादात्म्यवत्धर्मब्रह्मादीनां भानापत्तिः। तेषामावृतत्वाभ्युपगमात्। ब्रह्म न जानामीत्यनुभवबलेन पक्षद्वयेऽपि तत्रावरणस्यावश्यकत्वात्। एवं च घटादिबहिर्विषये उपरागार्था ब्रह्मणि त्वावरणभंगार्था वृत्तिः। एतन्मते अधिष्ठानभूतब्रह्मचैतन्ये अज्ञानरूपावरणस्य घटाद्यवच्छेदेनानंगीकारे प्रामाण्यशरीरनिविष्टाज्ञातज्ञापकत्वं चक्षुरादीनां न स्यात्। तन्निवृत्त्यनंगीकरे आव्रियमाणत्वेन विषयप्रकाशानुपपत्तिरत उपरागपक्षेप्यावरणभंग आवश्यकः। नच ब्रह्मावरणाज्ञानभंगे तदानीं मोक्षप्रसंगः। विषयचैतन्यसंबंधस्य तदानीमज्ञानविषयतानवच्छेदकत्वांगीकारेणैव तदुपपत्तेः। धर्मादौ तु गुरुत्वादाविवापरोक्षाख्यवृत्तिनिरूपिताकाराख्यविषयताया अभावान्न तत्रावरणनिवृत्तिरतो न तद्भानं। किंतु परोक्षवृत्त्या सत्वावरणाज्ञाननिवृत्तिमात्रेण तत्रास्तीति व्यवहारः। ब्रह्मणस्तु यत्साक्षादपरोक्षाद्ब्रह्मेति श्रुतेस्तस्यापरोक्षस्वभावात्तद्विषयिणी शब्दादिजन्यापि वृत्तिरपरोक्षरूपैवेति तया तत्रावरणभंगः। मनोवच्छिन्नचैतन्यस्य जीवत्वे स्वत एव संबंधशून्यत्वात् घटाद्यधिष्ठानब्रह्मचैतन्यतादात्म्याभिव्यक्तत्वसिद्धये वृत्त्यपेक्षा। मनसो हि वृत्यात्मना विषयदेशप्राप्तौ तद्देशावच्छिन्नचैतन्यस्यापि मनोवच्छेदप्राप्त्या मनोवच्छेदानवच्छेदप्रयुक्तभेदस्यापगमात्। नच रूपादिभानवेलायां रसादेरपि भानं स्यात्। उक्तरीत्या तदधिष्ठानचैतन्यस्याप्यभेदाभिव्यक्तेरिति वाच्यं। रसे वृत्तिनिरूपिताकाराख्याविषयताया अनंगीकारात्। तस्या अपि भासकत्वाभ्युपगमेनोक्तानुपपत्तिविरहादिति तन्मतप्रकारोऽनुसंधेयः। एतन्मतेऽपि जीवचैतन्यस्य वृत्त्यादिद्वारैकलोलीभावापन्नतया विषयोपरागार्थमुक्तरीत्या ब्रह्मण्यावरणभंगार्थं च वृत्त्यपेक्षा। अत एव विषयसंबंधतया ज्ञानस्याज्ञाननिवर्तकत्वप्रसंगे कृते नेदमनिष्टमिति इष्टापत्तिमभिधाय तदुपपादनाय परिणाम्याज्ञानं निवर्तयतीत्यंगीकारादिति वक्तव्ये परिणमत इत्यंशपर्यंतमेव परमतोपन्यासः कृतः। अन्यथा सर्वमतेऽज्ञाननिवृत्तिमात्रफलकत्वस्य वृत्तेः प्राप्त्योपरागपक्षास्फोरणप्रसंगात्। न चैवमुत्तरमूलोक्तदूषणानामुपरागपक्षे प्रसरात्तदवतारिकाग्रंथे तदनिरसनीयमतांतरसंग्रहोऽकिंचित्कर इति वाच्यं। तन्मूलपरमतातात्पर्यविषयीभूतादृष्टकल्पनादिरूपदोषस्य तत्पक्षेऽपि प्रसरेण परस्य सर्वांशेऽप्यप्रामाणिकवादित्वस्य स्फोरणाय मतांतरसूचनस्योचितत्वात्। अत एव ज्ञानस्य विषयीभूतघटावच्छिन्नाचिदाश्रितत्वव्यवस्थापनादेव। दृष्टांतोपीति। ब्रह्मज्ञानं न स्वविषयाश्रितमज्ञानत्वाद्घटाज्ञानवदिति पूर्वाभिमेतानुमानदृष्टांत इत्यर्थः। प्रत्यूढं इति। साध्यवैकल्यादिति भावः। प्रसंगस्तदनुमानानुग्राहकतयाऽन्यथेत्यनेन पूर्वोक्तस्तर्कः। चशब्दात्प्रत्यूढ इत्यनुकृष्यते। इष्टापादनदोषेणेति भावः। अनुमानस्येति। घटयाथात्म्यज्ञानविरोध्यज्ञानं प्रकाशसमानं देशं प्रकाशविरोधित्वात्तमोवदिति विषयाश्रितत्वव्यवस्थापकानुमानस्येत्यर्थः।

यद्यज्ञानं घटादिविषयाश्रयं तद्याथात्म्यज्ञानेन निवर्तेत इत्यंगीक्रियते । तर्ह्येकस्मिन्घटे बहूनां पाषाणत्वादिना विप्रतिपन्नानामेकेन ज्ञातस्य घटस्यान्यैरज्ञातत्वं न स्यात्। तद्ज्ञानेनाविद्याया निवृत्तत्वात्। इंद्रियसन्निकर्षादिसामग्रीसद्भावाच्च। नह्यालोकेन तमसि निवृत्ते समनस्केंद्रियसन्निकृष्टोपि घटः केनचिद्दृश्यते केनचिन्नेति युज्यते । अज्ञानबहुत्वान्नैवमिति चेत् । तर्ह्येकस्मिन्नज्ञाने निवृत्तेप्यज्ञानांतरसद्भावान्न केनापि घटो विज्ञायेत । प्रतिपुरुषनियतानि तानीति चेन्न । अदृष्टकल्पनाप्रसंगात् अज्ञानस्य विषयाश्रत्वादेवं कल्पनेऽन्योन्याश्रयता स्यात् ।

---

इत्थं च पूर्वमूले घटाज्ञानस्य दृष्टांतोक्तिर्लौकिकव्यवहारमनुरुध्य परमताच्छादनेनैवेति नायुक्तेरिति ज्ञेयं । विषयत्वस्य केवलान्वयित्वेनात्मनोऽपि विषयत्वात्सामान्यतस्तन्निराकरणं न घटत इत्यतस्तत्ज्ञानविषयीभूतघटादिपरत्वमाश्रित्य विवृणोति । यदीति । घटादीति । सर्वत्र तत्तदवच्छिन्नचिदेव ग्राह्या । घटादीत्युक्तिस्तु अज्ञातो घट इति व्यवहारानुसारेण । परमते अज्ञातो घट इति वाक्ये अज्ञात इत्यस्याज्ञानविषयतावच्छेदक इति वा तदीयाकाराख्यविषयतावानिति वार्थः। चैतन्ये तु तादात्म्यरूपैव विषयतेति ध्येयं। विप्रतिपन्नानां भ्रांतानां। निर्धारणे षष्ठी। ननु चैत्रेण ज्ञाते घटे मैत्रेणाज्ञातत्वव्यवहारो न भावरूपाज्ञानमवलंबते। येन चैत्रज्ञानेनाविद्याया नष्टत्वात्कथं मैत्रेणाज्ञातत्वमिति व्यवहारः स्यादिति पर्यनुयोगः स्यात्। किंतु तत्संबंधिज्ञानविषयत्वाभावमतो नातिप्रसंग इत्यत आह । इंद्रियेति । चैत्रमैत्रादीनामेकदैवेंद्रियसंनिकर्षादिसामग्रीदशायां तज्ज्ञानाविघटनपूर्वकं सर्वेषां भ्रमस्योत्पन्नत्वे एकयैवाविद्यया सर्वेषां तद्विघटना वाच्या । सा चैका । यदि चैत्रज्ञानेन निवृत्ता मैत्रस्य तद्विघटने बीजाभावेन तत्ज्ञानोत्पत्तेरावश्यकतया तदाभावविषयकत्वमपि न युज्यत इति भावः । न केनापीति । एकेन ज्ञातस्येत्यनेनैकज्ञानविषयत्वविशिष्टापराज्ञानविषयत्वाभाव एवापाद्यः । सच विशिष्टाभाव एकज्ञानविषयत्वरूपविशेषणविशिष्टे अपराज्ञानविषयत्वरूपविशेष्यस्यैवाभावरूपः । तादृशविशेष्यवन्निष्ठश्चैकज्ञानविषयत्वरूपविशेषणाभाव एव। एवं च विशेषाभावकूटबलात्सामान्याभाव एवापादितो भवतीति भावः । एवं च विषयाश्रितं चेदित्यनेनैकाज्ञानबव्हज्ञानपक्षयोरुभयोरपि संगृहीतत्वादुक्तरीत्या दूषणस्यापि पक्षद्वये प्युक्तत्वलाभान्न बव्हज्ञानपक्षदूषणानुक्तिप्रयुक्ता मूलस्य न्यूनतेति ध्येयं । प्रतिपुरुषनियतानीति । तत्तत्पुरुषनिरूपितान्यज्ञानानि तत्तत्पुरुषांतःकरणवृत्तिभिर्नाश्यंतेऽतो नोक्तापत्तिरिति भावः। अदृष्टेति। तमसो विषयाश्रितत्वेन ज्ञानप्रतिबंधकत्वं दृष्ट्वा प्रकृते अज्ञानस्य तथाभावं कल्पयतस्तवेत्यादिः । प्रतिपुरुषनियततमसामदर्शनादिति भावः । नन्वज्ञानस्य विषयाश्रितत्वं यावता निर्वहति तत्सर्वमन्यथानुपपत्तिसिद्धमेवेत्यत आह । अज्ञानस्येति । उक्तबाधकपरिहारं विना विषयाश्रितत्वस्यैवासिद्धेरन्योन्याश्रय इति भावः । ननु तमोदृष्टांतकपूर्वोक्तानुमानेन ज्ञानस्य विषयाश्रितत्वस्यासिद्धत्वाद्बाधकपरिहार उक्तरीत्या क्रियते । पक्षदृष्टांतयोः साध्यसाधनोभयत्वेन साम्यमात्रमपेक्षितं। ननु सर्वात्मना कुत्राप्यसंभवात्। एवं चोक्तबाधकपरिहारायाज्ञानस्य प्रतिपुरुषनियतत्वांगीकारे न काप्यनुपपत्तिरित्यत आह। विषयाच्छादकं

(टीका) विषयाच्छादनं तु नयनपटलादिवत् प्रतिपुरुषमाश्रितैरेवाज्ञानैर्युक्तं । आरोप्यासत्वस्य प्रतिपादितत्वान्न तदुपादानापेक्षाऽस्ति । तदेवं न ज्ञातव्यपरब्रह्माश्रयमज्ञानं युक्तमिति नात्माश्रयाज्ञाननिवर्तकत्वेन वेदांतवाक्यजनितविज्ञानस्यात्मज्ञानत्वसिद्धिः ।

---

विवृति । विषयभानप्रतिबंध इत्यर्थः । युक्तमिति । दृष्टांतदार्ष्टांतिकयोर्बाधकपरिहारोपयुक्तप्रतिपुरुषसंबद्धत्वेनाप्यानुगुण्यादिति भावः । तथाच तत्प्रकाशविरोधित्वं तज्ज्ञानविरोधित्वं वा विषयाश्रितत्वेन न व्याप्तं । पटलादौ व्यभिचारात् । तथाचोक्तहेतुभिः विषयाश्रितत्वस्यासिद्धत्वात्प्रत्युत दृष्टानुसारेण पटलादिवत्पुरुषाश्रितत्वस्यैव युक्तत्वाद्विषयाश्रितत्वपक्षे उक्तबाधकं सुस्थिरमेवेति भावः । ननु मास्तु तमोदृष्टांतकानुमानेन विषयाश्रितत्वसिध्दिः । शुक्त्यादौ भासमानरजतादिकार्यस्य भावकार्यत्वेनोपादानसापेक्षत्वाद्भिन्नदेशस्थयोरुपादानोपादेयभावायोगात्तत्राज्ञानमवश्यं सिध्यतीत्यत आह । आरोप्येति । अर्थापत्तिनिरासप्रस्ताव इत्यर्थः । अज्ञानस्य विषयाश्रितत्वप्रतिक्षेपं प्रकृतोपयोगपूर्वकमुपसंहरति । तदेवमिति । अत्र वदंति । प्रतिपुरुषनियतान्यज्ञानानि नानैव । न चैवमदृष्टकल्पनाप्रसंगः । एकैकज्ञानव्यक्तेरेकैकप्रागभावस्य त्वयाऽभ्युपगतत्वेन मन्मते तत्तद्व्यक्तीनामेव तत्पुरुषनियताज्ञानरूपत्वांगीकारात् । न चैवमभावानामावरकत्वं कथमिति शंक्यं । भावस्यापि कथमिति पर्यनुयोगस्य साम्यात् । स्वप्रागभावध्वंसस्वध्वंसप्रागभावादिरूपांधकारादेरावरणत्वदर्शनात् । तस्याभावरूपत्वमते सुतरां तथा । अंधकारेणेदमावृतमिति प्रतीतेस्तन्मतेऽप्यावरणत्वमपरिहार्यं । न चैवं घटं न जानामि न साक्षात्करोमीत्यनुभवेनात्मनिष्ठतया प्रतीयमानानामज्ञानानां कथं विषयावरणत्वमिति वाच्यं । जीवस्य स्वर्वगतस्यैव जगदुपादानत्वपक्षे घटावच्छेदेन स्वनिष्ठाज्ञानस्यैवांतःकरणसामानाधिकरण्यभानसंभवात् । घटे ममाज्ञानमिति घटाद्यवच्छेदेन स्वसंबंध्यज्ञानस्य भानाच्च । जीवस्य जगदनुपादानत्वपक्षेऽपि घटावच्छेदेन चिदाश्रिताज्ञानस्याऽपि एतत्तत्वं मम न भाति एतत्तत्वमहं न जानामीति प्रतीतिबलात्साक्षिभास्यत्वांगीकारात् । चिदैक्यस्यैव तंत्रताभ्युपगमेन मनआद्यवच्छेदकृतभेदस्य तद्भानप्रयोजकत्वानंगीकारात् अनुभवानुसारित्वात्कल्पनायाः । न चान्यदीयाज्ञानस्याप्यन्यस्य भानापत्तिश्चिदैक्यमात्रस्य तंत्रत्वेन चेष्टापत्तिश्चैत्र एतत्तत्वं जानाति न वेत्यादिसंशयानुपपत्तिरिति वाच्यं । तत्तन्मनोवच्छिन्ननिरूपितत्वस्याज्ञाननिष्ठत्वस्य तं प्रति भाने प्रयोजकत्वाभ्युपगमे नान्यदीयाज्ञानस्यान्यं प्रति भानापादनासंभवात् । चैत्रीयापेक्षाबुध्दिजन्यद्वित्वस्य घटपटोभयसमवेतस्य मैत्रीयचक्षुःसंयुक्तसमवायाश्रयस्यापि मैत्रप्रत्यक्षाविषयत्ववत् प्रकृते उपपत्तेः । न चैवं घटोऽस्तीति परोक्षज्ञानेन घटावरणमज्ञानं निवर्तते न वा । नेति पक्षे घटोऽस्तीति व्यवहारानुपपत्तिः तस्यावृतत्वात् । आद्ये घटो भातीति व्यवहारापत्तिः घटावरकाज्ञानस्य गतत्वादिति वाच्यं । यतोऽज्ञाने वैजात्यद्वयं एकं प्रमामात्रनाश्यतावच्छेदकमपरं साक्षात्कारमात्रनाश्यतावच्छेदकं । प्रथमवैजात्याश्रयनिवृत्तिविशिष्टा चिदस्तित्वं सत्तेत्युच्यते । तत्संबंधात्तादात्म्यरूपाद्घटोस्तीति व्यवहारः । द्वितीयवैजात्याश्रयनिवृत्तिविशिष्टा चिदस्तित्वभानप्रकाशादिपदैर्व्यवह्रियते । तत्तादात्म्यरूपसंबंधात् घटोस्ति भातीत्यादि व्यवहारः । न चैवं परोक्षज्ञाननिवर्त्यं घटाज्ञानं कथं भवेत् । परोक्षस्थले वृत्तेर्बहिर्निर्गमनाभावेन तस्याहंकारावच्छिन्नचिदाश्रितत्वादज्ञानस्य घटाव-

च्छिन्नचिदाश्रितत्वात्। अन्यथा परोक्षभ्रमस्यान्यथाख्यातित्वमनभ्युपगम्यानिर्वचनीयख्यातित्वपक्षे तदवच्छेदेनानिर्वचनीयोत्पत्त्यनुपपत्तेरिति वाच्यं। परोक्षवृत्तेर्जडनिष्ठाकाराख्यविषयताघटितसंबंधेन परोक्षवृत्तीनामपि पर्वतवन्हिमत्त्वेनानुमिनोमीत्यादीनां पर्वतानुयोगित्ववन्हिप्रातियोगित्वविशिष्टसंसर्गावच्छेदेन चिद्विषयकत्वमेवेति अनिर्वचनीयवादार्थे ब्रह्मानंदेन व्यवस्थापितत्वेन चिति साक्षान्निष्ठविषयतासंबंधेन वा ज्ञानसमानाधिकरणायास्तन्निवर्तकत्वाभ्युपगमात्। यद्वा द्विविधं ह्यज्ञानं परोक्षनिवर्तकमहंकारावच्छिन्नचैतन्यरूपजीवाश्रितमसत्त्वापादकाज्ञानमुच्यते। अपरमपरोक्षप्रतीत्या निवर्तमानमभानापादकमसत्वापादकं चाज्ञानमुच्यते ऽतो न कोपि दोषः। * एतत्पक्षस्य घटाकारापरोक्षवृत्तिकालेपि तं प्रति घटस्यावृतत्वप्रसंगः तस्यैवोत्तरकाले तदभाननिर्वाहायांगीकार्यस्य ज्ञानस्येदानीमपि सत्वात्। एतद्वृत्त्यैव तन्नाशे पुनरुत्तरकाले घटस्यावृतत्वायोगः। अत एतद्दोषपरिहाराय स्वप्रागभावरूपस्यैकस्याज्ञानस्य नाश· तत्समानविषयकाणामज्ञानांतराणामभिभव एव। अभिभवो नाम घटरूपविषयस्य चिन्निष्ठतत्संबंधस्य वा तत्काले तत्पुरुषीयाविद्याविषयतावच्छेदकत्वाभाव इति समाधानं। प्रागभावानंगीकारे अज्ञानांतरस्य क्लृप्ततत्तद्वृत्तिप्रागभावातिरिक्तस्य कल्पनागौरवरूपबाधकाभावादेकपुरुषीयं सर्वविषयकमज्ञानमेकमेव। तस्य यदाकारावृत्तिर्जायते तद्विषयसंबंधस्य चिन्निष्ठस्य तत्पुरुषीयाज्ञानविषयतावच्छेदकत्वानंगीकारादन्यदीयाज्ञानविषयतावच्छेदकत्वांगीकाराच्च तत्पुरुषं प्रति भानमन्यं प्रति अभानमिति व्यवस्थोपपत्तेः। मूलाविद्यापरिणततत्तन्मनोवच्छिन्नाः जीवाः सर्वेषामप्येकैवाविद्यावरणमिति पक्षे वृत्तिरविद्याभिभाविका। नतु ना॰िका। एकस्य घटज्ञाने सर्वेषां मोक्षप्रसंगात्। अभिभावकत्वं च स्वकाले तद्विषयचित्संबंधस्य नाज्ञानविषयतानवच्छेदकत्वापादकत्वं तत्पुरुषस्य वृत्तिकाले ऽन्यपुरुषस्यापि भानापत्तेः। नच पुरुषांतरीयाहंकारावच्छिन्नाचितो वृत्तिद्वारकोपरागाभावादेवाभानं तत्सत्वे त्विष्टापत्तिरिति वाच्यं। एकस्य शुक्तिसन्निकृष्टेंद्रियेण भ्रमो ऽपरस्य प्रमा च युगपद्भवतो यत्र तत्रान्यदीयेदमाकारवृत्त्या तत्साक्षिचैतन्यतादात्म्यापन्नेदमधिष्ठानचैतन्यविषयसंबंधस्यान्यदीयप्रमानुरोधादज्ञानविषयतानवछेदकत्वे ऽन्यस्य भ्रमानुपपत्तिप्रसंगेन तत्रेष्टापत्तेरयोगात्। नहि तत्र शुक्तित्वावच्छिन्नचैतन्यस्य साक्षिचैतन्यतादात्म्याभावादुपराग एव नास्तीति वक्तुं शक्यं। तथात्वे रूपाद्याकारचाक्षुषादिकाले रसादेरपि साक्षिचैतन्येन भानवारणायाकाराख्यविषयताया अपि · भानप्रयोजकत्वस्य पूर्वोक्तस्यायुक्ततापत्तेः। तावताप्यन्यदीयप्रमानुरोधाच्छुक्तित्वचित्संबंधावच्छेदेनाज्ञानाभावेनोपादानानुपपत्त्या भ्रमानुत्पत्तेर्दुर्वारत्वाच्च। तत्राप्युक्तरीत्या साक्षिसंबंध एव नास्तीति वक्तुं शक्यत्वात्। तस्मात्तत्पुरुषीयवृत्त्यनवच्छेदकत्वविशिष्टपदज्ञानाविषयतावच्छेदकत्वं तदभावविशिष्टचित्संबंध एव विषये तत्पुरुषस्य भानं। अज्ञानविषयतावच्छेदकत्वं यस्मिन्विषयचैतन्यसंबंधे तस्मिन्नेव वृत्त्यवच्छेदकत्वांगीकारात् वृत्तिकाले विशिष्टाभावनिर्वाहः। सुखादिविषयचैतन्यसंबंधे ज्ञानविषयतावच्छेदकत्वरूपविशेष्याभावादेव विशिष्टाभावोऽतः सुखादौ घटादौ चोक्तविशिष्टाभाववच्चैतन्यसंबंधवत्वरूपमेकविधमेवापरोक्ष्यं। प्रवृत्त्यादिकार्यं प्रति तद्विषयकापरोक्षज्ञानस्य जनकतावच्छेदककोटावपि तादृशविशिष्टाभावस्तद्व्यक्तित्वेन निवेश्योऽतो न गौरवं। परोक्षवृत्तेरपि चिद्विषयत्वस्य पूर्वमुक्तत्वाद्विषयतासंबंधघटितसामनाधिकर-

टिप्पणी—*नाशपक्षे।

ण्यसंबंधावच्छिन्नप्रतियोगिताकतादृशवृत्त्यभावविशिष्टं यदज्ञानं तदभाववच्चैतन्यसंबंधस्यैवास्तित्वादिरूपतांगीकाराद्गुरुत्वादिकमस्तीति व्यवहारः । असत्वापादकाज्ञानस्यांतःकरणावच्छेदेनैव चैतन्याश्रितत्वस्वोपादानांतःकरणावच्छिन्नत्वसंबंधावच्छिन्नवृत्त्यभावं निवेश्यैवोक्तरीतिरूह्या। वस्तुतः अंतःकरणावच्छिन्नचिता सह विषयाधिष्ठानचित एकत्वात् तत्तादात्म्यस्य विषये सत्वेन चिद्रूपज्ञानविषयतानिर्वाहेण गुरुत्वादिकं जानामीति व्यवहारः संगच्छते। यदि चेदमाकारवृत्तिस्थले शुक्तित्वसंबंधावच्छिन्नचैतन्यस्य साक्ष्युपराग एव नास्तीत्यभ्युपगम्यते। तदा पूर्वस्य युगपदुभयोः भ्रमप्रमोभयस्थले दोषस्याभावादेकाज्ञानपक्षेपि यथायथं वृत्तिकालेऽधिष्ठानविषयसंबंधस्याज्ञानविषयतानवच्छेदकत्वपक्षो वस्तुतस्त्वित्यादिनाऽनिर्वचनीयवादार्थे ब्रह्मानंदेनोक्तः सम्यगेव। अज्ञानैक्यपक्षे उक्तकल्पद्वयं अज्ञानस्य कटवत्संकोच इति प्राचीनैर्व्यवाह्रियते। वृत्त्यभावस्थाने वृत्त्यव्यवहितपूर्वकालाभावनिवेशघटितपूर्वोक्तरीतिर्वा तादृशाव्यवहितपूर्वकाल एव विषयाचित्संबंधस्य ज्ञानविषयतावच्छेदकत्वाभावो वाऽगीकार्यः। अयं पक्षो भीरुभटवदपसरणमज्ञानस्येति प्राचीनैर्व्यवाह्रियते। एवं च सर्वेष्वपि पक्षेष्वेकेन ज्ञातघटस्येत्यादिमूलोक्तदूषणाभावः। अज्ञानस्थानीयतत्तत्प्रागभावानां त्वयाप्यंगीकारात् पक्षांतरेष्वप्युक्तरीत्या गौरवाद्यभावात्सर्वमिदमयुक्तमेवेति । तदेतत्सर्वमदृष्टकल्पनाप्रसंगादित्यनेनैव निरस्तं। तथाहि। तत्तद्ज्ञानप्रागभावानां विषयावरकत्वं नाम तत्तत्ज्ञानप्रतिबंधकत्वमेव वक्तव्यं। अन्यस्यासंभवात्। तच्च अदृष्टचरं। तत्प्रागभावस्य तदुत्पत्तौ सामग्रीरूपस्य तत्प्रतिबंधकत्वायोगात्। प्रतिबंधकनाशोत्तरमेव कार्योत्पत्तेरेवावश्यकतया तन्नाशोत्तरं जायमानवृत्तेस्तन्निवर्तकत्वमसंगतं। नन्वावरकत्वं न प्रतिबंधकत्वं किंतु तद्भावव्याप्यत्वमेव तदितिवाच्यं। एवमपि वृत्तिरूपप्रतियोगिन एव तन्नाशत्वेन तन्नाशकत्वोक्त्ययोगः। प्रतियोगिनः स्वद्वितीयक्षणे प्रागभावनाशकत्वपक्षस्य भावाभावयोर्युगपदेकत्रावस्थानांगीकारस्य व्याहतत्वेन नाशांतरकल्पनागौरवेण च हेयत्वात्। तत्तद्वृत्तिप्रागभावानां वृत्त्युत्पत्तेः प्राक् जीवब्रह्मोपादानादिनिखिलपक्षेप्यावश्यकतया वृत्त्या तन्निवृत्तेः सर्वत्रावश्यकतया जीवस्य जगदुपादानत्वे घटादीनां जीवं प्रत्यावृतत्वं ब्रह्मोपादानत्वपक्षे नावृतत्वमिति त्वद्विभागायोगः। सर्वासामपि वृत्तीनां स्वप्रागभावनाशकत्वेन धारावहनस्थलेपि द्वितीयादिवृत्तीनामप्यज्ञातज्ञापकत्वानपायेन प्रामाण्यस्य सुस्थिरत्वात्। तासामप्रामाण्यं वा अज्ञातकालविशेषावगाहितया प्रामाण्यं वा तावत्कालस्थायिनी एकैव वृत्तिरंगीक्रियते वृत्तिभेदाभावन्न द्वितीयादिवृत्तिप्रामाण्यचिंतेत्यादीनां त्वत्पूर्वतनवाक्यानां त्वद्वाक्यानां चासंगतत्वापत्तिश्च। अनुवादस्थलेऽप्युक्तरीत्या ज्ञातज्ञापकत्वप्राप्त्यानुवादकत्वादिव्यवस्थायोगश्च । किंच तद्वृत्त्यभावसमकालीनवायुसंयोगादिप्रागभावानामपि विनिगमनाविरहादावरकत्वापत्तिः। न चेष्टापत्तिस्तस्य तद्भावव्याप्यत्वरूपत्वमात्रत्वादिति वाच्यं। तर्हि तदवच्छिन्नचैतन्यस्यापि ज्ञानरूपत्वापरिहारेण वृत्तिष्विव संयोगादिष्वप्यविशेषेण ज्ञानपदव्यवहारापत्तेः । ज्ञायतेऽनेनेति व्युत्पत्तेस्तत्रापि साम्यात्। एतेन चिन्निष्ठतत्तद्व्यवहारानुकूलशक्तिविघटकत्वमेवावरकत्वं। चितः सर्वज्ञप्तिरूपत्वेन सर्वव्यवहारानुकूलशक्तेरावश्यकतया तद्बलात्सर्वव्यवहारापत्तिवारणाय तद्विघटकतया वारणकल्पनमावश्यकं जीवोपादानत्वपक्षे। ब्रह्मोपादानत्वपक्षे जविचैतन्यस्य घटादितादात्म्यरूपतद्विषयकज्ञप्तिरूपत्वाभावेन तद्व्यवहारानुकूलशक्तेरभावेन तद्विघटकत्वाभावेन तत्स्थलीय वृत्तिप्रागभावानां न जीवं प्रत्यावरकत्वमिति जीवब्रह्मोपादानत्वपक्षयोरावृतत्वानावृतत्व

रूपविभागानुपपत्तिरूपो न पूर्वोक्तदोष इति प्रत्युक्तं । जीवोपादानत्वपक्षेपि तत्तद्वृत्ति-प्रागभावानामिव तत्तत्संयोगाविभागप्रागभावानामप्यावरकत्वापत्त्यादिपूर्वोक्तदोषापरिहा-रात् । नचात्मन्यज्ञानकल्पनापक्षेऽपि वृत्तिप्रागभावातिरिक्ताज्ञानकल्पने मानाभावेन वृत्तिप्रागभावादेरेव विषयावरकत्वे प्रसक्ते तत्रापि वायुसंयोगाद्यभावमादाय विनि गमकाभावस्तवापि तुल्य इति वाच्यं । यतो मन्मते घटमहं न जानामीत्यात्मनिष्ठतयाऽ नुभूयमानः घटादेर्विशेषरूपेण यज्ज्ञानं तत्प्रागभावादिरेव । प्रतियोग्यनधिकरणे तद-भावस्य सर्वसम्मतत्वात् । तस्य विषयावरकत्वादिकमधिकं किमपि न कल्पते । वृत्तिरूप-कारणाभावादेव प्रवृत्तिव्यवहारादिकार्यानुदयात्सर्वस्य सामान्यरूपेण साक्षिगोचरत्वेपि विशेषरूपेण तदविषयकत्वात्तेन रूपेण व्यवहारे तदाकारवृत्तेः कारणीभूताया आवश्य-कत्वात् । रजतादिभ्रमस्यापि दोषरूपावश्यकप्रतिबंधकेन शक्तित्वाग्रहे सति संभवात् । त्वया तु तादृशाभावानामावरकत्वमधिकमननुभवसिद्धं विषयावच्छिन्नचिदाश्रितत्वादिकं कल्पनीयं । तत्र वृत्तिप्रागभावानां वायुसंयोगादिप्रागभावानां वाऽऽवरकत्वमित्यत्र विनि-गमकाभावो दुर्वार एव । नच वृत्तीनां तत्समकालिकवायुसंयोगादिव्यक्तीनां वा व्यवहारा दिकारणत्वमित्यत्र विनिगमकाभावस्तवापि समान इति वाच्यं । तवापि मते वृत्तेर्यत्र कार्ये उपयोगस्तत्कार्यं प्रत्येव तत्कालीनवायुसंयोगादिकमादाय विनिगमकाभावस्य सत्वेन तादृशदोषस्योभयसमत्वात् । वृत्तेः पूर्वं परतोपि वा विद्यमानसंयोगादीनां वृत्तिकार्यका-रित्वे वृत्तेः पूर्वं परतो वा वृत्तिकार्यं स्यात् । नियमेन तदन्यूनानधिककालिकसंयोगादीनां सर्वत्र सत्वे मानाभावेनानुभवसिद्धा वृत्तिरेव कार्यविशेषं प्रति कारणमास्थीयते चेत्समं ममापि । वृत्तेरिव संयोगादेर्विषयविषयिभावसंबंधस्य घटादिना सहाभावेन घटादिव्यवहा रकारणत्वस्य दुष्कल्प्यत्वात् । घटज्ञानान्मम प्रवृत्त्यादिर्जात इति सर्वानुभवस्यैव वृत्तिकार-णत्वे सत्वाच्च । नच वृत्तिप्रागभावादीनां घटादिविषयकव्यवहाराद्यभावव्याप्यत्वमावरकत्वं नातो ऽन्यदधिकं तच्च सर्वसिद्धमिति किं कृतं गौरवं विनिगमकाभावो वा मन्मत इति वाच्यं । तर्हि तस्य भावरूपाज्ञानत्वावरकत्वादिकं सांकेतिकं स्यात् । तच्च नास्माकमनिष्टं । परंतु तस्य न जानाम्यहमित्यंतःकरणावच्छिन्नचिन्निष्ठतया प्रतीयमानस्य विषयावच्छिन्न-चिन्निष्ठत्वस्य तत्प्रकारोपपादकपरंपरायाश्च कल्पनमप्रामाणिकपरंपरारूपं भवतोऽतिरि-च्यते । येषां मते शुक्तितत्वं न जानामीति प्रत्यक्षासिद्धमज्ञानमतिरिक्तं विषयावरकम-तिरिक्तमावरणविक्षेपरूपकार्यलिंगकमिति ते आवश्यकवृत्त्यभावादिनैव शुक्तित्वाभानव्यव-हारासद्रजतभानसंभवेनैतदतिरिक्तावरणविक्षेपयोरप्रामाणिकतया तल्लिंगकत्वाभावेनाप्रा-माणिकत्वादज्ञानद्वयकल्पने गौरवाच्च परास्ताः । एतेन वृत्त्यभावविशिष्टं यदज्ञानविषयता-वच्छेदकत्वं तदभाववच्चित्संबंध एवास्तित्वभानादिर्वृत्त्यभावकाले ज्ञानस्य तद्विषयकव्यव-हाराभावव्याप्यत्वमेवाज्ञानस्य ज्ञानप्रतिबंधकत्वमित्यपि परास्तं । वृत्तिकाले तस्य भानव्य वहारादिकं वर्तते नो चेन्नास्तीति तस्यानन्यथासिद्धान्वयव्यतिरेकसत्वे तद्विषयकत्वेनैव घ टादौ भानव्यवहारस्य जानामीति प्रत्ययविषयताया वृत्तेरेवसंभवे तद्व्यतिरिक्ताप्रामाणिकोक्त विशिष्टाभावघटितभानपदार्थादेस्तादृशसंबंध प्रतियोगिचितो ज्ञानत्वकल्पनायाश्चाप्रामाणि कत्वात । नच सुखदुःखवृत्त्यादिज्ञानविषयकवृत्तेरनंगीकारेण चित एव तद्विषयकज्ञानस्वरूप त्वावश्यकतया तत्संबंधस्यैव भानपदार्थत्वावश्यकतयोक्तविशिष्टाभावं निवेश्य तस्यानुगमः क्रियत इति वाच्यं । अनुभवानुसारेणैव सुखाद्यवच्छेदेन जीवचैतन्यस्यानावृतत्वं धर्माद्यव-च्छेदेनावृतत्वमिति कल्पनावत् प्रत्यक्षानुमित्यादिवृत्तीनामप्यमुख्यतया ज्ञानपदव्यवहृति-

गोचरतांगीकारवत् वृत्तिचितोरुभयोरपि बाह्याभ्यंतरविषयभेदेन मुख्यतो ज्ञानरूपत्वसंभवे विशिष्टाभावघटितस्य ज्ञानपदार्थत्वकल्पने बीजाभावात् । उभयत्र ज्ञानत्वजातिस्वीकारौचित्यात् । तमेव भांतमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीति श्रुतिस्तु सूर्यादीनां परमात्मप्रकाशाधीनप्रकाशाश्रयत्वपरतया तद्भाष्यादौ व्याख्यातेति न तदनुरोधेन घटादिविषयकसाक्षात्कारादीनामात्मस्वरूपतासिद्धिः। वृत्त्यव्यवहितपूर्वकाल एव विषयचित्संबंधस्याज्ञानविषयतानवच्छेदकत्वे तत्काले एव विषयभानस्यावश्यकतया प्रवृत्त्यादिकार्यनिर्वाहे वृत्त्यभ्युपगमस्यैव निर्बीजत्वापातेन यत्काले विषयप्रकाशो जायते तत्कालावच्छिन्नचित एव ज्ञानत्वोररीकरणापातात् । एवं वृत्तिकाले विषयचित्संबंधस्याज्ञानविषयतावच्छेदकत्वाभावांगीकारे तादृशावच्छेदकत्वस्याव्याप्यवृत्तितानिर्वाहाय कालविशेषेषु तत्तदाभावावच्छेदकत्वादिस्वीकारे महागौरवमित्येषा दिक् । किं चैकत्र भावाभावयोः सत्वनिर्वाहकविलक्षणावच्छेदकत्वमेवाप्रामाणिकं कुतस्तदवष्टंभेनोक्तपूर्वोपदर्शितरीतीनामवकाशः। ननु कुतोऽप्रामाणिकत्वं मूले वृक्षः कपिसंयोगी नाग्र इत्यबाधितप्रत्यक्षेण मूलाग्रयोः संयोगतदभावावच्छेदकत्वविषयीकरणादिति चेन्न । वृक्षस्य मूले संयोगो नाग्र इति प्रतीत्यंतरानुरोधेन मूलाग्रनिष्ठसंयोगतदभावविषयत्वात्तत्प्रतीतेः। वृक्षादिरूपधर्मिण्येव संयोग तदभावभानांगीकारे ग्रामे चैत्रबुभुत्सया अस्मिन्ग्रामे चैत्रोऽस्ति न वेति पृष्टे तद्ग्रामे चैत्रस्य सत्वे तद्ग्रामे चैत्रोऽस्तीति वादिनो यथार्थवक्तृत्वं नास्तीति वादिनोऽनृतवक्तृत्वं सर्वसंमतं न स्यात् । ग्रहांतरावच्छेदेन चैत्राभावस्यैव त्वन्मते सत्वेन तस्यानृतवादित्वस्योपपादयितुमशक्यत्वात् । नच नञ्समभिव्याहारस्थलेऽनवाच्छिन्नाविशेषणतैव संसर्ग तया भासते । तादृशविशेषणतासंसर्गेण चैत्राभावस्य चैत्रवति ग्रामे असत्वात्तद्वाक्यस्या प्रामाण्यं युक्तमिति वाच्यं । अग्रे वृक्षो न संयोगीत्यत्रानुपपत्तिप्रसंगात् । अनवाच्छिन्नविशेषणतायां अग्रावच्छिन्नत्वस्यायोगात् । न चावच्छेदकबोधकासमभिव्याहृतनञ्समभिव्याहारस्थले एवानवच्छिन्नविशेषणतासंसर्गभाननियम इति वाच्यं । व्युत्पत्तिद्वय कल्पने गौरवात् । अवच्छेदकताख्यवस्तुन एवालीकतावादिनं प्रत्युक्तरीत्या व्यवस्थाकथनस्यायोगाच्च । अत्र वृक्षे कपिसंयोगाभावो नास्ति ·संयोग एव वर्तत इति विश्वजनीनव्यवहारस्याप्रामाण्यापत्तिरवच्छेदकपदासमभिव्याहृतत्वेनोक्तनञासंयोगाभावाभावात्मक संयोगस्यानवच्छिन्नसंबंधेनैव भानापत्त्या तस्य त्वन्मते बाधितत्वात् । नच तादृशवाक्यस्याप्रामाण्यमिष्टमेवेति वाच्यं। लोकानां तथा अनुभवाभावेन त्वदभ्युपगममात्रस्याप्रयोजकत्वात् । नच मूले वृक्षः संयोगी नाग्र इति वाक्येन वृक्षे संयोगतदभावावेव बोध्येते तदभिलाप्य प्रतीतिस्तु मूलाग्रनिष्ठसंयोगतदभावविषयकत्वामित्ययुक्तं। शब्दस्य तादृशार्थे पारिभाषिकत्वापत्तेरिति वाच्यं । द्रव्ये संयोगाभावो द्रव्यत्वसमानाधिकरणो गुणे संयोगाभावो न द्रव्यत्वसमानाधिकरण इति वाक्यस्य संयोगाभावनिष्ठं द्रव्यत्वसामानाधिकरण्यं द्रव्यनिरूपितं न गुणनिरूपितमित्यर्थे द्रव्ये संयोगाभावः प्रतियोगिसमनाधिकरणो गुणे संयोगाभावः प्रतियोग्यसमानाधिकरण इति वाक्यस्य संयोगाभावनिष्ठसंयोगसामानाधिकरण्यं द्रव्यनिरूपितं न गुणनिरूपितमित्यर्थे शशशृंगं नास्तीत्यादिवाक्यानां शशे शृंगाभाव इत्याद्यर्थे प्रकृतवाक्यस्यैव भेदबोधसमर्थस्यात्यंताभावरूपार्थे पारिभाषिकत्वस्यैव परैरभ्युपगतत्वेन मयापि तथाभ्युपगमे बाधकाभावात्। भावाभावयोः सामानाधिकरण्यस्य तन्निर्वाहकावच्छेदकांतरादिकल्पनात् उक्तरीत्यनुसरणस्यैव युक्तत्वात्।वस्तुतो मूले वृक्षः संयोगीति वाक्ये सप्तम्यर्थमूलनिष्ठत्वं संयोग एवान्वेति । एवं नाग्र इत्यत्रापि सप्तम्यर्थौ

भाव एवान्वेति । तथाच मूलनिष्ठसंयोगसंबंधी वृक्षोऽग्रनिष्ठतदभावसंबंधी चेति बोधः । संबंधश्च तद्घटितपरंपरैव । तथाच नोक्तवाक्यस्य पारिभाषिकताप्रसक्तिः । नच संयोगस्य मूलनिष्ठत्वे वृक्षस्य तदाश्रयत्वानुपपत्त्या वृक्षः संयोगीति प्रतीतिव्यवहारयोरप्रामाण्यापत्तिः । एवमग्रस्यैव संयोगाभावाश्रयत्वे वृक्षस्य तदनाश्रयत्वेन संयोगतदभाववद्विलक्षणत्वेन वृक्षस्यानिर्वचनीयता च स्यात् । यदि च वेदांतनये अंशांशिनोरभेदात् मूलस्य कपिसंयोगाश्रयत्वे तदभिन्नवृक्षस्यापि संयोगाश्रयत्वं ब्रूषे तर्ह्यग्रस्य संयोगाभावाश्रयत्वे तदभिन्नवृक्षस्य संयोगाभावाश्रयत्वस्यापि प्राप्त्यैकास्मिन् भावाभावोभयसत्तानिर्वाहायावच्छेदकभेदाश्रयणं युक्तमेवेति वाच्यं । वृक्षो न संयोगीति वृक्षे न कपिसंयोग इति प्रमायास्त्वन्मतेऽपि विरहेण वृक्षस्याग्राभिन्नत्वेऽपि संयोगाभावाधिकरणत्वानंगीकारात् वृक्षः संयोगीति प्रमायाः सर्वसिद्धत्वेन संयोगाधिकारणत्वाभ्युपगमात् । नहि तदाश्रयाभेदमात्रं तदधिकरणतायां प्रयोजकं किंतु तेन सह निर्विशेषात्यंताभेदमात्रं । मूलाग्रादीनां वृक्षेण सह भेदाभेदस्यैव सत्वात् । अग्रस्य वृक्षाभेदसत्वेऽपि न तन्निष्ठसंयोगाभाववत्वं । तदभेदमात्रस्य तन्निष्ठधर्मवत्तायां नियामकत्वे परेषामपि व्यवहारे भट्टमतमनुसरतां मूलाग्राद्यभेदस्य भेदसाहितस्य वृक्षेंऽगीकृतत्वेन वृक्षरूपावयविनोऽप्यग्रत्वमूलत्वाधिकरणत्वप्राप्त्या वृक्षो मूलमग्रं चेति प्रतीत्यापात्तिः । एवं दंडविशिष्टचैत्रयोर्भेदाभेदेपि दंडरूपविशेषणनाशाद्दंडविशिष्टनाशोत्पत्तिव्यवहारवत् चैत्रस्यापि नाशव्यवहारापत्तिः । सत्वोपहितब्रह्मणः शुद्धेन सह तादात्म्यात्सत्वादिधर्माणां शुद्धेप्यंगीकारस्तन्निष्ठमिथ्यात्वानित्यत्वादिधर्माणां तु नांगीकारस्तेषां ब्रह्मणि प्रतीतिव्यवहारयोरभावादिति परैर्बहुशः अद्वैतचंद्रिकादावुपपादयद्भिरभेदमात्रमप्रयोजकीकृत्य प्रमाणमात्रस्य शरणीकृतत्वात् । अत्रापि तथैवोपपत्तिः । नैय्यायिकं प्रत्युक्तरीत्योपपादनासंभवेऽपि अन्यदेव वक्तव्यं । तथाहि मूले वृक्षः कपिसंयोगीति प्रतीत्यनुसारेण मूलावच्छेदेन वृक्षवृत्तिसंयोगांगीकारे वृक्षस्य मूले संयोग इति प्रतीत्यनुरोधान्मूले संयोगांतरमभ्युपेयं । तस्यैव मूलनिष्ठत्वे मूले मूले कपिसंयोग इति प्रतीत्यापात्तिः । वृक्षवृत्तित्वेन मूलावच्छेद्यत्वं नतु मूलवृत्तित्वेनेत्यभ्युपगमे संयोगनिष्ठवृक्षवृत्तित्वादेस्तन्निष्ठमूलावच्छेद्यत्वं प्रत्यवच्छेदकत्वादिकमप्रामाणिकं कल्पनीयं । मूलावच्छेद्यत्वाभावस्यापि संयोगे मूलवृत्तित्वावच्छेदेनेदानीमंगीकृततया संयोगे मूलावच्छेद्यत्वाभाववतात्पर्येण न मूले वृक्षः संयोगीति व्यवहारापत्तिश्च । वृक्षवृत्तित्वस्य संयोगांशे ऽप्रकारतया नञर्थाभावावच्छेदकत्वेन भानस्य वक्तुमशक्यतया तदंशस्य बाधितत्वेन तद्वाक्याप्रामाण्यस्य वक्तुमशक्यत्वात् । ननु वृक्षवृत्तिसंयोगान्मूले प्रतीयमानः संयोगो भिन्न एवेति मम सिद्ध एव । मूलकपिसंयोगरूपकारणाकारणसंयोगाद्वृक्षकपिसंयोगरूपकार्यकारणसंयोगस्य मयोत्पत्त्यंगीकारात्तत्र किं बाधकमिति चेत् । शृणु । मूलस्यापि त्वन्मते नाना भागानां तत्कारणीभूतावयवरूपाणामंगीकृतत्वेन मूलेऽप्येतद्भागे संयोग इति प्रतीत्यनुरोधात् मूले तद्भागावच्छिन्नः संयोगः मूलस्य तद्भागे संयोग इति प्रतीत्यनुरोधात् मूलनिष्ठसंयोगादन्यस्तद्भागे संयोगोऽगीकर्तव्यः । एवं क्रमेण सूक्ष्मसूक्ष्मतरद्व्यणुकत्र्यणुकादिपदार्थसंयोगानां सूक्ष्मेषु वृक्षभागेषूत्पात्तिः स्यात् । तथाच तेषां परस्परकार्यकारणभावापन्नत्वे वृक्षस्य सूक्ष्मावयवेषु संयोगोत्पत्तिक्रमेण वृक्षे संयोगोत्पत्तिप्राप्त्या तस्य प्रहरादिकालविलंबितत्वप्राप्त्या वृक्षे कपिपातानंतरं प्रहरादिविलंबेन कपिसंयोगप्रत्ययः प्रसंगः । कपितदवयवक्रियाभिर्युगपदेव सर्वसंयोगोत्पत्त्यंगीकारे सर्वत्रापि कारणकार्यादिनिष्ठसंयोगानां पदार्थांतरक्रियाभिः स्वक्रियाभिर्वोत्पत्तिसंभवेन संयोग-

जसंयोगप्रक्रियाभ्युपगमस्य निर्मूलत्वापत्तिः। पक्षद्वयेऽपि वृक्षतन्मूलतदवयवेष्वपि प्रतीयमानसंयोगैक्यानुभवविरोधः। यो वृक्षे संयोगः स एव तन्मूले इति सार्वलौकिकप्रतीतेः। अन्यथा संयोगबहुत्वप्रत्ययप्रसंगतत्प्रतिबंधकादिकल्पने अप्रामाणिककल्पनया गौरवं। नच घटपटसंयोगस्थले त्वयापि घटपटयोः पृथक्संयोगद्वैविध्यमंगीकृतमिति तत्र संयोगद्वयप्रतीत्यापत्तिर्ययारीत्या वार्यते तयैव रीत्या मयाऽप्युक्तापत्तिर्वार्येत इति वाच्यं। घटः पटेन संयुक्तः पटो घटेन संयुक्त इति संयोगद्वैविध्यस्यैव स्फुटं प्रतीयमानत्वेन तद्वारणवर्त्मन एव ममानभिमतत्वात्। नच घटः पटेन द्वित्ववान् पटश्च घटेन द्वित्ववानिति प्रत्ययानुरोधात्। घटपटयोः पृथक् द्वित्वद्वयं स्यादिति वाच्यं। इमौ द्वावितिवदयं द्वाविति प्रत्ययाभावेन द्वित्वस्यैकमात्रवृत्तित्वाभावस्यैव सिद्धौ घटप्रयोज्यद्वित्वनिरूपिताधिकरणताया एव पटे भानांगीकारात्। तत्र स्वविषयकापेक्षाबुद्धिद्वारा जन्यत्वरूपतत्प्रयोज्यत्वस्यैव तृतीयार्थत्वात्। अन्यथा संयोगस्येव द्वित्वस्यापि सप्रतियोगिकत्वादिसिद्ध्यापत्तेर्द्वित्वप्रतीतेः संयोगप्रतीतिवैलक्षण्यस्य सर्वैरभ्युपगंतव्यत्वात्। तस्माद् वृक्षमूलरूपांशयोरभेदेन वृक्षे संयोगवत्वं वृक्षः संयोगीति प्रत्ययानुरोधात् स्वीक्रियते वृक्षो न संयोगीत्येव प्रमाभावात् वृक्षे संयोगाभावो न स्वीक्रियत इत्येव स्वीकर्तव्यं भवतापीति। नच मूलस्य वृक्षावयवत्वेन तत्कारणस्य कथं वृक्षाभेद इति वाच्यं। कारणातिरिक्तांशांगीकारस्य तव बलादापत्तेः। तथाहि यत्रैकेनैव शतव्याममहातंतुना केनचित्कुशलेन पटो निर्मितः। तत्र पटासमवायि कारणं तादृशतंत्वंशानां परस्परसंयोग एव वाच्यः। तादृशांशानां तादृशतंतुरूपावयविसमवायिकारणत्वे तादृशतंतुरूपद्रव्यांतरस्य समवायेनाधिकरणे पटरूपद्रव्यांतरस्योत्पत्त्ययोगः। द्रव्यत्वावच्छिन्नं प्रति समवायसबंधावच्छिन्नद्रव्यत्वावच्छिन्नाभावस्य कारणत्वात्। तथा चावयवातिरिक्तांश आवश्यक इति। वस्तुतस्तु कार्यकारणभावापन्नत्वेन नैय्यायिकाभिमतमृत्पिंडघटादीनामभेद एव नतु आत्यंतिकभेदः अंशास्तु हस्तवितस्त्यादयोऽनुभवसिद्धा एवेत्याकरे व्यवस्थापितं। उक्तरीतिमनादृत्य सप्तम्यंतोल्लेख्यप्रतीतिबलादवच्छेदकाभ्युपगमे परमाणुद्वयसंयोगस्यावच्छेदकासिद्धिः स्यात्। तस्य निरवयवत्वेनावयवेष्ववच्छेदकत्वावगाहिप्रमानुदयात्। नच परमाणौ प्राच्यां परमाण्वंतरसंयोग इति प्रत्ययानुरोधात्प्राच्यादेरेवावच्छेदकत्वमिति वाच्यं। अवच्छेद्याधिकरणासंबद्धस्यावच्छेदकत्वेऽतिप्रसक्तेस्तत्संबद्धस्यैवावच्छेदकत्वे वक्तव्ये प्राचीदिक्पदार्थभूतमूर्तविशेषपरमाण्वोः संबंधस्यैवानिरूपणात्। नच दिक्कृतविशेषणतैव तादृशः संबंध इति वाच्यं। दिक्कृत विशेषणतायाः नैय्यायिकैरेव निराकृतत्वात्। तदंगीकर्तृनये परस्या अवच्छेदकतायाः संयोगसमवायादिना स्वासंबद्धनिष्ठाया दिक्कृतविशेषणतासंबंधावच्छिन्नायाः कालिकविशेषणतासंबंधावच्छिन्नाया इव विलक्षणत्वापत्त्या देशविधया कालविधया चावच्छेदकतेति अवच्छेदकताद्वयस्यैव स्वीकारानुपपत्तिः। किंच परमाणोरियं प्राचीति व्यवस्थैव न घटते। स्वसंयुक्तदेशापेक्षयोदयगिरिसंनिहितमूर्तस्यैव प्राचीपदार्थतया परमाणाववच्छेदकदौर्लभ्येन संयोगानुपपत्तौ उक्तप्राचीत्वस्यैव तदीयस्यायोगात्। ननु वृक्षे प्राच्यां कपिसंयोग इति प्रत्ययस्य कथं भवन्मत उपपत्तिः। एकस्मिन् संयोगे प्राचीवृक्षोभयनिष्ठत्वस्य भवन्मतेपि बाधितत्वात्। प्राच्यास्त्वन्मते महादिङ्निरूपितस्वाभाविकांशभूतायाः वृक्षाभिन्नत्वाभावात्। वृक्षानिष्ठसंयोगे प्राच्यवच्छिन्नत्वस्य त्वयानंगीकारात्।

मैवं। प्राच्यामिति वृक्षे इत्यनेनान्वितं । तथाच प्राचीवृत्तित्वविशिष्टे वृक्षे वा वृक्षसंबन्धत्वविशिष्टप्राच्यां वा कपिसंयोगो भासते । प्राच्यवच्छिन्नवृक्षे संयोगः वृक्षावच्छिन्नप्राच्यां च संयोग इति वाक्यार्थसमानविषयकत्वानुभवानुरोधात् । वृक्षप्राच्यादेः किंचिन्निष्ठावच्छेदकत्वानिरूपकत्वेन तत्रावच्छिन्नपदस्य विशिष्टार्थत्वात् । प्रतीच्यां वृक्षे प्रतीच्यवच्छिन्ने वा वृक्षे कपिसंयोग इति प्रतीत्यभावस्तु विशिष्टे इतरान्वयस्थले तद्विशेषणेपि तज्ज्ञानस्य सर्वसंमतत्वेन प्रतीचीरूपविशेषणांशे कपिसंयोगस्य बाधितत्वादुपपद्यते । नचैवं प्राच्यां वृक्षे कपिसंयोग इत्यस्याप्यनुपपत्तिः । वृक्षनिष्ठकपिसंयोगस्य प्राचीनिष्ठसंयोगादन्यत्वेन वृक्षान्वयिनः संयोगस्य प्राच्यनन्वितत्वादिति वाच्यं । सपुत्रश्चैत्रो गतः, रूपविशिष्टो घटो नित्य, इत्यत्र विशिष्टान्वयस्थले चैत्रतत्पुत्रनिष्ठगमनकर्तृत्वयोः रूपघटनिष्ठध्वंसप्रतियोगित्वरूपानित्यत्वयोश्च भिन्नत्वेन तत्राप्यप्रामाण्यापत्त्या तदन्वयितावच्छेदकधर्मावच्छिन्नस्य तद्विशेषणान्वयित्वस्यैव विशिष्टे तदन्वयपदार्थत्वेनोक्तस्थले तस्याबाधितत्वात् । प्रतीच्युपलक्षितवृक्षे कपिसंयोगप्रत्ययव्यवहारौ तवापीष्टौ । एतावतैवोपपत्तौ प्रतीच्यां वृक्षे संयोग इत्यादेरप्रामाण्योपपादनाय प्रतीच्यवच्छेद्यत्वस्य संयोगे भानाभ्युपगमेन तदप्रामाण्योपपादनमकिंचित्करं । नन्वेवं प्रतीच्यां न वृक्षे संयोग इति प्रतीतिव्यवहारयोरप्रामाण्यभिया वृक्षे प्रतीच्यवच्छेदेन संयोगाभावोऽवश्यमभ्युपेय इति विलक्षणावच्छेदकतासिद्धिरिति चेन्न । प्रतीचीरूपविशेषणांश एव संयोगाभावभानाभ्युपगमात् । गुणान्यत्वविशिष्टसत्ता न गुणे रूपविशिष्टघटे न द्रव्यत्वं किंतु केवले शिखी नष्ट इत्यादिवत् । अन्यथा रूपावच्छेदेन घटे द्रव्यत्वाभावस्य सत्तायां गुणान्यत्वावच्छेदेन गुणवृत्तित्वाभावस्य चैत्रे जीवति शिखावच्छेदेन नाशप्रतियोगित्वादीनां स्वीकारापत्तिः । तत्र विशेषणांश एव तद्भानाभ्युपगमेन सर्वोपपत्तौ विशेष्यीभूतघटादावपि द्रव्यत्वाभावादिसंबंधकल्पने गौरवं चेदत्रापि तथैवास्तु । विशेषणांशे तत्सत्तायास्तत्रेवात्रापि क्लृप्तत्वात् । विशिष्टस्य विशेष्याद्भिन्नाभिन्नस्य स्वीकारे तु प्रतीचीवृत्तित्वविशिष्टवृक्षाख्ये वस्तुनि कपिसंयोगाभावांगीकारान्न काचित्क्षतिः । मूलाग्रयोर्वृक्षांशत्वेपि प्रत्येकांशैर्वृक्षस्य भेदस्यापि सत्वेन तस्य मूलादिभिराधाराधेयभावादिसंबंधाभ्युपगमे मूले वृक्षः संयोगी नाग्र इत्यादावपि प्राच्यां वृक्षः संयोगी न प्रतीच्यामित्यादावुक्तरीतिरेवानुसंधेया। इदानीं गोष्ठे गौर्न मंदुरायामित्यत्राप्येतत्कालवृत्तित्वविशिष्टगोव्यक्तेः गोष्ठवृत्तित्वं मंदुराऽवृत्तित्वं वा गोष्ठवृत्तित्वविशिष्टगवस्यैतत्कालवृत्तित्वं मंदुरावृत्तित्वविशिष्टगवस्यैतत्कालावृत्तित्वं वा प्रतीयते नत्वेतत्काले गोष्ठावच्छेदेन गौर्मंदुरावच्छेदेन तदभावश्च । उक्तरीत्यैवोपपत्तावप्रामाणिकावच्छेदकताभानांगीकारायोगात् । इदानीं गोष्ठे गौर्न तदानीमित्यत्रापि गोष्ठ एव कालविशेषावच्छेदेन गोतदभावौ न प्रतीयेते । देशवृत्तित्वविशिष्टगवस्य काले कालवृत्तित्वविशिष्टगवस्य देशे वा निषेधभानस्य प्रतीत्यंतरानुरोधेन क्लृप्तस्यैवाभ्युपगमेन निर्वाहे एकस्मिन्नेव तत्तदभावभानस्याप्रामाणिकत्वात् । अग्रे वृक्षो न कपिसंयोगी इत्यादौ अग्रादिसंबंधविशिष्टवृक्षादिसंबन्धसंयोगादीनामप्रामाणिकानामेवाभावभानाभ्युपगमे तु वृक्षे प्रतीयमानसंयोगादन्यस्यासत एवाभावप्रतियोगितया भानेन नैकस्मिन् तत्तदभावौ सेत्स्यतः । नच प्रतियोग्यधिकरणे तद्ध्वंसप्रागभावयोरंगीकारात्तेषां विरोधघटितयेऽवच्छेदककालभेदोऽभ्युपेयस्त्वयापीति वाच्यं । तयोः प्रतियोगिना सह कालिकविरोधस्यैवाभ्युपगतत्वेन दैशिकविरोधानंगीकारात् । अप्रामाणिक-

प्रतियोगिकस्यैवात्यंताभावस्यांगीकारपक्षे तत्रापि दैशिकविरोधवार्ताभावात् । एवमव्याकृतांशानामपि परस्परमभेदपक्षेपि सविशेषाभेदस्य अंशिनापि सह तादृशाभेदस्यैव सत्वेन प्रतियोगितदभावादिसत्वादौ * सर्वापि पूर्वोक्तरीतिरनुसंधेया । नच सप्तम्या अवच्छेदकतार्थकत्वस्य वीणायां शब्द इत्यादौ दृष्टत्वात्तदनुरोधेन मूले वृक्षः संयोगीत्यादौ अवच्छेदकताबोधो युक्त इति वाच्यं । मन्मते कारणगुणानां कार्यसंक्रमांगीकारेण वीणायामपि पृथिव्यात्मिकायां शब्दाधिकरणत्वाक्षतेस्तत्र सप्तम्या अवच्छेदकतार्थकत्वाभावात् । अवच्छेदकताख्यपदार्थ एव नास्तीति वादिनः सप्तम्यास्तदर्थत्वस्याक्लृप्तत्वाच्च । एतज्जातीयावच्छेदकतायाः सप्तमीसमभिव्याहारस्थले बोधांगीकारे 'लोहितो यस्तु वर्णेन मुखे पुच्छे च पांडुरः ॥ नीलः खुरविषाणाभ्यां स मेध्यः पशुरुच्यते॥' इत्यत्र सप्तम्या अवच्छेदकतार्थकत्वे रूपस्याप्यव्याप्यवृत्तित्वापत्त्या चित्ररूपांगीकारवैयर्थ्यापत्तेः। एवं 'अकृशं कुचयोः कृशं वलग्ने विपुलं चक्षुषि विस्तृतं नितंबे ॥ अधरेऽरुणमाविरस्तु चित्ते करुणाशालि कपालिभागधेयं ॥' इत्यादौ सप्तम्या अवच्छेदकत्वार्थकत्वांगीकारे अपार्थकत्वापत्तिः। अकृशत्व विस्तृतत्वादीनां कुचादिनिष्ठबव्हवयवसमवेतत्वादिरूपाणां परिमाणविशेषरूपाणां वा कुचाद्यवच्छिन्नत्वायोगात् । नहि शरीरस्य कार्श्यं पौष्ट्यं वा वलग्नकुचाद्यवच्छिन्नं युक्तं । एकस्यावयवस्य कृशत्वे पुष्टत्वे शरीरं कृशं पुष्टमिति व्यवहारापत्तेः । नच भूयसामवयवानां संयोग एव पौष्ट्यं । अल्पीयसामवयवानां संयोग एव कार्श्यं तेषां किंचिदवच्छिन्नत्वं युक्तमिति वाच्यं । तेषां तदवयवनिष्ठानां तावदवयवसमवेतकुचवलग्नाद्यवच्छेदेन शरीरवृत्तित्वायोगात् । तस्मान्मुखरूपावयवनिष्ठपांडुरत्वादीनां कुचरूपावयवनिष्ठाकार्श्यादीनां तद्घटितपरंपरासंबंधेनाधिकरणता तादृशवाक्याद्बोध्यत इत्येव वक्तव्यं । तथाच मूले वृक्षः कपिसंयोगीत्यस्यापि तदविशेषात्कुतो अवच्छेदकत्वार्थकत्वे प्रत्याशा । सप्तम्यास्तदभिलाप्यप्रत्यक्षस्याप्यवच्छेदकत्वावगाहित्वं । किंच भावाभावयोरेकास्थितिनिर्वाहिकावच्छेदकतायाः सप्तमीबोध्यत्वे घटपटोभयनिष्ठद्वित्वाभावस्य प्रत्येकवृत्त्येकत्वावच्छेदेनोभयत्वस्य द्वित्वांतरावच्छेदेन त्वदंगीकृतत्वात् । घटपटयोर्द्वित्वे द्वित्वं घटे एकत्वेन द्वित्वमिति प्रतीतिव्यवहारयोरापत्तिः । नच सा अव्याप्यवृत्तितानिर्वाहिकाप्येतदवच्छेदकताविजातीयैव सा न सप्तमीवाच्या । किंत्वधिकरणे विशेषणतयैव भासमानं द्वित्वादिकं संसर्गतयैव भासत इति वाच्यं । द्वित्वाधिकरणे घटे द्वित्वाभावस्यैवाप्रामाणिकतया तन्निर्वाहायावच्छेदकताभानादिकल्पनायोगात् । नच इमौ द्वौ न त्वेक इत्यादिप्रतीतिरेव प्रत्येकं द्वित्वाद्यभावसत्वसाधिकेति वाच्यं । तत्र द्वित्वत्रित्वादावेकमात्रवृत्तित्वादेरभावबोधनात् । अभिलापकवाक्येऽप्येकादिपदानां सावधारणत्वात् । अन्यथा रूपघटौ न गुणौ न द्रव्ये किंत्वेक एवेत्यादिव्यवहारतन्मूलप्रतीत्यनुरोधात् रूपघटोभयत्वावच्छेदेन रूपे गुणत्वाभावः घटे द्रव्यत्वाभावोऽपि सिध्येदविशेषात् । यदिच रूपघटोभयनिरूपितवृत्तित्वाभावस्य द्रव्यत्वे गुणत्वे क्लृप्तस्यैव भानाभ्युपगमसंभवे रूपादौ उभयत्वाद्यवच्छेदेन तदभावसंबंधकल्पने

टिप्पणी— * प्रतियोग्यधिकरणेन निर्विशेषात्यंताभिन्ने तदभावस्य न सत्वमिति नियमो वा अत्यंताभावो असत्प्रतियोगिक एवेति नियमपक्षे न, प्रतियोग्यधिकरणवृत्तित्वप्रसक्तिरभावस्येत्युक्तरीतिरित्यर्थः ।

गौरवं। केवलान्वयिभिन्नव्याप्यवृत्तिधर्ममात्रविलोपापत्तिश्च । अतस्तादृशवाक्यमुक्तार्थे पारिभाषिकं तद्बोधो वा कथंचिदुपपाद्यस्तन्मूलभूतप्रतीतिरपि न द्रव्यत्वाद्यभावविषयिणी किंतु द्रव्यत्वादावुभयवृत्तित्वाभावविषयिणीति मन्यसे तत्सर्वं प्रकृतेऽप्यविशिष्टं। प्रत्येकैकमात्रवृत्तित्वाभावस्य द्वित्वादौ क्लृप्तत्वात्। रूपे न गुणत्वमिति प्रतीत्यभाववद्घटे द्वित्वं नास्तीति प्रतीत्यभावस्यापि तुल्यत्वात्। एवं हस्ते मे सुखं पादे मे दुःखमित्यत्रापि देहात्मतादात्म्यभ्रमांगीकर्तृपक्षे देहांशस्यैव हस्तादेरात्मांशत्वग्रहस्यावर्जनीयतया मूले वृक्षः संयोगीत्यत्रैवोपपत्तिरूह्या। तदनंगीकारेऽपि सुखदुःखादिसाधनीभूतपदार्थसंबंधतज्जन्यविकृतिविशेषादीनां हस्तादिभावनिष्ठत्वावगाहितया तत्प्रतीत्युपपत्तिः। सिद्धांते अणोरपि जीवस्यांशेन शरीरव्याप्तत्वादंतःकरणपरिणामभूतसुखदुःखादीनां तत्तदंशेन साक्षात्कारात्तादृशप्रतीत्युपपत्तिः। हस्तनिष्ठत्वस्यांशेष्वेव भानात्। एवं घटे इदं ज्ञानं घटत्वप्रकारकं न घटत्वे इत्यत्रापि घटविशेष्यतानिरूपितत्वं घटत्वप्रकारतायां भासते न तु घटावच्छेदेन घटत्वप्रकारकत्वं। अन्यथा इदं ज्ञानं घटत्वांशे घटविशेष्यकं घटविषयकमित्यादिप्रतीतेरवारणीयतया घटविशेष्यकत्व घटविषयकत्वादेर्घटत्वप्रकारकत्वावच्छेद्यत्वासिद्ध्यापत्त्या तस्याप्यव्याप्यवृत्तित्वापत्तेः। तस्मान्न कुत्राप्यव्याप्यवृत्तित्वनिर्वाहकविलक्षणावच्छेदकतासत्त्वे मानं तन्निर्वाह्यमव्याप्यवृत्तित्वं चेति स्थितं। न चैवमपि कार्यकारणादीनां भेदाभेदयोस्त्वयांऽगीकृतत्वादवच्छेदकभेदं विना विरुद्धयोस्तयोः कथमेकत्र स्थितिरिति वाच्यं। भेदाभेदवादिभिस्तयोर्विरोधस्यैवानंगीकारेणैकावच्छेदेनैव तयोर्वृत्तेरंगीकारात्तत्रावच्छेदककल्पनस्याकिंचित्करत्वात्। अत्यंतभेदस्यैवाभेदासामानाधिकरण्यरूपविरोधस्यांगीकृतत्वात्। अत्यंतभेदसामानाधिकरण्यासहिष्णोरप्यभेदस्य तज्जातीयभेदविशेषसामानाधिकरण्यं तु सिद्धांते विशेष शक्त्योपपाद्यते। अन्यैः रीत्यंतरेणेत्यन्यदेतत्। यथा विशेषस्य पराभिमतावच्छेदकतावैलक्षण्यं तथा विशेषनिरूपण एव वक्ष्यामः। एवं पराभिमतः प्रतियोगिताकारणत्वाधारत्वादिनिरूपितावच्छेदकताख्याविलक्षणपदार्थो धर्मसंबंधादिनिष्ठो अप्रामाणिक एव। ननु कथं प्रमाणाभावः। घटो नास्तीति प्रतीत्या घटत्वे प्रतियोगितावच्छेदकत्वावगाहनात्। तत्र घटप्रतियोगिकत्वेनैवाभावभानांगीकारे घटवति भूतलेऽपि घटो नास्तीति प्रतीतिव्यवहारयोरापातात्। नच घटत्वादेः प्रतियोगितावच्छेदकत्वसत्त्वेपि कदाचिद्घटप्रतियोगिकत्वमात्रेण तादृशाभावभाने तत्तात्पर्यकव्यवहारे बाधकाभावात्। तादृशवाक्यप्रामाण्यादाविष्टापत्तौ व्यर्थोऽवच्छेदकत्वाभ्युपगमः। नहि तद्व्यवहारे तत्प्रतीतौ वा तत्र विद्यमानं सर्वं भासत एवेति नियमः। तथात्वे घटादिरूपाद्यविषयकव्यवहारस्य तत्परिमाणविशेषाद्यविषयकसंमुग्धज्ञानस्य चाभावापत्तेरिति वाच्यं। नञभिलाप्यप्रतीति तद्घटितव्यवहारयोः प्रतियोग्यंशे यादृशधर्मः प्रकारतया भासते तद्धर्मावच्छिन्नप्रतियोगिताकत्वेनैवाभावावगाहित्वनियमांगीकारेणोक्तदोषाभावात्। मैवं। उक्तनियमांगीकारेऽपि नीलघटवति विद्यमानरक्तघटत्वावच्छिन्नप्रतियोगिताकाभावस्य घटत्वावच्छिन्नप्रतियोगिताकत्वाव्याहत्या पूर्वोक्तातिप्रसंगतादवस्थ्यात्। रक्तत्वघटत्वोभयपर्याप्ताया अप्यवच्छेदकतायाः घटत्वपर्याप्तत्वाक्षत्या घटत्वपर्याप्तावच्छेदकता भासते इत्युक्तावप्यनिस्तारात्। घटत्वनिष्ठरक्तत्वनिष्ठावच्छेदकत्वयोरनवच्छिन्नत्वावछिन्नत्वरूपविरुद्धधर्मशालिनोर्भिन्नतया प्रत्येकमेव पर्याप्तत्वेन घटत्वमात्रपर्याप्तावच्छेदकतेत्युक्तावप्यनिस्तारः। नच तत्प्रतियोगितानिरूपितावच्छेदकतात्वेनान्यापि पर्याप्ति-

घटत्वरक्तत्वोभयनिष्ठा स्वीक्रियते । तादृशपर्याप्तिप्रतियोग्यवच्छेदकतानिरूपकप्रतियोगितासंसर्गतया रक्तघटो नास्तीत्यादौ भासते। घटो नास्तीत्यादौ स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगितानिरूपकपर्याप्त्यनुयोगितावच्छेदकघटत्वनिष्ठैकत्वकप्रतियोगितात्वेन वोक्ता या विलक्षणा पर्याप्तिस्तत्प्रतियोग्यवच्छेदकताकप्रतियोगितात्वेन वा संसर्गतया भासते। रक्तघटाभावे उक्तविलक्षणपर्याप्तिप्रतियोग्यवच्छेदकतानिरूपकप्रतियोगितासंबंधेन घटस्याभावान्न नीलघटादिमति भूतले रक्तघटाभावावगाहित्वेन घटो नास्तीत्यादिप्रतीतिव्यवहारयोः प्रामाण्यमिति वाच्यं। घटाभावस्थले या तत्प्रतियोगितानिरूपितावच्छेदकता तन्निष्ठतद्व्यक्तित्वावच्छिन्नप्रतियोगितानिरूपकपर्याप्त्यपेक्षया विलक्षणायास्तत्प्रतियोगितानिरूपितावच्छेदकतात्वाख्येन तन्निष्ठतद्व्यक्तित्वसमानियतधर्मेणावच्छिन्नप्रतियोगिताकपर्याप्तेः सत्वे मानाभावेन घटाभावादौ तद्घटितसंबंधस्याप्यप्रसिध्द्या तद्भानायोगात् ।नच प्रतियोगितैव निरूपितत्वसंबंधेन स्वावच्छेदकतासु विद्यमाना तन्निष्ठपर्याप्तिप्रतियोगितां प्रत्यवच्छेदिका स्वीक्रियते । साच स्वनिरूपितावच्छेदकतानां नानात्वे तासामनुगमिका । यत्र स्वनिरूपितावच्छेदकता एकत्रैव वर्तते तत्र तादृशावच्छेदकतानिष्ठतद्व्यक्तित्वात्मिकैवैतदन्यतद्व्यक्तित्वस्य तत्र सत्वे मानाभावात्। तदभावनिरूपिता या प्रतियोगितानिरूपितत्वसंबंधेन तद्विशिष्टत्वावच्छिन्नप्रतियोगिकपर्याप्तिरेव तादृशपर्याप्तित्वेनाभावबुध्धिनिष्ठनञ्समभिव्याहारविशिष्टवाक्यविशेषजन्यतावच्छेदककोटौ घटादिबुध्धिप्रतिबंधकतावच्छेदककोटौ च निवेश्यते। अनुगतव्यवहारोपि तथैव संगच्छत इति वाच्यं। घटाभावादिस्थलीयप्रतियोगितावच्छेदकताव्यक्तेस्तद्व्यक्तिर्घटत्वमात्रे वर्तत इति प्रतीतौ भानं वर्तते। तत्र भासमानं तद्व्यक्तित्वं वस्त्वंतरावगाहिप्रतीतौ यादृशरीत्या तदीयतद्व्यक्तित्वं भासते तथैव भासत इत्यभ्युपेयं। तदपेक्षयै तत्प्रतीतौ तद्व्यक्तित्वभानांशे वैलक्षण्यस्यानुभवविरुध्धत्वात्। तथा च यदि तद्व्यक्तित्वं सर्वत्राखंडो धर्मः स्वरूपसंबंधेन भासते तत्रापि तथैव। यदि नाखंडो धर्मः तत्स्वीकारे मानाभावात्। किंतु स्वयमेव स्वांशे तादात्म्येन स्वरूपतो भासमानं सत्तद्व्यक्तित्वमिति व्यवह्रियते इतरव्यावर्तकमपि भवतीत्युच्यते प्रकृतेऽपि तथैवेति निरूपितत्वसंबंधेन विद्यमानायाः तत्प्रतियोगिताव्यक्तेः कथमवच्छेदकतानिष्ठतद्व्यक्तित्वात्मकता। किंच सा प्रतियोगिता व्यक्तिः संसर्गनिष्ठावच्छेदकतायामपि निरूपितत्वसंबंधेन वर्तत इति उभयनिष्ठा कथमेकमात्रावृत्तितद्व्यक्तित्वरूपा भवेत्। अपिच सा प्रतियोगिताव्यक्तिः निरूपितत्वसंबंधेन वर्तते तदवच्छेदकतायां तन्निरूपिता घटत्वनिष्ठाधारता निरूपकतया वर्तते तदवच्छेदकतानिष्ठं यद्घटत्वनिष्ठरूपितमाधेयत्वं स्वरूपसंबंधेन विद्यमानं भवति। तथाच विनिगमनाविरहात् त्रयाणामपि तद्व्यक्तित्वरूपत्वापत्त्या तद्व्यक्तित्वे तदवगाहिप्रतीतीनामपि वैलक्षण्यं अनुभवविरुद्धं स्यात्। स्याच्च तत्तदवच्छिन्नप्रतियोगिकपर्याप्तीनां वैलक्षण्यं तत्तद्घटितप्रतिबंधकतावच्छेदकादिरूपबाहुल्यप्रयुक्तं प्रतिबंधकत्वादीनामपि बहुत्वं । अथ मास्तु घटाभावीयप्रतियोगितावच्छेदकतायास्तत्प्रतियोगितानिरूपितावच्छेदकतात्वेन विलक्षणा पर्याप्तिः तन्निष्ठतद्व्यक्तित्वावच्छिन्नप्रतियोगिकैव। सा च घटत्वमात्रे पर्याप्ता। न चैवं घटाभावनिश्चयनिष्ठघटवत्ताबुद्धिप्रतिबंधकतावच्छेदकादिकोटौ घटत्वमात्रपर्याप्तावच्छेदकत्वेन तन्निवेशेऽपि पूर्वोक्तरीत्या रक्तघटाभावादिबुद्धिव्यावर्तनानुपपत्तिरिति वाच्यं। तादृशपर्याप्तेरेव तद्व्यक्तित्वेन विलक्षणपर्याप्तित्वेन वा निवेशेन सामंजस्यात्। रक्तघटाभावादिनिश्चयस्थले पूर्वक्षणविशिष्टरक्तघटाभावादिनिश्चयव्यावृत्तये रक्तत्वघटत्वोभय-

निष्ठं यद्‌द्वित्वं तदवच्छिन्नानुयोगिकपर्याप्तिकावच्छेदकतात्वेन। यद्यपि तत्तद्धटनिष्ठं रक्तत्वं भिन्नं तत्तद्धटितोभयत्वं भिन्नं तत्तदवच्छिनानुयोगिकपर्याप्तयोपि भिन्नाः तथापि रक्तत्व-घटत्वोभयत्वावच्छिन्नानुयोगिकपर्याप्तित्वाख्यानुगतरूपेण तासां निवेशात् न तदननुगम-निबंधनो दोषः। नानाधर्माणामवच्छेदकत्वस्थले ऽवच्छेदकत्वानां तद्व्यक्तित्वावच्छिन्नप्रति-योगिपर्याप्तयो ऽन्याः तत्प्रतियोगितानिरूपितावच्छेदकतात्वरूपा अनुगतधर्मावच्छिन्नपर्या-प्तिश्चापरा पूर्वक्षणवृत्तित्वविशिष्टरक्तघटाभावादिस्थले तु अवच्छेदकत्वानां तत्तद्व्यक्तित्वाव च्छिन्नप्रतियोगिकपर्याप्तिः तत्तद्रक्तत्वघटत्वतत्तद्वैशिष्ट्यादौ तत्प्रतियोगितानिरूपितावच्छे-दकतात्वावाच्छिन्नप्रतियोगिकपर्याप्तिस्तु तत्तद्रक्तत्वघटत्वतत्तद्वैशिष्ट्यरूपत्रित्वावच्छिन्ने नतु घटत्वरक्तत्वोभयत्वावच्छिन्नानुयोगिकपर्याप्त्यंतरं मध्यपतितपर्याप्तौ मानाभावात्। तथा च रक्तत्वघटत्वोभयत्वावच्छिन्नप्रतियोगिकपर्याप्तिकावच्छेदकत्वत्वेन निवेशे पूर्वक्षण-विशिष्टरक्तघटाभावादिव्यावृत्तिः संभवत्येव। न चैवं शुद्धवन्हिसाधकव्याप्तेर्महानसीयव न्हिसाध्यकस्थलीयव्याप्तेश्चैकेन साध्याभाववद्‌वृत्तित्वमित्यादिशब्देन बोधनानुपपत्तिः तस्य साध्यतावच्छेदकपर्याप्तावच्छेदकताकाभावघटितार्थकत्वे महानसीयवन्ह्यभावाद्यव्या-वर्तनाद्दोषः। साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकावच्छिन्ना-नुयोगिकपर्याप्तिप्रतियोग्यवच्छेदकतानिरूपकप्रतियोगिताकाभावघटितार्थकत्वे वन्ह्यादिस्थले ऽप्रसिद्धिः। प्रतियोगितावच्छेदकताया इव वन्हित्वनिष्ठसाध्यतावच्छेदकताव्यक्तेस्तद्व्यक्तित्वे नैव पर्याप्तितया साध्यतावच्छेदकतात्वेनापर्याप्तिरिति वाच्यं। शब्दानुगमस्याकिंचित्करत्वेना नादर्तव्यत्वादतो न कोपि दोष इति चेन्मैवं। घटाभावादिनिश्चयस्य तादृशपर्याप्तिताव-च्छेदकताकाभावनिश्चयत्वेन प्रतिबंधकत्वे प्रमेयत्वादिना तन्निश्चयस्य प्रतिबंधकत्वापत्तेः। घटाभावत्वादिना पटाभावादिनिश्चयस्याप्रतिबंधकत्वापत्तेश्च। तादृशपर्याप्त्यादिघटित-रूपावच्छिन्नविषयकत्वनिश्चयत्वेन प्रतिबंधकत्वादौ वक्तव्ये तत्र तत्तत्पर्याप्त्यसाधारणी-भूततादृशरक्तत्वघटत्वोभयत्वावच्छिन्नानुयोगित्वादिधर्मस्फुरणाभावेन रक्तघटो नास्ती-त्यादिबुद्धेस्तद्वत्ताधीविरोधित्वाभावापातात्। रक्तत्वघटत्वोभयोरेवोपस्थितत्वेन तन्नि-ष्ठोभयत्वादेरस्फुरणात्। नच संसर्गघटकतया भावेन पूर्वं तदुपस्थित्यपेक्षेति वाच्यं। एव मपि रक्तत्वादौ प्रत्येकं पर्याप्तीनां तन्निष्ठैकत्वावच्छिन्नानुयोगिकानां तावत्साधा-रणोभयत्वावच्छिन्नापरपर्याप्तेस्तद्भानस्य तादृशप्रतीतावप्रामाणिकस्य कल्पनया महा-गौरवेण प्रतिबंधकतावच्छेदकादिधर्मनिर्वाहापेक्षया तादृशप्रतियोगिताव्यक्तावेवावच्छेद-कतानिरूपकत्वाद्यनिबंधनं स्वाभाविकं वैलक्षण्यमभ्युपगम्य सर्वस्य निर्वोढुं शक्यत्वेनाव-च्छेदकत्वादेरप्रामाणिकत्वात्। किंच रक्तघटाभावादिप्रतियोगितानिरूपितावच्छेदकतासंयो गसंसर्गादिष्वपि वर्तत इति तत्साधारणं तत्प्रतियोगितानिरूपितावच्छेदकतात्वं कथं तद्-वृत्युभयत्वावच्छिन्नानुयोगिकपर्याप्तिप्रतियोगितावच्छेदकं भवेत्। न चावच्छेदकतात्वव्याप्यं धर्मविधयाऽवच्छेदकतात्वाख्यं संसर्गविधया अवच्छेदकतात्वाख्यं च धर्मद्वयं तत्र तत्प्रतियोगितानिरूपितत्वविशिष्टाद्यधर्म एव तादृशपर्याप्त्यवच्छेदको ऽतो न दोष इति वाच्यं। एवमपि तत्तद्रक्तत्वघटत्वोभयत्वावच्छिन्नपर्याप्तीनां भिन्नतया तत्तत्प्रति-योगितानामपि तत्तन्निरूपितानां तत्तदवच्छेदकतानिष्ठानां भिन्नतया तत्तद्‌वृत्ति-प्रसक्तोक्तधर्मस्य तदवच्छेदकत्वायोगात्। नच रक्तत्वघटत्वोभयत्वावच्छिन्ना-नुयोगिकपर्याप्तिप्रतियोगितात्वेन तासामनुगमनान्न तदवच्छिन्नं प्रत्यतिप्रसक्तत्वमिति वाच्यं। तादृशानुगमकधर्मस्य संबंधांतरावच्छिन्नरक्तघटाभावादिप्रतियोगितावच्छेदकता-

पर्याप्तिप्रतियोगितास्वपि सत्वेनातिप्रसक्तत्वेन तत्प्रतियोगितानिरूपितत्वघटितोक्तधर्मं प्रत्यवच्छेद्यतावच्छेदकत्वायोगात्। नच यावंतोऽवच्छेद्या भवंति तावन्निष्ठान्यतमत्वमेव तदनुगमकमस्त्विति वाच्यं। तावन्निष्ठतत्तज्ज्ञानविषयत्वादीनामनंतानामपि विनिगमनाविरहेणावच्छेद्यतावच्छेदकत्वादिस्वीकारापत्त्याऽप्रामाणिकमहागौरवापत्तेः। न चातिप्रसक्तानामप्युक्तधर्माणां पर्याप्तिरूपसंसर्गप्रतियोगितावच्छेदकत्वादि स्वीक्रियते द्रव्यत्वसत्वादेर्घटादिसंयोगादिप्रतियोगितावच्छेदकत्वादिवदिति वाच्यं। दृष्टांतस्यैवासंमतेः। अभावघटयोरपि प्रतियोगितायाः संसर्गतया कार्यकारणयोस्तत्वयोः संसर्गतया तत्राप्यतिप्रसक्तन्यूनधर्माणामप्यविशेषेणावच्छेदकत्वापत्त्या अवच्छेदकानवच्छेदकभेदस्यैवासिद्धिप्रसंगात्। न ह्यत्र विनिगमकं मानमस्ति। नाप्यवच्छेदकतात्वतद्व्याप्यमुक्तधर्मद्वयं तादृशपर्याप्त्यादिकं च प्रामाणिकं येन तन्निर्वाहायैव सर्वमेतत्कल्पनार्हं स्यात्। नच शुद्धवन्हित्वं न महानसीयवन्ह्यभावीयप्रतियोगितावच्छेदकं किंतु वन्ह्यभावीयप्रतियोगितावच्छेदकं वन्हित्वं धर्मविधया प्रतियोगितावच्छेदकं संयोगस्तु संसर्गविधयाऽवच्छेदक इत्यादिप्रतीतयस्तत्प्रमाणानीति वाच्यं। लोके कस्याप्येतादृशप्रतीतेरभावात्। अन्यथा घटपटादिस्वरूपेष्विवावच्छेदकत्वस्वरूपे विवादस्यैवाभावप्रसंगात्। नैय्यायिकशास्त्रवासनाविजृंभितांतःकरणानां स्वबुद्धिमात्रपरिकल्पितप्रतीतिस्त्वकिंचित्करी। अन्यथा भट्टमतसिद्धप्रत्यक्षानुरोधेन ज्ञाततायास्तस्याः घटत्वप्रकारकत्वादेः सिद्धिप्रसंगात्। केवलमभावप्रतीतीनां वैलक्षण्यनिर्वाहायैतत्कल्पना तूभयसिद्धप्रतियोगितास्वेव वैलक्षण्यसिद्धान्यथासिद्धैव धर्मिकल्पनात इत्यादिन्यायात्। किं चैकत्वप्रागभावविशिष्टघटस्य संयोगेन योऽभावस्तस्य केवलान्वयित्वं संयोगेन तद्विशिष्टाधिकरणस्याप्रसिद्धेः। आद्यक्षण एवैकत्वप्रागभावस्य सत्वेन तदा घटस्य निर्गुणतया संयोगाप्रतियोगित्वात् तदुपलक्षितस्य तु संयोगेनाभावो व्यतिरेकी घटविरोधितयोर्वैलक्षण्यं तु नावच्छेदकवैलक्षण्यात्। उभयत्रैकत्वप्रागभावस्यैकस्यैवावच्छेदकत्वात्। किंतु प्रथमस्य प्रतियोगिताविशिष्टे पर्याप्ता द्वितीयस्य तु प्रतियोगिता एकत्वप्रागभावावच्छिन्ना शुद्धे पर्याप्तेति प्रतियोगितानिष्ठवैलक्षण्यमेव तत्रांततः शरणीकरणीयमिति सर्वत्रापि प्रतियोगितानिष्ठवैलक्षण्यमाश्रित्य घटो नास्तीत्यादिवाक्यकार्यतावच्छेदकं तादृशविलक्षणप्रतियोगिताविषयकबुद्धित्वमित्यादरेणैव रक्तघटवति घटो नास्तीत्यादेः प्रामाण्यवारणसंभवादंतर्गड्वच्छेदकत्वमप्रामाणिकमेव। तर्कालंकारादयस्तु महानसीयवन्ह्यभावादिस्थले महानसीयत्वनिष्ठावच्छेदकता महानसीयत्वत्वस्वरूपसंबंधाभ्यामवच्छिन्ना वन्हित्वनिष्ठा पुनःसमवायावच्छिन्नानवच्छिन्ना चातो नोभयत्रैकावच्छेदकताव्यासज्यवृत्तिः। अतः प्रत्येकमेव तयोः पर्याप्तिः। तत्प्रतियोगितानिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिके व्यासज्यवृत्तिपर्याप्त्यंतरे मानाभावः। नच वन्हित्वं न महानसीयवन्ह्यभावीयप्रतियोगितावच्छेदकमिति प्रतीत्यनुपपत्तिः। तादृशपर्याप्त्यंतरस्वीकारे तु तत्प्रतियोगितानिरूपितावच्छेदकतात्वावच्छिन्नस्य तेन संबंधेन व्यासज्यवृत्तित्वात् प्रत्येकं तदवच्छिन्नभेदस्य सत्वात्तत्प्रतीत्युपपत्तिरिति वाच्यं। लौकिकानां तादृशप्रतीत्यसिद्धेः। अथैवं सति मण्यभावादेर्दाहादिकं प्रति कारणतावच्छेदकानिरुक्त्ययोगः। मणित्वपर्याप्त्यवच्छेदकताकप्रतियोगिताकाभावत्वस्य क्षणविशेषविशिष्टमण्यभावसाधारण्यात्। नच मणित्वेतरानवच्छिन्ना सती मणित्वनिष्ठानवच्छिन्नावच्छेदकताकप्रतियोगितायाः तन्निरूपकाभावत्वमेव तथास्त्विति वाच्यं। उक्तप्रतियोगितायां क्षणविशेषवृत्तित्वावच्छिन्नत्वसत्वेऽप्यवच्छिन्नत्वघटोभयाभावादेः सत्वेन तदवारणात्। तत्राप्युक्तरीत्या

विशेषणांतरदाने तत्परंपरयाऽनवस्थया तद्घटितधर्मस्य दुर्ग्रहत्वापत्तेः। न चानुयोगिता-संबंधेन मणित्वविशिष्टमेवावच्छेदकमस्तु। यादृशानुयोगितानिरूपकतावच्छेदकतापरि-समाप्तिर्मणित्व एव तादृशानुयोगिताश्रयाभाव एव मणित्वविशिष्टं वर्तत इत्युक्तविशिष्ट मण्यभावव्यावृत्तिरिति वाच्यं। प्रमेयत्वविशिष्टवन्हिविषयकज्ञाने विषयितया वन्हेरिव विशिष्टमणिप्रतियोगिकेऽप्यभावेऽनुयोगितया मणिसत्वे बाधकाभावाद्विशिष्टमण्यभावाव्या वृत्तिः। एवं कारणतावच्छेदकत्वेनाभिमतस्याकारणसाधारण्यग्रहे तदवच्छिन्ने कारणत्वस्य दुर्ग्राह्यत्वापत्तिवारणाय मणेरनुयोगिताविशेषणाभावांतराद्व्यावृत्तत्वज्ञानं वाच्यं। तत्रानु योगिताविशेषपरिचयो यदि मणित्वपरिसमाप्तावच्छेदकताकनिरूपकताकत्वेन तदा मणित्वेत रवृत्तित्वप्रतियोगिताकाभावरूपपरिसमाप्तत्वस्योभयाभावमादायाव्यावृत्तत्वेनानवस्थयाऽ नुयोगिताविशेषपरिचयो दुर्घटः। ननु मणित्वान्यधर्मनिरूपितानि यानि यान्यवच्छेद्यत्वानि तत्तन्निष्ठतत्तद्व्यक्तित्वावच्छिन्नाभावकूटवत्प्रतियोगितात्वेन तत्परिचयो भवति। उक्तकूट-मध्ये अवच्छेद्यत्वनिष्ठतद्व्यक्तित्वमात्रावच्छिन्नाभावस्यापि पतितत्वात्। मणित्वान्यधर्मावच्छिन्ना प्रतियोगिता न तादृशकूटवतीति न तद्व्यावृत्तिः। मणित्वान्यत्वं मणित्वप्रतियोगिताक-भेद एव। घटो न घटपटोभयमित्यत्रैकत्वावच्छिन्नपर्याप्तिसंबंधावच्छिन्नप्रतियोगिताको-भयत्वात्यंताभावभानस्यैवोपगमेन व्यासज्यवृत्तिधर्मावच्छिन्नभेदस्य तदाश्रयप्रतियोगिन्ये-तन्मतेऽनंगीकारान्न तादृशभेदमादाय स्वस्यापि स्वान्यत्वप्रसक्त्या तद्घटकविशेषणानव-स्थेति चेन्न। अभावानां प्रतियोगिज्ञानं विना प्रत्यक्षायोगात्। उक्तानंतप्रतियोगितावच्छेदका नामसर्वज्ञदुर्ज्ञेयत्वेन तादृशाभावकूटवत्तया मणिप्रतियोगितापरिचयो दुर्घट एवेति चेन्न। मणिरत्र नास्तीति व्यवहारानुकूला या प्रतीतिस्तद्विषयीभूतवैलक्षण्यवत्वेन तादृशानुयोगि तापरिचयसंभवादित्याहुः। तन्मतेऽवच्छेदकत्वादिभानमंतरापि तन्निष्ठवैलक्षण्यभानावश्य-कत्वे तस्य स्वत एवानुयोगितायाः संभवेन तन्निर्वाहायावच्छेदकत्वादिकल्पनायाः अप्रामाणि कत्वस्य स्फुटत्वात्तदप्ययुक्तमेव। ननु घटो नास्तीति बुद्धेर्विशिष्टवैशिष्ट्यावगाहित्वम परित्याज्यमेव। तदुपलक्षितावगाहित्वे घटत्वानिर्विकल्पकोत्तरमपि तदापत्तेः। तद्विशिष्ट-वैशिष्ट्यावगाहित्वं च तदवच्छिन्नप्रतियोगिताकत्वविशिष्टसंसर्गावगाहित्वमेव वक्तव्यं। अन्यथा तदुपलक्षितज्ञानादस्य वैलक्षण्यानुपपत्तेरवच्छेदकताख्यविषयताकृतवैलक्षण्यांगी-कारे साकारवादापत्तेः। तथा च घटत्वविशिष्टवैशिष्ट्यावगाहित्वानुरोधेन घटत्वावच्छिन्नप्र-तियोगिताभानमावश्यकमित्यवच्छेदकत्वस्य प्रत्यक्षेणैव सिद्धिरिति चेन्न। संयोगप्रतियोगि-तावच्छेदकत्वादिजातीयस्यावच्छेदकत्वस्य भाने तस्यातिप्रसक्तादिसाधारणतया रक्त-घटाद्यभावप्रतियोगितावच्छेदकताया घटत्वादावबाधितत्वेन तत्तात्पर्यकस्य नीलघटवति घटो नास्तीत्यादेर्घटरूपमुख्यार्थकघटपदघटितवाक्यस्य प्रामाण्यापत्तिः। तद्विजातीयाभाव-प्रतियोगितावच्छेदकताभानं तु नोक्तयुक्त्या सिध्यति। किंच द्रव्यवान् प्रमेयवान् सद्वान् दंडवानित्यादिप्रतीतीनामप्युभयविधानां सत्वात्तत्र विशिष्टवैशिष्ट्यावगाहि-त्वानुरोधेन तत्तद्धर्मावच्छिन्नप्रतियोगिकत्वादीनां संयोगे स्वीकारे महागौरवं। नच द्रव्यत्वादिविशिष्टवैशिष्ट्यावगाहिप्रतीतेर्भ्रमत्वमेवास्तु येन तत्प्रामाण्यानुरोधेन द्रव्य-त्वादिरूपयावद्द्रव्यभाविधर्मावच्छिन्नप्रतियोगिताकत्वं संयोगस्य सिध्येत् किंतु यादृ-शधर्मो यत्र कादाचित्कस्तदुपलक्षितावगाहिप्रतीतेः सर्वदा प्रामाण्यं तद्विशिष्टवैशिष्ट्या-वगाहिप्रतीतेः कदाचिदेवेत्यनुभवानुरोधात् यदा यत्र यो धर्मो वर्तते तद्धर्माश्रय-प्रतियोगिकः ससंबंधस्तद्धर्मावच्छिन्नप्रतियोगिताक इति स्वीक्रियत इति वाच्यं।

तथा सति यत्र भूतले रक्तघटो दृढतया स्थापितस्तदा रक्तत्वविशिष्टवैशिष्ट्यावगाहि-प्रमानुरोधात्तादृशसंयोगव्यक्तेः रक्तत्वावच्छिन्नप्रतियोगिकत्वावश्यकत्वे तत्स्थले तथैव घटसत्तादशायामेव पाकेन रक्तनाशेन रूपांतरोत्पत्तिस्तदा रक्तत्वविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षादेः उक्तजातीयस्य परमाण्ववगाह्यनुमित्यादेश्च प्रामाण्यापत्तेः। नच तद्घटनिष्ठसंयोगप्रतियोगितायां तद्धर्मावच्छिन्नत्वं तदा न स्वीक्रियते तस्याव्याप्यवृत्तित्वाभ्युपगमादिति वाच्यं। तस्य कालिकाव्याप्यवृत्तित्वे मानाभावात्। तावताऽपि तद्धर्मावच्छिन्नप्रतियोगिताकत्वस्य तत्संयोगे कदाचिद्विद्यमानत्वेन विषयाबाधात्। तदातनप्रतीतेः प्रामाण्यापत्तेरपरिहारात्। नच तादृशप्रतीतौ विशिष्टसंबंधपर्याप्तावच्छेदकताकविलक्षणाधिकरणतैव भासते सा तु घटे रक्तत्वनाशदशायां नश्यतीति वाच्यं। घटस्य तत्रैव विद्यमानत्वेनाधिकरणतोत्पत्तिनाशयोरयोगात्। एतदपेक्षया रक्तत्वविशिष्टघटनाशरूपांतरविशिष्टघटोत्पत्ती परिकल्प्यैव सर्वनिर्वाहस्य शक्यत्वेनातिरिक्तविशिष्टांगीकारस्यैवोचितत्वात्। विलक्षणाधिकरणतायाः तन्निरूपकत्वावच्छेदकत्वादीनां संसर्गविशेषघटकपदार्थे सार्थेषु तदवच्छेदकत्वादिपर्याप्त्यादिकल्पनस्यातिगुरुत्वात्। नच विशिष्टोत्पत्त्युपगमेपि तदधिकरणत्वांतरं तवाप्यावश्यकमिति वाच्यं। शुद्धप्रतियोगिकसंयोगस्यैव तदभिन्नविशिष्टसंसर्गतया भानांगीकारेणातिरिक्ताधिकरणतानभ्युपगमात्। रक्तघटरूपविशिष्टनाशकाले संबंधसत्वेपि तद्रूपविशेषणाभावादेव न तत्प्रकारकप्रत्ययः। समवायस्य नित्यत्वेपि रक्तनाशदशायां रक्तो घट इति प्रत्ययाभाववत् विशिष्टस्यानंगीकारेपि विशेष्ये यत्कालसंबंधं या प्रतीतिर्विषयीकरोति तया विशेषणेपि-तत्कालसंबंधावगाहने सा तद्विशिष्टवैशिष्ट्यावगाहिनी प्रतीतिरित्युच्यते। तदनवगाहने सोपलाक्षितप्रतीतिस्तस्य बाधितत्वाबाधितत्वाभ्यामेव तादृशविशिष्टप्रतीतिप्रामाण्याप्रामाण्ये। क्वचिद्यद्विशेषणस्य यत्र विशेष्ये भानं तद्विशेषणविशेषणस्यापि तत्र विशेष्ये भाने तद्विशिष्टवैशिष्ट्यबुद्धिरुच्यते। यथा सपुत्रस्य गमनं रूपविशिष्टस्य नाश इत्यादौ। विशेषणविशेषणस्य स्वविशेष्यीभूतविशेषणस्य स्वविशेष्ये येन संबंधेन भानं तेनैव संबंधेन स्वस्यापि तद्विशेष्ये भानमित्यपि न नियमः। किंतु तात्पर्याद्यनुरोधादन्येनापि। यथा धनविशिष्टस्य सुखमित्यादौ सुखे आधारतया विशेषणीभूतचैत्रविशेषणं धनं सुखे प्रयोज्यतासंबंधेनैव भासते। एवं विशिष्टवैशिष्ट्यस्थलेऽपि रीतिरूह्या। दंडी कुंडली सपुत्रो गतो धनवान् सुखीत्यादौ। इत्थं च ययोः समानकालिकत्वं तयोरेवावच्छेद्यावच्छेदकभावस्त्वयाप्यतिप्रसंगवारणायाभ्युपगत इति। आवश्यकतद्धानादिना सर्वनिर्वाहे किमवच्छेद्यावच्छेदकभावतद्धानाद्याग्रहव्यसनेनाप्रामाणिकत्वाद्गौरवाच्च। तर्हि घटो नास्तीत्यभावबुद्धेः कीदृशं विशिष्टवैविशिष्ट्यावगाहित्वमिति चेत्। कीदृशमपि नास्तीति वदामः। तर्हि घटत्वनिर्विकल्पकानंतरं तत्प्रतीत्याद्यापादनं त्विष्टापत्त्यादिनाऽप्रामाणिकप्रतियोगिकात्यंताभावविचार एव निरस्तं। अत्यंताभावप्रतियोगिनोऽप्रामाणिकतया तत्र भासमानधर्मधर्मस्याप्यलीकतया तस्यावच्छेदकत्वं दूरपराहतं। असतः अवच्छेदकत्वांगीकारे बीजाभावात्। तस्मात्धर्मविधयाऽवच्छेदकत्वमसित्धमेव। एवं संसर्गविधयाप्यभावप्रतियोगितावच्छेदकत्वमसित्धं। न चैवं सति घटवत्ताबुद्धिं प्रति घटाभावनिश्चयस्य प्रतिबंधकत्वे कल्पनीये न तावद्घटाभावनिश्चयत्वं प्रतिबंधकतावच्छेदकं। संयोगेन घटवत्ताबुद्धिं प्रति समवायेन घटो नास्तीति निश्चयस्य विरोधितापत्तेः।

नहि संयोगसंबंधावच्छिन्नत्वेनाभिमता या विलक्षणा प्रतियोगिता वस्तुतः तन्निरूपकाभाव निश्चयत्वेन प्रतिबंधकत्वं विचारास्पदं समवायावच्छिन्नप्रतियोगिताकत्वेनाभिमताभावत्वेन संयोगावच्छिन्नप्रतियोगिताकत्वेनाभिमताभावधियो विरोधित्वापत्तेः। अतः प्रतियोगितायां संयोगावच्छिन्नत्वावगाहितत्वेन प्रतिबंधकत्वावश्यकत्वानुरोधेन प्रतिबंधकज्ञाने संयोगाद्यवच्छिन्नत्वावगाहित्वं तस्य प्रमात्वानुरोधेन तादृशावच्छेदकत्वादीनामपि सिद्धिरिति वाच्यं। संयुक्तप्रतियोगिकत्वविशिष्टसंयोगेन घटाभाववानिति बुद्धेः संयुक्तप्रतियोगिकसंयोगरूपपरंपरासंबंधेन घटाभाववानिति बुद्धेश्च संयोगेन घटवत्ताबुद्धिप्रतिबंधकत्वापत्तिपरिहाराय संयोगपर्याप्तावच्छेदकतानिवेशावश्यकत्वे पूर्वोक्तरीत्यापर्याप्तौ प्रतियोगितायां संसर्गविधयाऽवच्छेदकतायां च वैलक्षण्याद्युपगमे गौरवेण तादृशप्रतियोगितावृत्तिवैलक्षण्याद्यवगाहित्वेनाभावधियां विरोधित्वादिकल्पनौचित्येनावच्छेदकतायाः असिद्धेः। नच संयोगसंबंधावच्छिन्नत्वेन प्रतियोगित्वानवगाहने संयोगेन घटो नास्तीत्याकारकत्वानुपपत्तिरिति वाच्यं। भूतलानुयोगिकसंयोगप्रतियोगिकत्वविशिष्टघटादेरेव तत्राभावप्रतियोगितया भानेन तदभिलापकवाक्ये संयोगेनेत्युल्लेखोपपत्तेः। प्रत्युत त्वन्मत एवानुपपत्तिः। संयोगावच्छिन्नप्रतियोगितया एव प्रतियोग्यभावयोः संसर्गतया भानेन संयोगस्य संसर्गतावच्छेदकघटकस्य तृतीयांतशब्देनोल्लेखे बीजाभावात्। अन्यथाऽवच्छिन्नत्वेन घटो नास्तीत्यभिलापापत्तेः। अभिलापकवाक्ये संयोगेनेति तृतीयार्थावच्छिन्नत्वस्यान्वयानुपपत्तिश्च। अभावे घटे च अवच्छिन्नत्वस्य बाधात्। प्रतियोगितायाश्च पदानुपस्थितत्वात्। नच तृतीयार्थो अवच्छिन्नप्रतियोगिताकत्वं प्रकृत्यर्थसंयोगान्वितमभावेऽन्वेति। घटादेरेव संयोगावच्छिन्नप्रतियोगिताकत्वसंबंधेनान्वयबोधतात्पर्यकं ग्राहकं वा संयोगेनेति तृतीयांतपदमिति वाच्यं। संयोगेन भूतले घटो नास्ति भूतलसंयुक्तत्वेन घटो नास्तीति प्रतीत्योस्तुल्यकार्यकारित्वतुल्यविषयकत्वानुभवेन तृतीयाया वैशिष्ट्यार्थकत्वस्यैव युक्तत्वात्। किंच अवच्छिन्नत्वावच्छेदकत्वादौ प्रमाणं नास्तीति वादिनं प्रत्यवच्छिन्नप्रतियोगित्वादेस्तृतीयार्थत्वांगीकारेणोक्तसमाधानासंगतिः। तृतीयाया वैशिष्ट्यार्थकत्वतात्पर्येण संयोगावच्छिन्नप्रतियोगितानिरूपितानुयोगितया भूतले घटो नास्तीति व्यवहारस्य तज्जन्यधियः संयोगेन घटवत्ताधीविरोधित्वस्य चापत्तिश्च। नञादिसमभिव्याहृतसंबंधवाचिपदोत्तरतृतीयावच्छिन्नप्रतियोगिकत्वादौ निरूढलक्षणेत्यादिकल्पनस्य संबंधस्य अभावप्रतियोगितावच्छेदकत्वासिद्ध्युत्तरकालिकत्वात्। अपि चाभावप्रतियोगितायाः वृत्त्यनियामकसंबंधावच्छिन्नत्वानंगीकर्तृप्राचीननये अस्मिन्ज्ञाने विषयतया घटो नास्मिन् ज्ञाने इत्यादिव्यवहारतन्मूलप्रतीत्योर्घटनिरूपितविषयित्वाभाव एव ज्ञानादौ भासत इत्युपेयं। तथाच त्वदुक्तनियमस्य व्यभिचारः। तथैव संयोगेन घटो नास्तीत्यादौ उपपत्तिसंभवे संबंधस्याभावप्रतियोगितावच्छेदकत्वादिभानकल्पनमयुक्तं। नच संयोगेन घटो नास्तीत्यादौ घटसंयोगाभावस्य भानांगीकारे संयोगेन घटवत्यपि संयोगेन घटो नास्तीति प्रतीत्यापत्तिः। घटसंयोगस्य समवायेन सत्त्वेपि संबंधांतरेण तदभावस्यापि सत्त्वादिति वाच्यं। विषयितयाऽत्र घटो नास्तीत्यादौ उक्तानुयोगस्य तुल्यत्वात्। अथ तत्र घटनिरूपितविषयित्वस्य स्वरूपसंबंधावच्छिन्नाभाव एव प्रत्यायत इति चेदत्रापि संयोगस्य वस्तुतः समवायावच्छिन्नप्रतियोगिकत्वेन भवदभिमता या अभावव्यक्तिः सैव बोध्यत इत्यस्तु तेनैव सामंजस्यात्। संबंधस्य संबंधांतरकल्पनेऽनवस्थाप्रसंगेन कस्यचित्स्वरूपादेरंततः संबंधानंगीकारेण विशिष्ट-

बुध्धौ संबंधमनपेक्ष्यैव स्वाभाविकधर्मधर्मिभावभानस्य वक्तव्यत्वात् । तादृशस्वरूपादिसंबंधो नास्तीत्यादिप्रतीतिसिध्धव्यतिरेक्यभावस्य संबंधावच्छिन्नप्रतियोगिताकत्वस्य वक्तुमशक्यत्वाच्च । नच संयोगेन घटो नास्तीति धीर्यदि संयोगविशिष्टघटाभावं विषयीकुर्यात्तर्हि संयोगेन घटवत्ताबुध्धिं न विरुंध्यान्नीलघटाभावग्रहस्येव विशेषाभावग्रहत्वादिति वाच्यं । संयोगेन घटो नास्तीति धियः संयोगविशिष्टघटाभावविषयिण्याः घटसंयोगाभावविषयिकत्वेन घटसंयोगो नास्तीति बुध्धिवत् तद्विरोधित्वानपायात् । संयोगेन रूपं नास्तीति बुध्धेः रूपसंयोगाभावविषयिकत्वे असत्प्रतियोगिकाभाववादे न किंचिदपि बाधकं । तस्मान्नव्यमतेऽन्योन्याभावप्रागभावादीनामिवात्यंताभावप्रतियोगितापि संसर्गानवच्छिन्नैवेति दिक् । कारणताकार्यताद्यवच्छेदकत्वादिकमप्येतादृशमेव मानाभावात् । नच दंडः कारणं घटः कार्यमिति बुध्धिःप्रमा प्रमेयदंडो वा तद्व्यक्तिर्वा घटकारणमिति धीरप्रमेति तावदविवादं । तत्र दंडत्वतद्व्यक्तित्वादिसामानाधिकरण्यमात्रं यदि कारणतायां विषयीभवति तदा प्रामाण्याप्रामाण्यव्यवस्था न घटेत इति विशिष्ट वैशिष्ट्यमिति मर्यादयैव कारणताद्यवगाहिप्रत्यक्षं जायते । तत्र विशेष्यतावच्छेदकीभूतदंडत्वप्रमेयदंडत्वाद्यवच्छेद्यत्वं भासते । अतो दंडत्वाद्यवच्छेद्यत्वसत्वात्प्रमेयदंडत्वाद्यवच्छेद्यत्वासत्वादुक्तबुध्योः प्रामाण्याप्रामाण्ये घटत इत्यवश्यं वाच्यमतः कथं मानाभाव इति वाच्यं । प्रमेयदंडस्तद्व्यक्तिर्वा घटकारणमिति बुध्धेरप्रमात्वस्यैवासिध्धेः । ज्योतिष्टोमेन स्वर्गकामो यजेत वृष्टिकामः कारीर्या यजेतेत्यादौ ज्योतिष्टोमत्वस्वर्गत्वादिधर्माणां कारणताकार्यतावच्छेदकत्वबोधने बाधेन श्रुत्यप्रामाण्यापत्त्या कारणत्वादिग्राहकप्रमाणानां कारणत्वाद्याश्रयत्वेन प्रतीयमानपदार्थांशे प्रकारीभूतधर्मेषु कारणतावच्छेदकत्वावगाहित्वनियमस्य त्वया वक्तुमशक्यत्वेन प्रमेयः दंडस्तद्व्यक्तिर्वा घटकारणमित्यादिप्रतीतिप्रामाण्यस्येष्टत्वात् । अत एवैतद्व्यक्तिरपि घटकारणमत एनं संपादयामीति ज्ञानात् प्रवर्तमाना न भ्रांता भवंतीति सर्वसंमतं । नच स्वर्गादिपदं ज्योतिष्टोमादिजन्यविजातीयस्वर्गादिपरं । तदवच्छिन्ननिरूपितकारणतावच्छेदकत्वस्य ज्योतिष्टोमत्वादौ बोधने व्यभिचाराभावान्न किंचिद्बाधकं । अथवा इष्टसाधनत्वरूपविध्यर्थशरीरे संसर्गघटकतया स्वर्गादिनिष्ठं वैजात्यं भासतेऽतः पूर्वं तदनुपस्थितावपि न दोषो अतः कारणत्वादिग्राहकप्रमाणानामवच्छेदकत्वावगाहित्वनियमस्य न व्यभिचार इति वाच्यं । स्वर्गादेरप्रत्यक्षत्वेपि वृष्ट्यादेः प्रत्यक्षसिध्धत्वेन तत्रोक्तवैजात्यादेरनुपलंभबाधितत्वात् । संसर्गघटकतया वैजात्यभानस्याप्रामाणिकत्वात् । पूर्वमनुपस्थितत्वेन तद्रूपावच्छिन्ने शक्यसंबंधरूपलक्षणाग्रहायोगाद्विधौ लक्षणापातेन च तत्पक्षस्यापि दुष्टत्वात् । तृणारणिमणिजन्यवन्ह्यादौ तत्तज्जन्यतावच्छेदकवैजात्यस्यानुपलंभाच्चोक्तनियमानुरोधेनैवाप्रामाणिककल्पनस्यान्योन्याश्रयादिदुष्टत्वात् । तृणारणिमणयो वन्हिकारणानीति प्रमाणवाक्ये वन्हिपदस्य नानावैजात्यावच्छिन्नोपस्थापकत्वे कारणपदस्य वा नानावैजात्यघटितसंसर्गघटितनानाकारणत्वाववच्छिन्नोपस्थापकत्वे ऽनुभवविरूद्धानेकार्थकल्पनाप्रसंगश्च । तस्मात्कारणत्वादिकं समभिव्याहृतधर्मव्यापकत्वादिनैव भासते तत्सामानाधिकरण्यमात्रेण वा भासते इत्येवोपेयं । नचैवं द्रव्यं घटकारणं द्रव्यं दंडकार्यमिति प्रतीतिप्रामाण्यापत्तिस्तथाव्यवहारापत्तिश्चेतिवाच्यं । तत्धर्मोपलक्षिते तदवगाहिप्रतीतीनां तादृशप्रतीतिपरवाक्यप्रामाण्यादीनां तवापि इष्टत्वेन मयापि तथा वक्तुं शक्यत्वात् । प्रत्यक्षस्थले तु यत्धर्मावच्छिन्नयोरन्वयव्यतिरेकग्रहात् प्रत्यक्षतत्धर्मयोः कार्यताकारणतानातिरिक्तवृत्ति-

त्वरूपमवच्छेदकत्वमवगाहते। तृणादिस्थले त्वन्यतमत्ववन्हित्वादिनैव तथा ग्रहः नतु वन्हित्वव्याप्यवैजात्येन रूपेण तादृशवैजात्यस्य प्रथमं प्रत्यक्षेणाग्रहस्योक्तत्वात्। नन्वेवं किं घटकारणमिति प्रश्ने द्रव्यं घटकारणमिति वक्तुरश्रध्देयवचनत्वं दंडो घटकारणमिति वक्तुःसंबंध्धभाषित्वं कुतो दंडत्वद्रव्यत्वयोः साम्यादिति चेन्न। अकारणे प्रवृत्त्यभावपूर्वककारणमात्रप्रवृत्तिनिर्वाहकबोधार्थं पृष्टत्वेन वक्त्रा तादृशबोधो निर्वाह्यः। स च कारणत्वादिसमनियतधर्मस्य वाऽनतिरिक्तवृत्तिधर्मस्य वा बोधेन निर्वाह्य इति तादृशार्थतात्पर्यं द्रव्यं घटकारणमित्यादेरप्रामाण्यमेव। संसर्गविधया भासमानसमानियतत्वादेर्बाधितत्वात्। तदविविक्षायां तादृशं वाक्यमपि प्रमाणं। प्रमेयदंडो घटकारणमिति वक्ता न प्रयुंक्ते वाक्यसामान्ये प्रयोजनं विनाऽधिक्यस्य दोषत्वात्। ज्ञानं तु प्रमैव तस्मात्कारणताकार्यतावच्छेदकत्वाद्यनंगीकारे कस्याप्यनुपपत्तेरभावात्धर्मविधया संसर्गविधया चावच्छेदकत्वं अप्रमाणिकमेव। आधारताधेयतावच्छेदकत्वमप्यप्रामाणिकं सर्वत्र तत्धर्मोपलक्षितस्यैवाधारताऽधेयत्वादिभानेऽतिप्रसंगाविरहात्। गुणो गुणकर्मान्यत्वविशिष्टसत्तावानिति प्रतीतेरप्रामाण्यस्य गुणान्यत्वादिरूपविशेषणस्य गुणेपि साक्षात्संबंधेन भानस्य विशिष्टवैशिष्ट्यावगाहितापदार्थत्वेन तद्बाधेनैव निर्वाहात्। अन्यविधस्योपलक्षिततत्प्रतीतित्वेन प्रमात्वस्येष्टत्वात्। ननु संयोगादिसंसर्गस्याधारतावच्छेदकत्वानंगीकारे संयोगेन घटवद्भूतलमिति वाक्यस्थले तृतीयार्थो नावछिन्नत्वं किंत्वभेद एवान्यस्यायोगात्। सच मतुबर्थे अन्वेतीति वाच्यं। तत्र मतुबर्थो यदि संबंधातिरिक्ताधारता तदा बाधः। यदि संबंधत्वेन संयोग एव तदा घटो भूतलवानिति व्यवहारः स्यात्। परस्परमुभयोः संयुक्तत्वात्। अवच्छेदकत्वादेरंगीकारे तृतीयार्थावछिन्नत्वं मतुबर्थाधारतायामन्वेतीति न बाधादिप्रसक्तिरतोऽवच्छेदकत्वसिध्दिरिति चेन्न। भूतले घटस्य संयोगात् भूतलं घटवत् घटश्च भूतले वर्तते इत्यबाधितोभयसिध्दप्रतीत्या संयोगादेराधारत्वादिकं प्रति प्रयोजकत्वस्य सिध्दत्वेन तृतीयायाः तदर्थत्वेनैवोपपत्तेः। ननु भूतलघटयोः संयोगसाम्ये भूतल एवाधारता कुत इति चेत्। एतद्दोषस्य तवापि साम्येन वस्तुस्वभावस्यैव शरणीकरणीयत्वात्। वस्तुतस्तु संयोगस्थले पदार्थद्वययोर्न संयोगमात्रेणाधाराधेयभावव्यवहारः। ये पत्रे दृढतया संश्लिष्टे ते यदोभयेपि ऋजुतया भूसंबध्दे भवतः तदा परस्परमाधाराधेयव्यवहारो न जायते तयोरेव परस्परमूर्ध्वाधरीभावेन पर्यायेण स्थापने परस्परमाधाराधेयप्रत्ययः पर्यायेण जायते। तत्र संयोगस्य नियताधारता संनियामकत्वे दशात्रयेप्येकस्यैव नियताधारताप्रत्ययः स्यात्। संयोगस्यैकस्यैव दशात्रयेप्यनष्टतया स्थितत्वात्। तथाच संयोगस्थले यदा यस्य यदूर्ध्वदेशसंयोगस्तदा तस्य आधेयत्वं अधोदेशसंबध्दस्याश्रयत्वं प्रतीयते इत्येव वक्तव्यं। इत्थं च तदधोदेश संयुक्तत्वमात्रस्याधारत्वरूपत्वे तदसंयुक्तनिष्ठतन्मात्रस्याप्याधारत्वापत्त्या तादृशपदार्थे तदाधारत्वव्यवहारवारणाय तत्संयुक्तनिष्ठतदधोदेशसंयोग एव तदाधारत्वं वाच्यं। तत्र संयोगांतरं प्रति संयोगांतरस्यावच्छेदकत्वे बीजाभावः। विशिष्टसत्तां प्रति विशेषणस्य निर्वाहकतया संयोगपदोत्तरतृतीयाया निमित्तत्वार्थकत्वमेव युक्तमेवमाधेयत्वबोधकस्थलेपि। यद्वा संयोगपदस्य समभिव्याहृतघटसंयोगाद्यर्थकतया तद्घटितत्वमुक्तरीत्याऽऽधारत्वाद्यन्वययोग्यं तृतीयार्थः। घटरूपादिस्थले अभावभूतलादिस्थले नैतादृश आधाराधेयभावो ऽतः संसर्गानिबंधन एव विलक्षणो धर्मिधर्मभावो अनुभवसिद्धत्वात्प्रातीतिक इति संबंधानिबंधनत्वादवस्तुकृत इत्यप्युच्यते। विषयितया घटवज्ज्ञान-

मित्यादौ तु परेषां मतेऽपि मतुबर्थसंबंध्येकदेशे संबंधे तृतीयार्थाभेदान्वयः सम्मत एव। तेषां वृत्त्यनियामकत्वेनाधारताद्यनवच्छेदकत्वांगीकारात्। समवायकालिकसंबंधादयस्तु स्वरूपत एवाप्रामाणिकाः। अनयोः संयोगो वर्तते इदानीमुत्पन्नो नष्ट इत्यादिप्रत्ययवदनयोः समवायो वर्तते कालिको वर्तत इति सार्वजनीनप्रतीतेरभावात्। तत्सत्त्वे सूत्रकारीयानवस्थादूषणस्य मूलक्षत्यभावेनासंगतत्वापत्तेः मतविशेषावलंबिनां तादृशप्रतीतेरतिप्रसंगेनासाधकत्वात्। घटे रूपमिह रूपमिदानीं रूपमभावो वेत्यादिका तु परस्परविलक्षणधर्मधर्मिभावावेवावगाहते। विशिष्टबुद्धिसामान्यस्य संसर्गविषयकत्वनियमासिद्धेर्धर्मधर्मिभावविषयकत्वमात्रनियमेनैव समूहालंबनवैलक्षण्यसिद्धेस्तयोरुभयसम्मतत्वाच्च। एतेनाभावाभिधेयत्वादिस्थले तत्तत्स्वरूपाणां संसर्गत्वकल्पनमप्यपास्तं। उक्तरीत्यैव संभवे तत्कल्पनस्य निर्बीजत्वात्। प्रकारस्वरूपे वा विशेष्यस्वरूपे वा तत्तद्वृत्तिधर्मांतरेष्वेव वा तत्कल्पनमित्यत्र विनिगमकाभावेनातिरिक्तसंबंधस्यैव संयोगादेरिवांगीकारापत्तेः। यदि च प्रत्यक्षबाधान्न तत्सिद्धिस्तर्हि तत्तत्स्वरूपाणां स्वप्रतियोगित्वानुयोगित्वादिकं किमनुभवासिद्धं। यत्त्वभावभूतलादीनां रूपघटादीनां तादात्म्यसंसर्गतया भासत इति तत्तुच्छं। तथात्वे सूत्रकारीयानवस्थादूषणस्यात्रापि प्रसरेण समवायपरित्यागे बीजाभावप्रसंगात्। न चात्राप्यनवस्थादूषणं वर्तत एव तेन; तादृशसंसर्गाणां मिथ्यात्वं सिध्यत्येव व्यवहारदशायां तेषां संसर्गत्वमिति वाच्यं। समवायेऽपि तथा वक्तुं शक्यत्वेन समवायदूषणेन नैयायिकमतासामंजस्यप्रदर्शनानुपपत्तेः। तस्मादुपलक्षणतया सूत्रमेतेषां सर्वेषामनुभवानारूढानां निराकरणपरमेवेति वक्तव्यं। ननु तादात्म्यं रूपघटयोः सिद्धांतासिद्धं कथमपलप्यत इति चेत्सत्यं। तादात्म्यं यदि भेदाभेदौ तदा तयोरनुभवसिद्धत्वेऽपि संसर्गतया भानमप्रामाणिकं। यदि तदुभयनिबंधनं संबंधांतरं तस्याप्रामाणिकत्वमित्यभिप्रायात्। एतेन संयोगसंबंधस्थले घटसंयोगस्य घटेपि सत्वात्तद्घटस्तद्घटवानिति प्रतीतिवारणाय घटाभेदस्य घटेपि सत्वात् घटो घट इति वाक्यप्रामाण्यवारणाय च प्रकारीभूतव्यक्तिभेदसामानाधिकरण्यविशिष्टसंयोगाभेदादेः संसर्गतया भानमावश्यकमित्यपास्तं। तद्घटे स्वनिरूपिताधाराधरभावाभावेन स्वस्मिन् स्वप्रतियोगिकसंयोगानंगीकारेण च प्रथमस्थले दोषाभावात्। द्वितीयस्थले कीदृशमप्रामाण्यं अबोधकत्वं,विपरीतबोधकत्वं वा। नाद्यः। भेदस्य संबंधघटकतायास्तद्वाक्यस्याबोधकत्वे प्रयोजकत्वप्रकारानिरूपणात्। योग्यताविरहसंपादकतया तत्रोपयोग इति चेत्। अयोग्यवाक्यादपि शाब्ददर्शनेन कलहस्थले बाधग्रहेऽपि शाब्दस्यांगीकृतत्वेन च तस्याबोधकत्वाप्रयोजकत्वात्। न द्वितीयः। घटो घट इति वक्तारि सिद्धार्थकत्वेनाज्ञातज्ञापकत्वाभावस्यैव सर्वाभिमतत्वेन जरद्गवादिवाक्यवद्विपरीतबोधकत्वस्य सर्वानुभवविरुद्धत्वात्। तस्माद्भेदस्य संसर्गतया भाने न किंचित्साधकं नीलो घट इत्यादौ वाक्यार्थत्वानुभवादैक्यमात्रं तथास्तु। संयोगैक्यादेः संसर्गत्वेपि कुतो न सूत्रोक्तानवस्थेति चेत्। तयोरनुभवसिध्धत्वेन संसर्गत्वेपि सर्वत्र विशिष्टबुध्धिमात्रे संसर्गविषयकत्वनियममभ्युपगम्य रूपादिबुध्यनुरोधादननुभवसिध्धसंबंधरूपसमवायकल्पने तद्विशिष्टबुध्धितद्विशिष्टबुध्यनुरोधेन संबंधपरंपराकल्पनयाऽनवस्थायाः सूत्रकृताभिहितत्वात्। नच रूपादिप्रतीतौ धर्मधर्मिभावभानाभ्युपगमे तदीयधर्मिधर्मभावपरंपरयाऽ नवस्था कुतो न प्रसरतीति वाच्यं। घटाधारतावान् तदाधारतावानित्यादिप्रतीतीनां संबंधविशेषतदवच्छिन्नाधारतास्वीकारिभिर्नैय्यायिकैरनवस्थापरिहारस्य यथा निर्वाहः क्रियते मया तथा कर्तुं शक्यत्वात्। एकेनैव विषयेण

(टीका) किंचास्तु वाऽऽत्माज्ञानं। तथापि न वेदांतवाक्यजनितविज्ञानस्यात्मज्ञानत्वं संभवति। तस्यानात्मविषयत्वेन तन्निवर्तकत्वायोगात्। यद्विषयं हि यद्विज्ञानं तदेव तदज्ञानं निवर्तयदुपलब्धं। अथानात्मविषयमपि तदात्माज्ञानं निवर्तयेत्। हंत तर्हि घटज्ञानमपि कस्मान्न निवर्तयेत्। अनात्मविषयत्वाविशेषादित्याह।

**(मूलं) अतद्विषयज्ञानेन तदज्ञाननिवृत्तौ घटज्ञानेनापि निवर्तेत॥५८॥**

(टीका) आत्माज्ञानमिति शेषः। ननु घटादिज्ञानं घटादिविषयेण ग्रस्तं कथमात्माज्ञानं निवर्तयेदिति चेत्तत् किं (इदानीं) वेदांतवाक्यजनितविज्ञानं निर्विषयमेव। बाढमिति चेत्तत्राह।

**(मूलं) अविषयत्वादेव तस्य ज्ञानत्वं च न स्यात् घटवत् ॥५९॥**

---

तथाविधनानाव्यवहारोत्पत्तिनिर्वाहकत्वस्याप्रामाणिकप्रतियोगिकात्यंताभावविचारेऽभिहितत्वाच्च। तस्मात्समवायादेरप्रामाणिकत्वात्संयोगादेस्त्वनवच्छेदकत्वान्न कस्यापि संसर्गस्याधारताद्यवच्छेदकत्वमिति स्थितं। नन्वेवमवच्छेदकत्वस्वरूपनिराकरणे भाष्यगीताभाष्यादौ यथा कालः पूर्व इत्यवछेद्योऽवछेदकश्च भवति। कर्तृशब्दश्च कालावच्छेदेऽपि प्रसिद्ध इति च व्यवहारस्याप्रामाण्यापत्तिरिति चेन्न। तेषामर्थांतरस्य टीकायामेवोक्तत्वेन तद्वाक्यस्य नैय्यायिकाभिमतावछेदकत्वार्थकत्वाभावात्। चंद्रिकाभावबोधकृतां स्वग्रंथेषु क्वचित्तथा व्यवहारस्तु प्रायः पररीत्यैव। बहूनां व्युत्पन्नत्वात्तान् प्रति व्यवहारसौकर्याय परीतिमाश्रित्यैवानैकांतिकत्वादिव्यवहारवत्। अन्यथाऽवछेदकत्वादिपदार्थाभ्युपगमे विशेषनिरूपणे वक्ष्यमाणरीत्या विशेषासिद्धिप्रसंगात्। प्रकारताधर्मितावछेदकत्वादिपदवाच्यास्तु विषयताविशेषा अनुव्यवसायसिद्धा इति न तत्र विवादः। तस्मादवछेदकत्वादीनामप्रामाणिकत्वात्तन्निर्वाह्या सर्वापि त्वत्प्रक्रियाऽप्रामाणिकयेवेति स्थितं। किंचेति। अनात्मविषयत्वेन शुद्धात्माविषयकत्वेन। अथ यदि। अनात्मेति पूर्ववदेवार्थः। तदात्मेत्यादि तदिति छेदः। अनात्मेति पूर्ववदेवार्थः। अथवा पूर्वत्रात्र चानात्मविषयेत्यादेरात्मभिन्नविषयकत्वाद्येवार्थः। इदं च वेदांतजनितविज्ञानस्य धर्मांतरसाहित्येनात्मविषयकस्याप्यधिष्ठानयाथात्म्यज्ञानरूपत्वाभावान्न शुद्धस्वरूपमात्ररूपाधिष्ठानारोपितजगद्भ्रमनिवर्तकत्वमिति युक्तिसूचनाय। अत एव घटादिनाऽपीत्युत्तरत्रापिशब्दः। मूलेऽप्यतद्विषयेत्यत्र नञस्तदा तत्पुरुषो न विषयांतेन कार्यः। किमिति। शुद्धब्रह्मस्वरूपस्याविषयत्वं तु स्वयमंगीकृतं तदन्यस्यापि तत्र विषयत्वानंगीकारे निर्विषयत्वमेव पर्यवस्यतीति भावः। अज्ञाने व्यवहाराद्यनुकूलो विषयानौपाधिकः कश्चन शक्तिविशेषः विषयतास्फुरणाद्यपरनामा विषयसंनिकर्षप्रयोज्यत्वदोषविशेषप्रयोज्यत्वान्यतरवान्। तन्निरूपकसत्वे प्रमात्वमसत्वेऽप्रमात्वमित्यभिहितमुपपादितं चाधस्तात्। तादृशविषयतैव ज्ञानत्वव्यापिका व्यभिचारस्य कुत्राप्यनुपलंभात्। निष्प्रामाणिकतत्कल्पने चानुमानमात्रोच्छेदप्रसंगात्। एवंच वेदांतजन्यज्ञाने आत्मान्याविषयके आत्मनिरूपितविषयिता वर्तते तस्य तन्निरूपकत्वं नास्तीति व्याहतमतस्तस्या अप्यभावे विषयितासामान्याभावरूपव्यापकाभावात् ज्ञानत्वरूपव्याप्याभावः स्यादित्यभिहितेऽविषयत्वपदस्य

(टीका) न विद्यते विषयो यस्य तदविषयं । ननु कथमेतत् । यावता शशविषाणादिपदश्रवणादविषयमेव ज्ञानमुत्पद्यते । नहि शशविषाणादिकमस्ति नचास्यान्यो विषयः संभवति । मैवं । नह्यत्रासद्विषयत्वमविषयत्वमित्यभिमतं । किन्नाम निरालंबनत्वं । नहि तथा शशविषाणादिज्ञानं । तथात्वे शशविषाणादिज्ञानमित्येव न स्यात् । तदेवं कयापि विधयात्मनो दृक्कर्मत्वाभावेन वेदांतवाक्यजनितविज्ञानमात्म ज्ञानं भवतीति तत्सिद्ध्येऽवश्यमात्मनो दृ (क्कर्मत्वे) श्यत्वेऽगीकार्ये तस्यानैकांतिकत्वं सिद्धं । अथ जडत्वस्यापि हेतोरनैकांतिकतां विवक्षुराह ।

(मूलं) **जडत्वं चाप्रमातृत्वमेव ॥६०॥**

(टीका) चशब्दो यस्मादित्यर्थे । चेत्यता जडत्वमित्यंगीकारे दृश्यत्वजडत्व योर्भेदो न स्यात् । किमत इत्यत आह ।

(मूलं) **नच प्रमातृत्वमात्मनस्तैरंगीक्रियते। ॥६१॥**

(टीका) अत्रापि चशब्दो हेत्वर्थः । तैरिति प्रपंचमिथ्यात्ववादिभिः । प्रमातृत्वस्य प्रमाणप्रमेयसिद्धिसाहित्यनियतत्वात्तदंगीकारे तयोरप्यंगीकारप्रसंगान्नात्मनः प्रमातृत्वं परैरंगीक्रियते । ततोपि किमित्यत आह ।

(मूलं) **अतस्तदप्यनैकांतिकं ॥६२॥**

(टीका) यस्मात्प्रमातृत्वाभाव एव जडत्वं । यतश्चात्मनः प्रमातृत्वं परेण नांगीक्रियते अतो दृश्यत्ववज्जडत्वमप्यात्मनि विपक्षे वर्तमानमनैकांतिकं भवति। इयांस्तु विशेषः । यद्दृश्यत्वं वादिप्रतिवादिनोरनेकांतिकं। आत्मनो दृश्यत्वस्य परंप्रत्युपपादितत्वात् । जडत्वं पुनर्मायावादिन एव। तत्ववादिनाऽऽत्मनः प्रमातृत्वस्यांगीकारात् । अत एव तैरित्युक्तं ।

---

सद्विषयकत्वाभावार्थकत्वाभिमानेनाशंकते । नन्विति । अभिमानं निराकृत्योक्ताभिप्रायं प्रकटयति । मैवमिति । असद्विषयत्व सद्विषयत्वाभावः। निरालंबनत्वमिति । विषयतारूपधर्मराहित्यमित्यर्थः । तथेति । तादृशधर्मराहितमित्यर्थः । न स्यादिति । संबंधांतराणामति प्रसंजकत्वात्तन्निरूपितविषयितैव षष्ठ्यर्थो वाच्यः । तस्याप्यनंगीकारे तादृशव्यवहाराप्रामाण्यं न स्यादित्यर्थः। दृश्यत्वहेतोर्व्यभिचारोपपादनमुपसंहरति। तदेवमिति । कयाऽपि विधयेति। इदं न भवतीत्युत्तरान्वयि । दृक्कर्मत्वाभावे न। दृक्कर्मत्वाभाव इति छेदः । नञो भवतीत्यनेनान्वयः। विविक्षुराहेति । अनैकांतिकत्वप्रतिपादनाय जडत्वस्वरूपं निर्वक्तीत्यर्थः। तत्स्वरूपज्ञानं विना तस्य व्यभिचारादिकं न ज्ञातुं शक्यमिति भावः। एतेन परोक्तहेतोर्दूषणं विहाय तन्निर्वचनं मूलोक्तमनुपयुक्तमिति शंकानवकाशः। समुच्चयाभावात्समुच्चायकत्वं च शब्दस्य न घटत इत्यत आह । चशब्द इति । एवकारव्यावर्त्यमाह । चेत्यतेति । ज्ञेयतेत्यर्थः। अंगीकारप्रसंगादिति । सत्यत्वेनेति शेषः। आत्मनः शुद्धात्मनः। अंगीक्रियत इति । आनंदादि-

(टीका) ननु पारमार्थिकमेव प्रमातृत्वमात्मनो मया नांगीक्रियते। तस्यैवाद्वैतप्रतिपक्षत्वात्। मिथ्याभूतं तूपादीयत एव। अन्यथा संसारानिरूपणात्। तत्कथमात्मना जडत्वमनैकांतिकमित्यत आह।

**(मूलं) मिथ्याप्रमातृत्वं चानिर्वचनीयनिरासादेव निरस्तं॥ ६३॥**

(टीका) मिथ्येति तावदनिर्वचनीयं वक्तुं न शक्यते। तस्याप्रामाणिकत्वादिना निरस्तत्वात्। ततो मिथ्येत्यसत्वे वक्तव्ये मिथ्याप्रमातृत्वमित्यात्मनो नास्ति प्रमातृत्वमित्युक्तं स्यात्। ततश्चानैकांत्यतादवस्थ्यं। आत्मनि प्रमातृत्वारोपस्तावन्मयांगीक्रियत एवेति चेत्। एवं तर्हि सांख्यचार्वाकादीनामंतःकरणादावसावस्तीति भागासिद्धिः। आरोपितेन हेत्वभावेनानैकांत्यपरिहारेऽतिप्रसंगश्च। नाप्रमातृत्वं जडत्वं किंनाम अप्रकाशत्वं। नच तदात्मन्यस्ति। तस्य ज्ञानस्वरूपत्वात्।

---

वत्सत्यत्वेनेत्यादिः। यस्मादिति यतश्चेति पूर्वमूलद्वयास्थितचशब्दद्वयार्थानुवादः। अत इति। प्रमातृत्वस्य मिथ्यात्वे तन्निर्वाहकतदभावस्यावश्यकत्वादिति भावः। संसारेति। सदसद्विषयप्रमाभ्यां रागद्वेषतदधीनसदसत्ववृत्तितदधीनपुण्यपापादिमूलकत्वात्संसारप्रवाहस्य तदभावे तस्यासत्वप्रसंगादित्यर्थः। तत्कथमिति। प्रतियोगिव्यधिकरणप्रमातृत्वाभावस्यैव हेतुत्वानुसरणादिति भावः। अप्रामाणिकत्वादिनेति। लक्षणाद्यनुपपत्तिरादिपदार्थः। ततश्चेति। त्रैकालिकसर्वदेशीयनिषेधप्रतियोगित्वेऽपि सत्तादात्म्यशालिनो व्याहत्यप्रामाणिकत्वादिना निरस्तत्वान्मिथ्येति त्वदंगीकारो सत्वमादायैव पर्यवसन्नमिति आत्मनि प्रमातृत्वाभावस्य जगतीव प्रतियोगिवैय्यधिकरण्यस्यावश्यकत्वादित्यर्थः। आत्मनीति। प्रतियोग्यारोपाविषयानिष्ठत्वमेव प्रतियोगिवैय्यधिकरण्यमित्याशयेनेयमुक्तिर्वा रीत्यंतरेण व्यभिचारोद्धाराभिप्रायेण वेति विकल्पौ हृदि निधायाद्यं दूषयति। सांख्येति। स्वमते अंतःकरणदेहादावात्मतादात्म्यारोपाभावात्तद्धर्मारोपाभावोप्यस्तीत्याशयेन सांख्येत्याद्यभिहितं। उपलक्षणमेतत्। उन्मत्तबालादीनां सर्वत्र तदारोपसंभवेन हेतुस्वरूपस्यैवासिद्धिर्द्रष्टव्या। तेनांतःकरणादीनां पक्षबहिर्भाव एवास्त्वित्युक्तावपि अनिस्तारः। ननु हेत्वभावप्रकारकारोपाविषयसाध्याभाववन्निष्ठहेतुसंबंध एव व्यभिचारस्तस्यैव व्याप्तिग्रहविरोधिग्रहविषयत्वात्। तद्विषयनिष्ठस्तु न तथा। तत्र साध्याभाववति हेतुसत्वेऽप्यारोपरूपहेत्वभावग्रहमात्रस्य हेत्वोर्व्यतिरेकसहचारग्रहरूपतया व्याप्तिग्रहसंपादकत्वेन तदधिकरणनिष्ठहेतुसंबंधस्य व्याप्तिग्रहविरोधिग्रहविषयत्वाभावादिति पूर्वविकल्पिताद्वितीयपक्षरूपरीत्यंतरविवेचनाभिप्रायमाशंकामपाकरोति। आरोपितेनेति। हेत्वभावारोपेणेति पदद्वयफलितोऽर्थः। अनैकांत्यपरिहारे हेतोर्वास्तवाव्यभिचरितत्वे। अतिप्रसंगश्चेति। सर्वत्र व्यभिचारिषूक्तरीतिसंभवेन व्यभिचारिमात्रोच्छेदरूपातिप्रसंग इत्यर्थः। चशब्दः पूर्वोक्ताभिप्रायद्वयसाधारणपरकीयोक्तौ दूषणद्वयसमुच्चयाभिप्रायकः। अप्रमातृत्वपक्षदूषणसमासाविति शब्दः। अप्रकाशत्वमिति। प्रकाशपदमनेकार्थकं ज्ञानत्वावच्छिन्नवाचि तेजस्त्वावच्छिन्नवाचि च। उभयत्रापि प्रचुरप्रयोगात्। अन्यतरस्मिन्निरूढलक्षणा वा। अत्र प्रकाशपदं ज्ञानपरं। तेजःपरत्वे तद्भिन्नत्वहेतोर्भागासिद्धिः स्यात्। ज्ञानत्वजातिस्तु

(टीका) अतः कथमनैकांतिकमित्यत आह ।

**(मूलं) यदि जडत्वं नामाप्रकाशत्वं तदाप्यात्मनः स्वविषयप्रकाशत्वाभावात्परविषयप्रकाशत्वाभावाच्चानैकांतिकमेव ॥६४॥**

(टीका) यदि जडत्वं नामाप्रकाशत्वं परोंगीकुर्यात् । तदा तदप्यनैकांतिकमेव प्रतिपत्तव्यं । आत्मनः प्रकाशत्वायोगात् । तथाहि । योऽयमात्मस्वरूपप्रकाशोंगीक्रियते स किं सविषयो निर्विषयो वा । आद्येपि किं स्वविषयः परविषयो वा । नाद्यः । तदभावात् । न द्वितीयः। परस्यैवापरेणानंगीकृतत्वात् । पराभावे च परविषयत्वस्य दुर्निरूपत्वात् ।

---

चित्येव स्वीक्रियते अतो न वृत्तौ भागासिद्धिः । नच चित एकत्वात्कथं तन्मात्रनिष्ठज्ञानत्वं जातिरिति वाच्यं । तत्तद्वृत्त्युपहितचितामेव ज्ञानत्वेन तासामुपाधिभेदेन भिन्नत्वादिति भावः । तथाहीति । दूषणग्रंथस्यायं भावः । ज्ञानत्वमुपहिते स्वीकृत्य तत्प्रतियोगिकभेदनिवेशे शुद्धात्मन्युपहितभेदसत्वाद्व्यभिचारः । तदवच्छिन्नात्यंतभेदानिवेशे तूपहितेषु पक्षनिविष्टेषु भागासिद्धिः स्यादतो ज्ञानत्वं शुद्धस्वरूप एव स्वीकृत्य तदाश्रयभेदो वाच्यः । सच किंचिदुपाहितेपि वर्तते उपहितं न शुद्धस्वरूपमिति प्रत्ययात् । एवं सति ज्ञानत्वं न जातिश्चेदस्तु तथैवेति परेण वाच्यं तत्र ज्ञानत्वमिच्छादिव्यावृत्तसविषयत्वरूपं तच्चाप्यं वोभयथापि विषयनिरूपणाधीनत्वेन तदभावे शुद्धात्मनोपि ज्ञानत्वाश्रयस्वरूपभिन्नत्वाद्व्यभिचार इति । तदभावादिति । स्वस्य स्वेन सह विषयविषयिभावाख्यसंबंधाभावादित्यर्थः । दुर्निरूपत्वादिति । ननु कस्य मतेनेदं दूषणं । न तावत्स्वमतेन अत्यंतासन्निरूपितविषयितायाः ज्ञानेंगीकारात् । नापि परमतेन । अत्यंताभावप्रतियोगिरूपमिथ्यावस्तुन एव चिद्रूपज्ञाने ऽध्यस्ततया विषयत्वांगीकारेण तस्य विषयत्वनिर्वाहकत्वादिति चेन्न । दुर्निरूपत्वादित्यस्य सत्यस्य दुर्निरूपत्वादित्येतदर्थकत्वेन दोषाभावात्। परो हि यन्मिथ्योपाधिकं तन्मिथ्येत्येव मनुते । अत एवाधिकरणात्मकोप्यत्यंताभावः प्रातिभासिकरजतप्रतियोगिकत्वादिविशिष्टरूपेण प्रातिभासिक इति तत्सिद्धांतः । तथाच परस्य मिथ्यात्वे तत्प्रतियोगिकत्वादिरूपतदुपाधिकत्वविशिष्टविषयत्वमपि मिथ्येति तदभाव एव प्राप्त इति परीत्यैवेदं दूषणमिति भावः । नच विषयिता ब्रह्मस्वरूपभूतैव कल्पितभेदेन परनिरूपिता भवति । उपहितरूपेण मिथ्यैवास्तु तथाच स्वरूपतः सत्यत्वद्ब्रह्मणि ज्ञानत्वव्यापकीभूताविषयित्वस्य न निवृत्तिरिति वाच्यं । ज्ञानानंदयोरिव संयोगादिकं विहाय विषयितामात्रस्य तत्स्वरूपत्वग्राहकमानाभावात् । निर्भेदस्वरूपांतर्गतत्वे भेदनियताधाराधेयभावस्य वास्तवस्य त्वन्मतेऽभावेन निर्विषयकत्वस्यावर्जनीयत्वात् । नच ज्ञानत्वं प्रति प्रतियोगिवैयधिकरण्यविशिष्टो यः सविषयकत्वाभावस्तदभाव एव व्यापकः स चात्मनि कदाचिदुपाधिवशात्सविषयकत्ववत्यपि सर्वदास्तीति वाच्यं । लोके ज्ञानत्वेन व्यवह्रियमाणे यत्स्वकालं विषयतासंबंधादेव्याप्यवृत्तित्वस्यैवानुभवेन तथैव सर्वैर्गृहीततया लोकसिद्धव्याप्तिमनुसृत्य परन्यायेन व्यापकीभूतसाविषय(क)त्वाभावमुपपाद्य दूषणदानस्येदानीमाभिमतत्वात् । परीतिमात्रप्रक्रियया दूषणपरिहारस्तु जगन्मिथ्यात्वसिद्धेः प्रागन्योन्याश्रयादिना दुष्ट इति न कश्चिद्दोषः ।

(टीका) ननु कथमात्मनः स्वविषयप्रकाशत्वाभावः । यावता वादिप्रतिवादिभ्यां स्वप्रकाशज्ञानरूप आत्मेत्यंगीकृतमित्यत आह ।

**(मूलं) स्वाविषयत्वं हि कर्तृकर्मविरोधात्तैर्नांगीक्रियते ॥६९॥**

(टीका) आत्मप्रकाशस्येति शेषः । सत्यमस्माभिःस्वविषयप्रकाशत्वमात्मनोऽगी (कृतं) क्रियते । परैस्तु नांगीक्रियते । एकस्यां क्रियायां हि कर्तृकर्मणोरेकत्वं विरुद्धं । परसमवेतक्रियाफलशालित्वस्य कर्मलक्षणत्वात् । अतो न स्वविषयमात्मा-ज्ञानं । स्वप्रकाशत्वं तु परप्रकाश्यताभावमात्रमिति परेषां प्रवादः । तदभिप्रायेण चात्मनः स्वविषयप्रकाशत्वाभावादित्युक्तमित्यदोषः। ननु ज्ञानस्य स्वविषयत्वे कर्तृ-कर्मभाव एव नास्ति यो विरुध्येत । नहि ज्ञानं ज्ञानस्य कर्तृ नच कर्तुरभावे कर्मापि संभवति । तस्य तदुपहितलक्षणत्वात् । अतो विषयविषयिभावस्य पराक्प्रत्यग्भा-वरूपत्वादेकस्य युगपत्तद्विरोधात् स्वविषयत्वं ज्ञानस्य तैर्नांगीक्रियत इति वक्तव्यं ।

---

सिद्धांतवासनावतामाशंकयोत्तरमूलमवतारयति । नन्विति । मूले कर्तृकर्मपदे भावप्रधाने । सर्वस्यापि ज्ञानस्य शब्दादेरपि परैः स्वविषयत्वमनंगीकृत्यापि सर्वं ज्ञानं प्रमेयं शब्दो नित्यः स्वाध्यायोऽध्येतव्य इत्यादौ कर्मताकर्तृतावच्छेदकरूपभेदात्तदुपहितकर्मक-र्त्रोरपि भेदमाश्रित्यैव स्वोक्तनियमस्योपपादितत्वेऽप्यात्मन एवेदानीं प्रस्तुतत्वात्तद-भिप्रायमात्रकत्वं मूलस्यान्यथाऽऽधिक्यापत्तेरित्याशयेनाह । आत्मप्रकाशस्येतीति । प्रकाश-रूपत्वेन स्वाभ्युपगतस्याप्यात्मन इत्यर्थः । तेनाप्रकाशत्वरूपजडत्वहेतोरनैकांत्योपपाद-नाय पूर्वमूले आत्मनः सविषयत्वाभावोपपादनमसंगतमप्रसक्तत्वादिति शंका परिहृता । आत्मनः प्रकाशरूपत्वेन व्यभिचारपरिहारस्य पराभिमानविषयतया तत्खंडनसंगतिरित्य-र्थस्य आत्मन इत्येतावन्मात्रं विहायाधिकप्रकाशपदेन सूचितत्वात् । प्रवाद इति ।निर्धर्मिके प्रमाणप्रवृत्तेरयोगात् स्वयमेव प्रकाशते नतु परेणेत्यत्रत्यैवकारार्थमात्रतात्पर्येण परमते व्यवहार इति भावः । तदभिप्रायेणेति । परमताभिप्रायेणैवेत्यर्थः । इदानीं परन्यायेनैव दूषणस्य प्रक्रांतत्वादितिभावः । तदुपहितेति । तथाच कर्तुरभावे स्वभिन्नसमवेतक्रियाप्रसिध्या तद्घटितं कर्मत्वमप्रसिद्धमिति भावः । पराग़िति । पराक्त्वं प्रतियोगित्वं प्रत्यक्त्वमनुयोगित्वं प्रकृते विवक्षितं । विषयस्य यो विषयी तद्भावस्य विषयितायाः पराक्प्रत्यग्भावौ अनुयोगित्वप्रतियोगित्वे ताभ्यां रूप्यते सत्वेन गृह्यत इति तादृशरूपस्तत्त्वादित्यर्थः । विषयितायाः संबंधरूपतया प्रतियो-ग्यनुयोग्युभयसापेक्षे एकस्मिन्नेकनिरूपितप्रतियोग्यनुयोगिभावस्य उपाधिनैरपेक्ष्येण शुद्धात्मरूपज्ञानस्य न स्वविषयकत्वमिति भावः । युगपदिति । उपाधिकृतभेदमंतरैककाल इत्यर्थः । पराक्प्रत्यग्भावेत्यादेश्चित्त्वजडत्वाधीनत्वादित्यर्थः । चितो जडतादात्म्यरूप-विषयताश्रयत्वं तत्प्रतियोगित्वरूपं विषयत्वं जडस्यैव नतु चित इत्यर्थोऽत्र न संगच्छते ।

( टीका ) कर्तृकर्मविरोधादिति तु कथं । मैवं । ज्ञानस्यापि विषयीकरणलक्षण-व्यापारं प्रति कर्तृत्वेन स्वविषयत्वे कर्तृकर्मभावापरिहारात् इतरथा ज्ञानमर्थं विषयीकरोतीति न स्यात् । अथवा स्वमते ज्ञानस्वरूपस्याप्यात्मनो ज्ञानं प्रति कर्तृतास्तीति ज्ञापनायेदमुदितं ।

---

युगपदित्युत्तरपंक्तिविरोधात् । औपाधिकभेदेनापि चेतने जडत्वस्य जडे चेतनत्वस्यायोगेन युगपदित्यस्यालग्नकतापत्तेः । एकस्येति सामान्योक्त्यसंगतेश्च । इतरथेति तथाच विषयीकरणं विषयितैव तत्कर्तृत्वकर्मत्वे प्रतियोगित्वानुयोगित्वरूप एव पर्यवस्यत इत्युक्तविरोधो युक्त एवेति भावः । ननु तर्हि स्फुटतया पराक्प्रत्यग्भावविरोधादित्येव वक्तव्यं किमर्थं विषयितायां अप्युक्तरीत्या क्रियात्वविवक्षया तथोक्तिरित्यत आह । अथवेति इदमुदितमिति । ननु पूर्वं ज्ञानरूपक्रियां प्रति कर्तृकर्मभावस्य ज्ञानस्य स्वविषयकत्वपक्षे प्रसक्तेस्तद्विरोधस्य स्वविषयत्वपरित्यागहेतुत्वं पराभिमतमित्येतद्बाधितमित्याशंक्य विषयीकरणरूपक्रियांतरविवक्षयैतन्मूलमतो न बाधितार्थकमिति रीत्यापूर्वग्रंथेन योग्यतैवोपपादिता । इदानीं तु तस्य प्रयोजनमनेन ग्रंथेनोच्यते तस्य तु पूर्वग्रंथेनानुक्तत्वात्कथमथवेति संगच्छते भिन्नविषयत्वेनैकस्मिन्नेव विषये पक्षांतररूपत्वाभावात् । न चेदं युक्तमपि । ज्ञानक्रियामुपादायैतन्मूलोपपादने शंकाग्रंथोक्तबाधकानुद्धारः । विषयीकरणरूपक्रियांतरमुपादाय मूलार्थवर्णने तादृशक्रियां प्रति कर्तृकर्मविरोधः स्वमतेनास्त्यतः स्वविषयकत्वमस्तीत्येव ज्ञापितं स्यान्नतु ज्ञानरूपस्यात्मनो ज्ञानक्रियां प्रति कर्तृत्वं बीजाभावादन्यथा शब्दस्य द्रव्यत्वमपि ज्ञापितं स्यादविशेषात् । तस्मादिदमयुक्तमिति चेन्न । योग्यतोपपादनपरेणापि पूर्वग्रंथेन पराक्प्रत्यग्भावविरोधादिति विहाय कर्तृकर्मत्युक्तेः प्रयोजनविशेषः सूचितो भवति । इदानीं तु तस्य प्रयोजनांतरमुच्यत इत्याशयेनाथवेत्युक्तिसंगतेः । प्रयोजनविशेषस्तु संबंधप्रतियोगित्वानुयोगित्वयोरपि कर्तृत्वत्वकर्मत्वत्वादिरूपतयैव विरोधः । चैत्रो ग्रामं युनक्ति पटस्तंतून् समवैतीति व्यवहारेण तयोरपि कर्तृत्वकर्मत्वरूपतावगतेर्न तु स्वातंत्र्येण गौरवादिति सूचनरूपः । विषयीकरणक्रियानिरूपितकर्तृत्वकर्मत्वयोरपि सामान्यतः कर्तृत्वकर्मत्वरूपेण ग्रहणं कृत्वा तयोर्विरोधाभावस्य स्वमते तैरित्यनेन सूचने ज्ञापकसामान्यएवासति बाधके प्रवृत्तेः प्रामाणिकमात्मनः स्वात्मकज्ञानरूपक्रियां प्रति कर्तृत्वं बोधितं भवतीति द्वितीयदोषस्याप्यभावात् । अत एवात्मन इत्येतावन्मात्रं हित्वाऽऽत्मप्रकाशस्येति शेषपूरणं कृतमिति । अथवात्मरूपप्रकाशस्य नित्यस्य कर्त्रनुपपत्तिरूपविरोधात्तत एव तद्घटितकर्मानुपपत्तिविरोधात्स्वविषयकत्वं तैर्नांगीक्रियत इति मूलार्थः । न चैवं सविषयकत्वरूपसकर्मकत्वमात्रस्य निषेधसंभवात् स्वविषयकत्वमिति विशेषनिषेधायोग इति वाच्यं । प्रकृताभिप्रायेण तदुपपत्तेरित्यभिप्रेत्य परोक्तं पराक्प्रत्यग्भावहेतुमनभिधाय तदभिप्रायविषयतया संभावितहेतुकथने प्रयोजनमाह । अथवेति । इदमभिहितं ज्ञानरूपक्रियागर्भितमेवैतद्दूषणमुदितमित्यर्थः । एवं चाथवेति पंक्तेर्मूलव्याख्यानांतरपरत्वान्न पक्षांतरत्वानुपपत्तिदोषः। स्वात्मकज्ञानक्रियां प्रति कर्तृत्वस्य परानभिप्रेतत्वोक्त्या स्वमते विशेषबलादाश्रयत्वादिरूपकर्तृत्वमस्तीति ज्ञापितं भवतीति न द्वितीयोपि दोष इति सारं । पूर्वं ज्ञानक्रियां प्रति कर्तुरात्मनः कर्मत्वविरोधादिति मूलार्थमभिप्रेत्य शंका कृता तादृशार्थमभ्युपेत्यैव

(टीका) कथमेतदिति चेत्। इत्थं । अस्माभिर्विज्ञानं सविशेषमंगीकृतं। विशेषश्च भेदकार्यं करोति। एवं तर्ह्यतिप्रसंगस्स्यादिति चेन्न। सति प्रमाणे तन्निर्वाहकहेतुभूतभेदाभावे च तत्प्रतिनिधिना तत एव सिद्धेन विशेषेण तन्निर्वाहाभ्युपगमात्। प्रपंचितं चैतदन्यत्राचार्यैः। मा भूदात्मप्रकाशः स्वविषयः। परविषयस्तु भविष्यति। नच पराभावो दोषः। मिथ्याभूतस्य परस्यांगीकृतत्वात्। नचैवं सति। तद्विषयत्वस्यापि मिथ्यात्वप्रसंगो दोषः। इष्टत्वात्। अतो मिथ्यारूपस्य परविषयत्वस्य सद्भावाद्भवेदात्माप्रकाश इत्यत आह।

**(मूलं) मिथ्याभूतं परविषयत्वं चानिर्वचनीयनिरासादेव निरस्तं। ॥६६॥**

(टीका) व्याख्यातप्रायमेतत् मुक्तात्मन्यनैकांत्यतादवस्थ्यं च द्रष्टव्यं।

---

क्रियामात्रस्य ज्ञानातिरिक्तत्वमभ्युपेत्यैकं समाधानमभिहितं। इदानीं तु कर्तृत्वविरोधात्तदुपहितकर्मत्वस्यापि तत एव विरोधादित्यर्थाभिप्रायेण समाधानं ज्ञानक्रियामादायैवातो न पूर्वपक्षसमाधानयोरन्यतरस्यालग्नकतेति ध्येयं। टिप्पण्यां तु अथवा कर्तृकर्मविरोधात्प्रत्यक्पराग्भावविरोधादित्यर्थः। नचैवमाचार्योक्तिरपि तथैव स्यादिति वाच्यं। स्वमते ज्ञानरूपस्याप्यात्मनो ज्ञानं प्रति कर्तृतास्तीति ज्ञापनाय तदुक्त्युपपत्तेरित्याह। अथवेतीत्युक्तं। तत्पक्षे अथवेत्यनंतरं कर्तृकर्मविरोधादित्यस्य प्रत्यक्पराग्भावविरोधादित्यर्थ इति पूरणं कर्तव्यं। ज्ञापनायेत्यनंतरं तु शब्दः पूरणीयः। लाक्षणिकपदप्रयोगान्यथानुपपत्त्या च तज्ज्ञापनमित्यनुसंधेयं। अन्यथाऽथवेत्यस्य प्रयोजनोक्तिपरत्वप्राप्त्या पक्षांतरत्वोक्त्यसंगतेः। पूर्वोपदर्शिताया अनुत्थारापत्तेरिति ध्येयं। कथमिति। स्वस्य स्वाश्रयताया बाधितत्वात्कथमेतत्प्रामाणिकमित्यर्थः। करोतीति। तथाचान्यत्र प्रामाणिकत्वेनोक्त अश्रयाश्रयिभावः संगच्छत इत्यर्थः। अतिप्रसंग इति। घटः स्ववानिति प्रत्ययापत्तिर्भेदाभावापत्तिश्चेत्यादिरूप इत्यर्थः। तत एव सिद्धेनेति। प्रामाणिकार्थनिर्वाहार्थमेवार्थापत्त्या सिद्धेनेत्यर्थः। विशेषेणेति। वस्तुनिष्ठस्वाभाविकशक्तिविशेषेणेत्यर्थः। तथाचोक्तं विष्णुतत्वनिर्णयटीकायां द्वितीयपरिच्छेदे। विशेषो नाम वस्तुनः काचिच्छक्तिरिति। ननु तादृशव्यवहारादेरन्यैरन्यथोपपादितत्वात्कथं विशेषसिद्धिर्भवतामपीत्यत आह। प्रपंचितं चेति। अनुव्याख्यानादावित्यर्थः। तत्प्रकारं च लेशतोऽग्रे दर्शयिष्यामः। मिथ्यात्वप्रसंग इति। मिथ्योपाधिकस्य मिथ्यात्वांगीकारादिति भावः। मुक्तात्मनीति। निवृत्ताविद्ये तस्मिन् अविद्यासंबंधाधीनपरोपाधिकसाविषकत्वस्य कथमप्यभावेनाप्रकाशत्वप्राप्त्या जडत्वप्राप्तेरिति भावः। ननु निवृत्ताविद्यात्वादेव जडत्वरूपधर्मस्याप्यप्रसक्त्याकथं मन्मतरीत्या व्यभिचारः। भवन्मते तु तत्र जडत्वप्रसक्तिरेव नास्तीति चेन्न। एवं तर्हि निवृत्ताविद्यत्वादिति हेतूकरणस्यैव तवायुक्ततापत्तेस्तत्धर्मस्यापि तत्र वक्तुमशक्यत्वात्। इदानीं व्यवहारप्रामाण्यानुरोधाद्बद्धपुरुषकल्पिततादृशधर्मस्वीकारे साविषयकत्वाभावादिव्यवहारप्रामाण्यानुरोधात्तादृशसाविषयकत्वाभावस्यावर्जनीयतया तेन जड-

(टीका) ननु शुक्तिरजताद्यभावेपि परमार्थत एव विज्ञानं तद्विषयमस्ति । तथा पराभावेपि परविषयत्वं सत्यमेव कस्मान्न स्यात् । स्यात्तत् । नत्वेवं परोंऽगीकुरुते । तेन परोपाधिकानां मिथ्यात्वस्यांगीकृतत्वात् । पररीत्या चेदमनैकांत्यव्युत्पादनं । ननु माभूदात्मप्रकाशस्स्वविषयो मा च भूत्परविषयः। निर्विषय एवायं किन्नस्यादिति तृतीयपक्षं निराकरोति । विषयवर्जितः प्रकाश एव न भवति घटवत् । आत्मा न प्रकाशःप्रकाश्यशून्यत्वात् घटवत् । अन्यथा घटोपि प्रकाशस्स्यादिति जडत्वासिद्धिः । ननु विषयशून्यस्य घटस्यप्रकाशत्वाभावेप्यात्मा विषयवर्जितः प्रकाशोस्तु को दोषः । नहि सर्वैर्भावैरेकविधैर्भाव्यामिति नियमोस्ति । यथान्यो ज्ञाताऽन्यश्च ज्ञेय इत्यन्यत्र दर्शनेप्यात्मन्यैक्यं गृह्यते । तथेति चेत् । स्यादप्येवं । यद्येवं प्रमाणं स्यात् । नचैतदस्तीत्याह । तत्प्रमाणाभावात् । प्रकाशत्वस्यैवानुपपत्तावात्मनः स्वप्रकाशत्वं सुतरां परेषामशक्योपपादनमिति मन्वानो भगवानाचार्योऽस्वप्रकाशत्वं जडत्वमिति परोक्तमपि निराकर्तुं न पृथक्प्रक्रांतवानिति । अथ परिच्छिन्नत्वहेतुमपि विशेषतः प्रत्याचिख्यासुस्तत्किं देशतः किंवा कालतोऽथवा वस्तुत इति विकल्पं हृदि निधायाद्याद्वितीयौ निराकरोति । देशतः कालतः परिच्छिन्नत्वं प्रकृतिकालादिष्वभावाद्भागासिद्धं । प्रकृतिकालाकाशादीनां पक्षैकदेशानां सर्वगतत्वान्नित्यत्वाच्च देशतः कालतः परिच्छिन्नत्वं नास्तीति भागासिद्धं भवति । नच जडत्वादिना तस्यापि परिच्छिन्नत्वासिद्धिः। उक्तविधयाऽनैकांत्यात् । आगमविरोधाच्च । नच प्रकृत्यादिव्यतिरिक्तस्यैव पक्षत्वं । तन्मिथ्यात्वस्य निर्निबंधनत्वापत्तेः। दृश्यत्वादेर्दुष्टत्वात् । आगमानांच निरसिष्यमाणत्वात् । उक्तवक्ष्यमाणदूषणगणानिस्ताराच्च ।

---

त्वापादनेन व्यभिचारापादनात् । शिष्यव्युत्पादनाय स्वरीत्या शंकते । नन्विति । अन्यथेति । आत्मन्यैक्यमिति । भवन्मत इत्यादिः । अशक्योपपादनमिति । अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वरूपस्यापि तस्यात्मनो दृश्यत्वस्य व्यवस्थापितत्वादशक्योपपादनत्वमित्यर्थः। परिच्छिन्नत्वमभावप्रतियोगित्वमित्यर्थमभ्युपेत्य देशतः कालतः इति । सप्तम्यर्थे तसिः । नचैवमव्यावर्तकता । देशकालपदयोः किंचिद्देशकालपरत्वेनाभावे देशत्वकालत्वव्यापकतानिवेशभ्रमनिवर्तनार्थत्वेन वाऽभावस्य संसर्गाभावरूपत्वबोधतात्पर्यकत्वेन वा सार्थक्यात् । परिच्छिन्नत्वमित्यस्य भेदप्रतियोगित्वमित्यर्थस्फोरणाय वस्तुत इति । आगमेति । गौरनाद्यंतवती अजामेकां लोहितशुक्लकृष्णां कालश्च नित्यः प्रकृतिश्चनित्या स यथानंतोऽयमाकाश एवमनंत आत्मा वेदितव्यः आकाशवत्सर्वगतश्च नित्यः । याव द्ब्रह्म विष्ठितं तावती वागित्याद्यागमविरोधादित्यर्थः । आगमानामिति । वाचारंभणमित्यादीनामित्यर्थः । उक्तवक्ष्यमाणेति । अप्रसिद्धविशेषणत्वादीनामुक्तानां प्रत्यक्षबाधादीनां वक्ष्यमाणानामित्यर्थः । अनिस्तारादिति । तेषां मिथ्यात्वसाधकानुमानादीनामित्यर्थः। अद्वैतमते

(टीका) तृतीयं निराचष्टे ।

(मूलं) वस्तुतः परिच्छिन्नत्वमात्मनोपि भेदांगीकारादनैकांतिकं ।
(टीका) वस्तुतः परिच्छिन्नत्वं हि वस्त्वंतराद्व्यवच्छेदो भेद इति यावत् । विपक्षभूतस्यात्मनस्तत्ववादिना भेदोंगीक्रियत इति मिथ्यात्वे साध्ये वस्तुतः परिच्छिन्नत्वमनेकांतिकं भवति । नच प्रतियोगिभूतप्रपंचस्य मिथ्यात्वादात्मनो भेदानुपपत्तिरिति वाच्यं । प्रपंचमिथ्यात्वसिद्धौ वस्तुतः परिच्छिन्नत्वस्य हेतुत्वसिद्धिः । तत्सिद्धौच प्रपंचमिथ्यात्वसिद्धिरितितिरेतराश्रयप्रसंगात् । भेदमिथ्यात्वानुमानादीनां चोक्तवक्ष्यमाणदोषग्रस्तत्वात् । एतेनात्मत्वहेतुरपि परास्तः । तत्खल्वदृश्यत्वं वा प्रमातृत्वं वा प्रकाशत्वं वा स्वप्रकाशत्वं वाऽपरिच्छिन्नत्वं वा वक्तव्यं। तत्सर्वमुक्तरित्याऽसिद्ध । दृष्टांतश्च साधनविकलः । जातिविशेष आत्मत्वमिति चेत् न । तस्याप्यात्मनिपरेण वस्तुतोऽनभ्युपगमात् । मिथ्याभूतस्य निरस्तत्वात् । आरोपितस्यातिप्रसंजकत्वात् ।

---

आत्मनः स्वसमसत्ताकभेदानंगीकारात्तथा विविक्षायामपि दोषार्थं तत्ववादिन इति। आत्मत्वहेतुरिति । विमता आत्मनस्तत्वतो न भिद्यंते आत्मत्वात् परमात्मवदित्युक्तहेतुरित्यर्थः । एतेनेत्युक्तं विशदयति । तत्खल्विति । जडविरुद्धधर्मत्वादेतेषां विकल्पकोटित्वेन प्रसक्तिः । स्वप्रकाशत्वं अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वं । प्रकाशत्वं ज्ञानत्वजातिमत्वं । चित्येव तैर्ज्ञानत्वजातिस्वीकारात् । उक्तरीत्येति । वेद्यत्वस्यैवोपपादितत्वादाद्यचतुर्थयोरसिद्धिः । प्रमातृत्वस्य यथाकथंचिदंतःकरणादावपि सत्त्वात्स्वसमानसत्ताकपरमात्मप्रतियोगिकभेदाभावरूपत्वेन निष्कर्षणीयसाध्याभाव्यभिचारवारणाय स्वसमानसत्ताकप्रमातृत्वस्यैव हेतूकर्तव्यतया वास्तवप्रमातृत्वस्यात्मनि पूर्वरीत्या निरस्तत्वेनासिद्धिः । नच साध्यं तावत्पर्यंतं कुतो विवक्षणीयमिति वाच्यं । वास्तवात्मभेदस्य परमतेऽप्रसिद्ध्या तदभावरूपसाध्याप्रसिद्धेः । व्यधिकरणधर्मावच्छिन्नाभावस्य घटादिसाधारण्येन तेनात्मनां स्वरूपैक्यासिद्धिप्रसंगेनार्थांतरताप्रातात् । कथंचिदुक्तसाध्यपक्षेप्यऽर्थांतरोत्धारेऽनिर्वचनीयस्य निरस्तत्वात्पूर्वोक्तरीत्या परमते प्रमातृत्वमयुक्तमिति प्रमातृत्वस्योक्तविशेषणानाक्रांतस्याप्यसिद्धिः । निर्विषयत्वात्प्रकाशात्मकत्वासिद्धिः। प्रकृत्यादिषुव्यभिचारवारणाय वस्तुतः परिच्छिन्नत्वाभावस्यैव हेतूकर्तव्यतया तस्याप्युक्तरीत्याऽसिद्धिः। दृष्टांतश्चेति । परमात्मन्यप्युक्तरीत्या साधनाभावस्योपपादयितुं शक्यत्वादित्यर्थः । जातीति । एकात्मवादिन आत्मत्वजात्यभ्युपगमो अत्यंतासंभावित इति स्फोरणाय तस्यापि विकल्पकोटावनिक्षेपः । कल्पितभेदमादाय तैर्जातेरभ्युपगमात्छंकाकृतेति ध्येयं । वस्तुत इति । पारमार्थिकस्य स्वसमानसत्ताकस्य चेत्यर्थः । मिथ्याभूतस्येति । व्यावहारिकत्वरूपानिर्वचनीयत्वव्याप्यधर्मविशिष्टस्येत्यर्थः । निरस्तत्वादिति । अनिर्वचनीयस्वरूपनिरासादितिभावः । आरोपितस्येति । आरोपितसाधारणात्मत्वत्वमात्ररूपावच्छिन्नस्यात्मत्वप्रकारकज्ञानविषयत्वमात्ररूपस्य वेत्यर्थः अतिप्रसक्तत्वात् । देहादौ व्यभिचारित्वात् । आत्मतादात्म्यभ्रम

आत्मत्वस्यापि तत्र भ्रमगोचरत्वादिति भावः। अत्र वदंति। शुद्धस्याज्ञेयत्वेन तत्र व्यभिचाराभावात् ज्ञेयत्वमेव हेतुः। ज्ञानं च वृत्तिवृत्तिवैजात्यावच्छिन्नं विषयता चाकाराख्या नतु तादात्म्यं वृत्तितादात्म्यस्य घटादावभावात्। नन्वंतःकरणवृत्तेरंतःकरणपरिणामतया शुक्तिरजताद्याकाराविद्यावृत्तेस्तत्परिणामितया तदुभयसाधारण्यैकवैजात्ये मानाभावेनांतःकरणवृत्तिवृत्तिवैजात्यनिवेशे शुक्तिरूप्यादिदृष्टांते साधनवैकल्यमविद्यावृत्तिनिवेशे च घटादौ तदभावादसिद्धिरिति चेन्न। शुक्तिरजतज्ञानं ममोत्पन्नमुच्छिन्नं चेत्यनुभवबलादेवाविद्यावृत्तावपि ज्ञानत्वजातिस्वीकारेण साधनवैकल्यविरहात्। अत एव स्मृतेरज्ञाननिवर्तकत्वेन प्रमात्वाभावात्प्रमात्वव्याप्यांतःकरणवृत्तिविशेषत्वाभावेनाविद्यावृत्तित्वेऽपि तस्या अपि ज्ञानत्वव्यवहारः। न चैवं सति कामः संकल्प इत्यारभ्य ह्रीर्धीरित्येतत् सर्वं मन एवेति ' श्रुतौ धीपदेन ज्ञानत्वजात्यवच्छिन्नमनूद्य तस्य मनस्त्वावधारणायोग इति वाच्यं। तच्छ्रुतौ प्रमात्वव्याप्यांतःकरणवृत्तिवैजात्यावच्छिन्नस्यैव ग्रहणसंभवात्। उक्त श्रुतौ अविद्यावृत्तिसाधारणधीमात्रनिर्देशेऽपि विशेष्यविशेषणाकारवृत्तिद्वयावच्छिन्नचित्यपि धीत्वव्यवहारात्तस्याश्च विशेष्याकारमनोवृत्तिघटितत्वेन तथा निर्देशोपपत्तेः। अत एव विचिकित्साया अपि मनस्तादात्म्योक्तिनिर्वाहः। न चैवं सुखादेरनावृत्तचैतन्यसंबंधस्य वृत्तिं विनैव संभवेन सुखादौ वृत्त्यनंगीकाराद्भागासिद्धिरिति वाच्यं। सुखादौ वृत्त्यनभ्युपगमे साक्षिणो नित्यत्वेन ज्ञाननाशरूपसंस्कारत्वानुपपत्त्या तद्विषयकवृत्तेरावश्यकत्वात्। नच सुखविशिष्टरूपेण साक्षिणो नाशांगीकारात्तादृशसंस्कारं प्रति सुखादिज्ञानस्य कारणत्वोपपत्तिरिति वाच्यं। सुखादिविषयकानुमित्यादिना तत्संस्कारनिर्वाहाय सुखादिगोचरसंस्कारं प्रति तद्विषयकवृत्तित्वेन कारणताकल्पनस्यावश्यकतया प्रत्यक्षस्थलेऽपि तन्निर्वाहायवृत्तिकल्पनमावश्यकं। यदि च तत्संस्कारत्वं कार्यतावच्छेदकीकृत्य तद्विषयकवृत्तित्वेन कारणता (न) कल्प्यते। संस्कारस्य नाशत्वेन तत्र संस्कारत्वजातौ मानाभावात्। एवं च तत्तन्नाशं प्रति तत्तत्प्रतियोगिनां कारणत्वेन क्लृप्तत्वाद्विशिष्टसाक्षिनाशे प्रतियोगिभूतस्य कारणत्वं क्लृप्तमेव। परंतु विशिष्टसाक्षिनाशे अनुमित्यादिरूपवृत्तिनाशे च सुखादिविषयकत्वमात्रमास्थीयते स्मृतिजनकसंस्कारविशेषस्य सविषयकत्वस्य सर्वसम्मतत्वात्। घटादिनाशरूपसंस्कारे परं सविषयकत्वं न स्वीक्रियते प्रयोजनाभावात्। सुखादिविषयकनाशत्वेनैव तत्स्मृतिहेतुता च तथा च वृत्त्यंगीकारे प्रयोजनाभाव इत्युच्यते तदा सुखादावनुमित्याद्यात्मकवृत्तिमादायैव हेतुरुपपादनीयः। शुक्तिरजतादावपि शुक्तिरजतादिकं मिथ्येत्येवमाकारवृत्ति विषयत्वमुपादाय हेतुरुपपादनीयः। इत्थं चाविद्यावृत्तिसाधारणधीत्वजात्यनंगीकारे हेतुशरीरेऽतःकरणवृत्तिमात्रनिवेशेऽपि न साधनवैकल्यं। नच शुद्धस्याज्ञेयत्वे शुद्धासिद्धिर्न स्यादिति वाच्यं। स्वप्रकाशतयैव तत्सिद्धेः। नच शुद्धं स्वप्रकाशमित्यादिवाक्यजन्यबोधे शुद्धाप्रकाशे तस्य स्वप्रकाशत्वासिद्धिरेव कथमिति वाच्यं। अस्वप्रकाशत्वव्यापकाभावप्रतियोगित्वरूपायाः स्वप्रकाशत्वनिरूपितव्यतिरेकव्याप्तेरुपहितत्वाभावरूपशुद्धत्वे ज्ञानमुद्बुद्धसंस्कारो वा यदा तदोक्तशुद्धत्वविशिष्टे स्वप्रकाशत्वाभावो न ज्ञायते। वह्न्यभावव्यापकाभावप्रतियोगित्वस्य धूमे ग्रहे उद्बुद्धसंस्कारे वा सति धूमवति वन्ह्याभावस्याज्ञानवत् किं चोपहितत्वमस्वप्रकाशत्वव्यापकमित्याकारे निश्चये उद्बुद्धसंस्कारे वा सति उपहितत्वाभावविशिष्टे स्वप्रकाशत्वाभावो न ज्ञायते। वन्हिर्धूमव्यापक इति निश्चये उद्बुद्धसंस्कारे सति वन्ह्यभावविशिष्टे धूमज्ञानाभाववत् अत

उपहितत्वाभावरूपस्य शुद्धत्वस्याज्ञातत्वेऽपि न क्षतिः । शुद्धं स्वप्रकाशमित्यादि-वाक्यानामपि उक्तव्याप्यव्यापकत्वबोधन एव तात्पर्यं उक्तसंशयानुत्पत्तेरेव सिद्धिपदार्थत्वात् । न चोपहितत्वाभाव विशिष्टे स्वप्रकाशत्वाभावो न ज्ञायते इति वाक्यजन्यबोधे शुद्धभानमावश्यकमिति वाच्यं । उपहितत्वाभावावच्छिन्नविशेष्यतानिरूपितस्य ज्ञानप्रकारत्वस्यास्वप्रकाश्यत्वे उक्तवाक्येनाभावबोधनात् । न चोपहितत्वास्यप्रकाशत्वयोर्व्याप्यव्यापकभावे ज्ञातव्ये तदभाववति तदभावोऽवश्यं ज्ञातव्यः । अन्यथा व्यभिचारज्ञानानुच्छेदापत्तेः । तथा च शुद्धभानमावश्यकमिति वाच्यं । शुद्धस्य वृत्त्यविषयत्वादेव तदवगाहिव्यभिचारज्ञानस्याकल्पनेन तद्विघटनायोक्तसहचारज्ञानस्यापि प्रयोजनाभावात् । नच शुद्धरूपधर्मिज्ञानाभावेन तद्घटितसंशयसामग्र्यप्रसिद्ध्यैव संशयापादनायोगादुक्तव्यापकत्वादिग्रहस्य तत्प्रतिबंधकत्वेन तद्वारणमनुचितमिति वाच्यं । स्वमते तथैव समाधानसंभवेपि मतांतरानुसारिभिःसामग्रीकल्पनेन तदापादनेतान्प्रत्युक्त धियः प्रतिबंधकत्वस्यवाचस्पतिनाभिहितत्वात् । नच शुद्धस्य वृत्त्यविषयत्वे वेदांतजन्यवृत्ते रूपहितविषयत्वं वक्तव्यं तथाच तेनाज्ञानानिवृत्तिप्रसंगः । उपहितस्य मिथ्यात्वेन तद्विषयकधियः सन् घट इत्यादिधीभ्यो विशेषाभावात् । वेदांतानां स्वरूपमात्रपरत्वानुपपत्तिश्चेति वाच्यं । वेदांतैर्ब्रह्मांशेऽन्याप्रकारकस्य ब्रह्मान्याविषयकस्य वा शाब्दस्य मनसा च तादृशस्यैव ब्रह्मसाक्षात्कारस्य जननेन तेन मूलाज्ञाननिवृत्तिसंभवात् । वृत्तिकाले तदुपहितत्वस्यैव सत्वेन शुद्धे उक्तवृत्तिविषयत्वसंबंधाभावात् व्यभिचारानवकाशात् घटादिज्ञानानां ब्रह्मांशे घटादितादात्म्याद्यवगाहित्वेनोक्तब्रह्मज्ञानवदज्ञानसमानविषयकत्वाभावान्न तन्निवर्तकत्वं । न चाज्ञानविषयत्वस्य स्वोपहिते सत्त्वादुक्तब्रह्मज्ञानविषयत्वस्य स्वोपहिते सत्वात्कथं समानविषयकत्वं तयोरपीति वाच्यं । ब्रह्मेतराविषयकत्वेन ब्रह्मविषयकत्वेन तयोः समानविषयकत्वाक्षतेः । स्वस्वोपहितरूपाधिकरणमात्रं भिन्नं तच्चाकिंचित्करं । उपहितस्य मिथ्यात्वादेव न व्यभिचार इति वाचस्पतिमतानुसारिणः । विवरणमतानुसारिणस्तु शुद्धत्वोपहिततादात्म्यादिधर्माणामप्यभावापत्त्योपहितं ब्रह्मेत्यादिव्यवहारस्याप्यसंगतिः । अशुद्धे शुद्धत्वस्वीकारे व्याहतिश्चातः स्वसमानसत्ताकधर्मनिषेध एव निर्धर्मिकत्वबोधकश्रुतेरर्थः । अदृश्यत्वादिप्रतिपादकश्रुतेस्तथैवाभिप्रायो वक्ष्यमाणदृश्यत्वनिषेधकत्वं वा । एवं च शुद्धे वृत्तिविषयत्वमावश्यकं । अन्यथासंबद्धस्योपाधित्वेऽतिप्रसंगेन संबद्धत्वेन तथात्वस्य वक्तव्यतया तस्योपाधितायाःदुर्घटत्वापत्तेः।किंच स्वप्रकाशे चिदंशेनाज्ञानमात्मनः सर्वदा सिद्धत्वात्किंतु पूर्णानंदांशे तन्निवर्तकवृत्तिविषयतापि तत्रावश्यकी। तथाच शुद्धे व्यभिचारो दुर्वार एवेति शब्दाजन्यवृत्तिविषयत्वं दृश्यत्वं। ब्रह्मणस्त्वेतन्मते शाब्दापरोक्षविषयत्वमेव न मानसविषयत्वमनुमानादिवेद्यत्वं वा ' यन्मनसा न मनुते ' ' नैषा तर्केण ' इत्यादिश्रुतेः । तुच्छे तु शब्दजन्यवृत्तिविषयत्वमेव प्रत्यक्षादीनां तत्रासंबंधादतस्तदुभयस्मिन्न व्यभिचारः । पूर्वमते च शशविषाणादिपदाधीन वृत्तेर्निर्विषयकत्वाभ्युपगमाद्वा तत्र धीत्वजात्यनंगीकाराद्वा न व्यभिचारः । तुच्छं न क्षणिकमकारणत्वादिति क्षणिकत्ववाद्यनुमानवेद्यत्वादेस्तुच्छेऽगीकारे तु सप्रकारकधीविषयत्वं विवक्षणीयं प्रकारश्च सोपाख्यधर्मो ग्राह्यः । उपाख्या चास्तीति धीविषयत्वं घटत्व पटत्वादीनां तादृशत्वात्तत्प्रकारकधीविषये पक्षे सर्वत्रापि हेतुसत्वं अभावस्यापि सोपाख्यत्वात्तन्निष्ठाभावत्वस्यापि सोपाख्यत्वं। अन्यथाऽसत एव निरुपाख्यत्वेन सत एव सोपाख्यत्वेन सद्भूतोः संसर्गाभावस्य बौद्धाधिकारादादुक्तत्वेनाभावाभावत्वयोर्धर्मिधर्म-

भावानुपपत्तेः। तथाच तादृशाभावत्वप्रकारकधीविषये अभावेऽपि हेतूपपत्तिः। शुद्धब्रह्मणः सप्रकारकधीविषयत्वाभावादेव न व्यभिचारः। तुच्छनिष्ठत्रैकालिकनिषेधप्रतियोगित्वमव्यधिकारणात्मकत्वात्तुच्छमेव सदसतोस्संसर्गायोगादतस्तादृशप्रतियोगित्वरूपे धर्मेऽस्तीति धीविषयत्वरूपोपाख्या नास्तीति तत्प्रकाकधीविषये तुच्छे न व्यभिचारः। न चाभावस्य भट्टमते तुच्छत्वात्त्वया च तन्मतानुसरणात्तत्र सोपाख्यस्याभावत्वस्य ससंर्गः कथं स्यादिति वाच्यं। नास्तीत्यनुगतप्रतीतिनिर्वाहकस्य भावाभावसाधारणाभावत्वाख्याखंडधर्मस्याभावग्राहकमानासिद्धत्वादभावत्वोपहितरूपेणाभावस्यापि सोपाख्यत्वं। तद्भूतलघटादिरूपानुयोगिप्रतियोगिसंबंधित्वं। तेन रूपेणानुपलब्ध्या प्रत्यक्षेण वा ग्राह्यत्वं च। तद्भूतलवृत्तिघटत्वशशविषाणत्वाद्याख्याखंडधर्मेण तादृशतादृशाभावानामखंडानां तुच्छत्वं शब्देतरमानागम्यत्वं च। प्रकृते चाभावत्वोपहितस्य पक्षत्वेनाभिमतत्वान्न काप्यनुपपत्तिः। नन्वास्तित्वप्रकारकधीविषयत्वं तत्ववादिवेदांतिनये तुच्छेऽप्यंगीकृतमिति तुच्छनिष्ठत्रैकालिकनिषेधप्रतियोगित्वरूपधर्मस्याधिकरणस्वरूपतया तुच्छत्वेऽप्युक्तसोपाख्यत्वानपायात्तादृशधर्मप्रकारकवृत्तिविषये तुच्छे व्यभिचारतादवस्थमिति वाच्यं। सत्तादात्म्यसत्तादात्यत्वैतदन्यतरत्वस्यैव सोपाख्यत्वपदार्थत्वाभ्युपगमात्। तथा चैतदन्यतरवद्धर्मप्रकारकवृत्तिविषयत्वं हेतुः। तुच्छवृत्तिधर्मस्याप्युक्तान्यतरशून्यत्वरूपतुच्छत्वस्यैव सत्वान्न तत्प्रकारकवृत्तिविषयतुच्छे व्यभिचारः। नच तादृशान्यतरवत्वमेव हेतुरस्तु ब्रह्मणः सद्रूपत्वेन सत्तादात्म्यस्य तत्वस्य वा तत्राभावेन तत्रापि व्यभिचारानवकाशात्। अस्तीति धीविषयताया उपाख्यापदार्थत्वे तु अस्तीत्येवोपलब्धव्य इति श्रुतिबलाच्छुद्धब्रह्मण्यपि तस्य सत्वावश्यकतया व्यभिचारपरिहाराय तद्वत्धर्मप्रकारकज्ञानविषयत्वपर्यंतं हेतूकरणं युक्तं। शुद्धे किंचिद्धर्मप्रकारकज्ञाने भानानंगीकारद्व्यभिचारवारणसंभवादिति वाच्यं। सत्प्रतियोगिकत्वविशिष्टतादात्म्याधिकरणतायाः सद्रूपब्रह्मण्यसत्वेपि तादात्म्यस्यैकत्वे तदुपलक्षितस्य तत्र सत्वेन व्यभिचारापरिहारात्। तत्धोपहितस्यापि पक्षतया तत्र सत्वोपहितप्रतियोगिकत्वविशिष्टतादात्म्यस्यासिद्धेरन्यतरत्वप्रतियोगिकोटावेव प्रतियोगिकत्वाविशिष्टस्यनिवेशेऽप्यन्यतरत्वस्य शुद्धतादात्म्ये एव विश्रांतत्वेन ब्रह्मणि व्यभिचारापरिहाराच्च। तथा निवेशयितुमशक्यत्वादत उक्तरीत्या हेत्वादरः। नच सत्तादात्म्यसंग्रहार्थं सोपाख्यत्वशरीरे सत्तादात्म्यत्वस्य निवेशेऽपि हेतुशरीरे तन्निवेशो व्यर्थः। सोपाख्येज्ञयत्वादिधर्मांतरप्रकारकज्ञानविषयत्वमादायैव प्रकृतहेतोः सत्तादात्म्य रूपपक्षे उपपादनसंभवादिति वाच्यं। अन्यतरत्वरूपाखंडभेदस्य स्वरूपत एव हेतुशरीरनिविष्टतया तादृशभेदावच्छिन्नवत्धर्मप्रकारकेत्यादिहेतोः सत्तादात्म्यवत्धर्मप्रकारकेत्यादिहेतोर्लघुत्वाद्यर्थविशेषणाद्यघटितत्वाच्च सामंजस्यात्। यदि च तुच्छेऽप्यतुच्छधर्मसंसर्गोस्तीत्याग्रहस्तदास्तीति धीविषयत्वादिसमानाधिकरणवृत्तिनिरूपितविशेष्यत्वं हेतुत्वेन बोध्यं। यद्वा व्यवहारप्रयोजकविषयत्वं वृत्तिव्याप्यफलव्याप्ययोः साधारणहेतुः ब्रह्मणि तुच्छे च वाचस्पतिरीत्या व्यभिचारःपरिहर्तव्यः। व्यवहारप्रयोजकं च घटादौ चित्तादात्म्यं अतींद्रिये आकाराख्यविषयता च नच तदुभयसाधारणविषयतात्वरूपाखंडधर्मसत्वे मानाभावः व्यवहारप्रयोजकत्वमात्ररूपेण निवेशे सर्वव्यवहारप्रयोजकमूलाविद्यावति शुद्धे चिति तुच्छव्यवहारप्रयोजकाविकल्पाख्यवृत्तिविषयतावति तुच्छे च व्यभिचार इति वाच्यं।

चित्तादात्म्यज्ञानरूपवृत्तिविषयत्वैतदन्यतरवत्वस्यैव हेतुत्वेन प्रयोजकांतस्य परिचायकत्वात्। नच धर्मादाविव घटादावपि ज्ञानरूपवृत्तिविषयत्वेनैव हेतुमतासंभवेऽन्यतरनिवेशवैय्यर्थ्यमिति वाच्यं। अविद्यावृत्तौ धीत्वानंगीकारे शुक्तिरूप्ये साधनवैकल्यपरिहाराय तत्सार्थक्यात्। न चोक्तविषयतयोर्व्यवहारप्रयोजकत्वं कथं येन तत्परिचयः स्यादिति शंक्यं। यतस्तुच्छान्यविशेष्यकेऽस्तित्वप्रकारके व्यवहारे चितस्तादात्म्येन संबंधेन हेतुत्वं। चिद्विशेष्यके व्यवहारेऽसत्वापादकाज्ञानस्य विषयत्वसंबंधेन प्रतिबंधकत्वं दृश्यविशेष्यके व्यवहारे विषयतावच्छेदकत्वसंबंधेन तस्य प्रतिबंधकत्वं। नच तादात्म्यसंबंधेन चितश्चित्यसत्वात्तत्रोक्तव्यवहारस्योत्पत्त्यसंभव इति वाच्यं। उक्तव्यवहारविषये शुद्धचित्युक्तव्यवहारकारणत्वाद्युपहिताचितस्तादात्म्येन सत्वात्। न चोक्तप्रतिबंधकाभावेनोक्तव्यवहारजननसंभवाच्चितस्तत्र कारणत्वकल्पनं व्यर्थमिति वाच्यं। प्रतिबंधकेन हि कारणशक्तिरेव तिरस्क्रियते नतु तदभावः कारणं तथा चासाधारणकारणं चिदेव। किं चोक्तप्रतिबंधकाभावस्तुच्छेप्यस्तीति तत्राप्युक्तव्यवहारापत्त्या चित्तादात्म्यमावश्यकं प्रयोजकं। तुच्छविषयकशब्दप्रयोगादिरूपव्यवहारे तु विकल्पाख्यवृत्तिरेवेति। नच चित्तादात्म्यस्योक्तरीत्याऽतींद्रियादावप्यावश्यकत्वाद्वृत्तिविषयत्वघटितान्यतरत्वेन हेतुता न युक्तेति वाच्यं। प्रतिवादिनं प्रति हेतोरसिद्धिपरिहाराय तथोक्तत्वात्। नच स्वरीत्या व्यर्थविशेषणता दुर्वारेति वाच्यं। अन्यतरत्वरूपाखंडभेदस्य स्वरूपत एव निवेशेन कस्याप्यवैय्यर्थ्यात्। यद्वा चित्संबंधित्वं दृश्यत्वं चिति च तद्वैलक्षण्यरूपविनाशित्वादिव्याप्यचित्संबंधस्याभावान्न व्यभिचारः। न चैवमानंद ब्रह्मणो रूपं चिद्ब्रह्मणो रूपमित्यादिव्यवहारानुरोधाच्चिता सह कल्पितभेदस्य तादात्म्यस्य च चिति सत्वाद्व्यभिचारः। संबंधे प्रातीतिकान्यत्वनिवेशेन तत्परिहारे शुक्तिरूप्यादिदृष्टांते साधनवैकल्यादिति वाच्यं। चित्संबंधितावच्छेदकं यत् चिदवृत्तित्वविशिष्टतादात्म्यत्वं तदवच्छिन्नस्य हेतुतानुसरणे न सामंजस्यात्। यद्वा स्वातिरिक्तसंवित्प्रयोज्यत्वव्याप्यस्य व्यवहारत्वकत्वं दृश्यत्वं। व्यवहारश्च स्फुरणाभिवदनादिस्तावदन्यतमत्वेन निवेश्यः। स्फुरणं चासत्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टा चित् तत्संबंधेन तादात्म्यरूपेण घटः स्फुरति धर्मादिकं स्फुरति सुखादिकं स्फुरति चित्स्फुरतीत्यादि व्यवहारात्। संवित्वं च चित्वं। तथाच स्वातिरिक्तचित्प्रयोज्यत्वव्याप्येति फलितं। घटादावपरोक्षत्वव्यवहारो घटाद्यवच्छेदेन भग्नावरणचिता वा घटाद्याकारवृत्तिप्रतिबिंबितचिता वा जायते। धर्मादावस्तीति व्यवहारस्तदाकारवृत्त्या मनोवच्छेदेन भग्नावरणचिता धर्माद्याकारवृत्तिप्रतिबिंबितचिता वा जायते। सुखादावस्तीति व्यवहारः सुखाद्यवच्छिन्नचिज्जन्यस्तत्प्रतिबिंबितचिज्जन्यस्तदाकारवृत्तिप्रतिबिंबितचिज्जन्यो वाऽतः सर्वोपि व्यवहारः स्वातिरिक्तचित्प्रयोज्यः। चिदस्तीति व्यवहारस्तु न स्वातिरिक्तसंविदपेक्षः। चिदंशे कस्यापि संशयाभावेन शुद्धचिदतिरिक्तस्य कस्यापि नापेक्षा। एवं घटादिस्फुरणे विशिष्टचिद्रूपे शुद्धचित्प्रयोजिका शुद्धचिज्जन्य * मनोवृत्त्या ज्ञाननिवृत्तेर्विशिष्टचितः शुद्धचिति कल्पितत्वेन तदाश्रितत्वाच्च। ब्रह्मणि तु पूर्णानंदांशस्य वृत्तत्वेन तदंशस्य स्फुरणेऽज्ञाननिवृत्तये वृत्तेरपेक्षासत्वेपि चिदंशेनादित आवरकाभावेन तन्निष्ठाज्ञानाविषयत्वेन वृत्तेः प्रयोजकता किंतु अज्ञानाविषयत्वविशिष्टचित एव क्षेमसाधारणप्रयोजकता तद्विशिष्टत्वेन शुद्धचित एव स्फुरणत्वं। तत्र च स्वातिरिक्तचिद्रूपसंविदपेक्षा नास्त्येव। सर्वव्यवहारेषु स्वातिरिक्ताविद्यासापेक्षत्वाच्चिति

* टिप्पणी—शुद्धचित अविद्यासहितायाः सर्वकारणत्वान्मनोवृत्तेरपि तज्जनत्वं बोध्यं।

व्यभिचारवारणाय संवित्पदोपादानं । स्वातिरिक्तसंविदधीनस्वस्फुरणकत्वं लघुहेतुत्वेन बोध्यं । यद्वा स्वप्रकाशत्वं दृश्यत्वं । स्वप्रकाशत्वं च स्वातिरिक्तचिदनधीनस्वापरोक्षत्वकत्वं । अभानापादकाज्ञानाविषयत्वप्रयोजकविशिष्टा चित् अज्ञानाविषयत्वप्रयोजकविशिष्टा चिद्वा अपरोक्षत्वं। तादृशप्रयोजकं च चिति घटादिप्रत्यक्षस्थले घटाद्याकारवृत्तिजनकसामग्री सुखादिप्रत्यक्षस्थलेतज्जनकसामग्री तत्पूर्व भाविकालावच्छिन्नसुखादौ विद्यमानस्याज्ञानविषयत्वस्य सुखादावुत्पत्तिक्षणावच्छेदेनाभावो हि तादृशसामग्रीप्रयुक्तः इदानीमज्ञानाविषयत्वं सुखादौ चंदनयोगादिप्रयुक्तमित्यनुभवात् । न चोक्ताज्ञानाविषयत्व विशिष्टचिदेवापरोक्षत्वमिति कुतो नोच्यते किं सामग्रीरूपप्रयोजकनिवेशेनेति वाच्यं। साक्षात्करोतेः सकर्मकत्वनिर्वाहायोक्तरूपत्वावश्यकत्वात् । धात्वर्थतावच्छेदकफलशालित्वं हि कर्मत्वं । तत्फलप्रयोजकव्यापारघटितवाचकत्वं धातोः सकर्मकत्वमिति हि तार्किकादयः। अज्ञानविषयत्वाभावोपहितचित एवापरोक्षत्वरूपतया साक्षात्करोत्यर्थत्वे फलप्रयोजकत्वेन व्यापारस्य धात्वर्थघटकतया सकर्मकत्वानुपपत्तेः। अत एवासत्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचिदेव जानात्यर्थः। तादृशाज्ञानाविषयत्वविशिष्टचिन्मात्रस्य तथात्वे सकर्मकत्वानुपपत्तिप्रसंगात् । चिदंशनिष्ठापरोक्षतायाः स्वान्याविद्याधीनत्वाच्चिदंशोपादानं । नचैवं स्वान्यचिदप्रसिध्द्या चिदंशे लक्षणगमनायोगः। स्वनिष्ठापरोक्ष्यप्रयोजकचिन्निष्ठस्वान्यत्वाभावकत्वस्यैव स्वप्रकाशत्वपदार्थत्वात्। चिन्निष्ठाज्ञानाविषयत्वे क्षेमसाधारणप्रयोजकत्वं चित एव तद्विशिष्टत्वं चित एवेत्यादिपूर्वोक्तं ज्ञेयं। ब्रह्मणः स्वान्यानधीनापरोक्ष्यं च यत्साक्षादपरोक्षाद्ब्रह्मेति श्रुतिसिध्दं । तथा चानन्याधीनापरोक्षत्वावच्छिन्नानुयोगिकभेदप्रतियोगित्वं पर्यवसितं हेतुः । अपरोक्षत्वावच्छिन्नप्रतियोगिकभेदाश्रयत्वं पुनः शुद्धब्रह्मणः भेदात्यंताभावप्रतियोगित्वानंगीकारेण निवेशनार्हमिति वा दृश्यत्वस्य भावरूपता निर्वाहार्थं वा तत्परित्यागः। नच स्वप्रकाशं ब्रह्म साक्षादपरोक्षाद्ब्रह्मेति लौकिकवैदिकसामानाधिकरण्यप्रत्ययात्स्वप्रकाशत्वविशिष्टेपि ब्रह्मभेद आवश्यकोऽन्यथा ब्रह्मतादात्म्यसंबंधानुपपत्तेरिति चेन्न । स्वप्रकाशत्वोपहिते तत्प्रतियोगिकभेदाभावेन मिथ्याभूते तस्मिन्भागासिध्द्यापत्त्या स्वप्रकाशत्वोपहितानुयोगिकभेदस्य हेतावनिवेशेन स्वप्रकाशत्वोपलक्षितानु योगिकभेदस्यैव निवेशात्तादृशोपलक्षितशुध्दचैतन्यनिष्ठानुयोगितायामुपलक्षणया स्वप्रकाशत्वस्यावच्छेदकत्वात् । तादृशोपलक्षिते चैतन्ये शुध्दचैतन्यरूपब्रह्मप्रतियोगिकभेदाभावेनादोषात् । नच ब्रह्मणश्चैतन्यमानंदो ब्रह्मेत्यादिधीनियामकभेदमादाय दोष इति वाच्यं । तादृशभेदस्य ज्ञानत्वानंदत्वादिधर्मावच्छिन्नानुयोगिकत्वात् ब्रह्मनिष्ठज्ञानादिधर्मस्य चिन्मात्ररूपत्वेप्युपलक्षणया तत्र विद्यमानधर्मांतरस्य तादृशभेदानुयोगितावच्छेदकत्वात् ॥ ७ ॥ अथवा वेद्यत्वेसत्यपरोक्षव्यवहारयाग्यत्वाभावरूपं दृश्यत्वं । वेद्यत्वं च स्वावच्छिन्नचिद्विषयकं यद्भानप्रयोजकाज्ञानं तन्निवर्तकं वृत्तिविषयत्वं । एवं च घटादावुक्तवेद्यत्वस्यैव सत्वेन विशेषणाभावाद्विशिष्टाभावः । धर्मादावतींद्रियेऽपरोक्षव्यवहारयोग्यत्वरूपविशेष्याभावाद्विशिष्टाभावः। ननु अपरोक्षव्यवहारयोग्यत्वमभानापादकाज्ञानाविषयत्वतद्विशिष्टचित्तादात्म्यान्यतरवत्त्वमेव । तथा चाविद्यांतःकरणशुक्तिरूप्याद्यवच्छिन्नाभानापादकाज्ञानाप्रसिध्द्या स्वपदेनोपादानाभावादेतादृशं यद्यत्त्वं तत्वाभावकूटरूपाविशेषणसत्वस्य ब्रह्मणिव तत्रापि सत्वे तादृशाज्ञानाविषयत्ववच्चितादात्म्यसत्वादुक्तान्यतररूपविशेष्यस्यापि ब्रह्मणीवाक्षततया सिद्धिसाधनवैकल्ये स्यातां। नच सामान्यतः अज्ञानं निवेश्योक्तवेद्यत्वं

रूपविशेषणं निर्वाच्यं । तथाविद्याशुक्तिरूप्यादीनामपि अतीततादशायां वर्तमानतादृशायामपि अभावान्यत्वादिना रूपेण स्वावच्छिन्नचिद्विषयकासत्त्वापादकाज्ञाननिवर्तकानुमित्यादिवृत्तिविषयत्वाद्विशेषणाभावेनैव विशिष्टाभावो निर्वहतीति नासिद्धिरितिवाच्यं। एवं सति धर्मादावप्युक्तरीत्या वेद्यत्वस्योपपादयितुं शक्यत्वेन कुत्राप्यसिद्ध्यभावात् ब्रह्म तुच्छावच्छिन्नचिद्विषयकाज्ञानाप्रसिद्ध्या तयोर्व्यभिचाराभावेन च तन्मात्रस्य हेतुत्वसंभवे तदाभावघटितोक्तविशिष्टाभावनिवेशानौचित्यात्तस्य स्वतंत्रहेतुत्वेऽप्युक्तपरिष्कारे तन्निवेशायोगादिति चेन्न। अभानापादकाज्ञानविषयत्वतदवच्छेदकत्वान्यतरवत्वस्यैव प्रकृतेऽपरोक्षव्यवहारयोग्यत्वपदार्थतया तस्य च ब्रह्मणि घटादौ च सत्वेनाविद्यांतःकरणधर्मशुक्तिरूप्यादावसत्वाद्विशेष्याभावादेव विशिष्टाभावनिर्वाहात्। न चातीतदशायां शुक्तिरजतादिकं न भाति धर्मादिकं च न भातीति प्रतीतिव्यवहारानुरोधेन तयोरप्युक्ताज्ञानविषयतावच्छेदकत्वमावश्यकमिति वाच्यं। धर्मादेरनावृतसाक्षिसंबंधस्यैवाभावात् शुक्तिरजतादावतीततादशायां तदभावाच्च तादृशव्यवहाराद्युपपत्तौ तेषां तादृशाज्ञानविषयतावच्छेदकत्वानंगीकारात्। न चाज्ञानविषयत्वतदवच्छेदकत्वयोरव्याप्यवृत्तितया तदन्यतरत्वमप्यव्याप्यवृत्तीति विशेष्याभावस्य धर्मादाविव ब्रह्मण्यपि सत्वाद्विशिष्टाभावरूपं दृश्यत्वं ब्रह्मण्यस्तीति वाच्यं। ब्रह्मघटान्यतरत्वस्यैव प्रकृते पर्यवसितविशेष्यदलार्थत्वेन व्यभिचारानवकाशात्। पंचमप्रकारोपेतमोक्षांगीकारे तत्र व्यभिचारवारणायाज्ञानकालवृत्तित्वं देयं। ननु नानाजीवपक्षे चैत्रमोक्षरूपतदज्ञाननिवृत्तेर्मैत्राज्ञानकालसंबंधित्वाद्यभिचारस्तदज्ञान व्यक्तिर्विशिष्य निवेशे तन्निवृत्त्युत्तरमुत्पन्नघटादावसिद्धिस्तन्निवृत्तिपूर्वकालीनान्यदीयाज्ञान निवृत्तिरूपमोक्षे व्यभिचार इति चेन्न। अज्ञानाप्रयुक्तं यद्यज्जन्यं तत्तदन्यत्वे सति कालसंबंधित्वस्यैव तदर्थत्वात्। उक्तकालसंबंधित्वं ब्रह्मण्यपीति दृश्यत्वमुपात्तं। सत्यं। तस्य तुच्छेऽपि सत्वादुक्तदृश्यत्वसत्वाच्च व्यभिचारवारणाय कालसंबंधित्वमुपात्तं। तावन्मात्रस्योक्तमोक्षेऽपि सत्वात् उक्तभेदकूटनिवेशः। कूटानिवेशे एकमोक्षभेदस्यापरमोक्षेऽपि सत्वात्तद्दोषावारणमिति तन्निवेशः। अज्ञानाप्रयुक्तत्वं त्वज्ञानतल्लेशान्यतरतादात्म्यानापन्नत्वं। तेनाज्ञाननिवृत्तावज्ञानस्य प्रतियोगिविधया प्रयोजकत्वेन तादृशजन्याप्रसिद्धिः। जीवन्मुक्तभोगादिकमज्ञानानात्मकमपि तल्लेशात्मकमेवेति न तत्र हेत्वभावशंका। सद्विविक्तत्वमात्रस्य जगतो सद्वैलक्षण्यवादिनं प्रति साध्यत्वे तुच्छे व्यभिचाराप्रसक्तेः। पूर्वोक्तसर्वपक्षेषु असद्वारणविशेषणदानाद्यायासोऽनुपादेयः॥छ॥ एवं चित्तादात्म्यतत्वान्यतरमात्र रूपं चिद्विषयत्वं वा विनाशिसर्वदृश्यं इत्याकाराया काचन धीस्तां तद्व्यक्तित्वेन निवेश्य तद्विषयत्वं वा हेतुः वृत्तिप्रतिबिंबितचित्तादात्म्यं वा हेतुः। गुरुत्वादावपीश्वरोपाधिमायावृत्तिप्रतिबिंबितचित्तादात्म्यसत्वेन कुत्राप्यसिद्ध्याद्यभावात्। उक्तं हि विवरणे। ईश्वरस्य सर्वकर्तृत्वादेव विद्यमानसर्वविषयतेति। उक्तं हि तत्वदीपने तद्व्याख्यावसरे। ईश्वरोपाधिसत्वप्रधाना माया विद्यमानसर्वविषयाकारेण परिणमते तस्मिंश्च परिणामे प्रतिबिंबितं चैतन्यं सर्वं पश्यत्याध्यासिकसंबंधादिति। ईश्वरज्ञानं तु न प्रमा तदज्ञाताभावेनाज्ञानानिवर्तकत्वात्। तस्यातीते स्मृतिरनागते त्वनुमित्यादिकमनुसंधेयं। अज्ञानसामान्यं निवेश्य पूर्वोक्तं स्वावछिन्नेत्यादिवेद्यत्वमपि हेतुः संभवतीति॥छ॥ एवं सत्यादिपदतात्पर्यविषयाविषयकदृग्विषयत्वं हेतुः। जडत्वं चाज्ञानत्वं ज्ञानत्वं ज्ञानपदशक्त्यधीनप्रतीतियमुख्यविशेष्यता। उपलक्षणया तन्निष्ठावच्छेदकताकप्रतियोगिताकभेदो हेतुरिति पर्य-

वसितं। तेन वृत्तौ जानाति शक्यतावच्छेदकत्वस्य वक्ष्यमाणरीत्या सत्वात्तत्पदवाच्य मात्रभेदनिवेशे तत्रासिद्धिः। ज्ञानत्वस्य शुद्धचिन्मात्रनिष्ठस्यैकव्यक्तिकत्वेन जातित्वाभावाज्जातिरूपस्य तस्याप्रसिद्ध्या तन्निवेशायोगः। वक्ष्यमाणज्ञानपदार्थरूपविशिष्टचितो नैय्यायिकादीन् प्रत्यप्रसिद्धत्वेन निवेशायोग इत्यादिशंकानवकाशः। ज्ञानपदवाच्यं तु वृत्त्यवछिन्नं चैतन्यं। नतु चैतन्यविशिष्टवृत्त्यादिरूपं। विशेषत्वेनैव चितो ज्ञानपदात्प्रतीतेः। अत एव सत्यं ज्ञानमित्यादिश्रुतौ ज्ञानपदाच्छक्त्यैव केवलाचिद्बोध इति वक्ष्यते। नहि वाच्यविशेषणस्य शक्त्या विशेष्यतया बोधो व्युत्पत्तिसिद्धा। पशुरपशुरित्यादितः पश्वादिभिन्नत्वेन पशुत्वादेर्बोधापत्तेः। अतो वाच्यकोटौ विशेषणीभूतवृत्तौ न भागासिद्धिः। वृत्त्यवछिन्नत्वं च वृत्तिसुखादिनिष्ठप्रतिबिंबप्रयोजकं यन्मनो मायान्यतरावच्छिन्नचैतन्यं तदात्मकत्वं। सुखादौ वृत्तेरभावेऽपि तस्यैव स्वच्छत्वेन प्रतिबिंबवत्वं। तत्र वृत्तेश्चिदुपरागार्थत्वपक्षे स्वाश्रयवृत्तिविषयत्वसंबंधेन चित्प्रतिबिंबविशिष्टत्वरूपं ज्ञानक्रियायाः फलमादाय घटादिविषयत्वस्य तत्कर्मतानिर्वाहः। वस्तुतस्तु प्रतिबिंबप्रयोजकत्वेनैव वृत्त्यादिनिष्ठप्रतिबिंबप्रयोजकस्य जानाति वाच्ये निवेशो नतु वृत्तिसुखादेरपि निवेशः। घटादेरपि वृत्त्युपहितरूपेण साक्षात्संबंधेनैव प्रतिबिंबत्वस्य जलाद्युपहितरूपेण पाषाणादेरिव संभवात्कर्मतानिर्वाहः। ईशस्य जगदनुपादानत्वपक्षे मनोवच्छिन्नचित्तादात्म्याभावान्मायानिवेशः। साक्षिणा चिद्रूपस्यैवाधिष्ठानत्वेन ज्ञानत्वादुक्तान्यतरावछिन्नचिदात्मकचितो ज्ञानत्वमुक्तं। नच मनोवच्छिन्नचित्तादात्म्यविशिष्टसाक्षिचितो ज्ञानरूपाया मायावछिन्नचित्यपि तादात्म्येन सत्वादीशो जानातीति व्यवहारसंभवान्मायानिवेशो व्यर्थ इति वाच्यं। तथा सति घटावछिन्नचिज्जानातीति व्यवहारः स्यात्। अथ मनोवछिन्नचित्तादात्म्यविशिष्टप्रतियोगिकतादात्म्यस्य मनोवाछिन्नचित्येव सत्वान्नोक्तधीरिति चेत्तर्हीशो जानातीति धीरपि न स्यादिति मायानिवेश आवश्यकः। वृत्तेरावरणभंगार्थत्वपक्षे त्वसत्वापादकाज्ञानाविषयत्वरूप * तत्फलमादाय तस्य तत्कर्मतेति तादृशाज्ञानाविषयत्वप्रयोजकमनोमायान्यतरावच्छिन्नचैतन्यतादात्म्यापन्नचैतन्यत्वं ज्ञानत्वं। घटं जानामीत्यादौ घटाद्यवछिन्नस्याज्ञानविषयत्वाभावस्य धीः। ब्रह्म जानामीत्यादौ तु ब्रह्मनिष्ठस्य धीः। एवमानंदभिन्नत्वमपि जडत्वं। आनंदत्वं च विषयसेवाजन्यवृत्तिविशेषोपहितचित्त्वं। तदुपलक्षितचित्प्रतियोगिकभेद एव हेतुस्तस्यापि आनंदपदजन्यशक्त्यधीनबोधीया या विशेष्यतोपलक्षणविधया तदवच्छिन्नप्रतियोगिताकभेदत्वेन हेतुता प्रयोजनं तु पूर्वोक्तरीत्योह्यं। न चैवं ज्ञातृभिन्नत्वरूपजडत्वस्याप्युक्तरीत्या परिष्कारेण शुद्धात्मनि व्यभिचारवारणसंभवात् तत्परित्यागोऽनुचित इति वाच्यं। ज्ञानानुकूलव्यापारवत्वस्यैव ज्ञातृपदशक्यतावच्छेदकतया मनसोऽपि तद्वत्वेन ज्ञातृपदशक्त्यधीनं धीमुख्यविशेष्यत्वादुपलक्षणविधया तदवछिन्नभेदस्यात्मनीव मनस्यप्यसत्वाद्भागासिद्ध्यापत्तेः। न चैवमानंदपदज्ञानपदजन्योक्त धीविशेष्यतावद्भेदो ब्रह्मण्यपि वर्तते। ब्रह्मण आनंदो ज्ञानमित्यादिना व्यवह्रियमाणसंबंध निर्वाहकभेदस्य तत्रावश्यकत्वात् तथाच व्यभिचार इति वाच्यं। स्वसमानसत्ताकतादृशभेदस्य स्वज्ञानाबाध्यस्य तस्य वा हेतुत्वानुसरणात्। यत्र हेतुरुपपादनीयः स एव स्वपदार्थः। ब्रह्मानंदयोरभेदग्रहकालेऽपीछारूपोपाधिना तादृशभेदस्य प्रतीयमानत्वात् इच्छाद्युपाध्यजन्यत्वं भेदे निवेश्य वा ब्रह्मावृत्तित्वं भेदे निवेश्य वा व्यभिचारो वारणीयः। परिच्छिन्नत्वं च ध्वंसप्रतियोगित्वमन्योन्याभावप्रतियोगित्वमत्यंताभावप्रतियोगित्वं वा।

* टिप्पणी—अवच्छेदकत्वमाश्रयत्व चेत्येतदन्यतरसंबंधेन फलवत्त्वमेव कर्मत्व प्रकृत इति भावः।

अतोऽन्यदार्तमिति श्रुत्याऽऽकाशादेर्निखिलब्रह्मातिरिक्तप्रपंचस्य ध्वंसप्रतियोगित्वरूपपीडितत्वश्रवणान्न कुत्राप्यसिद्धिर्व्यभिचारो वा । न चार्तपदस्य दुःखित्वमर्थ इति वाच्यं । जडे बाधितत्वेन ब्रह्मान्यसामान्ये तदुक्त्ययोगात् । आत्मनः आकाशः संभूतः सर्वे निमेषा जज्ञिरे इत्याकाशादीनामुत्पत्तिश्रुत्या ध्वंसप्रतियोगित्वानुमानाच्च । नच द्वितीयतृतीयहेत्वोर्ब्रह्मणि व्यभिचारः । अत्यंताभावान्योन्याभावयोः स्वसमानसत्ताकत्वेन स्वान्यूनसत्ताकत्वेन वा विशेषणात् । ब्रह्मावृत्तिप्रतियोगितासंबंधेनात्यंताभावान्योन्याभावयोरेव वा हेतुत्वेन विवक्षिणान्न कुत्रापि व्यभिचार इति । तदेतत्सर्वमापातरमणीयं । शुद्धांशे अन्याप्रकारकवृत्त्युत्पत्तेरावश्यकत्वे शुध्दे वृत्तिविषयत्वस्यापरिहारेण व्यभिचारापरिहारात् । अन्यथा घटादावपि वृत्त्युपहित एव दृश्यत्वप्राप्त्या केवलस्वरूपे दृश्यत्वाभावे नासिध्यापत्तेः । नच तस्य केवलरूपं नास्त्येवेति वाच्यं । ब्रह्मण्यपि तौल्यात् । न चाखंडार्थपरैर्वेदांतैस्तत्केवलरूपावगाहनात्तत्सिध्दिरिति वाच्यं । अत्रापि निर्विकल्पकप्रत्यक्षेण कंबुग्रीवादिमान् घट इति लक्षणवाक्येन सोऽयं घट इति वाक्येन च तत्स्वरूपमात्रावगाहनेन प्रकृतेऽपि तत्सिध्देर्दुर्वारत्वात् । नच यत्तदद्रेश्यमित्यादिश्रुत्या शुध्दस्वरूपे दृश्यत्वनिषेधात् वृत्त्युपहित एव तत्र दृश्यत्वं स्वीक्रियते घटादौ तदभावादुक्तस्वरूपमात्रविषयकधीविषयत्वं शुध्दस्वरूपे स्वीक्रियत इति वाच्यं । तद्वाक्यजन्यबोधविषयत्वस्याप्युपहित एव सत्वेन शुध्दे असत्वेन शुध्दे तन्निषेधासाधकत्वात् । स्वाविषयेपि तत्साधकत्वे उक्तश्रुत्यैव घटादिकेवलरूपेऽपि दृश्यत्वनिषेधः किं न स्यात् । ननूक्तश्रुतिविषयीभूतं यददृश्यत्वोपहितं तत्तादात्म्यस्य शुध्दे सत्वादेव तस्यादृश्यत्वासिध्दिर्न घटीयकेवलरूपस्येति चेन्न । तत्तादात्म्यस्यापि स्वोपहित एव सत्वेन तत्सत्वेनापि शुध्दे दृश्यत्वाभावादिसिध्ययोगात् । एतेन शुध्दं स्वप्रकाशत्वादेव सिध्यति नतु तदवगाहिवृत्तिज्ञानविषयतया घटादीनां तु नैवमिति निरस्तं । स्वप्रकाशत्वादिबोधकश्रुत्यविषयत्वसाम्येन यया श्रुत्या घटादिकेवलरूपस्य न स्वप्रकाशत्वं सिध्यति किंतु ब्रह्मस्वरूपस्यैवेति वैषम्यकल्पनायोगात् । नच पूर्वोक्तरीत्या शुध्दं स्वप्रकाशं न वेत्यादिसंशयमस्य प्रकाशमेव वेत्यादिविपर्ययं वा प्रति विरोधित्वमेव तद्वाक्यस्य शुध्दविषयकत्वमिति वाच्यं । शुध्दविषयकसंशयाप्रसिध्यादेः पूर्वं त्वयैव निरूपितत्वेन तद्विरोधिताया एव दूरपराहतत्वात् । अन्यथा शशविषाणादिकं प्रत्यपि किंचिद्विरोधि स्यात् । केन चित्तादृशसंशयसामग्रीकल्पने उक्तवाक्यजन्यधियस्तद्विरोधित्वस्य वाचस्पतिना कल्पनामात्रेण तद्वाक्यस्य शुध्दपरत्वे पुरुषांतरेण घटे संशयविरोधित्वकल्पनामात्रेण घटपरत्वमपि दुर्वारमिति सम्यक्श्रुत्यर्थविचारकौशल्यं प्रकटीकृतं । यत्तु सौषुप्तिकानुभवबलादात्मनः स्वप्रकाशत्वं त्वन्मत इव मन्मतेऽपि सिध्यत्विति । तन्न । मयाऽऽत्मस्वरूपस्य स्वविषयकज्ञानरूपत्वांगीकारात् । त्वया तदनभ्युपगमात् । किंच वृत्त्युपहिते वृत्तिविषयत्वस्याज्ञानोपहिते ज्ञानविषयत्वस्य सत्वे तयोरुपहितयोर्मिथ्याभूतयोर्भिन्नत्वेनैकविषयकत्वाभावेन निवर्त्यनिवर्तकभावानुपपत्तिरपरिहार्यैव । इतराप्रकारकत्वमात्रेण निवर्तकत्वे पूर्वोक्तघटनिर्विकल्पकादेरपि तत्स्यादविशेषात् । अतो वृत्तिविषयत्वमावश्यकं शुध्द इति तत्रानैकांत्यमावश्यकं । शब्दाजन्यवृत्तिविषयत्वं दृश्यत्वमित्यपि न । ब्रह्म शुध्दमानंदरूपं निरुपाधिकप्रेमास्पदत्वात् जगत्स्वरूपं न अबाध्यत्वादित्याद्यनुमानवेद्यत्वस्य ब्रह्मण्यपि सत्वेन व्यभिचारतादवस्थ्यात् । नच शब्दाप्रयोज्यज्ञानविषयत्वं हेतुरुक्तानुमितिरपि श्रुत्युपजीव्येति न व्यभिचार इति

वाच्यं। धर्मांद्यतींद्रियेष्यासिद्धेः। न चोक्तानुमितौ विशिष्टस्य भानान्न शुद्धे तद्वि-षयत्वं। वेदांतैस्तु स्वरूपमात्रावगाह्यखंडार्थबोधजननात्तत्र शुद्धस्य भानमिति शब्दा-जन्यत्वस्यापि सार्थक्यमिति वाच्यं। अनुमितेरप्यखंडार्थविषयकत्वस्याग्रे त्वन्न्यायेन समर्थनीयतया व्यभिचारावारणात्। अखंडार्थशब्दाधीननिर्विकल्पकस्मृतौ शब्दस्यान्यथा-सिद्धत्वेन शब्दाजन्यतया तद्विषयत्वस्यापि ब्रह्मणि सत्वेनानैकांत्यापरिहाराच्च। नापि सप्रकारकधीविषयत्वमपि युक्तं। शुद्धत्वस्वप्रकाशत्वादिप्रकारकधीविषयत्वस्य शुद्धेऽपि सत्वात् विशेष्यानवगाहिन्या विशिष्टधियो भावात्। तत्र शुद्धस्याभाने खंडार्थबोध-द्वारीभूतबोधविषयतया शुद्धत्वस्वप्रकाशत्वादिधर्माणां शुद्धासमसत्ताकानामपि विव-रणमतेऽसिद्धिप्रसंगात्। अन्यथा घटादेरपि तत्सिद्धिप्रसंगात्। नच द्वारीभूतबोध-विषयीभूतविशिष्टतादात्म्यबलात् शुद्धे तद्धर्मसिद्धिरिति वाच्यं। तर्हि हेतुभूततादा-त्म्यप्रकारकपरामर्शतल्लिंगकशुद्धत्वाद्यनुमितौ शुद्धभावापरिहारात्। एतदन्यतत्सि द्धिपदार्थस्यानिरूपणात्। नच सप्रकारकधीविषयतापर्याप्त्यधिकरणत्वं हेतुः। तच्च विशिष्ट एव न शुद्ध इति वाच्यं। एवं तर्हि घटादिशुद्धस्वरूपे उक्तरीत्या हेत्वभावेनासिद्ध्यापत्तेः। नच विशिष्टे तद्धर्मस्य सत्वे तत्तादात्म्याच्छु द्धेपि तद्धर्मोऽस्त्येव शुद्धे तदभावग्राहकमानासत्वे। अत एवोष्णीषा-दिविशिष्टचैत्रगमनेन शुद्धचैत्रेऽपि गमनव्यवहारः। उष्णीषादिविशेषणसंबंधा-दिनाशप्रयुक्तविशिष्टनाशेऽपि चैत्रो नष्ट इति व्यवहाराभावश्च। एवं च घटादिशुद्ध-स्वरूपे उक्तहेत्वधिकरणीभूतविशिष्टतादात्म्यादेव हेतुसत्वान्नासिद्धिः। ब्रह्मणि त्वदृश्य-त्वादिबोधकश्रुतिबलादेवोक्तहेत्वधिकरणीभूतविशिष्टतादात्म्यसत्वेऽपि नोक्तहेत्वधिकरण त्वमन्यथा तन्निष्ठमिथ्यात्वविनाशित्वादिधर्माणामपि प्रसक्तेः। तथाच न व्यभिचार इति वाच्यं। श्रुतेः सप्रकारकदृग्विषयत्वपर्याप्त्यधिकरणत्वाभावपरत्वेन संकोचे आवश्यके साकल्येनाज्ञेयत्वाद्यर्थकत्वस्यैव 'अप्रसिद्धेरवाच्यं तद्वाच्यं सर्वागमोक्तितः। अतर्क्यं तर्क्यमज्ञेयं ज्ञेयमेवं परं स्मृतं' इत्यादिबहुतरप्रमाणानुसारेणांगीकर्तव्यतया त्वदुक्तार्थस्योत्प्रेक्षामात्रमूलकत्वेन हेयतया श्रुतिबाधाभावेन घटादाविव ब्रह्मण्यप्यु-क्तहेतुसत्वावश्यकत्वात्। यदपि तुच्छेपि निरुपाख्यधर्मप्रकारकधीविषयत्वाद्व्यभिचार इति सोपाख्यत्वेन धर्मो विशेषणीय इत्यादि तदप्यसारं। असन्निष्ठनिषेधप्रतियो-गित्वेऽप्यस्तीति धीविषयत्वरूपस्य वा सत्तादात्म्यतत्वान्यतरवत्वस्वरूपस्य वा सोपा-ख्यत्वस्य मयांगीकृतत्वात्तत्र व्यभिचारापरिहारात्। न चासन्निष्ठधर्मस्य तस्य तत्ता-दात्म्यापन्नत्वात्कथं तस्य सत्तादात्म्यमिति वाच्यं। चैत्रादीन्प्रति दंडादेरिव तद्व्या-वर्तकत्वमात्रेण तद्धर्मत्वेन व्यवहारविषयतया तस्य सत्तादात्म्याभावात्। विषयत्वा-देरसद्धर्मत्वस्य पूर्वमुपपादितत्वात्। त्रैकालिकनिषेधप्रतियोगित्वमसति नास्तीति प्रती-त्यनुदयात्प्रत्युत सदित्येव प्रतीत्युदयाच्च तत्र सत्तादात्म्यस्यावर्जनीयत्वात्। ननु असति कस्यापि तादात्म्याभावात्स्वतादात्म्यापन्नधर्मप्रकारकधीविषयत्वं हेतुरस्त्विति चेन्न। एवमप्यात्मनि व्यभिचारस्य मूलोक्तस्यापरिहार एव। यत्तु सत्तादात्म्यतत्वान्य-तरवत्वमेवोक्तहेतुवाक्यस्य फलितोऽर्थ इति। तदसत्। यतः सत्पदेनाबाध्यविवक्षणे तत्तादात्म्यस्य मिथ्यात्वेन विरोधः शुक्तिरूप्यादिदृष्टांतेन साधनवैकल्यं च। ब्रह्मतादात्म्य विवक्षणे ममासिद्धिसाधनवैकल्यविरोधा एव। सदिति प्रतीतिविषयविवक्षणे तादृश-प्रतीतिविषयाभेदस्य शशविषाणं सदिति भ्रममादाय शशविषाणरूपासति ब्रह्मण्यपि

तत्सत्यमिति श्रुतिजन्यप्रतीतिमादाय सत्वाद्व्यभिचार एवेति । यदप्येतत्प्रकरणे शश विषाणादिरूपासत एवाभावत्वोपहितरूपेण सोपाख्यधर्मवत्वमित्यभिधानं । असत्यभावत्वरूपधर्मस्य स्वाभाविकत्वे तादृशधर्मवतः स्वत एव कालसंबंधत्वात्तदसत्वोक्तिर्वृथैव । अन्यथा घटस्यापि स्वरूपतोऽसत्वं घटत्वोपहितरूपेण प्रत्यक्षादिगोचरत्वमित्यादि स्यादविशेषात् । अभावत्वस्य कल्पितत्वे निःस्वरूपस्य तस्य तत्कल्पनाधिष्ठानत्वायोगः । अन्यथा शून्यस्यैव सर्वकल्पनाधिष्ठानत्वप्राप्त्या शून्यमतनिरासायोगः । उक्तरीतौ मानाभावश्चेत्यादिदूषणकवलितत्वादश्रध्धेयमेव । यदपि यदिच तुच्छेप्यतुच्छधर्मसंसर्गोऽस्तीत्याग्रह इत्यादिनोक्तं तदप्यसतोऽपि सत्वेन प्रतीतेः पूर्वमेवोपपादितत्वान्निरस्तं । यदपि व्यवहारप्रयोजकविषयत्वमित्युक्तहेतोश्चित्तादात्म्यज्ञानरूपवृत्तिविषयत्वैतदन्यतरवत्वमिति निष्कर्षकरणं । तदप्यसारं । ब्रह्मण्यपि वृत्तिविषयत्वस्य व्यवस्थापितत्वाच्छुद्धचित्यपि चित्तादात्म्यस्यात्रैव त्वयोपपादितत्वेन चिति व्यभिचारापरिहारेणैतदुक्तेरतिहेयत्वात् । नच स्वज्ञानाबाध्यत्वेन हेतुर्विशेषणीयः इति अभिप्राय इति वाच्यं । ब्रह्मणि स्वज्ञानाबाध्यस्य कस्याप्यभावेन तावन्मात्रस्य व्यभिचारानवकाशेनो ( क्त्वा ) क्तान्यतरांशवैय्यर्थ्यापत्तेः । न चानंदज्ञानादिधर्माणां ब्रह्मज्ञानाबाध्यानामेव ब्रह्मणि सत्वाद्व्यभिचारपरिहाराय तत्सार्थक्यसंभव इति वाच्यं । आनंदज्ञानसद्रूपाणां ब्रह्मणात्यंताभिन्नानां धर्मत्वायोगेन कल्पितभेदोपहितरूपेणैव धर्मतया तादृशानां बाध्यत्वेन व्यभिचारानवकाशात् । उपहितरूपेण मिथ्यात्वेऽपि स्वरूपेणाबाध्यत्वाद्व्यभिचार इत्याग्रहस्त दापि तादृशविषयत्वस्य वा चित्तादात्म्यस्य वा निवेशेनैव वा सामंजस्ये अन्यतरत्वेन निवेशवैय्यर्थ्यापरिहारात् । शुद्धचित्यपि चित्तादात्म्यस्य त्वयैवोपपादितत्वेन व्यभिचारपरिहाराय स्वज्ञानाबाध्येत्यस्यापि सार्थक्यसंभवात् । न चान्यतरस्याप्यन्यतरत्वात्मको यो भेदः स्वरूपतस्तेनैव रूपेण निविष्टत्वस्याप्युक्तत्वात्कथं वैय्यर्थ्यमिति वाच्यं । अन्यतरत्वादिरूपभेदस्य स्वरूपतो भाने मानाभावात् । परार्थस्थले उक्तान्यतरत्वपरिचयायादौ तादृशतादात्म्यविषयत्वोपादानस्यावश्यकत्वे एकैकस्य हेतुत्वसंभवे उभयोपादानेनाधिक्यमिति वादिना वक्तुं शक्यत्वेन निग्रहावश्यकत्वात् । अन्यथा पर्वतो वन्हिमान् धूमालोकभस्माद्यन्यतमादिति प्रयोक्ता न निगृह्येत । अपिच सामान्यतो ज्ञानाबाध्यत्वनिवेशे साधनाप्रसिद्धिभिया स्वज्ञानबाध्यत्वाभावरूपविशेषाभावघटितस्यैव हेतुत्वप्राप्त्या ब्रह्मण्यनैकांत्यतादवस्थ्यात् । कथंचिदननुगमादिनोक्तदोषोद्धारेपि प्रतिवादिना ब्रह्मण्यबाध्यहेतोरेवांगीकृतत्वात्तन्मते न व्यभिचारः । स्वार्थानुमाने प्रपंचे बाध्यत्वसंदेहदशायां निश्चितसाध्याभाववति ब्रह्मण्युक्तहेतुसंदेहात्संदिग्धानैकांतिकत्वं । नच ब्रह्मज्ञानबाध्यत्वसंदेहदशायां तज्ज्ञानाबाध्यत्वविशिष्टदृश्यत्वत्वरूपप्रतियोगितावच्छेदकविशिष्टप्रतियोगिनिर्णयाभावात्कथं तदभावावगाहिसंदेहात्मकव्यभिचारज्ञानमिति वाच्यं । पुरुषवृत्तिदंडसामान्ये रक्तत्वसंदेहदशायामपि भूतलं रक्तदंडवत्पुरुषवन्नवेति संशयस्यानुभवसिध्धत्वेन प्रतियोगितावच्छेदकघटकानां विशृंखलज्ञानेनापि तादृशसंशयोत्पत्त्यंगीकारात् । ज्ञानबाध्यत्वसंबंधावच्छिन्नस्ववृत्तिप्रतियोगिताकाभाववत्वस्ववृत्तित्वोभयसंबंधेन किंचिद्विशिष्टदृश्यत्वस्यैवोक्ताननुगमनिबंधनदोषवारणायावश्याभ्युपगंतव्यतया प्रतियोगिग्रहस्य घटाद्यंतर्भावेण सत्वाद्ब्रह्मवृत्तिदृश्यत्वादौ बाध्यत्वसंदेहाहितस्य तादृशहेतुसंदेहस्य संभवात् । अन्यत्र रक्तदंडत्वावच्छिन्ननिर्णयवतश्चैत्रवृत्तिदंडे रक्तत्वसंदेहेन चैत्रो रक्तदंडवान्नवेति संदेहवत् । जगतो मिथ्यात्वाभावेपि

ब्रह्मण इव दृश्यत्वरूपविशेष्यांशस्य तत्र स्वज्ञानाबाध्यत्वस्य च संभवेन हेतूच्छित्त्या-दिरूपानुकूलतर्कानवतारात् पक्षांतर्भावेणापि संधिग्धानैकांत्यं दुर्वारं । एतन्न्यायेनैव स्वसमानसत्ताकत्वं हेतुविशेषणमित्यप्यपास्तं । शुक्तिरूप्यनिष्ठदृश्यत्वस्य प्रतिवादि-नये प्रातिभासिकत्वानंगीकारेण साधनवैकल्याच्च । यदपि चित्संबंधित्वं दृश्यत्वमि-त्यस्य चित्संबंधितावच्छेदकं यच्चिद्वृत्तित्वविशिष्टतादात्म्यत्वं तदवच्छिन्नमिति निष्क षंकरणं । तदप्यसत् । चित्संबंधितावच्छेदकांशस्य वैयर्थ्यात् चिद्वृत्तित्वविशिष्टता-दात्म्यत्वावच्छिन्नस्य चित्यभावादेव व्यभिचारानवकाशात् । नच विकल्पविषयतादा त्म्यस्यासति सत्वाद्यभिचारवारणाय तत्सार्थक्यमिति वाच्यं । घटादिनिष्ठचित्सबंध तावच्छेदकं तादात्म्यत्वमेव नतु चिद्वृत्तित्वस्यापि तत्र निवेशः प्रयोजनाभावात् । तथाच चित्संबंधतावच्छेदकत्वस्योक्ततादात्म्यत्वेऽसत्वात्साधनाप्रसिध्यापत्तेः । न चाव च्छेदकांतं त्यज्यत एव विकल्पविषयतामात्रं तत्र स्वीक्रियते नतु तदाश्रयतादात्म्यं भेदा-भेदनिर्वाह्यं वस्त्वंतरं। तन्निष्ठतदेभदस्य तुच्छतया तादात्म्यानिर्वाहकत्वात्। असन्विकल्प विषय इति सामानाधिकरण्यप्रत्ययस्तु नास्त्येव । तादृशव्यवहारस्तु तटस्थतया तादृश-विषयतया साकं पूर्वोक्ते बौद्धधर्मधर्मिभावे पारिभाषिकस्तथा च तुच्छे व्यभिचारानवका-शात् ( अवच्छेदकांतं हेत्वघटकमेव ) इति वाच्यं । उक्ततादात्म्यत्वे तस्य बाधितत्वेन हेत्वघटकत्वे तत एव परिचायकत्वस्याप्यभावे मूलेप्येतादृशानुपूर्व्यभावेन तद्व्याख्याना-त्मकत्वस्याप्यभावे तदुक्तेरुन्मत्तप्रलपितत्वापत्तेः। न ह्यवच्छेदकपदमनतिरिक्तवृत्त्यर्थ-कमपि संभवति । घटानुयोगिकनलिप्रतियोगिकतादात्म्ये चित्संबंधताविरहेण व्यभिचा-रात्। अस्तु वा तद्यथा तथा अवच्छेदकांशपरित्यागेनैव हेतुता । चिद्वृत्ति-त्वावच्छिन्नमात्रस्य हेतुत्वे तादृशतुच्छत्वमादाय तुच्छे व्यभिचारवारणाय तादा-त्म्यांशस्यानुपदमुपपादितरीत्या सार्थक्यं च तथाप्युपहिताचितोऽपि मिथ्यात्वेन पक्षकुक्षौ निक्षेपावश्यकतया तत्र चिद्वृत्तितादात्म्याभावाद्भागासिध्यापत्तेः । शुध्दचिद्वृत्तीति विशिष्यनिवेशे नैय्यायिकादीनां शुध्दचिदप्रसित्ध्या साधनाप्रसित्धिः। मन्मते शुध्दचिदप्र-सित्ध्या तद्घटितप्रतियोग्यप्रसित्ध्या तद्वृत्तित्वाभावप्रसित्धावपि तद्वृत्तादात्म्यस्य सत्य-त्वेनांगीकृतब्रह्मणि सत्वाद्यभिचार एव । अपिच यत्र व्यभिचारस्तदन्यत्वविशेषणदान एव पर्यवसन्नतया ब्रह्मनिष्ठतादात्म्यस्येव जगन्निष्ठतादात्म्यस्यापि जगति मिथ्यात्वं विनाप्युपपन्नत्वादप्रयोजकत्वं च । किंच भेदाभेदनिर्वाह्यस्य विविक्षिततादात्म्यस्य पूर्वं निर-स्तत्वात्तन्निवेशे साधनाप्रसिद्धिः । नापि स्वातिरिक्तसंवित्प्रयोज्यत्वव्याप्यस्वव्यवहारत्व कत्वं । तत्र हि व्यवहारत्वस्यानुगतस्याभावात् स्फुरणाभिवदनाद्यन्यतमत्वेन व्यवहारो हि निवेशितः। तत्र स्फुरणत्वं त्वन्मतमन्मतोभयासित्धमेकं नास्त्येवातो ज्ञानविशेष विषयत्वाभावप्रयोजकविशिष्टचितो नैय्यायिकादीन् प्रत्यसित्धिः। अज्ञानस्याप्रसिद्धत्वेन तत्प्रतियोगिकाभावाप्रसिद्धेः । मन्मते प्रतियोग्यप्रसिध्याऽभावप्रसिद्धावपि भगवदिच्छा-यास्तत्र क्षेमसाधारणप्रयोजकतया तद्विशिष्टचिद्रूपे इश्वरघटादिविषयकत्वाभावाद-सिद्धिरेव । घटादेः चितश्चाकाराख्यविषयविषयिभावस्य त्वयाऽनंगीकारेण तादात्म्य-रूपविषयत्वस्यैव निवेशनीयत्वात् । उभयसाधारण विषयतात्वरूपधर्मसत्वे मानाभा-वात् त्वयाऽपि तथैवोक्तत्वाच्च । न च स्फुरणे स्वविषयकत्वमनिवेश्य सामान्यत एव तन्निवेशः क्रियते । अन्यविषयकस्फुरणस्यापि स्वातिरिक्तचिद्रूपसंवित्प्रयोज्यत्वान्न घटादावसित्धिः । चिति च स्वातिरिक्ताचिदप्रसित्ध्यैव न व्यभिचार इति वाच्यं ।

मन्मते उक्तविशिष्टचिद्रूपस्येश्वरस्य विशेष्यीभूतस्वात्मकचित्प्रयोज्यत्वे क्षेमसाधारणे माना भावेनान्यतमांतःपातिताहशस्फुरणरूपे घटातिरिक्तचित्प्रयोज्यत्वाभावादसिद्ध्यापत्तेः। त्वन्मन्तेऽप्यज्ञानविषयत्वाभावे अज्ञानविषयत्वाभावविशिष्टचितः क्षेमसाधारणप्रयोजकत्वे मानाभाव एव। नहि "द्रव्यं कर्म च कालश्च स्वभावो जीव एव च॥ यदनुग्रहतः संति न संति यदुपेक्षया" इत्यादेः सर्वस्येच्छाधीनत्वे मानत्वस्येव कस्यचिदागमस्य त्वदुक्तार्थे मानत्वमास्ति। विशिष्टचित्सत्वादज्ञानाविषयत्वमित्यादिका प्रतीतिस्त्वौत्प्रेक्षिकी नार्थसाधिका। तथाच शुद्धचिद्विषयकोक्तस्फुरणाप्रसिद्ध्यैव व्यभिचारवारणसंभवे स्वातिरिक्तेत्यंशवैय्यर्थ्यमेव। नच पूर्णानंदांशे व्यभिचारावारणं तत्प्रयोजनं। तत्राज्ञानविषयत्वाभावे वृत्तेः प्रयोजकतया तद्विशिष्टचिद्रूपस्फुरणे अविद्यासहकारेण सर्वकारणीभूतायाः शुद्धचितः प्रयोजकत्वेनोक्तहेतुसत्वादतः स्वातिरिक्तत्वं चिद्विशेषणमिति वाच्यं। तथात्वेऽनादितश्चिदंशस्यानावृतत्वं शुद्धस्यैवानंदांशस्यावृतत्वं। अन्यथा भेदाद्युपाहितस्य तस्य मिथ्यात्वेनावृतत्वायोगादतस्तद्व्यवस्थासिद्धये तयोर्भेदस्याप्याविद्यकस्यानादित एव सत्वेन स्वातिरिक्तत्वदानेऽपि व्यभिचारापरिहारात्। अनादितोऽपि विद्यमानभेदे प्रातीतिकत्वस्य वक्तुमशक्यतया प्रातीतिकान्यत्वस्योक्तभेदे निवेशेनापि दोषस्य वारयितुमशक्यत्वात्। यत्तूक्तभेदोपहिते तत्रापि मिथ्यात्वं वर्तत एवेति न व्यभिचार इति। तदसत्। तथात्वे यस्य कस्यापि हेतुत्वेपि ताहशहेतूपहितरूपेण ब्रह्मणो मिथ्यात्वावश्यकत्वेन व्यभिचारापरिहारादेतावद्धेतुपरिष्कारायासस्यैव वैफल्यापत्तेः। यदिच येन केनापि रूपेण जगतो मिथ्यात्वसिद्ध्याऽर्थांतरपरिहाराय स्वरूपतो मिथ्यात्वं साध्यमित्यात्मनि व्यभिचारवारणाय हेतुपरिष्कारसार्थक्यमिति मन्यसे कथं तर्हि पूर्णानंदांशे व्यभिचारवारणं। अपिच जीवचिन्निष्ठाज्ञानविषयत्वाभावे तद्विविशिष्टजीवचितः क्षेमसाधारणप्रयोजकत्वस्य त्वद्रीत्या प्राप्त्या तत्तद्विशिष्टचिद्रूपस्फुरणे जीवचिदन्येश्वरचितः प्रयोजकत्वाज्जीवानां त्वन्मतेऽपि स्वरूपतः सत्यत्वाद्व्यभिचार एव। तयोर्भेदस्याप्यनादितो विद्यमानस्यांगीकृतत्वात्। हेतुशरीरे च विशिष्टचित्साधारणरूपेणैव चितो निवेशं कृत्वैव पूर्वं तथोपपादनात्। स्फुरणरूपे विशिष्टचितोऽनवस्थाभयेन स्फुरणांतरांगीकारायोगात् तत्र पक्षीभूते हेतूपपादनायोगश्च। अविद्यायामविद्याविषयत्वाभावप्रयोजकविशिष्टचित्तादात्म्यरूपस्फुरणासंभवेन तत्रासिद्ध्यापत्तिश्च। एतेन लाघवात्स्वातिरिक्तचित्प्रयोज्यस्वस्फुरणकत्वं हेतुरपि प्रत्युक्तं पूर्वोक्तदोषाणामनुद्धारात्। अपिच जगन्मिथ्यात्वसिद्धेः प्राक् चिदचितोस्तादात्म्यरूपविषयविषयिभावस्यासिद्ध्या घटादिविषयकस्फुरणस्याभावापत्त्या तेनैव हेतुसिद्धावनुमानवैय्यर्थ्यं। पूर्वोक्तरीत्या स्वत्वनिवेशप्रयुक्तोऽननुगमोऽप्रयोजकत्वं चेत्यादीनि पूर्वोक्तानि सर्वाण्यनुसंधेयानीति दिक्। यदप्यस्वप्रकाशत्वं दृश्यत्वमित्यस्यानन्याधीनापरोक्षत्वावच्छिन्नानुयोगिकभेदप्रतियोगित्वमिति निष्कर्षं कृत्वा परोक्षत्वं चोपलक्षणविधयाऽनुयोगितावच्छेदकतया निविष्टमित्यभिधाय ब्रह्मणश्चैतन्यमानंदो ब्रह्मणं इत्यादि प्रतीतिसिद्धभेदमादाय व्यभिचारवारणाय ज्ञानत्वानंदत्वादीनामेवोपलक्षणया तदनुयोगितावच्छेदकत्वं न त्वनन्याधीनापरोक्षत्वरूपस्वप्रकाशत्वस्येत्यभिहितं। तदप्यसत्। ज्ञानानंदयोरपि ब्रह्मस्वरूपतया तत्रापि स्वप्रकाशत्वस्य सत्वेन तन्निष्ठभेदानुयोगितावच्छेदकत्वस्य तत्रानपायात्। ननु तत्राप्युक्तं ब्रह्मनिष्ठज्ञानादिधर्मेति पंक्त्या तन्निष्ठानुयोगितायां स्वप्रकाशत्वातिरिक्तधर्म एवोपलक्षणयाऽनुयोगितावच्छेदक इति। सत्यमुक्तं दुरुक्तं तत्। ज्ञानादीनां ब्रह्मस्वरूपत्वे स्वप्रकाशत्वरूपधर्मस्य तत्र विद्यमानस्यानुयोगि-

तावच्छेदकत्वं नास्ति ज्ञानत्वानंदत्वयोरेव तथात्वमित्यत्र त्वद्वाक्यातिरिक्तसाधकानुपलंभात् । नच ब्रह्मण आनंदश्चैतन्यमित्येवोल्लेखाद्ब्रह्मणः स्वप्रकाश इत्यनुल्लेखान्न स्वप्रकाशत्वावच्छिन्नत्वमनुयोगित्वस्येति वाच्यं । स्वप्रकाशस्य चैतन्यमानंद इत्यादिव्यवहारानुसारेण स्वप्रकाशचैतन्ययोर्भेदस्य परस्परमावश्यकतया चैतन्यरूपब्रह्मप्रतियोगिकभेदानुयोगितावच्छेदकत्वस्योपलक्षणया स्वप्रकाशत्वे त्वद्रीत्याऽऽवश्यकत्वात् । पूर्वोक्तरीत्या पूर्णानंदे व्यभिचारानुद्धाराच्च । नच पूर्णानंदभेदानुयोगिता नोपलक्षणविधया स्वप्रकाशत्वावच्छिन्ना किंतु स्वप्रकाशत्वोपहितनिष्ठैव सेति वाच्यं । उपहितस्य मिथ्यात्वेन स्वप्रकाशत्वायोगात् शुध्दचित एव स्वप्रकाशत्वे वक्तव्ये तन्निष्ठपूर्णानंदभेदानुयोगिताया उपलक्षणया स्वप्रकाशत्वावच्छिन्नत्वस्य वाङ्मात्रेण वारयितुमशक्यत्वात् । अन्यथा जडभेदानुयोगिताया अपि स्वप्रकाशत्वावच्छिन्नत्वस्य व्यवस्थापयितुमशक्यत्वेनासिद्ध्यापत्तेः। मन्मते जीवत्वोपलक्षितभेदस्य ब्रह्मचिन्निष्ठस्यानन्याधीनापरोक्षत्वरूपब्रह्ममात्रवृत्तिधर्मावच्छिन्नानुयोगिताकत्वेन व्यभिचारात् । त्वन्मतेऽपि तत्त्वं पदार्थजीवत्वब्रह्मत्वोपलक्षित चैतन्ययोस्तादात्म्यभानस्य द्वारीभूतबोधे सत्वात् तन्निर्वाहाय तयोर्भेदाभेदयोरावश्यकत्वेन तादृशभेदानुयोगितायाः स्वप्रकाशत्वावछिन्नत्वे बाधकाभावेन व्यभिचारापरिहाराच्च । नच स्वप्रकाशत्वं जीवचैतन्यवृत्त्यपि भवतीति प्रतियोगिसाधारणं कथमनुयोगितावच्छेदकं स्यादिति वाच्यं । जीवचिन्निष्ठापरोक्षत्वस्य ब्रह्मचित्प्रयोज्यत्वेन ब्रह्मचिज्जीवचितोः कल्पितभेदस्येदानीमुपपादितत्वेन स्वातिरिक्तचिदनधीनस्वापरोक्षत्वकत्वरूपस्वप्रकाशत्वस्य जीवे अभावात् । न चोक्तभेदीयानुयोगिताप्रतियोगितेऽनवच्छिन्ने एवेति न जीवे व्यभिचार इति वाच्यं अनयोरेवानवछिन्नत्वे मानाभावात् । अन्यथा जडभेदानुयोगिताया अपि थात्वापत्याऽसिद्ध्यापत्तेः। किं चोक्तरीत्या ज्ञानविषयत्वाभावे तद्विशिष्टक्षेमसाधारण प्रयोजकत्वाभावेन स्वपदेन चैतन्योपादाने स्वनिष्ठापरोक्ष्यप्रयोजकचिदप्रसिद्धिः। घटाद्यपरोक्षत्व प्रयोजकचिति च घटान्यत्वस्यैव सत्वमित्यनन्याधीनापरोक्षत्वमेवाप्रसिद्धमिति तद्घटित साधनाप्रसिद्धिः । उक्तहेतोरपि ब्रह्मभेदपर्यवसायिनो मिथ्यात्वे साध्येऽप्रयोजकत्वमित्यादिदूषणान्यत्राप्यविशिष्टानीत्यलं । यदप्यवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वाभाव इत्यस्य निष्कर्षः स्वावच्छिन्नचिद्विषयकं यदभानापादकाज्ञानं तन्निवर्त्तकवृत्तिविषयीभूतयद्यत्त्वं तत्त्वाभावकूटविशिष्टब्रह्मघटान्यतरत्वाभाव इति कृतः सोऽप्यनुपपन्न एव । नैयायिकादेस्तादृशाज्ञानासिद्ध्याऽस्मन्मते चाज्ञानस्य तादृशावच्छेद्यावच्छेदकभावादेरप्यप्रसिद्ध्या तादृशस्वपदार्थाप्रसिद्धिः । मन्मते तदप्रसिद्ध्यैव तत्वाभावकूटस्य केवलान्वयितया घटेऽपि सत्वेन भागासिद्धिः । तवापि घटादेश्चित्यध्यस्तत्वासिद्धेः प्राक् घटाद्यवच्छिन्नचिद्विषयकाज्ञानासिद्धिः । घटादेरज्ञानकल्पितस्य हि अज्ञानविषयत्वानुपपत्त्या चिन्निष्ठाज्ञानाविषयतावच्छेदकत्वं पश्चादुत्पन्नस्यापि त्वयांगीकृतं । अन्यथा घटं न जानामीति स्वारसिकशब्दाभिलाप्यप्रत्ययेन घटविषयकत्वस्यैव संभवे घटादेरवच्छेदकत्वस्वीकारायोगात् । तथा च घटादेर्मिथ्यात्वसिद्धेः प्राक् तदवच्छिन्नचिद्विषयकत्व घटितस्य पदार्थाप्रसिद्ध्या तवापि हेत्वसिद्धिः। श्रुतितात्पर्यावधारणार्थमेव स्वार्थानुमानस्य त्वयानुसरणीयतया श्रुत्याऽपीदानीं तन्निश्चयाभावात् । ब्रह्मघटान्यतरत्वघटितत्तदभावापेक्षया ब्रह्मत्वाभावस्यैव हेतूकरणसंभवेनैतत्प्रयासस्य शिरोवेष्टनेन नासिकास्पर्शतुल्यत्वात् । अप्रयोजकत्वस्य त्वदुक्तहेतावपि तुल्यत्वात् । अत एव जगन्मात्र विषयकधीविशेषाविषयत्वं दृश्यत्वमित्यपि निरस्तं । अप्रयोजकत्वात् । ब्रह्मशुक्तिरूप्यो

भयमात्रविषयिणी तत्वधीस्तद्विषयत्वेन ब्रह्मणोऽपि मिथ्यात्वसाधनसंभवेनाभाससाम्याच्च। अज्ञानसामान्यं निवेश्य स्वावच्छिन्नचिद्विषयकाज्ञाननिवर्तकधीविषयत्वमपि पूर्वोक्तरीत्या स्वपरमतासिद्ध्याऽप्रयोजकत्वाच्च हेयं। नापि वृत्तिप्रतिबिंबितचित्तादात्म्यं अस्मदादीनां नैय्यायिकादीनां चासिद्धेः। तवापि मिथ्यात्वासिद्धेः प्राक् चिदचित्तादात्म्यासिद्ध्या हेत्व सिद्धेः। नापि सत्यादिपदतात्पर्यविषयाविषयकदृग्विषयत्वं। सामान्यतः सत्यादिपदत्वेन निवेशो विश्वं सत्यमित्यादिवाक्यस्थसत्यादिपदतात्पर्यविषयत्वाज्जगत्यसिद्ध्यापत्तेः। सत्यं ज्ञानमित्यादिवाक्यस्थसत्यादिपदनिवेशो ब्रह्मान्यत्वानिवेश एव पर्यवसानेनाप्रयोजकत्वं। विश्वं सत्यमित्यादिवाक्यस्थसत्यादिपदं निवेश्य ब्रह्मणोऽपि मिथ्यात्वसाधनसंभवे नाभाससाम्यंच। यदपि चिद्विषयत्वचित्तादात्म्यतत्वान्यतररूपं हेतुरिति तदप्यसारं। जगति चित्तादात्म्यस्य तव मम च मिथ्यात्वसिद्धेः प्रागसिद्धतयाऽसिद्धेरुक्तत्वात्। नच तादात्म्यस्य विषयतात्वेनैव निवेशः क्रियते। ईश्वरचिद्विषयत्वस्य जगति त्वयांगीकारान्नासिद्धिरिति वाच्यं। तर्हि तस्य मया ब्रह्मण्यप्यंगीकारेणानैकांत्यतादवस्थ्यात्। ननु न तावत्त्वन्मते व्यभिचारोद्भावनं युक्तं। निर्विशेषब्रह्मणस्तवालीकतया तत्र सद्विविक्तत्वस्य त्वयाऽभ्युपगतत्वात्। त्वया सह विचारसमये तावन्मात्रस्य [साध्यत्वोपपत्ताव-सद्वैलक्षण्यनिवेशे प्रयोजनाभावात्। तद्धटितसाध्यासत्वेऽपि क्षत्यभावात् नापि मन्मते ब्रह्मणि हेतूनामेवानंगीकारेण व्यभिचारानवकाशात्। मैवं। उभयथापि दोषाभावात्। मन्मते सविशेषब्रह्मण एव सत्यत्वेनांगीकृतत्वेन तत्रैव व्यभिचारोद्भावनात् नहि तस्यापि पक्षांतर्भावो वर्तते। चिद्भिन्नत्वरूपपक्षाविशेषणानाक्रांतत्वेन विमत्यविषयत्वात्। ज्ञानं सत्यमित्युभयाभ्युपगमविषयीभूते वस्तुन्येव व्यभिचारोद्भावनात्। त्वन्मतरीत्याऽपि तत्र हेतूपपादनेन व्यभिचारोद्भावनसंभवात्। तच्च कृतमेव। स्वार्थानुमानस्थलेऽर्थांतरवारणाय त्वयाऽवश्यमसद्वैलक्षण्यस्य साध्यकोटौ निवेश्यतया तत्रैव व्यभिचारस्य त्वन्न्यायेनोपपादिततया न्यायसिद्धेः त्वदनभ्युपगमोक्तिमात्रस्य व्यभिचारपरिहाराक्षमत्वात्। अन्यथा वादिना स्वहेतोर्दुष्टत्वानभ्युपगममात्रेण तस्य जयप्रसंगः। यदपि तादात्म्यस्य विषयतात्वेनैव निवेशः क्रियत इति तदसत्। तादात्म्ये आकाराख्ये च विषयत्वेऽनुगतस्यैकविषयतात्वरूपस्य सत्वे मानाभावात्। चिन्निरूपिताकाराख्यविषयतानिवेशे तस्य त्वन्मतेऽसिद्धिः। तादात्म्यस्य विषयतात्वाभ्युपगमवैयर्थ्यं च। एतावता तादात्म्यस्य विषयत्वरूपत्वं पराभ्युपगतमनिराकृत्यैव व्यवहृतं। वस्तुतस्तादात्म्यस्य विषयत्वरूपत्वत्व मेव विचारासहं। तथाहि। किं सर्वतादात्म्यं विषयता उत जडनिष्ठचित्तादात्म्यं। नाद्यः। नीलघटयोरपि तादात्म्यसत्वेन घटस्य नीलविषयत्वं नीलस्य घटविषयकत्वं च स्यात्। न चेष्टापत्तिः। घटं नीलो विषयीकरोतीति प्रत्ययप्रयोगयोरापत्तेः। नच प्रकाशस्वभावप्रतियोगिकतादात्म्यमेव तथा स्यादिति वाच्यं। विषयतानिरूपकत्वातिरिक्तप्रकाश स्वभावत्वस्य निरूपयितुमशक्यत्वात्। अविद्याविरोधित्वं स्वप्रकाशत्वमिति चेत्तर्हि चित स्तत्साधकत्वेन तत्संबंधस्य विषयत्वानुपपत्तेः। वृत्तिसंहितत्वे (साहित्ये) न तथात्वे वृत्तेरपि तथात्वेन तत्तादात्म्यापन्नांतःकरणादेरपि वृत्तिविषयत्वापत्त्याऽयं घटः इति ज्ञानो त्तरमियं वृत्तिरंतःकरणं विषयीकरोतीति प्रत्ययापत्तेः। अविद्यायाः प्रकाशविरोधिन्यास्तत्स्वभावत्वाभावात् चिन्निष्ठतत्तादात्म्यस्य विषयत्वरूपत्वाभावापत्त्याऽविद्यायाश्चिद्विषयक त्वाभावापातश्च। नच तस्या आकाराख्यविषयतैव चिति स्वीक्रियते ज्ञानाज्ञानयोः समान विषयकत्वेन निवर्त्यनिवर्तकभावाभ्युपगमात्। अन्यथा वृत्तिविषयतायास्तादात्म्यरूपत्वे

तस्यात्मन्यंतःकरणादिनिष्ठत्वेन चरमवृत्तेर्मिथ्याभूतपदार्थविषयकत्वस्यापि प्राप्त्या प्रपंच निवर्तकत्वानुपपत्तेरिति वाच्यं। तथात्वेऽज्ञानस्य चिद्विषयकत्वासिद्धये तत्र तत्तादात्म्याभ्युपगमस्य निर्बीजत्वापातात्। नच तत्प्रकाशार्थं तत्संबंधसिद्धये तादात्म्यमभ्युपगम्यत इति वाच्यं। लौकिकप्रकाशस्य घटादिसंयुक्तस्यैव भासकतया ज्ञानसाक्षिणोरपि संयोगस्यैवोचितत्वात्। असंगो ह्ययं पुरुष इति श्रुत्या साक्षिचैतन्यस्यासंगत्वप्रतिपादनात्कथं संयोगोऽभ्युपगंतुं शक्यत इति चेत्। तादात्म्यांगीकारेऽपि कथं श्रुतेर्न बाधस्तस्यापि संबंधत्वाविशेषात्। नापि चिन्निरूपितं जडनिष्ठतादात्म्यमिति द्वितीयः पक्षः। नीलो घट इतिवत् ज्ञानं घट इति व्यवहारापत्तेः। न चेष्टापत्तिः। सर्वं खल्विदं ब्रह्मेति श्रुत्या सर्वस्यापि ब्रह्मरूपज्ञानतादात्म्यस्य व्यवहृतत्वादिति वाच्यं। उक्तव्यवहारस्य विषयविषयिभावरूप तादात्म्यावलंबनत्वे चैत्रस्य घटज्ञानोत्पत्त्यनंतरं स्वज्ञानस्य घटविषयकत्वबोधनाय मम ज्ञानं घट इति व्यवहारं कुर्यात् न कुर्याच्च घटस्य ज्ञानं मयि वर्तत इति व्यवहारं। नहि नीलघटयोस्तादात्म्यबोधनाय नीलस्य घट इति व्यवहर्तारो भवंति। न चोक्त व्यवहारेषु ज्ञानपदेन वृत्तिरेव बोध्यते तस्यां घटादितादात्म्यबाधात्। आकाराख्यविषयता बोधनाय षष्ठीप्रयोग इति सांप्रतं। वृत्तेर्जानातिवाच्यतावच्छेदकघटकत्वेन चित एव तद्वाच्यत्वेनांगीकारेण भावल्युडंतज्ञानपदेन चित एव बोधात्। अन्यथा त्वत्परिष्कृतजडत्वस्य भागासिद्धिप्रसंगात्। किंच तादात्म्यस्य विषयत्वादिरूपत्वे चैत्रीयज्ञानमस्तीति वाक्यं शृण्वतश्चैत्रीयतादात्म्ये ज्ञाने ज्ञाते सति चैत्रीयं ज्ञानं किं विषयकमिति जिज्ञासा घटस्येत्याद्युत्तरं च न स्यात् चैत्रीयरूपविषयस्य गृहीतत्वात्। ननु वृत्तिसुखादिनिष्ठप्रतिबिंब प्रयोजकं यन्मनोमायान्यतरावछिन्नचैतन्यं तत्तादात्म्यापन्नचिद्वा सत्वापादकाज्ञानविषयत्वाभावप्रयोजकविशिष्टं यन्मनोमायान्यतरावछिन्नं चैतन्यं तत्तादात्म्यापन्नचिद्वा ज्ञानमित्युच्यते। घटं जानातीत्यत्र प्रथमकल्पे तादात्म्यसंसर्गावच्छिन्नमाधेयत्वं प्रतिबिंबे द्वितीयकल्पे चावच्छेदकत्वस्वरूपान्यतरसंबंधावच्छिन्नाधेयत्वं कर्म विभक्त्यर्थीभूतं अज्ञान विषयत्वाभावेऽन्वेति। घटस्य ज्ञानमित्यत्र कर्मणि षष्ठीस्थलेऽप्येवमेव। तथाच चैत्रीयज्ञानमिति वाक्यात् ज्ञाने चैत्रीयपदार्थतादात्म्यभानेऽपि ज्ञानपदार्थघटकीभूतफलाश्रयजिज्ञासानिवृत्त्यभावात् कस्येति प्रश्नो घटस्येत्युत्तरं च संगच्छते। अत एव नीलो घट इति तयोस्तादात्म्यज्ञानानंतरं नीलं विषयीकरोति घट इत्यादिव्यवहारापत्तिरपि निरस्ता। तन्निष्ठोक्तफलप्रयोजकत्वस्य तादृशवाक्येन बोधनीयतया नीलतादात्म्यभानेऽप्युक्तव्यवहारविषयीभूतधर्मस्याभानात्। अतो न कोऽपि दोष इति चेन्न। एवं गत्यादिस्थले एव क्रियाजन्यफलशालित्वमात्रेण घटादेर्विषयत्वप्राप्त्या ज्ञानज्ञेययोस्तादात्म्यरूप विषयिविषयभावो न सिध्यत्येव। घटं जानामीति प्रत्यक्षस्याप्यभिलापकतादृशवाक्यसमानविषयकत्वात्। नच घटं जानामीत्यादौ द्वितीयार्थस्तादात्म्यमपि तच्च साक्षादेव ज्ञानेऽन्वेतीत्युक्तार्थसिद्धिरिति वाच्यं। तत्र मानाभावात्। आग्रहकरणे घटं जानाति चैत्र इति वाक्यात् बोधे ज्ञानं घटो नेति व्यवहारानुपपत्तिर्ज्ञानं घट इति व्यवहारापत्तिश्च। नच विलक्षणतादात्म्यमेव तादृशव्यवहारादिनिर्वाहकमुक्ततादात्म्यं तु न तादृशमिति वाच्यं। उक्तव्यवहारानिर्वाहकस्य तादात्म्यत्वोक्तेः संकेतमात्रत्वापत्तेः। अधिकस्य भानेपि घटज्ञानयोस्तादात्म्यभानानपायात्। नच तादात्म्यं विषयतात्वेनैव तत्र द्वितीयार्थो न तु तादात्म्यत्वेनातो ज्ञानविषययोस्तादात्म्यत्वविशिष्टस्याग्रहान्नोक्तदोष इति चेन्न। तादात्म्यत्वातिरिक्तानां विषयतात्वप्रकारतात्वाद्यखंडधर्माणां त्वयैवानंगीकृत

त्वात्। अंगीकारे वा तत्धर्माश्रयेषु तादात्म्यत्वसद्भावे मानाभावात्। उक्तप्रत्ययेन तत्र तादात्म्यत्वानवगाहनात्। तत्र तादात्म्यत्वावगाहिप्रत्ययांतरस्याभावात्। नच सर्वं खल्विदं ब्रह्मेति श्रुत्या ब्रह्मजगतोस्तादात्म्यबोधनात्तत्रैव विषयतात्वधर्माभ्युपेय इति वाच्यं। अस्याभेदे सामानाधिकरण्यस्य त्वत्प्राचीनैरनंगीकृतत्वेन यः स्थाणुः स पुरुष इत्यादाविव बाधायां सामानाधिकरण्यस्यैवांगीकृतत्वेनोक्तश्रुत्या ब्रह्मजगतोस्तादात्म्यासिद्धेः। यदिच विवरणादिरीत्या श्रुतेस्तादात्म्यबोधकत्वमभ्युपगम्यते तदेदं विषयतात्वं स्वस्य तादात्म्यातिरिक्ताश्रयानुपपत्त्या तादात्म्ये कल्प्यते एवमेव वा। नाद्यः। आकारत्वेन त्वया व्यवह्रियमाणविषयतासु तत्धर्मकल्पनायाः आवश्यकतया तादात्म्येऽपि तत्धर्मकल्पने गौरवात्। नच घटं जानामीति प्रत्ययेषु विषयतात्वेन तादात्म्यभानस्यैवांगीकारादाकारतासु किमर्थं विषयतात्वं स्वीकार्यमिति शंक्यं। चरमवृत्तेर्ब्रह्मविषयकत्वव्यवहारानुपपत्तेः। शशविषाणमस्तीत्यादिवाक्याधीनविकल्पस्यासद्विषयकत्वव्यवहाराभावप्रसंगाच्च। असति तादात्म्यायोगात्। एवमतीतपदार्थज्ञानस्थले तेषां नष्टत्वेनेदानीं चित्तादात्म्यायोगात्। बाधग्रहेण शुक्तिरजतोच्छेदानंतरं तज्ज्ञानस्थले तदीयसूक्ष्मावस्थाया अप्यभावेन चित्तादात्म्यायोगात्तत्राकाराख्यविषयतयैव सविषयकत्वव्यवहारावश्यकत्वाच्च। न द्वितीयः। घटादावपि तत्कल्पनापातात्। नच चिद्रूपज्ञानस्यावश्यं विषयेण विषयस्य च तेन संबंधोऽपेक्षितः। तन्निर्वाहाय चिन्निरूपिताकाराख्यविषयतानां नानाविषयेष्वनंतानां कल्पने गौरवाच्छ्रुतिसित्धेषु चित्प्रतियोगिकत्वेन घटाद्यनुयोगिकत्वेन क्लृप्ततादात्म्येषु विषयतात्वं स्वीक्रियते न घटादौ तेषां चित्प्रतियोगिकत्वादिना क्लृप्तत्वाभावादिति वाच्यं। तादात्म्यनिर्वाहकयोर्भेदाभेदयोः चित्प्रतियोगिकत्वादिना क्लृप्तयोर्वा तत्कल्प्यं। तादात्म्येवेत्यत्र विनिगमकाभावादन्यत्र क्लृप्तजातीयाकाराख्यविषयताया एव बलात्सित्धेः। नच साक्षिणः सुखादिविषयकत्वनिर्वाहाय तादात्म्यमपि तद्विषयतारूपत्वेन क्लृप्तमिति वाच्यं। साक्षिणो निर्विकारस्यांतःकरणपरिणामरूपसुखादितादात्म्यायोगात्। सौरालोकघटरूपादीनामिव संयोगादिघटितसंबंधांतरस्यैव भासकत्वौचित्येन तादात्म्यस्य क्लृप्तत्वासंमतेः। किंच ज्ञानस्य विषय संबंधो विषयतारूप आवश्यक इति नियममभ्युपगम्य चिद्रूपज्ञाने तन्निर्वाहाय तादात्म्ये विषयतात्वं यः कल्पयति स कीदृशविषयताया ज्ञानसंबंधत्वं नियमं गृण्हात्यन्यत्र सहचारग्रहात्। न तावत्तादात्म्यस्य। तस्य चिदतिरिक्तस्थले विषयतात्वेन भानस्यासित्धत्वात्। अन्यत्रापि क्लृप्तत्वे प्रकृते तथैव सित्ध्या तत्साधनायासवैफल्यापत्तेः। अत आकाराख्यविषयतानिरूपकत्वज्ञानत्वयोः सहचारग्रहात् व्याप्तिं गृण्हन् तन्निर्वाहाय प्रकृते तादात्म्ये विषयतात्वमात्रकल्पनया कथं कृतार्थः स्यात्। अन्यथा धूमाग्न्योर्व्याप्तिग्रहात्पर्वते धूमेन वन्हिमनुमाय पर्वते क्लृप्ततृणादावेव वन्हित्वं परिकल्प्य कृतार्थः स्यादविशेषात्। तस्मात्साधकाभावाद्बाधकसत्वाच्च तादात्म्यस्य दृग्दृश्यसंबंधरूपविषयतात्वकल्पनमश्रत्धेयमेव। एतेन ज्ञानविषययोः संबंधो हि विषयतात्वेन तादात्म्यत्वेन वा घटं जानामीत्यनुभवेन गृह्यते न तु विशेष्यतात्वप्रकारतात्वाद्यखंडधर्मेण। न चैवं विशेष्यतात्वादिविशिष्टविषयताग्राहकत्वमनुभवस्य सर्वसित्धं न स्यादिति वाच्यं। विशिष्टज्ञानमात्रस्यैकविषयतावच्छिन्नापरविषयताशालितया तद्विशिष्टज्ञानग्राहकानुभवस्य विशेष्यतात्वादिग्राहकत्वोपपत्तेः। तथाहि। इदं रजतमित्यादिज्ञाने तादात्म्यसंसर्गनिष्ठाया विषयताया रजतादिविषयताविशिष्टाया इदंविषयतावच्छिन्नत्वमिदमवच्छिन्नत्वं च। तथा

च रजतविषयताविशिष्टतादात्म्यविषयतां प्रतीदंविषयताया अवच्छेदकत्वावगाही रजततादात्म्येनेदं जानामीत्यनुभवो रजतविषयतानिरूपितावच्छेदकत्वमपीदंविषयतायामवगाहते। इत्थं च विशेष्यतात्वादेर्भानमागतमेव। विषयतानिष्ठं विषयतावच्छेदकत्वं विशेष्यतात्वं। विषयतानिष्ठावच्छेदकतानिरूपकतासमानाधिकरणं यद्विषयतानिष्ठावच्छेदकत्वनिरूपितनिरूपकतानिरूपितावच्छेदकत्वं तत्प्रकारतात्वं। विषयतानिष्ठं विषयतानिष्ठावच्छेदकतानिरूपकतावच्छेदकत्वासमानाधिकरणं यद्विषयतानिष्ठावच्छेदकतानिरूपकत्वं तद्वा विषयतानिष्ठावच्छेदकतानिरूपकत्वाश्रयविषयतावच्छिन्नं यद्विषयतानिष्ठावच्छेदकतानिरूपकत्वं तद्वा संसर्गतात्वं। रजततादात्म्येनेदं जानामीत्यनुभवो हि रजतविषयताविशिष्टतादात्म्यविषयतानिरूपितावच्छेदकत्वेनेदंविषयतामवगाहते। अत उक्तविशेष्यतात्वावगाहित्वं तस्य। रजतविषयताविशिष्टतादात्म्याविषयतानिरूपितावच्छेदकत्वावगाहने विशेषणीभूतरजतविषयतानिरूपितावच्छेदकत्वमिदंविषयतानिष्ठमवगाहत इति इदंविषयतानिष्ठावच्छेदकत्वं निरूपकत्वसहितं यत्तादात्म्यविषयतानिष्ठं तादृशावच्छेदकत्वनिरूपकत्वनिरूपितमवच्छेदकत्वं रजतविषयतानिष्ठमवगाहत एवेति रजतविषयतानिष्ठप्रकारतात्वावगाहित्वमपि। तादृशनिरूपकताश्रयरजतविषयतावच्छिन्नं तादात्म्यविषयत्वनिष्ठतादृशनिरूपकत्वं वा तादृशनिरूपकतावच्छेदकत्वानाश्रयीभूततादात्म्यविषयतानिष्ठतादृशनिरूपकत्वं वाऽवगाहत इति पूर्वनिरुक्तसंसर्गतात्वद्वयावगाहित्वं तस्य युक्तं। विषयतानिष्ठा याऽवच्छेदकता तन्निरूपकतावच्छेदकत्वं प्रकारतात्वमित्येतावन्मात्रोक्तौ इदंविषयतानिष्ठावच्छेदकतानिरूपिता तादात्म्याविषयतानिष्ठा या निरूपकता तदवच्छेदकत्वस्य तादात्म्यत्वविषयतायामपि सत्वात्तस्या अपि प्रकारतात्वापत्तिरतो विषयतानिष्ठावच्छेदकतानिरूपकत्वसामानाधिकरण्यरूपाविशेषणानिवेशः। तादात्म्यत्वाविषयतायां नेदंविषयतानिष्ठावच्छेदकतानिरूपकत्वं उक्तानुभवस्य तद्विषयीकारित्वाननुभवात्। अनुभवांतरस्य चाभावान्नातिव्याप्तिः। रजतरूपेणेदं जानामीत्यविप्रतिपन्नानुभवांतरेणेदंविषयताया रजतविषयतावच्छेदकत्वावगाहनादुक्तानुभवस्यापि तथाऽवगाहित्वं स्वीक्रियत इति रजतप्रकारतायां नासंभवशंका। सर्वेषां चित्येबाध्यासात्तादात्म्यत्वनिष्ठविषययत्वरूपधर्मस्यापि तादात्म्यत्वरूपस्वाश्रयावच्छेदेन चित्यध्यासोऽतस्तादात्म्यत्वनिष्ठं यदवच्छेदकत्वं तन्निरूपकत्वमादायातिव्याप्तितादवस्थ्यं स्यादतो विषयतानिष्ठत्वमवच्छेदकतायां दत्तं। निरूपकत्वांतविशेषणमात्रस्य प्रकारतात्वरूपत्वे तादात्म्यनिष्ठसंसर्गतायामतिव्याप्तिरतोऽवच्छेदकत्वांतविशेष्यदलनिवेशः। इदमवच्छेदेन रजततादात्म्यस्याध्यासात्तादात्म्यनिष्ठा येदंनिष्ठावच्छेदकतानिरूपकता तदवच्छेदकत्वस्य तन्निष्टसंसर्गतारूपधर्मे सत्वादुक्तातिव्याप्तितादवस्थ्यमित्यवच्छेदकतायां विषयतानिष्ठत्वोपादानं। संसर्गलक्षणे प्रकारतायामतिव्याप्तिवारणायोक्तवैकल्पिकविशेषणद्वयं। तत्रावच्छेदकतायां विषयतानिष्ठत्वविशेषणप्रयोजनमुक्तरीत्योह्यं। ननु तादात्म्येन रजतारोपस्थले रजतत्वस्यापीदमंशे प्रकारत्वं वर्तते। अन्यथा पुरोवर्त्तिनि रजतत्वप्रकारकत्वाभावाद्रजतार्थिप्रवृत्त्यनुपपत्तेः। तथा चेदंविषयतानिष्ठावच्छेदकतानिरूपकीभूतरजतत्वविषयतया तादृश्या रजतविषयतानिष्ठनिरूपकताया अवच्छिन्नत्वात्पूर्वोक्तद्वितीयसंसर्गतालक्षणस्य रजतप्रकारतायामतिव्याप्तिः स्यादिति चेन्न। यतस्तत्र रजतत्वविषयते द्वे वर्तेते। इदंनिष्ठविशेष्यतानिरूपिता प्रातीतिकतादात्म्यसंसर्गावच्छिन्ना एका प्रकारता। अपरा रजतनिष्ठानवच्छिन्नविशेष्यतानिरूपिता व्यावहारिकसंसर्गावच्छिन्ना। तत्राद्येदंनिष्ठ-

विशेष्यतानिष्ठावच्छेदकतानिरूपिकाऽपि न रजतप्रकारतानिष्ठायामिदंविषयतानिष्ठावच्छेदकतानिरूपकतायामवच्छेदिका तादृशप्रातीतिकसंसर्गेण रजतत्वोपहितरूपेण रजतस्य प्रकारत्वाननुभवात् । द्वितीया तु रजतविषयतानिष्ठतादृशनिरूपकतां प्रत्यवच्छेदिकाऽपि नेदंविषयतानिष्ठावच्छेदकातानिरूपिकेति न रजतप्रकारतायां संसर्गतालक्षणस्यातिव्याप्तिः । ननु तादात्म्यत्वविषयतासंसर्गतावच्छेदकतारूपा इदंत्वविषयताधर्मितावच्छेदिकतारूपेति व्यवहारः कथं संगच्छते । विशेष्यतात्वप्रकारतात्वादीनामिव विषयतात्वव्याप्यस्यावच्छेदकतात्वाख्यधर्मस्यापि तुल्यन्यायेनानंगीकारात् । मूलाग्रादौ यादृश्यवच्छेदकता विषयतायास्तादृशावच्छेदकतारूपत्वासंभवादिति चेन्न । तादात्म्यत्वेदंत्वादेरवच्छेदकतया तत्र विद्यमानत्वेन निमित्तेन तथाव्यवहारसंभवात् । नन्वखंडविशेष्यतात्वप्रकारतात्वादिधर्मांगीकारादस्य को विशेषस्तत्परित्यज्योक्तरीतिरभ्युपगम्यत इति चेदवश्यं सर्वैः कल्पनीयत्वमेव विशेषः । अन्योऽप्ययं विशेषः मूलादौ तत्संबंधे च यदवच्छेदकत्वं यच्च तन्निरूपकत्वं संयोगादौ तत्संबन्धे च तज्जातीययोरेवावच्छेदकत्वतन्निरूपकत्वयोर्विषयतासु कल्पनाद्विषयविषयितयोर्द्वयोरेव ते वर्तेते नैकत्रैव । तथाच विषयविषयतयोर्नैकमप्यपलपितुं शक्यते । तज्जातीयावच्छेदकता तन्निरूपकत्वयोः संबंधसंबन्ध्युभयसापेक्षत्वात् । अखंडविशेष्यतात्वादेर्विषयतायां स्वीकारे तु तस्य ज्ञानवैलक्षण्यान्यथानुपपत्तिरेव तत्कल्पिका । सा च ज्ञानगतं वैलक्षण्यमेव कल्पयेन्न विषयतानिष्ठं । तथाच ज्ञानस्यैव धर्मो घटत्वादिः स्यात् । तथाच ज्ञानस्य घटादिविषयैरत्यंताभेदापत्त्या साकारवादः स्यादिति निरस्तं । तादात्म्यरूपाविषयतानामवच्छेदकत्वादिरूपपदार्थस्य च स्वरूपत एव निरस्तत्वेन भवदुक्तप्रमेयस्यासंभवदुक्तिकत्वात् । किं चास्तु वा अन्यत्रावच्छेदकत्वपदार्थस्तावताऽपि प्रकृतेऽनुपपत्तिरेवाखंडविशेष्यतात्वाद्यनंगीकारे । तथाहि । विषयता नाम चिद्रूपज्ञानप्रतियोगिकाविषयवृत्तितादात्म्यं । तच्चेदं रजतमिति भ्रमस्थले प्रमास्थले च रजतत्वे रजते संसर्गभूततादात्म्ये तादात्म्यत्वे इदमर्थे इदंत्वे च प्रत्येकं वर्त्तते । तत्र रजतनिष्ठतादात्म्यस्य तादात्म्यनिष्ठतादात्म्यस्य च कथमिदंनिष्ठतादात्म्यावच्छेद्यत्वं । अवच्छेदकस्यावच्छेद्याधिकरणवृत्तित्वाभावात् । रजतस्येदमभिन्नत्वात्कथंचिदुक्तिसंभवेपि तादात्म्यस्थले सर्वथाऽ युक्तैव । न चेदंनिष्ठतादात्म्यस्य तादात्म्यनिष्ठतादात्म्यस्य च काश्चित्परंपरासंबंधः संभवतीति वाच्यं । तादृशपरंपरायाः अवच्छेदकत्वानियामकत्वस्य दीधितिकृत्प्रभृतिसिद्धत्वात् । न चाग्रस्य संयोगावच्छेदकत्वं कथं अग्र एव वृक्षस्य समवायेन सत्त्वेन वृक्षरूपावयविन्यग्रस्यासत्वादिति वाच्यं । विशिष्टप्रतीतिनियामकसंबंधस्यैवावच्छेदकतानियामकत्वाभ्युपगमात् । वृक्षे शाखा वृक्षेऽग्रमिति प्रतीतिबलात्तत्राधेयत्वस्यापि विशिष्टप्रतीतिनियामकत्वाभ्युपगमात् । न चेह परंपरायास्तथात्वं रजतसंसर्गरूपतादात्म्ये इदंनिष्ठतादात्म्यमित्यप्रत्ययात् । अपि च तादात्म्यनिष्ठतादात्म्यरूपविषयताया रजतनिष्ठायाश्च तस्याः व्याप्यवृत्तित्वात् कुतस्तस्यावच्छेदकापेक्षा । नहि तदभावप्रत्ययस्तत्र किंचिदवच्छेदेन जायते येन तस्याव्याप्यवृत्तित्वं स्यात् । सत्यरजतस्थले विषयताया ज्ञानसमानकालिकत्वपक्षे तस्य कालिकाव्याप्यवृत्तित्वेपि तदवच्छेदकत्वं कालविशेषस्यैव स्यात् नत्विदंनिष्ठविषयताया इति त्वदुक्तलक्षणान्यसंभवग्रस्तान्येव । उक्तावच्छेद्यावच्छेदकभावस्य सर्वसंमतत्वोक्तिरपि न युक्ता । घटत्वनिष्ठप्रकारतायाः स्वव्यधिकरणघटाविशेष्यताऽवच्छिन्नत्वाव्याप्यवृत्तित्वयोः कुत्रापि नैय्यायिकैरनुक्तत्वात् । यद्यपि पुरोवर्तिविषयकत्वावच्छेदेन घटत्वप्रकारकत्वं

तैः स्वीकृतं । घटपटसमूहालंबने तदनात्मके अयं घट इति ज्ञाने वा इदं ज्ञानं घटे घटत्वप्रकारकं न घटत्वेन पटे इत्यादिप्रत्ययेन घटत्वप्रकारकत्वादेर्ज्ञाने अव्याप्यवृत्तित्वसिद्धेस्तन्निर्वाहार्थत्वात्तथापि विषयतानां तथात्वमप्रामाणिकमेव । अथ चित्तादात्म्यं विषयताख्याज्ञाने प्रतियोगितासंबंधेन विद्यमाना घटादिनिरूपितविषयताव्यवहारं ज्ञाने जनयति अनुयोगितया विषयेषु विद्यमाना विषयताव्यवहारं । यथैकः समवायः प्रतियोगितया घटे विद्यमानः घटे आधेयत्वबुद्धिं अनुयोगितया कपाले संबंधस्तत्राधारताबुद्धिं जनयति । तथा तत्रैवात्रापि विषयता विषयितेति संबंधद्वयं नास्ति । तथाच ज्ञाननिष्ठस्य रजतनिष्ठतादात्म्यप्रतियोगित्वरूपप्रकारितायास्तादात्म्यनिष्ठतादात्म्यप्रतियोगित्वरूपसंसर्गितायाश्चेदंनिष्ठतादात्म्यप्रतियोगित्वरूपविशेष्यत्वावच्छिन्नत्वे तद्घटकतादात्म्यानामप्यवच्छेद्यावच्छेदकभावः सिध्यति । यद्वा विशेष्यिताप्रकारितादीनां ज्ञानधर्माणां ज्ञानग्राहकग्राह्यतया तन्निष्ठविशेष्यितात्वादीनामेव ग्राह्यत्वं नतु विषयानिष्ठविशेष्यतादिवृत्तीनां विशेष्यतात्वादिधर्माणां । तेषु लौकिकालौकिकोभयसंन्निकर्षाभावेन परमते ग्राह्यताप्रसक्तेरभावात् । अथवा विषयता ज्ञाननिष्ठैव अर्थस्तत्संबंधीति वा मतं । इत्थंच विशेष्यितात्वादीनामेव नाखंडत्वं किंत्वन्यादृशत्वमित्यत्र प्रकृतग्रंथस्य तात्पर्यं । तथा चेदमादिप्रतियोगिकचिन्निष्ठ तादाम्यादीनां विषयतारूपाणामिदमादिरूपविषयनिष्ठावच्छेदकताघटकसंबंधतयाऽवच्छेदकत्वान्नोक्तलक्षणासंभव इति चेन्न । एवमपीदंत्वविषयतायां धर्मितावच्छेदकतात्वरूपवैलक्षण्यस्य तादात्म्यत्वविषयतायां संसर्गतावच्छेदकतात्वरूपाविलक्षणधर्मस्यावश्यकत्वेनोक्तप्रयासवैफल्यात् । न चेदंत्वतादात्म्यत्वयोः धर्मितासंसर्गतयोः प्रत्यवच्छेदकत्वात्तन्निष्ठाविषयतयोस्तदवच्छेदकताशब्देन व्यवहार इत्युक्तमेवेति वाच्यं । विशेष्यितानिरूपितं चेदंत्वनिष्ठमवच्छेदकत्वमेव विविच्यतां । अव्याप्यवृत्तितानिर्वाहकमवच्छेदकत्वं तावन्न युज्यते । इदंज्ञानमिदंत्वे इदंविषयकं तादात्म्यत्वे तादात्म्यविषयकमित्यप्रत्ययात् । नैय्यायिकैरपि विशेष्यित्वस्याव्याप्यवृत्तित्वानंगीकाराच्च । त्वन्मतेऽपीदंविशेष्यितायाश्चिन्निष्ठतत्तादात्म्यरूपायाः इदंनिष्ठेनेदंत्वेनावच्छिन्नत्वायोगाच्च । इदंत्वस्यापि तादात्म्येन संबंधत्वादवच्छेदकत्वोपपत्तिः । एवं तादात्म्यत्वस्यापीति चेत् । इदंत्वे पुरोवर्तिनि विशेष्यितेत्याद्याकारायाः रजततादात्म्येनेदं जानामीत्यादिकाया इदानेनेदंत्वं जानामीत्यादिकाया अवच्छेदकत्वावगाहिबुद्धेरभावात् । चिति तादात्म्येन संबध्येदंत्वादेर्विशेष्यिताद्यवच्छेदकत्वे तत्तादात्म्यस्य त्वन्मते विषयितारूपस्यावच्छेदकत्वप्राप्त्येदंविशेष्यितायास्तादात्म्यसंसर्गितायाश्चेदंत्वतादात्म्यत्वविषयितानिष्ठावच्छेदकतानिरूपकत्वापत्त्या इदंत्वे तादात्म्यत्वांशे च तयोः संसर्गतारूपत्वं प्रकारतारूपत्वं वा स्यात् । इदंत्वतादात्म्यत्वनिरूपिताचिन्निष्ठतादात्म्ययोर्विशेष्यितारूपत्वं च स्यात् । कपालाद्यवच्छेदेन चिति घटतादात्म्यस्येव स्वावयवावच्छेदेनैवेदंतादात्म्यस्य चिति सत्वाच्च । न चेदंविषयित्वादिरूपमिदंतादात्म्यमन्यदेव न तस्य शुक्त्यवयवावच्छेदेन सत्वमिति शंक्यं । अध्यासविचारेऽनादेः सत्तादात्म्यस्यैकस्यैवाविद्यायामिव घटादावपि कुतो न स्वीकार इत्याशंक्य घटः सन् सन् घट इत्यादिषु प्रत्ययेषु घटादौ भासमानं सत्तादात्म्यं चिद्रूपज्ञानस्य विषयतारूपं तच्च कपालादिरूपसत्ताद्तादात्म्यरूपविषयतावच्छिन्नं पटनिष्ठं तु तंतुनिष्ठं मेत्येवं रूपेणातस्तादात्म्यस्यैक्यं न घटत इति पूर्वसिद्धतादात्म्यस्यैव विषयताविषयितारूपत्वाभ्युपगमात् ।

किंत्व ध्यासभागे एव सन् घट इत्याकारानुरोधेन सति घटतादात्म्यं जायते तत्र केवलसतः अधिकरणत्वं घटादिनिष्ठतादात्म्यप्रतियोगित्वोपहितरूपेण सतोऽवच्छेदकत्वमिति भाषितत्वेनेदंत्वाद्यवच्छेदेनेदंतादात्म्यरूपविषयितायाश्चित्यध्यास इत्यस्यायोग एव । अपि चेदं रजतमिति सत्यरजतप्रत्ययस्थले इदंपदार्थस्य विशेष्यत्वानुपपत्तिः । इदं पदार्थनिष्ठरजतप्रतियोगिकतादात्म्ये विषयतारूपत्वं नास्ति रजतनिष्ठचित्तादात्म्येदंनिष्ठाचित्तादात्म्यस्यैक्यात्कथंचिद्भेदोपपादनेऽप्युक्तरीत्या तयोरवच्छेद्यावच्छेदकभावाभावात् । न चेदंत्वेनेदं विशेष्यं न द्रव्यत्वेनेति प्रत्ययादिदंत्वे विशेष्यतानिरूपितमवच्छेदकत्वमवश्यं वाच्यं । रजतत्वेनेदं ज्ञातं न द्रव्यत्वेनेत्यादिप्रत्ययात्प्रकारीभूतरजतत्वस्याप्यवच्छेदकत्वापत्त्या तन्निष्ठप्रकारताया अपि धर्मितावच्छेदकत्वापत्तेः । रजतत्वविशिष्टेदंत्वेनेदं ज्ञातं न केवलेदंत्वेनेति प्रत्ययात्केवलेदंत्वस्यावच्छेदकत्वानुपपत्तिश्च । इदंत्वेनेदं विशेष्यं न गगनेनेति प्रत्ययानुरोधात् सर्वेष्वपीदंत्वातिरिक्तेदंवृत्तिधर्मेष्वभावावच्छेदककल्पनागौरवाच्च । तृतीययावच्छेदकत्वोल्लेखायोगात्तत्प्रकारतानिरूपकत्वतदभावयोरेवोल्लेखेन तत्प्रतीत्यावच्छेदकत्वासिद्धेश्च । तस्मादिदंत्वतादात्म्यत्वयोर्विशेष्यतां विशेषितां प्रति वा संसर्गतासंसर्गितां प्रति वोक्तावच्छेदकत्वं दुर्घटं । नाप्यनतिरिक्तवृत्तित्वरूपं द्रव्यं घट इति ज्ञाने द्रव्यत्वस्य तज्ज्ञानीयधर्मितावच्छेदकत्वानुपपत्तेस्तस्य पटादावपि सत्वात् । नापि व्यापकत्वं समनैयत्यं वा । प्रमेयत्वेदंत्वसमनियतधर्मांतरयोरप्यवच्छेदकत्वापत्तेः । न चेष्टापत्तिरिदंत्वावच्छिन्नधर्मिकरजतादिबुद्धिं प्रति उक्तधर्मावच्छिन्ने रजतभेदावगाहिबुद्धेरपि विरोधित्वापत्तेः । त्वदुक्तरीत्या समानधर्मितावच्छेदकत्वानपायात् । अत एवावच्छेदकत्वं स्वरूपसंबंधरूपमेव वाऽस्त्विति परास्तं । रजतत्वप्रकारतानिरूपितरजतनिष्ठविशेष्यताया अनवच्छिन्नत्वेन प्रसिद्धाया अपि किंचिदवच्छिन्नत्वापत्तेश्च । रजतनिष्ठविशेष्यतासमनियतस्य कस्यचिद्धर्मस्यावच्छेदकत्वापरिहारात् । नच धर्मांतरेषु तादृशावच्छेदकता न कल्प्यते ज्ञाने तदंशे भासमानधर्म एव तादृशाविलक्षणावच्छेदकता कल्प्यत इति वाच्यं । तथात्वे तस्या एव विलक्षणावच्छेदकताया अन्यत्राक्लृप्ताया ज्ञानवैलक्षण्यान्यथानुपपत्त्यैवांगीकारापत्त्या साकारवादिनः सकाशात्तव कस्रा ता । अपि च तदंशे भासमाने धर्मे तन्निष्ठविषयतानिरूपितविलक्षणावच्छेदकतां विषयतानात्मिकां परिकल्प्य तद्धर्मतया विषयतायां धर्मितावच्छेदकता संसर्गतावच्छेदकता शब्दव्यवहारांगीकारे इदमंशे भासमाने रजते रजतत्वे च तादृशविलक्षणावच्छेदकताया अवर्जनीयतया तन्निष्ठरजतप्रकारताया रजतत्वप्रकारतायाश्च धर्मितावच्छेदकतारूपत्वेन व्यवहारापत्तिः। अपिच कालिकेन गुणत्ववान् समवायेन गुणत्ववान् तादात्म्यं प्रमेयमित्यादिज्ञानेषु प्रकारताधर्मितावछेदकयोः संसर्गतावच्छेदकधर्मितावछेदकयोश्चैक्यात् । तद्धर्मतया गुणत्वनिष्ठप्रकारतायाः धर्मितावछेदकतात्वेन तादात्म्यत्वनिष्ठधर्मितावच्छेदकतायाः संसर्गतावच्छेदकतात्वेन व्यवहारापत्तिः । एवं रजतनिष्ठविषयतायाः तादात्म्यनिष्ठेदंविषयतानिष्ठावछेदकतानिरूपकतां प्रत्यवछेदकत्वमपि मूलाग्रादिनिष्ठावछेदकताजातीयं दुर्वचं । तादृशानिरूपकतायास्तादात्म्ये विषयत्वे स्वरूपसंसर्गेण व्याप्यवृत्तित्वेन तदवछेदकानपेक्षणात् । रजततादात्म्येनेदं जानामीत्यनुभवेन रजतविषयतायास्तादृशानिरूपकतानिरूपिततादृशावच्छेदकताया अनुल्लेखाच्च । रजताविषयत्वतादात्म्यविषयत्वे तादृशानिरूपकत्वमित्यनुभवांतरमप्यननुभाविकं लोकानां । तदन्यविलक्षणावच्छेदकताकल्पने तु साकारवादिकृतदंडपात्रं भवसि । एवं रजतविषयतारजतनिष्ठचित्ता-

दात्म्यरूपा तादात्म्यविषयता तु तादात्म्यनिष्ठचित्तादात्म्यरूपा। एवं च रजतविषयतायास्तादात्म्यविषयत्वासंबद्धतया कथं तन्निष्ठनिरूपकतां प्रत्यवछेदकत्वं। नच तयोर्निरूप्यनिरूपकभावोऽस्तीति शंक्यं। तयोश्चित्प्रतियोगिकत्वेन स्वाश्रयविषयानुयोगिकत्वेन च प्रतियोग्यनुयोगिभावरूपनिरूप्यनिरूपकभावानुपपत्तिः। अन्यादृशस्य तादात्म्यांतरेष्वदृष्टस्य विलक्षणनिरूप्यनिरूपकभावस्य कल्पने पुनः साकारवादो गले पतितः स्यात्। एवं तादात्म्येन रजतभ्रमस्थले प्रातीतिकतादात्म्येन रजतत्वभानांगीकारेपीदं रजतमित्येव ज्ञानाकारानुभवात्तस्येदं रजतं प्रातीतिकतादात्म्येन रजतत्ववच्चेत्याकारकज्ञानांतराद्वैलक्षण्यनिर्वाहाय रजतत्वविषयतायां वैलक्षण्यस्य कस्यचित्कल्पनीयतापत्त्या साकारवादापत्तिरतोऽनुभवसिद्धत्वेनैव प्रकारितात्वादिधर्मा नापलपितुं शक्या घटादीनां ज्ञानस्य वैलक्षण्यानुभवान्न साकारवादो युक्त इत्येव वक्तुं युक्तं। त्वदुक्तसंसर्गतात्वादीनां कथंचिदप्यनुभवे भानमयुक्तं च। तल्लक्षणप्रविष्टत्वदुक्तविशेषणानां तादृशविशिष्टस्वरूपेणाभानात्। कथंचित्तद्घटकपदार्थानां विशृंखलस्फुरणस्य तद्घटितविशिष्टपदार्थभानरूपत्वाभावात्। संसर्गताद्वितीयलक्षणप्रविष्टत्वदुक्ताभावरूपविशेषणस्य ज्ञानानुभवात् पूर्वमुपस्थितौ मानाभावेन तद्घटितसंसर्गतात्वभानस्यासंभवदुक्तिकत्वाच्च। यदप्येतत्प्रस्तावे अथ तार्किकैरित्यारभ्य घटादिविषयविशेषितरूपेणैव ज्ञानस्योत्पत्तिनाशौ प्रतीयेते न स्वरूपत इति ज्ञानस्यैक्यमेवेत्युक्तं। तत्तुच्छं। वन्हिमत्पर्वतविषये आत्मविषये वा मम पूर्वं ज्ञानं यदुत्पन्नं तन्नष्टमिदानीं तु ज्ञानांतरमुत्पन्नमिति विषयविशेषितस्वरूपेणैव ज्ञानोत्पत्तिनाशयोर्विषयस्थैर्यस्यैवानुभवादिति दिक्। स्यादेतत्। यत्सन्निकृष्टेन करणेन यज्ज्ञानं जायते स तस्य विषय इति विषयत्वं निरूपयद्भिर्भवद्भिर्ज्ञानासाधारणकारणकरणप्रतियोगिकसन्निकर्षस्य विषयतात्वमंगीकृतं। तथाच घटनिष्ठचक्षुःसन्निकर्षस्य विशेषतारूपस्य घटत्वनिष्ठचक्षुःसन्निकर्षस्य प्रकारतारूपस्य निरूप्यनिरूपकभावानुपपत्तिः। तस्य चक्षुःप्रतियोगिकत्वघटाद्यनुयोगिकत्वयोरेव सत्वात्। तेषां चक्षुरादेर्घटादिसंबंधरूपाणां ज्ञानविषयसंबंधरूपत्वानुपपत्तिरित्यादिदूषणानां त्वन्मतेऽप्याविशिष्टत्वात् मदुक्तविषयदूषणोद्यमे पश्यसि परदोषमात्मदोषं न पश्यसीत्याभाणकविषयता भवतामापद्यत इति। मैवं। मया ज्ञाने प्रकारित्वविशेष्यित्वादीनां तन्निरूपकत्वरूपाविशेष्यत्वप्रकारत्वादीनां घटादावंगीकृतत्वेन सन्निकर्षस्य विषयतारूपत्वं ज्ञानार्थसंबंधरूपत्वं चानभ्युपगतमेव। यत्सन्निकृष्टेनेत्यादिकं तु भ्रमविषयव्यावृत्तविषयपदार्थतावच्छेदकस्य प्राचीनैस्तांत्रिकैर्व्यवहृतत्वात्। तत्र प्राप्तदोषाणां परिहारार्थं सुधायां परिष्कृतं। तथा नैय्यायिकनये स्मृतिहेतोः प्रमाजनकत्वेन प्रमाणत्वसंभवेऽपि स्वसंकेतितप्रमाणचातुर्विध्यनिर्वाहाय यथार्थानुभवः प्रमेति लक्षणाभिधानं तथा तेषां तथालक्षणाभिधानं नायुक्तं। अत एव यदाकारं यद्विज्ञानं तत्तस्य विषय इति प्रमितिनिष्ठेयं व्यवस्थेति पूर्वं वदद्भिष्टीकाकारैः प्रमितावप्याकाराख्यां ज्ञानविषययोः संबंधरूपां विषयितामंगीकृत्यैव तस्य स्वनिरूपकविषयसत्ताव्याप्यत्वं परं प्रमांतर्भावेण स्वीकृतं। प्रमायां सन्निकर्षस्यैव विषयित्वादिरूपत्वेनाकाराख्यविषयतानंगीकारे कथमाकाराख्यविषयितायाः विषयसत्ताव्याप्यत्वं प्रमांतर्भावेणाभिदध्यात। अत एव सुधायामपि यत्सन्निकृष्टेनेत्यादिलक्षणं असद्व्यावृत्तं तत्तज्ज्ञानविषयस्येतरव्यावर्तकं वा अयमेतज्ज्ञानस्य विषय इति व्यवहारोपयोगि वाऽभिधाय यज्ज्ञानं यत्प्रातिभासं स तस्य विषय इत्यसत्साधारण्येन व्यवहारनियामकं ज्ञानार्थसंबंधरूपाविषयिताघटितं लक्षणांतरमभिहितं।

न्यायामृतेऽप्येतल्लक्षणं ज्ञानकरणसंनिकर्षसमानाधिकरणो ज्ञानावच्छेदकत्वसाक्षाद्व्याप्य-धर्मो विषयत्वमित्यादिरीत्या ईश्वरज्ञानविषयसाधारण्यापेक्षापक्षे धर्मघटनया व्याख्यातं। तरंगिण्यामपि असद्व्यावृत्तवस्तुत्वादिधर्ममुपादायेश्वरज्ञानविषयेष्वपि लक्षणमुपपादितं। वस्तुतः अस्यैव ज्ञानार्थसंसर्गरूपाविषयतारूपत्वाभिमतौ कथं धर्मघटनया परिष्कुर्यात्। वस्तुत्वादेः किंचित्संसर्गत्वाभावात्। शुक्तिरजतादेः क्वचिज्ज्ञानविषयत्वाभावोक्तिश्चोक्त-पारिभाषिकविषयत्वाभिप्राया विषयतापदार्थविकल्पाभिसंधिपूर्विकैव। तथाच परोक्षा-परोक्षज्ञानेच्छादिनिखिलस्थलेष्वावश्यकत्वेन स्वयमप्यंगीकृताकाराख्यविषयतानां गौणत्व-मत्यंताप्रामाणिकविषयचिन्तादात्म्यस्य ज्ञानार्थसंबंधरूपत्वेन मुख्यत्वमिति त्वन्मत इव मन्मतेऽनंगीकारान्न कोप्यस्मन्मते दोषः। एतेन यत्केनचित्स्वग्रंथे मुक्ते भेदसाधकानुमा-नस्य सिद्धसाधनतापपादनानंतरमभिहितं। ननु भेदस्यापारमार्थिकत्वे शुद्धचिन्मात्र मुक्ते तद्वृत्ताभ्युपगम एव नोचितः। सदसतोः संबंधायोगादसतो निराधिकरणत्वाच्च। मैवं। अत्यंतासत्वानभ्युपगमात्। भेदस्यानिर्वाच्यत्वात्। न चानिर्वाच्यत्वासिद्धिः ख्यातिबाधा-भ्युपगमेन तत्सिद्धेः। शुक्तिकायामिदं रजतमिति भ्रमप्रकारो न सन् बाध्यत्वादिति तु तवाप्यनुमतं। नात्यंतासत्। अपरोक्षत्वानुपपत्तेः। प्रत्यक्षं हींद्रियार्थसंन्निकर्षजन्यं न चासत इंद्रियस्य संन्निकर्षः संभवति। किं चासद्रजतत्वेन भाति न वा। नाद्यः। अन्यथाख्यात्यापत्तेः। तुल्ययुक्त्या भ्रमे परमार्थरजतस्यापि भानसंभवाच्च। न द्वितीयः। भ्रमाद्रजातार्थिप्रवृत्त्यनुपपत्तेः। तस्येष्टतावच्छेदकधर्मिसंसर्गानवगाहित्वात्। विस्तृतं चैतदन्यत्र। यत्तु भ्रमे अधिष्ठानस्यैव विषयता सच केवलं स्वविषयं शुक्तिकाशकलमत्यंता-सद्रजतात्मनाऽवगाहत इत्यसद्विषय उच्यते। रजतज्ञानस्य शुक्तिविषयत्वं संविद्विरुद्ध मिति चेन्न। रजतज्ञानेत्यस्य कोऽर्थः। यदि रजतविषयस्येति तदाऽसिद्धिः। यदि रज-तमिति ज्ञानस्येति तदा परस्यैव संविद्विरोधः। यदिदं रजतमिति अमनिषं सा शुक्तिकैवेति प्रत्ययात्। यदाकारं यद्विज्ञानं तत्तद्विषय इति प्रमितिनिष्ठैयं व्यवस्था। एवंच भ्रमस्य रजतविषयकत्वान्न भ्रमे तदिंद्रियसन्निकर्षापेक्षा। शुक्तिसन्निकृष्टेनैवेंद्रियेण दोषसहकृतेन भ्रमोत्पादाभ्युपगमादिति तन्मंदं। भ्रमे रजतस्याविषयत्वे अख्यातिवादापत्तेः। तद-विषयकत्वेऽपि तदाकारतास्वीकारादद्दोष इति चेदाकारतैव विषयतेति कथं भ्रमस्य रजताद्यविषयकत्वं। ननु नाकारत्वं विषयता किंतु यत्सन्निकृष्टेन करणेन यज्ज्ञानं जायते स तस्य विषय इत्युक्तेः स्वजनकेंद्रियसंयोगादिरेवेति तस्य रजते बाधान्न तस्य भ्रमविषयत्वमिति चेन्न। अख्यातिवादापत्तिवारणायाकारताया अवश्याभ्युपेयत्वे धर्म्यादावपि सैवास्तु विषयता न तूक्तसंयोगादिस्तथात्वे गौरवात्। रजतत्वेनेमं साक्षात्करोमीत्यनुभवस्य भ्रमप्रमासाधारणस्य वैरूप्यकल्पनानुपपत्तेश्च। नित्यज्ञाने विष-यतांतरकल्पनस्यावश्यकत्वे तस्या एव स्वसमानाकारजन्मज्ञानेष्वपि स्वीकर्तुमुचितत्वाच्च। धर्मिभेदेन धर्माणां भेदावश्यकत्वेपि दंडादिवद्विशेषणतायाः संभवाच्च। किंच घटव-द्भूतलं घटो रूपवान् भूतले घट इति समूहालंबनात्मकज्ञानस्य घटे भूतलविशेष्यत्वा-पत्तिः। ‡ रूपांतरे घटस्य विशेष्यत्वानुरोधेन तज्ज्ञानजनकघटेंद्रियसंन्निकर्षस्य विशेष्यता-रूपतायाः भूतलस्य प्रकारत्वानुरोधेन तन्निष्ठसंन्निकर्षस्य प्रकारतारूपतायाश्चावश्य-कत्वात्। नच प्रकारतात्वविशेष्यतात्वादीनां विषयतास्ववश्यं वाच्यतया भूतलविष-यताया विशेष्यतात्वेनैव घटादिविषयतानिरूपकत्वं नतु प्रकारतात्वेनेति वाच्यं। भूतले

‡ टिप्पणीः—आकारांतर इत्यर्थः।

घटवत् भूतलवान् घट इति समूहालंबनप्रतीत्यनुरोधेन तस्याप्यवश्याभ्युपेयत्वात् । नच तत्र संन्निकर्षभेदान्नानुपपत्तिः । एकेनैव संन्निकर्षेणोभयविधज्ञानजनकस्थले गत्यभावात् । संयोगान्यसंन्निकर्षे नितरामनुपपत्तिः । किंच प्रकारतानिरूपकत्वादेरतिरिक्तत्वे विषयतैवातिरिक्तास्तु अनतिरिक्तत्वे चोक्तदोषो दुष्परिहर इत्यन्यत्र विस्तरः । एवं चातिरिक्तविषयताकल्पनस्यावश्यकत्वे ज्ञानजनकसंन्निकर्षस्य विषयत्वकल्पनमनुचितं । एवं च भ्रमस्यारोप्यविषयकत्वस्यावश्यकत्वादपरोक्षविषयस्यारोप्यैंद्रियसंन्निकर्षजन्यत्वमावश्यकमिति न तस्यात्यंतासत्वमिति तदप्युन्मत्तप्रलापतुल्यमिति सुज्ञानं विज्ञानां । असदपरोक्षत्वस्य भ्रमस्य प्रवृत्तिनिर्वाहकत्वादेः पूर्वमेव सविस्तरमुपपादितत्वात् । सन्निकर्षस्य च ज्ञानार्थसंबंधरूपविषयतारूपत्वस्यास्मदनभिमतस्यानुपदमुपपादितत्वेन तद्दूषणस्य सिद्धांताशयापरिज्ञानमूलत्वस्य स्फुटत्वात् । तस्मात्तादात्म्यस्य विषयत्वरूपत्वाभावात्तद्घटनया परिष्करणमयुक्तमेवेति । दृश्यत्वहेतुरनुपपन्न एव । दृश्यत्वहेतुभंगः । ज्ञानपदजन्यप्रतीतिविशेष्यभिन्नत्वमानंदपदजन्यप्रतीतिविशेष्याभिन्नत्वमिति जडत्वहेतुपरिष्करणमप्ययुक्तं । तस्य ब्रह्मण आनंदो ज्ञानमित्यादिव्यवहारनिर्वाहकभेदमादाय ब्रह्मणि व्यभिचारवारणाय भेदे स्वसमानसत्ताकत्वं स्वज्ञानाबाध्यत्वं वा नौपाधिकत्वं वा विशेषणं निवेशितं । तत्र प्रथमद्वितीयविशेषणद्वयघटितपरिष्कारौ पूर्वोक्तरीत्या संदिग्धव्यभिचारादिना दूषितप्रायौ। अनौपाधिकत्वविशेषणमप्ययुक्तं।सर्वस्यापि भेदस्याविद्योपाधिकत्वेनासिद्धेः । इच्छारूपोपाधिनिवेशे सर्वस्यापीश्वरेच्छाधीनत्वात्पुनः साधनाप्रसिद्धिः। जन्येच्छानिवेशेऽप्ययमेव दोषः ईश्वरेच्छाया अप्यनादिषट्कान्यत्वेन मायापरिमाणरूपतया जन्यत्वात् । अस्मदादीच्छानिवेशे चैत्रेच्छानिवेशे मैत्रेच्छानिमित्तकतादृशभेदे व्यभिचारः। किंच ब्रह्मण आनंद इत्यादि व्यवहारनिर्वाहकभेदोपि आनंदवत्पूर्वसिद्ध एव । नहि श्रुत्यर्थज्ञानव्यवहारदशायां ब्रह्मणि ज्ञानभेदमानंदभेदं वा कल्पयामीतीच्छापूर्वभेदं परिकल्प्य तत्प्रतीतिरानुभाविकी लोकानां । किंच कल्पितभेदोपहितस्यापि मिथ्यात्वेन पक्षकोटिनिक्षेपात्तत्रोक्तभेदातिरिक्तज्ञानभेदादेरभावाद्भागासिद्धिः। एतेन ब्रह्मावृत्तित्वं भेदे निवेश्यमित्यपि प्रत्युक्तं । उपहितब्रह्मनिष्ठोक्तभेदासंग्रहेणासिद्धेः । कथंचित्तत्संग्रहे पुनर्व्यभिचारो दुर्वार एवेत्येतद्विशेषणस्यैव वैयर्थ्यं । ब्रह्मावृत्तिमात्रस्य हेतुत्वसंभवेनोक्तज्ञानाभिन्नत्वादिरूपजडत्वस्यैव वैयर्थ्यापत्तेश्च। ब्रह्मातिरिक्तत्वपर्यवसायिन उक्तविशेषणस्य प्रवेशे दृश्यत्ववदत्रापि अप्रयोजकत्वादिकमविशिष्टं। अपिच ज्ञानाभिन्नत्वस्यानंदाभिन्नत्वस्य च वृत्तिज्ञाने वैषयिकानंदे चासिद्धिः। नच तयोर्न ज्ञानानंदपदवाच्यत्वं किंतु चित एव वृत्तेस्तु तदवच्छेदकत्वमिति वाच्यं । भूरिप्रयोगस्य कोशादेर्वा शक्तिग्राहकतया तयोर्वृत्तावेव सत्वेनाप्रसिद्धेः । त्वदुक्तज्ञानपदार्थे शक्तिग्राहकप्रमाणाभावाच्च वृत्तेरेव ज्ञानानंदपदवाच्यत्वेन तदन्यत्वहेतोर्वृत्तावसिद्धे ब्रह्मणि व्यभिचाराच्च । ब्रह्मरूपज्ञानस्य सविषयकत्वाभावेन तस्य ज्ञानत्वस्यैव वक्तुमशक्यत्वात् । नच ज्ञानस्य विषयतादात्म्यमेव सविषयकत्वं तच्च सर्वतादात्म्यापन्ने ब्रह्मण्यक्षतमिति वाच्यं । तादात्म्यस्य विषयतारूपत्वस्य निराकृतत्वात् । सर्वदृश्योच्छेदरूपमोक्षे सविषयकत्वायोगाच्च । ननु मास्तु तदा सविषयकत्वं यदाकदाचित्सविषयकत्वमात्रेणैव ज्ञानत्वोपपत्तिः । अन्यथा विषयस्य ज्ञानसमकालिकत्वांगीकारेऽतीतघटादिज्ञानस्थले विनश्यदवस्थापन्नघटादिसाक्षात्कारे च द्वितीयक्षणे च ज्ञानत्वाभावप्रसंगादिति चेन्न । ज्ञानस्वरूपत्वं स्वसमानसत्ताकस्वनिष्ठाविषयताव्याप्यामित्येव नियमः । कुत्रापि व्यभिचारानुपलंभात् । अतीतज्ञाने उक्तसाक्षात्कारे च द्वितीयक्षणे विषयस्य गत-

त्वेपि तन्निरूपितविषयिता वर्तत एव घटादिवन्निर्विषयत्वेनाननुभवात्। तथाच ब्रह्मणि स्वसमानसत्ताकताद्दशविषयित्वरूपव्यापकाभावात् ज्ञानस्वरूपत्वमपि नास्तीति व्यभिचारो दुर्वार एव। सविषयकत्वारोपविषयत्वमात्रेण ज्ञानत्वे घटादेरपि ज्ञानत्वापातात्। तत्रापि कदाचित्कस्यचित्सविषयकत्वभ्रमसंभवात्। नच सविषयकत्वप्रकारकापरोक्षप्रतीतौ यदाकदाचिद्विषयत्वमेव ज्ञानस्वरूपत्वव्यापकं तच्च ब्रह्मस्वरूपज्ञाने संसारदशाया मक्षतं घटादौ तु न कदाचिदपि ताद्दशग्रह्वविषयत्वामिति युक्तं। नैय्यायिकमते सुषुप्तिप्राक्क्षणोत्पन्नज्ञानादिषु व्यभिचारात्। सन्निपातादिदोषकलुषितानामसंभावितनानाभ्रमदर्शनेन तेषां स्वदुःखादौ सविषयकत्वप्रकारकापरोक्षभ्रमसंभवात्। तस्यापि ज्ञानत्वसविषयकत्वादिधर्मवत्त्वेन व्यवहारापाताच्च। निर्विकल्पकस्याखंडार्थधियः प्रत्यक्षाविषयतया तत्र व्यभिचाराच्च। नच ज्ञानस्वरूपत्वं प्रति ब्रह्मज्ञानेतराबाध्यसविषयकत्वमेव व्यापकमस्त्विति शंक्यं। उक्तसन्निपातेन मरणस्थले तस्य बाधानुदयेन ब्रह्मज्ञानेतराबाध्यत्वस्याप्यनपायात्। ननु व्यापकस्याधिकदेशवृत्तित्वेपि का हानिः। नच वन्हिसामग्र्याः वन्हिप्रतीव प्रयोजकत्वात् व्यापकतया तद्बलात्तत्र ज्ञानस्वरूपत्वमप्यापद्यत इति वाच्यं। इच्छादौ तत्सत्वेपि ज्ञानत्वाभावेन तस्य तत्राप्रयोजकत्वात्। नचेच्छादौ विषयताना स्त्येव। किंतु पूर्वतनतज्जनकज्ञानीयविषयितैव स्वाश्रयज्ञानजन्यतासंबंधेन वा स्वावछिन्नजनकतानिरूपितजन्यतासंबंधेन वा भासते। इच्छायाश्च घटादिविषयेषु स्वजनकज्ञानविषयत्वं स्वजनकतावछेदकविषयताश्रयत्वं वा संबंधो भासते। घटत्वप्रकारकपुरोवर्तिविषयकज्ञानस्य स्वविशिष्टेच्छां प्रति कारणतायाः सत्वादुक्तसंबंधनिर्वाह इति वाच्यं। तथात्वे परोक्षापरोक्षज्ञानजन्यसुखदुःखादौ तत्संबंधसत्वेन सुखादीनामपीच्छादीनामिव सविषयकत्वेनानुभवापत्तेः। ज्ञान इवेच्छादावपि घटमिच्छामीत्यनुभवस्य साक्षात्सविषयकत्वावगाहिनोऽविशिष्टत्वेनैकशेषायोगाच्च। एतेन ज्ञाने तादात्म्यरूपविषयविषयिभावोपि भासते इच्छायामाविद्यकमाकाराख्यविषयत्वमेवेत्यपि प्रत्युक्तं। घटं जानामि घटमिच्छामीत्यनुभवयोर्ज्ञानत्वेच्छात्वावगाहितातिरिक्तस्य विषयताविशेषावगाहित्वाधिक्यप्रयुक्तवैषम्यस्यानुभवविरुद्धत्वात्। त्वत्समयमात्रस्याप्रयोजकत्वात्। किंच ज्ञानविषयताया इच्छायां भानस्य कथंचिदुक्तिसंभवेपि कृतेरिदमहं करोमीति सविषयकत्वेनानुभवानुपपत्तिर्ज्ञानस्य नष्टत्वात्। इच्छाया अपि द्वितीयक्षणे सविषयकत्वानुभवानुपपत्तिश्च। संस्कारस्यातींद्रियत्वेनेच्छावत्स्वतः सविषयत्वे इदानीं मानाभावेन तद्विषयताप्रतीतिरित्यस्य वक्तुमशक्यत्वाच्च। न चातीतज्ञानीयविषयतैव भासतामिति वाच्यं। तेषां ज्ञानसमकालिकत्वेन नष्टत्वात्। ज्ञानोत्तरं सत्वे मानाभावात्। तथाचेच्छादौ विद्यमानस्य सविषयकत्वस्य ज्ञानत्वं प्रति प्रयोजकत्वेनाव्यापकत्वात् तेन सन्निपातस्थले सविषयकत्वेन भ्रमविषये ज्ञानत्वापादनमयुक्तमिति चेन्न। एवमपि ज्ञानस्य सविषयत्वेनापरोक्षप्रतीत्यविषयतयावस्थानस्यानुभवविरुद्धत्वेन ज्ञानस्वरूपत्वं प्रति सविषयत्वेनापरोक्षप्रतीतिविषयतायाः सविषयकत्वस्य वा तत्समानसत्ताकाया एव व्यापकत्वनिश्चयेन सर्वद्दश्योच्छेदरूपमोक्षे तयोर्व्यापकीभूतयोरभावेन तस्य ज्ञानत्वाभावनिश्चयात्। उक्तव्याप्यव्यापकभावे व्यभिचारानुपलंभेन त्वत्समयमात्रनिर्वाहार्थं तदनंगीकारेऽतिप्रसक्तेः प्रमाणांतरानुपलंभात्। यत्तु ज्ञाने तादात्म्यमेव मुख्यविषयत्वमिच्छायास्त्वाकाराख्यमेव गौणविषयत्वमिति तदप्यसत्। मोक्षे ज्ञानानंदयोर्भेदाभेदानिर्वाह्यतादात्म्याभावेन ज्ञानानंदयोर्विषयिविषयभावाभावेनानंदाप्रकाशे तस्यापुमर्थत्वापत्तेः।

न चानावृतानंद एव पुमर्थः आवरणनिवर्तकवृत्त्यर्थमेव शास्त्रश्रवणादौ प्रवृत्तिरिति वाच्यं। आनंदस्यानुभवगोचरत्वानंगीकारे तदावरणत्वस्यैव वक्तुमशक्यत्वात्। न तावदानंदविघटकत्वं नित्यस्य ब्रह्मात्मकस्य तस्य देशकालयोर्विघटनायोगात्। तत्प्रकाशस्य वास्तवस्याभावेन तद्विघटनोक्त्यसंगतेः। अवास्तवस्य तस्य स्वर्गादिवन्नश्वरत्वेन स्वर्गादौ विरक्तिपूर्वकं तदिच्छायोगात्। 'एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंति' इति श्रुत्येदानींतनानंदस्यापि ब्रह्मात्मकत्वेन तदावरकानिवर्तकवृत्तेरिदानींतनाया इव चरमवृत्तेरपि अनित्यत्वमिथ्यात्वाभ्यामविशेषेण तस्याप्युद्देश्यत्वायोगात्। तत्साध्यप्रयोजनांतरस्याप्यनश्वरस्य वास्तवस्यायोगात्। मन्मते ज्ञानानंदादेःस्वरूपत्वेपि विशेषशक्त्याऽऽवृतत्वसंभवात्तन्निवृत्तेरपि वास्तवत्वादुद्देश्यत्वं युक्तमधिकमग्रे वक्ष्यते। एवं चानंदस्वरूपत्वस्याप्यनावरणे प्रकाश्यत्वव्याप्यतया मोक्षदशायामप्रकाशमानस्य ब्रह्मरूपस्यानंदत्वायोगात्। ब्रह्मण्यनानंदत्वं व्यभिचरितं। एवं ज्ञानस्य सकर्तृकत्वनियतत्वादकर्तृकस्य ब्रह्मणः ज्ञानत्वायोगः। नच त्वन्मतेपि ब्रह्मणो नित्यत्वेनोक्तानुपपत्तिसाम्यमेवेति वाच्यं। कर्तृपदस्याश्रयमात्रस्य विवक्षितत्वेन मन्मते स्वरूपभूतज्ञानं प्रत्यपि वास्तवाश्रयत्वस्यांगीकारात्। त्वन्मते च कल्पितभेदेनाश्रयत्वांगीकारेऽपि तस्यावास्तवत्वेन मोक्षदशायामयोगेन स्वसमानसत्ताकाश्रयत्वनिरूपकत्वरूपसकर्तृकत्वस्य वक्तुमशक्यत्वात्। ननु अनित्यक्रियाया उत्पत्तौ कर्तुरपेक्षितत्वादुत्पन्नस्य कर्तृवृत्तित्वमानुषंगिकमवर्जनीयं। नित्यक्रियायास्तु कर्त्रपेक्षायां बीजाभावेन तस्याश्रयं विनापि स्थितिसंभवादप्रयोजकोयं नियमः। नच सत्तारूपक्रियाया अप्युक्तरीत्याश्रयानपेक्षणात्तस्या अपि सकर्तृकत्वं न स्यात्। तथाचास्ति ब्रह्मेति चेद्वेदेत्यादौ कर्तरि लकारानुपपत्तिरिति वाच्यं। सत्तारूपक्रियाया अप्यकर्तृकत्वस्येष्टत्वेनेष्टापादनात्। ब्रह्मशब्दोपस्थितचिन्मात्रे सत्ताश्रयत्वान्वये निर्धर्मितावच्छेदककबोधापत्त्या तत्र चिन्मात्रे सत्ताश्रयत्वबाधग्रहसाहित्येनाखंडार्थबोधस्यैव तद्वाक्येन जननात्तत्र कर्तृप्रत्ययस्यैकौ द्वावित्यादाविव शब्दसाधुत्वमात्रार्थकत्वात्। मैवं। 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत् अस्ति ब्रह्मेति चेद्वेद संतमेनं ततो विदुरिति' पूर्वार्धे सत्ताश्रयभिन्नत्वेन ब्रह्मज्ञानिनो निंदितत्वात्। अस्ति ब्रह्मेति चेद्वेदेत्युत्तरार्धे सत्ताप्रकारकज्ञानस्यैव स्तुतिर्वक्तव्या। पूर्वोक्तसत्ताराहित्यज्ञानस्याखंडार्थधियं प्रत्यनुकूलतयोत्तरार्धे तन्निंदापूर्वकमखंडार्थधियः स्तुतिरित्यस्य वक्तुमशक्यत्वात्। तथाच स्तुतिविषयत्वान्यथानुपपत्त्या तज्ज्ञानस्य प्रामाण्यनिश्चयात् सत्ता ब्रह्मनिष्ठैवेति। तथाच तद्बाधादखंडार्थबोध इत्ययुक्तमेव। अस्तीत्येवोपलब्धव्य इति वाक्यांतरेणास्तित्वप्रकारकज्ञानस्यैव विधानाच्च। तथाच सत्तारूपक्रियाया आश्रयरूपकर्माभावे इष्टापादनमयुक्तमेव। सत्तावज्ज्ञानरूपक्रियाया अप्याश्रयरूपकर्तृसापेक्षत्वमावश्यकं। ब्रह्मरूपज्ञानस्यापि तदात्मानमेवावेदहं ब्रह्मास्मीत्यादिश्रुतिभिर्ब्रह्मरूपज्ञानस्याप्याश्रयप्रतीतेश्च। तथाचाप्रामाणिकस्य प्रमाणविरुद्धस्य ज्ञानानधिकरणत्वस्य मोक्षदशायामंगीकारवादिनं प्रति ब्रह्मरूपस्य ज्ञानस्वरूपत्वाभावापादनेन व्यभिचारोद्भावनं युक्तमेवेति। तस्माज्जडत्वहेतुरनुपपन्न एव। परिच्छिन्नत्वहेतुपरिष्करणमप्यसंभावितं। अतोन्यदार्तमिति श्रुत्या ईशातिरिक्तब्रह्मादिचेतनवर्गस्य दुःखित्वप्रतिपादनेन तथाकाशकालादीनां ध्वंसप्रतियोगित्वासिद्ध्या भागासिद्धेस्तादवस्थ्यात्। स्वसमानसत्ताकत्वादिनिवेश्यात्यंताभावप्रतियोगित्वान्योन्याभावप्रतियोगित्वपरिष्कारस्तु पूर्वोक्तरीत्यैव दुष्टः। ब्रह्मावृत्तित्वं निवेश्योक्तहेतुरपिपूर्वोक्तदूषणेनैव दूषित इति न किंचिदेतादिति सर्वमनवद्यं। यदत्र केनचित्स्वग्रंथे

नन्वेवमपि दृश्यत्वादिना वियदादेरनिर्वाच्यत्वं न साधयितुमशक्यमित्यारभ्याद्वैतचंद्रिकोक्तरीत्यैव दृश्यत्वजडत्वपरिच्छिन्नत्वादीन्परिष्कृत्य बाध्यत्वमपि हि तेषां मिथ्या तस्य च मिथ्यात्वेऽबाध्यत्वमेव सत्वं स्यादिति मूलद्वयापादितं मिथ्यात्वस्य मिथ्यात्वे जगतः सत्यत्वमाशंक्य शुक्तिरूप्यगतमिथ्यात्वस्य मिथ्यात्वात्तत्सत्यत्वाभावाद्व्यभिचार इत्यादिना दूषयित्वा यत्त्वित्यादिना टीकामूलोक्तां ब्रह्मणो ज्ञानत्वानुपपत्तिमाशंक्याद्वैतसिध्याद्युक्तरीत्यैव परिहृतं तत्सर्वमद्वैतचंद्रिकादूषणेनैव निःशेषतो निरस्तमिति न तत्पार्थक्येनानूद्य दूषितं । बाध्यत्वमपीत्यादिमूलार्थदूषणं तु तट्टीकार्थनिरूपणावसर एव सहाद्वैतचंद्रिकं निःशेषत एवापास्तमिति नात्र पुनस्तत्प्रपंच्यत इत्यलं । यत्त्वद्वैतचंद्रिकायामुक्तं प्रपंचमिथ्यात्वस्य सत्यत्वमिथ्यात्वविकल्पेनास्मान् प्रति दूषणोक्तिर्नित्यसमा जातिः । तदुक्तं 'धर्मस्य तदतद्रूपविकल्पानुपपत्तितः।धर्मिणस्तद्विशिष्टत्वभंगो नित्यसमा भवेत्॥' इति । नच मिथ्यात्वसत्यत्वे धर्मिणि न तद्वैशिष्ट्यभंगः किंत्वद्वैतहानिरिति वाच्यं । विकल्पकोट्योरेकस्या अद्वैतहानिप्रयोजकत्वेपि अन्यस्याःप्रपंचसत्यत्वतात्विकत्वद्वारा प्रपंचे धर्मिणि मिथ्यात्ववैशिष्ट्यभंगप्रयोजकत्वात् । अन्यथा मिथ्यात्वकोटिमात्रस्यास्माभिराश्रयणे सत्यत्वकोटिप्रयुक्ताद्वैतहानिदोषस्याप्यसंभवात् । किंच मिथ्यात्वस्यापि मिथ्यात्वधर्मित्वेन तस्य सत्यत्वे मिथ्यात्ववैशिष्ट्यभंगेन सत्यत्वकोटेरपि धर्मिणि तद्वैशिष्ट्यभंगप्रयोजकत्वमावश्यकं । नच जात्युत्तरं येनोच्यते तं प्रति व्याघातकत्वमेव तस्य दुष्टताबीजप्रयोजकं । प्रकृतेच तदभावान्न जातिरियं दुष्टेति वाच्यं । त्वदीयस्य सर्वदेशकालनिष्ठात्यंताभावप्रतियोगित्वरूपासत्वस्यासत्वे तद्विरुद्धस्यासदेवेदमग्र आसीदिति वाक्यादसति प्रतिपन्नतया त्वदभ्युपगतस्य सत्वस्यासति तात्विकत्वापत्तिः । सत्वे तस्य सतोऽसति प्रतिबंधानुपपत्तिरिति तदशुद्धं । यं न्यायमवष्टभ्य जात्युत्तरं प्रवृत्तं त न्यायेनैव तदुक्तेरसत्वप्राप्तावेव हि स्वव्याघातो नाम न तु प्रतिबंदिप्रसक्तिमात्रेण । यथा शब्दो नित्य इत्युक्तौ शब्दनिष्ठानित्यत्वमनित्यं वा न वा । नाद्यः शब्दनिष्ठानित्यत्वस्यानित्यत्वे तस्योत्पत्तिविनाशशालित्वात्तत्पूर्वं परतश्च तद्विरुद्धस्य नित्यत्वस्यापत्तिः । भावाभावात्मकविरुद्धधर्मद्वयानाक्रांतत्वेन वस्तुस्थित्ययोगात्।तथाच नित्यत्वप्राप्त्या अनित्यत्व वैशिष्ट्यायोगः शब्दे । यदि शब्दनिष्ठत्वेनाभ्युपगतमनित्यत्वं नित्यं तर्हि शब्दस्य तदाधारत्वानुपपत्तिः ! नित्यधर्मवैशिष्ट्यस्य नित्ये अयोगादिति । अत्र हि नित्यधर्मो अनित्यावृत्तिरिति व्याप्तिसिध्यर्थं नित्यत्वं अनित्यत्वविरुद्धमिति व्याप्ति सिध्यर्थं चानित्यत्वविशिष्टवस्त्वंगीकार्यमेव । तत्राप्युक्तदूषणेन तद्वस्त्वसिध्या व्याप्त्याद्ययोगेनायोगात्स्वानुत्थितिरूपा व्याहतिः । आपादनादौ व्याप्त्यादेरंगत्वे तेन यद्यदुच्यते तदभावोऽपि प्रमेयत्वेनापादयितुं शक्यत इति कस्याप्यसिध्या स्वस्य दूषणत्व व्याहतिरिति क्रमेण सिद्धमपि दूषणासमर्थमुत्तरं जातिरिति जातिलक्षणाक्रांतत्वं । न चेह प्रकृते तथास्ति । मिथ्यात्वमिथ्यात्वे धर्मिनिष्ठसत्यत्वसत्यत्वं तु एकस्मिन्धर्मिणि प्रतीयमानयोः परस्परविरहव्यापकत्वतदात्मकत्वाद्यन्यतररूपविरोधशालिनोरेकस्य मिथ्यात्वे परस्य सत्यत्वमिति सर्वलोकावगतया त्वदभ्युपगतसर्वमिथ्यात्वसिद्धेः प्राक् कुत्रापि भंगरहितया व्याप्त्याऽऽपादितं । असत्वग्राहकप्रमाणानुसारेण सत्यस्याप्यसत्वस्यासता संबंधोप्यंगीकृत एव । न चेह कश्चन व्याघातोऽस्ति । मिथ्यात्वस्य धर्मिसंबंधो नास्तीति नियममंगीकृत्य दूषणदाने हि स स्यात् । मिथ्यात्वस्य क्वचिद्वृत्त्या सत्यत्वेन विरोधग्रहाभुच्छित्त्योक्तरीत्याऽऽपादनायोग इति । नच तथेत्युक्तं । मिथ्यात्वं क्वचिद्वर्तते न वेति तु

विचारांतरं। न चानिर्वचनीयत्वरूपमिथ्यात्वस्यैव जगतीदानीं दूष्यतया तस्यासदसद्वृत्तित्वात्तादृशधर्माश्रये सदसद्विलक्षणे सत्यत्वस्य विरोधग्रहोऽपेक्षितः। तत्राप्युक्तदूषणप्रसंगेन तदासिध्या विरोधग्रहादिमूलकापादनायोग इति स्वानुत्थितिरूपव्याहतिर्वर्तत एवेति वाच्यं। अस्मन्मते असन्मात्रानिष्टत्वेनाभ्युपगतस्य त्रैकालिकसर्वदेशीयनिषेधप्रतियोगित्वस्य परमतेऽनिर्वाच्यत्वरूपबाध्यत्वशरीरनिविष्टस्य जगति भंगाभ्युपगमात्। तावन्मात्रेण तद्घटितस्य तन्नियतस्य वा मिथ्यात्वस्य जगति भंगसिध्येर्व्याहत्ययोगात्। मिथ्यात्वस्य सत्यत्वपक्षे अद्वैतहान्यापादनेपि न व्याहतिप्रसक्तिस्तस्य परार्थस्थलेऽपसिध्धांतरूपनिग्रहविधया स्वार्थानुमाने स्वंशे बाधरूपतया दूषणक्षमत्वात्। नहि व्याहत्याद्यभावेन दूषणक्षमस्यापि धर्मस्य तदतद्रूपत्वकल्पमूलत्वमात्रेणासदुत्तरत्वरूपजातित्वमुक्तिसहं बीजाभावात्। तथात्वे कपालान्यद्रव्यसामान्यं पक्षीकृत्य द्रव्यत्वहेतुना कपालदृष्टांतेन समवायेन द्रव्यवत्वसाधने साध्यीभूतद्रव्येष्वपि द्रव्यांतरसत्वेऽनवास्थितिर्न चेद्यत्र तदभावस्तत्रैवांशे बाध इति दूषणस्यापि जात्युत्तरत्वं स्यात्। नच तत्र काचन व्याहतिरुद्भावकस्य वर्तते येन तत्रेष्टापत्तिरिति वक्तुं शक्येत। वैय्यात्यमात्रात्तथाभिधाने सर्वदूषणानामपि जात्युत्तरत्वमिति वक्तारं प्रत्यनुत्तरापत्तेः। तस्मान्मिथ्यात्वरूपसाध्यस्योक्तक्रमेण विकल्प्य दूषणस्य जात्युत्तरत्वोक्तिरशुध्धैव। प्रत्युत तत् भिन्नमभिन्नं वेत्यादिविकल्पपूर्वकं भेदादिनिरासकोत्तराणामेव जात्युत्तरत्वं। दूषणादूषणभेदस्य दुष्टादुष्टभेदस्य कस्याप्यनंगीकारे प्रमाणाप्रमाणव्यवस्थादीनां प्रमितामितव्यवस्थानां चासिध्यां कस्यापि सिध्यभावापातेन स्वव्याहतेः। ननु सर्वखंडनार्थं वितंडामाश्रित्य प्रवृत्तस्य मम कस्यापि स्थापनीयस्याभावेन सर्वव्यवस्थोच्छेदो मम न स्वव्याघातकः। तदुक्तं खंडने। अभीष्टसिध्धावपि खंडनानामखंडिराज्ञामिव नैवमाज्ञा॥ तत्तानि कस्मान्न यथावदेव सैध्धांतिकेऽप्यध्वनि योजयध्वं॥' इति परमतखंडनरूपाभीष्टस्य सिध्धावपि खंडनयुक्तीनां राज्ञामिवाज्ञास्वातंत्र्यं नाखंडि। नास्माभिर्निराकृता। तत्तस्मात्तानि खंडनानि यथावत्परमत इव सिध्धांतसिध्धप्रक्रियायामपि कस्मान्न योजयध्वमित्यर्थः। नचैवं ब्रह्मणः खंडनयुक्त्या बाधापत्तिरिति वाच्यं। ब्रह्मणोऽसंसृष्टत्वेन तर्काविषयत्वात्। सर्वसाक्षित्वेनाबाध्यत्वाच्चेति चेन्न। वितंडाया अपि व्याहत्यादेर्दूषणत्वांगीकारेणैव प्रवृत्तेरावश्यकतया व्याहतोत्तरेण परमतखंडनस्याप्यासिध्धेः। अन्यथा स्वव्याहतोक्तेरपर्यवसानेन कथोपरमासिध्धौ परमतखंडनादिफलस्य दूरोत्सारितत्वापत्तेः। कस्यापि स्थापनीयस्याभावे वेदप्रामाण्यब्रह्मनिष्ठतर्काविषयत्वसर्वसाक्षित्वरूपधर्मादेरप्यसिध्यापत्त्या ब्रह्मसिध्धेरप्यभावेन स्फुटतरशून्यवादापत्तेः। स्थापनीयाभावे सूत्रकृतः समयपादातिरिक्तभागांतरप्रणयनादेरसंगतत्वापत्तेश्च। व्यवहारतः सर्वमंगीक्रियते तदर्थं सूत्रप्रणयनादिकं, परमार्थतः सर्वं खंड्यत इति वाच्यं। एतद्व्यवस्थासिध्यर्थमेव खंडनयुक्तीनां प्रसक्तत्वेन तत्कालप्रसक्तस्वव्याहतेरुक्तव्यवस्थया निरासायोगादन्यथाऽन्योन्याश्रयापत्तेरित्येषा दिक्। वनमालिमिश्रीये तु प्रपंचे अतात्विकमिथ्यात्वस्य तात्विकसत्वाविरोधितया तदापत्तिद्वारा मिथ्यात्ववैशिष्ट्यभंगाप्रयोजकत्वादतात्विकमिथ्यात्वस्य त्वया प्रपंचे स्वीकारेऽपि क्षतिविरहात् आद्यकोटेर्न धर्मिणि तद्वैशिष्ट्यभंगप्रयोजकत्वं। मिथ्यात्वस्य तात्विकत्वे तस्य मिथ्यात्वधर्मिताया व्याहतत्वेन धर्मिकोटौ निवेशायोगात्तं विहायातात्विकमिथ्यात्वांतरस्यैव धर्मिकोटौ निवेशमास्य

(टीका) एवं प्रत्येकं निराकृतान्यनुमानानि साधारणदूषणेनापि दूषयति ।

**(मूलं) प्रत्यक्षबाधितं च जगान्मिथ्यात्वम् । ॥६८॥**

(टीका) जगान्मिथ्यात्वमित्युपलक्षणं । आत्मभेदाभावश्चेत्यपि द्रष्टव्यं । ननु प्रत्यक्षं पदार्थस्वरूपमात्रगोचरं अनुमानं पुनस्तन्मिथ्यात्वगोचरमिति विषयभेदात्कथं प्रत्यक्षविरोधोऽनुमानस्य । कथंतरां तद्बाध इत्यत आह ।

**(मूलं) सदिति प्रतीयमानत्वात् ॥६९॥**

(टीका) यद्यपि स्तंभोऽयमित्यादिप्रतीतिर्न सादित्येवमाकारा । तथापि स्तंभादीनां सद्विशेषत्वान्न सत्तां व्यभिचरति । अस्ति च सदित्यादिप्रतीतिः ।

---

तद्भंगप्रयोजकत्वामित्याभिहितं । एवमिति । नचात्मभेदाभावस्यापि पूर्वं साधनायानुमानस्यान्यत्र शंकितत्वात्तत्र तत्राप्यन्यत्रोक्तरीत्या प्रत्यक्षबाधसंभवात् किमर्थं तदनुक्तिरित्यत आह । अत्रेति । उपलक्षणमिति । स्वस्थाने स्थितस्य चशब्दस्य पूर्वोक्तानुमानासाधारणदोषसमुच्चायकत्वस्य स्वरसतः प्रतीतेस्तत्परित्यागेन मिथ्यात्वपदेन सह योगेनात्मभेदसमुच्चायकत्वांगीकारे दूषणद्वयसमुच्चयाप्रतीत्या पूर्वदूषणानां शैथिल्ये इदं दूषणमिति प्रतीयेत । चशब्दस्योभयत्राप्यन्वये तस्यावृत्त्यापत्त्या मिथ्यात्वपदस्योपलक्षणत्वापेक्षया गौरवमेवेत्याशयेनोपलक्षणत्वमेवोक्तं । उपलक्ष्यतावच्छेदकं शंकितानुमानसाध्यत्वमेवेति भावः । यद्यपीति । न सदित्येवमाकारेति । इदमिति पूरणीयं तेन सदिति नपुंसकोपपत्तिः । वस्तुसामान्यग्रहणार्थं नपुंसकनिर्देशः । स्तंभः सन्नित्यादिव्यवहारोपधायिका कदाचिन्न भवति इत्यर्थः । तथाच तत्प्रतीतौ सत्वभाने स्तंभत्वादीनामिव तस्याप्युल्लेखप्राप्तिः स्यादतस्तद्भानं नास्ति । चक्षुः संनिकर्षादिमात्रस्य तद्भासकत्वं च नास्त्यन्यथाऽन्वयव्यभिचारप्रसंगात् । कदाचित्तद्भानं तु लिंगादिनेति वक्तव्यं । तथाच सत्वविषयकप्रत्यक्षाभावात्तद्बाधाभिधानमयुक्तमिति शंकाभिप्रायः । तद्वाचकशब्दप्रयोगस्य कदाचिदनुपधायकत्वमात्रं प्रतीतेर्न तद्विषयकत्वाभावकल्पकं चाक्षुषादिरूपादिभाननियमेन तद्विषयकत्वस्यावश्यकत्वात्तस्य सर्वदा रूपी घटः शुक्लो घटः इत्यादिव्यवहारानुपधायकत्वेन व्यभिचारात् यावत् बोधनेच्छा तावन्मात्रबोधकवाक्यं प्रयोगेण तद्बोधनेच्छाभावेनैव तच्छब्दाप्रयोगसंभवेनान्यथासिद्धत्वाच्च । तथाच स्तंभोऽयमित्यादिशब्दाभिलाप्यप्रतीतीनामपि सत्ताविषयत्वमस्त्येव । वस्तुतः सद्वस्त्ववगाहिप्रतीतेर्दोषविशेषाभावसत्वेनैव तदवगाहित्वनियमात् । स्तंभादीनां च सत्प्रभेदत्वात् स्तंभत्वादेरिव सत्वरूपधर्मस्यापि प्रत्यक्षवेद्यत्वमेवातो बाधः सुस्थिर इति समाधत्ते । तथापीति । सद्विधत्वात् सत्प्रभेदत्वात् । न सत्तां व्यभिचरति । दोषविशेषाभावे सत्ताविषयिणी नियमेन भवति । ननु कुत एतत् । प्रात्यक्षिकप्रतीतेः सत्वाविषयकत्वमेव किं न स्यात्कादाचित्कतद्व्यवहारस्यानुमानादिमूलकत्वसंभवादित्यत आह । अस्ति चेति ।

(टीका) अतः सर्वथा प्रत्यक्षेण प्रतीयमानं वस्तु सदित्येव प्रतीयत इत्यस्त्येव प्रत्यक्षविरोधोऽनुमानस्य ।

---

तत्प्रतीत्यैवेत्यादिः । प्रतीतिस्तन्मूलकव्यवहारः । तथाच यत्प्रतीत्युत्तरं स्तंभोऽयं तमानयेति वदति तदुत्तरं श्रोत्रा कदाचित्संदेहेनायं सत्यो वा नवेति पृष्टे सदिदमित्येव वदति । नच तत्र लिंगानुसंधानादिना प्रतीत्यंतरानुभवोऽस्ति । अतस्तद्व्यवहारानिर्वाहकत्वं प्रथमप्रतीतेरेवेति तस्याः सत्ताविषयकत्वमावश्यकमिति भावः । अत इति । सत्वस्य प्रत्यक्षयोग्यत्वादित्यर्थः । सर्वथेति नियमेनेत्यर्थः । तद्ग्रहप्रतिबंधकदोषासमवहितज्ञानसामग्र्यास्तद्ग्राहकत्व नियमात् । विधिनिषेधविनिर्मोकेण प्रायः प्रतीतेरनुत्पत्तेरिति भावः । एतत्तत्वमुक्तमप्रामाणिकप्रतियोगिकाभावविचारे । (अद्वैतिनः) । अत्र वदन्ति । लौकिकप्रत्यक्षेण न सत्वं ग्रहीतुं शक्यं तद्योग्यसत्वानिरुक्तेः । न तावत्सत्वं जातिरभावादौ तदभावापातात् । घटत्वद्रव्यत्वादिवदस्मदुक्तमिथ्यात्वाभावरूपत्वाभावेन तद्ग्रहस्य मिथ्यात्वग्रहाविरोधित्वाच्च । नापि प्रमाविषयत्वमसत्यप्यनुव्यवसायरूपप्रमायां व्यवसायांशे विषयतया बाधप्रमायामपि विषयतया तत्रातिव्याप्तेः । पूर्वोक्तदोषानिवृत्तेश्च । प्रमादीनां चक्षुराद्ययोग्यतया तद्घटितस्य विशिष्टस्यापि लौकिकप्रत्यक्षाविषयत्वाच्च । एतेन प्रमाणगम्यत्वं सत्वेन प्रमां प्रति साक्षाद्विषयत्वमित्यप्यपोढं । अंत्ये आत्माश्रयाच्चेति । अत्रोच्यते । ब्रह्मणो यादृशसत्वे सत्यज्ञानादिवाक्येन प्रतिपादिते अनृतव्यावृत्तिः सिध्यति तदेव प्रत्यक्षेण गृह्यतां । घटादिगोचरप्रत्यक्षोत्तरं सत्य एव घटो न मिथ्येति निश्चयपूर्विकायाः प्रवृत्तेरुत्सर्गतः सर्वलोकानुभवारूढत्वात् । क्वचित्तत्संशयस्य चोत्पन्नज्ञानाप्रामाण्यसंशयमूलकस्योक्तौत्सर्गिकार्थाविरोधित्वात् । इदं रजतमिति भ्रमस्याधिष्ठानाकारानुवेधवज्जगद्भ्रमस्यापि अधिष्ठानसंबंधिसाधारणाकारानुवेधानिर्वाहाय सन् घट इत्याकारकत्वस्य त्वयाप्यभ्युपगतत्वाच्च । न च सा प्रतीतिःसत्वविशिष्टांशेनापरोक्षेति वाच्यं । तथात्वे तदंशस्य ज्ञानस्य सन्निकर्षत्वमनभ्युपगच्छतस्तव विशिष्टप्रतीतौ भानाभावापत्त्या घटः सन् सन्घट इत्याकारद्वयानुरोधेन परस्परतादात्म्यासिद्धिप्रसंगात् । नच ज्ञानद्वयविषययोरेकविशिष्टरूपता संगच्छते । तयोरसंसर्गाग्रहमात्रस्य सत्वेन परस्परसंसर्गानवगाहित्वात् । नच सुरभि चंदनमित्यत्रेव वृत्तिद्वयप्रतिफलितचैतन्यैक्येनात्रोपपत्तिः । अत्र सदंशे वृत्तिविरहात् । सन्घट इत्याकारकप्रतीतिपूर्वलिंगशब्दयोरभावात् । स्मरणस्य तदनुभवोपायाभावेन कथंचिदुपपादनेपि पूर्वं नियमेन सत्वस्यानुभवविरुद्धत्वेन च वक्तुमशक्यत्वात् । नच तत्र वृत्तिविरहे सत्वोपहितस्य मिथ्याभूतस्य स्वप्रकाशत्वस्याप्यभावेन पूर्वं तत्स्फुरणानुपपत्तिरेवेति वाच्यं । केवलस्य स्वप्रकाशत्वेन तत्तादात्म्यादेव स्फुरणोपपत्तेः । नच घटाकारवृत्तिप्रतिबिंबितचिता स्वतः स्फुरत्सतस्तादात्म्यमस्तीति वाच्यं । तावतापि घटाकारवृत्तिविषयत्वस्य स्वविषयत्वस्य चानंगीकारेण ज्ञानस्यैकविशिष्टार्थत्वस्यानुपपादनात् । घटपटावच्छिन्नचितोरिवैतयोस्तादात्म्ये बीजाभावाच्च । एवमप्यस्य विशिष्टज्ञानत्वाग्रहेऽप्युक्तज्ञानस्य सर्वांशेऽपरोक्षत्वापरिहाराच्च । सत्ताविशिष्टं घटं पश्यामीत्यनुभवस्य तवापि संमतत्वाच्च । अन्यथानुभवविरुद्धार्थत्वेन रूपादिहीनस्यापि ब्रह्मणश्चाक्षुषविषयत्वं मीमांसकमते कालवत्स्वीक्रियत इति परिच्छिन्नत्वहेतुग्रंथे त्वदुक्तस्यात्यंतासंगतत्वापाताच्च । तस्मात्सन्घट इत्यादिप्रतीतीनां मिथ्यात्वविरोधिसत्वविषयकापरोक्षरूपता कामेनापि अंगीकर्तव्यैव । तत्सत्वं मिथ्यात्वाभावरूपमन्यद्वास्तु ।

तत्सामग्र्या अपि अन्यत्र क्लृप्ताया असंभवे अन्यादृश्येव कल्प्यतामनुभवासिद्धकार्योपलापायोगात्। इत्थं च सत्त्वविकल्पेन तदपरोक्षप्रतीतिखंडनमयुक्तमेव। ननु तथापि तादृशसत्त्वं कीदृशमिति चेत्। ब्रह्मनिष्ठं यादृशं मिथ्यात्वविरोधि तादृशमेवास्तु। ननु ब्रह्मरूपमेव सत्त्वं तच्च कल्पितभेदेन ब्रह्मधर्मभूतं मिथ्यात्वविरोधि। तदेव जगति चेत् अन्यधर्मस्यान्यत्र प्रतीत्ययोगात्। शुक्तिधर्मस्येदंत्वस्य रजते भाननिर्वाहाय रजतस्य शुक्तावध्यासस्येव ब्रह्मधर्मस्य सत्त्वस्य जगति भाननिर्वाहाय जगतस्तत्राध्यासस्यावश्यकत्वापत्त्या जगन्मिथ्यात्वं सेत्स्यत्येवेति चेन्न। ब्रह्मसत्तासजातीयसत्ताया एव जगति मयाभ्युपगतत्वात्। ब्रह्मस्वरूपस्यैव सद्रूपत्वं न जगत्स्वरूपस्येत्यस्याद्याप्यसिद्धत्वात्। सौहार्दे तु सर्वदेशकालसंबंधिनिषेधप्रतियोगित्वाभाव एव सत्त्वमिति वदामः। प्रागभावादिप्रतियोगिघटादावव्याप्तिवारणाय सर्वकालेति। नच घटादिप्रागभावध्वंसयोः प्रतियोगिसमानदेशत्वेन सर्वदेशपदेनैव तद्वारणं भवतीति वाच्यं। अत्र घटो नास्तीति प्रतीत्यैव प्रतियोग्यधिकरणदेशे प्रागभावसिद्धिवत् अन्यदेशेपि तथैव तत्सिद्धिसंभवात्। नचात्र तदत्यंताभावविषयकत्वस्यैव तादृशप्रतीतेः संभवे तत्र तत्प्रागभावाद्यवगाहित्वे मानाभाव इति वाच्यं। प्रतियोग्यभावयोः कालिकविरोधस्यैवांगीकर्तृनये सर्वाभावानां सर्वदेशवृत्तौ बाधकाभावेनैव तत्सिद्धेः। अन्यथा न कुत्रापि तत्सिद्धिः स्यात्। नचात्र घटो भविष्यति नष्ट इत्यादिप्रतीतेः प्रतियोगिदेश एवोत्पत्तेस्तद्बलात्तत्रैव प्रागभावध्वंसौ सेत्स्यतो नान्यत्रेति वाच्यं। तद्देशावच्छेदेनोत्पत्त्यदर्शनयोरेव तत्र प्रतीतेः। भूधातोः सत्तार्थकत्वादुत्पत्तेस्तद्विशेषत्वात्। नश् अदर्शन इति धातोः तत्समानार्थकध्वस्त इत्यादेरपि तदर्थकत्वात्। ननु घटप्रतियोगिकप्रागभावध्वंसौ नञाद्युल्लेखात्। भविष्यतीत्यत्र प्रागभावप्रतियोगित्वभावानंगीकारे श्वोभाविनि घटे एतद्दिवसे घटो भविष्यतीति प्रयोगप्रसंगश्च। प्रागभावे एतद्दिवसवृत्तित्वस्याबाधात्। एवं यत्र घट एतद्दिवसे नष्टो भवति तत्र श्वः परश्वो नश्यतीति प्रयोगप्रसंगश्च। ध्वंसस्य श्वस्तनवृत्तित्वस्याबाधात्। मन्मते उत्पत्तेरेतद्दिवसाधिकरणकत्वस्य नशधात्वर्थस्य दर्शनाव्यवहितोत्तरक्षणवृत्तित्वविशिष्टतद्दर्शनप्रागभावासमानकालिकत्वदर्शनस्य तद्दिवसवृत्तित्वस्य बाधितत्वान्न तथा व्यवहारः। नच मन्मतेऽप्युत्पत्तिमदभावरूपध्वंसार्थकतया नशधातोस्तदर्थैकदेशभूतोत्पत्तावेव समभिव्याहृतदिवसान्वयादुपपत्तिरिति वाच्यं। उक्तादर्शनापेक्षयाद्यक्षणसंबंधरूपोत्पत्तिघटितधर्मावच्छिन्ने शक्तिकल्पने गौरवान्नश् अदर्शन इत्यनुशासनविरोधाच्च। नन्वेवमपि प्रतियोग्यनधिकरणदेशे तत्सत्त्वे मानाभावः। नचात्र घटो नास्तीति प्रतीतिरेव मानमिति वाच्यं। तत्र समभिव्याहृतसप्तम्यर्थस्य प्रतियोगिकोटावन्वितत्वेन तद्देशसंसृष्टघटरूपाप्रामाणिकप्रतियोगिकात्यंताभावस्यैव प्रतीतेरिति चेत् सत्यं। देशांतरं तत्प्रतियोगिकप्रागभावाधिकरणं ध्वंसाधिकरणं च तदनधिकरणकालावच्छिन्नत्वादित्यनुमानेनैव तत्सिद्धेः। नच प्रागभावानधिकरणकालस्यापि देशतया तत्रासत्त्वादेव प्रागभावादिवारणं भवतीति वाच्यं। कालपदस्य पृथगुपादानाद्देशपदस्य कालातिरिक्तदेशपरत्वादिति केचित्। तदसत्। उक्तरीत्या प्रागभावध्वंसयोः स्वसमानकालिकदेशसामान्यवृत्तित्वस्य कथंचित्सिद्धावपि स्वासमानकालिकदेशविशेषवृत्तित्वायोगेन तावादायोक्तरीत्या प्रयोजनकथनायोगात्। किंतु सर्वदेशवृत्त्यभावप्रतियोगित्वं सर्वकालवृत्त्यभावप्रतियोगित्वं वाऽसत्त्वं तदभावः सत्त्वमिति लक्षणद्वये तात्पर्यं। सर्वदेशवृत्तिः सर्वकालवृत्तिश्च निषेधोऽत्यंताभाव एवाभावांतराणामतथात्वस्योपपादितत्वात्। तत्प्रति

योगित्वमसत एवेत्युक्तप्रतियोगित्वाभावस्य सत्त्वरूपतानिर्वाहः । नचात्यंताभावात्मकभेदप्रतियोगिनि घटेऽसत्त्वापत्तिरिति वाच्यं । अत्यंताभावत्वनिरूपकप्रतियोगिताया एव विवक्षणात् । सिद्धांतेपि विशेषशक्त्यैकस्मिन्नपि तादृशधर्मद्वयांगीकारान्न कोपि दोषः । वस्तुतस्तु सर्वदेशकालेत्यादेरत्यंताभावत्वरूपानुयोगितापरिचायकतया तन्निरूपकप्रतियोगित्वाभावमात्रं सत्त्वमिति तु तत्त्वं । तरंगिण्यां तु अश्वे गोत्वं नास्तीत्यादौ गोत्वाश्वयोरलीकसंसर्ग एव निषिध्यत इति मते असत एवात्यंताभावप्रतियोगित्वात् सार्वकालिकनिषेधप्रतियोगित्वाभावः सत्त्वं । नचात्यंताभावभिन्ने घटादावव्याप्तिः । अभावविरहात्मकत्वलक्षणस्य प्रतियोगित्वस्य विवक्षितत्वात् । घटादेस्तूक्तभेदं प्रति निरूपकत्वमात्रस्य सत्त्वेनोक्तप्रतियोगित्वविरहादित्युक्तं । तत्राभावेत्यादेरयमभिप्रायः । नैय्यायिकादिमते अभावविरहात्मत्वं नान्योन्याभावप्रतियोगितारूपं । घटभेदविरहस्य घटरूपत्वे घटवति भूतले घटभेदो नास्तीति प्रतीत्यापत्तेस्तद्विरहस्य घटत्वादिरूपत्वेन घटस्य तत्प्रतियोगित्वाभावापत्तेः । किंतु संसर्गाभावप्रतियोगित्वरूपमेव । तथाच परेषां मते अभावविरहात्मकत्वं यादृशं तत्तुल्यस्य विविक्षितत्वादित्यर्थः । तच्च सत्त्वासत्त्वयोः परस्परविरहरूपतोपपादनार्थं पूर्वं निरुक्तमेवानुसंधेयमिति । नचैतन्मते सर्वदेशवृत्तित्वमात्रघटितस्यापि लक्षणत्वसंभवात्तत्परित्यागायोगः । अप्रामाणिकप्रतियोगिकस्याप्यत्यंताभावस्य प्रतियोग्यारोपे यत्प्रधानं तेनापि सार्कं विरोधेन व्यतिरेकिताया एतन्मतसिद्धत्वस्य पूर्वमप्रामाणिकप्रतियोगिताकाभावविचारेऽस्माभिरुक्तत्वेन सर्वदेशवृत्त्यभावप्रतियोगित्वस्यारोप्यमाणे गोत्वाश्वसंसर्गे अभावेन तस्य सत्त्वापत्तेः देशघटितार्थस्य परित्यागोपपत्तेः । नचैतन्मते घटे कालत्वं नास्तीति प्रतीतिसिद्धाभावस्य स्वप्रतियोग्यारोपप्रधानभूतकालत्वाधिकरणावृत्तितयोक्तलक्षणस्य तादृशाभावप्रतियोगिन्यसत्यतिव्याप्तिरिति कालघटितपरिष्कारोप्ययुक्त इति वाच्यं । एतन्मते देशविधया कालविधया च धर्मितावैलक्षण्याभ्युपगमात्प्रकृते कालविधया भावधर्मिताया निवेशात्तस्योक्तप्रधानाविरोधित्वेनादोषात् । न्यायामृतेपि देशपदमनपेक्षितमित्युक्त्या कालघटितपरिष्कारमात्रादरणं तु अप्रामाणिकप्रतियोगिताकात्यंताभावानां केवलान्वयित्वमेवेति केषांचित्केवलान्वयित्वं केषांचिद्व्यतिरेकित्वमिति च पूर्वोपदर्शितमतद्वयेप्यविप्रतिपन्नत्वेनेति ध्येयं । यत्तत्र ब्रह्मानंदेनाभिहितं । यत्तु सर्वकालवृत्तित्वमेवाभावे विशेषणं देयं नतु सर्वदेशीयत्वं । अश्वाद्यवच्छेदेन गोत्वाद्यभावो न कदापि वर्तते । मानाभावात् । इदानीमश्वे गोत्वं नास्तीति प्रत्ययस्तु गोत्वाश्वत्वयोरलीकसंसर्गस्यात्यंताभावमवगाहते नतु गोत्वस्य । तथाच गोत्वादौ सर्वकालवृत्त्यत्यंताभावप्रतियोगित्वाभावसत्त्वात्तत्र नाव्याप्तिः। सर्वदेशवृत्त्यत्यंताभावप्रतियोगित्वाभावस्तु न लक्षणं। घटादौ तादृशप्रतियोगित्वसत्त्वात्तत्राव्याप्तेः । घटादेर्हि स्वाधिकरणभूतलादितोऽपसरणकाले तत्रात्यंताभावः प्रतीयते । अत्र भूतले इदानीं घटो नास्तीति धीर्हि घटस्यैवात्यंताभावं गृण्हाति । घटस्यैवोक्तकाले उक्तभूतले आरोपसंभवात् । आरोपितस्यैवालीकत्वेनात्यंताभावप्रतियोगित्वादिति माध्वेनोक्तं । तदयुक्तं । गोत्वादेरप्यश्वादावारोपसंभवेन तत्राव्याप्तितादवस्थ्यात् । अलीकस्यैवात्यंताभावप्रतियोगित्वमिति नियमे मानाभावाच्च। यदि च तादृशनियमः स्वीक्रियते तदाऽत्यंताभावप्रतीयोगिता न केनापि धर्मेण संबंधेन वाऽवच्छिन्नालीकस्य सर्वदेशकालासंबंधेन धर्मविशेषसंबंधविशेषावच्छेदकत्वमनपेक्ष्यैव तदत्यंताभावस्य सर्वत्र संभवादत एव ध्वंस-

प्रागभावप्रतियोगिता (१) तादृशीति नव्याः। तथा च तव मते धर्मसंबंधविशेषाणां संसर्गाभावप्रतियोगितावच्छेदकत्वस्यानुभूयमानस्यापलापापत्तेरिति। तत्तुच्छं। त्वदुक्तानुपूर्व्या न्यायामृततरंगिण्यादौ कुत्राप्यभावेनानुक्तानुवादपूर्वकोपालंभरूपदोषस्य स्फुटत्वात्। नच तदभिप्रेतार्थस्यैवानुवादोयमिति वाच्यं। त्वदुक्तार्थस्यात्यंतासंभावितत्वेन तदभिप्रेतत्वायोगात्। नहि गव्यश्वत्वं नास्तीति धियः सकाशादत्र भूतले इदानीं घटो नास्तीति धियो मात्रयापि विशेषोस्ति। येनेदमभिप्रेतं स्यात्। नच पूर्वं घटस्य सत्वादारोपरूपं घटवद्भूतलमिति ज्ञानं घटरूपप्रतियोग्यवगाहीत्यभिमान इति वाच्यं। तस्यारोपरूपत्वाभावात्। तन्मते तत्र प्रतीयमानाभावस्य घटध्वंसगर्भध्वंसादिरूपस्य सर्वदेशवृत्तित्वाभावाच्च। अत्यंताभावतयाभिमाने सर्वकालवृत्तीत्यनेनापि घटादावव्याप्तेरवारणात्। देशघटितपरिष्कारपरित्यागबीजस्य कथितत्वेन तस्याप्युक्तासंभाविताभिमानकल्पकत्वाभावाच्च। आरोपितस्यैवात्यंताभावेत्यनुदितचरमवाक्यस्य उपपाद्यमानायां घटादावव्याप्तेर्विरोधित्वाच्च। कथंचित्तदुपपादनपरतया योजनमशुद्धं पठित्वेतिन्यायमनुकरोति। यदपि दूषणग्रंथे गोत्वादेरित्यादि तदपि पूर्वोक्तवाक्यानां क्रमप्याभिप्रायमनवबुध्यैव प्रवृत्तमिति महदाश्चर्यं। यदि चेत्युक्तिरपि न साधीयसी। अलीकस्यैवात्यंताभावप्रतियोगितायाः अस्माभिः पूर्वमुपपादितत्वात्। प्रतियोगितानां धर्मसंबंधाद्यवच्छिन्नत्वादेः पूर्वं निरस्तत्वेन तदपलापापादनमप्यकिंचित्करं। तयोरनुभवसिद्धत्वे तुच्छप्रतियोगिकत्वेपि संयोगेन शशविषाणं नास्तीत्यादिप्रतीतिबलादेवांगीकर्तुं शक्यत्वात्। तत्तदभावधियां प्रतिबध्यप्रतिबंधकभावयुक्तेरपि तौल्याच्चेति न किंचिदेतत्। उक्तासत्वाभावरूपसत्वं प्रत्यक्षेण गृह्यते। अत्यंताभावप्रतियोगित्वस्यासन्मात्रनिष्ठस्य घटादिनिष्ठत्वे तथोपलंभापादनसंभवात्। नचासता सहेंद्रियसंनिकर्षायोगात्तन्निष्ठधर्मस्यापि तद्द्वारेंद्रियसंनिकर्षायोगात्तत्प्रत्यक्षस्यैवायोगेन कथमत्र तदापादनमिति वाच्यं। तस्य च रूपादिवत्धर्मिसत्तासापेक्षधर्मत्वाभावेनैतन्निष्ठधर्मत्वस्य बौध्दस्य विलक्षणस्यैव व्यवस्थापितत्वेन तज्ज्ञाने (२) तत्सन्निकर्षाभावसन्निकर्षप्रतियोगिज्ञानादेरेव सामग्रीत्वेन शुक्तौ रजतत्वं नास्ति घटो नास्तीत्याद्यभावप्रत्यक्षप्रमादौ क्लृप्ततया तद्बलादेवात्राप्यापादनसंभवात्। न ह्येकत्र यादृशी सामग्री नियामिका प्रत्यक्षोत्पत्तौ सर्वत्रापि तादृश्येवेति नियमोस्ति। तथात्वे तमस्यालोकसंयोगायोगात्तद्घटितसामग्र्या घटादिप्रत्यक्षस्येव तत्प्रत्यक्षस्यापादयितुमशक्यत्वात् आलोके तमोऽभावप्रत्यक्षापलापापत्तेः। वस्तुस्वभाववैचित्र्यात्तत्प्रत्यक्षसामग्र्या वैलक्षण्यं चेदत्रापि तथास्तु। विशेष्यतयात्यंताभावप्रतियोगित्वघटितमिथ्यात्वग्रहं प्रत्यत्यंताभावप्रतियोगित्वसामान्याभावरूपसत्वग्रहस्य विरोधितायामविवादात्। प्रामाणिकप्रतियोगिकात्यंताभावस्यापि स्वीकर्तृनये कालत्वव्यापकानवच्छिन्नाधिकरणताकाभावीयकालिकसंबंधावच्छिन्नप्रतियोगित्वं देशत्वव्यापकानवच्छिन्नाधिकरणताकसंबंधत्वविशिष्टसंबंधावच्छिन्नप्रतियोगित्वं वाऽसत्वं तदभावः सत्वं। विषयितायाः संबंधत्वानंगीकारात्संबंधे तद्भिन्नत्वनिवेशाद्वा देशत्वस्याव्याकृताकाशांशमात्रवृत्तिरूपस्य निवेशाद्वा विषयितया ज्ञानादिरूपदेशे संबद्धशशविषाणादौ न द्वितीयासत्वलक्षणस्याव्याप्तिः। कालिकसंबंधानंगीकारे सर्वेषामपि वस्तूनामुक्तदेशकालयोः संयोगेनैव वृत्त्यंगीकारे प्रतियोगितायां संयोगाव

टिप्पणी—(१) धर्माद्यनवच्छिन्ना (२) शशविषाणादिरूपप्रतियोग्युपस्थितीत्यर्थः।

च्छिन्नत्वमेव निवेश्यं । मिथ्यात्ववादिनापि मां प्रति साध्याप्रसिद्ध्यादिवारणायोक्तरीतिरेवादरणीया । ततश्चोक्तसत्वमपि प्रत्यक्षगम्यमेव तदभिमतमिथ्यात्वं विरुणद्धीति । ननु कालत्वव्यापकत्वं कालनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावः कालनिष्ठात्यंताभावप्रतियोगित्वाभावो वा न प्रत्यक्षगम्यः । अतींद्रियात्यंतान्योन्याभावीयप्रतियोगिता तदवच्छेदकता साधारण्यात्प्रतियोगितावच्छेदकधर्मस्य तदवच्छिन्नोपलब्धेरापादयितुमशक्यत्वे नोक्ताभावरूपव्यापकत्वस्याप्रत्यक्षतया तद्घटितोक्तसत्वरूपाभावस्यापि न प्रत्यक्षं घटते । तत्धर्मावच्छिन्नाभावलौकिकप्रत्यक्षे प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणधर्मविशिष्टांशे आपादनयोग्यलौकिकप्रत्यक्षरूपोपलब्धिप्रतियोगिताकाभावस्य तंत्रत्वात् । अन्यथा गुरुत्वविशेषवद्घटत्वावच्छिन्नप्रतियोगिताकाभावोपि लौकिकप्रत्यक्षविषयः स्यादिति चेन्न । इदानीं घट एव न घटाभावः अयं कालो न घटाभाववानिति अत्र घटो नात्र घटाभावः नायं घटाभाववानिति साक्षात्कारेणैव घटत्वावच्छिन्नप्रतियोगिताकत्वेन गृह्यमाणेऽभावे देशकालवृत्त्यत्यंतान्योन्याभावप्रतियोगितादवच्छेदकत्वयोर्गृहीतत्वेन तदभावस्य प्रमेयत्वादौ संयोगेन रूपाभावादौ च चक्षुषैव ग्रहीतुं शक्यत्वेन व्यापकताया अप्यतींद्रियत्वाभावेन तद्घटितोक्तप्रतियोगित्वाभावस्यापि साक्षात्कारसंभवात् । संबंधसामान्यावच्छिन्नप्रतियोगिताघटितकल्पे तादृशप्रतियोगिता शशविषाणादिनिष्ठैव प्रसिद्धा । ननु शशविषाणाभावप्रमेयत्वादौ असन्निकृष्टदेशांतरवृत्त्यभावप्रतियोगित्वादिसत्वेपि तदनुपलंभसंभवाद्योग्यानुपलब्ध्यसंभवान्न तदभावरूपव्यापकताप्रत्यक्षसंभवः । अत एव दीधितिकृतोक्तं । यथा विद्यमानमपि वन्हित्वे रासभदेशनिष्ठात्यंताभावप्रतियोगितावच्छेदकत्वं न गृह्यते । अभावदेशविप्रकर्षादिनेंद्रियसंन्निकर्षादिरूपग्राहकाभावात्तथा धूमवन्निष्ठाभावप्रतियोगितावच्छेदकत्वमपीति नानुपलब्धेः प्रतियोगिसत्वप्रसंजनप्रसंजितप्रतियोगिकत्वलक्षणयोग्यतेति तदभावो नाध्यक्ष इतीति चेन्न । देशांतरादेरनुपस्थितिदशायां विद्यमानदेशसन्निकर्षादिकाले प्रमेयत्वादिकं देशनिष्ठात्यंतान्योन्याभावप्रतियोगिता तदवच्छेदकतावत्स्यात् । घटाभाववत्तथोपलभ्येतेत्यापादनसंभवेनानुपलब्धेरुक्तयोग्यत्वस्याप्रतिहतेः। नच व्यवहितदेशेऽतींद्रियपिशाचपरमाण्वादौ प्रमेयत्वादेरभावसत्वेप्यग्रहसंभवात्तच्छंकया नोक्तापत्तेरवतार इति वाच्यं। शंकाविशेषाभाववतां तदापादनसंभवात्। अन्यथा कस्यचिच्छंकाविशेषणापत्तेः कुंठितत्वमात्रेण योग्यानुपलब्धिखंडने अतींद्रियो वा स्वमात्रप्रत्यक्षाविषयस्तत्कालमात्रप्रत्यक्षाविषयोपि कश्चिद्घटः संभावित इति विप्रलंभकवाक्यादिना भ्राम्यतः घटोऽत्र यदि स्यात्तर्ह्युपलभ्येतेत्यापादनस्य तादृशशंकाकुंठितत्वेन घटाद्यनुपलब्धेरप्ययोग्यत्वापत्त्या घटाभावादेरप्यप्रत्यक्षतापत्तेः। उक्तशंकाया अतिप्रसक्तत्वाच्छंकाशून्यपुरुषीयापाद्यापादकव्याप्तिप्रमापूर्वकापादनयोग्यप्रतियोगिकत्वमेवानुपलब्धौ योग्यत्वं चेदत्रापि तत्तुल्यं । प्रमेयत्वशशविषाणाभावादौ देशकालनिष्ठाभावप्रतियोगितातदवच्छेदकतारूपप्रतियोगिग्राहकातिरिक्ताविशेषणा † विशेषितं तादृशप्रमे-

† टिप्पणी—वायावनुद्भूतरूपाभावविशिष्टमहत्वविशिष्टरूपेण रूपप्रत्यक्षापादनस्य कर्तुं शक्यत्वेन वायौ रूपाभावप्रत्यक्षवारणाय प्रतियोगिग्राहकातिरिक्तेति अनुद्भूतरूपभेदकूटस्यैव प्रत्यक्षजनकतावच्छेदककोटिनिविष्टत्वान्न दोषः । वायवीयाणावुद्भूतरूपसामान्याभावपत्यक्षवारणाय पक्षावृत्तीति विशेषणसार्थक्यमवधेयं ।

यत्वादिरूपपक्षावृत्तिविशेषणाविशेषितं च यत्ताद्दशप्रतियोगितारूपप्रतियोगितद्रूपापादकापत्तेरपि व्याप्तिप्रमापूर्वकत्वात्। प्रमेयत्वादेरपि योग्यत्वेन योग्यवृत्तित्वविशिष्टताद्दशप्रतियोगितारूपापादकस्योक्तरूपत्वाक्षतेश्च। वन्हित्वेपि रासभदेशसन्निकर्षदशायां तद्देशनिष्ठाभावप्रतियोगितावच्छेदकत्वत्वेनेव सामान्यतो रासभदेशनिष्ठाभावप्रतियोगितावच्छेदकतात्वेनापि प्रत्यक्षं भवत्येव। तद्वद्देशांतराद्यनुपस्थितिदशायां धूमवन्निष्ठाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नोपलब्धेरप्यापादयितुं शक्यत्वेन तदभावोपि प्रत्यक्ष एव। नहि सन्निकृष्टकतिपयदेशातिरिक्तधूमवद्देशानुपस्थित्या शंकाभावदशायां धूमवदिंद्रियादिसन्निकर्षदशायां धूमवन्निष्ठाभावप्रतियोगितावच्छेदकत्वाभावधीर्न जायत इति वक्तुं शक्यते। अनुभवविरोधात्। व्यापकताभ्रमानुपपत्तिप्रसंगाच्च। घटत्वादौ नियतोपस्थित धूमवद्देशांतरनिष्ठाभावप्रतियोगितावच्छेदकत्वसंदेहानिरासोपयोगिनोऽन्यस्यानुपपत्तिरूपतर्कानवतारस्यानुभवसिद्धत्वात्। तथा ताद्दशावच्छेदकत्वाभावग्रहस्य लिंगशब्दाद्यजन्यत्वाल्लौकिकप्रत्यक्षात्मकत्वमेव। यद्यपि चक्षुषा धूमादिस्फुरणकाले तन्निष्ठतत्तद्रूपादीनां प्रतिभासावश्यकत्वात् तद्धटितस्योक्तधर्मस्य कथं प्रतियोगितावच्छेदकत्वेन भानमिति वक्तुं शक्यते। तथापि तेषां प्रतियोगितावच्छेदकाघटकतया धूमांशे स्वातंत्र्येण भानांगीकारान्न कोपि दोषः। अन्यथा घटादिरूपप्रतियोगिसन्निकर्षकाले तद्रहितदेशे उक्तरीत्या घटसामान्याभावप्रत्यक्षानुपपत्तिः। एवमुपस्थितस्य तदंशे नियमेन भाने जातिमान्घट इति प्रत्यक्षानुपपत्तिश्चेति। परंतु देशांतराद्युपस्थितिदशायां तदसन्निकर्षात्तन्निष्ठाभावप्रतियोगितावच्छेदकत्वसंदेहेन सामान्यतो धूमवन्निष्ठाभावप्रतियोगितावच्छेदकत्वसंदेहस्य पूर्वज्ञानाप्रमाण्यज्ञानाहितस्य संभवो यदा तदा धूमवन्निष्ठाभावप्रतियोगितावच्छेदकत्वाभाव प्रत्यक्षनिश्चयो न जायते। नह्युत्पन्नघटसामान्याभावप्रत्यक्षनिश्चयवतोपि विप्रलंभकवाक्याहितस्वप्रत्यक्षायोग्यघटसंभावनया पूर्वोत्पन्नज्ञानाप्रामाण्यसंदेहेन घटाभावप्रत्यक्षनिश्चयो न जायत इत्येतावता घटाभावस्य प्रत्यक्षायोग्यत्वं। दीधितिग्रंथोपि शंकादशायां तदभावस्याध्यक्षत्वाभावपरः। एवं मूर्तसामान्यतद्धतोरिवोपाधिसामान्यतद्धतोरत्यंताभावान्योन्याभावौ न योग्याविति व्याप्तिग्रहोपायस्थदीधितिवाक्यमुक्ततात्पर्यकमेव। सर्वथा अयोग्यत्वतात्पर्ये तस्यानादरणीयत्वमेव। अनुभवासिद्धेर्थे दीधितिविरोधस्याकिंचित्करत्वात्। एवं व्याप्तिग्रहोपायटिप्पण्यां प्राचीननैय्यायिकनये व्यापकतायाः लौकिकप्रत्यक्षविषयत्वस्य गदाधरभट्टैरुक्तत्वाच्च। त्वयापि तथाच शिरोमण्याद्युक्तवाक्ये प्रकारत्वादेः प्रतियोगित्वानुयोगित्वादिक्लृप्तपदार्थातिरिक्तत्वोक्तिरसंगतेति सामान्यलक्षणाखंडनप्रघट्टिकास्थवाक्ये बहुषु स्थलांतरेष्वपि दीधितिश्रद्धायाः युक्तिसिद्धार्थे त्यक्तत्वाच्च। तथाच देशकालनिष्ठात्यंतान्योन्याभावप्रतियोगित्वतदवच्छेदकत्वाभावरूपव्यापकत्वस्य लौकिकसाक्षात्कारविषयत्वात्तदाश्रयीभूतानां शशविषाणाद्यभावानां लौकिकप्रत्यक्षविषयत्वात्तत्प्रतियोगित्वाभावतद्वच्छेदरूपसत्वं चाक्षुषमेव। नच शशविषाणादीनामसत्वेनायोग्यत्वात्कथं तदभावः प्रत्यक्षस्तदुपलंभापादनायोगादिति वाच्यं। शशसंबंधित्वविशिष्टविषाणत्वजात्याक्रांतं यदि अत्र स्यात् तर्हि महत्त्वोद्भूतरूपवत्त्वप्राप्त्योपलभ्येतेत्यापादनस्यासंभवात्। शशसंबंधिमहत्वोद्भूतरूपवद्द्रव्यं विषाणत्ववत्स्यात् तर्हि शशसंबंधविषाणत्वोभयवत्तयोपलब्धिमत्स्यादित्यापादनयोग्योपलब्धिप्रतियोगिकाभावस्य वा शशविषाणाद्यभावप्रत्यक्षहेतुत्वसंभवात्। अन्यथानुमानादेरप्रयोजकत्वादिशंकाकुंठितत्वेनानिश्चायकत्वात् तत्प्रत्यक्षानंगीकारे शशविषाणाद्यभावव्यवहारस्य सर्वसिद्धस्य विलोपप्रसंगात्। नच ताद्दशाभावा-

विषाणाद्यभावीयप्रतियोगिता शशविषाणादिनिष्ठा इंद्रियसंन्निकर्षायोगाद्योग्यैवेति कथं तदुपलब्धेरापादनयोग्यतेति वाच्यं। शशे विषाणारोपानंतरं शुक्तौ रजतारोपानंतरं अत्र विषाणं नास्ति शुक्तौ रजतं नास्तीति प्रत्यक्षस्य तव मम च सिद्धत्वेन धर्मींद्रियसंन्निकर्षादिकं विनैव स्वसंन्निकर्षेणैतत्प्रत्यक्षस्य ममाभ्युगमसंभवात्। अन्यथा शुक्तिरजतादेर्मिथ्यात्वस्य त्वया प्रत्यक्षविषयत्वं कथितमयुक्तं स्यात्। नचाभावस्यैव प्रत्यक्षविषयत्वं संसर्गमर्यादया भासमाना प्रतियोगिता परमलौकिकसन्निकर्षेणैवावभासते। स्मर्यमाणघटप्रतियोगिकाभावप्रत्यक्षस्थले प्रतियोग्यंश इव प्रतियोगित्वांशेप्यलौकिकविषयताया एवाभ्युपगतत्वात्। तथाच रजतप्रतियोगिकाभावसाक्षात्कारमात्रेण मिथ्यात्वेपि प्रत्यक्षत्वव्यवहार इति वाच्यं। एवमपि सन्निकृष्टघटस्य देशांतरेऽभावप्रत्यक्षस्थलेऽभावांश इव प्रतियोगितत्वांशयोरपि लौकिकविषयतायाः संभवेन योग्यवृत्तिप्रतियोगिताया योग्यतया घटे यदि देशत्वव्यापकाभावप्रतियोगिता स्यात्तर्हि देशांतरवृत्त्यभावप्रतियोगितेवोपलभ्येतेत्यापादानसंभवेनोक्तप्रतियोगित्वानुपलब्धेरपि योग्यत्वात्। अन्यथा स्तंभे पिशाचत्वाभावपिशाचभेदौ घटे परमाणुत्वाभावतद्भेदौ च प्रत्यक्षेण न गृह्येतां। पिशाचत्वपरमाणुत्वयोरतींद्रियत्वात्। तयोरतींद्रियत्वेपि योग्यवृत्तिजातिपरिमाणयोर्योग्यत्वमिति सामान्यव्याप्तिबलादेव तयोरुपलंभापादनोपपादनेऽत्रापि,तदुपपादितमेव। न चोक्तस्थले परमाणुभेदतदभावयोरनुमितिरेव महत्वादिलिंगिका झटिति स्फुटलिंगेन जायमानत्वात्तत्र साक्षात्कारत्वभ्रम इति वाच्यं। पिशाचत्वाभावादिकं न साक्षात्करोमीत्यादिबाधानुदयेपि वृथा तस्य भ्रमत्वकल्पने घटादिस्थलेप्येवमेव कल्पनापत्त्याऽनुमेयबहिस्तत्ववादापत्तेः। भ्रमत्वप्रयोजकदोषकल्पनाप्रयुक्तगौरवापाताच्च। नचैंद्रियकप्रतियोगिकाभावस्थल एवास्मदभिमत योग्यानुपलब्धिसंभवात्प्रकृते तस्यायोगेन कारणबाधादनुमितित्वसिद्धौ तत्र साक्षात्कारत्वप्रत्ययस्य भ्रमत्वमुच्यत इति वाच्यं। अबाधितसाक्षात्कारत्वप्रत्ययेनानुमितित्वानुमानस्यैव बाधितत्वेनास्मदुक्तरीत्यैव फलानुसारेण योग्यानुपलब्धेरुपपादनौचित्यात्। नच पिशाचभेदस्यैव प्रत्यक्षत्वमस्तु तत्राधिकरणयोग्यतायास्तंत्रत्वात्। पिशाचत्वाभावस्तु तेनानुमीयत एवेति युक्तं। विनिगमकाभावेनोभयोरपि प्रत्यक्षत्वात्। तद्धर्मावच्छिन्नभेदस्य तद्धर्माभावरूपतामते तत्प्रत्यक्षस्यावश्यकत्वाच्च। नन्वेवं तर्हि धर्माधर्मगुरुत्वाद्यभावस्यापि प्रत्यक्षत्वापत्तिः। योग्यवृत्तिगुणस्य योग्यत्वमिति सामान्यव्याप्त्यैव तत्प्रत्यक्षस्यापि आपादनसंभवात्। नच तत्रेष्टापत्तिः संभवति। विष्णुतत्वनिर्णयटीकासुधादौ तेषां प्रत्यक्षाविषयत्वस्यैवाभ्युपगतत्वेनेष्टापत्तावपसिद्धांतापातात्। नच योग्यगुणत्वमात्रं नोपलब्धिविषयत्वव्याप्यं गुरुत्वादिप्रत्यक्षानुदयेन व्यभिचारात्। अतो लौकिकविषयतासंबंधेन प्रत्यक्षं प्रति तादात्म्येन गुरुत्वधर्मादेः प्रतिबंधकतया तत्तद्भिन्नत्वसहितमेव तस्य च धर्मादावभावात् कथं तत्रोपलब्ध्यापादनमिति वाच्यं। तर्ह्यतींद्रियभेदस्य प्रत्यक्षसामग्रीनिविष्टतया पिशाचत्वपरमाणुत्वादावपि कथं प्रत्यक्षापादनसंभव इति चेन्न। यतोतींद्रियत्वं लौकिकप्रत्यक्षविषयत्वं तदवच्छिन्नस्य तादात्म्येन प्रतिबंधकत्वमंगीकृत्य तदवच्छिन्नभेदस्यैकस्यैव प्रत्यक्षसामग्रीशरीरानिवेशे तस्य प्रत्यक्षविषयत्वरूपतया प्रत्यक्षाविषयत्वे प्रत्यक्षाविषयत्वस्य तदभावे तदभावस्य प्रयोजकत्वापत्त्यात्माश्रयापत्त्या गुरुत्वधर्मादीनां तत्वेनैव प्रतिबंधकत्वं कल्पनीयं। मतांतरे महत्वोद्भूतरूपावच्छिन्नचक्षुःसंयुक्तसमवायरूपसन्निकर्षस्य मनःसंयुक्तसमवायरूपसन्निकर्षस्य नैय्यायिकनये सिद्धांते साक्षिसंबंधादेः सत्वेपि तत्प्रत्यक्षानुदयात्। न चैवं पिशाचत्वपरमाणुत्वादीनां तत्तः

द्यक्तित्वादिना प्रतिबंधकत्वे बीजमस्त्यावश्यकं महत्वोद्भूतरूपावच्छिन्नचक्षुः संयुक्तसमवायरूपसन्निकर्षाभावादेव तद्वारणात् । तथा च घटे परमाणुत्वाद्यंगीकारे गुरुत्वादिभेदकूटविशिष्टयोग्यवृत्तिगुणत्वादिरूपव्याप्यापादनद्वारकोपलब्ध्यापादनं युक्तमेव । पिशाचादीनां वायवीयत्वेन रूपाद्यभावेन तदुपलंभापादनायोगात्तदभावो न प्रत्यक्षः । धर्मिणः प्रतियोगिनश्चैंद्रियिकत्वं न प्रयोजकं काले रूपाभावस्य परमाणौ महत्त्वाभावस्य घटे मनस्त्वाकाशत्वाभावादेरध्यक्षसिद्धत्वादित्यादिकं बहुतरमूहनीयं । यत्तु कालस्य चक्षुरयोग्यत्वात्कथं कालघटितोक्तधर्मे लौकिकप्रत्यक्षापादनमिति । तन्न । कालस्य साक्ष्युपनीतस्यैव घटादौ भानांगीकारेण तदंशे उपनयात्मकस्यान्यांशे चाक्षुषात्मकोपलंभस्यैव तादृशसामग्रीबलादापादनसंभवेन तदंशे उपनयात्मकस्येतरांशे लौकिकरूपस्योक्तसत्त्वप्रत्यक्षस्य बाधकत्वसंभवात् । ननु तर्हि लौकिकप्रत्यक्षबाधप्रतिज्ञा व्याहन्येतेति वाच्यम् । ग्राह्याभावांशे लौकिकत्वमात्रस्य प्रतिज्ञातत्वात् । नहि लौकिकप्रत्यक्ष इत्युक्तेः सर्वांशे लौकिकत्वमित्यर्थः पर्यवस्यति । तथात्वे वन्हिशैत्यानुमानबाधरूपत्वाचप्रत्यक्षस्य वन्हौ शीतस्पर्शाभावावगाहिनः प्रतियोग्यंशे लौकिकत्वाभावात् प्राचां तत्र लौकिकप्रत्यक्षबाधोक्तिरप्येवं प्रत्याख्येया स्यात् । ननु तर्हि प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणधर्मे लौकिकप्रत्यक्षापादनयोग्यत्वस्याभावप्रत्यक्षातंत्रत्वे गुरुत्वविशेषवद्घटत्वावच्छिन्नाभावप्रत्यक्षमपि जायतामिति चेद्गुरुत्वांशे उपनयात्मकस्येतरांशे लौकिकस्य प्रत्यक्षस्यापादनसंभवेन तादृशतत्प्रत्यक्षापादनस्येष्टत्वात् । अत एव ग्रहादौ चक्षुर्व्यापारानंतरमेव तादृशघटो नास्तीति व्यवहाराविलंबो युज्यते । एतेन पटे घटत्वं नास्तीति लौकिकप्रत्यक्षे घटेतरासमवेतत्वसहितसकलघटसमवेतत्वं न प्रतियोगितावच्छेदकतया भासते । सकलघटानामसन्निकृष्टत्वाद्घटेतरमध्येऽतींद्रियपरमाण्वादेरपि निविष्टत्वात्किंतु घटसमवेतत्वमात्रं भासत इति परोक्तमश्रद्धेयमेव । उक्तरीत्या विशिष्टघटत्वत्वस्यैव प्रतियोगितावच्छेदकत्वे बाधकाभावेनोक्तकल्पनाया निर्मूलत्वात् । अन्यथा घटसमवेतत्वोपलक्षिताभावप्रतीतौ पटे घटसंयोगकाले घटत्वं नास्तीति प्रत्यक्षानुपपत्तिः । विशिष्टाभावस्यैव प्रत्यक्षत्वन्मते घटत्वत्वोपलक्षितघटत्वाभावावगाहिनो घटत्वं नास्तीति प्रत्यक्षस्यापलापापत्तिः । तादृशप्रत्यक्षानंतरं घटत्वातिरिक्तघटसमवेतत्वविशिष्टवान्न वेत्यनुभूयमानसंशयानुपपत्तिश्च ।ननु प्रतियोगितावच्छेदकधर्माश्रयमात्र आपाद्यमानोपलब्धिप्रतियोगिकाभावमात्रस्य तद्धर्मावच्छिन्नाभावप्रत्यक्षहेतुत्वे दंडोपलक्षितपुरुषवति दंडविशिष्टपुरुषाभावप्रत्यक्षानुपपत्तिः । तत्रेष्टापत्त्या दंडाश्रयपुरुषप्रत्यक्षस्यापादनायोगेनापाद्यमानत्वयोग्योपलब्धिप्रतियोगिकाभावासत्त्वादिति चेन्न । विशेषणतया तद्धर्मावच्छिन्नाभावप्रत्यक्षे विशेषणविशेष्यघटितविशिष्ट एवापादनयोग्योपलब्ध्यभावस्य हेतुता उपलक्षणविधया तद्धर्मावच्छिन्नाभावप्रत्यक्षे तद्धर्मोपलक्षिते आपादनयोग्योपलब्ध्यभावस्य हेतुत्वमित्यंगीकारेण सर्वसामंजस्यात् । घटत्वत्वेन घटत्वाभावो न प्रत्यक्ष इति दीधित्युक्तेरपि विशिष्टाभावाभिप्रायकत्वात् । प्रकृतसत्त्वरूपाभावप्रतियोगितावच्छेदकीभूतदेशकालादिघटितधर्मस्योपलक्षणविधयैव तथात्वांगीकारात् प्रकृते न कोऽपि दोषः । यद्वा स्वदेशकालयोः सान्निकृष्टत्वात्तन्निष्ठाभावप्रतियोगित्वाभावग्रहणमात्रेण मिथ्यात्वधीर्विरुध्यते । ननु यावंतो देशकालादयस्तत्तन्निष्ठात्यंताभावप्रतियोगित्वकूटं मिथ्यात्वं तादृशकूटत्वावच्छिन्नाभावः सत्त्वमिति पक्षो न संगच्छते । तादृशकूटत्वावच्छिन्नस्य युगसहस्रेणापि दुर्ग्रहत्वापत्तेः । किंतु देशकालत्वव्यापकाभावप्रतियोगित्वमेव । तत्र देशकालविशेषनिष्ठाभावप्रतियोगि-

त्वाभावस्य बुद्धिः कथं विरोधिनी। स्वदेशकालव्यापकेमिथ्यात्वशरीरे तत्वेन तद्व्यक्तित्वेनानिविष्टतया तस्योक्ताभावप्रतियोगित्वाभावादिति चेन्न। वन्हौ पर्वतत्वव्यापकाभावप्रतियोगित्वबुद्धिं प्रति नात्र पर्वते वन्ह्यभावः किंतु वन्हिरेवेति प्रत्यक्षस्य वन्हित्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छेदेन तद्व्यक्तित्वपर्वतत्वोभयरूपवत्पर्वतवृत्त्यभावप्रतियोगित्वमवगाहत इवात्रापि तद्व्यक्तित्वकालत्वदेशत्वाद्युभयरूपेण देशकालावगाहिन इदानीं घटो, नायं कालो घटाभाववान्, नेदानीं घटाभावः, अयं देशो घटवान्, नात्र घटाभावो,नायं घटाभाववानिति सर्वसाक्षिसिद्धसाक्षात्कारस्य घटाभावत्वावच्छेदेन तादृशदेशकालनिष्ठाभावप्रतियोगित्वावगाहिनस्तादृशव्यापकताग्रहप्रतिबंधविधया पक्षे साध्यग्रहप्रतिबंधकत्वे विवादस्य सचेतसामनुचितत्वात्। एवंच पर्वतत्वावच्छेदेन वन्ह्यभावावगाहिनीं वन्हिः पक्षनिष्ठाभावप्रतियोगीत्यादिबुद्धिं प्रति पर्वतो वान्हिमान् वन्हिः पर्वतवृत्तिरिति ज्ञानस्य प्रतिबंधकतायाःपक्षतादीधित्यादिसम्मततया इदानीं घटः अत्र घटः अयं देशो घटवानिति लौकिक प्रत्यक्षस्य घटादेः देशकालसंबंधरूपसत्त्वावगाहिन एव मिथ्यात्वग्रहविरोधित्वेऽनुपपत्त्यभावेन देशसंबंधरूपसत्त्वस्योक्तमिथ्यात्वाविरोधित्वोक्तेरद्वैतसिद्धिकारीयाया असंगतत्वमेव। वर्तमानदेशकालसंबंधावगाहिप्रतीतेर्मिथ्यात्वग्रहविरोधितायां न्यायामृतोक्तायाः ब्रह्मानंदेन यदसंभवदुक्तिकत्वमभिहितं स्वदेशकालवृत्त्यभावप्रतियोगित्वाभावनिश्चयस्य कालत्वव्यापकाभावप्रतियोगित्वरूपमिथ्यात्वग्रहाविरोधित्वं नीलघटाभावनिश्चयस्य घटवत्ताबुद्धिं प्रतीवेति यच्च तेनैव तथाप्यभ्युपेत्य समाधत्त इत्यवतारितं स्वदेशकालनिष्ठाभावप्रतियोगित्वत्वस्याप्यतींद्रियाभावीयप्रतियोगितासाधारणतया तदवच्छिन्नाभावोऽपि न प्रत्यक्ष इति अद्वैतसिद्धिकारीयं दूषणमप्ययुक्तमेवेति ध्येयम्। ननु प्रतीतदेशकालयोर्निषेधविषयो घटाभावस्तदन्यस्य घटाधिकसत्ताकस्याभावांतरस्य सत्त्वात्तद्घटितमिथ्यात्वस्यैतद्देशकालसंबंधावगाहिप्रतीत्याऽनिषिद्धत्वात्कथं तस्य मिथ्यात्वग्रहविरोधित्वं युक्तमिति चेन्न। महानसीयवन्हिग्रहे वन्हित्वावच्छिन्नाभावग्रहस्य वन्हित्वावच्छेदेन पर्वतनिष्ठाभावप्रतियोगित्वग्रहस्येवोक्तस्य देशकालत्वव्यापकाभावप्रतियोगित्वरूपमिथ्यात्वस्य ग्रहं प्रति विरोधित्वे विवादायोगात् विरोध्यअन्यूनसत्ताकत्वस्य साध्यकोटौ निविष्टत्वेपि तद्घटितमिथ्यात्वग्रहे देशकालसंबंधग्रहोऽप्युक्तरीत्या विरोध्येव। ननु भावांतरशंकयोक्तग्रहेष्वप्रामाण्यबुद्धिर्जायत इति चेत् जगन्मिथ्यात्वानिर्णयात्प्राङ्निर्मूलतादृशशंकाया एवानुदयात्। ननु देशकालसंबंधस्यैव सत्त्वरूपतापक्षे कथं सत्तायां सत्ता स्वयमेव भासत इति भवदभ्युपगम आत्माश्रयप्रसंगात्स्वरूपतो भानायोगाच्चेति चेन्न। देशकालसंबंधरूपजनेर्जन्यंतरास्वीकारेण तस्य प्रमेयत्वादिवत्स्वाश्रितत्वस्य स्वांशे स्वरूपतो भानस्य चाभ्युपगमे क्षतिविरहात्। सप्तपदार्थनियमवादिनैय्यायिकनये सामान्यत्वत्वादीनामाधेयत्वादिरूपाणां स्वांशे स्वरूपतो भानस्य सिद्धत्वेन तथांगीकारसंभवात्। ननु मिथ्यात्वाभावरूपसत्त्वपक्षे घटादिप्रतीतेः प्राक् नियमेनोक्तनिषेधप्रतियोगित्वरूपप्रतियोग्युपस्थित्यभावात्कथं घटावगाहिप्रत्यक्षसामान्यस्य सत्तावगाहित्वम्। तदनंगीकारे च विधिनिषेधाववधूय प्रतीत्ययोग इति सिद्धांतानुपपत्तिरिति चेन्न। अनुभवबलादेव तादृशनियमस्य स्वीकृतत्वेन तद्बलादेव पूर्वं प्रतियोग्युपस्थितिनैय्यत्यस्यापि कल्पयितुं शक्यत्वात्। उक्तनियमस्य कालदेशसंबंधरूपसत्त्वाविषयकत्वघटितत्वेन वा सामंजस्यात्। एवं त्रिकालाबाध्यत्वमव्याकृताकाशकालसुखादेः साक्षिणैव गृह्यते, कालस्य साक्षादेव साक्षिप्रत्यक्ष-

विषयत्वात्कालांशेऽप्यपरोक्षत्वम्। नच स्वसंबद्धसर्वभासकत्वात्साक्षिणः कथं भाविकाल-भासकत्वमन्यथाभाविसुखस्यापीदानीं प्रत्यक्षतापत्तिरिति वाच्यम्। सर्वेषामुत्तरकालानु-संधानस्य विद्यमानत्वात्तस्याकारे साक्षिरूपताया व्यवस्थापितत्वात्साक्षिप्रत्यक्षं भाविविष-यकमेव, परंतु भाविकालं भावित्वेनैव विषयीकरोति। ननु तथापि तत्कालीनबाधप्रमानु-त्पत्त्यभावस्येदानीं निश्चयायोगात्कथं बाधप्रमाविषयत्वत्वावच्छिन्नाभावः साक्षिभास्य इति चेन्न। नह्यध्यक्षग्राह्यं सत्त्वं बाधप्रमाविषयत्वाभाव इत्यस्माभिरुक्तं येनेदं दूषणं संगतं स्यात्।किंतु कालत्वव्यापकात्यंताभावप्रतियोगित्वाभावादिरूपं कालसंबंधादिरूपं च। तस्येंद्रियग्राह्यत्वं भाविकालाद्यनुपस्थितावप्युपपादितमेव। तर्हि भाविकालस्य साक्षिवे-द्यत्वं किमर्थं प्राचीनैरुपपादितमिति चेत्। सर्वकालस्यापि साक्षिवेद्यत्वे यावत्यः कालव्य-क्तयस्तत्तद्व्यक्तिघटितबाध्यत्वाभावकूटमपि गगनादेः साक्षिसिद्धं भवति तेन न कदापि तत्र बाध्यत्वशंका लोकानामिति रीत्या घटादितो विशेषबोधनाय तदुक्तिसंभवात्। यत्तु प्रमा-त्वावच्छिन्नं प्रति मनस्त्वेन कारणत्वान्मनोवृत्त्यात्मकज्ञानमेव प्रमा, अविद्योपहिता वाऽवि-द्यावृत्त्युपहिता वा चित्साक्षी, तस्य च न प्रमात्वमस्य चाविद्यानिवर्तकत्वाभावेनानाधि-गततथाभूतार्थावगाहित्वरूपप्रमात्वायोगादिति। तन्न। साक्षिणो वेदवन्नित्यत्वेनाप्रामा-ण्यप्रयोजकदोषशून्यत्वेनाप्रामाण्यायोगात्। ननु भवन्मते दैत्याद्ययोग्यस्वरूपज्ञानस्यानादि-त्वेऽपि भ्रमत्ववदत्रापि किं न स्यादिति चेन्न। अनादियोग्यताख्यदोषविशेषबलेन क्षेम-साधारणप्रयोजकत्वस्य तत्र तत्राचार्योदाहृतप्रमाणासिद्धत्वात्। भवन्मते तथात्वे प्रमाणा भावात्। किं चाविद्याया एव तत्र दोषविधया प्रयोजकत्वेऽविद्या लब्धसत्ताका प्रयोजि-का भवेन्नान्यथा। तथात्वे शशविषाणादेरपि प्रयोजकत्वापत्तिः। तथा चाविद्यायाः साक्षि-ण्यध्यस्ततयैव सत्ता वाच्या। साक्षिणस्तद्विषयकत्वमविद्यां विना न घटत इति स्फुटमि-तरेतराश्रयः। किंच साक्षिनिष्ठविषयीकरणशक्तिरविद्याधीना बाधितार्थविषयीकरणश-क्तिर्वा। नाद्यः। तस्याः दोषत्वोक्तेरसंगतेः। स्वाभाविकं प्रमात्वं प्रतिबध्य भ्रमत्वप्रयोजक स्यैव दोषपदार्थत्वात्। विषयीकरणस्यैव साक्षिणः स्वतोऽभावे घटादिवन्निर्विषयके विष-यीकरणाधायकस्य स्वाभाविकतिरस्कारकत्वाभावात्। मन्मते चायोग्यतायाश्चेतनस्व-भावसिद्धप्रमात्वं प्रतिबध्य प्रकारांशे भ्रमत्वनिर्वाहकतया दोषत्वं युज्यते। न द्वितीयः मानाभावात्। किंचाविद्यायाः विषयीकरणांशे अविद्यात्वेन बाधितार्थविषयकत्वरूपं यद्भ्रमत्वं तस्मिन्विषयितायां बाधितार्थनिरूपितत्वपर्यवसन्ने च प्रयोजकत्वं स्वीकर्तव्यमिति गौरवमिति तस्य विषयीकरणमात्रांशे प्रयोजकत्वमस्तु असंगश्रुतिबलेनासंगतया चिद्रूपस्य स्वभावत इतरविषयीकरणरूपसंसर्गायोगात्। तथा च तद्विषयीभूतस्य सुखाद्यबा-धितत्वस्य कुतो बाधितत्वम्। किंच साक्षिज्ञानस्य किंचिदंशे प्रमात्वं स्वीक्रियते उत सर्वांशे भ्रमत्वम्। नाद्यः। स्वाभाविकप्रमात्वाभावेन किंचिदंशे तथात्वे बीजाभावात्। तावतापि मदभिमते सुखादिस्वरूपे तत्सत्वांशे च प्रमात्वेऽपि सुखादेः स्वस्वामिकत्वाद्यंशे भ्रमत्वसंभवेन मदिष्टाहानेः। न द्वितीयः। शुद्धं न जानामीत्याकारकस्य शुद्धचिदवच्छि-न्नाज्ञानविषयकसाक्षिप्रत्यक्षस्य शुद्धचिदंशेऽपि बाधितार्थविषयकत्वरूपभ्रमत्वापत्त्या शुद्ध-चितोपि बाधितत्वापत्तेः। नच शुद्धत्वोपहितस्यैव तद्विषयत्वात्तस्य मिथ्यात्वाभ्रमत्वं युक्तमेवेति वाच्यम्। मिथ्याभूतस्य तस्याज्ञानाविषयतया ज्ञानस्य तदवच्छिन्नतया भाना-नुपपत्तिः। उपहितविषयतायाः शुद्धेऽप्यंगीकारे शुद्धांशे साक्षिणः प्रमात्वं दुर्वारमेव। एवं तत्त्वमस्यादिवाक्यजन्यशुद्धचिन्मात्रविषयकज्ञानग्राहकसाक्षिणा शुद्धचितोऽपि ज्ञानावच्छे-

दकतया गृहीतत्वात्तदंशे प्रमात्वं दुर्वारम् । नच तदंशे साक्षिणाऽज्ञानानिवृत्तेर्न प्रमात्वमिति वाच्यम् । तावताऽप्यस्मदभिमतस्याबाधितार्थविषयकत्वस्य साक्षिज्ञाने व्याहतेः । नच स्वरूपमात्रविषयकस्य निर्विकल्पकत्वेनातींद्रियत्वात्कथं तदादाय दूषणाभिधानमितिवाच्यम् । अनावृतसाक्षिसंबंधस्य सत्त्वेन परेषां नैय्यायिकादीनामिव तदतींद्रियत्वे बीजाभावात् । धर्मादिवदयोग्यत्वकल्पने गौरवाज्ज्ञातैकसत्त्वानुपपत्तेश्च । साक्षिणोऽप्रामाण्येऽधिकदूषणान्याकरेऽनुसंधेयानीत्यलम् । तस्मात्साक्षिणः प्रामाण्यात्तद्गृहीतं गगनादिसत्त्वमबाधितमेव । एवं घटादावप्यबाधितत्वं तज्ज्ञानप्रामाण्यग्राहकेण साक्षिणा गृह्यते । अबाधितार्थविषयकत्वस्यैव प्रामाण्यरूपत्वात् । व्यवसायाविषयस्य बहिः पदार्थस्य साक्षिणा भानायोगाद्घटादिप्रत्यक्षस्य बाधितत्वादिरूपसत्त्वावगाहित्वासिद्धेश्च । नन्वत्यंताबाध्यार्थावगाहित्वरूपं प्रामाण्यं न घटादिज्ञाने स्वीक्रियते शुक्तिरजतादिज्ञानव्यावृत्तं व्यवहारकालाबाध्यार्थावगाहित्वमेव । तज्ज्ञानेनैव प्रवृत्त्यादिसंभवात् । तथाच प्रामाण्यघटकतया व्यवहारकालाबाध्यत्वविषयीकरणेऽपि नात्यंताबाध्यत्वसिद्धिरिति चेन्न । किं व्यवहारकालाबाध्यार्थावगाहित्वमेव सर्वत्र प्रामाण्यं क्वचिदत्यंताबाध्यार्थावगाहित्वमपि । नाद्यः । ब्रह्मस्वरूपमात्रपरवेदप्रामाण्यानुरोधात् ब्रह्मण अत्यंताबाध्यत्वासिद्धिप्रसंगात् । न द्वितीयः । अपौरुषेयत्वेनाप्रामाण्यप्रयोजकदोषाभावसाम्ये स्वतःप्रमाणभावस्य वेदस्य मध्ये कस्यचिदात्यंतिकप्रामाण्यं कस्यचिदापेक्षिकं प्रामाण्यमिति वैषम्यायोगात् । ब्रह्मपरवाक्यं प्रधानं धर्मादिवाक्यमप्रधानवाक्यमिति चेत् । तर्ह्यप्रधानवाक्यस्य प्रधानवाक्यापेक्षया न्यूनप्रामाण्यं तच्च तदर्थापेक्षया न्यूनसत्तावदर्थघटितत्वमेवेति प्राप्तम् । बाढमिति चेन्न । तथात्वे प्रयाजादिवाक्यानां प्रधानयागवाक्यापेक्षया न्यूनप्रामाण्यापत्त्या प्रयाजादीनां प्रातिभासिकत्वापत्तेः । धर्मादिवाक्यानां निषेधप्रतियोगिसमर्पकतया ब्रह्मवाक्येनैकवाक्यतापन्नतया ब्रह्मरूपविषयेणैवैतेषामपि मुख्यप्रामाण्यमस्तीति चेत् । तर्हि निषेधप्रतियोगिसमर्पकतयानुवादकवाक्यस्य स्वार्थसत्तातात्पर्यायोगात् धर्मादीनामसिध्याऽनुष्ठानाभावापत्तिः । एवं ब्रह्मज्ञानवृत्तिप्रामाण्यं साक्षिणा गृह्यते न वा । नेति पक्षे तत्प्रामाण्यासिद्धिप्रसंगः । वेदजन्यत्वादिलिंगानां धर्मादिज्ञाने व्यवहारकालाबाध्यत्वादिघटितप्रामाण्यव्याप्यतयैवोपलब्धत्वेन तैरात्यंतिकप्रामाण्यासिद्धेः । केवलव्यतिरेकिलिंगांतराणामप्रयोजकत्वात् । आद्ये निष्प्रकारब्रह्मज्ञाने ब्रह्मांशेऽबाधितत्वादेरुपनयमर्यादया भानायोगात्त्रिकालाबाध्यत्वस्य साक्षादेव साक्षिभास्यत्वस्यावश्यं वक्तव्यतया त्रिकालाबाध्यत्वस्य साक्षिवेद्यत्वं न घटत इति मां प्रति दूषणोक्त्यसंगतिः । एवं व्यवहारकालाबाध्यत्वघटितप्रामाण्यं घटादिज्ञाननिष्ठमिति तावद्विवेक्तव्यम् । घटादिव्यवसायाधिकरणकालव्यक्तिमात्रघटितं उत निखिलब्रह्मज्ञानप्राक्कालघटितम् । नाद्यः । तथात्वे घटादिज्ञानप्रामाण्यग्रहणोत्तरमपि उत्तरकालबाध्यत्वशंकया प्रवृत्त्युच्छेदापत्तेः । न द्वितीयः । साक्षिणो वर्तमानकालमात्रग्राहितायास्त्वदभ्युपगतत्वेन प्रामाण्यग्रहणसमयबाध्यत्वाभावग्रहणमात्रसंभवेऽपि तदुत्तरकालिकस्वप्रवृत्त्यधिकरणसमयाबाध्यत्वग्रहणायोगादुत्तरकालबाध्यत्वशंकया प्रामाण्यग्रहणोत्तरमपि निष्कंपप्रवृत्त्यनुपपत्तेः । प्रथमकल्पस्य शुक्तिरजतज्ञानसाधारणतया द्वितीयपक्षस्य यावद्ब्रह्मज्ञानमसंजातबाधभ्रमविषयप्रातिभासिकज्ञानसाधारणतयोक्तप्रामाण्यस्य शुक्तिरजतादिज्ञानव्यावृत्तत्वोक्त्ययोगश्च । एतेन ब्रह्मज्ञानेतराबाध्यत्वघटितमेव घटादिज्ञानप्रामाण्यमित्यप्यपास्तं । अज्ञातब्रह्मणां पामराणां प्रामाण्य

ग्रहणायोगात्प्रवृत्त्यनुपपत्तेश्च । व्यवहारकालबाध्यत्वस्याप्यतीन्द्रियाभावादिप्रतियोगिताघटितत्वेन त्वद्रीत्या योग्यत्वाभावेन तदभावस्य प्रत्यक्षाविषयतयोपनयायोगात्साक्षिणा ग्रहणायोगश्च । तस्मान्निष्कंपप्रवृत्त्याद्यनुरोधात्त्रिकालाबाध्यत्वं व्यवसायेन साक्षात्साक्षिणा च प्रामाण्यघटकतया घटादौ गृह्यते गगनादौ च साक्षात्प्रामाण्यघटकतयाऽपीत्यत्र इयमभ्युपेयमिति । यत्त्वत्राद्वैतचंद्रिकोक्तमज्ञातमिथ्यात्वकघटादिविषयकत्वमेव प्रामाण्यं स्वतो ग्राह्यं प्रवर्तकमिति तत्तु प्रागेव दूषितम् । यत्त्ववाचीनेन शास्त्रारंभसमर्थनाख्यप्रकरणेऽभिहितम् । न चैवं सिद्धांते स्वतो ग्राह्यप्रामाण्यं दुर्वचम् । तद्वति तदवगाहित्वस्यैव तत्त्वात् । नच भ्रमसाधारण्यापत्तिः । इष्टत्वात् । नच भ्रमत्वग्रहणानंतरमपि प्रवृत्त्याद्यापत्तिः । व्यावहारिकरजतार्थिनः प्रातीतिकत्वेन ज्ञाते तत्र प्रवृत्त्ययोगात् । व्यावहारिकं रजतं कटकादिरूपार्थक्रियाकारितयेष्यते तत्र तदभावनिश्चयान्न प्रवृत्तिः । नच शुक्तितात्पर्यमिदं रजतमिति वाक्यमपि प्रमाणं स्यादिति वाच्यम् । प्रमाणं स्यादित्यत्रेष्टापत्तेः । न चेदं वाक्यमस्मिन्नर्थे प्रमाणमिति व्यवहारापत्तिः । प्रपदस्य तद्वति तत्प्रकारकत्वरूपप्रकर्षद्योतकत्वे तद्घटितप्रमापदयोगार्थमादाय तादृशव्यवहारस्येष्टत्वात् । परेषां स्मृतिकारणे तादृशव्यवहारवत् । अग्निर्हिमस्य भेषजमिति वाक्ये तादृशव्यवहारवच्च । अनधिगतब्रह्मज्ञानेतराबाध्यविषयकत्वरूपप्रकर्षविवक्षयां तु न तादृशव्यवहारः संभवति । सर्वज्ञानयाथार्थ्यस्य भास्करीयादिभिरुक्तत्वात्तन्मत इव उक्तोपाधिनियमस्य तादृशव्यवहारस्य भ्रमत्वेनोपगतज्ञानकरणे मन्मतेऽपीष्टत्वात् । भ्रमत्वव्यवहारश्च बाध्यत्वाधीन इति । तन्न । यतः बाधानुभव इदं प्रातीतिकं रजतमित्याकारो वा नात्र रजतं नेदं रजतमित्याद्याकारो वा । आद्ये प्रातीतिकत्वं नाम सत्ताविशेषो वा ब्रह्मज्ञानेतरबाध्यत्वं वा बाध्यत्वसामान्यं वा । नाद्यः । सत्ताविशेषस्य लोकानामननुभवात् । इदं प्रातीतिकमिति ज्ञानेऽपि तत्र व्यावहारिकत्वविरोधनिश्चयात् प्राक् प्रवृत्त्यापत्तेः दुर्वारत्वात् । नहि सर्वेषां घटत्वपटत्वादिवत् तयोर्विरोधनिश्चय आवश्यको येनोद्बुद्धसंस्कारसत्त्वादेव न प्रवृत्तिरिति वक्तुं शक्येत । तत्स्वरूपस्यैव त्वत्सिद्धांतानुसारिभिन्नैरज्ञातत्वात् । अन्यथा घटत्वादाविवावयोर्विवादायोगात् । न द्वितीयः।बाधानुत्पत्तेः प्राक् बाध्यत्वग्रहायोगात्तस्य चाक्षुषत्वानुपपत्तेश्च । बाधग्रहे भासमानस्य रजतभ्रमनिवर्तकधर्मस्यावश्यवक्तव्यतापाताच्च । सर्वेषां ब्रह्मज्ञानरहितानां ब्रह्मेतरत्वघटितधर्मस्य भानायोगाच्च । नापि तृतीयः । चरमदूषणातिरिक्तानां द्वितीयकल्पोक्तनिखिलदोषाणामेव सत्त्वात् । नापि नात्र रजतमिति विकल्पितपूर्वोक्तद्वितीयः पक्षः । रजतसामान्यनिषेधस्यैव तत्र प्रतीतत्वेन व्यावहारिकत्वरूपविशेषधर्माक्रांतरजतनिषेधपूर्वकं प्रातीतिकरजतसत्त्वस्य लोकैरननुभूतत्वात् । अन्यथा नात्र व्यावहारिकं रजतं किंतु प्रातीतिकमित्याकारतापातात् । नच रजतपदं बाधाभिलापकवाक्ये व्यावहारिकरजतलाक्षणिकमिति वाच्यम् । लक्षणायाः वक्तृतात्पर्याधीनत्वेन वक्तॄणां लौकिकानां रजतावांतरभेदस्यागृहीतत्वेन तथा तात्पर्यकल्पनायोगात् । तेषामपि तादृशभेदज्ञानसत्त्वेनात्र रजतमिति विशेषाभावस्यैव गृहीतत्वात् व्यवहृतत्वाच्च रजतज्ञानानुवृत्तिप्रसंगात् । सुरभिगंधाभावग्रहोत्तरमपि गंधवत्ताबुद्धिवत् । नच तथा लोकानुभवः । लोकानुभवमतिक्रम्य स्वसिद्धांतानुसारेणैव सर्वव्यवस्थांगीकारे सौगतादिभिरपि निरधिष्ठानभ्रमनिःसाक्षिकभ्रमवेदाप्रामाण्यादेर्व्यवस्थापयितुं शक्यत्वेन तं प्रति तव मूकीभावापत्तेः । अनिर्वचनीयरजतोत्पत्त्यादेर्निरस्तत्वेन त्वदुक्तार्थस्यापि प्रमाणासंस्पर्शात्

अपि च व्यावहारिकरजतार्थिनः प्रातीतिकत्वज्ञानान्निवृत्तिरिति वदतेदं विवेचनीयम्। प्रातीतिकत्वेनाज्ञायमानं रजतज्ञानं प्रवर्तकं तत्र प्रातीतिकत्वज्ञानं साक्षाद्विरोधीति वा व्यावहारिकत्वेन रजतज्ञानं प्रवर्तकं, प्रातीतिकत्वज्ञानं तु व्यावहारिकत्वाभावव्याप्यवत्ता-ज्ञानमुद्रया तद्विघटकमिति। नाद्यः। तस्य मिथ्यात्वेनागृह्यमाणरजतज्ञानं प्रवर्तकमिति अद्वैतचंद्रिकोक्तपक्षपर्यवसानं स्यात्। तच्च दूषितमेव। रजतत्वप्रकारकज्ञानत्वरूपधर्म-मात्रग्रहेण प्रवृत्त्यापत्त्या तद्वति तत्प्रकारकत्वरूपप्रामाण्यस्य स्वतोग्राह्यत्वो-क्तेरकिंचित्करत्वापत्तेश्च। न द्वितीयः। तथात्वे भ्रमेऽपि व्यावहारिकत्वभानस्या वश्यकत्वेऽन्यत्र विद्यमानस्यात्र भानेऽन्यथाख्यात्यापत्त्या तत्र व्यावहारिकत्वस्यापि रजतस्यैवोत्पत्ते-रावश्यकतया तद्घटितप्रामाण्यस्यापि गृहीतत्वेन बाधेन त्वद्रीत्या प्रातीतिकत्वस्य गृहीत-त्वेऽपि प्रवृत्त्यापत्तेः। कारणस्याबाधात्। बाधानुभवस्य पूर्वानुभवस्य च त्वदभ्युपगत-प्रामाण्यानुरोधेनैकत्रावश्यमभ्युपगंतव्यतया प्रातीतिकत्वस्य व्यावहारिकत्वाभावव्याप्य-त्वबुध्यनुदयाच्च। स्वातंत्र्येण प्रातीतिकत्वज्ञानस्य प्रवृत्तिप्रतिबंधकत्वं तु मानाभावा-द्गौरवाच्चायुक्तम्। सर्वत्र तस्य प्रातीतिकत्वाज्ञानसहितस्य तज्ज्ञानस्य प्रवृत्तिकारणत्व-पर्यवसानात् प्रामाण्यग्रहणस्याकिंचित्करत्वात्। प्रामाण्यस्वतस्त्वाभ्युपगमस्यैव वैय-र्थ्यापत्तेश्च। नच प्रातीतिकत्वज्ञानं न प्रतिबंधकं किंतु बाधोत्तरं रजतप्रतीत्यैव न प्रवृत्तिरिति वाच्यम्। तर्हि प्रातीतिकत्वेन भानादिरयस्याकिंचित्करत्वापत्तेः। शंखा तबाधसोपाधिकभ्रमोत्तरं तद्ज्ञानानुवृत्तिबलात्प्रवृत्त्यापाताच्च। तत्रापि प्रातीतिक-त्वज्ञानात्प्रवृत्त्यभाव इत्युक्तौ मिथ्यात्वाग्रहस्य प्रवृत्तिकारणत्वपर्यवसानात् प्रामाण्य-ग्रहणानुपयोगरूपदूषणं बोध्यम्। एवं सत्तात्रयानंगीकारपक्षे ब्रह्मज्ञानेतरबाध्यत्वब्रह्म-ज्ञानबाध्यत्वयोरेव प्रातीतिकत्वव्यावहारिकत्वपदार्थतया ब्रह्मज्ञानविधुराणां पामराणां प्रवृत्त्याद्यनुपपत्त्या व्यावहारिकत्वज्ञानं प्रवर्तकं प्रातीतिकत्वज्ञानं निवर्तकमित्यादिव्यव-स्थानुपपत्तिश्च। एतेन शुक्तितात्पर्येकेदंरजतमिति वाक्यस्य प्रमाणत्वाप्रमाणत्वव्यव-हारव्यवस्थापि परास्ता। ब्रह्मज्ञानविधुराणां पामराणां ब्रह्मज्ञानेतरबाध्यार्थविषयकत्व-रूपाप्रामाण्यानुपास्थित्या तद्व्यवहारानुपपत्तेः। बाध्यार्थविषयकत्वमात्रं भ्रमत्वव्यवहारनि-यामकं चेत् बाधकाल एवेदं ज्ञानं वाक्यं वा प्रमणमप्रामाणं चेति व्यवहारप्रसंगः। सर्वै-रपि त्वदतिरिक्तैर्लौकिकैर्वैदिकैरपि तद्वाक्यस्याप्रमाणत्वेन व्यवहृतत्वेन सर्वानुभवविरुद्धे तत्प्रमाणत्वे त्वदिष्टापत्तेरयोगेन तादृशव्यवस्थाया अयोगात्। अन्यथाऽतिप्रसंगात्। एवं परोक्षेऽन्यथाख्यात्यभ्युपगमपक्षे एकस्यां शुक्तौ यस्य रजतापरोक्षभ्रमोऽन्यस्यानु-मित्यादिरूपपरोक्षस्तदुभयोच्चरितस्य इदं रजतमिति वाक्यस्य समानार्थकतया सर्वानुभू-यमानस्य प्रमाणत्वाप्रमाणत्वे स्याताम्। एकनिष्ठस्य व्यवहर्तव्यज्ञानस्य प्रमात्वादपरनिष्ठस्या न्यथाख्यातित्वादिति लोकानुभवयुक्त्यादिविरुद्धत्वेनैव सर्वज्ञानयाथार्थ्यवादिमतस्य त्वया ऽपि त्यक्तत्वेन तद्विरुद्धार्थस्वीकारे तदृष्टांतीकरणानौचित्यं चेति दिक्। तस्मादाधुनिकोक्त-स्यात्यंतासंगतत्वात्त्रिकालाबाध्यार्थावगाहित्वरूपप्रामाण्यं स्वतो ग्राह्यमंगीकार्यमिति तद्ग्रा-हकेण साक्षिणा घटादौ त्रिकालाबाध्यत्वं अवश्यं गृहीतमित्यभ्युपेयमिति। यत्तु सर्वदेश-कालीननिषेधप्रतियोगित्वमपि साक्षिवेद्यत्वाद्योग्यमत एव मन्मते तद्रूपस्य मिथ्यात्वं सा-क्षिवेद्यमंगीक्रीयतेऽतस्तदभावस्य सत्यत्वस्य प्रत्यक्षविषयत्वमिति तरंगिण्यभिप्रेतमनूद्य ब्रह्मानंदेनोक्तं सर्वदेशेत्यादिकं स्वपित्रादीन्प्रत्येव वाच्यम्। यादृशाभावो हि तार्किकादीनां प्रत्यक्षस्तस्यैव त्वया साक्षिभास्यतया मां प्रति वाच्यत्वादन्यथाऽतिप्रसंगात्। तार्कि

(टीका) तथापि बाध्यत्वं कुत इति चेत्। इत्थम्। स्तंभादिकं हि प्रत्यक्षसिद्धमाश्रित्यानुमानं प्रवर्तते। अन्यथाऽऽश्रयहीनताप्रसंगात्। तथाचोपजीव्यत्वेन बलवत्प्रत्यक्षं कथमुपजीवकत्वेन दुर्बलमनुमानं सति विरोधे न बाधेत। एतेन वाचारंभणं नान्योऽतोऽस्ति द्रष्टेत्यादिश्रुतयोऽपि निरस्ताः। तासामपि हि विषयसमर्पकत्वेन प्रत्यक्षमुपजीव्यमिति।

---

कादिवाक्यं तूक्तमेवेति तत्तु स्वशिष्येभ्योऽपि न रोचते। पूर्वं तत्प्रत्यक्षस्य निपुणतरमुपपादितत्वेन तार्किकानंगीकृततत्वस्याप्रयोजकत्वात्। अन्यथा तार्किकानभ्युपगतं जगन्मिथ्यात्वसामान्यलक्षणाखंडनसाक्षिरूपेंद्रियतत्प्रत्यक्षविषयीभूतशुक्तिरूप्यमिथ्यात्वादिपदार्थसार्थमभ्युपगच्छतस्तव प्रायश्चित्तकरणप्रसंगात्। अप्रामाणिकाभ्युपगमनस्यैवातिप्रसंजकत्वेन नैय्यायिकानंगीकृतार्थांगीकारस्यातिप्रसंगासंपादकत्वेनान्यथेत्यादेरसंगतत्वाच्च। ननु झडित्येव परिज्ञानान्न लिंगोद्भवता मता। अभावोऽनुमा प्रत्यक्षं च परामर्शापरामर्शविशेषादित्यादिभिर्विष्णुतत्त्वनिर्णयप्रमाणलक्षणादिग्रंथैर्योग्यानुपलब्धेरभावप्रत्यक्षकारणत्वाभावावगमात् कथमत्राभावप्रत्यक्षोपपादनाय योग्यानुपलब्धेरवश्यमुपपादनं कृतमिति चेत्। तादृशग्रंथेन प्रत्यक्षसामग्रीशरीरे तादृशयोग्यानुपलब्धिग्रहस्य निवेश एव निराकृतः। प्रत्यक्षविषयीभूताभावत्वं प्रति योग्यस्वप्रतियोग्यनुपलब्धिकत्वं व्यापकमिति तु न निराकृतम्। तत्र बाधकाभावात्। अतो व्यापकाभावादुक्तनिषेधप्रतियोगित्वाभावो न प्रत्यक्षविषय इति शंकानिरासाय प्रकृते योग्यानुपलब्ध्युपपादनं युक्तमेवेति। इदमिहावधेयं। सकलदेशकालसंबंधिनिषेधाप्रतियोगित्वरूपसद्विलक्षणत्वघटितसाध्यानुमाने स्वात्यंताभावसमानाधिकरणत्वरूपमिथ्यात्वानुमाने चोक्तसत्यत्वावगाहिप्रत्यक्षं ग्राह्यावगाहितया साक्षाद्विरोधीत्यविवादम्। स्वप्रकारकधीविषयताव्यापकात्यंताभावप्रतियोगित्वज्ञाननिवर्त्यत्वादिरूपमिथ्यात्वग्रहे च मणिमंत्रादिवत्स्वातंत्र्येण वा तदभावव्याप्यत्वेन गृहीततया वा तदभावोपस्थापकतया वा विरोधित्वम्। हेतुव्यापकत्वादिघटितव्याप्तिज्ञानेष्वेकविधव्यभिचारग्रहस्य साक्षाद्विरोधित्वमन्येषामुक्तरीत्यैवेति यथेति सामान्यलक्षणाखंडनं त्वस्मदिष्टमेव। परंतु सादृश्यसहकृतचक्षुषाऽतीतानागतधूमादिज्ञानं जायत इति सिद्धांतस्थितिः। अनुमानादिना तस्यान्यथोपपादनमद्वैतसिध्यादौ कृतं, तत्तु ग्रंथगौरवभयादत्यंतं प्रकृतानुपयोगाच्च नेह तन्निराक्रियते। कंटकोद्धारादित एव तदवसेयम्। तथापीति। प्रत्यक्षविरोधसद्भावेऽपीत्यर्थः। बाध्यत्वं तद्विरोधेन स्वार्थावगाहिप्रमानुमित्यजनकत्वं। बाधकत्वमिति पाठे प्रत्यक्षस्येति शेषः। प्रमाजननशक्तिविघटकत्वमित्यर्थः। कुत इति प्रश्ने। प्रबलप्रमाणस्यैव बाधकत्वात्प्रमाणत्वसामान्येन प्रत्यक्षप्राबल्ये बीजाभावादिति भावः। आश्रयहीनताप्रसंगादिति। पक्षादिज्ञानाभावप्रसंगादित्यर्थः। यथाश्रुते मिथ्यात्वरूपसाध्यं प्रति पक्षहीनताया उपपादकतया नेदमनिष्टमिति परास्तम्। न बाधेतेति। निर (परा) स्ता इति। यथाश्रुतार्थात्पराभिप्रेतात्प्रच्याविता इत्यर्थः। उपजीव्यविरुद्धार्थे आगमस्यापि प्रामाण्यायोगादिति भावः। आगमस्वरूपस्य श्रावणप्रत्यक्षग्राह्यतया तज्जन्यज्ञानप्रामाण्यस्य साक्षिग्राह्यतया प्रत्यक्षस्यागमोपजीव्यत्वं बोध्यम्। प्रकारांतरमप्याह। विषयसमर्पकत्वेनेति। उद्देश्यसमर्पकत्वेनेत्यर्थः। प्रत्यक्षसिद्धविकारजातमनूद्य वाचारंभणत्वादिविधानात् प्रत्य-

( टीका ) नन्वस्तु प्रत्यक्षं प्रपंचसत्तागोचरम् । तथाप्यनुमानागमाभ्यामेव बाध्यताम् । तयोर्निरवकाशत्वात् । नहि व्याप्तिपक्षधर्मतावदनुमानं शक्यते स्वविषयात्प्रच्यावयितुम् । नाप्यागमोऽपौरुषेयत्वात् । उपक्रमादिभिरेवावगततात्पर्यत्वाच्च । प्रत्यक्षं तु संभावितदोषमप्रमाणमपि भवितुं युक्तम् । नचोपजीव्योपजीवकत्वन्यायविरोधः । अ(प)सर्पणाद्यभावलिंगेन नायं सर्प इत्याद्याप्तवाक्येन चोपजीवकेनापि निरवकाशेन सावकाशस्योपजीव्यस्यापि सर्पभ्रमस्य बाधदर्शनात् । तत्रेदंतामात्रमुपजीव्य प्रवर्तनाददोष इति चेत् ।

---

क्षसिद्धत्वं पदार्थमनूद्य तत्पदार्थभेदविधानादिति भावः । निरवकाशत्वात् । अप्रामाण्यप्रयोजकदोषशून्यत्वेन प्रमाणतया निश्चितत्वादित्यर्थः । न्यायविरोध इति । तद्रूपयुक्तिविरोधः प्रत्यक्षप्रामाण्यस्यानुमानागमप्रामाण्यस्य चेत्यर्थः । उपजीव्यविरुद्धार्थे उपजीवकमप्रमाणमिति व्याप्तेरपि बलवत्त्वादिति भावः । व्यभिचाराद्व्याप्तिरेव नास्तीत्याह । अपसर्पणाद्यभावलिंगेनेति । उपजीवकेनापीति । सर्पभेदरूपसाध्योपस्थितिं प्रति प्रतियोगिज्ञानसमर्पकतयेदंपदार्थरूपोद्देश्यसमर्पकतया चानुमानागमौ प्रति प्रत्यक्षमुपजीव्यमेतावुपजीवकाविति भावः । अनुमाने निरवकाशत्वं व्याप्तिपक्षधर्मोपेतत्वम् । आगमे त्वाप्तवाक्यत्वादिना दोषशून्यत्वम् । उभयत्राप्रामाण्यप्रयोजकदोषशून्यत्वेन निश्चितत्वं निरवकाशत्वं, तेन रूपेणानिश्चितत्वं सावकाशत्वं बोध्यम् । इदंतामात्रेति । केचित्तु मात्रपदेन सर्परूपप्रतियोग्यंशस्य तत्तादात्म्यस्य रज्जुनिष्ठस्य च पराभिप्रेतमुपजीव्यत्वं व्यवच्छिन्दन्ति । अदोष इति । उपजीव्योपजीवकप्राबल्यदौर्बल्यन्यायस्य न पूर्वोक्तव्यभिचार इत्यर्थः । अयं भावः । यज्ज्ञानं यज्ज्ञानकारणं तज्ज्ञानविषयीभूतार्थविरूद्धार्थावगाहिकार्यज्ञानस्य न प्रामाण्यमिति न नियमः । भवदुक्तस्थल एव व्यभिचारात् । नापि यद्रूपावच्छिन्नविषयतानिरूपितयन्निष्ठविषयत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदिका या विषयता सा तस्मिन् तद्विपरीतार्थावगाहिताघटितप्रमात्वघटिका न भवतीति वा व्याप्तिः । वन्ह्यभाववद्ध्रदकालीनपर्वतपक्षकवन्ह्यनुमितेर्व्याप्तिशरीरे वन्हिना ह्रदावगाहिपरामर्शादप्युत्पन्नतया तत्रत्यविषयतायां तस्मिंस्तदभावबुद्धिं प्रति तस्मिंस्तदारोपस्य कारणतामते अभावप्रमीयविषयतायां च व्यभिचारात् । किंतु यादृशविषयताघटितधर्मावच्छिन्नजनकताकयादृशज्ञाननिष्ठप्रामाण्यं प्रति जनकतावच्छेदकीभूतयादृशविषयिताघटितप्रामाण्यं स्वावच्छिन्नोपधेयत्वसंबंधेन व्यापकं तादृशविषयितानिरूपकविशिष्टार्थस्तद्रूपावच्छिन्नं प्रत्युपजीव्य इत्युच्यते, तद्विपरितार्थविषयकत्वांशे प्रामाण्याभाववत्तादृशं ज्ञानमिति व्याप्तिरभिमता । अनुमितिनिष्ठप्रामाण्यं प्रति पक्षतावच्छेदकविशिष्टविषयताघटितप्रामाण्यं व्यापकमुक्तसंबंधेन लिंगोपधानमते तु व्याप्तिविशिष्टहेतुमत्ताघटितमपि प्रामाण्यं व्यापकं परामर्शस्याप्रामाण्येऽनुमितौ पक्षांशे विशिष्टलिंगावगाहित्वांशे प्रामाण्यस्य दुर्लभत्वापत्तेः । तथाच तादृशानुमितौ जनकतावच्छेदकीभूतपरामर्शीयविषयतानिरूपकविशिष्टार्थविपरीतार्थे प्रामाण्याभावोऽपि वर्तत एव । ननु पर्वतत्वेन ह्रदावगाहिपरामर्शात्पर्वतत्वेन ह्रदावगाहिन्यनुमितिर्जायते । तत्र वास्तववन्हेरेव भानाद्ध

न्हित्वघटितप्रामाण्यं वर्तते। एवं वन्हित्वेनान्यावगाहिपरामर्शात् तदंशे भ्रमात्मकं पर्वतांशे प्रमात्मकमप्यनुमितिस्वरूपं जायते। तथाच धूमादिविषयिताघटितधर्मावच्छिन्नजनकताकधूमपरामर्शोत्तरानुमितित्वावच्छिन्नं प्रति पर्वतत्वादिघटितमनेन क्रमेण धूमत्ववन्हित्वादिघटितं वा किमपि प्रामाण्यं व्यापकमुक्तसंबंधेन न भवत्येवमेवोक्तरीत्या भ्रमप्रमोभयात्मके रक्तदंडवान् पुरुष इत्यादौ प्रत्यक्षे शाब्दबोधे च तत्तत्कारणीभूतग्रहनिष्ठतत्तद्धर्मघटितप्रामाण्यस्योक्तसंबंधेन व्यापकताभंगान्न कुत्रापीयं व्याप्तिरुपपादयितुं शक्येति चेन्न। व्याप्यकोटौ प्रामाण्यस्य भ्रमभिन्नत्वस्य विवक्षितत्वात्। पूर्वोक्तानुमितीनां किंचिदंशे भ्रमत्वात्। शुद्धप्रमात्मकानुमितौ कारणनिष्ठं प्रामाण्यं उक्तसंबंधेन वर्तत एवेति न व्यापकताभंगः। न चैवमपि कूटलिंगाद्दैवाज्जायमानयथार्थानुमितौ भ्रमभिन्नत्वसत्त्वेऽपि कारणज्ञानवृत्तिप्रामाण्यस्योक्तसंबंधेनाभावाद्व्यभिचार इति वाच्यम्। लिंगभेदेन कारणताभेदात्ताद्दशज्ञानाव्यवहितोत्तरानुमितित्वं प्रति लिंगव्याप्त्यादिविषयताघटितप्रामाण्यस्य व्यापकत्वाभावेऽपि पक्षतावच्छेदकसाध्यतावच्छेदकादिविशिष्टविषयकत्वघटितप्रामाण्यस्य व्यापकत्वानपायेन तदादायैवोपपादनसंभवात्। लिंगोपधानमतेऽनुमितौ विशिष्टलिंगभाननैयत्येन कूटलिंगजन्यानुमितौ भ्रमभिन्नत्वाभावाच्च। लिंगानुपधानमते याद्दच्छिकसंवादिभिन्नत्वस्य व्याप्यकोटौ निवेशनीयत्वात्। यद्वा ज्ञाने दोषाऽप्रयोज्यत्वमेव भ्रमभिन्नत्वं विहाय निवेश्यते। स्वसमानाधिकरणाभावप्रतियोग्यवच्छिन्नविषयताप्रयोजकत्वप्रमानुकूलशक्तिविघटकत्वज्ञानानुकूलसहजशक्त्यातिरिक्तशक्त्याधायकत्वादिना केनचिद्रूपेणानुगतीकृत्य दोषाः निवेश्याः। याद्दच्छिकसंवादिस्थले कूटपरामर्शादिरूपदोषनिष्ठप्रमाविघटनशक्तेस्तत्तत्कालतदद्दष्टतत्तद्विषयविशेषविषयकत्वादिरूपयद्दच्छाबलेन कुंठीभावांगीकारेण प्रमोत्पत्तावपि तत्रान्यत्र तज्जातीयस्थलांतरानुरोधेन फलत प्रमायाः विद्यमानत्वात्तेषां दोषत्वात् तत्प्रयोज्यत्वस्य तत्रत्यानुमितौ सत्त्वान्न तस्य व्याप्यकोटौ निवेशः। तथाच दोषाप्रयोज्ययाद्दशरूपावच्छिन्नज्ञानत्वं जन्यज्ञानत्वं वा प्रति स्वविशिष्टोपधेयतासंबंधेन याद्दशरूपावच्छिन्नविषयताघटितप्रामाण्यं व्यापकं तद्रूपाविशिष्टमुपजीव्यं तद्विरोध्यर्थविषयताघटितप्रमात्वाभावस्ताद्दशज्ञानत्वस्य व्यापक इति पर्यवासितम्। प्रतियोग्यारोपस्याभावप्रमां प्रति हेतुत्वेऽपि अधिकरणांशे प्रतियोगिप्रकारकत्वघटितप्रामाण्याप्रसिध्या तस्योक्तसंबंधेन ताद्दशाभावप्रमात्वं प्रत्यव्यापकत्वान्न व्यभिचारः कल्पद्वयस्य। अत्रोपजीव्यत्वशरीरे व्यापकत्वानिवेशे घटवद्भूतलादिरूपसमूहालंबनरूपपरामर्शजन्यानुमितौ घटत्वावच्छिन्नघटितोक्तप्रामाण्यस्योक्तसंबंधेन सत्त्वात्तद्रूपावच्छिन्नस्य ताद्दशानुमित्युपजीव्यत्वव्यवहारापत्तिरतो व्यापकत्वनिवेशः। तथाचेदंत्वावच्छिन्ने सर्पभेदावगाहिनि भ्रमभिन्ने दोषाजन्ये वा ज्ञानसामान्ये इदंत्वघटितप्रामाण्यविशिष्टस्य ज्ञानस्य धर्मितावच्छेदकानिर्णयविधया पूर्वं सत्त्वात्तद्रूपावच्छिन्नस्योपजीव्यत्वं तद्विरुद्धार्थघटितप्रामाण्याभावोऽप्युत्तरताद्दशज्ञानेषु वर्तते। इदंपदार्थे सर्पतादात्म्यघटितप्रामाण्यस्याप्रसिध्या सर्पभेदावगाहिज्ञानत्वं प्रत्यव्यापकत्वान्न तस्योपजीव्यत्वमिति तद्विरुद्धार्थे प्रामाण्येऽपि न क्षतिः। सर्पत्वप्रकारकप्रामाण्यमपि न व्यापकं, सर्पत्वभ्रमोत्तरमपि सर्पत्वप्रकारकज्ञानमात्रात्सर्पभेदावगाहिप्रमोत्पत्तेरतस्तस्याप्यनुपजीव्यत्वम्। इत्थं चेदंत्वमात्रमुपजीव्येत्युक्तिः युक्ता। अन्यथा मात्रार्थबाधापत्तेः। ननु सर्पत्वप्रकारकभ्रमोत्तरं कथं सर्पभेदप्रमोत्पत्तिः। प्रतियोगितावच्छेदकप्रकारकज्ञाने सर्पत्वेन भासमानस्यैवात्र भेदांशे प्रतियोगितया भानात्। वास्तवस्य लौकिक-

(टीका) तर्हि प्रकृतेऽपि तथाऽस्त्वित्यत आह ।

(मूलं) **न च प्रत्यक्षसिद्धमन्येन केनापि बाध्यं दृष्टम्** ॥७०॥

---

सन्निकर्षविधुरत्वादिज्ञानसन्निकर्षस्यापि तत्राभावादिति चेन्न । भ्रमजनकतया सर्पत्वेन सर्पस्मृतेरावश्यकतया भ्रमोत्तरपरीक्षादिदशायामपि तद्विषयकोद्बुद्धसंस्कारादेः सत्त्वांगीकारेण तद्बलादेव वास्तवसर्पस्य भेदांशे भानसंभवात् । तर्हि सर्पत्वविशिष्टस्याप्युक्तोपजीव्यत्वसत्त्वान्मात्रपदेन तद्व्यावर्तनमयुक्तमिति न वाच्यम् । भ्रमविषयेषु मध्ये इदंत्वविशिष्टमात्रमुपजीव्येति हि तत्पदार्थः ।वास्तवसर्पस्य भ्रमाविषयत्वेन तद्व्यावर्तनात् । यद्वा यद्रूपावच्छेद्यत्वविशिष्टविषयताऽनाहार्यज्ञानीययादृशविषयताघटितधर्मावच्छिन्नं प्रति जनकतावच्छेदिका तादृशविषयताघटितधर्मावच्छिन्नं प्रति तद्रूपावच्छिन्नमुपजीव्यमित्युच्यते । तद्रूपविशिष्टार्थाविरुद्धविषयकत्वघटितप्रामाण्यमुपजीवकस्य नास्तीति नियमः ।प्रतियोग्यारोपस्याभावबुद्धिकारणत्वेऽपि तादृशज्ञानस्याहार्यत्वनियमात्तादृशप्रतियोगिरूपरूपविशिष्टस्याप्रसिध्या च न तस्योपजीव्यत्वप्रसक्त्याऽभावप्रमायां व्यभिचारः । एवंच प्रतियोगिज्ञानमुद्रया सर्पज्ञानस्य कारणत्वेऽपि तस्य सर्पत्वप्रकारताशालिज्ञानत्वेनैव कारणतया तदवच्छेद्यत्वविशिष्टविषयतायास्तादृशानुमितिशाब्दबोधादिजनकतावच्छेदककोट्यप्रवेशान्न तदवच्छिन्नस्योपजीव्यत्वम् । इदंत्वावच्छिन्नविषयताघटितरूपेण परामर्शयोग्यताज्ञानादेः कारणत्वात्तदवच्छिन्नस्योपजीव्यत्वम् ।यद्यपि सर्पत्वावच्छेद्यत्वविशिष्टविषयताऽपि परामर्शयोग्यताज्ञानादिनिष्ठजनकतावच्छेदककोटिप्रविष्टत्वात्तदवच्छिन्नस्याप्युपजीव्यत्वं दुर्वारं तथापि विषयतायाः प्रतियोगितासंबंधानवच्छिन्नरूपाया मुख्यविशेष्यतारूपाया वा विवक्षणान्न दोषः ॥ तर्हि प्रकृतेऽपीति ॥ उक्तरीत्या निष्कर्षकरणेन व्यभिचा-

---

रोद्धारे नास्माकं काचित् क्षतिः।घटत्वादिविशिष्टविषयताया एव परामर्शयोग्यताज्ञानादिनिष्ठजनकतावच्छेदकतया सत्ताविषयतायास्तत्रानिवेशात् उक्तपरामर्शादीनां घटादिसत्ताविषयकत्वनियमाभावेन तद्घटितप्रामाण्यस्य पूर्वोक्तसंबंधेन प्रमानुमितित्वव्यापकत्वाद्यभावाच्च न तस्योपजीव्यत्वमतस्तद्विरुद्धार्थे मिथ्यात्वबोधकानुमानागमानां न तत्र प्रामाण्याभाव इति भावः इत्याहुः।वस्तुतो मात्रपदमुक्ततादात्म्यमात्रव्यवच्छेदकम्।यदंशे प्रमाणभूतयज्ज्ञानं प्रति यस्य ज्ञानस्य यद्विषयकत्वेन कारणता तदर्थस्य तदसत्त्वापादकत्वाभाव इति नियमः । भ्रमस्य च धर्मिज्ञानविधयेदंविषयकज्ञानत्वेन प्रतियोगिज्ञानमुद्रया सर्पज्ञानत्वेनेदंपदार्थे सर्पभेदज्ञानं प्रति कारणत्वं, तादृशसर्पभेदः सामान्यतो न सर्पपदार्थस्य इदंपदार्थस्य चासत्त्वापादकः। किंतु तदुभयतादात्म्यस्यैव तद्विषयकज्ञानत्वेन तु न कारणत्वमिति भावः।मिथ्यात्वानुमानं प्रत्यपि घटादिरूपजगद्विषयकपरामर्शत्वेनैव कारणत्वं न तु तदंशे पारमार्थिकत्वरूपसत्त्वविषयकत्वेनातो जगति पारमार्थिकत्वरूपसत्त्वसंसर्गासत्त्वापादनेऽपि न क्षतिः प्रकृतनियमस्येत्याह। तर्हीति। व्याख्यानं रमणीयम्। यद्यपि घटत्वादिधर्मवि-

---

शिष्टमुपजीव्यानुमानागमप्रवृत्तावप्युपजीव्यविरोधो दुर्वारः।घटादीनां मिथ्यात्वे घटत्वादिधर्मवैशिष्ट्याद्ययोगात् ।तथापि शशविषाणादिपक्षकमिथ्यात्वानुमितेर्यथा शशविषाणादिस्वरूपमात्रज्ञानादुत्पत्तिः प्रामाण्यं च धर्मधर्मिसंबंधेषु सर्वत्र मिथ्यात्वावगाहित्वात् तद्वत् प्रकृतेऽपि घटत्वादीनां सद्धर्मत्वानंगीकारादित्याभिप्रायः । मूले सत्त्वांशस्योपजीव्यत्वमनुपपाद्य प्रत्यक्षस्य जात्या प्राबल्योपपादनमयुक्तं प्रक्रांतस्योपजीव्याविरोधस्यानुपपादनादित्याशंक्य नात्रोपजीव्यविरोधत्वेन प्रक्रांतता किंतु प्रत्यक्षविरोधत्वेनैव । तस्य प्राबल्योप-

(टीका) स्यादेतदेवम् । यदि प्रत्यक्षमात्रसिद्धमपि प्रत्यक्षादन्येन केनाऽप्यनुमानेनागमेन वा बाध्यं दृष्टं स्यात् । नचैतदस्ति । दूरे तूपजीव्यप्रत्यक्षासिद्धम् ।

---

पादनार्थं नास्माभिरुपजीव्योपजीवकभावे निर्भरः । कार्ये स्वभावप्राबल्यमात्रेण प्रत्यक्षस्य बाधकत्वसत्त्वात् । उपजीव्योपजीवकभावस्तु ग्रंथांतरसिद्धः सुतरां बाधकत्वे हेतुर्भविष्यतीत्यभिप्रायं मूलस्य व्यनक्ति ॥ स्यादेतदित्यादिना । प्रत्यक्षमात्रसिद्धमपीति ॥ उपजीव्यत्वानाक्रांतप्रत्यक्षसिद्धमपीत्यर्थः ॥ दूरे त्विति ॥ सुतरामित्यर्थः ॥ उपजीव्येति ॥ जगत्प्रत्यक्षं त्वनुव्याख्यानाद्युक्तरीत्योपजीव्यमेव भवतीति तद्विरोधादनुमानागमयोर्मिथ्यात्वसाधकत्वमयुक्तमेवेति हृदयम् । तथाहि । यद्यस्योत्पत्तौ प्रयोजकं तत्तदुपजीव्यम् । तद्विरुद्धार्थे तज्जन्यज्ञानस्य प्रामाण्यं नास्ति । घटादिस्वरूपग्राहकत्वात्प्रत्यक्षस्यानुमानादिकं प्रत्युपजीव्यत्वम् । नच प्रत्यक्षसिद्धशुक्तिरूप्ये मिथ्यात्वबोधकानुमानागमयोरिवास्यापि प्रामाण्यमस्त्विति । शुक्तिरूप्यादिज्ञाने यावता प्रत्यक्षांतरादिबलाद्दोषजन्यत्वबुध्याऽप्रामाण्यग्रहो नोदेति तदोक्तानुमानागमानां प्रवृत्तिरेव न भवतीत्यर्थस्य मूल एव व्यक्ततया भवदनुमानागमयोरपि तद्विरुद्धार्थनिश्चायकत्वायोगात् । प्रबलप्रत्यक्षांतरस्य घटादिविषयेऽप्रवृत्तेः । परीक्षितस्योपजीव्यस्यापरीक्षितोपजीवकबाधकत्वांगीकारात् । घटादिप्रत्यक्षस्यापि तत्साध्यसुखादिपर्यंतं परीक्षितत्वात् । न च सर्वत्र मिथ्यात्वानुमानेन प्रत्यक्षमुपजीव्यं केषांचिच्चक्षुरादीनामनुमानादिनैव सिद्धेरिति वाच्यम् । साक्षाद्वा क्वचित्परंपरया वाऽनुमानं प्रति प्रत्यक्षमुपजीव्यं भवत्येव । अन्यथाऽनुमानपरंपरयाऽनवस्थापत्तेः । व्याप्त्यादिज्ञानप्रामाण्यावगाहिनः साक्षिप्रत्यक्षस्य सर्वत्रोपजीव्यत्वाच्च । प्रामाण्यग्रहस्यानपेक्षितत्वे परामर्शाकांक्षाज्ञानतात्पर्यज्ञानादावप्रामाण्यग्रहेऽप्यनुमितिशाब्दबोधयोरापत्तेः । अत एव सत्त्वांशस्यापि ज्ञानमुपजीव्यमेव । प्रत्यक्षेण सत्त्वाग्रहे साक्षिणा तद्विशिष्टार्थविषयकत्वरूपप्रामाण्यग्रहणायोगेन निश्चितप्रामाण्यकव्याप्त्यादिज्ञानरूपकारणानिर्वाहप्रसंगात् । शशविषाणमिथ्यात्वाद्यनुमानादावपि व्याप्तिस्वरूपलिंगस्वरूपादौ सत्त्वावगाहिज्ञानमुपजीव्यं भवत्येव । ननु तद्वदेव प्रकृते व्याप्त्यादिज्ञाने सत्त्वग्रहस्योपजीव्यत्वेऽपि न पक्षीभूतघटाद्यंशे सत्त्वग्रहस्योपजीव्यतेति चेन्न । व्याप्तिलिंगादीनां सर्वेषां पक्षकोटौ आगमस्वरूपादीनामप्यागमेन मिथ्यात्वेन बोधनीयकोटौ त्वया निवेशितत्वेनोपजीव्याविरोधस्य दुर्वारत्वात् । घटादिस्वरूपतत्सत्त्वग्राहिप्रत्यक्षस्याप्युपजीव्यजातीयत्वात्प्राबल्यम् । न च साक्षिज्ञानं भ्रमस्तज्जातीयत्वेऽपि कथं प्राबल्यं घटादिप्रत्यक्षस्येति वाच्यम् । तस्य निरस्तत्वात् । न च साक्षिप्रत्यक्षयोः कथं साजात्यं चक्षुरादिजन्यज्ञाने तत्र च साक्षात्कारत्वजातेरनंगीकारात् । तस्य नित्यत्वेनेंद्रियजन्यज्ञानत्वस्याप्ययोगादिति वाच्यम् । साक्षात्करोमीति व्यवहारप्रयोजकविषयतया साजात्यसंभवात् । ननु साक्षिणा व्यवहारकालाबाध्यार्थविषयकत्वरूपस्य मिथ्यात्वेन यद्ज्ञानं तद्विषयकत्वरूपस्य वा प्रामाण्यस्य ग्रहणसंभवात् साक्षिणः प्रामाण्यग्रहणप्रयोजकतया न सत्तावगाहिप्रत्यक्षस्योपजीव्यतेति चेन्न । तस्य पूर्वमेव निरस्तत्वात् । किंच यत्प्रामाण्यं यत्प्रामाण्यप्रयोजकं तत्तस्योपजीव्यं तद्विरोधे च न प्रामाण्यम् । घटादिस्वरूपसत्त्वग्राहिप्रत्यक्षप्रामाण्यमनुमितिप्रामाण्ये प्रयोजकम् । अन्यथा मनआद्यागमादिस्वरूपस्वरूपसत्त्वग्राहिप्रत्यक्षाप्रामाण्ये तेषां सत्त्वाभावेन तेनानुमितिशाब्दबोधस्वरूपस्यैवानिष्पत्त्या तत्प्रामाण्यस्य दूरोत्सारितत्वापत्तेः । परामर्शयोग्यताकांक्षादिज्ञानप्रामाण्याभावेऽ-

**(टीका) सर्पभ्रमादेरपि बलवता प्रत्यक्षेणैव विषयापहारः । नानुमानागमाभ्याम् । अनुमानेनैव प्रत्यक्षबाधने कालातीतस्य दोषता वा त्याज्या व्यवस्था वा वक्तव्या ।**

---

नुमित्यादिस्वरूपनिष्पत्तावपि तत्प्रामाण्यायोगात् । न च यादृच्छिकसंवादिशाब्दानुमित्यादीनां कारणीभूतज्ञानाप्रामाण्येऽपि प्रामाण्यदर्शनान्न तस्य तत्र प्रयोजकतेति वाच्यम् । तत्र यदृच्छारूपप्रयोजकांतरान्निर्वाहेऽप्युक्तस्य प्रयोजकत्वाक्षतेः । तथात्वे क्वचिन्मंत्रादिशक्त्या लौकिकसामग्रीं विनापि किंचित्कार्यदर्शनमात्रेण लौकिककारणानां तत्कार्यप्रयोजकत्वासिद्धिप्रसंगात् । तथा च तादृशकार्यार्थिनां तादृशकारणेषु कथायां सलिंगबोधेच्छया पंचावयवादिप्रयोगस्य तद्विघटनार्थं व्यभिचाराद्युद्भावनस्य चाभावापत्तेः। यत्तु आगमतज्ज्ञानादिस्वरूपसत्त्वं कार्योत्पत्तौ नापेक्षितं मिथ्याभूतेनापि तत्संभवादिति । तन्न । प्रातिभासिकरजतादिनापि कार्योत्पत्त्यापत्तेः । न च यत्स्थले प्रातिभासिकात् कार्योत्पत्तिर्न दृष्टा तत्स्थले व्यावहारिकत्वविशिष्टतद्धर्मावच्छिन्नाधिकरणक्षणाव्यवहितोत्तरक्षणत्वव्यापकत्वं कार्यस्य स्वीक्रियतेऽतो न दोष इति वाच्यम् । प्रातिभासिकस्य कुत्रापि कार्यजनकत्वानंगीकारात्तज्ज्ञानस्यैव कार्यजनकत्वांगीकारेणोक्तव्यवस्थाकल्पनायोगात् । व्यावहारिकादिभेदस्याद्याप्यसिद्धत्वात् । अन्यथा प्रमेयत्वेन दंडादेर्घटकारणत्वमुक्त्वा दंडत्वविशिष्टप्रमेयत्वावच्छिन्नक्षणोत्तरक्षणत्वव्यापकत्वस्य घटस्यांगीकारेण सर्वापत्तिवारणसंभवे लोकसिद्धकार्यकारणभावस्यैवोच्छेदप्रसंगात् । तस्मात्सर्वजगन्मिथ्यात्वबोधकागमानुमानयोरुपजीव्यप्रत्यक्षाविरोध इति । ननु प्रत्यक्षस्य स्वतः प्राबल्ये कथं नायं सर्प इति अनुमितिशाब्दाभ्यां प्रत्यक्षबाध इत्यत आह । सर्पभ्रमादेरपीति । बलवतेति । निश्चितप्रामाण्यकप्रत्यक्षेणेत्यर्थः । विषयापहारोऽप्रामाण्यबुद्धिः । कालातीतस्य । भावप्रधानमिदम् । व्यवस्था वेति । प्रत्यक्षत्वाविशेषेऽपि क्वचिदनुमानबाध्यत्वं क्वचित्तद्बाधकत्वमित्यस्य नियामकं प्रत्यक्षत्वव्याप्यधर्मद्वयमनतिप्रसक्तं वक्तव्यमित्यर्थः । अनुमानागमापेक्षया प्रत्यक्षस्य जात्या प्राबल्याभावे वन्हौ शीतस्पर्शसाधकवन्हिजलान्यतरत्वहेतोर्व्यभिचारासिध्याद्यभावाद्बाधेनैव दुष्टत्वं वाच्यम् । प्रत्यक्षस्यानुमानापेक्षया प्रबलत्वाभावात्प्रबलप्रमाणबाधरूपदोषाभावाददुष्टत्वमेव स्यादिति भावः । नचाप्रयोजकत्वबुध्यैव तत्रानुमित्यनुत्पत्तिरिति वाच्यम् । अप्रयोजकत्वं हेतौ पक्षांतर्भावेण साध्याभावसामानाधिकरण्ये पर्यवस्यति, तदभावोऽप्यनुमानेन साधयितुं शक्यत एव । अयं हेतुः साध्याभावसामानाधिकरण्याभाववान् जलवृत्तित्वात् जलान्यभेदादिवदिति साधनेनाप्रयोजकत्वशंकानिरासपूर्वकव्याप्तिग्रहसंभवात् । हेतावुभयसामानाधिकरण्यकल्पने गौरवरूपानुकूलतर्कोत्थापनसंभवेन पक्षेतरत्वादीनामुपाधीनां विधूननात् । न च तत्र प्रत्यक्षमुपजीव्यत्वेन प्रबलमिति वाच्यम् । यत्र शब्देन वन्हिपदवाच्यं किंचिद्वर्तत इति जानतः असाक्षात्कृतवन्हिकस्य यत्र प्रथमत एव शैत्यानुमानप्रवृत्तिरनंतरं वन्हिस्पार्शनोत्तरं शीतस्पर्शाभावस्पार्शनं तद्विरोधेन पूर्वानुमितावप्रामाण्यग्रहस्तत्र प्रत्यक्षस्य पक्षग्राहकतयोपजीव्यत्वाभावात् । न च साध्यरूपप्रतियोगिग्राहकतयोपजीव्यत्वमस्त्येवेति वाच्यम् । अन्यत्र प्रतियोगिस्वरूपग्राहकसाजात्यमात्रेण शीतस्पर्शाभावप्रत्यक्षस्य प्राबल्ये ऽत्रैव शीतस्पर्शग्राहकानुमानस्य कुतोऽप्राबल्यं प्रत्युतास्यैव प्राबल्यमुचितम् । प्रत्यक्षत्वजात्यैव साजात्यस्य प्राबल्यानियामकत्वे प्रत्यक्षस्य जात्या प्राबल्यं बला-

(टीका) आप्तवाक्यान्निवर्तनेऽपि तन्मूलप्रत्यक्षेणैव बाधः ।

देवापतितम् । किंच घटादिस्वरूपप्रत्यक्षं विनापि शब्दादिना घटत्वाख्यजातिविशिष्टं किंचिद्वर्तत इति ज्ञानाद्घटोऽणुत्ववान् परमाणुघटान्यतरत्वादित्यनुमानस्य प्रवृत्तिरनंतरं च घटो नाणुरिति प्रत्यक्षेण बाधस्तत्र स्वभावप्राबल्यमेव शरणम् । चक्षुरादेर्धर्मिग्रहणेऽनपेक्षितत्वेन प्रतियोग्यग्राहकत्वेन चानुपजीव्यत्वात् । उपजीव्यत्वाग्रहदशायामपि प्रत्यक्षनिश्चयोत्तरं तद्विपरीतानुमितेर्झटिति बाधदर्शनात्स्वभावप्राबल्यं प्रत्यक्षस्यावश्यकमिति तु तत्त्वम् । ननु प्रत्यक्षस्य कुतः स्वतः प्राबल्यमिति चेत् । इत्थम् । प्राबल्यं नाम निश्चितप्रामाण्यकत्वमेव तत्र प्रायः प्रत्यक्षस्य यत्र यद्धर्मग्राहकत्वम् तत्र तद्विपरीतव्यावर्तकधर्मांतरादिविषयकत्वेन दोषजन्यत्वादिस्फूर्तेर्बीजं विनाऽयोगेन तत्र प्रामाण्यबुद्धिर्झटिति प्रायेण भवति । कदाचिदेव दूरस्थजलादिप्रत्यक्षे दूरस्थत्वादिदोषजन्यत्वबुध्या प्रामाण्यसंदेहो जायत इत्येतदनुभवसिद्धम् । अन्यथा सर्वेषां झटिति प्रवृत्त्यभावप्रसंगात् । परामर्शप्रामाण्यादिसंदेहाहितानुमित्यप्रामाण्यसंदेहस्यापरिचितविषयेषु बहुशो दर्शनेन प्रामाण्यग्रहणविलंबितत्वमनुभवसिद्धम् । अतः प्राबल्यदौर्बल्ये युक्ते । न चैवं सत्यनुमित्यागमजादिप्रामाण्यस्य स्वतस्त्वभंगप्रसंगः । अपरिचितविषयेषु अनुभवबलाद्दोषबुद्धिप्रयुक्तसंदेहानिवृत्तेरनुमितिस्थले आगमस्थले विलंबितत्वस्वीकारेऽपि स्वतः प्रामाण्यग्रहणापरित्यागात् । किंच साक्षिणः प्रत्यक्षरूपस्य निश्चितप्रमाणभावस्याप्रामाण्यसंदेहं प्रति कदाप्यगोचरतया स्वभावप्राबल्यात्तज्जातीयबाह्यप्रत्यक्षेष्वपि तत्सिद्ध्यति । असति बाधके प्रमाणानां सामान्य एव प्रवृत्तेः । न्यायामृतस्थस्यानुमानागृहीतरेखोपरेखादिग्राहकत्वतदनिवर्तितदिङ्मोहादिनिवर्तकत्वादिना प्रत्यक्षप्राबल्योपपादनस्याप्यत्रैव तात्पर्यम् । तयोरुक्तरीत्या प्रामाण्यग्रहणविलंबाविलंबादिकं प्रत्येवोपपादकतया चोक्तत्वात् । एतेन तदगृहीतग्राहित्वमात्रस्य प्राबल्यहेतुत्वे प्रत्यक्षाद्यगृहीतधर्मादिग्राहकत्वात्तदविषयीभूतानुमापकत्वाच्चागमानुमानयोरेव प्राबल्यं प्राप्तम् । बाधज्ञानागृहीतरजतग्राहकत्वाद्भ्रमस्यैव प्राबल्यं स्यात् । एवं त्वगनिवर्तितवंशोरगभ्रमनिवर्तकत्वाच्चाक्षुषस्य प्राबल्यप्रसक्त्या चित्रनिम्नोन्नतादिचाक्षुषप्रत्यक्षबाधकत्वं त्वाचप्रत्यक्षस्य न स्यादिति अद्वैतसिध्युक्तदूषणमनुपादेयमेव । नह्येकत्र तदनिवर्तितनिवर्तकत्वमात्रेण सर्वत्र तज्जातीयस्य तज्जातीयापेक्षया प्राबल्याद्बाधकत्वमिति तदभिप्रायो येनेदं दूषणं संगतम् । किंत्वपरिचितविषयेषु अनुमानापेक्षया प्रत्यक्षस्य शीघ्रतया प्रामाण्यनिश्चयविषयताबोधनाय शृंगिग्राहकतया स्थलविशेषप्रदर्शनाभिप्रायकत्वमेव । चक्षुस्त्वचोः स्थलविशेषे दोषजन्यत्वतदभावग्रहाधीनबाध्यबाधकभावसत्त्वेऽपि सर्वत्रैवैकस्य प्राबल्यमित्यत्र बीजाभावेनापादनासंगतेः । किं च प्रत्यक्षनिश्चितार्थस्यानुमानागमाभ्यां बाधादर्शनात्प्रत्युत वैपरीत्यस्यैवानुभवसिद्धत्वात्प्रत्यक्षस्य स्वभावप्राबल्ये स्थिते तत्र रेखोपरेखादिविषयकत्वादिकं संभावितं किंचिद्बीजमुच्यते । अत एव मूले दृष्टमित्यनुभवे निर्भरः कृतः । तथा च तेनैव तदगृहीतार्थग्राहकत्वादिनाऽन्येषामपि तथात्वापादनस्य का संगतिः । आरोपे सति निमित्तानुसरणं न हि निमित्तमस्तीत्यारोप इति न्यायेन, तस्यानुचितत्वात् । अन्यथा चाकचिक्येन कदाचिच्छुक्तौ रजतभ्रमे तदैव संनिहितरंगेऽपि तद्भ्रमापादनप्रसंगादिति दिक् । ननु प्रत्यक्षस्यान्येन बाधो नास्तीत्येतदयुक्तम् । सर्पभ्रमस्य नायं सर्प इत्याप्तवाक्येन बाधदर्शनादित्यत आह । आप्तवाक्यादिति । निवर्तनेऽपीति । सर्पभ्रमस्येत्यादि । तन्मूलभूतप्रत्यक्षेणेति । तद्विरुद्धत्वग्रहेणैवेत्यर्थः । आप्तिमूलकत्व-

(टीका) अत एव नायं सर्प इत्युक्ताः प्रतिवक्तारो भवंति । किं भवानेवं पश्यत्येवमेव वा वक्तीति । अन्यथा यजमानः प्रस्तर इत्यादिवाक्यानां प्रत्यक्षविरोधेन स्वार्थप्रच्यावनं त्याज्यम् । व्यवस्था वा कल्प्या ।

---

निश्चयोत्तरमेव तत्र प्रामाण्यनिश्चयात्तेन सर्पभ्रमनिवृत्तिर्जायते। अन्यथा पुरुषांतरोच्चारिततत्समानाकारवाक्यादपि तन्निवृत्त्यापत्तेः। आप्तिश्च विवक्षितार्थतत्त्वज्ञानादिरूपा । तत्त्वज्ञानं चाप्तसंबंधिसाक्षात्कारात्मकमेवेति ज्ञानोत्तरमेव तद्विरुद्धस्य प्रत्यक्षस्य दोषजन्यत्वादिना प्रामाण्याभावं गृण्हातीति भावः।तथा च प्रत्यक्षनिश्चितस्य निश्चितप्रामाण्यकप्रत्यक्षांतरविरुद्धत्वग्रहं विना प्रामाण्यत्यागो न भवतीति निष्कर्षः। तर्ह्यनुमितिशाब्दयोरपि प्रामाण्यनिश्चये तद्विरोधादनिश्चितप्रामाण्यकप्रत्यक्षस्य प्रामाण्यत्यागो भवतीति प्रत्यक्षादन्येन बाधो न भवतीत्येतदयुक्तमिति चेन्न । प्रत्यक्षविरुद्धार्थत्वग्रहदशायामनुमानागमयोर्बलवत्प्रत्यक्षमूलकत्वग्रहमंतरा प्रामाण्यनिश्चयस्यैवासम्मतत्वात् । तन्मूलकत्वं च तज्जन्यत्वतत्संवादित्वतत्सिद्धव्याप्तिपक्षधर्मतावत्त्वादिकं यथायथं द्रष्टव्यम् ।नन्वेवंतर्हि स्वदेहात्मैक्यविरुद्धग्राहिप्रत्यक्षांतराभावेन तद्विरुद्धत्वग्रहानुदयादनुमानागममात्रयोस्त्वन्मतेऽबाधकत्वाद्देहात्मैक्यबुद्धिनिवृत्त्यभावापातेन मोक्षार्थं प्रवृत्त्यभावापात इति चेन्न । देहात्मैक्यभ्रमस्योत्तरत्र निराकरिष्यमाणत्वात् । अंगीकारे यथा वैद्यशास्त्रजन्यानुभवाधीनसंस्कारवतां नाडीगतिविशेषस्पार्शननिश्चयो जायते रत्नशास्त्रजनितानुभवाधीनसंस्कारविशेषवतां नीचोच्चत्वादिना रत्नरत्नविशेषापरोक्ष्यं जायते तथा भगवत्कृपासहितसुकृतवशात् प्रक्षीणांतःकरणमलवतां पुंसां कथंचिद्देहात्माविवेकविषयकास्फुटग्रहमात्रेण देहात्मैक्यबुद्ध्यप्रामाण्यग्रहवतां दोषविशेषरूपाविद्यारूपोपाधिबलादेव गुडतिक्तादिभ्रमवज्जायमाने ज्ञाने शास्त्रेणाप्रामाण्यबुद्धेर्दृढीकरणांगीकारात् । अत एव येषां तादृशमनःपरिपाकादिना देहात्मभेदात्मास्वातंत्र्याद्यनुभवो दुष्कर्मवशान्नोत्पन्नस्तेषां शास्त्रशतेनाऽप्यप्रामाण्यबुद्धिर्न जायते एवेत्यनुभवसिद्धं युज्यते । नन्वाप्तवाक्यात्सर्पभ्रमादिनिवृत्तिस्थले तन्मूलभूतप्रत्यक्षविरुद्धत्वज्ञानेनैव तन्निवृत्तिर्न त्वनुमित्यादिविरुद्धत्वज्ञानेनेत्येतत्कुत इत्यतो लोके तथैवानुभवादित्याशयेनाह । अत एवेति । एवं पश्यति सर्पभेदं साक्षात्करोति । एवमेवेति । स्वयमसाक्षात्कृत्यैवानुमानादिना निश्चित्येत्यर्थः । पश्यामीत्युक्त्यनंतरमेव विश्वसंति, श्रुत्वा वा लिंगेन निश्चित्य वदामीत्युक्तौ तत्राविप्रलंभकत्वग्रहेऽपि भ्रमनिवृत्तिमंतो न भवंतीति वाक्यशेषः । तेन तत्प्रश्नवाक्यमात्रस्य प्रकृतार्थासाधकत्वादुपष्टंभासंगतिरिति शंकानवकाशः । नन्वागमानुमानमात्राभ्यामेव तत्रापि बाधः स्वीक्रियते न प्रत्यक्षविरोधानुसंधानेनेत्यनुभवसिद्धार्थेऽप्याग्रहवंतं प्रति बाधकमप्याह । अन्यथेति । आगमानुमाने प्रति प्रत्यक्षस्य बाधकत्वानंगीकारे । यजमान इति ॥ आदिना ग्रावाणः प्लवंति आदित्यो यूप इत्यादीनां ग्रहः । तत्र प्रत्यक्षविरोधातिरिक्तस्यार्थप्रच्यावनहेतोरभावादिति भावः । व्यवस्थेति । यजमानप्रस्तरभेदग्राहिप्रत्यक्षस्य बाधकताप्रयोजकं रूपं जगत्प्रत्यक्षस्य तदभावप्रयोजकं च वक्तव्यमित्यर्थः । तच्च नास्तीति भावः । ननु यादृशार्थे निर्णीततात्पर्यक आगमो भवति तत्संवादि च यदनुमानं तस्य न प्रत्यक्षबाधः, प्रत्युत ताभ्यामेव प्रत्यक्षस्य बाधः संभावितदोषत्वात् । आगमस्यापौरुषेयत्वेनानाशंकितदोष-

त्वादनुमानस्य तत्संवादित्वाद्यभिचाराद्यनुपलंभेन च दोषविधुरत्वनिश्चयात् । प्रकृते चाद्वैतागमानामुपक्रमादिभिरद्वैते तात्पर्यस्य निर्णीतत्वादनुमानस्य तत्संवादित्वाच्च न प्रत्यक्षस्य तद्बाधकत्वं, प्रत्युत तद्बाध्यत्वमेव । यजमानप्रस्तरादिवाक्यानां प्रतीतार्थे तात्पर्यनिर्णायकाभावात्तत्र प्रत्यक्षविरोधः प्रसरतीति व्यवस्था घटत एवेति । मैवं । यजमानादिवाक्यस्थलेऽपि पदानां मुख्यार्थपरत्वे लाघवरूपोपपत्तेरेव तात्पर्यग्राहकत्वसंभवात् । अन्यथा प्रथमतो बुद्ध्युपारूढमुख्यार्थग्रहणरूपगौरवप्रसंगात् । नन्वुपक्रमोपसंहारावेव तात्पर्यनिर्णायकौ । उपपत्तेरपि परिगणितत्वात् । लाघवस्य तात्पर्यानिर्णायकत्वे निषादस्थपत्यधिकरणानुत्थितिप्रसंगात् । कपिंजलानालभेतेत्यत्र त्रित्वचतुष्ट्वादिमध्ये त्रित्वस्य प्रथमोपस्थितत्वरूपलाघवाद्बहुवचनस्य तत्तात्पर्यसिद्धिप्रसंगाच्च । अवांतरवाक्यस्य स्वार्थे तात्पर्याभावे खादिरयूपादीनामप्यसिद्धिप्रसंगात् । सोमेन यजेतेत्यत्र निर्णीतस्वार्थतात्पर्यकेऽपि प्रत्यक्षविरोधशांत्यर्थमेव सोमपदस्य तद्वति लक्षणाश्रयणाच्च । अतस्तात्पर्यग्राहकाणां बलवत्प्रमाणाविरुद्धार्थ एव तात्पर्यग्राहकत्वं वक्तव्यमिति कथं प्रत्यक्षरूपबलवत्प्रमाणविरुद्धार्थेऽद्वैतागमानां तात्पर्यग्राहकत्वमुपक्रमादीनामुक्तिसहम् । प्रत्यक्षस्य संभावितदोषत्वाद्व्यावहारिकप्रामाण्यसंभवेन सावकाशत्वाच्च श्रुतीनां न पारमार्थिकाद्वैततात्पर्यविघातकत्वमिति चेन्न । प्रस्तरादिवाक्यस्थलेऽपि साम्यात् । पारमार्थिकयजमानाभेदग्रावप्लवनादेः सिद्धिसंभवात् । श्रुतेरपि अर्थांतरपरत्वसंभावनया द्वैताभावे निर्णीततात्पर्यकत्वायोगाच्च । यत्तु जगत्प्रत्यक्षे दोषसंभावनोक्ता सा आगमतात्पर्यनिर्णयानंतरं पूर्वमेव वा । नाद्यः । प्रत्यक्षविरुद्धत्वज्ञाने निश्चितप्रामाण्यकतन्निर्णयस्यैवानुत्पत्तेः । न द्वितीयः । तद्धेत्वभावात् । निर्णीततात्पर्यकागमविरुद्धत्वज्ञानस्यैव तद्धेतुत्वेऽन्योन्याश्रयापातात् । ननु भ्रमसाधारणत्वात् प्रत्यक्षत्वस्य तद्धर्मज्ञानेनैव दोषजन्यत्वबुद्धिर्जायते तदनंतरं तद्विरोधाभावादागमतात्पर्यनिर्णये जाते तद्विरुद्धत्वेन दोषजन्यत्वस्य सामान्यतो निश्चयोत्तरं क्लृप्तदोषाणामसंभवादविद्यारूपदोषांतरं कल्प्यत इति चेन्न । प्रस्तरादिवाक्यप्रतिबंदेरनुद्धारात् । आगमस्थलेऽप्यप्रमाणवाक्यसाधारणवाक्यत्वज्ञानादेव सामान्यतो दोषयुक्तत्वशंकायां प्रत्यक्षस्थले त्वदुक्तरीत्या तद्विरोधेनागम एव क्लृप्तदोषातिरिक्तदोषांतरस्य कल्पयितुं शक्यत्वाच्च । प्रामाण्यस्य स्वतस्त्वात्क्लृप्तदोषरूपापवादास्फूर्तौ दोषजन्यत्वसंभावना नोदेत्येवेति तु प्रत्यक्षेऽपि समम् । किंच सर्वप्रत्यक्षेषु दोषमूलकत्वसंभावनया ऽप्रामाण्यबुद्धिर्जायते कानिचित्परित्यज्यैव वा । नाद्यः । वैदिकार्थग्रहप्रामाण्यप्रत्यक्षागमस्य रूपग्राहिप्रत्यक्षतन्निष्ठापौरुषेयत्वनिर्दोषत्वग्रहप्रामाण्यप्रत्यक्षादिष्वप्रामाण्यबुध्या ऽऽगमस्वरूपतन्निर्दोषत्वादीनां केषामप्यसिध्या ऽद्वैततात्पर्यसिध्यादेर्दूरोत्सारितत्वात् । न द्वितीयः । पूर्वं येष्वप्रामाण्यबुद्धिर्दोषसंभावनया न जाता तद्विरोधादेवागमस्य सर्वनिषेधतात्पर्यग्रहणायोगात् । अपिच प्रत्यक्षस्य घटत्वाद्यवच्छिन्ने सत्त्वविषयकत्वेन विशेषविषयत्वात् सामान्यतः प्राप्ताद्वैतश्रुतिबाधकत्वं युक्तम् । न चानिश्चितप्रमाणभावप्रमाणद्वयस्थल एव सामान्यविशेषन्यायप्रवृत्तिरन्यथाऽयं गौरश्व इत्यस्य गौरश्वो न भवतीत्यादितो बलवत्त्वं स्यात् । तथाच प्रत्यक्षस्यानिश्चितप्रमाणत्वकत्वादुपक्रमादितात्पर्यलिंगैरद्वैते निर्णीततात्पर्यकागमसाम्यमेव नास्तीति कुतः सामान्यविशेषन्यायप्रवृत्तिरिति वाच्यम् । सकलप्रत्यक्षप्रामाण्याभावसंदेहदशायामागमप्रामाण्यस्याप्युक्तरीत्या संदिग्धत्वात् । साक्षिणोऽजन्यत्वेन तत्प्रामाण्यानिश्चये बीजाभावाच्च । नच प्रत्यक्षे व्यावहारिकप्रामाण्य-

निश्चयादेवागमस्वरूपतत्प्रामाण्यादौ न संदेहः, पारमार्थिकप्रामाण्यं परं दोषसंभावनया न गृह्यत इत्यागमाबाधकत्वमिति वाच्यम्। लोके क्लृप्तदोषाणामभावनिश्चयेऽपि दोषांतरसंभावना चेदागमेऽप्यपौरुषेयत्वज्ञानेन क्लृप्तदोषाणामभावनिश्चये दोषांतरसंभावनायाः साम्यात्। व्यावहारिकत्वादिभेदस्यागमार्थनिर्णयात्प्रागसिद्धेश्च। ननु नेह नानाऽस्ति किंचनेत्यादिश्रुतिरपि घटत्वादिरूपविशेषरूपेणैव मिथ्यात्वं बोधयति, एवं नात्र काचन भिदाऽस्ति। 'न पुण्यपापे मम नास्ति नाशो न जन्म देहेंद्रियबुद्धिरस्ति। न भूमिरापो मम वन्हिरस्ति न चानिलो मेऽस्ति न चांबरं च। एवं विदित्वा परमात्मरूपमशब्दमस्पर्शमरूपमव्ययमित्यादयोऽपि विशेषरूपेणैव मिथ्यात्वं बोधयंतीति कथं प्रत्यक्षश्रुत्योः सामान्यविशेषभाव इति चेन्न। सर्वनाम्नां सर्वपदनानापदादीनां सर्वत्वादिरूपसामान्यधर्मपुरस्कारेण बोधकतायाः प्रागेव व्यवस्थापितत्वात्। न पुण्यपाप इति वाक्यस्यापि कंठोक्ततत्तन्मात्रनिषेधपरत्वे शुद्धात्मस्वरूपप्रतिपादनापर्यवसानात् तस्यापि जडमात्रोपलक्षकत्वस्यावश्यकत्वेन सामान्यधर्मावच्छिन्न एव मिथ्यात्वप्रतिपादनतात्पर्यावश्यकत्वात्। वस्तुतस्तस्य ज्ञानानंदादिवत्पुण्यपापादीनां स्वतादात्म्यापन्नतया स्वस्वरूपांतर्गतत्वनिषेधपरमेवैतद्वाक्यम्। म इति स्वसंबंधिताबोधकपदोपसंदानात्। अन्यथा तेषां स्वरूपतो निषेधपरत्वे म इत्यस्य वैयर्थ्यापत्तेरिति ध्येयम्। एवं प्रत्यक्षस्य प्रथमप्राप्तत्वेनासंजातविरोधित्वात्। पदार्थोपस्थित्यादिविलंबेनार्थावगमकश्रुत्यपेक्षया शीघ्रमर्थोपस्थापकत्वाद्वस्त्वंतरेणार्थांतरोपस्थापनक्षमतया श्रुतेः सावकाशायाः सकाशात् गृहीतविषयान्यविषयकत्वेन संभावनांप्रत्यन्यविषयस्य प्रत्यक्षस्य निरवकाशत्वाच्च प्राबल्यमनुसंधेयम्। अत्र यदुक्तं प्रत्यक्षस्य भ्रमविलक्षणत्वेनानवधारितत्वेन न्यूनबलत्वाच्छ्रुतेर्निश्चितप्रामाण्यकत्वेनाधिकबलत्वात्समबलस्थल एवासंजातविरोधित्वादिन्यायप्रसक्तेर्नात्र तदवकाशः। परीक्षतस्य मंथरगामिनोऽपि प्राबल्यान्न द्वितीयस्यावकाशः। श्रुतेरपि उपक्रमादिभिरद्वैतेऽवधृततात्पर्यकत्वेन निरवकाशतया प्रत्यक्षस्य व्यावहारिकार्थविषयकत्वेन सावकाशतया न तृतीयस्याप्यवकाश इति। तत्सर्वं पूर्वोक्तरीत्यैवापास्तम्। प्रत्यक्षस्य परीक्षिततया निश्चितप्रामाण्यकत्वाभावे आगमस्वरूपतत्तात्पर्यावधारणप्रामाण्यावधारणादेरशक्यतया व्यावहारिकत्वादेर्व्याप्यासिध्यादेरसकृदावेदितत्वादिति दिक्। तद्द्वैतत्सर्वं प्रस्तरादिवाक्यप्रतिबंदिग्रहणेनैव सूचितम्। ननु प्रत्यक्षस्य जात्या प्राबल्यविष (यत्वे) ये न प्रस्तरादिवाक्यमुदाहर्तव्यं तत्र यजमानप्रस्तरादिरूपोद्देश्यविधेयसमर्पकतया प्रत्यक्षस्योपजीव्यत्वेनैव प्राबल्यादिति चेत् सत्यम्। तत्रोक्तोपजीव्यत्वानुसंधानस्य सर्वैरगृहीतत्वेऽपि प्रत्यक्षत्वमात्रप्रयुक्तप्राबल्यानुसंधानेनैवागमस्य यथाश्रुतार्थतात्पर्याभावस्य सर्वैर्गृहीतत्वेनोपजीव्यत्वसंकरस्यादोषत्वात्। अन्यथानव्यनैय्यायिकनये व्यभिचारसंकीर्णत्वाद्विरोधस्य दोषत्वाभावप्रसंगात्। यद्वा प्रस्तरादिपदवाच्यं किंचिद्वर्तत इति ज्ञात्वापि यजमानप्रस्तरपदवाच्ययोरभेदबुद्धिर्जाता तदनंतरं च यजमानप्रस्तरादिपदवाच्यवाचकभावग्रहोत्तरं तयोर्भेदप्रत्यक्षं तेन पूर्वोत्पन्नागमिकार्थे प्रामाण्याभावग्रहात् तत्तात्पर्यकत्वपरित्यागस्तत्रोपजीव्यत्वेन प्राबल्यस्य वक्तुमशक्यतया जात्या प्राबल्यस्यैव वक्तव्यत्वाच्चोक्तं युक्तम्। ननु प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतमित्युक्तविरोधात् प्रत्यक्षस्य कथं जात्या प्राबल्यमुक्तमिति चेन्न। जात्येत्यस्योत्सर्गत इति विष्णुतत्त्वनिर्णयटीकादौ व्याख्यातत्वेनोत्सर्गत आगमप्राबल्यस्य प्रामाण्यरूपस्य उक्तत्वेन प्रत्यक्षस्योक्तयुक्त्या संभाव-

( टीका ) प्रत्यक्षं तु परीक्षितमपरीक्षितस्य बाधकं भविष्यति ।

---

प्राबल्ये विरोधाभावात् । अत एवोपजीव्याविरोधे तु न प्रामाण्यममुष्य चेत्युत्तरत्रापवादे तदभावोऽप्युक्तः । यद्वा वैदिकार्थे प्राबल्यमिति तस्याभिप्रायः । नन्वागमप्रत्यक्षयोरेकत्र वैदिकमात्रार्थप्रसक्तेरभावात्कथं प्राबल्यदौर्बल्योक्तिः । मैवम् । तेषु त्रिष्वित्युक्तत्वेनानुमानस्य वैदिकार्थेऽपि प्रसरेण तदपेक्षया प्राबल्यविवक्षया तद्वाक्यसामंजस्यात् । पुराणादौ तात्कालिकजनै रामकृष्णादिदेहच्छेदव्रणादिकं प्रत्यक्षीकृतमिति श्रूयते । भगवदवताराणां पूर्णमदः पूर्णमित्याद्यागमैर्निर्दोषत्वादिरूपपूर्णत्वमपि श्रूयते । अस्माकं तन्निर्णयाय प्रत्यक्षमनुसर्तव्यमथागम इत्याकांक्षायां वैदिकार्थे आगमस्यैव प्राबल्यात्तदनुसरणमेव कर्तव्यमित्यभिप्रायेण प्रत्यक्षापेक्षयाऽपि प्राबल्योक्तिसंभवाच्च । नच प्रत्यक्षप्राबल्यवादिनस्तव मते तत्कालीनानां जगत्सत्यत्वप्रत्यक्ष इव स्वप्रत्यक्षे रामकृष्णादिदोषग्राहिणि लोकसिद्धकाचादिमूलकत्वाभावादिग्रहेण प्रामाण्यनिश्चयादागमेन बाधाभावे तत्र निर्दोषत्वज्ञानानुपपत्तिस्तथा च भीष्मादीनां तथा व्यवहारानुपपत्तिरिति वाच्यम् । तेषां भगवदनुग्रहापादितदिव्यदृष्ट्या विपरीतप्रत्यक्षस्यैव सत्त्वेन तेनैवापाततः प्रथमजातदोषप्रत्यक्षस्य बाधसंभवात् । अन्येषां तु प्राकृतानां तत्राप्तत्वनिश्चयवतां तदुपदेशस्य तत्प्रत्यक्षमूलकत्वानुसंधानोत्तरं तद्द्वारेवादेव बाधसंभवात् । न चाद्वैतजगन्मिथ्यात्वादेरपि तदुपदेष्टृपुरुषप्रत्यक्षाविषयत्वानुसंधानेन जगत्सत्यताबोधकप्रत्यक्षादिबाधोऽस्त्विति वाच्यम् । तथात्वे ऽपौरुषेयागमस्य कं प्रत्यपि स्वातंत्र्येणाद्वैतावगमकत्वाभावप्राप्त्याऽऽगमविचारस्यानुपयुक्ततापातात् अद्वैतस्य वैदिकार्थत्वोक्त्यसंगतेश्च । एकजीववादे एतावत्कालं कस्याप्यद्वैतापरोक्ष्याभावेन मम प्रत्यक्षं वर्तत इति वादिषु सर्वेषु विप्रलंभकत्वग्रहेण तद्वाक्यात् प्रत्यक्षाप्रामाण्यसिद्ध्ययोगाच्च । मन्मते चेदानींतनानामस्मदादीनामीश्वरसिद्धेरागमेनैव जायमानत्वात्तद्विचारादिसार्थक्यमुपपद्यत इत्यलम् । ननु प्रत्यक्षस्य स्वभावप्राबल्यादन्येन बाधाभावे प्रात्यक्षिकभ्रमस्य निवृत्तिरेव न स्यादित्यत आह । प्रत्यक्षं त्विति ।

परीक्षितमिति । अप्रमात्वशंकाव्यावर्तकदोषजन्यत्वाभावादिग्रहपूर्वकप्रामाण्यावधारणविषयीभूतमित्यर्थः । अपरीक्षितस्य विमर्शाभावकाले चापाततः प्रमाणत्वेन गृहीतस्य । प्राथमिकं प्रामाण्यज्ञानं तु मानसमेव न साक्षिरूपम् । 'सुदृढो निर्णयो यत्र ज्ञेयं तत्साक्षिदर्शनम् । यत्किंचिद्व्यभिचारि स्याद्दर्शनं मानसं हि तदि'त्युक्तेः । ननु प्रत्यक्षस्य प्रत्यक्षबाधकत्वकथनमयुक्तम् । विरोधिप्रत्यक्षकाले प्रत्यक्षांतरोत्पत्त्ययोगात् । अनुमानं तु भवति । रजतत्वज्ञानकालेऽपि रजतत्वाभावव्याप्यवत्ताज्ञानोत्पत्तौ बाधकाभावात्तदुत्पत्त्यनंतरं रजतत्वाभावव्याप्यवति रजतत्वप्रकारकत्वरूपहेत्वनुसंधानेन रजतत्वाभाववति रजतत्वप्रकारकत्वरूपाप्रामाण्यग्रहो जायते इति चेन्न । भ्रमजनकदोषनिवृत्त्यनंतरं बलवद्विरुद्धप्रत्यक्षोदयसंभवात् । अन्यथा लिंगस्य पुरोवर्तिनि रजतत्वेन सुदृढतया भासमाने रजतत्वाभावव्यभिचारग्रहसंभवेनोक्तानुमानप्रवृत्त्ययोगात् । ननु प्रवृत्त्यर्थं प्रामाण्यज्ञानप्रामाण्यनिश्चयोऽपेक्षितो न वा । आद्येऽनभ्यासदशापन्नभ्रमात्प्रवृत्त्यनुपपत्तिः । प्रथमज्ञानप्रामाण्यस्य मनसा ग्रहे तस्यापि भ्रमतया तज्ज्ञानप्रामाण्यस्य साक्षिणा ग्रहणे तस्य भ्रमत्वापत्तेस्तस्यापि मानसत्वमेव वक्तव्यम् । तस्य जडत्वेना स्वप्रकाशतया साक्षिवत्स्वप्रामाण्यग्राहकत्वायोगात्तदर्थं मानसज्ञानांतरमपेक्षितं स्यादित्यनवस्थित्यापत्त्या प्रवृत्तिसामग्र्यसंपत्तेः । न द्वितीयः । प्रामाण्यज्ञानधर्मिकप्रामाण्य

ग्रहस्यानपेक्षितत्वे प्रामाण्यस्य परतस्त्वपक्षेऽपि प्रामाण्यानुमितिनिष्ठप्रामाण्यग्रहस्य तज्जनकपरामर्शप्रामाण्यग्रहणस्यानावश्यकत्वप्राप्त्या परतस्त्ववादिपक्षेऽभिहितायाः फलमुख्याः कारणमुख्याश्चानवस्थाया असंभवेन स्वतः प्रामाण्यसिध्दांतस्थापनासंभवापत्तेः । मैवं । यतः प्रामाण्यं नामाबाधितार्थविगाहित्वं । साक्षिणा ज्ञानस्वरूपग्राहिणा तन्निष्ठविषयित्वाख्यधर्मोऽपि गृह्यते । अबाधितार्थसंबंधस्तु विषयितायां व्यवसायरूपोपनायकवशाद्भासते सत्यरजतस्थले मिथ्यारजतस्थलेऽपि साक्षात्साक्षिणो बहिर्थविषयकत्वायोगात् । तथा च ज्ञानस्वरूपांशे तन्निष्ठविषयित्वांशे अबाधितत्वविशिष्टविषयांशे च स्वनिष्ठाबाधितविषयकत्वप्रकारकत्वघटितप्रामाण्यादिविषयकं साक्षिरूपं स्वप्रकाशात्मकं ज्ञानं प्रमास्थले । भ्रमस्थले सर्वांशे साक्ष्यात्मकं ज्ञानमेव भ्रमविपर्यभूतं बाधितविषये भासते । यदा बाधितत्वं प्रामाण्यशरीरघटकतया तन्मात्रभ्रमोपनीतत्वात् मानसवृत्यात्मकज्ञानविषयीभूतमेव । मनसश्चिद्चिन्मिश्रितत्वात् साक्षिगर्भितमनोवृत्यात्मकज्ञानसाक्षिरूपज्ञानयोः स्फुटं भेदाग्रहात् कर्दममहारजनोपलिप्तवस्त्रादावेकद्रव्यत्वव्यवहारवदुपचारेणैवैकप्रामाण्यज्ञानत्वव्यवहारः । तथा च विषयनिष्ठाबाधित्वांशे एकस्या एव मनोवृत्तेरितरांशे साक्ष्यात्मकस्वप्रकाशात्मकैकज्ञानस्यांगीकारान्नानवस्थया प्रवृत्याद्यनुपपत्तिः । प्रामाण्यपरतस्त्ववादिमते प्रामाण्यग्रहव्यक्तिपरंपराश्रयणादनवस्था स्यादेव । ननु कुत एवं कल्प्यते भ्रमोपनीतविषयांशमात्रे साक्षिरूपं ज्ञानं भ्रमात्मकमेव किं न स्यादिति चेन्न । सत्साक्षिणः शुद्धप्रमात्मकत्वस्यैव तत्र तत्राचार्योदाहृतप्रमाणासिद्धत्वात् । साक्षिणः क्वचिद्प्रामाण्ये सर्वत्राप्यनाश्वासप्रसंगाच्च । न चेष्टापत्तिः । सुखदुःखज्ञानादिस्वरूपतत्धर्मतज्ज्ञानप्रामाण्यादिविषये साक्षिणः स्वप्नेऽपि व्यभिचारादर्शनेन नियतयाथार्थ्यस्यानुभवसिद्धत्वात् । एवमेवानादिबंधकारणीभूतात्मस्वातंत्र्यभ्रमतत्प्रामाण्यभ्रमादयोऽप्युपपादनीया इति दिगित्यस्माकं प्रतिभाति । परे तु निश्चितप्रामाण्यकमेव ज्ञानं प्रवर्तकं प्रामाण्यग्रहप्रामाण्यग्रहणादिकं तु नापेक्षितं तत्राप्रामाण्यग्रहाभावमात्रमपेक्षितम् । तत्काले प्रवृत्त्युच्छेददर्शनात् । एवं च भ्रमात्प्रवृत्तिस्थले भ्रमे प्रामाण्यभ्रमो मानस एव तत्र प्रामाण्यग्रहपरंपरानाश्रयणान्नानवस्था च । नच प्रामाण्यपरतस्त्ववादिमतेऽप्येतद्रीतिसंभवात्तन्मतेऽनवस्थारूपदूषणासंगतिरिति वाच्यम् । अन्यत्र प्रवृत्त्यादिसंभवेऽपि यादृशपारलौकिकप्रवृत्त्यादिकारणीभूतेषु सर्वेषु ज्ञानेषु प्रामाण्यविमर्शो वर्तते तदा तन्मते प्रामाण्यग्रहणपरंपराविश्रांत्ययोगः । सिध्दांते च साक्षात्साक्षिविषयीभूतपदार्थज्ञानप्रामाण्यग्रहमादाय विश्रांतत्वान्नानवस्थावकाश इत्याहुः । अन्ये तु प्रत्यक्षीया इदं साक्षात्करोमीति व्यवहारप्रयोजिका या विषयिता तन्निरूपकस्य प्रत्यक्षान्येन बाधो नास्तीति नियमः । सा च क्वचित्संन्निकर्षप्रयोज्या क्वचिद्दोषविशेषप्रयोज्या । इत्थं च सुरभि चन्दनमिति प्रत्यक्षे भासमानसौरभस्यैव प्रत्यक्षीयालौकिकविषयिताशालिनोऽनुमानादिना बाधे क्षतिविरहः । प्रकृते भ्रमनिष्ठप्रामाण्यस्य साक्षिणा ग्रहणेऽपि प्रामाण्यघटकविषयांशे साक्षीयालौकिकविषयताया एव स्वीकारात्तस्य प्रबलानुमानादिभिर्बाधेऽपि न साक्षिणो याथार्थ्यनियमभंगः । साक्षात्स्वविषय एव तदीयलौकिकाविषयत्वांगीकारात् । घटादावपि प्रामाण्यघटकतया साक्षीयालौकिकविषयतासत्त्वेऽपि तस्य परीक्षितत्वाभिप्रायेणैव मिथ्यात्वानुमानबाधकत्वतदबाध्यत्वयोरुक्तेरित्याहुः । तच्चिंत्यम् । अत्र नैय्यायिकाश्चोदयंति । सर्वत्रापि प्रामाण्यग्रहणस्य प्रवृत्त्यादिप्रयोजकत्वे

( टीका ) तदिदमुक्तमन्येनेति । ननु नीलं नभ इति प्रत्यक्षं विभुत्वाद्यनुमानबाध्यं दृष्टम् । तथा प्रादेशपरिमितश्चंद्रमा इति प्रत्यक्षमागमबाधितमुपलब्धम् । नहि गगनादेरनीलत्वादिकं प्रत्यक्षसिद्धम् । येन तत्रापि प्रत्यक्षं बाधकं स्यात् । अपौरुषेयवाक्येन बाधे मूलप्रत्यक्षस्याप्यभावात् तत्कथमेतदित्यत आह ॥

(मूलं) चंद्रप्रादेशत्वादिविषयं तु दूरस्थत्वादिदोषयुक्तत्वादपटु ।

( टीका ) चंद्रप्रादेशत्वादिविषयो यस्य तत्तथोक्तम् । नन्वत्रान्यपदार्थो न तावत्प्रत्यक्षं अयथार्थत्वात् न च ज्ञानमप्रकृतत्वात् । मैवम् । प्रत्यक्षमिव प्रत्यक्षमित्युपपत्तेः ।

---

साक्षिरूपस्वप्रकाशात्मकज्ञानस्य प्रामाण्यग्राहकत्वांगीकारेऽपि नानवस्थापगमः । साक्षिणः उत्पत्त्यभावेऽप्यभिव्यक्त्यंगीकारेण घटज्ञानप्रामाण्यविषयकत्वेन तत्प्रामाण्यघटितस्वप्रामाण्यविषयकत्वे तत्प्रामाण्यघटितप्रामाण्यांतरविषयकत्वेनेत्येवं क्रमेणाभिव्यक्त्यनवस्थायाः दुर्वारत्वादिति । अत्रेदमवधेयम् । घटज्ञानप्रामाण्यघटितं यत्साक्षिनिष्ठं प्रामाण्यं तद्धटितमपि यत्प्रामाण्यमित्येवंक्रमेण सर्वाण्यपि प्रामाण्यानि परस्परविशेषवंत्यपि साक्षिस्वरूपाण्येवात एकैवाभिव्यक्तिः सर्वविषयिणी घटज्ञानं प्रमाणं प्रमाणमिति ज्ञानं प्रमाणमिति नानाव्यवहारहेतुर्भवति । यथा घटनिष्ठघटत्वाधिकरणतातदधिकरणतानिरूपिताधिकरणत्वादीनां घटस्वरूपत्वादेकेनैव तत्प्रत्यक्षेण घटो घटत्वाधिकरणं तदधिकरणत्वाधिकरणमित्यादिव्यवहारस्तथैव प्रकृतेऽपि । अन्यथा परेषां तत्रागतिप्रसंगादिति । ननु प्रत्यक्षसिद्धस्य प्रत्यक्षेण बाधांगीकारे केनापि न बाध्यमिति मूलविरोध इत्यत आह । तदिदमिति । अन्यथा प्रत्यक्षान्यत्वबोधकमन्यपदमनर्थकं स्यात् । केनापीत्यनेनैव पूर्त्तेरिति भावः । प्रत्यक्षस्य निश्चितप्रामाण्यकप्रत्यक्षतत्प्रामाण्याधीनस्वप्रामाण्यकत्वरूपतन्मूलकत्ववदनुमानागमाद्यन्येन बाधो नास्तीति नियमे व्यभिचारं शंकते । नन्विति । दृष्टमिति । न नीलं नभ इति प्रत्यक्षाननुभवात् विभुत्वानुमानस्योक्ततन्मूलकत्वाभावात्तद्बाध्ये तत्र व्यभिचार इति भावः ॥ तथेति । आगमेति । ' अष्टाशीतिसहस्राणि विस्तीर्णे योजनानि तु । प्रमाणं तत्र विज्ञेयं कलाः पंचदशैव त्वि'त्यागमेनेत्यर्थः । उपपादनं तु व्यभिचारस्यानुमानस्थल इवानुसंधेयम् । मूले आदिपदेन नभोनैल्यग्रहणेऽपि प्रमाणपरिगणनाक्रमे अनुमानस्यागमात्पूर्वोपस्थितत्वात्तदनुसारेणानुमानबाध्यस्य नीलं नभ इत्यस्य शंकायां प्रथममुपन्यासो बोध्यः । प्रत्यक्षमिति । न च प्रत्यक्षसिद्धमिति पूर्वमूलस्थप्रत्यक्षपदतात्पर्यविषयीभूतमित्यर्थः । अयथार्थत्वादिति । यथार्थप्रत्यक्षस्यैव मुख्यत्वेन वाच्यत्वात् पूर्वस्थले तस्यैव तात्पर्यविषयत्वाच्च । प्रकृतेऽन्यपदार्थत्वेन विवक्षितस्य भ्रमत्वात्तदभेदायोग इति भावः । ज्ञानं ज्ञानत्वेन ज्ञानसामान्यं । अप्रकृतत्वात् । अनुमानाद्यबाध्यत्वेन पूर्वमनुक्तत्वात् । तथाच ज्ञानसामान्यविषये शंकापरिहारे नाकांक्षिताभिधानापत्तेरिति भावः । । मैवमिति । प्रत्यक्षमिव प्रत्यक्षमितीति । मुख्यप्रत्यक्षसदृशमत्र विशेष्यसमर्पकतयाऽनुवृत्तप्रत्यक्षपदतात्पर्यविषयीभूतं भवतीति हेतोरुपपत्तेस्तस्य बहुव्रीह्यर्थत्वे बाधकाभावादित्यर्थः ।

( टीका ) अथवा प्रत्यक्षस्य प्रकृतत्वादेवेंद्रियजन्यं ज्ञानमपि प्रकृतमित्यदोषः ।

अयमभिप्रायः । अत्र विशेष्याकांक्षायां पूर्वमूलस्थप्रत्यक्षपदं समासांतर्गतमपि प्रथमांततयाऽनुवर्त्तते । तच्च पूर्वं मुख्यवृत्त्याश्रयणबलात्प्रत्यक्षप्रमाबोधकमप्यत्र चित्रलिखितासिंहे सिंहपदमिव रूढगौण्या तत्सदृशभ्रमप्रत्यक्षबोधकं तात्पर्यवशादिति । अत्र कल्पे पूर्वमूलस्थप्रत्यक्षपदस्य तन्मुख्यार्थप्रमापरत्वे अन्येनेत्ययुक्तम् । प्रमासिद्धस्य केनाप्यबाध्यत्वात् । किंच प्रमाया अन्याबाध्यत्वे कस्याप्यविवादात्परकीयशंकानुत्थिते प्रत्यक्षसिद्धमिति वाक्यस्थप्रत्यक्षपदस्य प्रत्यक्षसामान्यपरत्वं भ्रान्यतः सिद्धांततात्पर्यापरिज्ञानिना शंकेति वक्तव्यम् । तथात्वे प्रमाया अस्मदभिप्रेतत्वमित्युक्त्यैव शंकापरिहारसंभवे दूरस्थत्वादिदोषादपटुत्वोपपादनग्रन्थो नातीवोपयोगी । किंच प्रत्यक्षप्रमासिद्धस्यान्येनाबाध्यत्वेऽभिहिते सत्यमेतत् जगत्प्रत्यक्षमप्रमेति तद्बाध्यं भवत्विति शंका सिद्धांत्यभिप्रायाज्ञानपूर्विकैवोचिता । तदुपरि जगत्प्रत्यक्षस्य प्रमात्वोपपादकग्रंथ एवापेक्षितः । न चन्द्रप्रादेशिकत्वादीत्यादिग्रन्थः भ्रांतिमूलकशंकोत्थापनतत्परिहारयोरुपयोगाभावात् कथंचिच्छिष्यबोधनार्थमिति समाधानं तु नातीव स्वरसमित्यरुच्या प्रकारांतरमाह । अथवेति । प्रत्यक्षस्य प्रत्यक्षपदमुख्यार्थभूतप्रत्यक्षप्रमारूपज्ञानस्य प्रकृतत्वात् बाधोपपादनाय बुद्धिस्थत्वात् एवकारेणेंद्रियजन्यज्ञानसामान्यं कथं प्रक्रांतमिति शंका न कार्या, हेतोः स्फुटत्वादिति सूचयति । इंद्रियजन्यं ज्ञानमपीति । अपिः समुच्चये । न केवलं प्रत्यक्षप्रमारूपं ज्ञानं किंतु भ्रमसाधारणेंद्रियजन्यज्ञानत्वावच्छिन्नमपीत्यर्थः । अपिरभिव्याप्तौ वा । इंद्रियजन्यज्ञानसामान्यमित्यर्थः । प्रकृतं पूर्वमूलस्थसमासांतर्गतप्रत्यक्षपदेन प्रकृतमित्यर्थः । अदोषः । अत्रानुवृत्ततत्पदस्य तत्तद्रूपावच्छिन्नबोधकत्वादिति भावः । अयं भावः । प्रत्यक्षप्रमाबाधेऽभिहिते प्रकृतानुमानबाधात्तत्प्रामाण्यमेवासंमतमुपजीव्यत्वेनापि तद्व्यवस्थापयितुमशक्यम् । प्रकारांशे उपजीव्यत्वायोगादिति वदंतं प्रति मास्तूपजीव्यत्वं तथापि प्रत्यक्षस्य स्वभावप्राबल्यादेव प्रकृतानुमानबाधाभावात् । प्रत्यक्षरूपबाधकांतराभावे प्रामाण्यं निर्विवादमेवेत्याशयेन प्रसक्ते तन्मूले प्रत्यक्षपदमिंद्रियजन्यज्ञानत्वरूपसामान्यधर्मावच्छिन्नपरमेव वाच्यम् । तस्यैवोभयसिद्धस्य प्राबल्यप्रयोजकत्वेन बोधनार्थमावश्यकत्वात् । ननु निर्दोषार्थेंद्रियसन्निकर्षजन्यज्ञानत्वावच्छिन्नपरम् । जगत्प्रत्यक्षे तस्य परं प्रति विवादग्रस्ततया तद्रूपावच्छिन्नस्य प्राबल्योपपादनेऽपि तेन जगत्प्रत्यक्षप्राबल्यासिद्धेस्तादृशार्थस्य प्रकृतानुपयोगापत्तेः । तथाचेंद्रियजन्यज्ञानवाचित्वात्पूर्वमूलस्थप्रत्यक्षपदस्यात्राप्यनुवर्त्तमानं तादृशधर्मावच्छिन्नं वाच्येवेति नाप्रक्रांतबोधकत्वादिदोष इति । अथवा प्रत्यक्षबाधितमिति मूले प्रत्यक्षप्रमायाः प्रत्यक्षपदमुख्यार्थत्वेन प्रकृतत्वानुसंधानमात्रेण पूर्वमूलस्थप्रत्यक्षपदस्य तत्परत्वाभिमानिनामाशंका नन्वित्यादिना प्रदर्शिता । प्रत्यक्षमिवेत्यादिसमाधानग्रंथस्य चायमर्थः । प्रत्यक्षपदस्य गौणीवृत्त्याश्रयेण प्रत्यक्षसिद्धमिति मूलस्थप्रत्यक्षपदस्य भ्रमपरत्वेनोपपत्तेरित्यर्थः । अयं भावः । न केवलमेतत्प्रघट्टिकास्थप्रत्यक्षपदं प्रत्यक्षबाधितमिति मूलानुरोधात्प्रत्यक्षप्रमापरं किंतु पूर्वमूलानुरोधात् प्रमासदृशभ्रमपरमपि । नच पूर्वमूलस्थपदं कुतो भ्रमपरमिति वाच्यम् । प्रमापरत्वे अन्येनेत्यस्य वैयर्थ्यापत्तेः प्रमायाः केनाप्यबाध्यत्वात् । तर्हि भ्रमस्यानुमानाद्यबाध्यत्वोक्तौ कथं प्रकृतप्रत्यक्षप्रमायाः प्राबल्यं सिध्यतीति चेन्न । बाध्यमपि प्रत्यक्षभ्रमात्मकं ज्ञानं

(टीका) तुशब्दो विशेषार्थः। चंद्रप्रादेशत्वादिविषयप्रत्यक्षं न जगत्प्रत्यक्षवत्। किंत्वपटु स्वार्थे पुरुषं प्रवर्तयितुं न क्षममिति यावत्। कुतः दूरस्थत्वादिदोषयुक्तत्वात्। इदमुक्तं भवति। द्विविधं ज्ञानम्। एकाकारनियतं डोलायमानं च। तत्र द्वितीयं संदेहसंज्ञां लभते। आद्यमपि द्विविधं। किंचित्स्वार्थस्य निश्चायकं यथा स्तंभोऽयं भवत्येवेति। किंचित्स्वार्थमुल्लिखदपि न तस्य निश्चायकम्। यथा सवितृसुषिरविषयम्। सचायं भेदः क्वचित्संभावनाभावाभावाभ्यां भवति। क्वचित्परीक्षापेक्षायामपि तत्प्रवृत्त्यप्रवृत्तिभ्यां क्वचिच्च प्रागेव विपरीतसंस्कारभावाभावाभ्याम्।

---

अनुमानागमाबाध्यं दृष्टं तत्कस्य हेतोः। स्वभावप्राबल्यादेवेति वक्तव्यं बीजांतराभावात्। किमुत प्रत्यक्षप्रमाया इति कैमुत्यन्यायेनैव तत्सिद्धेः। तथाच पूर्वमूले भ्रमस्यैव प्रसक्तत्वादत्रान्यपदार्थत्वं तस्य युक्तमिति। अत्र कल्पे सादृश्यरूपगौणाश्रयणायानुमित्यादिव्यावृत्तेंद्रियजन्यज्ञानत्वरूपसादृश्यघटकधर्मोपस्थितेः प्रथममावश्यकत्वात्तेनैव भ्रमप्रमोभयसाधारणरूपेणोभयबोधकत्वसंभवे प्रथममूलस्थप्रत्यक्षपदप्रक्रांतप्रमां विहाय भ्रममात्रबोधकत्वं प्रत्यक्षसिद्धेत्यत्रत्यप्रत्यक्षपदस्यानुचितमित्याशयेन तथैवाह। अथवेति॥ अभिप्रायस्तु पूर्वोक्त एव। तुशब्दस्य समुच्चयार्थकत्वं न संगच्छते। प्रमाया अपटुत्वाभावेनासमुच्चेयत्वात्। भ्रमांतराणामादिपदेनैव गृहीतत्वादित्यत आह। त्विति॥ सर्पभ्रमाद्यपेक्षयेत्यादिः। स च विशेषः प्रत्यक्षबाधितत्वेन निरूपणानर्हत्वरूपः शंककाभिमतः। अथवा जगत्प्रत्यक्षापेक्षया विशेषसूचनार्थ इत्यर्थः। स चापटुत्वरूप एव बोध्यः। प्रवर्त्तयितुमिति॥ उपलक्षणमेतत्। आप्तान् प्रत्युपदेष्टुमपीति ध्येयम्। अक्षममजनकम्। दोषयुक्तत्वात्। दोषजन्यत्वात्। ननु शंककेनानुमानागमादिज्ञाप्यमप्रमात्वरूपमपटुत्वं यदभिहितं तस्य दूरस्थत्वादिदोषप्रयुक्तत्वमभिहितं मूले तेन शंका दृढीकृतैव न परिहृतेत्यतोऽभिप्रायमाह। इदमुक्तमित्यादिना॥ उपोद्घातविधयाऽऽह। द्विविधमित्यादिना। एकाकारनियतं॥ परस्परविरुद्धत्वेन भासमानकोटिद्वयमेकत्रानवगाहमानं। डोलायमानम्। तादृशकोटिद्वयमेकत्रावगाहमानम्। निश्चायकम्। स्वोत्तरकाले स्वार्थसंदेहोत्पत्त्यभावप्रयोजकं। तत्त्वं च दोषजन्यत्वादिसंभावनारूपमानसदोषरूपापवादाभावसहितसाक्षिनिश्चितप्रामाण्यकत्वेन। न तस्य निश्चायकमिति॥ तद्विपरीतार्थग्रहोत्पत्तिं प्रत्यविरोधितत्त्वं च स्वोत्पत्तिकाल एव साक्षिणा अप्रमास्थत्वेन गृह्यमाणत्वेन। सर्वत्रेति। आसन्नमरणरोग्यादिसंबंधिज्ञानमित्यर्थः। सचायं भेद इति॥ उक्तयोर्ज्ञानयोर्मध्ये कस्यचिदुत्पत्तिकाल एव निश्चितप्रामाण्यकत्वं कस्यचिदुत्पत्तिकाल एव निश्चितप्रामाण्यकत्वाभावो प्रमाणत्वेन गृह्यमाणत्वं चेत्येतद्रूपवैलक्षण्यं चेत्यर्थः॥ क्वचिदिति॥ संभावनेति॥ भासमानधर्माभावव्याप्यधर्मविषयकोद्बुद्धसंस्कारस्मृत्याद्यभावः संभावना तद्भावाभावाभ्यामित्यर्थः॥ तत्प्रवृत्त्यप्रवृत्तिभ्यामिति॥ पूर्वं उत्पन्नेषु तज्जातीयज्ञानेषु यदा परीक्षापेक्षा तदा तेषु संवादादिरूपपरीक्षाप्रवृत्त्यप्रवृत्तिभ्यामित्यर्थः।

(टीका) तत्राद्यं निश्शंकप्रवृत्तिहेतुः । न तु द्वितीयम् । चंद्रप्रादेशत्वादिविषयं च यद्दूरस्थत्वादिदोषयुक्तं तत्परिमाणादावयथार्थमिति साक्षिणा निश्चितत्वादेकाकारविषयतया जायमानमप्यनिश्चाययदेव बाधितप्रायं जायते । ततः परं च प्रवर्तमानावनुमानागमौ प्रागेव तेन दत्तावकाशौ चंद्रप्रादेशत्वाभावादिकं निश्चिन्वानौ तद्बाधकाविवोच्येते । अतो नैतत्प्रत्यक्षस्यानुमानागमबाध्यत्वे निदर्शनमिति ।

---

पूर्वं तज्जातीयज्ञाने यत्र परीक्षायामपि प्रामाण्याप्रामाण्यान्यतरानिश्चयो न जातः इदानीमपि तत्संदिग्धप्रामाण्यकमेव जायत इति भावः । अनभ्यासवशादेरप्युपलक्षणया ग्रहः । तेनानभ्यासदशापन्नं प्रथमत एव यद्विषयकं ज्ञानं निश्चितप्रामाण्यकं न भवति तद्ग्रीजोक्तेरपि प्राप्तेर्न न्यूनता । विपरीतेति ॥ यत्र यो धर्मो भासते तत्र तदभावावगाहिनिश्चितप्रामाण्यकपूर्वज्ञानाधीनोद्बुद्धसंस्काराभावभावाभ्यामित्यर्थः । यादृशज्ञानेषु यादृशविषयविशेषे नियमेनाप्रामाण्यं तादृशव्याप्तिविषयकसंस्काराभावभावाभ्यां चेत्यर्थः । तादृशव्याप्तिविषयकोद्बुद्धसंस्कारसहितं तादृशधर्मविषयकज्ञानरूपं प्रामाण्यव्यावर्तकधर्मदर्शनबलात् प्रामाण्यग्रहप्रतिबंधात्तदगृहीतप्रामाण्यकमेव जायत इति तस्याप्युक्तापटुत्वप्रयोजकत्वं बोध्यम् । आद्यं निश्चितप्रामाण्यकं द्वितीयं अनिश्चितप्रामाण्यकम् । विपरीतसंस्कारेत्यस्य पूर्वोक्तोभयार्थत्वात् प्रथमस्योदाहरणं सवितृसुषिरप्रत्यक्षं, तत्र सवितरि सुषिराभावनिर्णयस्य पूर्वमेवारोगितादशायां सत्त्वेन तज्जन्यसंस्कारसत्त्वात् । द्वितीयार्थस्य चंद्रप्रादेशादिपरिमाणे अपटुत्वहेतुत्वं प्रकृतानुसारेणाह । चंद्रेति साक्षिणा निश्चितत्वादिति । यद्दूरस्थत्वरूपदोषजन्यं तत्परिमाणांशे अयथार्थमितिव्याप्तेः साक्षिणा निश्चितत्वात् इत्यर्थः । तथाच साक्षिणा ज्ञानस्वरूपग्रहकाले दोषजन्यत्वज्ञानतादृशव्याप्तिसंस्कारसत्त्वाप्रामाण्यग्रहप्रतिबंधपूर्वमप्रामाण्यग्रह एव जायते । दोषजन्यत्वज्ञानसहकृतसाक्षिणोऽप्रामाण्यग्राहकत्वस्य सिद्धांतसिद्धत्वादिति भावः । एवं नीलं नभ इत्यादितत्तद्भागावगाहिप्रत्यक्षाणामप्रामाण्यमेव गृहीतं वर्तते तस्यैव समीपगतौ नीलरूपाभावप्रत्यक्षनिश्चयात् । तथाच पूर्वापरिचितनभोभागे नीलरूपावगाहिप्रत्यक्षे तादृशप्रत्यक्षत्वस्य रूपांशे प्रामाण्याभावव्याप्यत्वसंस्काररूपविपरीतसंस्कारसाहित्येन साक्षिणा भ्रमत्वं गृह्यते । यदि परिचितभागे पुनः पुनर्दूरस्थस्य नीलरूपभ्रमस्थस्य तद्भागे नीलरूपाभावसंस्कारः पूर्वोक्तसंस्कारश्चेत्युभयमपि तत्र साक्षिणा भ्रमत्वग्रहे उपयोगीति ध्येयम् । तेन दत्तावकाशाविति । तद्रूपनिश्चयेनाप्रतिबंधप्रयुक्तोत्पत्तिशालिनावित्यर्थः ॥ बाधकाविवेति ॥ तत्र स्वयमेवाप्रामाण्यनिश्चायकाविवेत्यर्थः ॥ उच्येत इति ॥ तद्विरुद्धार्थविषयकव्यवहारादिहेतुत्वरूपतद्गुणयोगेनेत्यर्थः । तथाचायं प्रघट्टिकार्थः । यादृशनिश्चयेऽप्रामाण्यानास्कंदिते सत्यपि यादृशज्ञानमुत्पन्नं सत् पूर्वज्ञानसजातीयज्ञानांतरं विरुणद्धि पूर्वज्ञानेऽप्रामाण्यग्रहमुत्पाद्य तन्निर्वाह्यप्रवृत्त्यादिकार्योच्छेदादिकं वा करोति तत्तस्य बाधकमिति स्थितिः । प्रकृते च चंद्रप्रादेशपरिमितत्वनभोनैल्यावगाहिप्रत्यक्षमुक्तरीत्या प्रामाण्याज्ञानास्कंदितमेव जायते । तत्सत्ताकाले उत्पन्नस्यागमिकादिनिश्चयस्य तदप्रामाण्यग्रहं प्रत्युत्पादकत्वं नास्ति तस्य पूर्वमेव सिद्धत्वात् । तत्सजातीयग्रहांतरं तु दोषवशाज्जायत इति नास्य प्रत्यक्षबाधकत्वं किंतु तद्विपरीतार्थविषयकत्वमात्रेणोपचारेण बाधकमिति

व्यवहार इति । ननु यस्य पुरुषस्य पूर्वोक्तक्रमेण विपरीतसंस्कारो न जातः नहि सर्वेषां तादृशविमर्शो वर्तत इत्यत्र प्रमाणमस्ति । तस्य पुरुषस्य प्रथमतश्चंद्रप्रादेशपरिमित एवेति अप्रामाण्यग्रहानास्कंदितधीरेव जायते । तस्य चागमप्रामाण्यश्रद्धाबलादेवागमवाक्येन बाधनिश्चय एवमाप्तपित्रादिवाक्येन च तत्र प्रात्याक्षिकनिश्चयस्यागमेन बाधितत्वान्न च प्रत्यक्षसिद्धमन्येनेत्याद्यमयुक्तमेवेति चेन्न । आगमे ईश्वरादिप्रत्यक्षसिद्धार्थबोधकत्वाभिमानेन पित्रादिवाक्ये च तत्प्रत्यक्षसिद्धार्थबोधकत्वाभिमानेन श्रद्धोत्पत्त्या प्रत्यक्षमूलकागमेनैव बाधितत्वप्राप्त्या पूर्वोक्तनियमे व्यभिचाराभावात् । यदि च प्रत्यक्षसंवादित्वाद्यभिमानाभावेऽपि श्रद्धाविशेषवतः आगमादेव बाधो अनुभवसिद्ध इत्युच्यते तदेदं भवतैवोच्यताम् । तद्दृष्टांतेन सर्वस्याप्यागमस्य प्रत्यक्षबाधकत्वमुच्यते उत कस्यचित् तथात्वं कस्यचिन्नेति । नाद्यः । वेदः सर्वोऽपि प्रतीतार्थ एव प्रमाणमिति श्रद्धावतः यजमानप्रस्तरभेदप्रत्यक्षे अप्रामाण्यग्रहोत्पत्त्या तस्य बाधितत्वप्राप्त्या तद्वाक्यस्य यथाश्रुतार्थपरित्यागाभावप्रसंगात् । येन यत्राप्रामाण्यप्रमोदेति तत्तस्य बाधकमित्युच्यते । नच यजमानभेदप्रत्यक्षाप्रामाण्यधीः प्रमेति चेत्तर्हि चंद्रप्रादेशपरिमितत्वादिधीरपि कुतो भ्रम इति तदप्यबाध्यमेव स्यात् । अतो न प्रत्यक्षस्यागमबाधः । न द्वितीयः व्यवस्थापकाभावात् । प्रबलप्रत्यक्षानुसारित्वतदननुसारित्व एव व्यवस्थापके प्रादेशपरिमितत्वाभावबोधकागमस्तु तादृशपरिमाणप्रत्यक्षे अयाथार्थ्यावगाहिसाक्ष्यनुसारीति चेत्तर्हि प्रत्यक्षानुसारित्वेनाननुसंधीयमानागमेन प्रत्यक्षसिद्धार्थस्य न बाध इत्यस्या व्याहतिरेव । नच तथापि पूर्वोक्तरीत्या यस्यागमप्रामाण्यश्रद्धामात्रेण प्रादेशपरिमितत्वग्रहाप्रामाण्यग्रहो ननु तस्योक्तप्रत्यक्षानुसारित्वग्रहेण तादृशाप्रामाण्यग्रहस्य वस्तुतः प्रमात्वेनावयोः सम्मततया अप्रामाण्येनागृहीतप्रत्यक्षस्य प्रत्यक्षानुसारित्वादिरूपतन्मूलकत्वेनाननुसंधीयमानागमानुमानादिना भ्रमत्वग्रहरूपबाधो नास्तीति नियमस्य व्यभिचारस्त्वागत एवेति वाच्यम् । तादृशश्रद्धावतः पुरुषस्य तद्वाक्यस्यार्थविशेषणबोधतात्पर्यग्रहानंतरं तद्विरुद्धार्थकत्वज्ञानाधीनद्वेषेण लिंगाद्यनुसंधानादिविमर्शं विनैव स्वोत्प्रेक्षयैवाप्रामाण्योपस्थित्या मानसप्रत्यक्षात्मकाप्रामाण्यग्रहो जायते असूयया गुणिनि दोषबुद्धिवत् । अतः पूर्वतनबोधे मानसाप्रामाण्यग्रहोत्तरमेवागमेन स्वार्थबोधजननांगीकारेण तत्रागमेन प्रत्यक्षाप्रमात्वग्रहानुत्पत्त्या व्यभिचारानवकाशात् । यत्र प्रथमत एव कस्मिंश्चिदर्थे आगमेन दृढतरनिश्चयस्तद्विरुद्धार्थावगाहिप्रत्यक्षे तच्छ्रद्धामात्रेणाप्रामाण्यग्रहस्तत्र जायमानप्रत्यक्षे विपरीतसंस्कारवशादप्रामाण्यग्रहास्कंदितमेव जायत इति न तत्रापि व्यभिचारावकाशः । अन्यथा लिंगविशेषे घटाभावव्याप्यत्वं वाक्यविशेषे श्रद्धाबलादेव निश्चितवतः घटप्रत्यक्षस्थलेऽपि तादृशं लिंगं श्रद्धावशादेव निश्चिन्वतस्तत्र घटप्रत्यक्षमवधूय घटाभावानुमितिरप्यंगीकार्या स्यादविशेषादिति बाधस्य सर्वतांत्रिकसिद्धानुमित्यसाधारणदोषत्वमुच्छिद्येतेत्युक्तरीतिरेवाश्रयणीया । यद्वोक्तबाधकबलादेव श्रद्धाविशेषरूपदोषानुपजीव्यागमानुमानाबाध्यत्वं प्रत्यक्षनिश्चयस्येति नियमोऽगीकार्य इति न काऽप्यनुपपत्तिः । यत्तु दूरस्थत्वादिदोषजन्यत्वग्रहाच्चंद्रपरिमाणादिप्रत्यक्षे भ्रमत्वज्ञानांगीकारे इयमनुमितिरूपैवेति प्रत्यक्षसिद्धस्यानुमानबाध्यत्वाभावोपपादनायैतत्कथनमत्यंतसाहसम् । एवं तत्रागमतात्पर्यविषयीभूतार्थविरुद्धविषयकत्वालिंगेनैव प्रत्यक्षाप्रामाण्यग्रहो जायत इति । ततुच्छम् । तत्र विपरीतसंस्कारसहितसाक्षिणैवाप्रामाण्यग्र-

( टीका ) नन्वेवमेव तर्हि जगत्प्रत्यक्षस्यापटुत्वे यद्यपि नानुमानागमौ तस्य बाधकौ ।

---

ह्यंगीकारात् । तस्य च विशेषदर्शनसहकृतसामग्र्यधीनप्रत्यक्षरूपत्वात् । अन्यथा संशयोत्तरं स्थाणुत्वाभावव्याप्यकरचरणादिज्ञानसहकृतचक्षुरादिजन्यज्ञानस्याप्यनुमितिरूपत्वापत्तेः । यदि तत्र साक्षात्कारित्वानुभवात् प्रत्यक्षसामग्र्या अनुमितिप्रतिबंधकत्वाच्च नानुमितिरित्युच्यते प्रकृतेऽपि तदविशिष्टम् । प्रकृते ज्ञानस्य ज्ञातैकसत्त्वात्तदुत्पत्तिक्षण एव तत्प्रत्यक्षस्यावश्यकतया तस्यैव पूर्वतनदोषजन्यत्वग्रहाद्यधीनविपरीतसंस्कारवशात् भ्रमत्वविषयकत्वेनोपपत्तौ तज्ज्ञानप्रत्यक्षोत्तरोत्पन्नपरामर्शबलात्तत्रानुमित्यंगीकारे मध्ये लिंगज्ञानपरामर्शांतरादिकल्पनागौरवापाताच्च । अपिच तद्बाधकत्वं नाम तत्काले तदुत्तरकाले वा तद्विपरीतार्थावगाहितया उत्पद्यमानत्वे सति तत्राप्रामाण्यग्रहप्रयोजकत्वम् । नहि चंद्रपरिमाणज्ञानधर्मिकाप्रामाण्यधीर्युक्तिजन्या चंद्रे परिमाणाभावमवगाहते । भ्रमत्वघटकतया तद्भानेऽपि न चंद्रत्वावच्छिन्ने तद्भानं तदंशे निर्धर्मितावच्छेदककत्वात् । लौकिकसन्निकर्षदोषविशेषाजन्यज्ञानमात्रे विपरीतनिर्णयस्य प्रतिबंधकतया चंद्रत्वावच्छिन्ने भ्रमत्वघटकतयाऽपि तद्भानायोगात् । चंद्रविषयकत्वावच्छेदेनोक्तभ्रमत्वभानमात्रेण तत्र तादृशपरिमाणादिविषयव्यवहाराद्युच्छेदात् । तस्मात्तत्र प्रत्यक्षस्योक्तरीत्या भ्रमत्वज्ञानास्कंदितत्वेनैव जातत्वान्न युक्तिबाध्यत्वं, क्वचिच्च प्रत्यक्षमूलकत्वेनानुसंधीयमानयुक्त्यादिबाध्यत्वमेवेति युक्तम् । प्रत्यक्षविरोधग्रहकालेऽनेकार्थतयाऽनुसंधीयमानशब्दस्य तद्विरुद्धार्थे तात्पर्यग्रहस्यैवायोगेन तादृशलिंगांतरानुसंधानस्याप्ययोगाच्च । ननु चंद्रप्रादेशिकत्वप्रत्यक्षे न प्रागेव दुष्टकरणकत्वनिश्चयः । नैकट्यस्यापि क्वचिद्दोषत्वेन सर्वत्र परिमाणज्ञानाविश्वासप्रसंगात् । सवितृसुषिरादिप्रत्यक्षस्य न पूर्वतनविपरीतप्रत्यक्षेण बाधः एतदुत्पत्तिकाले तदभावात् । नापि तज्जन्या स्मृतिरनुभवापेक्षया दुर्बलत्वात् । तस्मात्तत्र तादृशप्रत्यक्षं युक्त्युत्थापकमेव । चंद्रप्रादेशपरिमितत्वादेरागमेन बाधोत्तरमेव दूरस्थत्वस्य दोषत्वकल्पनमेवं जगत्प्रत्यक्षस्यापि युक्त्यागमाभ्यां बाधग्रहोत्तरमेवाविद्यादिरूपदोषजन्यत्वं कल्प्यत इति चेन्न । यत्र दूरस्थत्वं तद्विषयकपरिमाणप्रत्यक्षस्य भ्रमत्वमित्यन्वयव्यतिरेकदर्शनेन दूरस्थत्वस्य दोषत्वनिश्चयात् । नैकट्यस्थलेऽपि क्वचित्परिमाणभ्रमदर्शनाद्व्यतिरेकायोग इति चेन्न । नैकट्यविशेषस्य परिमाणावगाहिभ्रमविशेषजनकत्वेऽपि दूरस्थत्वस्य परिमाणावगाहिभ्रमविशेषे तृणारणिमणिन्यायेनान्वयव्यतिरेकविधारणस्याव्याहतत्वात् । अन्यथा सर्वत्रापि भ्रमत्वावधारणोत्तरमेव कस्यचिद्दोषत्वेन प्राप्त्या दूरस्थत्वस्यैव दोषत्वं नान्यस्येत्यवधारकाभावेन दूरस्थत्वादिरनुगतदोषस्य दोषत्वनिर्णयाभावप्रसंगात् । सवितृसुषिरशंखपीतत्वादिप्रत्यक्षप्राक्क्षणे तद्विपरीतप्रत्यक्षाभावेऽपि निश्चितप्रामाण्यककालांतरीणतादृशप्रत्यक्षाधीनसंस्कारसहितसाक्षिणो भ्रमत्वग्राहकत्वस्य पूर्वमुक्तस्य संभवे, मध्ये युक्त्यंतरानुसंधानादेरनुभवविरुद्धत्वात्पूर्वोक्तरीत्या गौरवाच्च । निरपवादसाक्षिणा निश्चितप्रामाण्यके जगत्सत्यत्वप्रत्यक्षे जागरूके सति परीक्षकाणामभ्रांतानां तद्विरुद्धार्थावगाह्यागमे तादृशार्थतात्पर्यकत्वस्यैवाग्रहेण तज्जन्यतादृशबोधायोगात्तत्साहाय्यस्याप्यभावेऽनुमानस्य सुतरां बाधितत्वान्मिथ्यात्वानुमित्यभावात्प्रत्यक्षभ्रमत्वज्ञानस्यैवानुदयेनाविद्यायाः दोषत्वकल्पनायाः सुदूरपराहतत्वादिति कृतं पल्लवितेन । जगत्प्रत्यक्षस्यापि नभोनैल्यादिप्रत्यक्षस्येवापटुन एवोत्पत्तिरित्यभिमानेन शंकते । नन्वेवमेवेति । अपटुत्वे अप्रामाण्यज्ञानास्कंदितत्वे पूर्वमेव सतीति शेषः । बाधकाविति ।

(टीका) तथापि तेनाबाधितौ विश्वमिथ्यात्वं निश्चेष्यत इति चेत् ॥ तात्किं चंद्रप्रादेशत्वादिविषयवत् प्रतिभासतोऽपटुता कल्प्यते । उत प्रमाणांतरेण। नाद्यः। सत्यस्तंभो भवत्येवेति निश्चायकतयैवावभासनात् तदिदमुक्तं प्राक् प्रत्यक्षसिद्धमिति । सिद्धं निश्चितम् । द्वितीयं निराचष्टे ।

(मूलं) नच जगत्प्रत्यक्षस्यापटुत्वे किंचिन्मानम् । ॥७२॥

(टीका) जगत्प्रत्यक्षस्य वियदादेरात्मभेदस्य च सत्यताग्राहिप्रत्यक्षस्य । ननु यथा मायाजन्यैंद्रजालिकार्थस्याविद्याजन्यमरीचिकोदकस्य च प्रत्यक्षमपटूत्पद्यते । तथांबरादिकं दुःखादिकं च मायाविद्यालक्षणाज्ञानजन्यमिति तत्प्रत्यक्षेणाप्यपटुना भवितव्यम् । यद्यपि अज्ञानजन्यत्वानुसंधानविधुराणां तत्पटूत्पद्यते । तथापि तदनुसंधानवतां जायमानेन कथमपटुना न भाव्यम् । तस्मिंश्चानुमानागमाभ्यामपहस्तितेऽन्यदपि तत्स्वार्थप्रच्युतं भविष्यति । तत्कथं जगत्प्रत्यक्षस्यापटुत्वे मानाभाव इति चेत् स्यादपीदम् ।

---

अप्रामाण्यज्ञानस्य पूर्वमेव सिद्धत्वान्नानयोस्तज्ज्ञापकत्वरूपबाधकत्वमिति भावः । प्रतिभासत इति । अप्रामाण्याज्ञानास्कंदितत्वेनोत्पत्त्यनुभवेनेत्यर्थः । आत्मभेदस्य चेति ॥ आत्मनां परस्परमीश्वराच्च भेदोऽन्यत्रोक्तरीत्या प्रत्यक्षविषयः सत्यत्वेनैव भासत इति भावः । यत्तु ईश्वरादिभेदो न प्रत्यक्षः योग्यानुपलब्धिविरहात् । यद्यहं सर्वज्ञत्वादिगुणविशिष्टेश्वराभिन्नः स्यां तद्गुणवत्त्वेनानुभूतः स्यामित्याद्यापादनं न संगच्छते । विद्यमानस्यापि सार्वज्ञस्यावरणादिनाऽभिभवसंभवेनापत्त्ययोगादिति । तत्तुच्छम् । उक्तरीत्या निर्मूलशंकायाः घटादिस्थलेऽपि कस्यचित्संभवेन तत्रापि योग्यानुपलब्ध्यसंभवप्राप्त्या घटपटभेदतदभावप्रत्यक्षादेरप्यभावप्रसंगात् । अहमिदानीं नित्याभिव्यक्तसार्वज्ञाश्रयाभिन्नः स्यामिदानीं तथोपलब्धः स्यामिदानीमनुभूयमानदुःखाश्रयाभिन्नः तादृशदुःखवत्त्वेनानुभूतःस्यामित्याद्यापादनसंभवाच्च । इदानीमभिव्यक्तेऽनभिव्यक्तत्वशंकाया व्याहतत्वेनानुदयाच्च । यत्तु भेदधिक्कारादौ सर्वस्यापि भेदप्रत्ययस्य कारणानिरूपणात् अविद्यामात्रमूलत्वाद्भ्रमत्वमित्युक्तं तत्तु भेदादिनिराकरणयुक्तीनामिव जात्युत्तरत्वात् सत्त्वावगाहिप्रत्यक्षबाधाक्षमाकिंचित्करम् । नन्वागमांतरेण जगति अंबरादौ दुःखादौ मायाविद्याजन्यत्वग्रहो जायते । तज्जन्याविषयकप्रत्यक्षे भ्रमत्वस्य बहुशो दृष्टत्वेन तत्र दोषत्वनिश्चयात्तन्मूलकसंस्कारसहितसाक्षिणा भ्रमत्वेन गृह्यमाणमेव जगत्सत्यत्वप्रत्यक्षं येषां प्रेक्षावतां जायते तेषामागमेनानुमानेन च जगति मिथ्यात्वनिश्चयो भवत्येवेत्याशंकते ॥ नन्वित्यादिना ॥ अज्ञानजन्यत्वं जगति वर्तत इत्यत्र मानाभावान्नैषा प्रक्रिया युक्तेत्याह । स्यादपीत्यादि । नन्वज्ञानजन्यत्वानिश्चयायोगेऽपि जगत्प्रत्यक्षमागमबाध्यं प्रत्यक्षत्वाच्चंद्रपरिमाणप्रत्यक्षवदित्यनुमानेन सामान्यतो बाध्यत्वानिश्चयोत्तरमागमादिप्रवृत्तिः संभवतीति चेन्न । दृष्टांतासिद्धेः पूर्वमेवोपपादितत्वात् । अथापि स्यात् । प्रत्यक्षस्य विरुद्धार्थकागमरूपप्रमाणांतरोपस्थितौ कल्प्तदोषाभाववत्त्वेन समबलतयोपस्थित्याऽन्यतरत्वरूपेण प्रामाण्यसंदेहादनयोः किं प्रमा-

णमिति जिज्ञासा जायते सत्प्रतिपक्षस्थले परामर्शद्वय इव । तदनन्तरमहं ब्रह्मास्मि नेह किंचिदस्तीत्यादिरूपभाविबाधशंकया प्रत्यक्षत्वावच्छिन्नेऽप्रमाणत्वसंभावनायामागमेन मिथ्यात्वसिद्धिर्निष्प्रत्यूहैव भवतीति । मैवम् । प्रत्यक्षविशेषेऽप्रामाण्यसंभावनायामपि निश्चितप्रामाण्यकप्रत्यक्षांतरविरुद्धार्थे आगमप्रामाण्यग्रहणायोगात्सर्वेष्वपि प्रत्यक्षेष्वप्रामाण्यशंकैव वक्तव्या ।तथाचागमप्रामाण्यावगाहिसाक्षिप्रत्यक्षवेदापौरुषेयत्वावगाहिज्ञानप्रामाण्यप्रत्यक्षाद्यावध्यप्रामाण्यशंकया वेदप्रामाण्यसिद्धेरेवायोगेन तेनार्थसिद्धेर्दूरोत्सारितत्वात् । नच प्रत्यक्षे पारमार्थिकप्रामाण्यसंदेहेऽपि व्यावहारिकप्रामाण्यानिश्चयादेवागमप्रामाण्यादिसिद्धिर्भवतीति वाच्यम् । अप्रामाण्यप्रयोजकत्वेन क्लृप्तदोषाभाववत्त्वेन समबलतयोपस्थितयोरुभयोः पारमार्थिकविषयकत्वघटितप्रामाण्यसंदेहकाले एकत्रैव व्यावहारिकविषयकत्वघटितप्रामाण्यमन्यस्य पारमार्थिकत्वघटितमिति निर्णायकाभावादागमेऽपि व्यावहारिकप्रामाण्यस्यैव सिध्या यत्त्वागमार्थस्याद्वैतब्रह्मणोऽपि व्यावहारिकस्यैव सिध्यापातात् ।नचोपक्रमादितात्पर्यलिंगबलात्तस्य पारमार्थिकप्रामाण्यमेव सिध्यतीति वाच्यम् । उपक्रमादीनां तात्पर्याध्यवसायकत्वेन पारमार्थिकप्रामाण्यनिर्णायकत्वाभावात् । आगमार्थनिर्णयात्प्राक् सत्तात्रयादेरसिद्धेस्तद्घटितप्रामाण्यस्वरूपस्यैवासिद्धत्वाच्च । नचाद्वैतागमविरुद्धग्राहिप्रत्यक्षाप्रामाण्यशंकैव जायते न सर्वप्रत्यक्षेष्विति वाच्यम् । आगमस्वरूपतत्प्रामाण्यादेरपि निर्भेदचित्सत्ताविरोधित्वात् शंक्यमानबाधप्रत्यक्षेऽप्यप्रामाण्यशंकया प्रथमं बाधकप्रमात्वरूपविशेषेण विशिष्टघटितस्वरूपबाध्यत्वकोट्यप्रसिध्या तत्संशयायोगाच्च । प्रत्यक्षस्य शब्दलिंगबाध्यत्वे प्रत्यक्षांतरस्य बाधकप्रमारूपत्वाभावे बाधकसामान्याभावस्यैव निश्चयाच्च । न च बाधकानामियत्तावधारणायोगात्तदभावावधारणायोग इति वाच्यम् । प्रत्यक्षानुमानागमत्वादिरूपविशेषधर्मावच्छिन्न(प्रतियोगिक) निरूपित विशेषाभावस्योक्तरीत्या ग्रहोत्तरं बाधकसामान्याभावग्रहस्य प्रेक्षावतां संभवात् ।अन्यथा विशेषाभावेन सामान्याभावनिर्णयः कुत्रापि न स्यात् । नच चरमवृत्त्यात्मकप्रत्यक्षस्य वाचस्पतिरीत्या मानसस्य शुद्धब्रह्मविषयकत्वेन प्रमात्वात् तस्य प्रमात्वे मिथ्यात्वागमविरोधाभावेन तत्प्रामाण्यग्रहात्तदतिरिक्तप्रत्यक्षसामान्ये तद्बाध्यत्वशंका संभवतीति वाच्यम् । तादृशबाधकज्ञानसद्भावे प्रमाणाभावेन तस्यानुपस्थित्या तद्बाध्यत्वशंकोत्पत्त्यसंभवात्। स्वोत्प्रेक्षामात्रेण शंकायां ब्रह्मज्ञानस्याऽपि शून्यज्ञानबाध्यत्वशंकया प्रमात्वग्रहानुपपत्तिः । वेदे पौरुषेयत्वसत्त्वेऽपि क्लृप्तदोषातिरिक्तदोषशंकाया दुरुच्छेदेन प्रामाण्यसिद्धेर्दुर्लभत्वापत्तेः । नच ज्ञाते द्वैतं न विद्यत इत्यादीनि जगद्बाधकसद्भावे प्रमाणानि संत्येवेति वाच्यम् । निरासिष्यमाणत्वात् । अपिच भ्रमप्रतीतव्यावर्तकाकारवदधिष्ठानदर्शनस्यैव भ्रमनिवर्तकतया जगद्भ्रमनिवर्तकज्ञानस्य सप्रकारकत्वावश्यकत्वे पारमार्थिकप्रामाण्ये द्वैताभावश्रुतिप्रामाण्येऽनुपपत्तिः । नच विशिष्टांशे भ्रमत्वान्नाद्वैतहानिः, शुद्धस्वरूपांशे पारमार्थिकप्रामाण्यग्रहसंभव इति वाच्यम् । घटत्वादिविशिष्टस्वरूपग्राहिप्रत्यक्षेऽप्येतादृशप्रामाण्यसंभवे विशिष्टघटादेरागमेन निषेधेऽपि शुद्धस्वरूपस्य सत्त्वादद्वैतब्रह्मसिध्यनुपपत्तिः । जगद्बाधकज्ञानस्य किंचिदंशे भ्रमत्वं घटादिप्रत्यक्षे तु सर्वांशे भ्रमत्वमित्यत्र प्रमाणाप्रवृत्तेः । नच घटादिशुद्धस्वरूपं ब्रह्मैवेति वाच्यम् । चितो जडस्वरूपताया असंभावितत्वात् । ननु निष्प्रकारकमेव ब्रह्मज्ञानं बाधकम् । नच तस्य बाधकत्वायोगः । पृथिव्यास्तादात्म्येन गंधव्याप्यत्वनिश्चये तदधी-

नोद्बुत्धसंस्कारे वा सति शुद्धपृथिवीत्वावच्छिन्ने गंधाभावविषयकानाहार्यज्ञानानुदयवत् तादात्म्येन ब्रह्मणो द्वैताभावव्याप्यत्वेन गृहीतत्वात् तत्संस्कारवशात् शुद्धब्रह्मज्ञानोत्तरं शुद्धब्रह्मणि द्वैतबुद्धिर्नोत्पद्यत एवेति बाधः प्राप्त एवेति चेन्न । तर्हि ब्रह्मविशेष्य द्वैतग्रहत्वावाच्छिन्नं प्रति ब्रह्मणि द्वैताभावनिरूपिततादात्म्यसंबंधावाच्छिन्नव्याप्यताग्रहस्यैव प्रतिबंधकत्वप्राप्त्या निष्प्रकारकज्ञानस्य बाधेऽकिंचित्करत्वेन तद्बाध्यत्वोक्तेरयुक्तत्वात् । किंच यत्धर्मावच्छिन्ने तादात्म्येन यदभावनिरूपितव्याप्यताज्ञानं तत्धर्मावच्छिन्ने तत्प्रकारकधीर्न जायते इत्येव वक्तव्यम् । अन्यथा गंधव्याप्या एतावन्मात्रज्ञानोत्तरं पृथिवीति ज्ञानोत्तरं पृथिवी गंधाभाववतीति बुद्धेः पृथिवीतादात्म्येन गंधव्याप्यवती गंधव्याप्या वेति बुत्ध्युत्तरं नीलरूपवती गंधाभाववतीति बुद्धेर्गंधाभाववतीति निर्धर्मितावच्छेदकबुद्धेश्चानुत्पत्त्यापत्तेः । प्रकृते च ज्ञानत्वानंदत्वादिब्रह्मत्वावाच्छिन्ने तादात्म्येन द्वैताभावव्याप्यताग्रहेऽपि सत्त्वावच्छिन्ने घटादिरूपद्वैतप्रपंचावगाहिबुद्धेरेकत्र द्वयमिति रीत्या सत्त्वघटोभयावगाहिबुद्धेर्निर्धर्मितावच्छेदककजगद्बुद्धेरुदये बाधकाभावात् । सत्त्वावच्छिन्नस्य शुद्ध इव तादात्म्येन घटादावपि सत्त्वेन तत्र द्वैताभावाभावेन व्यभिचारितया श्रुतेस्तादृशव्याप्यव्यापकभावबोधे तात्पर्यायोगाच्च । सत्त्वज्ञानत्वाद्युपलक्षितशुद्धस्य संसृष्टतया न किंचिद्व्याप्यत्वमपि । अधिकमखंडार्थभंगे वक्ष्यामः । एवं दुःखादिविषयकसाक्षिप्रत्यक्षस्याजन्यत्वादागमसाम्याद्य तत्राप्रामाण्यशंकोचिता । न केवलं चैतन्यं साक्षी किंतु वृत्तिप्रतिबिंबितं, वृत्तेश्च जन्यत्वाद्दोषसंभावना युक्तेति चेत् । अद्वैततात्पर्यग्रहस्याप्यागमे दोषत्वसंभवात् । नचाद्वैततात्पर्यग्रहस्य प्रत्यक्षाद्यविरोधेन प्रमात्वात्कथं दोषत्वमिति वाच्यम् । प्रत्यक्षाविरोधेऽपि सर्वमिथ्यात्वपरत्वे स्वस्यैव मिथ्यात्वप्राप्त्या न कस्यापि सिद्धिः स्यादित्यादितर्कबाधितत्वेनाप्रमात्वोपपत्तेः । चाकचक्यप्रमयैव रजतभ्रमोत्पत्त्या प्रमात्वस्य दोषत्वाव्यावर्तकत्वाच्च । वस्तुतः साक्षिणः सुखादिविषये वृत्त्यंगीकारे तत्समकाले तथात्वमंगीकार्यमन्यथा ज्ञातैकसत्त्वानुपपत्तेः । वृत्तेरपि तथात्वात्तस्याः स्वप्रकाशत्वस्य जडत्वेन वक्तुमशक्यत्वात्तत्समकालवृत्त्यंतर एवमन्यापि वृत्तिरित्यनंतवृत्तीनां यौगपद्यापातेन वृत्तेरंगीकर्तुमयुक्तत्वेन साक्षिण एव स्वप्रकाशस्य सुखादिसाक्षात्कारत्वात् । नच सुखादौ वृत्त्यनंगीकारे मनसि तत्संस्कारानुपपत्तिः कारणाभावादिति वाच्यम् । साक्षिसंबंधबलादेव मनसि संस्कारोत्पत्तौ बाधकाभावात् । ननु शुद्धचितः साक्षित्वेऽपि तस्य भ्रमप्रमासाधारण्यात्तत्राप्रमात्वसंदेहो युक्त इति चेन्न । तस्य प्रमात्वनैयत्यस्योपपादितत्वात् । अन्यथा सौषुप्तिकानंदानुभवे भासमानानंदस्वरूपेऽप्यनुभवस्याप्रामाण्यशंकयाऽऽत्मनि निरुपाधिकप्रेमास्पदत्वादिकमपि न सिध्येदिति दिक् । तस्माद्बाविबाधनिश्चयशंकयोरुभयोरपि प्रेक्षावतामसंभावितत्वात्प्रत्यक्षबाधः सुस्थिर एवेति । यच्च घटः सन्नित्यादौ त्रिकालाबाध्यत्वादेरयोग्यत्वेन भानायोगात् सत्ताजात्यादीनां भाने घटः सन् सामान्यं सत् अभावः सन्नित्यादि प्रतीतीनां संबंधांशेऽप्यनुभूयमानस्यैकाकारत्वस्यानुपपत्ते रधिष्ठानब्रह्मसत्त्वमेव भासत इत्यभ्युपेयमतो मिथ्यात्वं दुर्वारमिति।तन्नु त्रिकालाबाध्यत्वस्य प्रत्यक्षविषयत्वोपपादनात्सर्वत्र स्वरूपसत्त्वभाने बाधकाभावात्तस्यापि कालसंबंधाविरूपस्य मिथ्यात्वग्रहविरोधिताया उपपादितत्वात्सन् घट इति प्रतीतौ सत्त्वस्य ब्रह्मरूपाधिष्ठानांशे येन संबंधेन भानं तादृश एव संबंधो भ्रमे कल्पितो घटे भासत इत्यभ्युपेयमन्यथा : सद्ब्रह्म घटः सन्निति प्रतीत्योः संबंधांशे एकाकारत्वाभावप्रसंगात् । तथाच सत्त्वसंबंधद्वयविषयताद्वयादिकल्पनागौरवप्रसंगाच्चापास्तम् । यत्तु सन् घट

( टीका ) यदि जगतो अज्ञानजन्यत्वे मानं स्यात् । न चैतदस्तीत्याह ॥

( मूलं ) नच जगतो अज्ञानजन्यत्वे किंचिन्मानम् ॥७३॥

( टीका ) न केवलं जगतोऽज्ञानजन्यत्वे मानाभावः । अपि तु प्रमाणविरोधश्चेति दर्शयन् वियदादेः ईश्वरमायाजन्यत्वाभावे तावदनुमानं व्याप्तिपक्षधर्मतोपपादनप्रयासनिरासाय पुराणवाक्येनैव दर्शयति ।

(मूल) नच मायाविना माया दृश्यते विश्वमीश्वरः । सदा पश्यति तेनेदं न मायेत्यवधार्यताम् । ॥७४॥

( टीका ) चशब्दो यस्मादित्यर्थे । अवधारणे वा । मायाविना पुंसा माया नैव दृश्यते इति व्यतिरेकव्याप्तिप्रदर्शनं । विश्वमीश्वरः सदा पश्यतीति पक्षधर्मतोपपादनम् । सदेति स्वरूपकथनम् । मायावी मायामपि परोक्षतो जानातीति व्यभिचारपरिहाराय दृशिग्रहणम् । दृशिर्हि साक्षात्कारे वर्तते । तेनेदं न मायेति साधनत्वख्यापनेन साध्यनिर्देशः । नेश्वरमायाजन्यमिति यावत् । इयमत्र प्रयोगपरिशुद्धिः । अंबरादिकं नेश्वर ( मायिकं ) मायाजन्यं तेन दृश्यमानत्वात्, यद्यन्मायाजन्यं न तत्तेन दृश्यते यथैंद्रजालिकं वस्तु मायाविना । कथमृजावन्वये सति वक्रो व्यतिरेक आद्रियत इति चेन्न । व्याप्तिप्रदर्शनं व्यभिचाराभावोपपादनं चेति लाघवेनोभयं लभ्यत इत्यर्थत्वात् । ननु मायाविनैंद्रजालिकं वस्तु मादर्शि, परमेश्वरेण दृश्यमानमपि वियदादिकं तन्मायामयं किं न स्यात् । तथाच विपक्षे बाधकाभावान्नेदं मायामयमित्यवधारणानुपपत्तिरिति चेन्न । मायायाः लोकोपमत्वेऽदृष्टकल्पनाप्रसंगात् ।

---

इति प्रतीतेः सत्तादात्म्यावगाहित्वात्तस्य मिथ्यात्वग्रहाविरोधित्वमिति, तत्तु त्रैकालिकनिषेधप्रतियोगित्वे सति सत्तादात्म्यवत्त्वमिति लक्षणस्य व्याहत्युपपादनेनैव निरस्तप्रायमिति । न केवलमिति ॥ भाविबाधोऽप्युपलक्षणया ग्राह्यः । प्रमाणेति ॥ आगममूलकानुमानरूपप्रमाणविरोध इत्यर्थः । न मृषेत्यनेनाबाधितज्ञानस्य परमेश्वरस्य जगत्प्रत्यक्षोक्त्या तत्संवादिन्यस्मदीयप्रत्यक्षे बाधाभावसिद्ध्या च भाविबाधस्यापि प्रमाणविरोधोऽनेन सिध्यतीत्यपि द्रष्टव्यम् । स्वरूपकथनमिति । तत्फलं त्वीश्वरज्ञानस्य प्रमात्वद्योतनम् । सर्वाधिकत्वेनाजन्यत्वबाधाभावयोः प्राप्त्यतत्सिद्धेः । परोक्षत इति । व्यभिचार इति । सत्त्वप्रकारकत्वेन ज्ञानस्य हेतुशरीरानिविष्टत्वाद्व्यभिचारप्रसक्तिः । मायाया लोकोपमत्व इति । जगत्कारणत्वेन त्वदभिमतमायाया इंद्रजालरूपत्व इत्यर्थः । अदृष्टेति । ईश्वरसंबंधिनी जगत्कारणीभूतेंद्रजालरूपमाया स्वप्रयोक्त्रीश्वरीयाधिष्ठानापरोक्षं प्रतिबध्य स्वसृष्टपदार्थविषयकभ्रांतिमुत्पादयतीत्यत्र विशेषप्रमाणाभावेन कल्पनामात्रमेतदिति भावः । निरानिष्टो निरवद्यः नहि द्रष्टुर्दृष्टेर्विपरिलोपो

(टीका) अलौकिकत्वेऽविद्यामयत्वापातात् ।

---

विद्यते इत्यादिप्रमाणविरुद्धकल्पनाप्रसंगाच्चेत्यर्थः । अलौकिकत्व इति । स्वप्रयोक्तारं प्रत्यपि भ्रांतिजनकत्वेन लौकिकेंद्रजालविलक्षणत्वे इत्यर्थः । अविद्यामयत्वेति । अधिष्ठानापरोक्षकालेऽपि भ्रांत्युत्पत्तौ तस्य कदापि भ्रमानिवृत्तिप्रसंगात् अधिष्ठानापरोक्षं प्रतिबध्यैवेश्वरस्य भ्रममुत्पादयतीति वाच्यम् । तथाचाविद्याया एवैतल्लक्षणत्वादविद्यात्वमेव स्यान्नतु मायात्वं तज्जन्यांबरादेरप्याविद्यकत्वमेव स्यान्न तु मायामयत्वमिति भावः। ननु जगद्दर्शनकाले तत्र मिथ्यात्वग्रह एवेश्वरस्य वर्तते आविद्यकशुक्तिरजतादिभ्रमस्थले नैवमित्यविद्यावैलक्षण्यमिति चेन्न । सोपाधिकभ्रमस्याविद्यकत्वाभावप्रसंगात् । नच तत्र मिथ्यात्वधीः परोक्षरूपा, मायिकप्रत्यक्षं तु मिथ्यात्वापरोक्षात्मकमिति वाच्यम् । यतो मिथ्यात्वापरोक्षं नाम भासमानांबरादिप्रपंचान्यूनसत्ताकाभावापरोक्षमेव । तदंशे पारोक्ष्यमिथ्यात्वापरोक्षमित्यस्य वाङ्मात्रत्वापत्तेः । तथाच तत्सत्ताकाले जगद्भानं कथं स्यात्तस्य तन्निवर्तकत्वात् । सोपाधिकापरोक्षभ्रमस्थलेऽपि पीतत्वतदभावादीनां युगपद्भानस्यादृष्टचरत्वेनात्रैवादृष्टकल्पनायोगाच्च । अन्यथेश्वरस्य कदापि तद्भ्रमानिवृत्तिप्रसंगादुपायाभावात् । ननु चिन्मात्रावगाह्यखंडाकारवृत्तिरेव तद्भ्रमावर्तिका नस्वप्रकाशचैतन्यात्मकमीश्वरज्ञानं सा नेश्वरस्यास्तीति चेत् । कालांतरेऽपि सा जायते न वा । जायते चेत्तत्सामग्रीरूपस्य तत्त्वमस्यादिवाक्यतत्तात्पर्यानुसंधानादेर्नित्यनिरवाधिकसर्वज्ञेश्वरे इदानीमपि सत्त्वेन तत्कार्यस्य जगद्भानानिवर्तिकाखंडाकारवृत्तेरिदानीमुत्पत्तेर वर्जनीयतया जगद्भानानुपपत्तिः । कर्मादिप्रतिबंधस्य कर्मबंधविधुरे ईश्वरे वक्तुमशक्यत्वात् । न कर्मणा वर्धते नो कनीयानिति श्रुतेः ईश्वरे कर्मबंधाभावावगमात् । अन्यथा जीववद्बंधमोक्षभागित्वापत्त्येश्वरत्वव्याहतेः । न द्वितीयः । ईश्वरस्य नित्यबद्धत्वापत्तेः । जगत्प्रतिभासनिवर्तकवृत्तेरनुदयात् । नच जगत्प्रतिभासस्येश्वरे त्वन्मत इव मन्मते सर्वदा विद्यमानत्वेऽपि तज्जन्यदुःखानुभवशून्यत्वान्न बद्धत्वप्रसक्तिरिति वाच्यम्। ईश्वरे सार्वज्ञश्रुत्यनुरोधाद्दुःखापरोक्षस्यावर्जनीयतया तदतिरिक्तदुःखानुभवस्य त्वया निरूपयितुमशक्यत्वेनैतद्दोषानुद्धारात् । मन्मते चापरोक्षातिरिक्तस्योच्चत्वनीचत्वाख्यविक्रियाविशेषस्य जीवचैतन्येन भिन्नाभिन्नस्य संसारे, मुक्तौ तु सविशेषात्यंताभिन्नोच्चत्वस्य भोगत्वेनांगीकाराम्न दोषः। न चेश्वरस्य त्वन्मते सर्वाधारत्वाज्जीववृत्तिभोगजीवत्वजीवात्यंताभेदादीनामीश्वरेऽवर्जनीयतयेश्वरस्यात्यंतदुःखित्वापत्तिर्मन्मते तेषां मिथ्यात्वादेव न कोऽपि दोष इति वाच्यम् । नैय्यायिकमते काले घटत्वतत्समवायतदधिकरणत्वादीनां सत्त्वेऽपि यथा घटाभेदेन कालस्य विशेषणतत्संबंधानां काले विशृंखलानां सत्त्वेऽपि कालस्वरूपभूतसमवायसंबंधावच्छिन्नाधिकरणतानिरूपकत्वस्य घटत्वेऽनभ्युपगमात् तथा प्रकृतेऽपीश्वरस्व रूपभूतधर्मिताविशेषानिरूपकत्वाद्दुःखादिभोगजीवत्वादीनामिति दोषस्य मन्मते संस्पर्शाभावात् । त्वदुक्तदुःखादीनां मिथ्यात्वं तु नादुःखित्वे प्रयोजकम् । ईश्वरजीवयोः साम्येन ईश्वरस्य दुःखाननुभवितृत्वेन जीवस्य तदनुभवितृत्वेन सकलश्रुतिस्मृतिपुराणादौ प्रतिपादनानुपपत्तिः । एवं ब्रह्मणि सर्वेषामध्यस्तत्वात् घटादाविव ब्रह्मण्यपि घटजडत्वादितादात्म्याध्यासाद्ब्रह्मणोऽपि जडादिस्वरूपत्वापत्तिस्त्वन्मत एव । नच धर्मे स्वसमानसत्ताकत्वं तथा व्यवहारनियामकमिति वाच्यम् ।

जीवित्वस्यापि जीवचैतन्यसमसत्ताकत्वाभावेन जीवत्वव्यवहारानुपपत्तेः । नचामिथ्यात्वेन तदपरोक्षस्य भोगरूपतयेश्वरस्य तत्रामिथ्यात्वग्रहप्रसक्त्यभावान्न भोगप्रसक्तिरिति वाच्यम् । अमिथ्यात्वग्रहपदेन मिथ्यात्वाग्रहो वा सत्यत्वग्रहो वा विवक्षितः । नाद्यः । इदानीं शास्त्रादिना दुःखादिमिथ्यात्वनिश्चयवतां दुःखोत्पत्तिकालेऽपि तत्सत्त्वेन तद्भोगाभावापत्तेः । तदपरोक्षाभावो विविक्षित इति चेन्न । दुःखाद्यपरोक्षकाले तदभावापरोक्षरूपतन्मिथ्यात्वापरोक्षस्येश्वरेऽप्ययुक्ताया उक्तत्वात् । अन्यथा ब्रह्माद्यधिकारिकदेवानामुत्पन्नापरोक्ष्याणां प्रारब्धकर्मफलभूतब्रह्मादिपदानुभवकालसुखदुःखादिभोगाभावप्रसंगात् । पदानुभवकाले नापरोक्ष्यं तेषामिति न शंक्यम् । ईश्वरवन्नित्यसर्वज्ञकल्पत्वस्य तेषामपि श्रुतिस्मृत्यादिसिद्धत्वात् । अन्यथास्मदादिसाम्येन तेषां जीवन्मुक्त्यनुपपत्तेः । दुखाद्यनुभवितृत्वेन लोकानां प्रतिभासमात्रं नतु जीवन्मुक्ते तद्भोगस्तस्य नास्त्येवेति न युक्तिसहम् । तन्मूलकस्यैपत्सुखादिभोगस्याप्यभावे तस्य शरीरस्य प्रारब्धफलरूपत्वानुपपत्तिः । नचेश्वरीयज्ञानं मायावृत्त्यात्मकं न मनोवृत्त्यात्मकं विपरीतज्ञानप्रतिबध्यता तु तत्रैव । चक्षुस्त्वग्रूपभिन्नेन्द्रियजन्यानां वंशे उरगत्वतदभावादिप्रत्यक्षाणां प्रतिबध्यप्रतिबंधकभाववारणाय चाक्षुषत्वादिप्रकारकेच्छानां पृथगुत्तेजकत्वानुरोधेन च चाक्षुषत्वादिकमंतर्भाव्यैव पृथक् प्रतिबध्यताप्रतिबंधकतयोः कल्पनीयतयेश्वरे ज्ञानेऽतभावात् । इत्थं च घटाद्यभावापरोक्षरूपतन्मिथ्यात्वग्रहकालेऽपि घटाद्यापरोक्ष्यं युक्तमिति वाच्यम् । साक्षात्कारत्वचाक्षुषत्वादिजातीनां त्वन्मतेऽनंगीकारेणोक्तरीत्ययोगात् । लीलागृहीतशरीरेण चाक्षुषादेरपीश्वरस्य पुराणादिसिद्धत्वाच्च । उपादानप्रत्यक्षस्यैव कार्योत्पत्तौ हेतुतया प्रत्यक्षत्वस्य मनोवृत्तित्वव्याप्यत्वे ईश्वरमायावृत्तेरतथात्वाज्जगत्कारणत्वानुपपत्तिः । ईश्वरस्यानागतविषयेऽनुमितेरतीतविषये स्मृतेश्च त्वदभ्युपगतत्वेन मनोवृत्त्यात्मकज्ञानस्यावश्यकत्वेन मायावृत्त्यात्मकाप्रामाणिकज्ञानकल्पनायोगश्च । नापि सत्यत्वेन ग्रहकालीनतदपरोक्षदुःखादिभोग इति प्राग्विकल्पितद्वितीयपक्षोऽपि । ईश्वरीयाधिष्ठानादिसाक्षात्कारकाल एव घटादिसाक्षात्कारस्य त्वदभ्युपगतत्वेन त्वग्रहस्यावश्यकत्वात् । घटादेर्देशकालसंबंधादिरूपस्य वान्यादृशस्य वा सत्त्वस्यास्मदादिभिर्गृह्यमाणस्येश्वरेणैव सृष्टत्वात् । अन्यथा सत्त्वविशिष्टसुखदुःखादिरूपविशिष्टस्य जीवसाक्षात्कारविषयस्येश्वरप्रत्यक्षाविषयत्वे सार्वज्ञहानिप्रसंगात् । किंचेश्वरस्य मिथ्यात्वेनैवांबरादिप्रपंचप्रत्यक्षांगीकारे अज्ञातमिथ्यात्वकार्यावगाहित्वरूपप्रामाण्यस्य स्वज्ञानेऽनिश्चयेन प्रवर्तकज्ञानाभावाज्जगत्पालनादौ प्रवृत्त्यनुपपत्तिः । अन्यथा बाधोत्तरमपि शुक्तिरूप्यरक्षणादौ सोपाधिकभ्रमविषयशंखपीतरक्षणादौ प्रवृत्त्यापत्तेः । नच मायिकस्य स्वमायासृष्टवस्तुपालनादौ प्रवृत्तिवदत्राप्यस्त्विति वाच्यम् । तत्स्थित्यनुकूलव्यापारविशेषस्यैव पालनरूपतया स्थितेश्च सत्ताविशेषरूपतया सत्त्वाभावरूपमिथ्यात्वनिश्चयवतः सत्ताप्रयोजकव्यापाररूपपालनोक्तेरसंगतत्वात् । मायिकस्य स्वप्रयुक्तेंद्रजालविद्यायामेव सत्यत्वग्रहात्तत्पालने प्रवृत्तिरेव, नतु तन्निमित्तप्रतीतिविषयपदार्थपालने, उक्तदोषात् । नच प्रकृतेऽपि तथास्त्विति वाच्यम् । मायादिसर्वपदार्थेष्वपि मिथ्यात्वस्य गृहीतत्वात् । तस्मान्मायिकस्येश्वरस्याधिष्ठानापरोक्षादिकाले मायिकपदार्थदर्शनस्य वक्तुमशक्यत्वादधिष्ठानापरोक्ष्यं विनैव तद्दर्शनस्य वक्तव्यत्वापत्त्या भ्रमजनिकाया अविद्यात्वमीश्वरस्याज्ञत्वं च स्यादेव । ननु मायिकस्य मायासृष्टापरोक्षं नास्तीति वक्तुमशक्यम् । हरिवंशे प्रद्युम्नशंबरयुद्धे शंबरस्य स्वमाया-

( टीका ) उभयबहिर्भावे त्वस्माकमप्रतिपक्षत्वात् ।

निर्मितपदार्थप्रत्यक्षस्योदाहरिष्यमाणवाक्यैरवगमात् । ऐंद्रजालिका अपि वदंति स्वमायादृष्टं पदार्थं पश्याम इति । युक्तं च तत् । अन्यथा तन्निष्पत्तिज्ञानाभावेन लोकान् प्रति तद्दर्शनाय प्रवृत्त्यनुपपत्तेरिति चेन्न । लोकेषु मंत्रादिभिः पदार्थदर्शनं हि द्वेधा दृष्टम् । स्वप्रयुक्तमंत्रौषध्यादिना लोकानामधिष्ठानापरोक्ष्ये तिरस्कृते मंत्रादिरूपादेव दोषात् इतरेषां वंशोरगभ्रमादिर्जायते । तद्विषयीभूतास्तु शुक्तिरूप्यादितुल्या अर्थक्रियानर्हा मिथ्याभूताः मायिकप्रत्यक्षाविषया एव । मायिकस्य स्वमंत्रपूर्त्यादिना तन्निष्पत्त्यनुमितिरेव । अत एवान्यदृष्टीर्बध्नामो न वयं पश्याम इति वदंति । लोका अपि वदंत्यस्मान् वंशमुरगत्वेन मिथ्यैव दर्शयतीति । क्वचिन्मंत्रौषध्यादिना तत्काल एव आम्रवृक्षफलादिसृष्टिर्दृष्टा । ते तु पदार्थाः सत्या एव घटादितुल्या अर्थक्रियाकारित्वात् । तेषां घटादितुल्यसत्तानंगीकारे व्यावहारिकत्वाभावात् अर्थक्रियाकारित्वेन शुक्तिरजतादिरूपप्रातिभासिकवैलक्षण्याच्चान्यादृश्याः सत्ताया अभ्युपगंतव्यतया सत्ताचातुर्विध्यापातात् । प्रातिभासिकेष्वेव वैलक्षण्यं कल्प्यत इति चेन्न । नियामकाभावात् । अकालिकविद्युदादिवद्व्यजनवायुवच्च तात्कालिकोत्पत्तिविनाशयोः संभवेन सत्यत्वे बाधकाभावात् बाधाभावाच्च तेषां सत्यत्वम् । नहि केनचित्पुरुषेण मंत्रौषध्यादिना तारः शुल्बतां नीतः कंचित्कालं तदनंतरं पुनस्तार एव मंत्रेणौषध्यादिना वा भवति तत्र शुक्तिरजतादाविवाविद्यमानमेव शुल्बमभादिति लोकानां बाधानुभवः किंतु एतन्मंत्रेण शुल्बत्वेन निष्पादितः पुनस्तारत्वेन कृत इत्येव । कुत एतत् । पुनस्तारत्वासंपादने शुल्बतयैवावस्थानाच्छुल्बार्थक्रियाकारित्वाच्च । इत्थं च शंबरादिभिर्युद्धे सृष्टसिंहादीनां सत्यत्वेनैंद्रजालिकत्वाभावात्तत्प्रत्यक्षविषयत्वेऽपि नास्मदुक्तपुराणवाक्यलोकानुभवसिद्धस्य व्यभिचारः । साध्यमपींद्रजालप्रयुक्तप्रतीतिविषयत्वाभावो वा मिथ्यार्थप्रदर्शकविद्याप्रयुक्तप्रतीतिविषयत्वाभावो वा । तत्प्रतियोगिन एव जगत्यस्माकमनिष्टत्वात् । ईश्वरीयशक्तिविशेषरूपमायाजन्यत्वं जगति सत्त्वाविरोधादस्मत्सम्मतमेव । नच मायापदस्यैंद्रजाल एव प्रयोगाद्वक्ष्यमाणहरिवंशवाक्यगतमायापदं कथं विद्याविशेषवाचकमिति वाच्यम् । माया वयुन चित्ति रित्यादिनिघंटुवाक्ये विद्यावाचकत्वेन ग्रहणात् । महाभारते अस्त्रमाययेति शतशोऽस्त्रविद्यायां प्रयोगात् । पंचमस्कंधे मयमायानिर्मिताः पुंश्चल्य इति तच्छक्तिविशेषसंपादकतद्विद्यायां प्रयोगात् । 'प्रजानां समुदाचारं बहु कर्म कृतं वदन् । छादयिष्यामि कौंतेय माययाऽऽत्मानमात्मना' इति विराटपर्वण्येवमन्यत्रापि बहुशः शक्तिविशेषविद्याविशेषत्रिगुणात्मकप्रकृत्यादौ बहुशो मायापदस्य प्रयोगाच्च । नच तत्रापींद्रजालपरमिति वक्तुमिति युक्तम् । अद्याप्यसुरान् रमयंतीत्यादिना तत्सृष्टानामितरस्त्रीवदेव व्यावहारिकत्वावगमात् । नह्यर्जुनेनैंद्रजालविद्या विराटनगरे दर्शिता । तस्माच्छंबरादिभिरिदानींतनैर्वा विद्याविशेषादिना सृष्टेष्वैंद्रजालिकत्वाभावान्न व्यभिचारशंकापि । अत एव न्यायामृते घटोत्कचेन मायासृष्टगजादिकं सत्यमेवेत्युक्तमित्यलम् । उभयबहिर्भावे त्विति । जगत्कारणीभूतत्वेन व्यवह्रियमाणमायाया इंद्रजालविद्यारूपत्वशुक्तिरजतादिभ्रमकारणीभूताविद्याजातीयत्वयोरनंगीकारेण त्रिगुणात्मकप्रकृत्यादिरूपमायाजन्यत्वांगीकार इत्यर्थः । अस्माकमिति । प्रकृतानुमानप्रयोक्तृणामित्यर्थः । अप्रतिपक्षत्वादिति । अपसिद्धांतभियाऽस्माभिस्तदभावासाधनेन

(टीका) तदेवं विपक्षे बाधकसद्भावाद्युक्तमवधारणं। तदिदमुक्तमित्यवधार्यतामिति। एवं वियदादेरमायामयत्वे प्रमाणमभिधाय दुःखादेरनाविद्यकत्वे प्रमाणं विविक्षुस्तस्य वियदाद्यमायामयत्वेऽपि प्रवृत्तेरुभयसाधारणमनुमानमाह।

(मूल) **अपरोक्षदृशो मिथ्यादर्शनं न क्वचिद्भवेत्।**
**सर्वापरोक्षविद्विष्णुर्विश्वदृक् तन्न तन्मृषेति ब्रह्मांडे ॥ ७५ ॥**

(टीका) अत्र पूर्वार्धेन व्याप्तिं दर्शयति। अधिष्ठानमपरोक्षेण पश्यतस्तत्रारोपितमिथ्यार्थदर्शनं न भवेत्। अधिष्ठानापरोक्षज्ञानवता दृश्यमानं तत्रारोपितं न भवेदिति यावत्। अनेनान्वयो दर्शितः यन्मिथ्या तस्य दर्शनमधिष्ठानापरोक्षदृशो न भवेदिति व्यतिरेको वा। क्वचिदित्यनेन तदुभयानियमः। यद्यपि दृशिरेवापरोक्षज्ञाने वर्तते। तथापि पश्यार्थैश्चानालोचन इत्यादौ ज्ञानमात्रेपि दर्शनादपरोक्षेत्युक्तं। अत एव सर्वापरोक्षविद्विष्णुर्विश्वदृगिति सामान्येन हेतोः पक्षधर्मतां दर्शयति। सर्वात्मनाऽपरोक्षतोऽधिष्ठानाभिमतं जानन्विष्णुर्विश्वं पश्यतीति। अपरोक्षतः शुक्तिकां पश्यन्नेव तदारोपितं रजतं पश्यतीति व्यभिचारपरिहाराय सर्वेत्युक्तम्।

---

तत्पक्षेऽगीकृत्य हेतोरप्रयोजकत्वोक्तेरयुक्तत्वादित्यर्थः। दृशिरेवेति। एवकारेण तद्बोधनाय शब्दांतरस्यावश्यकत्वं पराचष्टे। पश्यार्थैरिति। पश्यार्थैरित्यस्य ज्ञानार्थकधातुयोग इति वृत्तिकारादिभिर्व्याख्यातत्वात् दृशेर्ज्ञानसामान्येऽपि प्रयोगो वर्तत इति भावः। अत एवेति। यस्माद्दृशेरपरोक्षज्ञान एव मुख्यव्यवहारोऽत एवेत्यर्थः। सामान्येनेति। परोक्षज्ञानव्यावर्तकविशेषणबोधकशब्दांतरासमभिव्याहृतेन विश्वदृगिति शब्देनेत्यर्थः। व्यावर्तकाकारेणाधिष्ठानापरोक्षवतां परोक्षीकृतत्वं तत्र तस्यारोपितत्वाभावे हेतुः। तस्य जगद्रूपे पक्षे उपपादनाय सर्वापरोक्षविदित्यनेन व्यावर्तकाकारेणाधिष्ठानापरोक्षवत्त्वांशमुपपाद्य तत्साक्षात्कृतत्वरूपविशेषांशोपपादनाय विश्वदृगित्युक्तम्। विश्वापरोक्ष्यस्य विष्णौ प्रतिपादने तदपरोक्षविषयत्वस्य जगति लाभात्। तथाच दृशेर्ज्ञानसामान्ये मुख्यप्रयोगे प्रकृते साक्षात्काररूपज्ञानस्यालाभात् परोक्षज्ञानवारणायापरोक्षविदितिवदपरोक्षदृगिति प्रयुज्येत। साक्षात्कारस्यैव मुख्यार्थत्वे तस्यैव झटिति स्फुरणात् न तदर्थं अपरोक्षपदमपेक्षितमित्युपष्टंभसंगतिः। दृशेर्ज्ञानसामान्ये क्वाचित्कप्रयोगमनुरुध्य तदर्थकत्वतात्पर्यभ्रमेण स्वोक्तव्याप्तौ व्यभिचारादिभ्रमनिरासाय स्वप्रयुज्यमानदृशेर्मुख्यार्थे स्वतात्पर्यग्राहकतया प्रथमतोऽपरोक्षपदस्योपादानादेवोत्तरवाक्यस्थदृशेरमुख्यार्थत्वशंकाया निरस्तत्वान्नोत्तरत्रापि तदपेक्षितमिति भावः। टिपण्यां तु अत एवेति यतो दृशिर्ज्ञानसामान्यार्थकोऽत एवेत्यर्थः। सामान्येन दृगिति ज्ञानसामान्यस्यैवोदितत्वात्। अन्यथा सर्वापरोक्षविदिति वक्तव्यम्। न ह्येकस्य व्याप्तिरन्यस्य पक्षधर्मता वक्तुं युक्तेति भाव इति व्याख्यातम्। तन्मतेऽधिष्ठानापरोक्षवता ज्ञायमानत्वमात्रं हेतुत्वेन विवक्षितं नतु साक्षात्क्रियमाणत्वं। तस्मिन् ज्ञायमानत्वपर्यंतम् विविक्षितम्। तेनाधिष्ठानापरोक्षोत्तरमपि पूर्वज्ञानगोचरत्वादिना ज्ञायमाने शुक्तिरूप्यादौ न व्यभिचार इति ध्येयम्।

(टीका) नन्वेवं सति दृष्टांते साधनाभावः प्राप्नोति । न हि लोके कोऽपि किमपि सर्वात्मना पश्यति । मैवं । सर्वशब्देन व्यावर्तकाकारस्य विवक्षितत्वात् व्याप्तिकथनेऽप्येतदनुसंधेयं । आप्तवाक्यादिना शुक्तिकां पश्यन्नपि रजतं पश्यतीति व्यभिचारानिरासायापरोक्षेत्युक्तं । विष्णुरित्यासिद्धिपरिहाराय स्वरूपकथनं । तत्तस्मात्तद्वियदादि मायामयत्वेन दुःखाद्यविद्यामयत्वेन च मृषा न भवतीति साधनत्वाभिव्यक्तिपूर्वकं साध्यनिर्देशः।

---

चित्त्यारोपितत्वानारोपितत्वाभ्यां विवादविषयीभूतं जगदित्यर्थः । अत्र चिदन्यसत्त्वादिकं सर्वानुगतं पक्षतावच्छेदकत्वेनानुसंधेयम् । विप्रतिपत्तिर्वा संशयरूपा तद्व्यक्तित्वेन पक्षतावच्छेदिका लाघवात् । ननु किमत्र लाघवमिति चेदित्थम् । विप्रतिपत्तिविषयतावच्छेदकस्य पक्षतावच्छेदकत्वेनोपादाने परामर्शपूर्वकाले पक्षतावच्छेदकघटकबहुपदार्थानां ज्ञानस्यापेक्षितत्वप्राप्त्या तद्विलंबेनानुमित्युत्पत्तौ विलंबो विप्रतिपत्तेरेकस्या एव विषयतया पक्षतावच्छेदकत्वेनोक्तविलंबप्रसक्तिरिति । विप्रतिपत्तेः समयबंधादिना व्यवहितत्वेनानुमितिकालेऽसत्त्वेन विशेषणविधया पक्षतावच्छेदकत्वायोगादौत्सर्गिकस्य विशेषणतयैवावगाहित्वरूपप्रमाणस्वभावस्य परित्यागानौचित्यमित्युक्तौ तु विमातिविषयत्वज्ञानमेव तत्त्वेन पक्षतावच्छेदकं बोध्यम्। ननु यस्य विशेषणविधया पक्षतावच्छेदकत्वं तत्समानकालीनत्वं साध्ये तत्रासंसर्गग्रहाद्भासते । तच्च प्रमाणानामुत्सर्गतो विशेषणतयाऽवगाहित्वस्वाभाव्यान्निर्वहति । अन्यथा विशेषणतयोपलक्षणतया च गंधप्रागभावावगाह्यनुमितिजनकपरामर्शवैलक्षण्यादन्यतरानुमित्यानिर्वाहापत्तेः । अत एव गंधप्रागभावविशिष्टे घटे गंधसाधने बाधोऽसंकीर्णः । एतादृशबाधावतारे च साध्येन समानकालिकत्वेन पक्षतावच्छेदकं भासते इदमेव ह्युपलक्षणतया भानं नाम । इत्थं च विमतेः पक्षतावच्छेदकत्वस्य विशेषणतयाऽभ्युपगमेऽपि न दोषः । सार्वकालिके जगन्मिथ्यात्वे विमतिकालीनत्वस्याबाधेन विमतेरनुमितिकालावृत्तित्वस्याप्रयोजकत्वादिति चेन्न । यतो ज्ञानं सर्वं किंचित्कालवृत्तित्वेनैव स्वविषयग्राहकम् । तत्रापि स्वोत्पत्त्यधिकरणकालमेवोत्सर्गतो विषयीकरोति । अत एव पर्वतो वन्हिमानित्यनुमित्या वन्हिविशिष्टपर्वते स्वाधिकरणकालविशेषवृत्तित्वावगाहनात्तत्काले वन्ह्यर्थिनः प्रवृत्तिर्घटते । उक्तं च परिच्छिन्नत्वहेतुविचारग्रंथांते ब्रह्मानंदेनाऽपि । न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासत इति मीमांसकोक्तेः ज्ञानं सर्वं किंचित्कालावच्छिन्नमेव स्वविषयं गृण्हाति । तत्र स्वाधिकरणक्षणावच्छिन्नत्वेन गृण्हातीत्युत्सर्गः । अत एव धारावाहिकज्ञानस्थले स्वस्वाधिकरणक्षणविशिष्टतया स्वविषयग्राहित्वेनाज्ञातज्ञापकत्वमिति मीमांसकाः । तस्य बाधे तु संभवत्क्षणांतरावच्छिन्नत्वेन यथा पाकरक्ते घटे श्यामोऽयमिति धीः पाकपूर्वक्षणावच्छिन्नत्वेन श्यामत्वं गृण्हाति, स्मृतिस्तु स्वकारणधीगृहीतकालावच्छिन्नस्वविषयामिति । तथाच ज्ञानानां स्वाधिकरणकालसंबंधतया तदवगाहित्वमेव मुख्यविशेषणतया तदवगाहित्वं नामान्यकालघटितमुपलक्षणतया तदवगाहित्वं पर्यवसितम्। इत्थंच विमतितत्समकालिकतद्विषय-

त्वयोः सभ्यसंवरणसमयबंधादिना वहुकालांतरितयोरनुमितिक्षणसंबंधाभावात्तत्क्षणेऽपि संभवतो विमतिविषयत्वज्ञानस्य पक्षतावच्छेदकत्वपरित्यागे बीजाभावेन तदनुसरणसंभवात्। ननु विमतिविषयत्वप्रकारकस्मृत्यादिरूपं पक्षतावच्छेदकत्वेनाभिमतं ज्ञानं प्रथमत उत्पन्नं द्वितीयक्षणे तदवच्छिन्ने हेत्ववगाही परामर्शस्तदनंतरमनुमितिर्यत्र तत्रानुमितिक्षणे भवदभिमतपक्षतावच्छेदकस्य नाशात्कथमनुमितिक्षणः पक्षतावच्छेदकसाध्ययोः समानकालीनत्वघटकतया भासते। किंच न्यायप्रयोगपूर्वकाले वादिबुद्धिविषयीभूताया एव मतिविषयत्वज्ञानव्यक्तेरेव वादिना पक्षतावच्छेदकत्वेन वक्तव्यतया तस्याश्च मध्यस्थानुमितिकाले विमतिवदेव नाशादिति चेन्न। विमतिविषयत्वज्ञानत्वरूपानुगतधर्मपुरस्कारेणैव तादृशज्ञानानां पक्षतावच्छेदकत्वाभ्युपगमात्। क्षणमात्राधिककालस्याप्यनतिप्रसक्तस्य भानांगीकारेण सामंजस्यात्। अन्यथा वन्हावनुमितिक्षणमात्रसंबंधभाने उत्तरक्षणे वन्हिसत्त्वसंदेहेन प्रवृत्तिविलंबप्रसंगात्। प्रकृते पक्षतावच्छेदकीभूतज्ञानस्यापेक्षाबुद्धिरूपत्वेऽपेक्षाबुद्धेर्द्वितीयक्षणे विशेषगुणोत्पत्तावपि तस्य क्षणत्रयस्थायित्वमते क्षणात्मककालभानांगीकारेऽपि निर्वाहाच्च। विमतिविषयत्वविशिष्टविषयकज्ञानत्वेन पक्षतावच्छेदकत्वे तु परामर्शानुमितयोरपि तथात्वान्न कोऽपि क्लेशः। नन्वेवमभ्युपगमे जगन्मात्रस्य पक्षतया आश्रयभेदभिन्नप्रतियोगित्वरूपमिथ्यात्वस्य साध्यतया सर्वेषामेवानुमितौ भानस्यावश्यकतया भाविभूतघटादिनिष्ठमिथ्यात्वेषु भवदभिमतज्ञानव्यक्तिरूपपक्षतावच्छेदकसमकालिकत्वबाधादनुमितेरप्रामाण्यं स्यादिति चेन्न। पक्षतावच्छेदकसमानकालिकत्वभाने बाधाभावस्य सहकारित्वाभ्युपगमे तस्यौत्सर्गिकत्वाभ्युपगमात् बाधितार्थान् विहायाबाधितार्थेष्वेव तदवगाहिन्याः प्रमानुमितेः संभवात्। नचैवं विमतेः पक्षतावच्छेदकत्वेऽप्येषा रीतिः संभवति। कासांचिन्मिथ्यात्वव्यक्तीनां तत्समकालिकत्वसंभवेऽप्यनुमित्यधिकरणकालघटितसमकालिकत्वस्य बाधितत्वात्। * सदसद्विलक्षणत्वादिरूपभेदात्मकसाध्यकस्थले तस्यैकत्वान्नित्यत्वाच्चोक्तपक्षतावच्छेदकानिरूपितानुमित्यधिकरणकालघटितसमानकालिकत्वं तत्र निर्वहतीति नानुमितेर्भ्रमत्ववार्तापीति कृतबुद्धयो विदांकुर्वंतु। यत्तु पक्षतावच्छेदकीभूतज्ञानकालावच्छिन्नत्वस्य साध्ये भानांगीकारे धीमात्रशून्यप्रलयकाले मिथ्यात्वसिध्याऽर्थांतरतेति तदतीव तुच्छम्। मात्रार्थाघटितस्य पक्षतावच्छेदककालवृत्तित्वस्य भानांगीकारादित्यादिकमप्यूह्यम्। इदं च तरंगिण्यभिप्रेतन्यायामृतार्थमभिप्रेत्य। यदा तु पक्षतावच्छेदकमित्यस्यापक्षव्यावृत्तिज्ञानार्थमुपात्तो धर्म इत्यर्थः। तथाच विमतेः समयबंधादिना व्यवहिताया न्यायप्रयोगसमयाविद्यमानायाः कथं न्यायप्रयोगकर्त्रा पक्षव्यावृत्ततया उपादानमित्याशंक्य कुरूणां क्षेत्रमित्यादिवदुपलक्षणतयैव विमते व्यावर्तकत्वमित्येकं समाधानमभिधाय तत्कालेऽवश्यं विद्यमानस्य तज्ज्ञानस्यैव व्यावृत्तिज्ञानकाले विद्यमानत्वरूपविशेषणत्वाक्रांतस्य पक्षतावच्छेदकत्वं संभवतीत्याशयेन द्वितीयकल्प उक्तः। द्वितीयकल्पेऽनास्थासूचको वाशब्दः। तेन विमतिविषयत्वज्ञानस्य पक्षतावच्छेदकत्वे तथैव न्याये निर्देशः स्यात्। अन्यथा विमतिपदस्य लक्षणया तद्बोधकत्वे वादिवाक्ये लक्षणापत्तिः स्यादित्याद्यतिप्रसंगसत्त्वेऽपि न दोष इति न्यायामृतभावः। तदा न कोऽपि क्लेश इति ध्येयम्

* टीपः—इदं चावच्छेदकावच्छेदेन ज्ञाने सदाश्रयसामान्यं भासते, न व्यापकत्वमित्याशयेन। तद्धानपक्षेऽप्याह—सदसदिति।

(टीका) इयमत्र प्रयोगप्रक्रिया । विवादपदं नारोपितं सर्वात्मनाधिष्ठानापरोक्षज्ञानवता दृश्यमानत्वात् । यदेवं तदेवं यथोक्तविधया स्तंभविदा दृश्यमानो न कुंभस्तत्रारोपितः। अथवा यन्नैवं तन्नैवं यथा शुक्तिकारोपितरजतमुक्तरीत्या शुक्तिदर्शिना न दृश्यते । अधिष्ठानज्ञानेऽपि भ्रमानुवृत्तौ बंधनिरासाय ब्रह्मज्ञानान्वेषणायासवैयर्थ्यप्रसंगः। एतेनानुमानागमयोः प्रत्यक्षविरोधोपपादनेनैवानुमानविरोधोऽप्युक्तो भवति । उपन्यस्तानुमानयोरागमिकत्वेनापि बलवत्त्वात् । अनेनागमविरोधोऽपि सूचितः ।

---

। नारोपितमिति । तदधिष्ठाने आरोपितत्वाभाववदित्यर्थः । अन्यथा यादृशाधिष्ठानापरोक्षवता दृश्यमानत्वं यत्रारोपितत्वाभावस्तत्रेत्येव व्याप्तेर्वक्तव्यतापत्त्या शुक्त्यपरोक्षवता दृश्यमाने रंगारोपितरजते व्यभिचारापत्तेरिति ध्येयं । प्रत्यक्षविरोधोपपादनेनैवेति । उदाहृतपुराणवाक्यद्वयमपि जगति मायाविद्याजन्यत्वाभावसाधकतया जगत्प्रत्यक्षस्यापटुत्वनिरासद्वारा प्रत्यक्षविरोधोपपादन एवोपक्षीणमिति भावः । सूचित इति । अनुमानप्रदर्शनार्थमेव मुख्यतयागमस्योदाहृतत्वे मिथ्यात्वानुमाने उक्तागमविरोधः सूचित एवेति भावः । यदत्रार्वाचीनेनैतत्प्रघट्टिकादूषणमुत्प्रेक्षितम् । नन्वेवमपि घटः सन्नित्याद्यध्यक्षबाधितविषया दृश्यत्वादय इति चेन्न । प्रत्यक्षयोग्यमिथ्यात्वविरोधिसत्त्वानिरुक्तेः । प्रमाविषयत्वादेरात्माश्रयाच्चक्षुराद्ययोग्यत्वाच्च । कालसंबंधस्य स्वरूपसत्त्वादेर्मिथ्यात्वात्तात्विककालसंबंधस्यात्माश्रयकचलितत्वात् । एतेन सत्त्वमखंडोपाधिरिति प्रत्युक्तम् । अविरोधित्वात् । अत एव जातिविशेषो मिथ्यात्वमित्यपि । जात्यादीनामसत्त्वप्रसंगात् । एकाकारप्रतिपत्तावर्थवैलक्षण्यकल्पनस्यायुक्तत्वाच्च । एतेनोपजीव्यत्वात्प्रत्यक्षस्य प्रबलेन प्रत्यक्षेणानुमानस्य बाध इत्यपि परास्तम् । यदंशे उपजीवकं तस्यानुपमर्दात् । न च धर्म्यादेः पारमार्थिकतानुमानेनोपजीव्यते किं न तत्स्वरूपमात्रं । तदुक्तमाचार्यवाचस्पतिभिः उत्पादकाप्रतिद्वंद्वित्वादिति । प्रत्यक्षमपि चन्द्रप्रादेशिकत्वादावागमेन युक्त्या बाध्यते । यत्तु चंद्रप्रादेशिकत्वादिविषयकप्रत्यक्षं दूरस्थत्वादिदोषनिश्चयादपरीक्षितं घटःसन्नित्यादिप्रत्यक्षं तु परीक्षितं तज्जनकदोषानिश्चयादिति । तन्न । प्रकृते प्रत्यक्षजनकदोषस्याविद्यादिरूपस्य श्रुत्यादिना संभावनोत्तरमेवानुमानप्रवृत्तेः । न च जगतो ज्ञानजन्यत्वे प्रमाणाभावः । मायां तु प्रकृतिं विद्याज्जीवेशावाभासे न करोति मायां चाविद्या च स्वयमेव भवतीति श्रुतिभिस्तत्सिद्धेः । नच जगतो मायिकत्वे मायीश्वरसाक्षात्कार्यत्वानुपपत्तिः । न च मायाविना माया दृश्यते विश्वमीश्वर इत्युक्तेरिति वाच्यम् । प्रतिबंधासिद्धेः । "ततो मायां परां चक्रे देवशत्रुः प्रतापवान् । सिंहव्याघ्रवराहांश्च तरक्षूनृक्षवानरान् । मुमोच धनुरादाय प्रद्युम्नस्य रथोपरि । गंधर्वास्त्रेण चिच्छेद सर्वांस्तान् खंडशस्तथा । प्रद्युम्नेन तु सा माया हता तां वीक्ष्य शंबरः । अन्यां मायां मुमोचाथ दानवः क्रोधमूर्च्छितः । निहता हस्तिमाया तु तां समीक्ष्य महासुरः । सैंहीं मायां महातेजाः सोऽसृजद्दानवेश्वरः । सिंहान् विद्रावितान् दृष्ट्वा माययाष्टापदेन हि । शंबरश्चिंतयामासेति मायिनोपि मायादृष्टत्वस्य महाभारतादावुक्तत्वात् । नच साक्षात्कृततत्त्वस्य परमेश्वरस्य जगत्प्रतीतिरनुपपन्नेति वाच्यम् । ईश्वरीयाधिष्ठानसाक्षात्कारस्य स्वप्रकाशशुद्धचिदात्मनो विद्या-

विरोधित्वाभावात् । विस्तृतं चैतदन्यत्र । न चैवमीश्वरस्याज्ञत्वापत्तिः साधकाभावात् । धर्मिग्राहिमानविरोधाच्च । नच मायाविना माया दृश्यते विश्वमीश्वरः ॥ सदा पश्यति तेनेदं न मायेत्यवधार्यताम् ॥ अपरोक्षदृशो मिथ्या दर्शनं न क्वचिद्भवेत् ॥ सर्वापरोक्षविद्विष्णुर्विश्वदृक् तन्न तन्मृषा॥ इति पद्यद्वयस्य ब्रह्मांडांतर्गतेः प्रामाणिकत्वेपि ज्ञानस्वरूपमेवाहुर्जगदेतद्विचक्षणाः । अर्थस्वरूपं भ्राम्यंत इति तस्मान्न विज्ञानमृतेऽस्ति किंचित् । क्वाचित्कदाचित् द्विज विश्वरूपं, द्वैतिनोऽतथ्यदर्शिनः । अहं हरिः सर्वमिदं जनार्दनः स वासुदेवो न यतोऽन्यदस्तीत्यादिश्रुत्यनुगृहीतस्मृतिशतविरुद्धत्वेनानपेक्षत्वादिति तदतीवासारं । त्वदुक्तस्य सर्वस्य ब्रह्मानंदनिष्ठीवनत्वेन तद्दूषणेनैव निरस्तत्वात् । यत्तु जगतोऽज्ञानजन्यत्वे मायां तु प्रकृतिं विद्यादिति श्रुतिद्वयमुदाहृतं तदतीवाशुद्धं । मायाया जगत्कारणत्वस्यानेनानुक्तत्वात् । नच प्रकृतिपदस्योपादानकारणवाचित्वाज्जगतस्तज्जन्यत्वासिद्धिरिति वाच्यम् । तथापि जगद्बोधकपदाभावेन संभवदन्यंप्रत्युपादानत्वोक्तिसंभवात् । त्रिगुणात्मकप्रकृतेरेव मायाशब्दवाच्यताबोधनद्वारा जगतोऽन्यत्र मायामयत्वोक्तेर्गतिरेवैतच्छ्रुत्या लाभादैंद्रजालिकादिसदृशमायाजन्यत्वाप्रमापकत्वाच्च । जीवेशाविति श्रुतिस्त्वद्रीत्या जीवेशयोरेव मायाविद्याजन्यत्वं बोधयति न जगत इत्येतच्छ्रुत्युदाहरणं सर्वथा न संगतं । वस्तुतः आभासे सम्यक् प्रकाशे जीवेशौ न करोति विषयितयाऽधिकरणतया विवक्षया मदूज्ञाने घट इतिवदाभास इति सप्तमी । तथाच जीवस्वरूपावभासं साकल्येनेश्वरावभासं च प्रतिबध्नाति मायाविद्यापदवाच्या च स्वयमेव भवति । स्वतंत्ररूपा भवति भगवदिच्छेति श्रुत्यर्थः । महामायेत्यविद्येति नियतिर्मोहिनीति च । प्रकृतिर्वासनेत्येव तवेच्छाऽनंत कथ्यत इति स्मृत्यानुगुण्यात् । भवत्पक्षे जीवेशयोरेव मायाविद्याप्रतिबिंबरूपाभासतया भासेन जीवेश्वरनिर्माणायोगादाभासपदस्य भावप्रधानत्वापत्तेः । यदप्युक्तमीश्वरीयाधिष्ठानसाक्षात्कारस्य शुद्धचिदात्मनोऽविद्याविरोधित्वाभावादित्यादि तन्न । शुद्धचित एवाविद्यादिसर्वजगदधिष्ठानतया शुद्धचितः शुद्धचिति तादात्म्यरूपाविषयत्वाभावादाकाराख्यविषयविषयिभावस्य चित्यनंगीकाराच्च । ईश्वरस्य शुद्धचिदात्मकाधिष्ठानापरोक्षस्य वक्तुमशक्यत्वात् । शुद्धचिदात्मकाधिष्ठानापरोक्षस्य मायोपहित ईश्वर इवाविद्योपहितजीवेपि साम्येन जगद्भ्रमस्योभयोस्तुल्यत्वेनेश्वरस्य जीववदज्ञतायां बलादापाताच्च । अधिकं तु पूर्वमेव निरस्तं । यदपि ज्ञानस्वरूपमेवाहुरित्यादिस्मृतीरुदाहृत्य तद्विरोधान्न च मायेत्यादिस्मृत्योर्ब्रह्मांडपुराणांतर्गतत्वस्य प्रामाणिकत्वेऽप्यप्रमाण्यमिति । तदत्यंतमशुद्धम् । भवदुक्तस्मृतिषु जगदमिथ्यात्वानिषेधेन विरोधाप्रतिभासात् । न च मुख्यतो ज्ञानस्वरूपत्वस्य प्रमाणांतरविरुद्धत्वाज्ज्ञानरूपचिद्व्यतिरेकेणासत्त्वरूपार्थकत्वावश्यकत्वे मिथ्यात्वार्थकत्वमेव प्राप्तम् । द्वैतिनोऽतथ्यदर्शिन इत्यनेन तु स्फुटं मिथ्यात्वमुच्यत इति वाच्यम् । प्रमाणांतरविरोधेन मुख्यार्थपरित्यागप्राप्तौ जगन्मिथ्यात्वनिषेधकास्मदुदाहृतस्पष्टस्मृतिद्वयविरुद्धे जगन्मिथ्यात्वरूपामुख्यार्थे कथं भवदुक्तस्मृतीनां प्रामाण्यं सिध्यति येन त्वदुदाहृतस्मृत्यनुरोधादस्मत्स्मृत्योरप्रामाण्यं स्यात् । श्रुत्यादिविरोधाद्भवत्स्मृत्योरप्रामाण्यं सिध्यतीति न वाच्यम् । तर्हि ता एत्रोदाहर्तव्याः किमाभिः । निराकरिष्यते च श्रुतीनां मिथ्यात्वावबोधकत्वं । द्वैतिन इति वाक्यं तु द्वैतवतां मिथ्यादर्शनं वर्तते इत्येतावन्मात्रं बोधयति न प्रपंचस्य मिथ्यात्वमिति सापि न स्पष्टा । वस्तुतः पूर्वमेवैताः स्मृतयः सम्यक् व्याख्याता इति न

( टीका ) स्पष्टं च तं दिदर्शयिषुरागमोदाहरणे तस्य जगत्सत्यतापरत्वोपपादने प्राबल्यव्युत्पादनेऽनुपपत्त्यंतरपरिहारे च प्रयासनिरासाय सर्वानुगुणां स्मृतिमुदाहरति।

( मूलं ) ईशोऽनीशो जगन्मिथ्या न पूज्यो गुरुरित्यपि ॥ एक आत्मा परब्रह्मभावो मुक्तिरिति ह्यपि ॥ ७६ ॥

(टीका) इतिशब्दः प्रत्येकमभिसंबध्यते । अत एव द्विर्ग्रहणं । एवमपिशब्दोऽपि । हिशब्दो हेतौ ॥

( मूलं ) एवमादिविरुद्धानि वचनान्यथ युक्तयः । प्रमाणैर्बहुभिर्ज्ञेया आभासा इति वैदिकैः ॥ ७७ ॥

( टीका ) एवमादीति लुप्तविभक्तिकं भिन्नं पदं । अथेति समुच्चये । यस्मादीशोऽनीश इत्येवमादीनि वचनानि बहुभिर्वैदिकैः प्रमाणैर्विरुद्धानि तस्मादाभासानीति ज्ञेयानि। तथैवमादयो युक्तयोऽपि । यस्माद्बहुभिर्वैदिकैःप्रमाणैर्विरुद्धास्तस्मादाभासा इति ज्ञेया इति योज्यं । वचनापेक्षया विरोधिप्रमाणानां प्राबल्यसमर्थनाय बहुभिरित्युक्तम् ॥ उपलक्षणमेतत् । निरवकाशत्वादिकमपि ग्राह्यं । अवैदिकवचनापेक्षया युक्त्यपेक्षया च प्राबल्योपपादनाय बहुभिरिति वैदिकैरिति चोक्तं । यथा प्रमाणविरुद्धानां युक्तीनामविषयवृत्तित्वेन व्याप्तिशून्यत्वेन चाभासत्वात्सर्वथा हेयत्वं किं तथा वचनानामपीत्यपेक्षायामाह ॥

( मूलं ) वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना। इतराणि विरुद्धानि प्रलंभभ्रमजान्यपीति व्यासस्मृतिः ॥ ७८ ॥

---

किंचिदेतत् । प्रयासनिरासायेति । जगन्मिथ्यात्ववादिश्रुत्यादीनां विरुद्धार्थकत्वेनार्थांतरं वक्तव्यमित्युदाहरिष्यमाणस्मृतौ स्पष्टमभिधानाच्च प्रयास इति भावः । प्रत्येकमिति । प्रत्येकं संबंधाभावे जगन्मिथ्यात्वमात्रबोधकवाक्यस्य विरुद्धार्थकत्वालाभप्रसंगात्तथा संबंधः प्रदर्शितः । एवमादिविरुद्धानीत्यस्यैकपदत्वे कंठोक्ता ये विरोधास्तदादिविरुद्धत्वशालीनीत्यर्थो लभ्यते स न युक्तः। विरुद्धपदार्थैकदेशे विरुद्धत्वे आदिपदार्थस्यान्वयप्रसंगः । किंच पूर्वोक्तानामीशोऽनीश इत्यादि पंचवचनानामित्यंतेनोपस्थितानि इत्यंतार्थस्य वचनानीत्यनेनान्वयो वक्तव्यः । इत्थं च एवमादिविरुद्धानि इति वचनानीति लभ्यते । स न युक्तः । आदिपदग्राह्यविरोधांतरस्याप्रतिभासेन बाधात् । विशेषणोभयसमासत्वस्य एवमादिविरुद्धानीत्यस्यांगीकारेण कथंचिदुपपादनेपि विरोधप्रतियोगिबोधकप्रमाणपदस्य समासाघटकतया तदर्थान्वितस्वार्थकत्वापत्तिः । स्वगत विरोधस्यैव तथात्वे प्रतीत्या प्रमाणांतरे विरोधप्रतियोगिन्याकांक्षानुदयेन विवक्षितार्थालाभाच्चेत्यत आह । एवमादीति । लुप्तेति । सुपां सुलुगित्यनेन लोपविधानाच्छंदस्यस्या अपि स्मृतेस्तुल्यत्वादिति भावः ।

( टीका ) वेदमनुसरंतीति वेदानुसारीणि वेदवेदानुसारेषु प्रबलप्रमाणविरोधे सति तेषां विरुद्धमर्थं परित्यज्यऽविरुद्धोऽर्थः कल्पनीयः । ननु सर्वथा हेयानि । वेदवेदानुसारीतराणि प्रमाणविरुद्धानि चेत् । प्रलंभभ्रमजान्यतरत्वेन सर्वथाऽप्रमाणानीति ज्ञातव्यानि ॥ ननु शब्दस्तावत् ज्ञानकरणं प्रमायाश्च ज्ञानकरणमात्राधीनत्वमंगीकृतम् । तस्मादितरप्रमाणानामन्यार्थकल्पनैवोचितेति चेत्सत्यम् । तथापि स्वतःप्रामाण्यस्यौत्सर्गिकत्वेन दोषादप्रामाण्यस्यापि जननात् । प्रकृतवचनानि च विप्रलंभादिमूलानीत्यप्रमाणान्येव । अत एवेतराण्यप्रमाणानीति वक्तव्ये तदुपपादनाय प्रलंभभ्रमजानीत्युक्तम् । प्रलंभादिमूलत्वं च प्रबलप्रमाणविरोधानुमेयम् । अत एव विरुद्धानीत्युक्तम् । तर्हि वेदादिषु तत्कल्प्यं स्यादिति चेत् । अपौरुषेयत्वादिबाधकाभावे सत्येवमेव तत् । अत एव वेदवेदानुसारेष्वित्युक्तं । अन्यार्थकल्पनाप्रकारश्च लेशतो दर्शयिष्यते । एवं सामान्यतो अनुमानागमयोरागमविरोधमभिधाय विशेषतोऽपि तं दर्शयति ॥

**( मूलं ) नासतो दृष्टत्वात् । नाभाव उपलब्धेः। वैधर्म्याच्च न स्वप्नादिवदित्यादिभगवद्वचनेनापि निरस्ताः । ॥७०॥**

( टीका ) आदिपदेन पृथगुपदेशादित्यादिकमात्मभेदप्रतिपादकं सूत्रं गृह्यते ।

---

सूत्रं गृह्यत इति ॥ अन्यथा विमता आत्मानः परात्मनो न भिद्यंते इत्यनुमानस्य विशेषत आगमाविरोधो न दर्शितः स्यादिति भावः । यस्त्वत्र केनचिदर्वाचीनेन प्रलपितं । ईशोऽनीशो जगन्मिथ्या न पूज्यो गुरुरित्यपि । एक आत्मा परब्रह्मभावो मुक्तिरितीत्यपि । एवमादिविरुद्धानि वचनान्यथ युक्तयः । प्रमाणैर्बहुभिर्ज्ञेया आभासा इति वैदिकैः ॥ वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना ॥ इतराणि विरुद्धानि प्रलंभभ्रमजान्यपि इति व्याससमृतिरिति परोदाहृतपद्यजातमपि न प्रामाणिकम् । प्रसिद्धव्याससमृतावनुपलंभात् । अन्यस्मृतेर्व्याख्यातृभिः क्वाप्यनुदाहृतत्वाच्च । असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ॥ अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ॥ प्रभवंत्युग्रकर्माणः क्षयाय जगतोऽहिता इति भगवद्गीतावचनं तु न विरुद्धम् । असत्यमित्यस्य न सत्यं यस्मिन्निति व्युत्पत्त्या निस्तत्त्वपरत्वात्तस्य च शून्यवाद एवोपपत्तेः । भावाः क्षणक्षयिण एव निरात्मकाश्चेति तदभ्युगमात् । अत एव निरीश्वरत्वमपि तत्रोक्तम् । बहुव्रीहेस्तत्पुरुषो बलीयानिति न वाच्यम् । प्रसिद्धानुवादेऽस्या विनिगमकत्वात् । अन्यथा परस्परसंभूतत्वाद्यभिमानासंगतेरिति । तत्प्रलापमात्रम् । अन्यानुदाहृतत्वप्रसिद्धग्रंथानुपलंभमात्रस्य परमप्रसिद्धग्रंथकारोदाहृतवाक्यानुपादेयत्वबीजत्वे जीवेशावाभासे नेति श्रुतेरपि त्वद्भाष्यकारमात्रोदाहृतत्वात्प्रसिद्धोपनिषत्स्वनुपलंभाच्चानुपादेयतापत्तेः । गीतोदाहरणपूर्वकं शंकातद्व्याख्यानादिकं च पूर्वमेव कृतत्वात्तव पौनरुक्त्यम् । अस्माभिस्तु

प्रागेव तन्निराकृतम् । प्रसिद्धत्वन्मतानुवादपक्षे सामासिकलाघवस्यापि संभवेन तस्य विनिगमकत्वात् । एकजीववादे त्वन्मतेऽपीश्वराभावेनात एवेत्युपष्टंभासंगतिश्च । दृष्टिसृष्टिपक्षे त्वन्मतेऽप्यपरस्परसंभूतत्वाभिमानासंगतेश्चेत्यलम् । एतेन मिथ्यात्वानुमाने न्यायामृतोक्तानां स्ववाधकाभिमतावाध्यदोषप्रयुक्तभानत्वप्रतिभाससमात्रशरीरत्वादीना-मुपाधिताऽपि सिध्यति । उपाधीनां बाधोन्नीतत्वात् । बाधेन पक्षे साध्यसंदेहप्रति-बंधेनोपाधेः पक्षांतर्भावेण साध्यव्यापकत्वसंदेहानवकाशेन बाधबलनिश्चितसाध्यव्याप-कताकत्वमेवोपाधौ बाधोन्नीतत्वम् । एवं दृग्दृश्ययोस्तादात्म्यरूपाध्यासिकसंबंधरूप-विषयताया निरस्तत्वेनाकाराख्यविषयतयैवोपपत्तेश्च दर्शितत्वेन मिथ्यात्वाभावे दृश्यत्वं न स्यादित्यनुकूलतर्कानुत्थित्या बाधानवतारदशायामपि पक्षेतरत्वतुल्यानामप्येषामुपा-धित्वं सिध्यति । प्रतिभाससमात्रशरीरत्वं च निःस्वरूपत्वं कालासंबद्धत्वं वाऽर्थक्रि याशून्यत्वं वेति न कोऽपि दोषः । एवं प्रत्यक्षादिबाधोपपादनेनैव घटादयः स्वानु-गतप्रतिभासे वस्तुनि कल्पिताः विभक्तत्वात् यथा सर्पमालादिकं स्वानुगतप्रतिभासे रज्ज्वादाविदमंशे विभज्यते । एवं ब्रह्मण्यनुगच्छति घटादिकं विभज्यते । सन् घटः सन् पट इति स्वानुगतप्रतिभासे स्वतादात्म्येन स्वरूपतो भानयोग्ये स्वतादात्म्य-विषयतानिरूपितानवच्छिन्नप्रकारतावतीति यावत् । सप्तम्याः व्यापकत्वमर्थो व्याप-कतानिरूपकत्वं च तादात्म्येन । तथाच यद्यदुक्तप्रकारताविशिष्टं तत्तत्र कल्पित-मित्यर्थः । कल्पितत्वं च ज्ञाननिवर्त्यत्वं स्वाभाववति ज्ञेयत्वं वा । तथाचोक्तोक्त-प्रकारताव्यापकत्वं स्वनिवर्तकधीविषयताकत्वमुक्तप्रकारताव्यापकस्वात्यंताभावकत्वं वा पर्यवसितम् । उक्तप्रकारतासामानाधिकरण्यमात्रनिवेशे पटादेः स्वतादात्म्यभ्रमविषय-घटत्वादौ कल्पितत्वमादायार्थांतरं वाच्यमतो व्यापकत्वमुक्तम् । स्वमते हि पटादे-रुक्तभ्रमे नारोपितत्वं किंतु तत्तादात्म्यस्यैवेति तन्निवर्तकधीविषयत्वमेव घटत्वादे-र्नतु पटादिनिवर्तकधीविषयत्वमिति स्वानभिमतं तत् । परानभिमतमपि परस्य तार्किकादेरन्यथाख्यातिस्वीकारेण पटादिनिवर्तकत्वस्य घटत्वादिज्ञानेऽनंगीकारादुभ-यवाद्यसम्मतसिध्याऽर्थांतरं स्यात् । व्यापकतानिवेशे तु तादृशप्रकारतायाः सद्रूपेऽपि सत्त्वात् तस्य स्व(स्वं=पटः) निवर्तकधीविषयत्वसिद्ध्या मदिष्टसिद्धिः । नच स्वमते बाधो घटत्वादेर्व्यावहारिकघटादिनिवर्तकबुध्याविषयत्वादिति वाच्यम् । जातिमात्रस्य सद्रूप-त्वांगीकारात् । तादृशप्रकारतावति द्रव्यगुणादावेव निवर्तकधीविषयत्वाभावाद्बाध-वारणाय विभक्तत्वहेतुमति रज्ज्वारोपितमालादौ व्यभिचारवारणाय वाऽनवच्छिन्नत्वं प्रकार-तायां निवेशितम् । प्रतियोगिताविषयत्वादीनामनवच्छिन्नप्रकारतास्वीकारे तु पूर्वोक्तरीत्या पटादौ बाधवारणायोक्तमालादौ व्यभिचारवारणाय च निरूपितांतस्थले स्वतादात्म्यसामा नाधिकरण्यमेवानवच्छिन्नप्रकारतायां देयम् । तथाच प्रतियोगित्वादेर्घटादौ विशेषणतासं बंधेनैव सत्त्वात् न व्यभिचारः । ¶ एवंच सामानाधिकरण्यमपि व्यापकतास्थाने वक्तुं शक्यम् । द्वितीयसाध्ये तु न प्रकारतायामनवच्छिन्नत्वं † देयम् । * द्रव्यादौ जातौ

¶ तादात्म्ये स्वसमानसत्ताकत्वनिवेशान्न पूर्वोक्तार्थांतरमिति हृदयं ।

† असत्त्वमादायार्थांतरतावारणाय स्वतादात्म्यविषयतानिरूपितत्वस्य प्रकारतायां निवेशः ।

* मालादीनामनिर्वचनीयत्वसिद्ध्युत्तरमेवानुमानप्रवृत्तेर्न तार्किकादिमते दृष्टांतासिद्धिः ।

च सर्वत्र स्वाभावस्य सिषाधयिषितत्वात् । विभक्तत्वं चात्मावृत्तिप्रतियोगितासंबंधेन भेदोऽत्यंताभावो वा पूर्वोक्त एवानुसंधेयः । एवं घटादिकं सद्रूपे कल्पितं प्रत्येकं तदनुविद्धतया प्रतीयमानत्वात् सद्रूपे कल्पितत्वं सद्रूपनिष्ठस्वनिवर्तकधीविषयताकत्वम् । तदनुविद्धतया सद्रूपतादात्म्येन प्रतीयमानत्वादित्यत्र प्रत्येकमित्यस्यान्वयः । तथा च घटादीनां सर्वेषां सत्तादात्म्येन प्रतीयमानत्वात् घटादिकं सर्वं सद्रूपविषयकज्ञाननिवर्त्यमित्यर्थः । तादृशप्रतीयमानत्वं च तद्योग्यतारूपं ग्राह्यम् । तच्च सद्वृत्तित्वविशिष्टभेदप्रतियोगित्वम् । एवमयं पटः एतत्तंतुनिष्ठात्यंताभावप्रतियोगी अंशित्वात् अंश्यंतरवदित्यादीनि मिथ्यात्वे सामान्यानुमानानि विशेषानुमानानि च निरस्तानि । प्रत्यक्षागमादिबाधादप्रयोजकत्वाच्च । किंच गवादिनिवर्तकधीविषयत्वं गोत्वजात्यादौ नास्तीति बाधवारणाय गोत्वादिजातीनां सत्ताजातिस्वरूपत्वमेव । सत्ता च ब्रह्मैवेति अंगीकृत्य न बाध इति परिहृतम् । तदयुक्तं । घटादावपि सत्तासत्वेन गोत्वापत्त्या घटस्यापि गोपदवाच्यत्वापत्तेः । नच वाच्यत्वं नाम तत्पदनिष्ठशक्तिनिरूपकत्वं । शक्तिनिरूपकत्वं च तत्तद्गोव्यक्तिष्वेव स्वीक्रियतेऽतो न दोष इति वाच्यम् । तादृशशक्यतां प्रति सत्ताया घटादिसाधारणायाः अतिप्रसक्ततया अवच्छेदकत्वायोगात्तत्तन्निष्ठतद्व्यक्तित्वानामेवावच्छेदकत्वेन शक्यतानंत्यात्तन्निरूपकशक्त्यानंत्यान्नानार्थत्वापत्तेः । ननु सर्वासु गोव्यक्तिष्वेकैव शक्यताऽखंडा स्वीक्रियते । एवं गोपदेष्वप्येकैव शक्तिस्तयोरवच्छिन्नत्वे मानाभावान्नाम्यूनानतिरिक्तानुगतधर्मापेक्षा नापि नानार्थत्वमिति चेन्न । सर्वगोव्यक्तिष्वखंडायाः शक्यतायाः अंगीकारावश्यकत्वे तस्या गोत्वरूपताया अंगीकर्तुं शक्यत्वेन तदनंगीकारायोगात् । नच गोत्वादिजातेः किंचिदनिरूपितत्वेन शक्यतायाश्च किंचिन्निरूपितत्वेन कथं शक्यतैव गोत्वमिति वाच्यम् । अस्मिन्देशे अस्मिन्काले गौःसतीति प्रतीतिबलात्सत्ताजातेरपि किंचिन्निरूपितत्वासिद्ध्या जातेः किंचिदनिरूपितत्वायोगात् । नच तत्प्रतीतौ सत्ताजातिर्न प्रतीयते किंत्वाधेयत्वमेव भासत इति वाच्यम् । एतदन्यादृशस्य घटादौ सत्ताजात्यवगाहिप्रत्ययस्याभावेन सत्ताजातेरेव घटादावसिद्धिप्रसंगात् । नच सन् घट इत्येतावन्मात्रप्रतीतिरेव तत्साधिकेति युक्तम् । तत्र स्वनिरूपकं विहायाधेयतामात्रस्य भानाभ्युपगमसंभवात् । ननु निरूपकानवगाहिनि प्रत्यये निरूप्यं न भासत इत्यतिरिक्तधर्मभानमिति वाच्यम् । चैत्रस्य पितेत्ययं पितेति च प्रतीतिबलात्पितृत्वादिजातीनामपि सिद्धिप्रसंगात् । अभावः सन्नित्यादिप्रत्ययशादभावादावपि सत्तांगीकारप्रसंगाच्च । नच सर्वस्य सद्रूपे कल्पितत्ववादिनामभावादेरपि कल्पितत्वात् ब्रह्मरूपसत्ताजातिरिष्टैवेति वाच्यम् । सत्ता सतीति प्रत्ययबलात्सत्ताया अपि सत्ताजातिमत्त्वं स्यान्नचेष्टापत्तिः सत्ताया अपि सद्रूपे कल्पितत्वापत्तेः । नचोपहितरूपेण सत्ताया अपि कल्पितत्वाभ्युगमान्नेदमनिष्ठापादनमिति वाच्यम् । तद्धुपहितरूपापन्नायास्तस्याः कल्पितत्वेन घटनिवर्तकज्ञानविषयत्वायोगाद्बाध एव । किंचेयं गौरियं गोपदशक्येति सामानाधिकरण्यप्रत्ययाविशेषात्संबंधभेदकल्पने मानाभावाच्च शक्यताशक्ततारूपाणामखंडधर्माणां गोगोपदतादात्म्यस्यावर्जनीयतया तेषां गोगोपदनिवर्तकज्ञानाविषयत्वाद्बाध एव । नच तेषु नानवच्छिन्नप्रकारताभ्युपेयत इति वाच्यम् । सत्तावदखंडानुगतधर्मत्वादेव तथाऽभ्युपगमसंभवात् । अन्यथा सत्ताया अपि तन्न स्यात् । शब्दनिष्ठानां तारत्वमंद्रत्वादीनां रूपनिष्ठानां शुक्लतरत्वादीनां रसनिष्ठमधुरत्वावांतरवैजात्यानां

च अयमस्मात्तारः अयमस्माच्छुक्लतरः अयं मधुरस्ततो मधुरतरोऽयमिति प्रत्ययबलादवधिनिरूप्यत्वस्य नव्यनैय्यायिकैर्वर्णानित्यत्वविचारेऽभिहितत्वेन जातेः किंचिन्निरूपितत्वेऽपि बाधकाभावाच्च। अपिच कार्याव्यवहितपूर्ववृत्तितावच्छेदकधर्मः कारणत्वमिति पक्षे दंडत्वादिरूपाखंडधर्मस्यैव कारणत्वमुपहितरूपेण स्वरूपतोऽवच्छेदकत्वं चेत्यभ्युपगतत्वेन शक्यताया एव स्वरूपतोऽवच्छेदकत्वं तादृशशक्यतात्वेनावच्छेद्यत्वमिति रीतेः संभवेन शक्यताया अनवच्छिन्नाया अखंडायाः स्वीकारे बीजाभावाच्च। ननु शक्यता नाखंडा गोव्यक्तिषु स्वीक्रियते येन तदभ्युपगमस्य जात्यभ्युपगमरूपत्वस्यैव बलात्प्राप्त्याऽस्माकं बाधानिस्तारः स्यात्। किंतु भवदभिमता यावत्यो गोव्यक्तयस्तावद्व्यक्तिविषयकधीजनकतारूपा शक्तिरेकैव गोपदे स्वीक्रियते। तन्निरूपिता कार्यता एकैवाखंडा गोबोधेषु। तयोश्च किंचिदवच्छिन्नत्वे मानाभावान्न कोऽपि धर्मस्तदीयाखंडावच्छेदकताश्रयः। गोपदनिष्ठतादृशशक्तिनिरूपकबोधविषयत्वमेव गोषु शक्यत्वं नाम नातोऽन्यदधिकम्। विषयता त्वाश्रयभेदेन भिन्नैवेति नास्याः गोत्वतुल्यता। शक्तिग्रहनिष्ठकारणत्वमप्येकमेव। सद्रूपविशिष्टतद्व्यक्तिशक्तं गौरिति पदमित्याकारेषु शक्तिज्ञानेष्वेकस्या एवानवच्छिन्नायाः कारणतायाः सद्रूपविशिष्टतद्व्यक्तिरिति बोधं प्रति स्वीकारात्। पराभिमतगोत्वजात्याश्रयत्वेनाभिमतव्यक्तीनां तद्व्यक्तिशब्देन कारणकार्यकोटयोर्निवेशोऽत एव घटव्यक्तिं तद्व्यक्तित्वेनावगाहमानादुक्ताकारशक्तिज्ञानान्न गोव्यक्तीनां शाब्दबोधस्तत्र तस्य कारणत्वास्वीकारात्। नच तथाप्येकां गोव्यक्तिमवगाहमानात्छक्तिग्रहादन्यगोव्यक्तिशाब्दधीः स्यादिति वाच्यमिष्टत्वाद्गोत्वादिजातिस्वीकारेऽपि गोत्वेनैकगोविषयकशक्तिज्ञानाद्गोव्यक्त्यंतरशाब्दबोधस्य मीमांसकैः स्वीकारात्। ननु कारणत्वादेरखंडस्य स्वीकारेऽप्यनुगतैकधर्मं विना अन्वयव्यतिरेकग्रहणायोगेन तद्ग्रहणायोगाद्गोत्वादिकमवश्यमभ्युपेयमिति चेन्न। तृणारणिमणिभ्यः प्रत्येकं वन्ह्युत्पत्त्या तृणत्वाद्यवच्छिन्नस्य व्यतिरेकाग्रहेऽपि उपस्थितकतिपयव्यक्तिभिः कार्योत्पत्तिदर्शनमात्रेण प्रथमतस्तासु कारणताग्रहस्तदनंतरं तत्सदृशव्यक्त्यंतरेष्विव सर्वत्राप्यनुगतधर्मावच्छिन्नान्वयव्यतिरेकग्रहं विनापि कारणताग्रहसंभवेनानुगतधर्मस्वीकारवैयर्थ्यात्। यत्तु कारणत्वादेरवच्छिन्नत्वेनैवानुभवबलात्तद्ज्ञानावश्यकत्वे न्यूनानतिरिक्तवृत्तेरेव तथात्वात्तादृशगोत्वादिसिद्धिरिति। तन्न। धूमो वन्हिव्याप्य इत्याद्यनुभवे धूमत्वादौ व्याप्यतावच्छेदकत्वाभानस्य दीधितिकाराद्युक्तत्वेन तद्वदेव दंडो घटकारणमित्याद्यनुभवे दंडत्वादेर्घटकारणतावच्छेदकत्वभानानंगीकारात्। यदपि व्यक्तीनां जातिव्यंजकत्वात् सत्तादिरूपजातिव्यंजकतावच्छेदकतया गोत्वादिजात्यभ्युपगम इति। तदप्यसत्। जातिनिष्ठलौकिकविषयतासंबंधेन प्रत्यक्षं प्रति स्वविषयसमेवतत्वसंबंधेन प्रत्यक्षस्य कारणत्वाज्जातिप्रत्यक्षप्रयोजकसंबंधघटकताया व्यंजकतारूपत्वाद्वा सास्नावच्छिन्नचक्षुस्संयोगवत्समवायादेर्गोत्वाभ्युपगमपक्षेऽपि कारणत्वावश्यकतयोक्तसंबंधघटकतारूपव्यंजकत्वस्यांगीकाराद्वा तदवच्छेदककोटौ गोत्वादेरनिविष्टत्वाद् घटकतयापि गोत्वादिजातिसिद्धेरभावादिति चेन्न। गोपदेषु तज्ज्ञानेषु कारणताया अखंडायास्तज्जन्यबोधे कार्यतायाश्चाखंडाया अभ्युपगमे पूर्वरीत्या तासामेव जातिरूपत्वापत्त्या गवादिष्वपि किंचिन्निरूपितकारणताकार्यत्वादीनामखंडानामावश्यकत्वे तासामेव जातिरूपत्वापत्त्या तदनभ्युपगमवचनस्य रिक्तत्वात्। गोत्वादिजातीनां तत्तदवच्छिन्नकारणताकार्यतादीनां च पृथगंगीकारे ह्यस्माकं गौरवम्। कार्यत्वादीनां गवादिस्वरूपभूतानामंगीकारे गोत्वादीनामेव पूर्वो-

प्रदर्शितरीत्या कारणत्वादिरूपत्वांगीकारे चागौरवायोगात्। कारणत्वादीनां जातिरूपत्वाभावेऽपि त्वदनुमाने बाधस्योपपादितत्वाच्च। अपि च तत्पदजन्यबोधविषयत्वस्यैव तच्छक्यत्वे घटमानयेत्यादिवाक्यजन्यबोधस्य घटपदानयनादिपदजन्यतया तद्विषयत्वाद्धटपदवाच्यत्वमानयनस्यापि स्यात्। तत्पदप्रयोज्यविषयतावत्त्वं तत्पदशक्यत्वं चेत्प्रयोज्यत्वस्य जन्यतावच्छेदकत्वातिरिक्तस्य दुर्निरूपतयाऽवच्छेदकतायाश्च जन्यतां प्रति त्वयेदानीमेवानंगीकृतत्वात्। अस्मिन् वाक्ये एतत्पदसत्त्वादस्य विषयत्वमिति प्रतीतिसिद्धस्वरूपसंबंधविशेषत्वांगीकारे गंगापदप्रयोज्यविषयताशालिनस्तीरस्य तत्पदवाच्यत्वापत्तिः। किंच पटो घटपदशक्य इति भ्रमयतः घटपदात्पटादिबोधो जायते। एवं घटे शक्तिग्रहात् घटादिबोधो जायतेऽतः सद्रूपविशिष्टतत्तद्व्यक्तिबोधसाधारणी कार्यतोक्तशक्तिज्ञानसाधारणी च कारणता चाभ्युपेयाऽन्यथा तादृशबोधस्याकस्मिकत्वापत्तेः। तथाच घटपटयोरविशेषात्पटादेरपि घटपदवाच्यतापत्तिः। नच पटो घटपदशक्य इति शक्तिज्ञानतज्जन्यशाब्दबोधयोः प्रमितत्वात्तयोः कार्यकारणभावादिसत्त्वेऽपि यथा पटस्य घटपदशक्यत्वं यया रीत्या वार्यते तयैव मन्मतेऽप्यस्त्विति वाच्यम्। मन्मते शक्यतावच्छेदकत्वेनाभ्युपगतघटत्वजातेः पटेऽभावेन पटे घटपदशक्तिज्ञानस्य भ्रमतया तेनार्थसिद्धेरभावेन पटे घटपदशक्यतापादनं न संभवति। त्वन्मते च घटपदप्रयोज्यविषयतादेरेव शक्यत्वरूपतया तस्योक्तरीत्या पटे बाधाभावेन शक्तिज्ञानस्य भ्रमत्वे बीजाभावात्। नच मन्मतेऽपि गोघटादिनिष्ठा शक्यता ऽखंडा सा पटे बाधिताऽस्त्विति वाच्यम्। त्वया न चानुगतमेकमवच्छेदकं विना तावद्व्यक्तिनिष्ठा कथमेका शक्यतेति वाच्यम्। तावद्व्यक्तिधीजननानुकूला शक्तिर्गोपदे स्वीक्रियत इत्यादिना शंकासमाधानग्रंथेनाखंडशक्यतापक्षस्य त्यक्तत्वान्मयानुपदमेव दूषितत्वाच्च। नच पटो घटपदशक्य इत्यादिषु भ्रमेषु प्रमावृत्तिकारणतापेक्षया विलक्षणे वाऽखंडा कारणता स्वीक्रियते तज्जन्यबोधेष्वेवाखंडा कार्यता च। इत्थं च प्रमामात्रनिष्ठकारणतानिरूपितकार्यताशालिबोधीयविषयताया एव घटपदशक्यतारूपत्वान्नास्माकं पटे घटपदशक्यत्वमिति वाच्यम्। एवमपि घटपटोभयविषयकशाब्दबोधमादाय पटेऽतिप्रसंगानुद्धारात्। अपिच जातिमात्रं त्वया न परित्यक्तम्। एकस्या महासत्तायाः स्वीकारात्। किंतु लाघवदृष्ट्या गोत्वादिकमेव। तत्र गोत्वावच्छिन्नविशेष्यकगोपदशक्तिज्ञानगोत्वप्रकारकशाब्दयोस्तत्त्वेन कारणताकार्यते द्वे एव गोत्वादिजातिस्वीकारपक्षे। तत्रतु भ्रमस्थले कारणताकार्यते द्वे प्रमास्थले द्वे इति चतुष्टयमिति कुतो लाघवम्। नच त्वन्मते कारणताकार्यताघटकतया गोत्वशाब्दत्वरूपजातिद्वयस्वीकाराच्चतुष्टयमवर्जनीयमिति वाच्यम्। एवमपि त्वत्पक्षे लाघवानवकाश एव। वस्तुतो घटपटपदशक्तिज्ञानाधीनशाब्दस्थलानुरोधात् घटत्वपटत्वाद्येकैका जातयः कारणताकार्यते द्वे इति तत्तत्स्थले पदार्थत्रयं सर्वस्थलानुरोधाच्छाब्दत्वजातिरेका। त्वन्मते तु प्रतिस्थलं पूर्वोक्तरीत्या चतुष्टयमिति मन्मत एव लाघवम्। कारणताकार्यतयोः स्वावच्छेदकधर्मरूपताभ्युपगमे तु सुतरां लाघवम्। अपिच घटपदस्य यदा पटे शक्तिभ्रमस्तत्पदात्पटबोध एव न स्तंभबोधो यदा स्तंभे शक्तिग्रहस्तदा तद्बोध एवेत्यनुभवानुरोधात्तादृशतादृशशक्तिज्ञानशाब्दबोधस्थलेषु अखंडाः कारणताकार्यताव्यक्तयो बह्वय एव एकैकघटपदपटपदानुरोधेन स्वीकर्तव्या इति

त्वदभ्युपगतस्यैवातिहेयत्वम् । तत्रापि सर्वभ्रमसाधारणैककार्यकारणभावांगीकारे घटे गोपदशक्तिज्ञानात्पटबोधापत्तिः । कथंचित्तद्वारणार्थमाग्रहे गोपदवाच्यनानार्थस्थलेऽप्येतत्कारणताकार्यतयोरेव प्राप्त्या गोपदादीनां नानार्थकत्वोच्छेदः घटपदाविशेषात् । अपिच गोत्वादिजात्यभावे तत्तत्कार्यकारणयोरन्वयव्यतिरेकग्रहानुपपत्तिः । यदत्रोक्तं तृणादौ वन्हिकारणताग्रहस्थल इवोपपत्तिरिति । तदसत् । यस्मात्तत्र कतिपयतृणादिभिः पुनः पुनः कार्योत्पत्तिं दृष्टवतोऽनुमानेनैव लाघवसहकृतेनाजनकव्यक्तिव्यावर्त्तकजात्यवच्छिन्नेषु कारणताग्रहादपूर्वव्यक्तौ तज्जातीयत्वेन कारणत्वानुमानात्प्रवर्तते । तव सत्तातिरिक्तजात्यपलापिनः कथं, सत्तायाः व्यभिचारित्वात् । एवमेव प्रवृत्त्यंगीकारे वन्ह्यर्थिनो घटेऽपि प्रवृत्त्यापत्तेः । किंच सत्ताया एव गोत्वघटत्वादिपदैरभिलाप्यनानाजात्यात्मकत्वे घटव्यक्तौ पटत्वादिसंशयादेरनुपपत्तिः । सत्त्वस्य गृहीतत्वात् । नच घटव्यक्तिभेदकोटिक एवायं संशय इति वाच्यम् । इतरघटव्यक्तिभेदकूटवत्त्वेन गृह्यमाणघटव्यक्तौ सत्त्वेन गृह्यमाणायामुक्तसंशयस्यानुभवसिद्धत्वात् । सन्नयं घटो नवेति संशयस्याहार्यत्वापत्तिश्चेत्यादि बहुतरमूहनीयम् । यदपि कल्पांतरमुक्तं अथवा तावद्व्यक्तीनां यावंति सद्रूपेण सह तादात्म्यानि तावदन्यतमत्वविशिष्टसंबंधेन सद्रूपविशिष्टगौरिति व्यवहारविषयस्तेन संबंधेन च सद्रूपं तत्तत्कारणतावच्छेदकम् । नच गौरवाद्दुर्ज्ञेयत्वाच्चोक्तान्यतमत्वस्य तथात्वासंभवाद्गोत्वादेः कल्पनमेव युक्तमिति वाच्यम् । अखंडस्यान्यतमत्वस्य स्वरूपत एव निवेशेनोक्तदोषाभावात् । क्लृप्तेनैव तेन निर्वाहे गोत्वादिकल्पनस्यायुक्तत्वात् । नचैवं गोव्यक्तीनामन्यतमत्वेनैव गवादेः कारणत्वादिकमास्तां किं सद्रूपस्य तत्कल्पनयेति वाच्यम् । गोत्वादिजातिस्वीकारेऽप्यन्यतमत्वस्य कारणतावच्छेदकत्वस्य वारणाय तस्याावाभ्यामन्यथासिद्धिनिरूपकत्वस्वीकारात् । अत एव सद्रूपास्वीकर्तृबौद्धैरुक्तान्यतमत्वस्यापोहनामकस्य गवादिपदवाच्यत्वादिकं स्वीक्रियत इति । तदप्ययुक्तम् । यतो यद्यप्यत्र न पूर्वकल्पोक्तदोषाणामवकाशस्तथापि घटे गोत्वसंशयस्य धर्मितावच्छेदकातिरिक्तप्रकारकोटिकत्वस्यानुभवसिद्धस्यापलापापत्तिः । नह्येतत्संशयस्य समवायेन घटवति संयोगेन घटसंशयस्येव संसर्गमात्रकृतवैलक्षण्यानुभवो लोकानाम् । अपिचान्यतमत्वादीनामखंडत्वेऽपि प्रतियोग्यनालिंगिततयाऽभावप्रत्यक्षाभावेन स्वरूपतो भानायोगात्स्वरूपतो भासमाने गोत्वे कारणतावच्छेदकत्वं लाघवादन्यतमत्वस्य त्वन्यथासिद्धिनिरूपकतावच्छेदकत्वमिति ममाभ्युपगमो गोत्वादेरन्यतमत्वातिरिक्तस्य स्वीकारोऽपि । तस्य स्वरूपतो भानाभ्युपगमे तु तत्तद्गवान्यतमत्वादीनामेव कारणतावच्छेदकत्वसंभवात्कुतस्त्वदुक्तसंबंधेन सद्रूपस्य कारणतावच्छेदकत्वम् । संसर्गांशेऽन्यतमत्वस्य स्वरूपतो भानं न प्रकारांश इत्यत्र नियामकानुपलंभात् । ननु स्वरूपसंबंधसंसर्गकस्थले स्वरूपत्वस्याननुगतत्वात्स्वरूपत्वस्य संसर्गतावच्छेदकत्वानुपपत्त्या तत्तदन्यतमत्वमेव स्वरूपतः संसर्गतावच्छेदकमित्यास्ति नियामकम् । नच सत्त्वमेव स्वरूपपदार्थतावच्छेदकमस्त्विति वाच्यम् । तथात्वे सत्स्वरूपमिति वाक्यस्य घटः कलश इति वाक्यस्येवाबोधकत्वापत्तेरिति चेन्न । तर्हि स्वरूपमित्याकारानुगतप्रतीतिनिर्वाहाय तादृशान्यतमत्वरूपस्वरूपत्वस्य स्वरूपतः प्रकारता प्राप्तैव । नच तद्व्यक्तित्वेनैवान्यतमत्वं भासतामिति वाच्यम् । संसर्गकोटौ तथैव संभवात् । वस्तुतः काले स्वरूपसंबंधेन कालत्वावगा

हिन्योरत्र कालत्वमिदानीं कालत्वमिति प्रतीत्योः संसर्गतावच्छेदककृतवैलक्षण्यं वाच्यम् । प्रकारविशेष्ययोः तत्स्वरूपभूतसंसर्गस्य च साम्यात् । तच्चावश्यमन्यतमत्वादतिरिक्तं भावरूपमेव प्रत्येकं प्रत्येकं भासत इत्यवश्यमुपेयमित्यन्यतमत्वस्य संसर्गतावच्छेदकत्वमप्रामाणिकमेव । अभावत्वरूपाभावस्यापि प्राचीनैः स्वरूपतो भानस्याभ्युपगतत्वाच्च । एवं यावत्यः सद्व्यक्तयस्तत्तदन्यतमत्वस्यैव सन् घट इत्यादिषु भानाभ्युपगमेनैव सर्वनिर्वाहे सद्रूपे जातेरप्यसिद्धिश्च । नच अन्यतमत्वस्य स्वरूपतो भाने तस्य प्रतियोग्यविषयकप्रत्यक्षविषयत्वाद्भावत्वमनुगतत्वाज्जातित्वमिति बलादागतमिति वाच्यम् । गवादिनिष्ठतत्तदन्यतमत्वस्यापि तथैव जातित्वप्राप्त्या गोत्वादिजात्यनंगीकारस्य व्याहतत्वापत्तेरित्यलम् । यदपि स्वसम्मतार्थे संवादाय हरिकारिकोदाहरणं । ' संबधभेदात्सत्तैव भिद्यमाना गवादिषु । जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः । सा जातिः सा महासत्ता तामाहुस्त्वतलादय इति । तदप्य किंचित्करम् । पूर्वोक्तदोषकवलितार्थे हरिकारिकाया अनादरणीयत्वात् । अन्यथा शाब्दिकोक्तशब्दार्थयोरैक्यपक्षस्याप्यंगीकर्तव्यतापातात् । यदपि हरिकारिकायाः संबंधभेदादित्यस्य तत्तद्गवादिव्यक्त्युपहितत्वरूपस्य तावद्व्यक्तितादात्म्यानामन्यतमत्वविशिष्टरूपस्य वा संबंधस्य भेदादित्यर्थः । त्वतलादय इत्यस्य गोत्वघटत्वबंधुतेत्यादौ त्वतलादिप्रत्ययार्थ इत्यर्थः । सदन्याप्रकारकधीप्रकारतैव स्वरूपतस्त्वादिशक्यतावच्छेदिकाऽतो न निर्धर्मितावच्छेदककबोधापत्तिः । नच प्रकृत्यर्थोपलक्षितसद्रूपस्य सर्वत्र सत्त्वादश्वे गोत्वमित्यादिव्यवहारापत्तिरिति वाच्यम् । प्रकृत्यर्थविशिष्टसत्ताया एवान्वयादिति । तन्न । गोव्यक्तिद्वयेऽनयोर्गोत्वमित्यादिव्यवहारानुपपत्तेः । त्वन्मते तत्तद्व्यक्तेरेव प्रकृत्यर्थतयाऽनुगतेतरव्यावर्तकरूपांतराभावेन तद्व्यक्तितद्व्यक्तिद्वयवृत्तित्वविशिष्टसत्त्वस्य कुत्राप्यभावादिति दिक् । तस्माद्गोत्वादिजातिस्वीकारावश्यकत्वे पूर्वोक्तबाध एव । ननु मास्तु गोत्वादीनां विवरणरीत्या सद्रूपत्वं किंत्वविद्याशक्त्यात्मका एव ताः । नच तादृशाविद्यायाः घटाद्यवच्छिन्नाचिद्विषयकत्वे घटादिधीकाले तन्निवृत्त्यापत्तिः । ब्रह्मविषयकत्वे घटत्वपटत्वादिनानाजात्यसंभवो नह्येकपुरुषं प्रति भासमाना मूलाविद्या नानेति सिद्धांत इति वाच्यम् । अनंतानां निर्विषयकाणां विक्षेपनामिकानां मूलाविद्याशक्तीनामंगीकारात् आवरणशक्तीनामेव सविषयकत्वात् । तथाच घटव्यक्तिभिरवच्छिन्ना जलाहरणाद्यनुकूलशक्तिर्घटत्वमेवं पटत्वमपि । तादृशाघटत्वाद्यवच्छिन्नाचिति घटादयः कल्पिताः यथा पूर्णानंदरूपेऽधिष्ठाने जायमाने प्रपंचस्य सद्रूपं साधारणाधारस्तथा गवाद्यवयवो गोत्वादिजातिश्चासाधारणाधार इति तत्रापि गवादयः कल्पिताः । तथाच स्वानुगतप्रतिभासे वस्तुनि कल्पिता इत्यस्य तत्तादात्म्यापन्ना इत्यर्थकत्वान्न बाधः । सद्रूपे कल्पिता इति ब्रह्मसिद्धिकारोक्तसाध्यस्यैव स्वनिवर्तकज्ञानविषयसद्रूपका इत्यर्थकत्वस्वीकारान्न पूर्वोक्तार्थविरोध इति चेन्न । घटत्वादीनामविद्याशक्तित्वे मानाभावात् घटत्वादितादात्म्यस्य घटे सिद्धत्वेन सिद्धसाधनमर्थांतरता वा स्यात् । नचाधिष्ठानाध्यासिकतादात्म्यवृत्तिवैजात्यपुरस्कारेण तादात्म्यस्य साध्यतावच्छेदकसंबंधत्वांगीकारान्न सिद्धसाधनमिति वाच्यम् । भ्रमेऽलीकभानवादिनो मम तादृशतादात्म्यस्यैवाप्रसिध्या तेन संबंधेन साधनायोगात् । तत्संबंधघटितव्याप्त्यादेरयोगात् । ब्रह्मसिद्धिकारोक्तसाध्येऽपि परिच्छिन्नत्वस्य भवदभिमतहेतुवाक्यार्थभूतस्य व्यभिचारादयः । एवमंशित्वहेतोर्बाधोपाध्यादयोऽनुसंधेयाः ।

(टीका) यद्यपि प्रागुदाहृतानि भगवद्वचनान्येव तथापि विशेषतो विरोधित्वं निर्णायकत्वेन प्राबल्यं वा सूचयितुं भगवद्वचनेनापीत्युक्तम् । निरस्ताः प्रपंचमिथ्यात्वादिपरा अनुमानागमा इति शेषः तद्वादिन इति वा । नन्वेतानि सूत्राणि शून्यवादिमतनिराकरणपरतया सिद्धांते व्याख्यायंते । तथाहि । शून्यमेव जगत्कारणमस्तु किमीश्वरेणेति प्राप्ते प्रत्याख्यातं नासत इति । नासतः शून्यस्य जगत्कारणत्वं मंतव्यं कुतः अदृष्टत्वात् । नहि किमपि शून्यादुत्पद्यमानं दृष्टम् । येन जगदपि तथा प्रतिपद्येमहि । भवेदिदं यदि जगत्पारमार्थिकं स्यात् । असत्त्वेतु शुक्तिरजतस्यैव शून्यादुत्पत्तौ काऽनुपपत्तिरित्यतोऽभिहितं नाभाव इति । न जगदभावोऽसत् प्रतिपत्तव्यम् । कस्मात् । उपलब्धेः । सदिति प्रतीयमानत्वात् । सत्त्वेन प्रतीयमानमपि जगत्स्वप्नादिवदसत् किं न स्यात् इत्यत उक्तं वैधर्म्याच्चेति । स्वप्नादिवदसदेव जगत्सत्त्वेन प्रतीयते इति न वाच्यम् । कुतः । वैधर्म्यात् । भवति हि स्वप्नादिवैधर्म्यं विश्वस्य बाधाभावलक्षणम् । उपलब्धिश्च प्रागबाधितैव हेतुतयोपन्यस्तेति भावः । दूषणांतरसमुच्चयार्थश्चकार इति । तथाच कथमेषां सूत्राणां मायावादिमतनिरासायोदाहरणे सिद्धांतविरोधो न स्यात् । नच योजनाभेदेन उभयपरता । तददर्शनादित्यत आह ।

(मूलं) **नच शून्यवादिनः सकाशाद्वैलक्षण्यं मायावादिनः ॥८०॥**

(टीका) अत्र शून्यवादिमायावादिशब्दौ तन्मतोपलक्षणार्थौ । इदमुक्तं भवति । न सूत्राणि विषयविशेषनियतानि । तथात्वे सूत्रत्वव्याघातात् ।

---

उत्तरमूलवाक्यानुरोधादाह ॥ तद्वादिन इति वेति ॥ मायावादिमतानि निरस्तानीत्यर्थः । प्रमेयबहुत्वादेव बहुत्वम् । नच शून्यवादिसकाशादित्यादिग्रंथस्य प्रकृतासंगतत्वं मुख्यप्रमेयभूतमुक्तभेदासाधकत्वात् प्रसक्तमिथ्यात्वानुमानादूषकत्वाच्चेत्याशंक्य तद्ग्रंथमुत्थापयति । नन्वेतानीति । तददर्शनादिति । मायावादिमते ब्रह्मणः सत्त्वादसत्पदेन तद्ग्रहणायोगः । द्वितीयसूत्रे अभावपदार्थभूतासत्त्वनिराकरणं चानुपयुक्तं जगत्यसद्विलक्षणत्वस्यैव मायावाद्यंगीकृतत्वादतो नैतानि सूत्राणि तन्मतनिराकरणपरतया योजयितुं शक्यानीति भावः । पुरुषवैलक्षण्यसत्त्वादाह । अत्रेति । ननु मतविशेषेऽपि कथमेकार्थपराणामन्यार्थपरत्वमुच्यते विना प्रमाणं तात्पर्यद्वयकल्पने गौरवमित्यत आह । इदमुक्तं भवतीति । सूत्रत्वव्याघातादिति । विश्वतोमुखत्वादिसूत्रधर्माभावप्रसंगेन सूत्रत्वव्याघातादित्यर्थः । तथाच सूत्रस्य विश्वतोमुखत्वबोधकागमस्यैव तस्य संभवद्बह्वर्थतात्पर्ये प्रमाणत्वमिति भावः ।

(टीका) विषयविशेषानंत्याच्छास्त्रस्यापर्यवसानप्रसंगाच्च। किंतूदाहरणत्वेन विषय-विशेषमादाय तत्समानविषये न्यायं संचारयंति। नच शून्यवादिमताद्वैलक्षण्यं मायावादिमतस्यास्ति। अतः शून्यवादिमतनिराकरणपराणामप्येषां मायावादिमतमपि विषयो भवतीति तन्निरासायैतत्सूत्रोदाहरणे न कश्चित्सिद्धांतविरोध इति। अथोच्येत किं शून्यवादान्मायावादस्य वैलक्षण्याभावः कार्त्स्न्येनोतैकदेशेन। नाद्यः आचारादिवैलक्षण्यस्योपलब्धेः। न द्वितीयः। एकदेशसाम्येन सूत्रसंचारे सकलदर्शनेष्वपि तद्दर्शनात् दर्शनांतरनिरासप्रयासवैय्यर्थ्यादिति। मैवं। इह निरसनीयांशसालक्षण्येन सूत्रसंचाराभ्युपगमात्। नन्वेतदपि नास्ति। असदेव जगच्छून्यादुत्पद्यत इति शून्य वादांशो ह्यत्र निराक्रियते। नचैतत्प्रमेयद्वयं मायावादिनोऽभिमतम्। जगतः पारमार्थिकत्वाभावेऽपि व्यावहारिकसत्त्वस्यांगीकृतत्वान्नापरप्रमेये वैलक्षण्याभावः। ब्रह्मणो जगत्कारणत्वाभ्युपगमान्न परप्रमेयेऽपीति। मैवं। यतः परमार्थापेक्षयैव शून्यवादिना जगदसदुच्यते। यथा मायावादिना। अथ पुनर्विद्योदयेऽविद्यायाः निरुपाख्यत्वमंगीकृत्यासत्त्वमुच्यते। काममभिधीयतामिति। व्यावहारिकसत्त्वं तु जगतस्तेनाप्यंगीकृतमेवातोऽपरप्रमेये तावन्न शून्यवादिमताद्वैलक्षण्यं मायावादिमतस्येत्याह।

(मूलं) व्यावहारिकसत्त्वस्य तेनाप्यंगीक्रियमाणत्वात्॥ ८१॥

(टीका) पूर्वेण संबंधः। जगति व्यावहारिकसत्त्वं शून्यवादिनांऽगीक्रियत इत्येतत् कुतो ज्ञायते। तद्वाक्यादेवेति तदुदाहरति।

(मूलं) सत्यं तु द्विविधं प्रोक्तं सांवृतं पारमार्थिकम्॥ ८२॥

(टीका) संव्रियतेऽनयेति संवृतिरविद्या तत्कृतं सांवृतम्।

---

शंकते। अथेति। निरुपाख्यत्वम् स्वकार्यैः सहाप्रतायमानित्वम्। तथाच जगतः अविद्योपादानकत्वात्सत्त्वमेव परमविद्यारूपोपादाननाशेन नाशमात्रं कपालनाशेन घटस्येव। शून्यवादिना त्वसत्त्वमुच्यतेऽतो महावैलक्षण्यमपरप्रमेय इति शंकाभिमानः। ज्ञानेनाज्ञाननाश इति तेन सुखत उक्तावपि तस्य ज्ञानाद्बाध एवोच्यते। बाधश्च स्वरूपतस्त्रैकालिकसत्त्वापहार एवेति तस्य तन्मूलकप्रतीतिविषयजगतश्च सत्त्वाभावो मायावादिमते वर्तते एवेत्युक्ताभिमानो न युक्त इत्यभिसंधिनाह। काममभिधीयतामिति। ननु मायावादिना जगति व्यावहारिकत्वं नाम सत्त्वविशेषोऽगीक्रियत इत्यत आह। व्यावहारिकसत्त्व त्विति। तेन शून्यवादिना सांवृतं व्यावहार्यं स्यादित्यादेर्लक्षणकथनपरत्वे विचार्यमाणे नो सत्त्वमित्युत्तरमूलवैय्यर्थ्यम्। नच लक्षणांतरकथनपरं तदिति वाच्यम्। मध्ये पारमार्थिकलक्षणमुक्त्वा पुनस्तत्कथने बीजाभावात्,

(टीका) अनेन सत्यद्वयोद्देशः कृतः। के ते द्वे सत्ये इति शृंगग्राहिकया दर्शयति।

(मूलं) **सांवृतं व्यावहार्यं स्यान्निवृत्तौ पारमार्थिकम्॥८३॥**

(टीका) यदिदं हानादिव्यवहारविषयो जगत्तत् सांवृतं सत्यमित्युच्यते। व्यवहारनिवृत्तौ यदवतिष्ठते तदव्यावहार्यं शून्यमिति यावत्। तत्पारमार्थिकं सत्यमित्युच्यते। किंलक्षणके ते सत्ये इत्यतो वाक्यलाघवादनंतरोक्तस्यापि पारमार्थिकसत्यस्य लक्षणं तावदाह।

(मूलं) **निवृत्तौ पारमार्थिकम्॥८४॥**

(टीका) व्यवहाराविषयत्वं पारमार्थिकलक्षणं। अथवा विज्ञानेनाशेषप्रपंच-निवृत्तावपि यन्न निवर्तते तत्पारमार्थिकमिति कालत्रयेऽप्यबाध्यत्वं पारमार्थिक सत्यलक्षणमुक्तं भवति। सांवृतसत्यलक्षणमाह।

(मूलं) **विचार्यमाणे नो सत्त्वं सत्त्वं चापि प्रतीयते। यस्य तत्सां-वृतं ज्ञेयम्॥८५॥**

(टीका) प्रागूर्ध्वं यस्य सत्त्वं न मध्ये तस्य कुतो भवेत्॥ अन्यथा शुक्तिरूप्यादेः सत्त्वं केन निवार्यते॥ इत्यादिविचार्यमाणे यस्य वस्तुनस्सत्त्वं न युज्यते। तथापि सत्त्वं प्रतीयते च। तद्वस्तु सांवृतं सत्यं ज्ञेयम्। अत्राद्येन विशेषणेन पारमार्थिकसत्याद्व्यावृत्तिः। द्वितीयेनात्यंतासतः। लक्षणान्तरं चाह।

(मूलं) **व्यवहारपदं च यदित्यादिना॥८६॥**

(टीका) पारमार्थिकस्यात्यंतासतश्च हानाद्यविषयत्वाद्व्यवहारविषयत्वं च सांवृ-तसत्यलक्षणं भवति। आदिपदेन द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना। लोके सांवृतसत्यं च सत्यं च परमार्थत इत्यादेःसंग्रहः। इत्यादिनांगीक्रियमाण-त्वादिति संबंधः। इत्यादिना शून्यवादिवाक्येन तदंगीकारो ज्ञायत इति वा। एवमपरप्रमेये वैलक्षण्याभावमुपपाद्य परप्रमेयेऽपि तमुपपादयति॥

---

व्यवहारपदं च यदित्यंशे पौनरुक्त्यापत्तेश्चेत्यतस्तद्वाक्यमवतार्य व्याचष्टे। अनेनेत्यादिना। पारमार्थिकसत्त्वलक्षणकथकवाक्यांतरानुपलंभान्न्यूनतापरिहाराय तद्वाक्यमेवावृत्त्या व्याचष्टे। किंलक्षणक इत्यादिना। अत्यंतासत इति। मायावादिवदेव तेनाप्यत्यंतासतः सत्त्वेन प्रतीतिर्न स्वीक्रियते इत्युक्तदलेन तद्व्यावृत्तिरिति भावः।

(मूलं) नच निर्विशेषब्रह्मवादिनः शून्यात्कश्चिद्विशेषस्तस्य ॥८७॥

(टीका) यद्यपि मायावादी जगत्कारणं ब्रह्म वदति शून्यवादी च शून्यम् । तथापि ब्रह्मवादिनस्तस्य ब्रह्मणः शून्यान्न कश्चिद्विशेषः निर्विशेषत्वेनांगीकृतत्वात् । निर्विशेषमपि ब्रह्म शून्याद्विशिष्यत इत्यंगीकारे स्वव्याघातात् । माभूत् शून्याद्ब्रह्मणो निर्विशेषत्वाद्विशेषः । शून्यस्य तु ब्रह्मणो विशेषः किं न स्यादिति मंदाशंकामपनुदन् न केवलं स्वव्याघातात् विशेषाभावो ब्रह्म-शून्ययोः किं नाम यादृशं शून्यवादिनः शून्यं मन्यंते तादृशमेव मायावादिनो ब्रह्मांगीकुर्वंते । अतोऽपीत्यभिप्रायेण शून्यवादिवाक्यं तावत् पठति ॥

(मूलं) निर्विशेषं स्वयं भातं निर्लेपमजरामरं शून्यं तत्त्वम् ॥८८॥

(टीका) शून्यमित्युक्ते निस्स्वरूपत्वं प्राप्तम् । अत उक्तं तत्त्वमिति । तर्हि कथं शून्यमित्यत आह । निर्विशेषमिति । सविशेष एव वस्तुनि प्रमाणप्रवृत्तेः तदसिद्धिः स्यादित्यत उक्तं स्वयं भातमिति । अनेनात्मैव शून्यमित्युक्तम् । अन्यथा तस्य स्वयंभातत्वेन जिज्ञासोः कथं तत्सिद्धिः स्यात् । तथाचात्मनः पापादिलेपो जरामरणादिकश्च विशेषो दृश्यत इत्यतो देहधर्मा एवैते नात्मधर्मा इति भावेनोक्तं निर्लेपमजरामरमिति । तथापि स्वयंभातपदेन स्वविषयप्रकाशत्वं विशेष उक्त इत्यत आह ।

(मूलं) अविज्ञेयम् ॥ ८९ ॥

(टीका) तदेव विवृणोति ।

(मूलं) मनोवाचामगोचरम् ॥ ९० ॥

(टीका) अपरप्रकाश्यत्वं स्वयं भातत्वं नतु स्वविषयप्रकाशत्वमिति । तथापि सत्यज्ञानादिनिर्विशेषांगीकारात्कथं निर्विशेषत्वमित्यत आह ॥

---

मंदाशंकामिति । शून्यस्य ब्रह्मणः सकाशाद्विशेषसत्त्वे ब्रह्मणः शून्यवृत्तिवैलक्षण्यप्रतियोगित्वलक्षणविशेषप्राप्त्या निर्विशेषत्वभंगापत्त्या नैषा शंका सुज्ञानां युक्ताऽतो मंदेत्युक्तम् । यद्वा सर्वविशेषशून्यत्वादेव शून्यमिति व्यवहारगोचरत्वात्तस्य विशेषवत्त्वशंका पंडितानां न भवतीत्यतो मंदाशंकेत्युक्तम् । अन्यथेति । स्वयंप्रकाशस्य शून्यस्यात्मान्यत्वे । निर्लेपत्वादेरप्रसक्तप्रतिषेधपरत्वशंकानिरासायाह । तथा चेति । शून्यस्यैवात्मत्व इत्यर्थः । सत्यज्ञानादीति । तत्त्वत्वोक्त्या सत्यतायाः स्वतः सिध्युक्त्या च ज्ञानात्मकत्वमर्थप्राप्तमित्याशयेनांगीकारादित्युक्तम् । सत्यज्ञानादिशब्दार्थतावच्छेदकीभूताविशेषेत्यर्थः । संवृतिविरोधित्वे प्रकाशस्य यथा तमस्संबंधविधुरस्वरूपत्वं तद्वत्

(मूलं) जाड्यसंवृतिदुःखांतपूर्वदोषविरोधि यत् ॥ ९१ ॥

(टीका) जाड्यविरोधित्वं संवृतिविरोधित्वं चोपादाय ज्ञानव्यवहारः । नतु ज्ञानत्वजातियोगात् । नच संवृतिविरोधित्वे सदा संवृत्यभावः स्यादिति वाच्यम् । प्रमाणज्ञानोपचितस्यैव संवृतिविरोधाभ्युपगमात् । किंच जाड्य इव तादात्म्यविरोध एवात्र विविक्षित इत्यदोषः । तथा बाध्यसंवृतितत्कार्यजडविरोधित्वादेव सत्यव्यवहारः नतु सत्तासामान्यादिसंबंधात् । एवं दुःखविरोधित्वमात्रेणानंदव्यवहारो नतु पुनः सुखत्वसामान्ययोगात् । तथा देशतः कालतो वस्तुतश्चांतविरोधित्वमुपादाय सर्वगतत्वनित्यत्वसात्मकत्वोक्तिर्न तु परममहत्परिमाणाप्रच्युतसत्तासर्वतादात्म्यनिमित्तेन । पूर्वपदेन बंधादिसंग्रहः । तद्विरोधित्वादेव मुक्तत्वाद्युक्तिरिति । पद्यत इति पदमिति ज्ञातव्यतां वक्ष्यति । तत्कुतो ज्ञेयमित्यत आह ।

(मूलं) नित्यभावनया भातं तद्भावं योगिनं नयेत् ॥ ९२ ॥

(टीका) भातं साक्षात्कृतं तद्भावं शून्यभावं नयेदित्यारोपितातद्भावं निवर्तयेदिति यावत् । ननु तत्त्वं चेद्भावाभावयोरन्यतरद्भवेत् । तत्र भावत्वे गुणित्वाद्यभावत्वे सप्रतियोगित्वादि प्रसज्ज्येत तत्कथं निर्विशेषत्वादीत्यत आह ॥

(मूलं) भावार्थप्रतियोगित्वं भावत्वं वा न तत्त्वतः ॥ ९३ ॥

(टीका) भावार्थः प्रतियोगी यस्य तत्तथोक्तम् । तस्य भावस्तत्त्वमभावत्वमिति यावत् । अभावत्वमिति वक्तव्ये तत्प्रयुक्तविशेषनिरासायैवमुक्तम् । एवं भावत्वप्रयुक्तगुणादिनिरासोऽपि वक्तव्यः । यस्येति वक्ष्यमाणेन संबंधः ।

---

संवृतिसंबंधविधुरस्वरूपत्वं शून्यस्येत्यभ्युपगमे । जाड्य इवेति । अत्र संवृतौ । तादात्म्येति । जाड्यस्य संयोगेनासंबंधस्य सार्वत्रिकतया व्यावर्तकत्वात्तादात्म्येनैव विरोधावश्यकत्वात्- दृष्टांतत्वम् । सत्यव्यवहारस्य गत्यनुक्त्या न्यूनतापरिहारायेदमेव वाक्यं बाध्यपदपूरणेन व्याचष्टे । तथाचेति । संवृतितादात्म्याभावेऽपि तत्कार्यजडतादात्म्यं स्यात् । शरीरस्य दंडतादात्म्याभावे तत्कार्यभूतदंडिरूपविशिष्टतादात्म्यसत्त्वात् । विशिष्टस्य विशेषणविशेष्योभयकार्यत्वादित्याशंक्योपलक्षणया जडमपि गृह्यत इत्याशयेन तत्कार्यजडेत्युक्तम् । तथेति । अंतः परिच्छेदः । वक्ष्यतीति । तत्पदमक्षयमिति वाक्ये । कुत इति । कस्मै प्रयोजनायेत्यर्थः । असतोऽत्यंताभावप्रतियोगितापि नास्तीत्याशयेन सत्प्रतियोगिकत्वमित्यभिहितम् । सप्रतियोगिकत्वमिति पाठे तु न क्लेशः । विशेषांतरेति । सप्रतियोगिकत्वरूपविशेषांतरेत्यर्थः । अभावत्वं त्वनुयोगिता वाऽखंडः कश्चिद्धर्मो वेति हृदयम् । वक्तव्य इति । अध्याहारेण बोध्य इत्यर्थः । अन्यथा भावत्वमात्रनिरासेऽपि गुणादीनामनिरासान्निर्विशेषत्वासिद्धिः

(टीका) ननु शून्यमेव विश्वाकारमिति तन्मतम् । विश्वं च भावाभावात्मकमिति कुतस्तस्य तद्भावाभाव इत्यत आह ॥

(मूलं) विश्वाकारं च संवृत्या यस्य तत्पदमक्षयमित्यादि तद्वचः॥१४॥

(टीका) संवृत्यैव विश्वाकारतयाऽव भासते । न पुनस्तत्त्वतस्तद्भावोऽस्य । अत एव पूर्वं न तत्त्वत इत्युक्तम् । एतेनैव तत्त्वस्य भावाभावान्यतरत्वव्याप्तिरपरमार्थप्रपंचविषयैवेति सूचितम् । यदेवंविधं शून्यं तदक्षयं पदमिति किमक्षयं पदमिति प्रश्नस्येदमुत्तरम् । एवमुत्तरत्रापि । भवत्वेवं शून्यवादिवचस्ततः किमित्यतो मायावादिनोऽप्येवं ब्रह्म मन्यंत इति तद्वाक्यं पठति ॥

(मूलं) अनृतजडविरोधिरूपमन्तत्रयमलबंधनदुःखताविरुद्धमितिच्च मायावादी ॥ १५ ॥

(टीका) अत्रानृतत्वादिविरोधिरूपत्वादेव सत्यं ज्ञानमनंतं शुद्धं बुद्धं मुक्तमानंदो ब्रह्मेत्युच्यते । ननु तद्धर्मयोगादित्युक्तम् । अतिनिकटमविक्रियं मुरारेः परमपदं प्रणयादभिष्टवीमित्युत्तरार्धेन संबंधः । इति मायावादी शून्यवादिवदेव ब्रह्म मन्यते । अतो न तयोर्विशेष इति शेषः । एवं निर्विशेषं स्वयं भातमित्युक्ताशेषार्थपराणि मायावादिवाक्यानि प्रसिद्धत्वान्नोदाहृतानि । एतदेव प्रपंचयन् निर्विशेषत्वविवरणात्मकं शून्यवादिवाक्यं तावत्पठति ।

---

स्यादिति भावः। अत एवेति । प्रतीतिमात्रं वर्तते वस्तुतो नास्तीति बोधनार्थमेवेत्यर्थः । प्रतीतेरप्यभावे तत्पदवैयर्थ्यं स्यादिति भावः । भावाभावान्यतरत्वेति । स्वसमानसत्ताकेति पूरणीयम् । अन्यथा शून्येऽपि आरोपितभावत्वादिसत्त्वात्प्रपंचपदवैयर्थ्यापत्तेः । तदित्युद्दिश्याक्षयपदत्वविधानस्याजिज्ञासिताभिधानरूपतानिरासायाह । किमिति । प्रश्नस्येति । उत्तरवाक्यानुसाराच्छून्यवादिग्रंथे पूर्वं प्रश्नवाक्यमनुमीयत इति भावः । उत्तरत्र । नास्य सत्त्वमित्यादिवाक्येषु । शुद्धं बुद्धमिति । मलपदोक्ताविद्याविरोधित्वाच्छुद्धत्वम् । विरुद्धत्वं सत्यभूततत्संबंधविधुरत्वम् । तादात्म्येन तद्विरोधित्वादेव ज्ञानात्मकत्वरूपबुद्धत्वम् । जडाविरोधित्वोक्त्या लब्धोऽप्यर्थस्तत्कारणभूताविद्याविरोधित्वेनापि लक्ष्यत इत्याशयेन पुनरुक्तः । यद्वा बुद्धमिति कर्मणि क्तः । ज्ञेयमित्यर्थः । अविद्याविरोधित्वं च स्वाकारवृत्त्याऽज्ञाननाशकत्वम् । तथाच स्वाकारवृत्त्या ज्ञाननाशादेव ज्ञेयत्वव्यवहारो न तु ज्ञानविषयत्वयोगादित्यर्थः । शून्यवादिना पदपदोक्तस्य ज्ञेयत्वस्य मायावादिवाक्येनापि लाभसूचनायेत्थं व्याख्यातम् । दुःखतेति स्वार्थे तल् । भावे वा कथंचिद्योज्या । । अतिनिकटेति । परभाष्यकारकृतस्तोत्रविशेषस्थपद्यमेतत् । भावार्थप्रतियोगित्वमित्यनेन भावत्वाभावत्वयोर्निरासस्योक्तत्वेनात्र सत्त्वासत्त्वपदाभ्यां तयोर्ग्रहणे पौनरुक्त्यं

(मूलं) नास्य सत्त्वमसत्त्वं वा न दोषो गुण एव वा। हेयोपादेयरहितं तच्छून्यं पदमक्षयमिति शून्यवादी। ९६।

(टीका) सत्त्वं सामान्यं प्रमाणयोग्यत्वं वा। असत्त्वमभावप्रतियोगित्वम्। दोषो दुःखादिः। गुणः सुखादिः। एवकारो नेत्यनेन संबध्यते। हेयोपादेयेति भाव प्रधानो निर्देशः। दोषाभावाद्धेयत्वरहितं गुणाभावादुपादेयत्वरहितम्। हातुरुपादातुश्चान्यस्याभावाद्वा। अनिष्टाभावाद्धेयमस्य नास्ति अपूर्त्यभावादुपादेयमपि नास्तीति वा। तच्छब्दश्रवणाद्यस्यास्येति व्याख्येयम्। किमतो यद्येवं शून्यवादी शून्यस्य सत्त्वादिधर्माभावं मन्यत इत्यत आह।

(मूलं) सत्त्वादयो धर्माः परमार्थतो मायावादिनापि नांगीक्रियंते॥९७॥

(टीका) ब्रह्मण इति शेषः। अतोऽपि न शून्यब्रह्मणोर्विशेष इति संबंधः। नन्वन्योन्यास्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चेत्यादिना मायावादिना ब्रह्मणो धर्मास्स्वीकृताः तत्कथमेतदिति चेत्। सत्यं। नतु परमार्थतः काल्पनिकास्तु शून्यवादिना शून्यस्याप्यंगीक्रियंत इत्याशयेनोक्तं परमार्थत इति। ननु धर्मांगीकारस्तावदुपलभ्यते सच परमार्थतो नेति कुतो ज्ञायत इत्यत आह।

(मूलं) सर्वविशेषविनिर्मुक्तत्वांगीकारात्॥ ९८॥

(टीका) येन हि मायावादिना ब्रह्मणो धर्माःस्वीकृतास्तेनैव तस्य सर्वविशेषविनिर्मुक्तत्वमंगीक्रियते। तद्यदि धर्मांगिकारः पारमार्थिकस्स्यात्तदा परस्परपराहतिः प्रसज्येत। अतो ज्ञायते धर्मांगीकारो न पारमार्थिक इति। अन्यच्च परतत्त्वे सिद्धांतसालक्षण्यं दिदर्शयिषुः शून्यवादिवाक्यं तावत्पठति॥

(मूलं) अवाच्यं सर्वशब्दैस्तल्लक्ष्यते चाखिलैः पदैः
अज्ञेयं ज्ञानलक्ष्यं च तच्छून्यं पदमक्षयमिति शून्यवादी॥९९॥

(टीका) यदुक्तं प्राक् शून्यं मनोवाचामगोचरमज्ञेयं चेति। तदयुक्तम्। निर्विशेषं स्वयं भांतमिति वाचां गोचरत्वात्। नित्यभावनया भातमित्युक्तत्वाच्चेति।

---

स्यादित्यतस्तद्व्याचष्टे। सत्त्वं सामान्यमिति। परमार्थत्वं तु न निराकरणार्हमभ्युपगतत्वादिति भावः। सत्ताजात्यनंगीकारे त्वाह। प्रमाणेति। अभावेति। घटादेरपि ध्वंसादिवेलायामसत्त्वव्यवहारादभावमात्रमुक्तम्। संसर्गाभावेत्यर्थः। अत्यंताभावपरं वाऽभावपदम्। यस्येति व्याख्येयमिति। शस्येतिपदसंबंधेन व्याख्येयमित्यर्थः। अन्योन्यस्मिन्नित्यादि। जडे चित्तादात्म्यं तद्धर्मभूतसत्ताद्युपेतान् चिति जडतादात्म्यं तद्धर्मभूतब्राह्मणत्वादिधर्मांश्चाध्यस्य सर्वव्यवहारो भवतीति परभाष्यार्थः।

(टीका) तस्येदमुत्तरं॥ सत्सर्वशब्दैरवाच्यमपि निर्विशेषमित्यादिभिरखिलैः पदैर्ल-क्ष्यते। तथा ज्ञानकर्मत्वाभावेऽपि वृत्तिव्याप्यतया ज्ञानलक्ष्यं च भवतीति न विरोध इति। ननु लक्षणा नाम शब्दधर्मः तत्कथमुच्यते ज्ञानलक्ष्यमिति। मैवं। यद्विषयानंतर्गतं तद्व्यवहारहेतुः तदुपलक्षणमुच्यते। विषयानंतर्गतिश्चानेकाविधा। शब्दस्यावाचकत्वेन यथा गंगेत्यादेः। अर्थस्यातदेकदेशत्वेन यथा काकादेस्तथा ज्ञानस्यातत्कर्मकत्वेनेति। एवमेव मायावादिराद्धांतोऽपीति वक्ष्यमाणमेतच्छेषोऽपि विज्ञायते। तेन शून्यवादिवदवाच्यत्वादिकं ब्रह्मणो मायावादिराद्धांतो भवतीत्यतो न परतत्वे कश्चिद्विशेष इत्युक्तं भवति। किंच यद्धि यतो व्यावर्तते तद्व्यावर्तकधर्मयोगेनैव ततो व्यावृत्तं दृष्टम्। नच ब्रह्मशून्ययोः कश्चिद्व्यावर्तको धर्मोऽस्ति। उभाभ्यामु-भयोरखंडत्वेनांगीकृतत्वात्। अतः किं कृता तयोर्व्यावृत्तिस्स्यादित्याह॥

**(मूलं) नचाखंडत्वेन कश्चिद्विशेषः॥ १००॥**

(टीका) विशिष्यतेऽनेनेति विशेषो व्यावर्तकधर्मः। ननु व्यावृत्तिर्भावस्वभाव एव न विशेषकृता। अतः किं विशेषाभावः करिष्यति। मैवं। भावस्वभावस्यापि व्यावृत्तेर्विप्रतिपत्तौ व्यावर्तकधर्मैकगम्यतया तत्सापेक्षत्वात्। प्राग्व्याघातेन विशेषाभावः प्रतिपादितः। अत्र तु व्यावर्तकधर्माभावेनेति न पुनरुक्तिः। शून्यवादिना शून्यमखंडमंगीकृतमिति कुतो ज्ञायत इति चेत्। निर्विशेषमित्यादितद्वचनात्। निर्विशेषत्वस्यैवाखंडलक्षणत्वात्। स्पष्टं च तद्वाक्यं पठति।

---

शब्दधर्म इति। तन्निष्ठस्वशक्यसंबंधकत्वस्यैव तत्र लक्षणेतिव्यवहारगोचरत्वादिति भावः। उपलक्षणपदस्य प्राचीनव्यवहारानुसारेण नानार्थकत्वात्तदनुसारेणायं व्यवहार इत्याह। मैवमिति। अनेकविधेति। अनुगतरूपेण लक्षणेन निविष्टेति भावः। शब्दस्येत्यादि। तत्तत्समभिव्याहृतोपलक्षणपदादिस्थले तादृशतादृशार्थबोधस्तात्पर्यवशाज्जायत इत्यर्थः। तथाच ज्ञानलक्ष्यमित्यत्रत्येनेन ज्ञानाकर्मत्वे सति तज्जन्यव्यवहारयोगीत्यर्थो लभ्यत इति ज्ञानलक्ष्यमित्येतन्न बाधितार्थकमिति भावः। विज्ञायत इति। अन्यथा तस्यैतच्छेषत्वाभावेऽत्र शून्यवादिवाक्योदाहरणमात्रमनुपयुक्तं स्यान्मतद्वयसाम्यस्यानुपपादनादिति भावः। प्रागिति। नच निर्विशेषब्रह्मवादिन इत्यत्रेत्यर्थः। ननु यदखंडपदं लक्ष्यमिति वाक्योदाहरणानंतरमेव नचाखंडत्वेन कश्चिदिति वाक्यमपेक्षितं पूर्ववाक्यसिद्धस्य हेतूकरणसौकर्यात्। नच निर्विशेषमित्यादिनैवाखंडत्वं सिद्धमित्यभिप्रेत्य नचाखंडत्वेनेति ग्रंथः प्रवृत्त इति वाच्यम्। तर्हि जिज्ञासाभावेन यदखंडपदमिति वाक्योदाहरणमसंगतं स्यादित्याशंक्य तदुत्थापयति। शून्यवादिनेत्यादिना। स्पष्टं चेति। तथाच स्पष्टीकरणार्थं पुनरभिधानान्न जिज्ञासिताभिधानमेतदिति भावः।

( मूलं ) यदखंडं पदं लक्ष्यं सर्वैरपि विशेषणैः सर्वैर्विशेषणैर्मुक्तं तच्छून्यं पदमक्षयमिति च शून्यवादी ॥ १०१ ॥

( टीका ) अक्षयत्वोपपादनायाखंडमित्युक्तम् ॥ खंडं खलु घटादिकं क्षयि दृष्टं किमिदमखंडत्वमित्यत उक्तम् । सर्वैर्विशेषणैर्मुक्तमिति । तर्हि कथं तत्र विशेषणयोग इत्यत उक्तम् । लक्ष्यं सर्वैरपि विशेषणैरिति । यथा काकादिकं गृहानंतर्गतमेव गृहं व्यावर्तयति तथा विशेषणानि शून्यमिति न विरोधः । मायावादिनस्त्वखंडत्वाभ्युपगमः प्रसिद्ध एवेत्याह ।

( मूलं ) एवमेव मायावादिराद्धांतः ॥ १०२ ॥

( टीका ) एवमेवेत्यनेन यावान् शून्याखंडत्वे शून्यवादिनां परिकरःस सर्वोऽपि मायावादिनां समान एवेति सूचयति ॥ नन्वास्तां ब्रह्मशून्ययोरन्यो विशेषः ब्रह्मेत्युक्ते तावद्विधिः प्रतीयते । शून्यमित्युक्ते निषेधः । तावता च विशेषसिद्धिरिति चेन्न । विधिनिषेधौ किं ब्रह्मशून्यतन्मात्रमुत तद्धर्मौ । आद्ये ताभ्यां किमधिकमाचरितं । द्वितीयस्तु नास्त्येवेत्याह ।

( मूलं ) नच मायावादिनो भावत्वं नाम धर्मः नच शून्यवादिनः शून्यत्वं नाम धर्मः ॥ १०३ ॥

( टीका ) मायावादिनः शून्यवादिनो मत इति शेषः । भावत्वं विधित्वं । शून्यत्वं निषेधत्वं । धर्मो ब्रह्मणः शून्यस्य चाभ्युपगत इति शेषः । एतच्च प्रागुदाहृततद्वाक्यैरेव सिद्धमिति न पुनस्तद्वाक्योदाहरणं । तदेवं शून्यवादिमायावादिमतयोरविशेषे तु शून्यवादिमतनिराकरणपरतया व्याख्यातानामपि सूत्राणां मायावादिमतनिरासायोदाहरणेऽपि न कश्चित्सिद्धांतविरोध इति सिद्धम् ॥

तथा विशेषणानीति । ब्रह्मनादात्म्यापन्नतया तद्धर्मतारहितान्यप्यारोपमात्रेण तद्व्यवहारनिर्वाहकाणि भवंतीत्यर्थः । विधिरित्यादिविधित्वनिषेधत्वेऽखंडोपाधी इति सुधासमयचरणटिप्पण्यां वंशपल्लीस्थाचार्यैरुक्तम् । प्रागुदाहृतेति । निर्विशेषं स्वयं भातमित्यादिवाक्येन विशेषसामान्यनिषेधादिति भावः । प्रकृतमर्थमुपसंहरति । तदेवमिति । यत्त्वत्राधुनिकेन प्रलपितम् । नच शून्यवादान्मायावादस्याविशेषः । ततो जगदुत्पद्यत इति तत्राभ्युपगमात् अन्यथा बौद्धैरसतोऽर्थक्रियाकारित्वाभावेनासतस्तदुत्पत्त्यभिधानविरोधात् । स्थिरस्यापि हि कारणत्वे युगपत्सर्वोत्पत्त्यादिप्रसंगात् । सहकारिविरहस्य कार्योत्पादप्रयोजकत्वे । क्षणभंगवार्तोच्छेदापत्तेः । अभ्युपेयते हि शून्यवादिनापि क्षणभंगः । प्रसिद्धं चैतदात्मतत्त्वविवेकादौ तार्किकशिरोमणिनोदाहृतम् । नैरात्म्यदृष्टिं मोक्षस्य हेतुं च न स मन्यते ॥ आत्मतत्त्वधियं त्वन्ये न्यायवेदानुसारिणः ॥ इति

आत्मतत्त्वविवेकेऽपि । 'अस्तु तर्हि शून्यतैव परमनिर्वाणमिति चेन्न । सा हि यद्यसिद्धा तत्कथं तदवशेषं विश्वं। परतश्चेत्सिद्धा परोऽभ्युपगंतव्यः। स च परो यदि संवृतिरेव तदा विश्वशून्यतयोर्न कश्चिद्विशेष इति कथं तदप्यव शिष्येत । संवृतिरूपश्चेत्परः परत एव सिद्धश्चेदनवस्था । स्वयमसिद्धश्चेत्कथं शून्यत्वमपि साधयेत् । स्वतः सिद्धश्चेदायातोऽसि मार्गेण । स्वतःसिद्धत्वादेव तदनुभवरूपं शून्यत्वादेव न कालपरिच्छेद इति नित्यमत एव न देशपरिच्छेद इति व्यापकम् । अत एव तास्मिन्न सधर्मकत्वमिति विचारास्पृष्टं तस्य धर्मधर्मिभावमादाय प्रवृत्तेः । अत एव तस्य विशेषाभाव इत्यद्वैतं प्रपंचस्यापारमार्थिकत्वादेवमसत्प्रतियोगिकमिति विधिरूपमविचारितप्रपंचाक्षेपात्ध्वयं व्यवहारः । तथापि प्रपंचशून्यानुभवमात्रस्य प्रपंचे कः संबंधः। नायं प्रकाशत इति चेद्वस्तुतो न कश्चित्संवृत्या गगनगंधर्वनगरयोराधाराधेयभाव इव विषयविषयिभावः । स च यथा नैय्यायिकैःसमर्थयिष्यते तथैव वद्यनिष्ठुरस्वसावस्मिन् दर्शन इति विशेषः । अविद्यैव तथा तथा विवर्तते यथानुभवीयतया व्यवह्रियते । तत्तन्मायोपनीतोपाधिभेदाच्चानुभूतिरपि भिन्नेव व्यवहारपथमयत इति । गगनमिव स्वप्नदृष्टघटकटाहकोटरकुटीकोटिभिस्तदास्तां तावत्किमार्द्रकवणिजो वहित्रचिंतया । तस्मादनुभवव्यवस्थितावनात्मापि स्फुरतीत्यवर्जनीयमिति प्रविश वाऽनिर्वचनीयख्यातिकुक्षिं तिष्ठ वा मतिकर्दममपहाय न्यायानुसारेण नीलादीनां पारमार्थिकत्व ' इति । यदि स्वप्रकाशात्मवादोऽपि शून्यवादः स्यात्तर्ह्यायातोऽसि मार्गेणेत्यसंगतं स्यात् । तस्योक्तमार्ग एवानुत्थितत्वात् । अनिर्वचनीयख्यातिकुक्षिप्रवेशनानुयोगायोगाच्च । तत्रैव प्रतिष्ठितत्वात् । अत एव नासतो दृष्टत्वादिति भगवान् सूत्रकारोऽसतः कार्योत्पादकत्वं निराचकार । वैधर्म्याच्च न स्वप्नादिवादित्यत्राऽपि जगन्निस्तत्त्वं कुतर्कपङ्क्यत्वात्स्वप्नवादित्युक्ते स्वप्नादिदृष्टांतस्यापि निस्तत्त्वतारूपसाध्यविरुद्धधर्मवत्त्वात्स्वप्नवदिति दृष्टांतोऽसंगतः । तत्राप्यारोप्याधिकमधिष्ठानमंतरेण निरधिष्ठानकभ्रमानभ्युपगमादिति पर्यवसितार्थः । द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशनेति धर्मकीर्तिवचनं तु एकेनैव बुद्धेन सत्यक्षणिकविज्ञानवादोऽनिर्वाच्यक्षणिकविज्ञानवादश्च परस्परविरुद्धौ कथं प्रदर्शितावित्याशंकयाधिकारिभेदेन तद्देशनोपपत्तिप्रतिपादनपरम् । उक्तं हि तेनैव । देशना लोकनाथानां श्रोतृचित्तवशानुगेति । एतेन प्रसिद्धप्रामाणिकग्रंथेष्वनुपलभ्यमानं स्वप्रकाशपरमार्थानुभवात्मकत्वं शून्यस्य शून्यवादिसम्मतमिति । तच्च सत्यं तु द्विविधं प्रोक्तमिति तद्वचनैरेवावगम्यत इति परोक्तमश्रद्धेयमेवेति । तदसत् । सर्वार्थक्रियाकारित्वविधुरस्य ब्रह्मणस्त्वन्मते जगदुत्पत्तरविद्याबलेनेव तन्मते संवृतिसंबंधेन जगदुत्पत्त्यंगीकारे विरोधाभावात् । अत एवोक्तमनुव्याख्याने तन्मतानुवादावसरे । 'शून्यात्संवृतियोगेन विश्वमेतद्भविष्यतीति ' । नच शून्यस्य कार्योत्पादकत्वे स्थिरत्वानुपपत्तिरिति वाच्यम् । त्वन्मते मायोपहितस्य मिथ्यात्वेऽपि शुद्धस्य सत्यत्वादिवत्संवृत्यवच्छिन्नस्य क्षणिकत्वे वा स्थिरत्वे वा शुद्धशून्यस्य तद्वान्यभावात् । शून्याज्जगन्नोत्पद्यत इति शून्यवादिवाक्यस्याभावेन त्वदुत्प्रेक्षितबाधकस्य च परिहृतत्वेन ततो जगन्नोत्पद्यत इति त्वदुक्तेरसंगतत्वमेव । यदपि दीधितिकृद्वचनोदाहरणं कृतं तदसंगतमिति स्फुटमेव । 'शून्यवादिमते पदार्थानां क्षणिकतायास्तद्ग्रंथकथनाप्रतीयमानत्वात् । शून्यवादिमतवेदांतिमतयोर्वैलक्षण्यबोधनांशोपयुक्ततया कथंचित्तत्संगमनेऽपि तस्य प्रकृतानुपयोग एव । नहि सर्वा-

शेऽप्येकाकारोक्तिरूपसाम्यं शून्यब्रह्मवादिनोरस्माभिर्वक्तुमुद्यतं येनेदं संगतं स्यात्। किंतु निरसनीयांशसाम्यमात्रेणेति टीकायामुक्तम्। तच्च वर्तत एव। शून्यवादिना मिथ्याभूतस्य जगतः शून्यविवर्तत्वाभ्युपगमात्। नहि तत्रास्तीति वक्तुं युक्तम्। जगतस्तत्रारोपितत्वरूपविवर्तत्वाभावे तत्तादात्म्यप्रयोजकभिन्नाभिन्नत्वयोरभावप्रसंगात्। नच तदेव नास्तीति वाच्यम्। विज्ञानं सत्यं तदाकारस्तद्विषयस्तद्धर्मत्वात्। तद्भिन्नाभिन्नस्ततोऽत्यंतभिन्नस्त्वलीक इति विज्ञानवादः। तदुत्तरभूमिरूपे शून्यवादे तु विपर्यस्तथैव। विज्ञानं तु स्वाकारसहितं मिथ्येति विशेष इति गुर्वद्वैतचंद्रिकायां विज्ञानात्मकशून्यस्य जगत्तादात्म्यस्य स्पष्टमवगमात्। अत एव तस्य ज्ञानात्मकत्वेन तस्य प्रकाशात्मकत्वमप्यवगम्यते। नच ज्ञानस्य बाध्यत्वं शून्यवादिनोऽभिमतमिति वाच्यम्। किं तावतापि प्रकाशरूपत्वहानेरभावात्। त्वयापि जगत्तादात्म्यरूपेण विज्ञानात्मकस्य ब्रह्मणो बाध्यत्वस्यांगीकृतत्वात्। नच शुद्धस्वरूपस्य न बाध्यत्वं मन्मत इति वाच्यम्। तदीयशून्यस्यापि निरुपाख्यस्य सर्वप्रमाणगोचरस्य बाधप्रमाविषयत्वाभावरूपाबाध्यत्वाक्षतेः। अत एव प्रमाणगोचरत्वादेव त्वदभ्युगतमेवद्यत्वरूपस्वप्रकाशत्वमापतत्येव बलात्। अत एव त्रैकालिकनिषेधप्रतियोगिनो बाध्यतादात्म्यरूपमनिर्वाच्यत्वं जगतोऽपि प्राप्तमेव। त्वदुक्तब्रह्मणि सत्तायास्त्वया स्वाभाविकया अनंगीकारादेव भ्रमस्य सदधिष्ठानकत्वनियमोऽपि त्यक्त एवेत्येवमादिसाम्यं चाचार्यैरत्र निर्विशेषब्रह्मवादीत्यादिना ग्रंथांतरेषु च स्पष्टमुपपादितमेव। ततश्च शून्यवादिसाम्यस्य तवापरिहारे प्रकृतपद्यजातस्य त्वदनुपलंभमात्रेणासत्त्वोक्तिस्त्वन्मौर्ख्यख्यापिकैव। अपिच सत्त्वद्वैविध्यविषयत्वे सर्वसम्मतं शून्यवादिनो धर्मकीर्तेर्वचनं स्पष्टमेव। द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना॥ लोके सांवृतसत्यं च सत्यं च परमार्थतः॥ इति। तथा जगदनिर्वाच्यत्वविषये च 'इदं वस्तुबलायातं यद्वदंति विपश्चितः॥ यथा यथा विचिन्त्यंते विशीर्यंते तथा तथा॥ बुध्या विविच्यमानानां स्वभावो नावधार्यते॥ अतो निरभिलाप्यास्ते निःस्वभावाश्च देशिता॥ इति चंद्रिकोदाहृतपद्यद्वयम्। भामत्यां तु विविच्यंत इति विशीर्यंत इत्यस्य स्थाने पठित्वा न कस्मिन्दपि पक्षे व्यवतिष्ठंत इति तद्व्याख्यानम्। निरभिलाप्यपदोक्तमानिर्वाच्यत्वं प्रत्युपपादकस्य विचारासहत्वस्योक्तत्वात्। इदं वस्तुबलायातं अधिष्ठानवस्तुबलायातमित्यर्थः। यत्तु धर्मकीर्तिवचनमधिकारिभेदेन व्यवस्थापरमिति तदत्यंतमशुद्धम्। विरुद्धमतयोर्मध्येऽन्यतरस्याप्रामाण्येऽवश्यमवर्जनीये सति अधिकारविशेषं प्रति तदुपदेष्टुर्विप्रलंभकत्वस्यावश्यकतया स्वाचार्यस्य विप्रलंभकत्वप्रसंगात्। अधिकारभेदे मानाभावात्। त्वदभिमतार्थोऽस्य श्लोकस्य विविक्षित इत्यस्य वक्तुमशक्यत्वात्त्वदुक्तार्थस्यास्फुटस्य स्फुटपरित्यागेनांगीकारे बीजाभावाच्च। उपष्टंभकत्वेनोक्तश्लोकार्थोऽप्येकमतास्तित्वपरमप्रमेयाविरोधिपक्षद्वयविषय एव। अन्यथोक्तरीत्या विरुद्धपक्षद्वयोपदेशकर्तुर्विप्रलंभकत्वस्यावर्जनीयतया लोकनाथानामिति तत्र बहुमानानुपपत्तेः। यदपि स्वमतस्य शून्यवादाद्वैलक्षण्यमुदाहृतादयनग्रंथलभ्यमिति तदप्यसत्। शून्यवादिना परतत्त्वे निर्धर्मिकत्वेन शून्यत्वव्यवहारस्यापरतत्त्वे वास्तवसत्त्वाभावेनासत्त्वव्यवहारस्य कृतत्वात् स्वमतस्य तन्मतवैलक्षण्यभ्रमं लोकानामुत्पादयितुकामेन प्रतारकेण त्वदाचार्येण शून्यस्य ब्रह्मत्वेन स्वप्रकाशसदात्मकत्वेन जगतोऽसद्वैलक्षण्यादिघटितानिर्वचनीयत्वेनाप्रामाण्यापरपर्यायव्यावहारिकप्रमाणत्वेन वेदस्य व्यवहृतत्वेन यथा-

श्रुतग्रंथमात्रदृष्टघोदयनेन तथाभिधानेऽपि तन्निष्कर्षे वैलक्षण्याभावस्योक्तरीत्या प्राप्त्याऽस्माभिरवैलक्षण्यव्यवहारे बाधकाभावात् । अत एवोक्तं सुधायां नासतो दृष्टत्वादित्यधिकरणव्याख्यावसरेऽत्र शून्यस्यासत्त्वमापाद्येदं दूषणाभिधानमिति । शून्यस्य सर्वधर्मरहितत्वे सत्वाभावादसत्त्वं सिध्धवत्कृत्येत्यर्थः । तच्च तदाप्यविशिष्टमिति त्वन्मतनिराकरणपरत्वमुक्तसूत्राणां युक्तमेव । भवद्भाष्येऽपीदं सूत्रजातं समुदाय उभयहेतुकेऽपीत्येतदधिकरणशेषमपीत्थं व्याख्यातम् । क्षणिकात्कार्योत्पत्तिमिच्छताऽर्थादभावान्निरुपाख्यात्कार्योत्पत्तिरंगीकृता स्यात् सा न युक्ता * असतो निरुपाख्यात्कार्योत्पत्तिर्न युक्ता । असतो नरविषाणादेः सकाशात्कार्योत्पत्त्यदर्शनादिति । अत एवातएव भगवान् सूत्रकार इत्यादित्वदुक्तिरयुक्तैव । उक्तरीत्या त्वद्ब्रह्मकारणतानिरासेन त्वद्विरोधित्वस्य तावताऽप्यपरिहारात् । एतेन शून्यवादिनोऽपि जगत्क्षणिकत्वस्याभिप्रेतत्वात् शून्याज्जगत उत्पत्तिकथनं तन्मतविरुध्धमिति त्वया प्रथमत उक्तमपि निरस्तम् । क्षणिकत्वस्य निरुपाख्यादुत्पन्नत्वं प्रति विरोधित्वे क्षणिकात्कार्योत्पत्त्यंगीकारेऽर्थान्निरुपाख्यात्कार्योत्पत्तिरुक्ता भवतीति त्वदाचार्योक्तेरसंगतत्वापत्त्या तस्य तद्व्याप्यताया एवावश्यकतया विरोधोक्तेरयुक्तत्वात् । तस्मान्नोदयनग्रंथाननुगुण्यमस्माकम् । अपि चाचार्याणामद्वैतदर्शने महती श्रद्धेति प्रतिज्ञाय तदुपपादनायोक्तात्मतत्त्वविवेकवाक्यानि त्वद्गुरुणाऽद्वैतचंद्रिकायामुदाहृतानि । तथाच तस्याद्वैतवादित्वे स्वमताग्रहेणोदयनोक्तार्थविसंवादः कथं तद्भूषयतामस्माकं बाधकरूपमित्यलमुन्मत्तवचननिराकरणाभिनिवेशेन । उदयनवाक्ये † स्वतः सिध्धश्चेदिति शून्यरूपपदार्थ इत्यर्थः । तदनुभवरूपमिति । शून्यत्वेनाभिमतमित्यर्थः । अविचारितेति । अविचारितो यः प्रपंचस्तदाक्षेपात् नेह नानेत्यादिश्रुत्या तन्निषेधात् । अयं व्यवहारः । अद्वैतमिति व्यवहारः । संवृत्याऽविद्यया । नैय्यायिकैर्मादृशैः । समर्थयिष्यते । प्रकाशस्य स नस्तदीयतारूपसंबंधो विषयतेत्यादिरीत्या लक्ष्यते । वेद्यनिष्ठ इति । दृश्यप्रपंचनिष्ठः न तु चिद्रूपदृग्निष्ठः विषयतायास्तादात्म्यरूपत्वेन तद्ध्यस्ते प्रपंचे संभवात् । चिति स्वभेदाभावेन भेदाभेदनियततादात्म्यायोगात् । अस्मिन् दर्शने अद्वैतदर्शने । तत्तन्मायेति । मूलाविद्यादिभेदेनाविद्याया नानात्वे मायापदार्थभूतविद्याविशेषणत्वं नो चेदुपाधिविशेषणत्वं तत्तदित्यस्य । स्वप्नेति । साकल्येन गगनस्य कटाहाद्यवच्छिन्नत्वदर्शनं स्वप्न एव संभवतीति तद्ग्रहणम् । आर्द्रकवाणिजः शूर्पे आर्द्रशाखादिकं निक्षिप्य विक्रेतुः वहित्रं रत्नादिपूर्णसमुद्रस्थनौकाविशेषः । ननु तादृशं वेदांतदर्शनं कथं युक्तं येन तव सम्मतं स्यादिति बौध्धाभिप्रायं ज्ञात्वेदमुच्यते । तदास्तां तावदिति । यथार्द्रकवाणिजः समुद्रस्थवहित्रविचाराधिकारो नास्ति तथाऽवैदिकस्य तव वेदं मूलीकृत्य प्रवृत्ततन्मतविचाराधिकारो नास्ति स चास्मदादिवैदिकानामेव । स च त्वन्मतनिराकरणावसरेऽनवसरदुःस्थ इति भावः । अद्वैतचांद्रिकायां तु स्वाभिप्रेताया आचार्यस्याद्वैतश्रद्धायाः सिध्यर्थमित्थमभिप्रायो वर्णितः । यथार्द्रकवणिजो वहित्रविचारे प्रयोजनं नास्ति तथेदानीं द्वैतमतमेव परिष्कुर्वतो ममाद्वैतदर्शनविचारानवसरः स च कस्यचित्पुरुषधौरेयस्य भवतीति । तदसत् । एतामेव जातिमाश्रित्य बौध्धचार्वाकवेदांतिनां

* टिप्पणी—अभावान्निस्स्वरूपात्

† टिप्पणी—एतत्पत्रोदाहृतानि प्रतीकानि ३९१ पत्रस्थोदयनवाक्यानाम् ।

(टीका) स्यादेतत् । यद्येवमखंडत्वाद्ब्रह्मणः शून्यादविशेषात् शून्यवादिनिरासेन मायावादिनिरासोऽपि भगवतः सूत्रकारस्याभिमतस्स्यात् । तदा तस्यापसिद्धांतः प्रसज्ज्येत । ब्रह्मणोऽखंडत्वं खलु तस्य सिद्धांतः। न स्थानतोऽपि परस्योभयलिंगं सर्वत्र-हीत्यादिना निर्विशेषं ब्रह्मेति सूत्रकृतोक्तत्वात । किं चाखंडमेव ब्रह्मेति सकलश्रुतीनामभिप्रेतं । सर्वत्र हि ब्रह्मप्रतिपादनपरेषु वाक्येष्वशब्दमस्पर्शमित्यादिष्वपास्तसमस्तविशेषमेव ब्रह्मोपदिश्यते । अतस्तद्विरोधोऽपि प्रसज्ज्येत । तस्मान्नैतैस्सूत्रैर्मायावादिमतनिरासस्सूत्रकारस्याभिमत इत्यत आह ।

(मूलं) मय्यनंतगुणेऽनंते गुणतोऽनंतविग्रहे । यदाऽसीत्तत एवाद्यः स्वयंभूः समभूदजः ॥ १०४ ॥

(टीका) मयि मम नाभौ ।

वाल्लभ्यामोऽद्वैतवचः केवलं कंठकोलाहलो इति तेनैव बौद्धादिगणे वेदांतिनो गृहीतत्वेन तस्याद्वैतश्रद्धाभावावगमात् । तच्छ्रद्धाराहित्ये विरक्त्या मोक्षेच्छावतस्तस्य तत्साधनाद्वैतविचारं विहाय द्वैतविचारे बलवदिच्छाजानुपलंभेन तत्र स्वयंप्रवृत्तिं संपाद्यैतादृशादैन्योक्तौ बीजाभावापातादित्यलं । न स्थानतोऽपीति । सर्वकामः सर्वगंधः सर्वरस इत्यादिना ब्रह्मणः सविशेषत्वं श्रूयते । अस्थूलमनण्वित्यादिना निर्विशेषत्वम् । तत्र संशयः । किमुभयश्रुत्यनुसारादुभयरूपं ब्रह्मोतैकरूपमित्यत्रापि सविशेषं निर्विशेषं चेति पूर्वपक्षे द्विरूपं ब्रह्म ध्येयम् । सिद्धांते निर्विशेषमेवेति फलभेदः । तत्र यथा मूर्च्छावस्थायाः विरुद्धसुप्तिमरणावस्थोभयधर्मकत्वं तथा ब्रह्मणोऽप्युभयरूपत्वं भवतु श्रुतत्वादेवेति पूर्वपक्षे न तावत्परब्रह्मण उभयलिंगमुभयरूपत्वं संभवति सत्यस्य वस्तुनो द्वैरूप्यायोगात् । न ह्येकमेव वस्त्वेकदा तद्वत्तदभाववच्च दृष्टम् । तेन मूर्च्छादिदृष्टांता निरस्ताः । नापि स्थानत उपाधित उभयरूपत्वं तात्विकं युक्तम् । अग्निसंयोगमात्रेण जलस्यौष्ण्यस्वभावादर्शनात् । तस्मादेकरूपं ब्रह्म । तत्राप्येकत्वं निर्विशेषत्वमेव । हि यतः सर्ववेदांतेषु ब्रह्मपरेष्वशब्दमस्पर्शमरूपमित्यादिषु सर्वविशेषवत्त्वनिरासेन ब्रह्मोपदिश्यते तस्मान्निर्विशेषमेवैकरूपं ब्रह्मेति परोक्तसूत्रार्थः । परोक्तसूत्रखंडार्थमेव प्रकृतपूर्वपक्षे स्वतंत्रहेतुत्वेनाह । किंचेति । अपास्तेति । तत्त्वमेवाखंडत्वमिति भावः । यत्पदेन पद्मस्य ग्रहणात्तदाधारपदार्थलाभाय लक्षणामाश्रयते । मयि मम नाभाविति । परमात्मनोऽवयवस्यापि परमात्मनाऽत्यंताभिन्नत्वादानन्दमयाधिकरणरीत्याऽचिन्त्यशक्त्या गुणपूर्णत्वादेर्युक्तत्वात् अनंतगुण इत्यादिसप्तम्यंतार्थानां तद्विशेषणत्वोपपत्तिः । तेन पदार्थभूतनाभौ विशेषणान्वयस्यायोग्यत्वात् सत्पदार्थैकदेशीभूतपरमात्मन्यन्वयस्यैकदेशान्वयस्याव्युत्पन्नत्वादेवायोगादेतच्छ्लोकस्यासाधुत्वं स्यादिति शंकानवकाशः । गभीरायां न घोषः इत्यत्रेवात्राप्युपपत्तिरिति वा द्रष्टव्यम् । यद्वा मयीत्यस्य परमात्मपरत्वमेव । नाभावित्युक्तिस्तु नाभिघटितपरंपरासंबंधेन परमात्मनः पद्माधिकरणत्वबोधनायेत्यनुसंधेयम् । गुणतोऽनंत इत्यनेन गुणभेदप्रयुक्तेश्वरभेदः प्रतीयते स न युक्तः अनंतगुण इत्यनेनैकस्यैवानंतगुणत्वप्रतीत्या स्ववाक्यव्याहतिप्रसंगात् । अनंत इत्यस्य

(टीका) अनंते गुणत इति गुणानां प्रत्येकमानंत्यमुच्यते यदासीत्पद्मं स्वयंभूरज इति हिरण्यगर्भस्य परमेश्वरादुत्पत्तावागमसम्मतिकथनं स्वयंशब्दस्याकारस्य च विष्णुनामत्वात्।

(मूलं) उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः॥ यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वरः॥ इतिभगवद्राद्धांतः॥ १०५॥

(टीका) अनेन सर्वस्माद्भगवतो भेद उत्तमत्वं चोक्तम्। परमात्मेत्युदाहृत इति तत्रागमसम्मतिरुक्ता। लोकत्रयमाविश्येति युक्तिः। विनाशिनि लोकत्रये स्थितस्य विनाशशंकायां तन्निरासायाव्यय इत्युक्तम्। ईश्वर इति तदुपपादनायैश्वर्यवचनम्। स्यादेवं सूत्रकारस्यापसिद्धांतो यदि ब्रह्माखंडत्वं तत्सिद्धांतस्स्यात्। नचैवं। यतस्तदीयैः स्पष्टवचनैर्निखिलगुणगणाढ्यमेव ब्रह्मेति भगवद्राद्धांत इति गम्यते। न स्थानतोपीत्यादि त्वस्पष्टं वचनमन्यथा योजनीयम्। एतेन श्रुतिविरोधोपि परास्तः।

---

नाशराहित्यादिरूपपरिच्छेदाभावार्थकत्वं स्वीकृत्य गुणत इत्यस्योत्तरान्वये गुणभेदप्रयुक्तविग्रहभेदः प्रतीयते। सोपि नेहनानेत्यादिश्रुतिबाधितत्वात्सिद्धांतविरुद्ध इत्यतस्तदभिप्रायमाह। अनंते गुणत इतीति। प्रत्येकमिति। ज्ञानस्यैवानंदस्यैवेत्येवं प्रत्येकधर्मावच्छिन्नानामित्यर्थः। तथाच प्रत्येकमित्यस्य योग्यतया लाभे ज्ञानेनानंते आनंदेनानंते इत्यक्षरलभ्योऽर्थः। यथा धर्मेणायं महानिति वाक्यजन्यबोधोत्तरमेतन्निष्ठधर्मप्रयुक्त महत्त्वं धर्ममहत्त्वं विनाऽनुपपन्नमिति प्रतिसंधानेन पार्ष्णिकबोधविषयत्वं धर्ममहत्त्वे तद्वाक्यस्य तावत्पर्यंतं तात्पर्यं च तथेश्वरनिष्ठज्ञानप्रयुक्तानंत्यं ज्ञानानंत्यं विनाऽनुपपन्नमिति प्रतिसंधानेन ज्ञानानंत्यमेवमानंदादिनिष्ठं लभ्यते तत्रोक्तवाक्यस्य तात्पर्यम्। आनंत्यं च प्रकृते विशेषशक्त्या बहुत्वरूपं पूर्णत्वरूपं वोभयथापि न दोषः। उदाहरिष्यमाणतंत्रभागवतवाक्यस्थनिस्सीमपदस्य संख्याकृतमर्यादाराहित्यार्थकत्वस्यापि संभवात्। टिप्पण्यां तु ननु गुणतो इत्येतदनंत इत्यनेन पुनरुक्तमित्यत आह। अनंत इति। प्रत्येकशो गुणानां तु निःसीमत्वमुदीर्यते॥ तदानंत्यं तु गुणतस्ते चानंता हि संख्यया॥ अतोऽनंतगुणो विष्णुर्गुणतोऽनंत एव चेति तंत्रभागवतोक्तत्वादिति भाव इत्युक्तम्। तत्र गुणप्रयुक्तमीश्वरगतानंत्यं गुणानंत्य एवोक्तरीत्या पर्यवस्यति तच्चानंतगुण इत्युक्त्या लब्धमतः पौनरुक्त्यमिति भावः। हिरण्यगर्भोत्पत्तिस्थानत्वलिंगबलात्पद्ममित्याह। यदिति। आगमेति। श्रुत्यादिगतस्वयंभ्वजशब्दावेव यौगिकौ मानरूपौ भवत इत्यर्थः। नामत्वादिति। स्वातंत्र्यात्स्व इति प्रोक्त इत्यादिना तन्नामत्वस्य प्रमितत्वादिति भावः। तत्रागमसम्मतिरिति। परमात्मा व्यवस्थित इत्यादिश्रौतपदेनोत्तमत्वबोधने तद्व्यापको भेदोऽपि बोधितो भवतीति भावः। यद्वात्मपदोक्तस्वामित्वादिना तल्लाभ इति ज्ञेयम्। युक्तिरिति। तस्मादुत्तमस्यैव तद्भिन्नस्यैव च तद्धारकत्वादिति भावः। ननूक्तश्रुतिसूत्रावलंबनप्रयुक्तपूर्वपक्षस्य कथं भगवद्राद्धांतकथनेन निरास इत्यतस्तदभिप्रायमाह। स्यादेवमितीत्यादिना। श्रुतिविरोध इति। अशब्दमस्पर्शमित्यादिश्रुतिविरोधइत्यर्थः।

श्रुतीनामपि भगवद्राद्धांताविरोधेनैव व्याख्येयत्वात् । श्रुतिष्वेव स्पष्टं निरवकाशतया ब्रह्मणस्सगुणत्वावगमाच्च न श्रुतीनामखंडार्थनिष्ठत्वमित्यभिप्रायेणाह ।

( मूलं ) परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया-चेत्यादिश्रुतिः ॥ १०६ ॥

श्रुतिष्वेवेति । आस्तां तावत्पुराणादिवाक्यमित्येतदर्थसूचक एवशब्दः । अन्यथा योग्यार्थकत्वापत्तेः । मूलोक्तपरास्येति आदिपदोक्त यः सर्वज्ञः सर्ववित् । अणोरणीयान् महतो महीयान् । सर्वकामः सर्वरसः सर्वगंधः । यस्मिन् द्यौः पृथिवी चांतरिक्षमोतमित्यादिश्रुतिष्वित्यर्थः । परमित्यवगमक्रियाविशेषणम् । स्पष्टमित्यर्थः । निरवकाशतयेति । ततोपास्तनापरवाक्यानां स्वार्थे तात्पर्याभावरूपपराभिमतावकाशस्याप्यभावो बोध्यते । तेन यदुक्तं परैः सगुणवाक्यानामुपास्तनाविधिशेषत्वादुपासनायाश्चाविद्यमानाकारेणापि योषितमग्निं ध्यायीतेत्यादाविव संभवान्न तेन गुणानां सिद्धिरिति । तदयुक्ततां बोधयति ॥ ७ ॥ तथाहि न च रमेत्यहोऽसदुपासनयात्महनः । नाविद्यमानं ब्रुवते वेदाः ध्यातुं न वैदिकाः ॥ अविद्यमानं ध्यायंतः सर्वे यांत्यधरं तमः । तस्मात्सत्यार्थतां ब्रूयाद्वेदानामपि सर्वशः । येऽन्यथा विदुरेतेभ्यः क्षय्यलोका भवंति हि इत्यादिश्रुतिस्मृतिभिः । अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्यामिति सांकर्षणसूत्रेण चाविद्यमानार्थोपासनायाः निंदितत्वात् । योषितमग्निं ध्यायीतेत्यादौ रेतोरूपाहुत्याधारत्वेन पुरुषलक्षणघृतद्रवीभावहेतुत्वादिना वाऽग्निशब्दस्य गौणत्वात् । एवं वाचं धेनुमुपासीतेत्यादौ धेनुशब्दो अभीष्टदानाय स्वाभिमुख्येनागमनादिना सादृश्येन गौणः । रात्रिं धेनुमिवायतीमिति श्रुत्यंतरउक्तसादृश्यस्य गात्रावृक्तत्वेन तादृशसादृश्यविवक्षया वाच्येऽपि प्रयोगसंभवात् । नच मुख्यार्थसंभवे कुतो गौण्याश्रयणमिति वाच्यम् । मुख्यार्थतावच्छेदकधेनुत्वादेर्बाधितत्वेन मुख्यार्थकत्वानुपपत्तेः । नचारोपितधर्ममादाय मुख्यार्थता युक्तेति युक्तम् । एवं तर्हि गौण्युच्छेदापत्तेः । सर्वत्रापि तद्धर्मारोपेण वाक्यार्थसंभवात् । नचोपासनादिरूपप्रयोजनाभावान्नान्यत्रारोप इति वाच्यम् । उपासनारूपप्रयोजनाभावेपि शब्दस्य मुख्यार्थत्यागरूपप्रयोजनांतरस्य सत्त्वात् । तद्धर्मवत्सादृश्यरूपधर्मकथनेन यादृशधर्मांतरलाभस्तद्धर्मोक्त्यैव तल्लाभस्य सुतरां संभवाच्च । किंच सर्वधर्माणां सर्वत्रारोपसंभवेन तत्तत्प्रवृत्तिनिमित्तकशब्दमुख्यार्थत्वस्य सर्वत्राप्यायातेन मुख्यामुख्यार्थत्वव्यवस्थानुपपत्तिः । शक्यतावच्छेदकारोपे लक्षणेति मते आरोपितशक्यतावच्छेदकमुपादाय मुख्यत्वोक्तिर्योगेनानुभवसाम्यायान्यैरपि तथैव वक्तव्यतया शक्यतावच्छेदकारोपमुपादाय मुख्यत्वोक्त्यसंगतेश्च । किंच धेनुत्वादिधर्मारोपेणोपासनाया उक्तस्मृतिसूत्रादिभिर्निंदितत्वान्नासावर्थो वक्तुं शक्यः । नचात्यंतासत्प्रकारकोपासनैव निषिध्यत इति वाच्यम् । अनिर्वाच्यस्य निराकृतत्वेनारोपितत्वेऽत्यंतासत्त्वापरिहारात् । यत्तु अत्यंतासदित्यस्योपास्यत्वेन विधेयत्वायोग्येत्यर्थः । तत्वं च वृथा । उपास्यत्वेन विध्यभावात् । तद्भावेऽपि न्यायविरोधाद्वा । तथाच देहादेरुपास्यत्वेनाविधेयत्वेऽप्युपास्यत्वेन रागप्राप्तत्वात् स्मृत्योपास्यत्वेन निषेध्यता । सूत्रेण यत्र व्यावहारिकं प्रातीतिकं च विहितोपास्यत्वेन प्रसक्तं तत्र

व्यावहारिकमेवोपास्यम् शास्त्रार्थो नतु प्रातीतिकम् । व्यावहारिकसंभवे प्रातीतिकस्यानादेयत्वात् । यथोद्गीथोपासनादावनंतत्वादिकं प्रातीतिकं आकाशादौ नोपास्यं किंतु ब्रह्मणि सत्यं यथा वा सत्यकामत्वादिकं ब्रह्मण्युपास्यं व्यावहारिकं न प्रातीतिकं देवताधिकरणन्यायेनोपासनावाक्यस्य व्यावहारिकप्रामाण्यात् । अत एव यत्र चेतनमचेतनं चोपास्यं विधिना प्रसक्तं तत्र चेतनमेवोपास्यं श्रद्धातिशयलाभात् । एवं यत्रोपास्यत्वेन यं पुरुषं प्रति यदयोग्यं यथा तामसं प्रति परमसात्विकी विष्णुमूर्तिः सात्विकं प्रति वा तामसी भैरवविशेषादिमूर्तिः तत्तेन नोपास्यमश्रद्धादिसंभवादिति बोध्यत इति भाव इति । तन्न । व्यावहारिकप्रातीतिकादिभेदस्याप्रामाण्यातिरिक्तव्यावहारिकप्रामाण्यादेः निरस्तत्वेनोक्तरीत्या सूत्रार्थकथनस्यायोगात् । किंच सूत्रस्थासत्यपदस्य त्वद्रीत्योपास्यत्वेन यद्विधेयत्वयोग्यं तद्भिन्नार्थकत्वेऽचेतनायोग्यपदयोर्वैय्यर्थ्यमेव । त्वदुक्तरीत्यैव तदुपासनायाः न्यायविरुद्धत्वेनासत्यपदेनैव तयोः संग्रहीतत्वात् । नन्वद्वैतसिद्धिस्थात्यंतासत्पदस्यैवैतदर्थवर्णनम् । तेनासदुपासनानिषेधकवाक्यस्यासदविद्यमानपदयोरुक्तार्थकत्वं सूचितम् । सूत्रं नागमतया निर्णायकं न्यायसूत्रत्वहानेः । स्मृत्युक्तार्थोपपादनमुखेन तत्तात्पर्यनिर्णायकम् । इत्थं च सूत्रेऽसत्यपदं प्रातीतिकपरमेव सत् व्यावहारिकप्रातीतिकयोरुभयोः प्रसक्तौ व्यावहारिकसंभवे प्रातीतिकं नोपास्यमित्येतावन्मात्रसूचकं भवति नत्वितरन्याययोरिति तत्सूचनयाचेतनादिपदसार्थक्यमिति चेन्न । एवं सति सूत्रेऽसत्यपदस्य सामान्यवाचिनः प्रातीतिकरूपासत्यविशेषे लक्षणापत्तिः । व्यावहारिकप्रातीतिकयोरुभयोरुपास्यत्वेन प्रसक्ताविति चेतनाचेतनयोरुभयोरुपास्यत्वेन प्रसक्ताविति च वाक्ययोः पूरणापत्तिश्च । अफलत्वविपर्ययाभ्यामित्यनेनैव न्यायस्य स्फुटमुक्तत्वात्तत्सूचनस्य प्रयोजनाभावेन तदर्थमपि पूरणमित्यस्याप्यनुचितत्वमेव । एवं नाविद्यमानं ब्रुवते इत्यत्रत्याविद्यमानपदासत्पदादीनां सर्वजनसिद्धासदर्थकत्वांगीकारे स्मृतितन्मूलश्रुत्यनुसारित्वस्य सूत्रे संभवे तं विहायोपास्यतया विधेयत्वयोग्यभिन्नत्वरूपपारिभाषिकार्थांगीकारापत्तिश्च । नच निर्णयवाक्येऽसदुपासनामात्रस्य निषिद्धत्वात्तन्निर्णायकसूत्रे ऽ सत्यपदमात्रं स्यात् । अचेतनायोग्यपदयोर्वैय्यर्थ्यं स्यात् । तदुपास्तिनिषेधकनिर्णतव्यवाक्यांतराभावात् । उक्तपारिभाषिकार्थादरणे तदुपास्तिनिषेधस्योक्तवाक्येनैव लाभात्तत्तात्पर्यनिर्णायकसूत्रस्वरूपमावश्यकमिति वाच्यम् । स्फुटार्थं विहायोक्तपारिभाषिकार्थमादृत्य सूत्रकारस्य तथासूत्रकरण एव बीजाभावापातात् । सूत्रकृतः सर्वज्ञकल्पत्वेनाचेतनोपासनानिषेधकवाक्यांतरानुसारात् पारिभाषिकार्थादरणे तस्य युक्तमिति चेत् तर्हि तद्वाक्यानामेवात्र निर्णेतव्यत्वेन सूत्रकाराभिसंधिसंभवे उक्तपारिभाषिकार्थादरो निर्मूल एव । अपि च व्यावहारिकसंभवे प्रातीतिकं नोपास्यमिति त्वदभिमतसूत्रार्थे त्वन्मते वाचि धेनुत्वोपासनस्य त्वदभिमतस्यासिद्धिः । धेनुशब्दस्य धेनुसदृशार्थकत्वादिना धेनुसादृश्यरूपव्यावहारिकार्थस्यैवोपास्यत्वसंभवे धेनुत्वरूपप्रातीतिकार्थस्यानुपास्यत्वात् । नच मुख्यवृत्त्या प्रतिपाद्यस्य व्यावहारिकस्य संभवे इति तदर्थ इति वाच्यम् । आकाशपदस्य ब्रह्मणि लक्षणांगीकारं विना तद्वाक्याद्व्यावहारिकानंतत्वादिरूपास्यत्वेनालाभात्तस्य यथा सत्यादिनोदाहरणानुपपत्तिः । व्यावहारिकधेनुत्वावच्छिन्ने धेन्वादिशब्दशक्तिग्रहानुरोधाद्धेनुपदस्य मुख्यतया उपासनाकाले बुद्धिपूर्वकारोपविषयधेनुत्वस्य प्रातीतिकस्य तत्पदशक्यतावच्छेदकत्वाभावेन तादृशधर्मावच्छिन्नतात्पर्यकधेनुपदस्य मुख्यार्थकत्वोक्त्य

योगाच्च। श्रौतधेनुपदस्य व्यावहारिकमात्रवृत्तिधेनुत्वावच्छिन्नपरत्वे व्यावहारिकप्रातिभासिकोभयसाधारणजातिमंगीकृत्य तदवच्छिन्नपरत्वे वा तादृशजात्योर्व्यावहारिकतया प्रातिभासिकधेनुत्वोपासनासिद्धेरेव। एवमेतत्सूत्रस्य सामान्यत अचेतनोपासनानिषेधार्थकत्वसंभवे त्वदुक्तरीत्या चेतनस्य संभवेऽचेतनोपासा न युक्तेत्यर्थकत्वमयुक्तमेव। निर्मूलकत्वात्। नच नाम ब्रह्मेत्युपासीतेति नामादिरूपाचेतनोपास्तिविधानादुक्तार्थः कल्प्यत इति वाच्यम्। अभिमानिव्यपदेशादित्यत्रोक्तन्यायेन त्वन्मतेऽप्यभिमानिचेतनपरत्वसंभवेनाचेतनोपास्तिपरत्वे बीजाभावात्। मन्मते च सुपां सुलुगितिस्मरणात् सप्तम्यादेशः सुः। नाम्नि ब्रह्मेत्युपासीतेत्यर्थः। यदत्रोक्तमेतत्पक्षे इतिशब्दानन्वय इति तत्तुच्छम्। ब्रह्मशब्दस्य द्वितीयांतत्वे हि तत्स्यात्। नत्वेवम्। प्रथमांत एव ब्रह्मशब्दः। नामपदोत्तरसप्तम्यर्थान्वितब्रह्मपदार्थरूपवाक्यार्थस्येतिशब्दार्थविषयतारूपकर्मत्वेऽन्वय इत्यंगीकारात्। भूतले घट इति जानातीतिवत्। नच नामशब्दस्य सप्तम्यंतत्वपक्षे ब्रह्मशब्दस्य प्रथमांतत्वे नामाभिमानिनी चोमा तस्यां ब्रह्म हरिं स्मरेदिति भवच्छांदोग्यभाष्योदाहृतस्मृतिविसंवादः। तत्र ब्रह्मेति प्रतीकग्रहणपूर्वकं हरिमिति द्वितीयांतपदेन व्याख्यानादिति वाच्यम्। स्मृतौ ब्रह्म पूर्णं हरिमिति विशेषणविशेष्यभावांगीकारेण व्याख्यानव्याख्येयभावस्य पदद्वयेऽनंगीकारात्। स्मृतेश्च श्रुतिपर्यवसितार्थकथनपरत्वात्। उक्तस्मृतिबलादेव ब्रह्मशब्दो वा ब्रह्माधारे गौणः। तथाच नामाभिमान्युमायां ब्रह्म नियामकतया वर्तत इति उपासीतेति पर्यवसितोऽर्थः। यत्त्वद्वैतचंद्रिकायामुक्तम्। उषःकाले विद्यमानः सन् हरिमुपासीतेति यावदिति। तदस्मद्वेदांतसंप्रदायानभिज्ञस्य न दूषणावहम्। यदपि योषितमग्निमित्यादेश्छांदोग्यभाष्योक्तरीत्या योगेनार्थपरत्वपक्षे रूढार्थघटिततत्सदृशरूपगौणार्थसंभवे तत्परित्यागेन योगादेवानुचित इति। अन्यथा रथकाराधिकरणविरोध इति दूषणदानम्। तन्मंदम्। यतो रूढ्यार्थोपस्थितेः प्राथमिकत्वात्तं विहायावयवशक्तिजन्यबोधविषयीभूतार्थे न तात्पर्यं कल्पनीयं जघन्योपस्थितिकत्वादिति हि रथकाराधिकरणसिद्धांतपर्यवसानम्। प्रकृते च रूढार्थस्य बाधग्रहोत्तरं न तत्सादृश्यविशेषघटितगौण्या एवोपस्थितिरिति नियमोऽस्ति। शक्यसंबंधरूपलक्षणादेरप्युपस्थितिसंभवात्। तत्र कारणांतरवशेनार्थविशेषतात्पर्यग्रहोत्तरं तादृशार्थबोधाय काचिद्गौणी वा लक्षणा वाऽऽश्रयणीया। इत्थं च व्युत्पन्नस्यावयवशक्तीनामपि तत्समकक्षतया ततोऽपि पूर्वं चोपस्थितिसंभवेन तद्विषयीभूतार्थे शब्दस्य तात्पर्यकल्पनेन निर्वाहे तदेव वरम्। योगस्यापि मुख्यवृत्तित्वेन मुख्यार्थापरित्यागात्। गौणीशरीरे मुख्यार्थस्य सादृश्यप्रतियोगितया भानमकिंचित्करमेवेति। योगांगीकारे रथकाराधिकरणविरोधवार्ताया अप्यभावात्। यदपि शिलायां देवतात्वारोपेणोपासनया फलदर्शनादसदुपासना चेतनोपासना च युक्तैवेति तच्च। तत्प्रतिमायां देवताधिष्ठानत्वबुद्धिपूर्वकप्रवर्तमानानां तदंतस्थदेवताप्रसादेनैव फलस्य बहुस्थलेषूपलंभात्। कस्यचिन्मूर्खस्य तादृशोपास्तिस्थले फलदर्शनं यादृच्छिकं नोपासनस्य सफलत्वसाधकम्। अन्यथा यस्मिन् कस्मिंश्चिदचेतने देवतात्वारोपेणोपासने फलापत्तेः। यः स्वात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु भौम इज्यधीः॥ यत्तीर्थबुद्धिः सलिले न कर्हिचित् जनेष्वभिज्ञेषु स एव गोखरः॥ इति भागवतश्लोके पार्थिवादिप्रतिमासु इज्यपदोक्तदेवतात्वज्ञानवतो गोखर इत्यनेन निंदनाच्च नाचेतनाद्युपास्तिर्युक्ता। यदत्रोक्तमस्याः स्मृतेर्देहादिभिन्न आत्मा साधुजनाः स्वीयाः पूज्याः तीर्थभूताश्चेत्यत्र तात्पर्यात्। देहादिभिन्नो नात्मा साधवः स्वीयत्वपूज्यत्वतीर्थत्व

शून्या इति भ्रमव्युदासपरत्वम् । यथाश्रुतेऽध्वरमीमांसकानां चेतनदेवानंगीकारिणां मते न-विरोधः । न कर्हिचिज्जनेष्वभिज्ञेष्विति सर्वांते निर्देशात्साधूनामेव स्वीयत्वादिपरत्वधी-विरोधश्च । स्वात्मत्वं तेषां न संभवतीति न तत्परत्वधीरिति । तन्न । मुखत उक्तेर्थे साधूनां स्वीयत्वादौ चेत्युभयत्र तात्पर्ये बाधकाभावात् । सर्वथा यत्र यत्र किमपि नास्ति तत्र तत्र तस्य तस्य भ्रमः । त्रयमपि येषु वर्तते तादृशसाधुषु कदाप्येकस्यापि ग्रहो नास्त्यतो गोखर इति बोधनेन कर्हिचिदित्युक्तेस्तात्पर्यात् । स्वात्मानं प्रतिमां वापि देवतांतरमेव वा चेतनाचेतनं वाऽन्यत्ध्यायेद्यः केशवास्त्विति ॥ किं तेन न कृतं पापं चोरेणेशापहारिणेत्यादि मानैः स्पष्टतया प्रतिमायां देवतात्वोपास्तेर्निंदितत्वाच्च । भगवतो बादरायणस्याध्वरमीमांस-कभयप्रदर्शनं तु बहु शोभते । तथात्वे तद्भयेन तेन भागवते ब्रह्मस्वरूपस्यैवाप्रतिपादनापत्तेः। तस्मात्परोक्तस्याश्रद्धेयत्वादुपासनाविषयतयापि भगवति कल्याणगुणसिद्धिर्निष्प्रत्यूहै वेति । किंचोपासनायाः कार्यत्त्वे विष्णोरात्मत्व एव च ॥ उभयत्रापि तात्पर्यमात्मो-पासादिके विधौ ॥ इति स्मृत्यनुसारेणोपासनाविधीनां गुणसद्भावेऽपि तात्पर्याद्गुणानां-सिद्धिः । न चोभयत्र तात्पर्ये वाक्यभेदापत्त्या स्मृतेरप्रामाण्यमिति वाच्यम् । यत एकस्मिन्वाक्येऽर्थद्वयतात्पर्यवत्त्वस्य सर्वथा कुत्राप्यभावे खलु स्मृतेर्जरद्गवादिवाक्य वदप्रामाण्यं वक्तुं संभाव्येतापि । न चैवं लोकवेदयोस्तादृशवाक्यभेदस्य बहुलमुपलं-भात् । किंतु संभवत्येकवाक्यत्वे तद्भेदस्यानुचितत्वामित्येव । इत्थं चेतिहासपुरा-णाभ्यां वेदं समुपबृंहयेत् ॥ बिभेत्यल्पश्रुताद्वेदो मामयं प्रचलिष्यति ॥ यदि विद्या-च्चतुर्वेदान् सांगोपनिषदान् द्विजः ॥ नचेत्पुराणं संविद्यान्नैव स स्याद्विचक्षणः ॥ इत्यादिस्मृतीनां श्रुतिव्याख्यानरूपतायाः तदुक्तरीत्यैव वेदार्थस्य ज्ञेयत्वप्रतीतेर्वा-क्यभेदरूपदोषभ्रमेण सर्वज्ञकल्पप्रणीतस्मृत्यप्रामाण्योक्तेरातिसाहसिकत्वात् । किंचार्थ-द्वयबोधे तात्पर्यमेव वाक्यभेदो वोत मुख्यतयाऽर्थद्वयबोधतात्पर्यं वा । नाद्यः । द्रव्यदेवताविशिष्टयागविधायकवाक्यस्यापि भिन्नवाक्यत्वापत्तेः । नच विशिष्टविध्यु-त्तरकाले कल्प्यमानैर्विध्यंतरैर्द्रव्यदेवतादिरूपविशेषणानां यागे सिद्धिः । नतु विशिष्ट-विधेस्तत्र तात्पर्यं । अत एवैकविशिष्टविधिप्रसादेनानेकगुणविधानमित्यनेन विशिष्ट विध्यन्यथानुपपत्त्या कल्पनीयविधिभिर्विशेषणानां सिद्धिरित्युक्तम् । पौर्णमास्यधिकरणे वार्तिक इति वाच्यम् । विशिष्टविधेर्विशेषणाविषयकत्वे विशेषणविधिकल्पनाया अन्य-योगेन तद्विधेर्विशेषणाविषयकत्वोक्तेरसंगतत्वात् । अन्यथा निर्बीजकल्पनापातेन विशेष-णानुक्तिस्थलेऽपि तत्कल्पनापत्तेरेतत्स्थलेऽप्युक्तद्रव्यदेवतातिरिक्तद्रव्यदेवतादिरूपविशेषण विधीनामपि कल्पनापातश्च । सर्वत्र वस्तुद्वयप्रतीतितात्पर्येण वाक्यभेदांगीकारे सप्रका-रकबोधजनकवाक्यमात्रस्यैकवाक्यत्वभंगश्च स्यात् । उदाहृतवार्तिकं तु युक्तमेव । विशे-षणविशिष्टयागरूपविशेष्यांश एव भावनासंबंधभानेऽपि यागनिष्ठद्रव्यदेवतासंबंधादिभा-वनासंबंधस्योत्तरकालकल्प्यत्वाभिप्रायकत्वात् । अन्यथैकवाक्यस्याधिकार्थतात्पर्यकल्पना गौरवादिदोषपर्यवसायिवाक्यभेदाद्बिभ्यतां स्वतात्पर्यसहितानेकविधिवाक्यांतरकल्पनं कथमभिमतं स्यात् । न द्वितीयः । आत्मेत्येवोपासीतेत्यादिवाक्येन यद्यात्मेत्युपासना कर्तव्या अयं चात्मेति समूहालंबनबोध इष्टः स्यात् तर्ह्येवं वक्तुं शक्येत । न ह्येवमस्म-दभ्युपगमः । किंत्वात्मत्वविशिष्टनिष्ठविषयताकोपासना कर्तव्या सत्यकामत्वादिविशिष्ट उपास्य इत्याकारक एव बोधः इति शब्दार्थविषयत्वादिरूपकर्मत्व एवात्मपदार्थात्मत्व-विशिष्टान्वयसंभवात् । वाक्यानां विशिष्टबोधतात्पर्यकत्वस्यौत्सर्गिकत्वात् । न त्वात्मत्व-

सत्यकामत्वादेरिति शब्दार्थप्रकारतायामन्वयेनात्मत्वसत्यकामत्वादिप्रकारकोपासना कर्तव्येति बोधः। आत्मत्वादेः शब्देन प्रधानतयोपस्थितौ भावप्रधानत्वापत्तेः। सत्यकामादिवाक्य इतिशब्दाध्याहारापत्तेश्च। न चात्मविषयकोपासनोक्तिमात्रेण कथं विष्णोरात्मत्वं सिध्यतीति वाच्यम्। आत्मत्वसत्यकामत्वादिधर्माणां विशेष्यांशेऽवगाहिबोधस्य श्रुतितात्पर्याधीनस्य प्रमात्वादेव तत्सिद्धिसंभवात्। नन्वसदुपासनायाः सर्वथा निषिद्धत्वे उपासनावाक्येन तद्धर्मप्रकारकत्वमात्रेणोपासनायाः कर्तव्यत्वाबोधने वाक्यस्मृतैर्वैयर्थ्यमेव स्यात्। उपासनावाक्येनात्मत्वसिद्धेरविप्रतिपन्नत्वेनोभयत्र तात्पर्योक्तौ बीजाभावात्। अन्यथोपासनाया अपि श्रुतिविहितत्वे वा उपासनाविधिवाक्येनात्मत्वसत्यकामत्वादिधर्माणां धर्म्यंशेऽनवगाहिबोधजननेऽपि वा विष्णोरात्मत्वासिध्यापत्त्येतद्वैलक्षण्यस्यात्र प्रदर्शनार्थमुक्तस्मृतेः सार्थक्यमिति चेन्न। योषितमग्निं ध्यायीतेत्यादौ यथा योषित्यग्नित्वबाधात्तत्र यथा योषित्सादृश्यादिपरत्वाद्योषित्पदस्येति यथा तद्वाक्यान्न योषितोऽग्नित्वसिद्धिस्तद्वाक्यस्य तत्र तात्पर्याभावश्च तथात्मपदार्थतावच्छेदकीभूतगुणपूर्णत्वादेः सत्यकामत्वादेश्चासंभावितत्वादिशंकयोपचरितार्थकत्वं नास्ति। किंतु मुख्यार्थे आत्मबोधे उपास्तिकर्तव्यतायां च तात्पर्यं वर्तत इत्यर्थपरत्वेन स्मृतेः सार्थक्यात्। नन्वेवमप्युपासनारूपान्यपदार्थः परप्रकरणादिमध्यपतितत्वान्न ब्रह्मणि गुणवैशिष्ट्ये तात्पर्यं सत्यकामत्वादिवाक्यानां किंतु तदुपासनामात्र इति चेन्न। अन्यपरवाक्यमध्यपतितत्वमात्रेण स्वप्रतीतावांतरार्थे वाक्यस्य तात्पर्याभावे प्रयाजादिवाक्यानामपि स्वार्थे तात्पर्याभावप्राप्त्या तदनुष्ठानासिद्धिप्रसंगात्। ननु नान्यपरवाक्यमध्यस्थत्वमात्रेण स्वार्थे तात्पर्याभाव उच्यते। किंतु तदर्थस्य प्रमाणांतरबाधितत्वे निष्प्रयोजनत्वेऽन्यतः प्राप्तौ वा यथा प्रजापतिरात्मनो वपामुदखिददित्यादेरादित्यो यूप इत्यादेश्च स्वार्थस्य प्रजापतिजीवनग्राहकप्रमाणादिबाधितार्थत्वान्न प्रतीतार्थे तात्पर्यं किंतु तद्घटितवाक्यस्य लक्षणयैव तूपरपशुप्राशस्त्यावगमकत्वम्। यथा वा जर्तिलयवाग्वा वा जुहुयात् गवीधुकयवाग्वा जुहुयान्न ग्राम्यान् पशून् हिनस्ति नारण्यान् हिनस्ति अथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च पयसाऽग्निहोत्रं जुहोतीत्यत्रानाहुतय इत्यादिकं न पयोहोमजर्तिलहोमयोर्विकल्पफलकं पयसा जुहोतीति विधिबलेनैव जर्तिलपयसो व्रीहियवन्यायेन विकल्पसिद्धेः। एवं जर्तिलयवाग्वा वेत्यत्र वाकारोऽपि व्यर्थः। उक्तरीत्या विकल्पस्यान्यत एव लाभात्। ततोऽन्यार्थमादाय फलायोगान्न हि निंदान्यायेन पशुनिंदाद्वारा पयस्स्तुतिपरत्वान्न स्वार्थतात्पर्यकत्वम्। अग्निर्हिमस्य भेषजमित्यादेर्मानांतरप्राप्तार्थकत्वेन प्रयाजादिवाक्यानामितिकर्तव्यताकांक्षापूरकत्वेन सप्रयोजनत्वात् स्वार्थतात्पर्यमावश्यकं। सत्यकामत्वादिधर्मप्रकारकोपासनामात्रेण तत्फलसिध्योपास्ये वस्तुनि तद्धर्मसंबंधेन विधेस्तात्पर्यमित्यवांतरवाक्यानां न सत्यकामत्वादिगुणेषु तात्पर्यमिति चेन्न। सत्यकामत्वादिविशिष्टविषयकोपासनायाः निष्प्रयोजनत्वं किंतु तत्प्रकारकोपासनामात्रस्येत्येतत्स्पष्टप्रमाणांतरबलाद्गम्यते उतैतद्विधिवाक्येनाहोस्विल्लाघवादिरूपतर्केण। नाद्यः। तदनुपलंभात्। प्रत्युतान्यथोपासनानिंदाबलेन विशिष्टविषयकोपासनाया एव सफलत्वप्रतीतेश्च। न द्वितीयः। तद्वाक्यात्स्वरसतो जायमानबोधस्य विशिष्टविषयकोपासनावगाहितयैव प्रतीतेः। न तृतीयः। यागादीनां फलजनकताप्रयोजककोटौ द्रव्यदेवतासंबंधादेर्निवेशे गौरवात् क्रियाविशेषमात्रस्य कारणत्वापत्त्या द्रव्यदेवतादावपि तात्पर्याभावात्तदुद्देशेन हविःप्रक्षेपाद्यनुष्ठानासिद्धिप्रसंगात्। न च योषित-

मग्निं ध्यायीतेत्यत्रा(?)विशिष्टविषयकोपासादर्शनात्प्रकृतेऽपि तथात्वं कल्प्यत इति वाच्यम् । दृष्टांतासंमतेः । गंगास्नानादिविधेर्द्रव्यदेवताशून्यक्रियाविषयकत्वोपलंभाद्यागस्थलेऽपि तथात्वकल्पनापातश्च । नच यागविधिना स्वरसतः प्राप्तद्रव्यदेवतासंबंधे बाधकाभावात्तात्पर्यं प्रकृते निर्गुणश्रुतिबाधान्न विशिष्टविषयकोपासनायां तात्पर्यमितिवाच्यम् । न हिंस्यात्सर्वाभूतानीति सर्वभूतहिंसानिषेधकवाक्यबाधितत्वेन पश्वादिरूपद्रव्यसंबंधे तात्पर्याभावापत्त्या पश्वादिद्रव्यसंबंधस्यैव यागेऽसिद्धिप्रसंगात् । नच यागसामान्ये पशु-* पुरोडाशादिद्रव्यसंबंधस्यैवाप्राप्तौ तत्तद्विधायकवाक्यसन्निधौ तत्तद्द्रव्यतत्तत्संस्कार तत्तद्विनियोजकप्रतिपादकबहुवाक्यानां वृथा निष्प्रयोजनकत्वं परिकल्प्य तेषां प्राशस्त्यादिरूपलक्षणाश्रयणापेक्षया सर्वभूतहिंसानिषेधकवाक्यस्यासंकुचितार्थत्वत्याग एव वरः । बहुबाधस्यान्याय्यत्वात् । बहुस्थलेषु तादृशव्यवहाराणामुपलंभेन संकोचेऽपि निरूढलक्षणया शक्तितुल्ययैवार्थबोधकत्वान्न श्रुतेः स्वरसभंगोऽपीति वाच्यम् । अत्रापि बहुस्थलेषु गुणानां प्रतिपादनादेष सर्वेश्वर एष भूताधिपतिरिति विधानात् ब्रह्मशब्दोक्तपूर्णत्वस्य जगत्कारणत्वादिधर्मैरुपपादनाच्च तेषां स्वार्थपरत्वाभावे बहुबाधप्राप्त्या त्वदुक्तनिर्गुणश्रुतिसंकोचस्यैव वरत्वात्तेनोक्तगुणनिषेधासिद्धेः । तथाचोपासाविधिभिरपि उपासनायां विषयितया प्रकारीभवद्धर्मिणि सत्यकामत्वादिधर्माणां प्रतिपादनसिद्धौ धर्मिभूतेश्वरे तद्धर्मसिद्धिरवर्जनीयैव । यत्तु तत्र तद्धर्मप्रतिपादने तत्र श्रुतेस्तात्पर्याभावान्न तत्सिद्धिरिति । तत्तुच्छम् । पूर्वोक्तयुक्तिभिः श्रुतेस्तादृशबोधजनकतायाः सिद्धत्वेन तादृशजनकतारूपशक्तेरेव त्वन्मते तात्पर्यरूपताया उक्तत्वात् । ननु प्रमानुकूलशक्तिरेव तात्पर्यमिति वाच्यम् । हंत तर्ह्युक्तजनकतारूपशक्तेस्तात्पर्यत्वाभावस्तज्जन्यबोधाप्रामाण्यपर्यवसायीति श्रुतेरेवाप्रामाण्यमंगीकृतमिति स्वस्य सम्यग्वैदिकत्वं प्रख्यापितं स्यात् । तस्मादुपासनापरवाक्यादपि गुणसिद्धिर्युक्ता । किंचोपासनाविध्यसमभिव्याहारेणापि ' यः सर्वज्ञः सर्ववित् ' ' यस्यैष महिमा भुवी'त्यादौ सार्वज्ञादिगुणश्रवणात् तत्सिद्धिः । ननु भवदुक्तवाक्यानां निर्गुणप्रकरणस्थवाक्यानां च गुणनिषेधकवाक्येन प्रतियोगिसमर्पकतयाऽन्वयांगीकारान्न तन गुणसिद्धिः । नच नेहनानास्ति किंचनेत्यनेन सामान्यवाचिकिंचनशब्देनैव गुणानामपि मिथ्यात्वसिद्धौ पुनर्विशेषतो निषेधवैयर्थ्याच्छ्रुतेर्न तत्र तात्पर्यमुचितमिति वाच्यम् । गुणानामलौकिकतया वाक्यप्रमेयत्वभ्रमनिरासार्थत्वेन पुनस्तन्निषेधसार्थक्यादिति चेन्न । श्रुतिप्राप्तस्य श्रुत्या निषेधे श्रुतेरुन्मत्तवाक्यत्वापत्तेः । अत एवोक्तं गीतातात्पर्ये । ' अप्राप्तमेवात्मनो भेदादिकं स्वयं प्रापयित्वा पुनस्तन्निषेधे कथं श्रुतेरुन्मत्तवाक्यत्वं न स्यादि'ति । ननु श्रुतिप्राप्तत्वं नाम श्रुतिजन्यबोधविषयत्वं तज्जन्यप्रमाविषयत्वं वा । नाद्यः । श्रुतिजन्यबोधविषयस्य श्रुत्या निराकरणाभावे ऐक्यबोधकत्वेन प्रतीयमानवाक्याभासप्राप्तमैक्यं भेदश्रुत्याऽतत्त्वमसीत्यादिना निषिध्यत इति त्वन्मतहानिप्रसंगात् । न द्वितीयः । गुणानां प्रमितत्वासिद्धेः । मैवं । श्रुतितात्पर्यप्रमाधीनबोधविषयत्वस्यैव तत्त्वात् । सगुणवाक्यस्थपदानां गंगापदस्य तीर इव लक्षणादस्त्वयाऽप्यनंगीकारेण तद्वाक्यजन्यस्वारसिकबोधस्य तत्तात्पर्यप्रमाधीनत्वस्य त्वयाप्यंगीकृतत्वात् । नन्वेतदप्ययुक्तम् । न कलंजं भक्षयेदित्यादिवैदिकनिषेधप्रतियोगिबोधस्य तादृशप्रतियोगिसमर्पकभागतात्पर्यप्रमाधीनत्वात् सर्ववैदिकनिषेधोच्छेदप्रसंगादिति चेन्न । निषेधांश

* टिप्पणी—धान्यस्यापि सजीवत्वादिति भावः ।

अविशेषणतया वा सत्त्वेन वा स्वार्थबोधतात्पर्यकत्वग्रहाधीनश्रुतिजन्यबोधाविषयस्यैव श्रुतिप्राप्तपदेन विवक्षितत्वात् । न च सगुणवाक्यार्थस्य निषेधांशविशेषणतयैव श्रुतितात्पर्यविषयतायामंगीकृतत्वात् । यः सर्वज्ञ इत्यादिवाक्येषु गुणेषु सत्ताबोधकपदाभावेन सत्त्वेन स्वार्थबोधतात्पर्यस्य श्रुतेर्वक्तुमशक्यत्वेनाक्रीतिरप्यसंभव इति वाच्यम् । निषेधबोधकनञादिसमभिव्याहारस्य सगुणवाक्येऽभावात् । निषेधबोधकवाक्यांतरेषु प्रतियोगिसमर्पकपदांतरसमभिव्याहारस्यैव सत्त्वेन सगुणवाक्येनोक्तगुणानामन्वयस्यानाकांक्षितत्वेन गुणबोधकवाक्यानां निषेधांशे प्रतियोग्यविशेषणतयैव स्वार्थबोधतात्पर्यकत्वस्यावश्यकत्वात । अन्यथा घटवद्भूतलं निर्घटं भूतलमिति वाक्यद्वयस्यैकवाक्यतापत्तेः।नच वाच्यं प्रतिवादिग्रन्थार्थं बहुतरग्रंथेनानूद्य तन्नेत्यादिना दूषणाभिधानात् बहुवाक्योक्तार्थस्यापि वाक्यांतरोक्तनिषेधप्रतियोगित्वेनान्वयस्य दृष्टत्वमस्त्येवेति । यतस्तत्र तत्पदमेव प्रतियोगिसमर्पकं इत्यंतवाक्यांतराणां तत्पदवाच्यतोपाधिभूतबुद्धिस्थत्वसंपादकत्वं तदपि निरंतरानुपूर्वीघटकानामेव । नच प्रकृतेऽपि तथास्त्विति वाच्यम् । प्रकृते च गुणबोधकवाक्यानां विप्रकीर्णानां यत्किंचिदेकप्रकरणस्थवाक्योपयोगित्वस्य वक्तुमशक्यत्वात । तज्ज्ञापकस्येति वदंतीत्यादेरश्रूयमाणत्वाच्च । एवमपि तदेकवाक्यतांगीकारेण निषेधपरत्वाभ्युपगमेतत्तत्प्रकरणगतवाक्योक्तयागीयहिंसासामान्यमनूद्य न हिंस्यात्सर्वा भूतानीति हिंसानिषेधः क्रियत इत्यस्यैव युक्तत्वप्राप्त्या सौगता एव विजयेरन् । एवं सत्यज्ञानादिवाक्योक्तब्रह्मैव इति न इति नेति पौनःपुन्येन दृढीकरणपूर्वकं नेति नेत्यनेन निषिध्यते । इह वेदोक्तेषु मध्ये ब्रह्म कर्मान्यद्वा किमपि नास्तीति नेह नानास्ति किंचनेतिवाक्येन निषिध्यते । असदेवेदमग्र आसीदित्यनेन अद्वैत्यस्य प्रतिषेधार्थकत्वमभ्युपेत्य सन्नास्तीत्यर्थकतया सन्निषिध्यते । एवमभेदमेव तत्त्वमसीत्यादिनाऽनूद्य द्वासुपर्णा जुष्टं यदेत्यनेन निषिध्यते । वाचारंभणमित्यादिनोक्तविश्वमिथ्यात्वं विश्वं सत्यमित्यादिना निषिध्यते । तद्विरुद्धकथनस्यैव निषेधरूपत्वादिति क्रमेण सर्वोऽपि त्वदभ्युपगतस्त्याज्यः स्यात । नच विश्वमित्यनेन विश्वस्मिन् सत्यतादात्म्यं प्रतीयते । तादात्म्यं च भेदनियतमिति जगति तेन मिथ्यात्वमेव बोध्यते । एवमसदेवेत्यनेन ब्रह्मणि सत्त्वसंसर्ग एव निषिध्यते न तावताऽस्माकं काचित्क्षतिः । ब्रह्मणः स्वरूपतः सद्रूपताया अंगीकारादिति । द्वासुपर्णेत्यादिना भेद एव न बोध्यते । किंतु द्वित्वादिकमेवोच्यत इति वाच्यम् । वाचारंभणं तत्त्वमसीत्यादिभिर्यादृशबोधो जायते तद्विरुद्धार्थावगाहिबोधोत्पादकत्वस्यैवास्माभिरापादनीयत्वात् । अन्यथा निर्गुणवाक्येन गुणसंसर्ग एव निषिध्यते । ब्रह्मणो गुणिस्वरूपत्वं तु स्यात् । सत्यादिपदसामानाधिकरण्यस्थले तत्तादात्म्यबोधनाच्च सत्स्वरूपत्वं सिध्यतीत्युक्तौ सत्यं ज्ञानमित्यत्रापि तथैवापत्त्या ब्रह्मणोऽनृताविद्याव्यावृत्तिर्न स्यात । प्रत्युतानृतजडादितादात्म्यमेव सिध्येत । एवं तत्त्वमस्यहं ब्रह्मास्मीत्यादिभ्यः काष्ठं भस्म भवतीत्यादिभ्य इव ब्रह्मवृत्तिसत्ताश्रयस्त्वमित्यादिबोधस्य जीवतादात्म्यबोधस्य वा जायमानत्वेन तत्तादात्म्यस्य त्वद्रीत्यैक्यविरोधित्वेन ऐक्यासिद्धिश्च स्यात । तस्माद्विशेषज्ञापकवाक्याभावेऽपि स्वेच्छामात्रेण सगुणपराणामनंतवाक्यानां निषेधप्रतिपादकेन यत्किंचिदेकवाक्येनान्वयस्वीकारेऽतिप्रसंगात्तथांऽगीकारस्याशक्यत्वे निषेधांशे अविशेषणतया स्वार्थबोधकत्वरूपं तत्परत्वं सगुणवाक्यानां सिध्यत्येव । अत एवोक्तं भगवत्पादैः । 'अनुवादोऽपि यदिदं वदंति तन्न युज्यते इति । परिहारं विशेषयुक्तिं च विना न

दृष्टः । अन्यथा भेदानुवादेन भेदोपदेशः किमिति न स्यात् । सर्वशाखांते भेदोक्तेश्चैतदेव युक्तमित्यादि । एवं सत्त्वेन स्वार्थबोधजनकत्वरूपतात्पर्यमपि सगुणवाक्यानां युक्तमेव । निषेधांशे प्रतियोगितया तद्भासकसामग्न्यसमवहिततद्भासकसामग्र्या एव तत्सत्ताबोधकतया मीमांसकमते कालस्येव सर्वप्रतीतिषूत्सर्गतः सत्ताभाननियमेन यः सर्वज्ञ इत्यादिवाक्येषु सत्यपदाभावेऽपि गुणानां सत्त्वेनैव भानात् । अन्यथा यागादिषु पृथक्सत्ताग्राहकप्रमाणाभावेन सत्तादात्म्यासिद्धिप्रसंगात् । नच प्रत्यक्षादिना तत्सिद्धिः । स्वर्गापूर्वादीनां प्रत्यक्षागोचरत्वात् । अनुमानादीनामप्रयोजकत्वादिना सत्त्वानिश्चायकत्वात् । अनुमानाभासादिना तत्सिद्धिस्तु शशविषाणादावपि समाना । वेदेन ब्रह्मणि प्रतीयमाने पृथक्तत्सत्ताग्राहकप्रमाणाभावेन तस्य सत्स्वरूपत्वासिद्धिप्रसंगात् । नच सत्यं ज्ञानं सत्यस्य सत्यमित्यादितस्तत्सिद्धिरिति वाच्यम् । तत्र सत्यपदोक्तसत्यतायाः पारमार्थिकत्वग्राहकप्रमाणांतराभावात् । न चाविशेषितसत्त्वसंबंधमात्रेणानृतव्यावृत्त्यादिसिध्या सत्स्वरूपत्वं सिध्यति । शुक्तिरूप्यादेरपि तथात्वापत्तेः । नन्वेवंरीत्या गुणादिप्रतिपादकवाक्येनैव तत्सत्त्वसिद्धेः पुनस्तत्सत्ताप्रतिपादकस्य सत्यः सो अस्य महिमेत्यादेर्वैयर्थ्यप्रसंग इति चेन्न । वाद्यंतरोक्तरीत्या सत्त्वाभावापरपर्यायव्यावहारिकसत्ताप्रतिषेधपूर्वकं पारमार्थिकसत्त्वस्य सिद्धे सत्यारंभो नियमार्थ इति न्यायेनदृढीकरणार्थं तद्वाक्यानां प्रवृत्तत्वेन वैयर्थ्यशंकानवकाशात् । ननु व्यावहारिकसत्त्वघटितप्रामाण्यस्यैव प्रवृत्त्याद्युपयुक्ततया तद्ज्ञाननिर्वाहाय व्यवसायेनापि तदेव ग्राह्यं पारमार्थिकसत्त्वस्य क्वोपयोग इति चेन्न । एतादृशदुर्भाषणस्य प्रत्यक्षबाधोपपादने निरस्तत्वात् । ब्रह्मप्रतिपादकेष्वपि पारमार्थिकप्रामाण्यासित्धिप्रसंगाच्च । यत्किंचित्कालाबाध्यस्य बाध्यस्य प्रामाण्यशरीरघटकत्वे किंचित्कालबाध्यस्य यजमानप्रस्तरत्वादित्ययूपत्वादेः प्रामाण्यशरीरघटकत्वे बाधकाभावात् । प्रातिभासिकप्रामाण्यमप्येवं सिध्येत् । तथा च यागादिवाक्ये पारमार्थिकप्रामाण्याभावेऽपि व्यावहारिकप्रामाण्यवत् प्रस्तरादिवाक्येऽपि प्रातिभासिकप्रामाण्यसंभवात् गौण्यादिनाप्यर्थाभ्युपगमे बीजाभावात्तत्सित्धिपेटिकावैयर्थ्यापत्तेः । तर्ह्यप्रामाण्यं किंरूपमिति चेदत्यंतासद्विषयत्वमेव । तथास्तु । अपिच व्यावहारिकप्रामाण्यस्यैव स्वतो ग्राह्यत्वे दोषाभावानां तत्रैव प्रयोजकताया अन्वयव्यतिरेकेण ग्रहाद्दोषाभावबलात्तादृशप्रामाण्यस्यैव सिध्यापत्त्या पारमार्थिकप्रामाण्यस्य ब्रह्मवाक्येऽङ्गीकारे बीजाभावापत्तिः। निर्निमित्तं तथांगीकारे यागवाक्यस्यैव प्रातिभासिकप्रामाण्यं षोडशिग्रहणवाक्यस्यापि तथात्वं संवंभूतहिंसानिषेधवाक्याग्रहणवाक्ययोर्निषेधपरत्वाद्व्यावहारिकप्रामाण्यमित्यपि स्यात् । तस्मात्सगुणवाक्येन गुणानां सत्त्वेनैव प्रतीतेः सत्त्वेन स्वार्थबोधतात्पर्यकत्वरूपं तत्परत्वमपि सिध्यत्येव । तथाच तादृशोभयविधतत्परत्वप्रमाधीनश्रुतिजन्यबोधविषयत्वरूपं श्रुतिप्राप्तत्वं गुणानामवनीयमिति तन्निषेधकत्वे श्रुतीनामुन्मत्तवाक्यत्वापत्तिर्दुर्वारैव । अथापि स्यात् । सगुणश्रुत्या गुणानां व्यावहारिकसत्त्वं बोध्यते निर्गुणवाक्यैस्तु गुणाभावस्य पारमार्थिकत्वं बोध्यते । असमानसत्ताकत्वेन तयोर्विरोधाभावेन तद्बोधकश्रुतीनां कथमुन्मत्तवाक्यतुल्यतेति । मैवं । अस्याः प्रक्रियायाः पूर्वमेव निरस्तत्वात् । गुणाभावस्य पारमार्थिकत्वे द्वैतब्रह्मासिद्धिप्रसंगात् । गुणाभावस्य पारमार्थिकत्वेऽपि ब्रह्मस्वरूपत्वाभ्युपगमाददोष इति चेत् । तावताऽपि गुणाभाववैशिष्ट्यस्य पारमार्थिकप्रामाण्यायोगात् । एकदेशमात्रे प्रामाण्य-

स्यैव तद्वाक्यप्रामाण्यव्यवहारनियामकत्वे सर्वज्ञानानां धर्म्यंशेऽभ्रांतत्वनियमेन तज्जनककारणानामप्रामाण्यव्यवहारवार्तोच्छेदापत्तेः । नच विशेषप्रकारयोः पारमार्थिकत्वमात्रेण प्रामाण्यम् । तथात्वे तद्विपर्यीभूतगुणाभावविशिष्टस्य पारमार्थिकत्वापातात् । गुणाभावसंबंधस्य व्यावहारिकत्वेऽपि ब्रह्मणि गुणानां व्यावहारिकत्वायोगेन श्रुतिप्राप्तस्य निषेधादुन्मत्तवाक्यतुल्यता दुर्वारैव । गुणाभावसंबंधस्य प्रातिभासिकस्य श्रुतिबाध्यत्वेनास्माकं प्रकृतगुणपूर्णत्वासिद्धिः । ननु सगुणश्रुत्या गुणानां व्यावहारिकत्वमेव बोध्यते निर्गुणश्रुत्यापि गुणाभावस्य तत्संबंधस्य वा व्यावहारिकत्वं बुध्यते । तावतापि स्वान्यूनसत्ताकस्वसमानाधिकरणाभावप्रतियोगित्वं लक्षणं मिथ्यात्वं गुणानां सिध्यत्येव । हंत तर्हि तत एव गुणाभावस्यापि मिथ्यात्वं स्यादिति चेदिष्टापत्तिरेव सर्वमिथ्यात्ववादिनामिति चेन्न । व्याहतार्थकवाक्येन कस्याप्यर्थस्य सिद्धेरदृष्टत्वात् । अन्यथा निर्घटं घटवदित्यादिवाक्यानां प्रामाण्यापत्तेः । नच मिथ्यात्वरूपार्थे तेपामपि प्रामाण्यमिष्टमेवेति वाच्यम् । परीक्षकाणां तादृशव्याहतवाक्यप्रयोगस्य मिथ्यात्वबोधनार्थमपि कुत्राप्यदृष्टत्वेनोक्तकल्पनाया असंभवात् । गुणगुणाभाववाक्ययोरुक्तरीत्या तौल्ये गुणाभावपरवाक्यानां प्राबल्यायुक्तेरसंगतत्वापातान्निर्गुण एव पक्षपातायोगाच्च । निर्गुणपरवाक्यानामखंडार्थपरत्वात् गुणपरवाक्यानां तद्बोधविरोधित्वात् प्राबल्यदौर्बल्यव्यवस्था युक्तेति चेत् । गुणपरवाक्यानामप्यखंडार्थबोधजनकतायां निर्गुणवाक्यतुल्यतायाः प्रागुपपादितत्वात् उक्तदोषतादवस्थ्यमेव । एतेन सगुणवाक्यनिर्गुणवाक्ययोर्भिन्नविषयत्वान्न विरोध इति निरस्तम् । वस्तुतो व्यक्तिद्वयांगीकारे पुनरद्वितीयब्रह्मासिद्धिप्रसंगात् । नच सगुणोपास्तिद्वारकचित्तैकाग्र्यसंपादनद्वारा निर्गुणापरोक्षतात्पर्यकत्वाच्छेषभूतसगुणवाक्यं न निर्गुणवाक्यबाधनक्षमं किंतु शुद्धान्यस्मिन्गुणबोधकं । निर्गुणवाक्यं तु विषयांतराभावाच्छुद्ध एव तत्प्रमापकमिति वाच्यम् । यतः सगुणातिरिक्तस्य गुणहीनस्य वस्तुतोऽन्यस्य सत्त्वे स्थूलतारकाचक्षुस्संनिकर्षस्यारुंधतीचक्षुस्संनिकर्षसंपादकतयोपयोग इवात्रोपयोगः कथंचिद्वक्तुं शक्येत । नचैतत्संभवति । गुणारोपेण शुद्धव्यक्तिरेवोपास्या । तत्र गुणारोपपरंपरादृढीकृतसंस्कारवतां पुनः पुनस्तस्यैव स्फुरणसंभवेन निर्गुणाविर्भावप्रतिबंध एव भवतीति कथं सगुणोपासनस्य निर्गुणप्रतिपत्त्युपयोगितया शेषत्वम् । अन्यथा विनिगमकाभावान्निर्गुणोपासनाया एव सगुणप्रतिपत्त्यंगतया शेषत्वं कुतो न मन्यसे । अत एव निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः । ये मंदास्तेऽनुकंप्यंते सविशेषनिरूपणैः । वशीकृते मनस्येषां सगुणब्रह्मशीलनात् । तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनमिति कल्पतरूक्तमप्ययुक्तम् । नच सगुणः स्वोपासने कृते तस्य सगुणत्वादेव प्रसादसंभवेनास्य चित्तैकाग्र्यतासंपाद्य निर्गुणभावनाद्वारा निर्गुणापरोक्षं घटयिष्यति नतु निर्गुणोपासनया निर्गुणस्तत्र प्रसादाद्यसंभवादित्यस्त्येव विनिगमकमिति वाच्यम् । वस्तुनोऽचेतने चेतनत्वारोपेणोपासनाकरणमात्रेण प्रसादोत्पत्त्यदर्शनेन शुद्धे स्वयं गुणारोपमात्रेणोपासनाकरणेऽपि तत्र प्रसादोत्पत्तौ बीजाभावात् । प्रसादोऽपि स्वेनैवारोप्यत इति चेत् । तर्हि प्रथमत एव तदारोपसंभवेनोपासनाविधिवैयर्थ्यमेव । स्वयमारोपितः प्रातिभासिक एव स्यान्न व्यावहारिकः । व्यावहारिक एव निर्गुणप्रतिपत्त्युपयोगीति चेत् न । नाम्न्युपास्यमानब्रह्मत्वादेः प्रातिभासिकस्यैव फलोपयोगितादर्शनेन प्रसादस्य व्यावहारिकस्यैव हेतुत्वमित्यत्र विशेषप्रमाणाभावात् । वस्तुतः स्वस्मिन्नविद्यमानधर्मचिंतनया महता

मप्रसादस्यैवापत्तेश्च । अन्यथा लौकिकराजादिवदीश्वरस्य भ्रांतत्वापातात् । त्वन्मते आरोपितशक्त्यादीनामपि हेयकोटिनिविष्टत्वेन तत्संबंधस्योत्कर्षानापादकत्वात् । उपास्तिविषयसगुणनिष्ठप्रसादादिगुणानां व्यावहारिकत्वे पुनर्निर्गुणश्रुत्या व्यावहारिकगुणाभावस्यैव प्रतिपादनाद्व्याहतिर्दुर्वारैव । गुणानां पारमार्थिकत्वाकारेण निषेधान्न व्याहतिरिति चेत् न । गुणबोधकवाक्यस्य पारमार्थिकसत्त्वरूपेणैव तद्बोधकताया इदानीमुपपादितत्वेन व्याहतेर्दुर्वारत्वात् । अन्यथा नेति नेतीत्यादिवाक्यस्य ब्रह्मणः पारमार्थिकत्वेन निषेधपरत्वं स्यात् । अधिकं नेह नानेति श्रुतिविचारे पूर्वोक्तमनुसंधेयम् । ननु सार्वज्ञादिश्रुतीनां सर्वज्ञत्वादिगुणाश्रयो मायावच्छिन्नत्वाविद्याविंबत्वाद्युपहितो धर्मी निर्गुणश्रुतेस्तु तदन्यच्छुद्धमिति धर्मिभेदान्न विरोध इति चेत् तर्हि गुणाभावप्रकारकबोधे धर्मितावच्छेदकतया भासमानं यत्किंचिदेव यदि, तदा ब्रह्मणि गुणाभावासिद्धिरुक्तगुणानां मिथ्यात्वासिद्धिरप्रसक्तप्रतिषेधश्च । यत्र तत्प्रसक्तिस्तत्र निषेधे पुनर्व्याहतिरेव । मायानुपहितत्वं गुणाभावधर्मितावच्छेदकमिति चेत् तर्हि गुणगुणाभावानुपहितयोर्मिथ्याभूतव्यक्त्योरेव सिध्यति इति किमायातं ब्रह्मणः । ब्रह्मण्येवावच्छेदकभेदेन तुल्यसत्ताकयोरुभयोरप्यंगीकारे उभयोरपि सत्यत्वाविरोधान्न शुद्धासिद्धिः । किंच यत्तदद्रेश्यमगोत्रमवर्णमिति निर्गुणप्रतिपादक एव वाक्ये नित्यं विभुं सर्वगतं सुसूक्ष्ममिति मुंडके विभुत्वादिगुणाः पठ्यंते । तथा तलवकारोपनिषदि यच्छ्रोत्रेण न शृणोति यद्वाचाऽनभ्युदितमित्याद्युक्तनिर्गुणस्यैव येन श्रोत्रमिदं श्रुतं येन वागभ्युद्यत इत्यादिना श्रवणवचनशक्तिप्रदत्वादयो गुणा आम्नायंते । आख्यायिकया पूर्वोक्तब्रह्मण एव माहात्म्यप्रतिपादनपरोत्तरखंडे सर्वासुरजेतृत्वादौ स्वातंत्र्यादिना सर्वोत्तमत्वादिधर्माः श्रूयंते । तथाऽस्थूलमनण्वित्यादिना प्रस्तुतनिर्गुणाक्षरस्यैवैतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचंद्रमसौ विधृतौ तिष्ठत इत्यादिना सूर्यचंद्राद्याज्ञापयितृत्वादिधर्माः, एवं यस्मिन् द्यौः पृथिवी चांतरिक्षमोतामित्यादिना पृथिव्याद्याधारत्वेनोक्तस्यैव तमेवैकं जानथात्मानमित्यमृतस्यैष सेतुरिति वाक्योक्तमुमुक्षुज्ञेयत्वमुक्तप्राप्यत्वादिलिंगैर्निर्गुणत्वमवगम्यते । एवं साक्षी चेता केवलो निर्गुणश्चेति वाक्ये साक्षित्वादिधर्माः श्रूयंते । तथा साक्षी चेतेति वाक्यात् पूर्वमनाद्यनंतं सलिलस्य मध्ये विश्वस्य स्रष्टारमनंतरूपं ॥ विश्वस्य चैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशैरिति तज्ज्ञानान्मुक्तिरुच्यते । उत्तरत्र च एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति ॥ तमात्मस्थं ये नु पश्यंति धीरास्तेषां सुखं शाश्वतं नेतरेषामित्यनेनापि शाश्वतसुखरूपमुक्तिः श्रूयते । तथा तत्प्रकरण एव तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतं ॥ पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यं ॥ न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ॥ परास्य शक्तिरित्यादिना बहुतमा गुणाश्चोक्ता इति कथं सगुणनिर्गुणपरवाक्यानां भिन्नविषयत्वेनाविरोधः । उक्तवाक्यानां निर्गुणत्वांश एव प्रामाण्यं नतु गुणांशेऽपीति तु बालभाषणं । अपौरुषेये वेदे अप्रामाण्यप्रयोजक दोषाभावेन तस्याप्रामाण्योक्तेरसंगतत्वात् । विनिगमकाभावेन निर्गुणत्वांश एवाप्रामाण्यस्य वक्तुं शक्यत्वाच्च । गुणाभावानामधिकरणीभूतब्रह्मस्वरूपतया पारमार्थिकत्वात्तदंशे प्रामाण्यं युक्तमिति चेत् न । गुणानामपि ज्ञानानंदशक्त्यादीनां ब्रह्मस्वरूपत्वेन पारमार्थिकत्वेन तदंशे प्रामाण्यस्यापि संभवात् । नच तत्र प्रमाणाभावः ।

'सत्यं ज्ञानमनंतं ब्रह्म' 'विज्ञानमानंदं ब्रह्म' 'यो वै भूमा तत्सुखं' 'समा भग प्रविश' 'स्वाहा किमात्मको भगवान् ज्ञानात्मक ऐश्वर्यात्मकः शक्त्यात्मकः' 'एवं धर्मान् पृथक पश्यन्नि'त्यादीनां श्रुतीनां 'मत्स्यकूर्मादिरूपाणां गुणानां कर्मणामपि। तथैवावयवानां च भेदं पश्यति यः पुमान्। भेदाभेदाविदश्चात्र तमोऽधं यांत्यसंशय'मित्यादिस्मृतीनां बहुशो विद्यमानत्वात्। भगशब्दस्य 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चापि षण्णां भग इतिरंणतिस्मृत्यैश्वर्यवाचित्वात्तद्वाचकशब्देनैव संबोधनाच्च भगवत ऐश्वर्यादिरूपत्वमवगम्यते। नच तत्र भगशब्दस्य तदाश्रये लक्षणेति युक्तं। तत्प्रकरणे 'तं त्वा भग प्रविशानि स्वाहा समा भग प्रविश स्वाहा तस्मिन् सहस्रशाखे निभगाहं त्वयि विमृजे स्वाहे'ति अभ्यासेन गुणात्मकत्व एव तात्पर्यावधारणात्। अन्यथा बहुषु स्थलेषु प्रथमतो बुद्धिस्थरूढार्थपरित्यागप्रसंगात्। त्वदभिमतगुणाभावस्यैवाधिकरणस्वरूपत्वे मानाभावेन तत्र पारमार्थिकप्रामाण्यायोगः। नच गुणानां ब्रह्माभिन्नत्वे गुणगुणिभावस्य पारिभाषिकत्वापत्तिः। स्वाभिन्नशुक्लरूपेण घटस्य गुणित्ववदत्राप्युपपत्तेः। नच तत्र भेदस्यापि सत्त्वादाधाराधेयभावोपपत्तिरिति वाच्यम्। इहापि तत्प्रतिनिधिभूतस्य विशेषस्याग्रे व्यवस्थापनीयतया तद्बलादाधाराधेयभावोपपत्तेः। तवैव पुनर्गुणाभावस्वरूपस्य ब्रह्मणस्तेनाधाराधेयभावानुपपत्तिः। कल्पितसंबंधांगीकारे कल्पितत्वस्यारोपितत्वरूपतया संबंधांशे तद्वाक्यस्याप्रामाण्यापत्तिर्दुर्वारा। विषं भुंक्ष्वेत्यादिवाक्यवत्प्रतीतार्थपरित्यागेनाखंडार्थे प्रामाण्योपपादने विषभोजनादाविवावांतरतात्पर्येऽपि बीजाभावेन ब्रह्मणि गुणाभावस्यासिद्धिरेव। निर्गुणवाक्यस्य स्वभिन्नगुणाभावपरत्वेन सत्त्वादिगुणाभावपरत्वेन वा सगुणपरत्व संभवे वृथा सगुणनिर्गुणवाक्ययोर्भिन्नविषयत्वकल्पने 'सदेव सौम्येदमग्र आसीत् असदेवेदमग्र आसीदित्यनयो'र्ब्रह्मशून्यविषयत्वं ग्रहणाग्रहणवाक्ययोः परापरयागविषयत्वं असन्नेव स भवति असद्ब्रह्मेति वेद चेदिति पूर्वार्धः शून्यतापत्तिरूपपरममोक्षपरः। अस्ति ब्रह्मेत्युत्तरार्धोऽपरमोक्षपर इत्यादिकमप्यापद्येत। नचेदानीमिति प्रपंचस्यैव प्रसक्ततया तस्यैव कारणात्मना सत्त्वं कार्यात्मना त्वसत्त्वं श्रुतिभ्यां प्रतीयत इति न तयोर्ब्रह्मशून्यविषयत्वमिति वाच्यम्। ब्रह्मरूपकारणात्मना सत्त्वं शून्यरूपकारणात्मना त्वसत्त्वमित्ये करीत्यैवार्थसंभवे वैरूप्ये बीजाभावेन शून्यब्रह्मोभयत्रापि श्रुतिद्वयप्रामाण्यसंभवात्। नचाग्रहणवाक्यस्य ग्रहणनिषेधपरतया न यागविषयत्वमिति वाच्यम्। ग्रहणाभाववन्निन्यानुवादपूर्वकमपूर्वयागपरत्वोपपत्तेः। नच ग्रहणवाक्यप्राप्तग्रहणप्रतिषेधपरत्वप्रतीतेर्नापूर्वयागपरत्वं युक्तमिति वाच्यम्। गुणशब्दस्य नानार्थत्वेन सत्त्वादिगुणाभावरूपार्थस्य प्रतिभासेन मुख्यतस्तत्परत्वसंभवे कंठोक्तपरित्यागेन गगनकुसुमायमानाखंडार्थपरत्वस्याप्ययुक्ततासाम्यात्। नच शून्यतापत्तेरपुरुषार्थत्वान्न तृतीयप्रतिबंदिर्युक्तेति वाच्यम्। त्वदभिमतब्रह्मभावस्यापि तथात्वस्य वक्ष्यमाणत्वात्। यत्तु इदानीं सगुणं देशांतरे कालांतरे वा निर्गुणमिति निर्गुणसगुणश्रुत्योर्व्यवस्थातो न कोऽपि विरोधः। न चैतावता गुणानामनित्यत्वमेव सिद्ध्येन्न मिथ्यात्वमिति वाच्यम्। त्वदभिमततात्त्विकत्वस्यापि गुणानामसिद्धेः। प्रमाणांतरानुसरणे त्वस्माकमपि वाक्यांतरोक्तज्ञाननिवर्त्यत्वान्यथानुपपत्त्यादिकं गुणमिथ्यात्वे प्रमाणं भवतीति। तत्तुच्छम्। सदसद्वाक्ययोरुक्त रीत्या ब्रह्मणः सदसत्त्वयोर्देशादिव्यवस्थया बाधकत्वप्रतिबंदिपरिहारात्। गुणबाधकप्रमाणानामेव तत्सत्ताबाधकतया व्यवस्थापितत्वेनास्माकमुपायांतरानुसरणप्रसक्त्य-

भावात्। 'ज्ञानं नित्यं क्रिया नित्या बलं शक्तिः परात्मनः। एष नित्यो महिमा ब्राह्मणस्ये'त्यादिश्रुतिस्मृतिभिर्गुणानां नित्यत्वोक्त्या ज्ञाननिवर्त्यत्वादिरूपमिथ्यात्वाभावस्यैव सिद्धेः। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति श्रुत्या ज्ञानादीनां ब्रह्मस्वभावत्वेन प्रतिपादनेन तेषां सत्यत्वसिद्धेश्च। 'सत्यः सो अस्य महिमेति श्रुत्या स्पष्टं सत्यत्वावगमाच्च। नच ज्ञानादीनां स्वरूपतया गुणत्वासिद्धिः। स्वरूपातिरिक्तानां चरमसाक्षात्कारपर्यंतस्थायितया नित्यत्वोपचार एव। स्वाभाविकत्वं तपआदिना लब्धत्वाभावः। सत्यत्वं तु व्यावहारिकमेव श्रुत्युक्तमतो न केनापि गुणानां पारमार्थिकत्वसिद्धिरिति वाच्यम्। सत्यत्वानंतत्वयोरप्युक्तरीत्या व्याख्यातुं शक्यत्वेन ब्रह्मणोऽपि तदसित्धिप्रसंगात्। स्वरूपभूतानामपि गुणत्वसंभवस्योपपादयिष्यमाणत्वाच्च। नच निर्गुणवाक्यविरोधादेव स्वाभाविकत्वादिकमन्यथा-व्याख्यायत इति वाच्यम्। विनिगमकाभावेनोक्तबहुवाक्यविरोधेन तस्यैव सत्त्वादिरूप गुणाभावपरताया वक्तुमुचितत्वात्। तस्य स्वार्थपरत्वं गुणवाक्यानां नेत्यस्य पूर्वमेव निरस्तत्वात्। स्वाभाविकत्वस्य त्वदुक्तरूपत्वे क्रियादिसमभिव्याहृतज्ञानस्यापि तथात्वापत्तेः। नच क्रियायाः स्वाभाविकत्वे सृष्टिप्रलयादिसर्वक्रियाणां सार्वदिकत्वापत्त्याऽवश्यमर्थांतराश्रयणस्यावश्यकतया तत्सहपठितज्ञानपदमप्यविद्यापरिणतसर्वविषयकज्ञानपरमेवेति वाच्यम्। क्रियादीनां स्वाभाविकत्वे बाधकानां परिहरिष्यमाणत्वेन स्वाभाविकपदार्थस्य गौणस्याश्रयणे बीजाभावात्। एतेन सगुणवाक्यमौपाधिकगुणपरं निर्गुणवाक्यमनौपाधिकपरमिति निरस्तं। स्वाभाविकत्वनित्यत्वोक्तिविरोधात्। औपाधिकत्वस्यारोपितत्वरूपत्वे गुणाभावतत्संबंधयोरपि तथात्वेनास्यानौपाधिकाविषयकत्वोक्तिविरोधात्। आरोपितविषयत्वे श्रुतेरप्रामाण्यापत्तेश्च। नच मायाविदर्शितपदार्थबोधकवाक्यस्येव श्रुतेनाप्रामाण्यं। अप्रामाण्यस्यापि मानांतरागृहीतार्थावगाहित्वघटितत्वादिति वाच्यम्। दृष्टांतासम्मतेः। मायाविदर्शितार्थेषु सत्ताबोधकवाक्येष्वप्रामाण्यस्येष्टत्वात्। अयमेवं दर्शयतीति वाक्यस्य तत्पदार्थसत्त्वाबोधकत्वेनाप्रामाण्यप्रसक्त्यभावात्। नच श्रुतीनामपि तथात्वम्। सत्यः सो अस्य महिमा एष नित्यो महिमेत्यादिवाक्यानां तत्सत्ताविधायकत्वात्। सत्यकामादिवाक्यानामपि स्वार्थस्य सत्त्वेनैव बोधकताया व्युत्पादितत्वाच्च। अप्रामाण्यस्य मानांतरागृहीतार्थग्राहित्वघटितत्वे मानपदस्य प्रमाणपरत्वे मायाविदर्शितार्थानुवादकवाक्ये अप्रामाण्यापरिहार एव। तद्बोधितस्य मिथ्याभूतस्य प्रमाणाबोधितत्वात्। ज्ञानकरणमात्रपरत्वे भ्रांतवाक्यात् भ्राम्यतस्तत्समानार्थकोपदेशरूपवाक्ये सर्वजनसित्धाप्रामाण्यानुपपत्तिः। नन्वेष नित्यो महिमेति बृहदारण्यकवाक्यं त्यक्तसर्वेषणज्ञानिस्वरूपभूतमाहात्म्यपरं न ब्रह्मपरमतो नास्योदाहरणं युक्तमिति चेन्न। बृहदारण्यकस्थस्यैष नित्य इत्यादिवाक्यस्य त्वद्रीत्या त्यक्तसर्वेषणविषयत्वे तस्यैव त्वन्मते ब्रह्मस्वरूपत्वेनांगीकृतत्वेन तन्माहात्म्यरूपगुणानां नित्यत्वसित्धौ ब्रह्मगुणानां नित्यत्वस्यावर्जनीयत्वात्। नच तत्र तत्स्वरूपस्यैव महिम्नो नित्यता बोध्यते न तदतिरिक्तगुणानामिति वाच्यम्। अस्माभिरपीश्वरे स्वरूपातिरिक्तगुणानामनंगीकारेण विशेषबलेनैव धर्मधर्मिभावस्याभ्युपगमात्। तस्य चास्येत्यनया संबंधबोधकषष्ठ्या बोधनात्। त्वन्मते तस्यानुपपत्तिः। वस्तुत एतद्वाक्यस्य ब्रह्मपरत्वं सित्धांतसित्धं बृहद्भाष्यभावबोधादावुपपादितमत्रात्यंतमुपयोगाभावान्न प्रपंच्यते। तैत्तरीयगतेनैष नित्यो महिमा ब्राह्मणस्येति वाक्येन परेणापि ब्रह्मपरत्वेनाभ्युपगतेन पूर्वोदाहृतश्रुत्यंतरैश्च तत्सिद्धि-

संभवात् । किंचेश्वरगुणानामौपाधिकत्वे सृष्टेः पूर्वमुपाध्यभावात् ईक्षणादिगुणानुपपत्तिः। नचाविद्यारूपोपाधिवशात् तदीक्षणसंभव इति वाच्यम् । प्रथमेक्षणस्येश्वरव्यापारानपेक्षयोत्पत्त्यापत्त्येश्वरस्य सर्वकारणत्वश्रुतिविरोधापत्तेः । यत्तु दर्शपूर्णिमासप्रकरणे पठितस्य पूषादिमंत्रस्य दर्शादौ पूषदेवताविरहेण यथा पूषदेवताककर्मणि लिंगेन विनियोगस्तथा सत्यकामत्वादेर्ज्ञेयब्रह्मप्रकरणे पठितस्य ज्ञानान्वयासंभवेन तत्प्रकरणादुत्कृष्योपासनप्रकरणे निवेश्योपासनायामेवान्वयः । अथवा तिस्र एव साह्नस्योपसदो द्वादशाहीनस्येति वाक्येऽहर्गणरूपाहीनगतोपसदो द्वादशत्वेनानुष्ठानगौरवद्वारा निंदया साह्नगतोपसत्त्रयस्य विधेयस्य तदभावेन यथा स्तुतिस्तथा सगुणब्रह्मणः सत्यकामत्वादिना निर्गुणब्रह्मणो विधेयस्य स्तुतिरेव न तु तेषां स्वार्थपरत्वमिति । तत्तुच्छम् । निर्निमित्तं स्वेच्छामात्रेणोत्कर्षांगीकारे तत्त्वमस्यहं ब्रह्मास्मीत्यादीनामप्युत्कर्षेण नेति नेत्यादिवाक्योक्तनिषेधान्वयापत्तेः । नच सगुणज्ञानस्य मोक्षहेतुत्वाभावाज्ज्ञेयकोटावन्वयायोगादित्थमास्थीयत इति वाच्यम् । सगुणज्ञानस्य मोक्षहेतुताया व्यवस्थापितत्वात् । ननु श्वेताश्वतरश्रुतौ यद्यपि तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतमित्यादिवाक्ये एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति इत्यादिवाक्योक्तस्य तमात्मस्थं ये नु पश्यंति धीरास्तेषां सुखं शाश्वतं नेतरेषामित्यत्रत्यतत्पदेन परामर्शात्सगुणज्ञानस्य मोक्षहेतुता प्रतीयते। तथापि तत्पदस्य विशेष्यमात्रपरामर्शकत्वं वक्तव्यम् । अन्यथा तृतीयाध्याये वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वमितीश्वरमुक्त्वा ततो यदुत्तरतरं तद्रूपमनामयं य एतद्विदुरमृतास्ते भवंत्यथेतरे दुःखमेवापि यंतीत्यनेन तथा चतुर्थाध्यायेऽपि त्वं स्त्री त्वं पुमान् त्वं कुमार उत वा कुमारीत्यादिना शुद्धात्मज्ञानस्य मोक्षहेतुत्वोक्तिविरोधात् । तथा तमेव विदित्वाऽतिमृत्युमेति नान्यः पंथा विद्यतेऽयनायेति वाक्यस्य मुमुक्षुर्वै शरणमहं प्रपद्ये निष्कलं निष्क्रियं शांतं निरवद्यं निरंजनम् । अमृतस्य परं सेतुमित्यादिरूपस्य तमात्मस्थमित्यादिवाक्योत्तरवाक्यस्य च विरोधापत्तेरिति चेन्न । ततो यदुत्तरतरमित्युत्तरवाक्ये उत्तरतरपदेनेश्वरातिरिक्तनिर्गुणप्रतिपादनेतरवैयर्थ्यापत्तेरुत्तरपदमात्रेण तद्बाधसंभवाच्छून्यस्यैव तद्वाक्येन प्रतिपाद्यतासंभवात् शून्यज्ञानस्यैव मोक्षहेतुत्वसिध्यापत्तेस्तत्रारूपपदोक्तस्वरूपराहित्यस्यापि श्लिष्टत्वात् । तथात्र तद्बाधेन वाक्यांतरोक्तनिर्गुणज्ञानस्यापि मोक्षहेतुत्वाभावप्रसंगः । वाक्यांतरानुरोधान्निर्गुणज्ञानस्य मोक्षहेतुत्वावगतेस्तद्विरोधेनास्य शून्यपरत्वपरित्यागे मन्मतेऽपि यस्य प्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यते नापरेण । नारायणोऽसौ परमो विचिंत्यो मुमुक्षुभिः कर्मपाशादमुष्मादिति मत्प्रसादात्परां शांतिं स्थानं प्राप्स्यसि शाश्वतम । यो मामशेषदोषोज्झं गुणसर्वस्वबृंहितम् । जानात्यस्मै प्रसन्नोऽहं दद्यां कामान् परं पदमित्यादिश्रुतिस्मृतिभिः सगुणज्ञानान्मोक्षस्य स्पष्टमवगमेन बलशक्तीच्छादिराहितनिर्गुणज्ञानस्य मोक्षहेतुत्वस्यागोपपत्तिः । नचैतद्वाक्यं गौणमुक्तिपरमिति वाच्यम । एतदन्यपरमुक्तौ प्रमाणाभावात । यत्र त्वस्येत्यादिवाक्यानामाचार्यैरेवान्यत्र सम्यग्व्याख्यातत्वात्। इहाप्युत्तरत्र लेशतो दर्शयिष्यमाणत्वाच्च । परां शांतिमिति स्थानं प्राप्स्यसि शाश्वतीमित्युक्तस्यापरमुक्तित्वोक्तेरसंगतेश्च । न ह्यपरमुक्तेः परत्वं शाश्वतस्थानात्मकत्वं वा घटते। वृथोपचरितार्थकत्वकल्पने सर्ववेदवचसां कथंचिल्लौकिकार्थकत्वस्य वक्तुं शक्यत्वेन स्वर्गापूर्वदेवतादीनामसिद्धिप्रसंगाच्च । नच तथापि प्रसादस्य मोक्षकारणत्ववचनं निर्गुणो-

पासनासंपादनद्वारा मोक्षप्रदानपरामिति वाच्यम् । निर्गुणे ब्रह्मणि मयि धारयन् विशदं- मनः। परमानंदमाप्नोति यत्र कामोऽवशीयत इत्यनेनेश्वरेण स्वस्यैव निर्गुणत्वोक्त्या स्वोपास नस्यैव मोक्षहेतुत्वोक्त्या चोक्तकल्पनाबीजाभावात् । ईश्वरस्यैव सत्त्वादिगुणराहित्यप्रयु- क्ततया निर्गुणब्रह्मत्वावधारणात् । नच स्वरूपाविवक्षया तथोक्तिरिति वाच्यम् । तस्य जीवस्वरूपत्वस्यापि सत्त्वेन मयीत्यस्य वैयर्थ्यापत्तेः ! नारायणं महाज्ञेयं विश्वात्मानं परायणमिति श्रुतौ मोक्षसाधनीभूतप्रसादवत्त्वेन श्रुत्यंतरोक्तस्यैवेश्वरस्य महाज्ञेयमिति मुख्यज्ञेयत्वोक्तेरेतदतिरिक्तनिर्गुणस्य ज्ञेयत्वोक्तेरसंभवात् । त्वं स्त्री त्वं पुमानित्यादि- नोक्तस्य स्त्रीपुरुषाद्यंतर्यामित्वादिगुणोपेतस्यैव मोक्षहेतुज्ञानविषयत्वस्योत्तरत्रोक्तेर्न सर्व- गुणविनिर्मुक्तशशविषाणकल्पशुद्धस्य तत्प्रतीयते । तमेवं विदित्वाऽतिमृत्युमेतीत्यत्रापि एवकारेण न गुणानां व्यवच्छेदो लभ्यते । एवकारेण तदतिरिक्तव्यवच्छेदात् । गुणानां तदत्यंताभिन्नत्वस्योक्तत्वात् । यजुर्वेदपुरुषसूक्ते सहस्रशीर्षत्वादित्यवर्णत्वाद्युपेतस्यैव परामर्शेन तज्ज्ञानस्य मोक्षहेतुत्वस्य तमेवं विद्वानित्यादिनोक्तत्वेनात्रत्यैवकारस्यैवमित्यर्थ- कत्वोपपत्तेश्च । मुमुक्षुर्वै शरणमित्यादिवाक्यविरोधप्रसक्तिरेव नास्ति । निष्फलत्व पदोक्तलिंगदेहादिराहित्यस्य निष्क्रियपदोक्ताक्लिष्टकारित्वाभावस्येश्वरे संभवात् । अकर्माऽक्लिष्टकारित्वादित्यादिमानैरक्रियपदस्योक्तार्थकत्वात् । तस्य सर्वथा क्रियाराहित्या र्थकत्वे मोचनरूपव्यापाररहितं प्रति मुमुक्षोः शरणागत्युक्तेरसंगत्यापत्तेः । अन्यथा पाषा- णादिकं प्रत्यपि शरणागतिप्रसंगात् । तस्मात्सगुणज्ञानस्यैव मोक्षहेतुत्वे विरोधाभावा- त्तमात्मस्थमिति वाक्ये तमिति विशेष्यमात्रपरामर्श इत्यसंगतं । एको वशी सर्वभूतां- तरात्मा एकं रूपं बहुधा यः करोति । तमात्मस्थं ये नु पश्यंति धीरास्तेषां सुखं शाश्वतं नेतरेषां । तेषां शांतिः शाश्वतीत्यादिबहुवाक्येषु तत्पदस्य विशेष्यपरामर्शकत्वां- गीकारापत्तिश्च । ततो यदुत्तरतरमिति रूपविशेषाभिप्रायम् । यद्वा तत इति न पुरुष- परामर्शकं किंत्विदंपदोक्तं जगत्परम् । तथाच पुरुषेण जगतः स्वनियमनार्थव्याप्तत्व- रूपपूर्णत्वोक्तौ कथं जगतस्तेन नियम्यत्वं पुरुषस्य स्तब्धत्वादिदोषयुक्तत्वेन जगत्सा- म्यात् इत्याशंक्यात्युत्कृष्टत्वेन विचित्रशक्तिमत्त्वात्प्राकृतदेहादिरहितत्वेन मोक्ष- हेतुज्ञानविषयत्वेन निर्दोषत्वात् । स्तब्धत्वं तु स्वसंकल्पाचलनशून्यत्वमेवे- त्याशयेनोत्तरार्धप्रवृत्तेः । ब्रह्मविदाप्नोति परमित्यादिवाक्योक्तब्रह्माभिन्नत्वान्नानेकेषां ज्ञानस्य मोक्षहेतुत्वापत्तिरूपदोष इति सूचनाय ; तादृशब्रह्माभेदप्रत्यभिज्ञानार्थं पुरुषपदेन पुल्लिंगेन प्रक्रांतस्यापि नपुंसकलिंगयत्पदेन परामर्शाद्विरोधः । तस्माद्गुणज्ञानस्य मोक्षहेतुत्वेन गुणे तात्पर्यसंभवान्न ज्ञेयवाक्यपठितगुणवाक्याना- मुत्कर्षेणोपासनावाक्ये निवेशनं । अत एव निर्गुणस्तुत्युपयोगित्वेन तत्पाठ इति पक्षोऽपि निरस्तः । लोके प्रसादादिगुणरहितस्यैव निंद्यत्वस्य गुणवत एव कार्योप- योगितया स्तुत्यत्वस्य दर्शनेन वैपरीत्यस्यैव युक्तत्वाच्च । यत्र त्वानिर्गुणवाक्यस्य प्राबल्यमिति पुनः पुनः प्रलपनं तत्प्राबल्यस्य बहुधा पूर्वं निरस्तत्वादुनुपादेयमेव । एतेनैतदपि निरस्तम् । अद्वैतस्यापि क्वचिदुपास्यतया श्रवणेऽपि ज्ञेयतयापि श्रवणादद्वैतश्रुतेस्तात्पर्यं न सगुणब्रह्मणि तस्य ज्ञेयत्वाश्रवणादिति । तस्य ज्ञेयतया श्रवणस्योपपादितत्वात् । उपास्यतयोक्तत्वेऽपि गुणानां सत्यता सेत्स्यत्येव । धर्मि- समसत्ताकधर्मोपासनाया एव युक्तत्वात् । अन्यथा सर्वत्र पूर्वपक्षविषये आका- शप्राणादिषु सर्वभूतकारणत्वादीनामारोपेणोपासनासंभवेन सिद्धांतानुत्थानापत्त्या

समन्वयासंगतिप्रसंगात्। नच प्रातिभासिकानां भूतकारणत्वानंतत्वादीनां भूत आरोप्योपासना न युक्ता। ब्रह्मणि व्यावहारिकाणामेव तेषां संभवादित्यभिप्रायः सिद्धांतस्यातो नोक्तदोष इति वाच्यम्। उभयत्र धर्माणामुपास्यसमसत्ताकत्वाभावसाम्येन धर्माणां व्यावहारिकत्वमात्रेण ब्रह्मपक्षगतं बीजाभावेन सिद्धांतानुत्थित्यपरिहारात्। अन्यथा भूताकाशादौ प्रातिभासिकानंतत्वादौ संभवति व्यावहारिकत्वाश्रयणस्यानुचितत्वादित्युक्त्वा पूर्वपक्ष्येव कृतार्थः स्यात्। वस्तुतः पूर्वपक्ष्युक्तिरेव युक्ता। तत्पक्षे श्रौताकाशादिपदानां मुख्यार्थत्वसंभवेन सिद्धांतिरीत्या लक्षणाश्रयणक्लेशाभावात्। एवं ब्रह्मणि आरोपाधिष्ठानत्वनिर्वाहायापि धर्मा अंगीकरणीयाः। सामान्यतो ज्ञातस्य विशेषतोऽज्ञातस्यैवाधिष्ठानत्वसंभवात्। शुद्धविषयकाज्ञानमात्रेण शुद्धे आरोपसंभव इतितु वक्ष्यमाणरीत्या शुद्धविषयकाज्ञाने निरस्ते निरस्तं भवति। एवमन्या अपि तदीयदुरुक्तय उक्तरीत्या दूरीकरणीया इत्यलम्। एवं श्रुतीनां सगुणपरत्वे तदुपबृंहिततया न्यायामृतोक्तानुमानान्यपि ब्रह्मणः सगुणत्वमावेदयंति। स्वशब्दार्थविकल्पपूर्वकदूषणपरिहारक्रमस्तु विमतो मिथ इत्यनुमानविचारावसर एव दर्शितमिति सर्वं सुस्थम्। किंच निर्गुणे प्रमाणाप्रवृत्तौ सत्स्यमानं ब्रह्म सगुणमेव सिध्यति। नच निर्गुणश्चेति श्रुतिरेव प्रमाणमिति वाच्यम्। तस्या धर्मसामान्यनिषेधपरत्वे मूकोऽहमितिवत् व्याहतार्थकत्वापत्तेः। नच निर्विशेषादिवाक्येन विशेषत्वरूपविशेषाभावसाधारणधर्मावच्छिन्नाभावबोधनात्तद्द्वाराऽखंडार्थबोधकत्वान्न व्याहतार्थकत्वम्। मूकोऽहमित्यत्र तु मूकशब्देन वक्तृत्वशून्यत्वं बोध्यते। तादृशशब्दोच्चारणेनार्थाद्वक्तृत्वाभावो बोध्यते ननु वक्तृत्वतदभावसाधारणरूपावच्छिन्नाभावो बोध्यतेऽतस्तदुपलक्षितस्वरूपे तात्पर्यकल्पकाभावाद्व्याघात एवेति वाच्यम्। स्वसिद्ध्यार्थनिषेधकत्वं स्वस्य स्वव्याहतिर्नाम। मूकोऽहमित्यत्र तु लिंगविधया स्वसिद्ध्यार्थनिषेधकत्वमत्र तु स्वेनैव शब्दविधयैव बोधितार्थस्य निषेधकत्वमित्यनयोर्वैषम्योक्त्यसंगतेः। अत्राभावो नास्तीत्यादिवाक्यानां लोके व्याहतार्थकत्वाभावप्रसंगात्। नचेष्टापत्तिः। सर्वविरुद्धार्थे इष्टापत्तिकरणे उन्मत्तत्वप्रसंगात्। अभावत्वावच्छिन्नाभावस्याप्रसिद्ध्या भावत्वस्य न तत्साधारण्यमिति चेद्विशेषत्वावच्छिन्नाभावेऽपि तथैवेति कुतस्तत्साधारण्यं निषेध्यतावच्छेदकरूपस्येति गृहाण। विशेषाभावातिरिक्तधर्मनिषेधपरत्वे त्वदभिमतनिर्विशेषासिद्धिः। जातिगुणक्रियादिनिमित्तकत्वात्सर्वपदशक्तीनां लक्षणायाश्च शक्यसंबंधरूपत्वाद्गौण्या शक्यसादृश्यनिबंधनत्वात्सर्वपदार्थानामन्वयितावच्छेदकरूपेणैव उपस्थापकत्वनियमाच्च। निर्विशेषे न कस्याप्यागमस्यावकाशः। अत एव न प्रत्यक्षानुमाने। इंद्रियसंयोगमहत्त्वोद्भूतरूपादिधर्महीनत्वात्पक्षसाध्यतावच्छेदकादिरूपशून्यत्वात्किंचित्प्रातियोगिकत्वानुयोगिकत्वराहित्याच्च। प्रत्यक्षे भानायोगादनुमितौ पक्षसाध्यसंसर्गपक्षतावच्छेदकसाध्यतावच्छेदकविधाभिश्च भानायोगात्। नेंद्रियाणि नानुमानं वेदा ह्येवैनं वेदयंतीति श्रुतिविरोधाच्च। ननु किमर्थं प्रमाणप्रश्नः स्फूर्त्यर्थं वा अज्ञाननिवृत्त्यर्थं वा। नाद्यः। स्वतः सिद्धे स्फूर्तये प्रमाणापेक्षायोगात्। नच सर्वविप्रतिपन्नार्थस्यापि एवं सिद्धिप्रसंगः। परप्रकाशत्वाभावतद्वद्बोधकप्रमाणस्य ब्रह्मणि सत्वादन्यत्रासत्त्वाच्च विशेषोपपत्तेः। न द्वितीयः। उपनिषदामेव मानत्वात्। नचोक्तरीत्या तदसंभवः। मुख्यवृत्तिगौण्योरसंभवेऽपि लक्षणया ब्रह्मणि प्रवृत्त्युपपत्तेः। नच पदानामन्वयितावच्छेदकरूपेणोपस्थाप-

कत्वनियमाल्लक्षकपदानां शक्यसंबंधितावच्छेदकरूपेणोपस्थापकत्वनियमाच्च कथं निर्धर्मिकस्य भानम्। संसर्गबोधतात्पर्यकवाक्यस्थपदानामेव तथात्वनियमात्। प्रकृतवाक्यस्य च निर्विकल्पकजनकत्वेनातथात्वात्। नच संसर्गागोचरत्वे प्रमाणवाक्यत्वानुपपत्तिः। मानांतरानिश्चिताज्ञाताबाधितार्थावगमकत्वेन प्रमाणत्वस्याकांक्षादिमत्पदकदंबत्वेन वाक्यत्वस्य चोपपत्तेरिति चेन्न। परप्रकाश्यत्वात्यंताभावतद्भेदयोर्मुख्यविशेष्यतया निर्धर्मितावच्छेदककतया च भाने भवदभिमतनिर्विशेषस्य तद्बोध्यत्वासिद्धिः। अन्यथा शशविषाणादेरपि तत्प्रमाणगम्यत्वापत्तिः। सधर्मितावच्छेदककभानांगीकारे सविशेषस्यैव तत्सिद्ध्यापत्त्या निर्विशेषस्य तदसिद्धिः। नच परप्रकाश्यत्वाभावादावाधेयतया स्वरूपतो निर्गुणप्रकारकबोध एव मानेन जायतां तावतैव मदिष्टसिद्धिरिति वाच्यम्। संसर्गावगाहिबोधेऽन्वयितावच्छेदकरूपेणैव भाननियमस्य त्वयाप्यभ्युपगतत्वेन स्वरूपतो भानायोगात्। अन्यथा तादृशबोधे नरविषाणादिकमेव भासत इत्यस्याप्यापत्तेः। तेषां निस्स्वरूपत्वात्कथं तद्वक्तुं शक्यमिति चेत् तर्हि त्वदभिमतनिर्गुणस्वरूपस्याप्यसिद्धेस्तथात्वमेव। निर्गुणे वस्तुत्वस्वरूपत्वादिधर्माणां स्वसमसत्ताकानां त्वयाऽप्यनंगीकारात्तस्य शशविषाणादितुल्यत्वमवर्जनीयम्। स्वासमसत्ताकधर्मसंबंधात्तथात्वे आरोपितरजतत्वसंबंधाच्छुक्तेरपि अरजतत्वानुपपत्तिः। एतेनाज्ञाननिवृत्तये ब्रह्मण्युपनिषदां लक्षणया मानत्वमित्यपास्तम्। निर्विकल्पकबोधस्य विषयावच्छिन्नतया घटादिज्ञानवत्प्रत्यक्षसिद्धत्वाभावेन तत्स्वरूपस्यैव सिद्धत्वेन वाक्यस्य तज्जनकत्वासिद्धेः। अन्यथा शशविषाणादिप्रतिवंदेरनुद्धार एव। तात्पर्यग्रहे वा लक्षणाग्रहे वा निर्गुणस्य स्वरूपतो मुख्यविशेष्यतया भानात्किंचिद्धर्मपुरस्कारेण भाने लक्षणाग्रहे निर्गुणस्य भानात्तच्छब्दायोगः। निर्गुणे प्रत्यक्षानुमानायोगादुक्तरीत्या शाब्दात्मकस्यैव लक्षणाज्ञानस्य तात्पर्यज्ञानस्य वा वक्तव्यतया तस्य संसर्गावगाहितयाऽन्वयितावच्छेदकरूपेणैव पदेन भानप्रसंगात् निर्गुणे लक्षणातात्पर्यग्रहायोगश्च। शाब्दलक्षणातात्पर्यग्रहार्थं पुनः शाब्दलक्षणातात्पर्यग्रहांतरापेक्षायामनवस्थाया मूलक्षतिः। यदत्रोक्तं परैः वृत्तिमंतरेण सुप्तोत्थापकवाक्यस्येव निर्विशेषे वेदांतवाक्यस्य प्रामाण्यं वार्तिककृद्भिरुपपादितम्। 'अगृहीत्वैव संबंधमभिधानाभिधेययोः। हित्वा निद्रां प्रबुध्यंते सुषुप्ते बोधिताः पदैः। जाग्रद्वत् नहि संबंधं सुषुप्तो वेत्ति कश्चन' इत्यादिग्रंथेन। सुषुप्तीयस्य वाक्यार्थबोधस्य पूर्वपदतदर्थसंबंधज्ञानं न प्रामाणिकम्। नच कारणत्वेन क्लृप्तं यत्तद्विना वाक्यार्थबोधासंभवात्। अन्यथा अनुपपत्तिरेव तत्र मानमिति वाच्यम्। सोऽयं चैत्र इत्यादिवाक्यमेकस्य वाक्यार्थस्य बोधे कालभेदेन जनकम्। तत्रच स्वघटकपदवृत्तिज्ञानजन्यपदार्थोपस्थितिसंबंधेन नोक्तवाक्यत्वरूपाकांक्षाज्ञानं हेतुः। तादृशवृत्तित्वस्य शक्तिलक्षणासाधारणस्यान्यतरत्वादिरूपस्य वाच्यतया विनिगमकाभावेन गुरुतरनानासंबंधरूपावच्छेदकभेदभिन्नहेतुतापत्तेः। किंतु स्वघटकपदशक्तिज्ञानजन्यार्थोपस्थितिविशिष्टतादृशवाक्यार्थबोधे तादृशोपस्थितिसंबंधेन स्वघटकपदलक्षणाज्ञानजन्योपस्थितिविशिष्टे वाक्यार्थबोधे तादृशोपस्थितिसंबंधेनोक्ताकांक्षाज्ञानत्वेन हेतुता। तथाच सुषुप्तपुरुषीयतादृशवाक्यार्थस्योक्तोपस्थितिविशिष्टत्वसंदेहात्तद्धेतुतया नोक्तोपस्थितिः कल्पयितुं शक्या। किंतु तादृशबोधनियतपूर्ववृत्तितया क्लृप्ततत्तज्ज्ञानविशेषादावेव वैजात्यविशेषं कल्पयित्वा विजातीयज्ञानादिविशिष्टबोधे तादृशज्ञानादिसंबंधेनोक्ताकांक्षाज्ञानस्य हेतुत्वांतरं कल्प्यते। अनंतवृत्तिज्ञानाकल्पनाप्रयुक्तलाघवानु-

ग्रहात्। तत्त्वमस्यादिवाक्यस्य तु स्वघटकपदजन्यवृत्तिज्ञानस्य शुद्धब्रह्मण्यनंगीकारपक्षे पापविशेषादिरूपप्रतिबंधकसत्त्वे ज्ञानविशेषादिविशिष्टे अनवधारणरूपे वाक्यार्थबोधे ज्ञानविशेषादिसंबंधेन हेतुत्वेऽप्युक्तप्रतिबंधकनाशकाले तद्विशिष्टे स्वार्थबोधे तत्संबंधेन हेतुत्वांतरं कल्प्यते। तादृशज्ञानविशेषादेरप्यकल्पनया लाघवात्। तथाचात्मशाब्दसामान्ये तात्पर्यज्ञानादेः कारणत्वं न कल्प्यते। तात्पर्यनिश्चयस्य वाक्यार्थसंशयहेतुवाक्यतात्पर्यसंशयोत्सारकतयोपयोगः। तत्र चोक्तरीत्या पापनाशस्यावश्यकस्यापेक्षणीयत्वेन तेनैवोपपत्तौ तात्पर्यज्ञानाकल्पनेऽनवधारणात्मकात्मशाब्दे सुतरां तस्यानपेक्षणीयत्वात्। आत्मनोऽपरोक्षस्वभावत्वात्तज्ज्ञानं साक्षात्कारात्मकमेव शाब्दमपि भवति। नच प्रतिबंधकाभावादेराकांक्षाज्ञानाजन्यत्वात्तद्व्यापारत्वानुपपत्तिः। तद्व्यापारत्वाभावे तत्समानाधिकरणत्वेन संबंधत्वेन संबंधत्वसंभवात्। नन्वेवं प्रतिबंधकाभावस्यैव स्वविशिष्टे वाक्यार्थबोधे हेतुत्वसंभवाद्वाक्यमपि हेतु र्न स्यादिति वाच्यम्। वाक्यज्ञानं विनोक्तबोधानुपपत्तेः। औपनिषदत्वसमाख्यानात्। श्रुतिजन्यत्वं विना बोधस्य प्रत्यक्षबाधकत्वानुपपत्तेश्च। नचानिर्धारितैककोटिप्रकारकनिश्चयं प्रत्येव धर्मिज्ञानाधीनविचारस्य जनकत्वात्कथं विचारसध्रीचीनवेदांतवाक्यजन्यज्ञानस्य निष्प्रकारकत्वमिति वाच्यम्। संशयनिवृत्तिक्षमज्ञानस्यैव विचारपरत्वात्। तस्याश्च विरोधिकोटिप्रतिक्षेपकोपलक्षितधर्मिज्ञानादेप्युपपत्तेर्न त्वदर्थं सप्रकारकत्वनियमः। नच सप्रकारकनिष्प्रकारकयोः संशयनिवर्तकत्वे गौरवम्। श्रुतरुक्तरीत्या निर्गुणबोधकत्वस्याविद्यानिवर्तकत्वस्य च सिद्धतयाऽऽविद्यकसंशयादिनिवर्तकत्वस्य प्रामाणिकत्वेनोक्तगौरवस्यादोषत्वात्। शक्तिविशेषेण सप्रकारकसाधारणेन निष्प्रकारकस्यापि संशयनिवर्तकत्वस्य परीत्यापि संभवाद्गौरवानवकाशाच्च। तथाच शब्देन निर्गुणसिद्धये न लक्षणातात्पर्यग्रहापेक्षया पूर्वोक्तानवस्थादिदोष इति। तदप्ययुक्तम्। क्षीणपापस्य कस्यचित्तत्त्वमस्यादिवाक्यान्निर्गुणबोधोत्पत्तावपि अस्माकं तत्सिद्ध्युपायाभावेन निर्गुणे प्रमाणप्रश्ने एतदुपन्यासस्याकिंचित्करत्वात्। नचाज्ञाननिवृत्त्युपयोगिप्रमाणप्रश्ने उक्तरीत्या ज्ञाननिवर्तकत्वं तत्त्वमस्यादिवाक्यानामुक्तमिति वाच्यम्। इदानीमस्माकं निर्गुणात्मत्वसंशयसंपादकासत्त्वापादकाज्ञाननिवर्तकप्रमाणस्य पृष्टत्वेन तत्त्वमस्यादिवाक्यानामिदानीं तथा बोधाजनकत्वेनोक्तप्रमाणत्वाभावात। नचेदानीमनवधारणज्ञानं जायत इति वाच्यम्। तस्य संशयाद्यविरोधित्वात। अपिच सुप्तबोधकवाक्यस्थले तस्य पदार्थोपस्थित्यादेरिवानुपूर्विविशेषादिरूपाकांक्षाप्रकारकज्ञानं संदिग्धमेव। तस्य वाक्यत्वप्रकारकज्ञानं जायते। तद्घटकपदवृत्त्यादिज्ञानं न जायत इत्यत्र विशेषप्रमाणाभावात्। तथाच सुप्तसंबोधवाक्यार्थबोधे कथं वाक्यज्ञानस्य विजातीयज्ञानविशिष्टत्वेन पदार्थोपस्थित्यादिका सर्वत्र फलसामग्रीमुल्लंघ्य हेतुत्वकल्पनं कथं च तदृष्टांतेन तत्त्वमस्यादिवाक्यस्थलेऽपि तथा कल्पनम्। वस्तुतः सुषुप्तस्य सर्वेंद्रियव्यापाररहितस्य वाक्यविषयकश्रावणप्रत्यक्षं न घटत एव। प्रबोधद्वितीयक्षणादौ तत्संभवे तु न वाक्यस्य सुप्तप्रबोधकत्वप्रसक्तिः। द्वितीयक्षणादिषु वाक्यज्ञानकल्पनावत्पदवृत्त्यादिज्ञानादेरपि कल्पयितुं शक्यत्वेन तत्र शाब्दबोधस्यानुभवसिद्धत्वे पदार्थोपस्थित्यादेरप्यसंदेह एव। सुप्तस्य तद्वाक्यश्रवणाभावे कुतस्तद्बोधनाय वाक्यप्रयोग इति चेत। शब्दस्य द्रव्यतया तदभिघातेनैव सुप्तस्य भेरीध्वन्यादिनेव प्रबोधात्। तदर्थमेवात एवोच्चैः क्रोशन्ति। अन्यथा तद्वैयर्थ्यापत्तेः। शब्दस्याभिघातकत्वाभावे भेरीशब्देन शिलादौ प्रतिध्वनिर्न स्यात्। न स्याच्च महाशब्देन

भित्यादिस्थालपवस्तुपातः । यदप्युक्तं औपनिषदत्वसमाख्ययेत्यादि । तदप्यसत् । अणप्रत्ययस्य संबंधिमात्रार्थकतया उपनिषदावृत्त्यधीनपापनाशजनितज्ञानविषयमात्रार्थकत्वेन वाक्यस्य तत्ज्ञानकरणत्वानवगमकत्वात् । निर्गुणप्रमाणप्रवृत्त्यभाववादिनं प्रति तस्यौपनिषदत्वस्यैव सिद्धत्वेन तस्य हेतुकरणायोगाच्च । श्रुतेः प्रत्यक्षबाधकत्वाभावस्योक्तत्वाच्च । सर्वप्रक्रियाया अप्रामाणिकत्वेन गौरवस्यापि दोषत्वान्निष्प्रकारकज्ञानस्यैवाप्रामाणिकतया शक्तिविशेषेणैतत्प्रतिबंधकत्वोक्तेरप्ययोगाच्चेत्यलम् । तस्मान्न निर्गुणे प्रमाणमिति । एवं च ब्रह्मणः सगुणत्वस्य तस्यैव मुमुक्षुज्ञेयत्वादेश्च सिद्धावनंतविग्रह इत्युक्तम् । विग्रहवत्त्वमप्यनपवादम् । देहस्य प्राकृतत्वाभावेन गुणरूपत्वेन नित्यत्वसंभवात् । गुणानां च मुमुक्षुज्ञेयत्वेनारोपितत्वायोगात् । अनंतविग्रह इत्यत्र विग्रहपदस्य लीलागृहीतमायिकविग्रहपरत्वेऽनंतपदोक्तोच्छेदाभावरूपानंतत्वविरोधात् । तस्य कथंचिदुपचरितार्थत्वे सत्यं ज्ञानमनंतमित्यत्रापि कथंचिदौपचारिकार्थस्य वक्तुं शक्यत्वेन ब्रह्मणोऽपि मुख्यानंतत्वाभावप्रसंगात् । न चानंतपदं संख्यार्थकम् । विनिगमनाविरहेणोभयार्थकत्वस्यापि संभवात् । 'सर्वे नित्याः शाश्वताश्च देहास्तस्य महात्मनः । परमानंदसंदोहज्ञानमात्राश्च सर्वश' इत्यादिवाक्यैस्तद्देहस्य नित्यत्वबहुत्वयोरुक्तत्वेन तत्समाख्यानात् । नचात्र नित्यपदमितरदेहापेक्षयाऽधिककालवृत्तित्वादिनौपचारिकमिति वक्तुं शक्यम् । शाश्वतपदसद्भावेऽनौपचारिकत्वायोगात् । तस्य तत्समानार्थकत्वेनाभ्यासरूपतया स्वार्थतात्पर्यनिश्चायकत्वात् । नच देह ईश्वराद्भिन्नो वाऽभिन्नो वा । नाद्यः । तस्य ज्ञानानंदमात्ररूपत्वोक्त्ययोगात् । वैषयिकानंदस्य जडत्वेऽपि परमत्वायोगात् । विषयजन्यत्वेनानित्यत्वापाताच्च । किंच तस्य शरीरस्येश्वरीयत्वं नामेश्वरसंयोगित्वमात्रमुतेश्वरनिष्ठभोगावच्छेदकत्वमपि । नाद्यः । अस्मदादिशरीराणामपि ईश्वरीयत्वापातादविशेषात् । न द्वितीयः । तदवच्छेदेन ज्ञानसुखादीनामुत्पत्त्यापत्त्या जीववत्संसारित्वापत्तेः । नच दुःखानवच्छेदकत्वाज्जीववैलक्षण्यम् । तथापि शरीरतादात्म्यापरायत्तस्वामित्वग्रहेण हि जीवस्य शरीरानुकूलाननुकूलविषयसंसर्गात्सुखदुःखोत्पत्त्यादिकम् । ईश्वरस्य तत्सत्त्वेन सुखोत्पत्त्यंगीकारे तस्यादृष्टसाध्यतापत्त्येश्वरस्यापि जीववत्संसारित्वापत्तेः । "अचक्षुः श्रोत्रं तदपाणिपादं" इति शरीरेंद्रियादीनां निषेधाच्च । अत एवेश्वरभिन्न एव देह इति प्राग्विकल्पितद्वितीयपक्षोऽपि परास्तः । ईश्वरस्यैकत्वेन बहुत्वानुपपत्तेः । मैवं । ईश्वरदेहस्य ईश्वरात्यंताभिन्नत्वेऽपि विशेषशक्त्यैव देहदेहिभावादिवत् बहुत्वादेरप्युपपत्तेः । नच भेदातिरिक्तविशेषोऽप्रामाणिक इति वाच्यम् । तस्योत्तरत्र व्यवस्थापयिष्यमाणत्वात् । नच चेष्टावदंत्यावयविन एव शरीरपदार्थत्वात् स्वरूपस्यैव शरीरत्वे शरीरपदस्य तत्र संकेतमात्रं कृतं स्यान्न तावता शरीरत्वसिद्धिरिति वाच्यम् । एवं तर्हि मनोवृत्तेरेव आनंदज्ञानपदार्थत्वेन तद्भिन्नस्य ब्रह्मणो ज्ञानानंदात्मकत्वस्यापि पारिभाषिकत्वापातात् । नच सौषुप्तिकसुखज्ञानयोरुक्तरूपत्वाभावान्नायं नियमो घटत इति वाच्यम् । सुषुप्तौ तयोरनंगीकारादुत्तरकालिकपरामर्शस्यानुमितदुःखाभावविषयकत्वाभ्युपगमात् । नच स्फुरणमात्रं ज्ञानपदार्थो निरुपाधिकप्रेमास्पदमेवानंदपदार्थो मनोवृत्तित्वं त्वप्रयोजकमतो ब्रह्मणस्तादृशत्वात्ज्ञानानंदात्मकत्वं न पारिभाषिकमिति वाच्यम् । करचरणादिमत्त्वस्यैव शरीरपदप्रवृत्तिनिमित्तत्वेन तद्वत्त्वेन ब्रह्मस्वरूपस्य शरीरत्वस्याप्युपपत्तेः । नच"अचक्षुः श्रोत्रं तदपाणिपादं"इत्यादिना करचरणादिनिषेधानुपपत्तिः । अदुःखमसुखमिति ब्रह्मणि सुखभेदस्य "न सत्तन्नासदुच्यते" 'न सन्न चासन्निति' सद्भेदस्योक्तत्वेन

सुखरूपत्वसद्रूपत्वयोरप्यनंगीकारापातात् । नचादुःखपदं दुःखाभाववत्परं, दुःखभेदस्य दुखिन्यपि सत्त्वेन तदुक्तेः प्रतिपाद्यवस्तूत्कर्षापर्यवसानात् । तथाच तत्प्रायपठितम-सुखपदमपि सुखाभाववदर्थकं न सुखभेदार्थकमिति वाच्यम् । अस्थूलादिपदानां स्थूल-भेदावच्छिन्नवाचित्वेन तत्समभिव्याहारादत्र सुखभेदावच्छिन्नवाचित्वस्यापि वक्तुं शक्य-त्वात् । किंच यो वै भूमा तत्सुखमित्यादिषु ब्रह्मणः सुखरूपत्वप्रतिपादकेषु सुखित्वबो-धनमपि तात्पर्यविषयीभूतम् । धर्मस्य धर्म्यभिन्नत्वेन तदभेदबोधनेनैव तद्वत्त्वं बोधितं भवतीत्यभिप्रायेणाश्रयत्वबोधकपदाभावः । अत एव नाल्पे सुखमस्तीति निषेधं कृत्वा-भूमैव सुखमिति निगमनमपि संगच्छते । अन्यथा नाल्पं सुखमित्येव स्यात् । सुखनिषे-धस्यासंगतत्वापत्तेः । ब्रह्मणि सुखस्य पर्वमनुक्तत्वेन सुखाभावेऽपि ब्रह्मवत्सुखरूपत्वानपा येन तदितरस्मिन् ब्रह्मवैलक्षण्यग्रहानिर्वाहकत्वात् । तथाचादुःखमसुखमगंधमित्यत्राप्य-न्यपरत्वमेव नत्रामस्तु प्रायपाठाविरोधात् । तेनैव दुःखाभावस्यापि प्राप्तेः । छांद-सस्त्वगंधमित्यत्र परवल्लिंगं द्वंद्वतत्पुरुषयोरित्यनेन प्राप्तस्य पुंस्त्वस्याभावः । तथाच विज्ञानमानंदं ब्रह्मेत्यादिरसुखमित्यनेन बाध्यः स्यादेव । नच ब्रह्मसत्तासुखात्मकताबो-धकानां वाक्यानां बहूनां तत्तत्प्रकरणेषु सत्त्वाद्वहुबाधस्यान्याय्यत्वात् न सत्तन्नासदित्यादेः कार्यकारणविलक्षणार्थकत्वं असुखमित्यस्य प्राकृतसुखान्यत्वमर्थ इति वाच्यम् । इहापि शरीर प्रतिपादकानां बहूनां वाक्यानां सत्त्वात् तद्बाधस्यान्याय्यत्वेन अपाणिपाद इत्यादेरपि प्राकृत पाणिपादाभावपरत्वाभ्युपगमात् ।' अरूपोऽप्राकृतत्वा ' च्चेति स्मृत्या, ' अभावाज्जडदेहस्य विष्णुर्निर्वाण उच्यते । भिन्नदेहाभावतो वा स सहस्रशिरा अपि' इति स्कांदादिवचनैश्च देहाभाववचनानां प्राकृतदेहाद्यभावपरत्वेन व्याख्यातत्वाच्च । नच देहसद्भावे प्रमा-णाभावः । मूलोदाहृतवाक्यस्य सर्वे नित्या इति वाक्यस्य चोक्तत्वात् । तथा " सहस्र-शीर्षा पुरुषः सहस्राक्षः सहस्रपात् " । " यदात्मको भगवान् तदात्मिका व्यक्तिः । किमात्मको भगवान् ज्ञानात्मक ऐश्वर्यात्मकः शक्त्यात्मकः बुध्दिमनोंगप्रत्यंगवत्तां भगवतो लक्षयामहे । बुध्दिमान मनोमान् अंगप्रत्यंगवानिति " । ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिंगलं । " सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवं । विश्वं नारायणं देवं अक्षरं परमं पदं " । " यदेकमव्यक्तमनंतरूपं आदित्यवर्णं तमसः परस्तात् " । " तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनां " " यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं " " न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चिदेनमिति " " पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः । नानाविधानि दिव्यानि नानावर्णाकृतीनि च " । " सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखं " । " उद्वबर्हात्मनः केशौ " इत्यादीनां शतशः श्रुतिस्मृतीनां विद्यमानत्वात् । ननु यत्र ज्ञेयब्रह्मण्यादित्यवर्णत्वादिकं श्रूयते तत्स्वप्रकाशत्वोपलक्षकम् उपास्ये श्रूयमाणं तु इच्छागृहीतशरीरपरम् । विश्वरूपाध्यायादि गतवाक्यान्यपि तादृशशरीरपराण्येवेति चेन्न । ज्ञेयोपास्यब्रह्मभेदस्य निरस्तत्वात् । अन्यथोपासनाया निरस्तत्वेनाविद्यमानत्वायोगेन शरीरसत्यत्वसिध्दौ पूर्वोदाहृतस्कांद-स्मृत्यादिभिस्तस्य भिन्नत्वाभावे स्वरूपत्वस्यैव सिध्देः । अपि च ज्ञेयब्रह्मण्यपि किम-र्थमादित्यवर्णत्वाद्यनंगीकारः । अरूपत्वादिप्रतिपादकश्रुत्यादिबलादिति चेत्तर्हि निर्धर्मकत्वा-दिश्रुत्या ज्ञानानंदसत्तादीनामप्यसिध्दिप्रसंगः । न सत्येव ता निर्धर्मतायाः कल्पितत्वात् । किंतु सच्चिदानंदात्मकमेव ब्रह्मांगीक्रियत इति चेदिहापि तथैवास्तु रूपादिशून्यमपि रूपं रूपं विग्रहरूपं चेति वक्तुं शक्यत्वात् । 'सत्यं ज्ञानं' इत्यादिब्रह्माभेदश्रुतिवत् "आनंद-

रूपममृतं यद्विभाति "। "यदेकमव्यक्तमनेकरूपमादित्यवर्णम्" इत्यादेर्विग्रहाभेदप्रतिपादकस्य सत्त्वात्। आनंदरूपमित्यस्यानंदात्मकाविग्रहाभिन्नमित्यर्थकत्वात्। अनेकरूपशब्देनानेकरूपविग्रहाभेद एवोच्यते। रूपशब्दस्य शरीरवर्णोभयार्थकत्वस्यापि संभवात्। आदित्यवर्ण इत्यनेन वर्णभेद एवोच्यताम्। विज्ञानमानंदं ब्रह्म रातिर्दातुः परायणमित्यत्रेव नपुंसकलिंगत्वोपपत्तेः। नच विग्रहवत्त्वं त्वदभिमतं गतमिति वाच्यम्। त्वदभिमतरूपाद्यनात्मकत्वस्याऽपि असिद्धेः साम्यात्। विग्रहवत्त्वं त्वस्माकं प्रमाणांतरानुरोधात् विशेषबलेन निर्वहति। सहस्रशीर्षेत्याद्युक्तसहस्रशीर्षत्वादिकमपि नेच्छागृहीतजडरूपम्। तमेवं विद्वानित्यादिना तज्ज्ञानस्य मोचकत्वश्रवणात्। आदित्यवर्णं तमसस्तु पार इति प्रकृतिविलक्षणत्वोक्तेः। विश्वरूपाध्यायोक्तदेहस्य जडत्वमयुक्तम्। तस्य परिच्छिन्नस्य कुरुक्षेत्रमात्रगृहीतस्य दर्शयात्मानमव्ययमित्युक्ताव्ययत्वस्य पश्यामि देवांस्तव देह इत्यादिना उक्तसर्वाधारत्वस्यायोगापातात्। नचाव्ययत्वमौपचारिकं सर्वाधारत्वं तत्काले प्रदर्शितं न वास्तवमिति वाच्यम्। तस्येंद्रजालतुल्यत्वापत्त्या "देवा अप्यस्य रूपस्य नित्यं दर्शनकांक्षिणः" इत्युक्तदेवापेक्षितदर्शनगोचरत्वस्य "नाहं वेदैर्न तपसा" इत्यादिनोक्तभक्त्यैकसाध्यदर्शनगोचरत्वस्य चानुपपत्तेः। एतादृशेंद्रजालस्य मनुष्यैरपि कर्तुं शक्यत्वेनोक्तमाहात्म्यानुपपत्तिप्रसंगात्। एवं कृष्णदेहस्य जडत्वे तस्य परिच्छिन्नत्वे तदुदरे अणावेव सर्वजगद्दर्शनं यशोदाया अनुपपन्नम्। इंद्रजालादिरूपत्वे माहात्म्यरूपतया कथनानुपपत्तिः। केशयोर्भिन्नतया जडत्वे तयोरवतारेण भूभारहरणकर्तृत्वाद्युक्त्ययोगः। अव्ययत्वस्य परमत्वादेः कथंचिदमुख्यार्थत्वे सत्यज्ञानादिवाक्येषु अन्येष्वपि सर्वत्र कथंचिदमुख्यार्थस्य वक्तुं शक्यत्वेन कस्यापि वैदिकस्यार्थस्यासिद्धिप्रसंगात्। ननु शरीरस्य केशादेश्च चिद्रूपत्वे कथं तस्योत्पाटनादिकमिति चेत्। अचिंत्याद्भुतस्वशक्त्या केशादिरूपस्वांशैर्बहिर्गमनावतारादिसंभवात्। नैषा तर्केण मतिरापनेयेत्यादिवचनैर्ब्रह्मणस्तर्कागम्यत्वात्। 'यस्मिन् विरुद्धगतयोऽप्यनिशं पतंति' इत्यादिना लोके विरुद्धवत्प्रतीयमानानामप्यचिंत्यशक्त्या समानाधिकरणत्वोक्तेः। नचाचिंत्यशक्तौ प्रमाणाभावः। "विचित्रशक्तिः पुरुषः पुराणः नचान्येषां शक्तयस्तादृशाःस्युः"। "एको वशी सर्वभूतांतरात्मा सर्वान्देवानेक एवानुविष्टः। परास्य शक्तिः" इत्यादिश्रुतिस्मृतीनां भूयसीनां सत्त्वात्। यत्त्वियं श्रुतिर्मायानिमित्तकब्रह्मशक्तिपरेति। तत्तुच्छम्। मायाबोधकपदाश्रवणात्। अश्रुतकल्पने सत्यज्ञानादिवाक्यमपि मायाकल्पितसत्याद्यात्मकत्वं ब्रह्मणः प्रतिपादयत्तन्मिथ्यात्वपरं स्यात्। शक्तेः स्वाभाविकत्वोक्तिविरोधाच्च। लोके पुराणादौ च योगप्रभावलब्धशक्तेरपि दुर्घटकार्यनिर्वाहकत्वदर्शनेन स्वाभाविकशक्तेः सुतरां तथात्वौचित्येन, मायाशक्त्यनुसरणे बीजाभावाच्च। ननु ईश्वरदेहस्य तत्स्वरूपत्वे 'बहूनि मे व्यतीतानि जन्मानि तव चार्जुन' इत्यनेनैवेश्वरेणैव स्वदेहस्योत्पत्तिनाशोक्तिविरोधः। एवं संभवाम्यात्ममायया लीलामानुषविग्रह इत्यादीन्यपि बहुवाक्यानि संत्येवेति तद्वाक्यविरोधोऽपीति चेन्न। बहूनि मे इत्युक्तेर्लोकरीत्या स्वस्यापि मनुष्यत्वाभ्युपगमनादेव प्रवृत्तत्वात्। अन्यथा तद्वाक्यविरोधेनेश्वरस्य जन्ममरणे अपि प्रमाणविरुद्धे स्याताम्। इतरवाक्यानामपि वेदोत्पत्तिवाक्यवदभिव्यक्त्यर्थकत्वोपपत्तेः। लीलामानुषविग्रह इत्यादीनां लीलया प्रकटीकृतमनुष्यसदृशविग्रह इत्यर्थकत्वोपपत्तेः। मायामानुष इत्यादेर्मायया स्वेच्छया मनुष्यवत्प्रतीयमान इत्यर्थकत्वोपपत्तेः। ननु कुत एतदुत्पत्तिवाक्यानामेव मुख्यार्थकत्वमाश्रित्यानुत्पत्त्यादि-

वाक्यानि अमुख्यार्थानि कुतो न स्वीक्रियंत इति चेन्न । पराधीनविशेषप्राप्तेरेव मुख्योत्पत्तित्वेन स्वतंत्रे हरौ तदयोगात् । 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्' इत्यादिना परमात्मोत्पत्तेरितरानधीनतया लोकप्रसिद्धोत्पत्त्यपेक्षया विलक्षणत्वश्रवणेन तस्य प्रादुर्भावादिरूपत्वावगमात् । अन्यथा स्वेनैव स्वोत्पत्तौ आत्माश्रयापत्तेः । नच विग्रहांतरमुत्पाद्य तत्र स्वस्य प्रवेश एवोत्पत्तिरस्त्विति वाच्यम् । ईश्वरस्य त्वन्मतेऽप्यपरिच्छिन्नस्य तत्र प्रवेशासंभवात् । तदभिमानोत्पत्तौ तत्कृतदुःखादेरप्यवर्जनीयतापातात् । अभिमानप्रवेशौ विना जीवांतरानधिष्ठितत्वेकदेशसंबद्धत्वमात्रेण जडस्य तच्छरीरत्वे दार्वादिशरीरस्यापि ईश्वरीयत्वापत्तेरविशेषात् । "एको नारायण आसीन्न ब्रह्मा नच शंकरः "। 'यो मामजमनादिं' चेत्यादिभिर्नारायणादिदेहानां प्रलयकालेऽपि सत्त्वावगमेन तद्देहवतो देहांतराभिमानायोगाच्च । श्रुतौ शंकरादिस्वरूपसत्तायाः प्रलयेऽपि सत्त्वेन तेषां निषेधपूर्वकं नारायणस्य स्थितिकथने देहतोऽपि स्थितिरूपविशेषो लभ्यते । अजमनादिमित्यनयोरपौनरुक्त्या यः स्वरूपानादित्वातिरिक्तदेहानादित्वार्थकत्वस्यान्यतरपदयोरवलंबनीयतया स्मृत्यापि स विशेषो लभ्यते । " उत्पत्तिर्वासुदेवस्य प्रादुर्भावो न चापरः " इत्यादीनां अन्यत्राचार्यैरुदाहृतानां बहूनां सत्त्वाच्च । यत्तु नारायणस्येक्षणपूर्वकसृष्ट्यर्थं स्थितिरितरेषां तदर्थं स्थित्यभाव एव श्रुत्योच्यते नानेन देहनित्यत्वं लभ्यत इति तन्मौढ्यात् । पत्युरसामंजस्यादित्युक्तरीत्या कर्तृत्वाभावोपपादकशरीराभावोक्तेरेव संगतत्वात् उक्तस्मृतिसंवादाच्च सिद्धांतार्थस्यैव श्लिष्टत्वात् । सृष्ट्यनुकूलस्थितिरहिता इत्यस्यायुक्तत्वात् । प्रलयावस्थायां सृष्टिरूपव्यापारस्याप्रसक्तत्वेन तेन रूपेण निषेधायोगात् । उभयेषां स्थितिमात्रे शंकरादेः सृष्ट्यनुकूलस्थित्यभाव एव कुत इत्याकांक्षानुपरमाच्च । उक्तगुरुधर्मावच्छिन्ने धातोर्लक्षणापत्तेश्च । यत्तु नारायणपदं सदेव सोम्येदमिति वाक्यांतरानुरोधात् मायोपहितं मायाविवितं वा चेतनमेव बोधयतीति तदसत् । दृष्टांतासंमतेः । मायोपधानस्य वैयर्थ्याच्च । नचेक्षणाद्यर्थं तदिति वाच्यम् । सृष्ट्याद्यकालीनेक्षणाद्युत्पत्त्यर्थमीश्वरस्येच्छारूपव्यापारो वर्तते न वा । नाद्यः । तदर्थमिच्छाज्ञानादेः पूर्वमपेक्षिततया तत्पूर्वं तत्पूर्वमिति क्रमेणानवस्थिताप्रामाणिकतद्धाराकल्पनापत्तेः । प्रलयकालेऽपि ईक्षणादिसृष्टौ तस्य सृष्टिकालत्वापत्तेः । सृष्ट्याद्यकाल एव ईक्षणोक्तेरयोगाच्च । ईक्षणानुकूलेक्षणेच्छादीनां नित्यत्वे जगदनुकूलेक्षणस्य विवक्षितकालात्पूर्वमप्युत्पत्तिप्रसक्त्या प्रलयकालेऽपि जगदुत्पत्तिप्रसंगः। मायाचियोगरूपकालस्यापि त्वन्मते खंडत्वेन तद्विशेषस्य सहकारित्वोक्त्या परिहारायोगात् । कस्यचिज्जन्यस्य खंडकालस्य जगदनुकूलेक्षणोत्पत्तेः प्रागयोगे तत्सहकारोक्त्या परिहारायोगाच्च । तत्कालव्यक्तेरपि पूर्वकालव्यक्त्यंतरापेक्षया तत्राप्युक्तरीत्याऽतिप्रसंगात् । न द्वितीयः । सर्वकार्यनिमित्तकारणत्वस्येश्वरे बोधकश्रुतीनामप्रामाण्यापातात् । तद्व्यतिरिक्तसर्वकार्यपरत्वाभ्युपगमस्त्वसंभावितः । तस्याकस्मिकत्वापत्त्या सर्वस्यापि तथात्वापत्तेरीश्वरकारणत्वप्रसक्तेरेवायोगापातात् । श्रुतौ बहुमानश्चेत् स्वाभाविकी ज्ञानबलक्रिया चेत्याद्युक्तज्ञानस्वाभाविकत्वनित्यत्वयोरंगीकारो वरः । तर्हि तत एव सृष्टिप्रलययोर्यौगपद्यं स्यादुभयानुकूलेच्छाज्ञानकृतीनां नित्यत्वादेकत्वात् । ' तदैक्षत स इमान् लोकान् असृजत ' इत्यादिकं ज्ञानक्रियादिकादाचित्कत्वावगमकवाक्यमप्रमाणं च स्यात् । मैवं । ज्ञानादीनां शक्त्यात्मना सत्त्वेऽपि व्यक्तिविशेषरूपावस्थाविशेषविशिष्टानां तत्कार्यानुकूलत्वतादृशव्यवहारविषयत्वयोरंगी-

कारेणातिप्रसंगपरिहारस्याकरे विशदीकृतत्वात् । ननु तर्हि उत्पत्तेरेव व्यक्तिरिति परिभाषामात्रं कृतं स्यादिति चेन्न । ईश्वरज्ञानानित्यत्वनित्यत्वपक्षयोर्दोषसाम्ये तन्नित्यत्वप्रतिपादकश्रुतेरुपचरितार्थत्वकल्पनेन बहुतरानंतज्ञानादिव्यक्तिगौरवाधिक्येन चानित्यत्वपक्षं विहाय तन्नित्यत्वमेवाभ्युपगम्य पूर्वोक्तदोषपरिहारायोत्पत्तिव्यतिरिक्तस्य नित्यत्वाविरोधिनो व्यक्तिशब्दवाच्यावस्थाविशेषस्यार्थापत्तिसिध्दत्वेन परिभाषामात्रत्वाभावात् । अन्यथाऽनादिर्जीवेशभेदाविद्यादीनां प्रयोज्यप्रयोजकभावस्यापि कार्यकारणभावरूपत्वापत्त्या तदुक्तेरपि परिभाषामात्रत्वापत्तेः । तस्मान्मायाद्युपाधिं विना भगवत एव नित्यज्ञानैश्वर्यादिमत्त्वात् तद्वद्देहोऽपि तादृश एव स्वरूपभूतोऽभ्युपेयः। यदात्मक इत्यादिश्रुतिबलात् । अधिकं पूर्वं वराहरूपप्रतिपादकविष्णुपुराणवाक्यानामर्थकथनावसरे निरूपितमनुसंधेयम् । अधिकं तरंगिण्यादौ द्रष्टव्यमिति दिक् । यत्तु यदात्मको यत्स्वरूपेणात्यंताभिन्नस्वरूपो भगवानीश्वरस्तदात्मिका तत्स्वरूपेणात्यंताभिन्ना व्यक्तिरभिव्यक्तिरपरोक्षचिद्रूपा आत्मा ज्ञानात्मकः ज्ञानस्वरूपात्यंताभिन्नः ऐश्वर्यात्मकः नित्यनिरतिशयानंदस्वरूपात्यंताभिन्नः । तथाच चिदात्मकोऽप्युक्तस्वरूपाभिन्न इति जीव ब्रह्मस्वरूपयोरभेदे श्रुतितात्पर्यमिति तन्न । वृत्तिप्रतिबिंबितचिद्रूपापरोक्षचितो निरस्तत्वात् । भगवतो ग्रहणे तत्संबंधिशरीरस्यैव बुद्धिस्थतया ग्रहणौचित्येनाप्रसक्तापरोक्षचितो ग्रहणायोगात् । शक्त्यात्मक इत्युक्तशक्त्यात्मकत्वस्य त्वन्मतेऽसंभवाच्च । यदपीश्वरदेहं पक्षीकृत्योद्भूतरूपवत्त्वांशवत्त्वादिहेतुभिरनित्यत्वसाधनं तत्तन्नित्यत्वबोधकपूर्वोक्तमानैर्बाधितत्वादाभाससाम्याच्चानुपादेयम् । 'यस्यांशांशेन सृज्यंत' 'एते स्वांशकलाः पुंसः कृष्णस्तु भगवान्' इत्यादिमानैः सिध्दत्वेन ब्रह्मणि सदंशस्यानावृतत्वमानंदांशस्यावृतत्वमिति वदता त्वया च ब्रह्मण्यंशस्याभ्युपगतत्वेन ब्रह्मानित्यत्वमभ्युपेयं स्यात् । अन्यथा व्यभिचारापत्तेः। स्वसमानसत्ताकत्वं वा हेतुविशेषणं विजातीयांशत्वं वा हेतुविशेषणमस्त्विति चेत् ब्रह्मनित्यत्वस्य प्रमितत्वादुक्तरीत्याश्रयणे तत्स्वरूपभूतदेहस्योक्तरीत्या प्रमितत्वादेव हेतौ प्राकृतत्वं विशेषणं दीयतां विजातीयांशवत्त्वं वा न स्वीक्रियताम् । तथाच कथमानित्यता शरीरस्य । नच कृष्णदेहादेः त्यागस्य पुराणादौ उक्तत्वात्कथं नित्यता । तर्हि रघुनाथरोदनादेः पुराणसिद्धत्वात्कथमदुःखिता । लोकानुसरणाय तथा प्रदर्शनं चेदत्रापि तदर्थमेव तादृशदेहांतरनिर्माणेन तथा प्रदर्शनमस्तु । एवं " पश्यति श्रुणोति धाता पुरस्तात् यमुदाजहार " इत्यादि श्रुतिसिध्दश्रवणदर्शनाभिवदनक्रियाभिरपि ईश्वरस्य शरीरित्वं सिध्यति । श्रवणदर्शनादिज्ञानस्येंद्रियाणां चेश्वरस्वरूपत्वेऽपि विशेषशक्त्यैव सर्वनिर्वाहान्न काऽप्यनुपपत्तिः । परमतः सेतून्मानेत्याधिकरणरीत्याऽऽनंदादेरिव विग्रहस्य लौकिकशरीरसादृश्यस्य करादिमत्त्वेन सत्त्वेऽपि लोकाविलक्षणत्वान्नकाऽपि कथंता । तदुक्तम् " आनंदो नेदृशानंद इत्युक्तेर्लौकतः परम् । प्रतिभाति नचाभाति यथावद्दर्शनं विना " इति स्मृतावानंद इत्यस्योपलक्षणत्वात् । यत्तु पश्यति श्रुणोति इत्याद्युक्तचाक्षुषादिकं मायापरिणामरूपमेवेश्वरनिष्ठं स्वीक्रियते । चक्षुराद्यजन्यत्वेऽपि तत्र चाक्षुषत्वादिजातिस्वीकारात् । यद्वा जीवचक्षुस्संनिकर्षेणैव वा भगवच्चाक्षुषं तत्तत्पुरुषीयचाक्षुषगतवैजात्यविशिष्टेषु सन्निकर्षाणां वैजात्यविशेषैर्हेतुत्वानामावश्यकत्वादीशचाक्षुषजनकतावच्छेदकवैजात्यस्यापि जीवचक्षुरादिसन्निकर्षे स्वीकारसंभवात् । जीवचाक्षुषजनकतावच्छेदकवैजात्यस्येश्वरनिष्ठचाक्षुषहेतुत्वेन कल्प्यमाने पिशाचादिनिष्ठे जीवचक्षुस्सन्निकर्षे सत्त्वे मानाभावेन ततो जीवचाक्षुषापत्त्यसंभवादिति । तत्तुच्छम् । ईश्वरस्याद्येक्षणानुपपत्त्या

तज्ज्ञानानित्यतया निरस्तत्वात् । मायोपादानकेक्षणमीश्वरस्योत्पद्यत इत्यत्र मानाभावः । अन्यथाऽन्तःकरणोपादानकमीक्षणमीश्वरस्य किं न स्वीक्रियते । अंतःकरणं नेश्वरोपाधिरिति चेत् किं तदुपाधित्वम् । तत्संयोगित्वं चेत् । अंतःकरणेऽपि समम् । तत्तादात्म्याध्यासश्चेत् मायाया अप्युपाधित्वानुपपत्तिः । ईश्वरस्य तदध्यासायोगात् । 'मामेव ये प्रपद्यंते मायामेतां तरंति हि' इति वाक्योक्तस्वप्रपन्नमायाध्यासनिवृत्तिरूपमायातरणसमर्थस्येश्वरस्य मायातादात्म्याध्यासस्यासंभावितत्वात् । अत एव यद्वेत्युक्तिरप्यसंगता । ईश्वराद्यीक्षणे जीवचक्षुस्संयोगरूपकारणस्य व्यभिचारेण कल्पनाया असंभावितत्वाच्च । पिशाचचक्षुस्संयोगस्य जीवचाक्षुपजनकतावच्छेदकजातिशून्यस्येश्वरसाक्षात्कारजनकतावच्छेदकजातिमत्त्वे तादृशजात्योर्भिन्नत्वस्यावश्यकत्वे तस्याः जीवसंयोग एव कल्पनं नेश्वरचाक्षुषाव्यवहितपूर्ववृत्तिवायुसंयोगादावित्यत्र नियामकाभावात् । एतत्पूर्वमीश्वरचाक्षुषाजनकत्वेनोभयोरपि अक्लृप्तत्वादत्यंताप्रामाणिकत्वाच्च । एवमीश्वरस्य चिदानंदात्मकविग्रहवत्त्वे पूर्वोदाहृतबहुप्रमाणसत्त्वेन स्वतंत्रे स्वधर्मिण्यपकर्षापादकत्वरूपदोषत्वाश्रयस्य कस्याप्यसंस्पर्शेन बाधकाभावाच्च । कल्याणगुणात्मकदेहवान् हरिरिति सर्वमवदातम् । यत्त्वत्राधुनिकेनोक्तम् । 'मय्यनंतगुणेऽनंते गुणतोऽनंतविग्रहे । यदासीत्तत एवाद्यः स्वयंभूः समभूदजः ' इत्यादिना हिरण्यगर्भजनकत्वोक्तेः । 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः' इत्यत्र निखिलक्षराक्षरविलक्षणत्वोक्तेश्च नास्मन्मतप्रतिकूलता । भगवतः क्षराक्षरविलक्षणतायां तदुत्तमतायां च विवादायोगात् । संसारिजीवस्वरूपमपेक्ष्यातिरिक्तस्याशनायाद्यतीतस्यापेतब्रह्मक्षत्रादिभेदस्य निरतिशयस्वप्रकाशानंदलक्षणस्य निरतिशयस्य परमात्मनोऽसंदिग्धत्वात् । हेयप्रत्यनीकगुणाश्च भगवदभिन्ना एव । केचिदविद्यावशाद्भिन्नतयाऽवभासंत इति तत्तत्प्रतिपादकागमविरोधः । कदाचित्कर्तृत्वादयश्च मायोपाधिकास्तानेवावलंब्य सगुणवादाः प्रवर्तंते । नच स्वाभाविकी ज्ञानबलक्रिया चेति गुणानां स्वाभाविकत्वाभिधानविरोधः । स्वाभाविकीत्यस्य स्वभावभूता इत्यर्थकत्वे ज्ञानानंदादीनामाविद्यकभेदकत्वेऽपि स्वरूपानतिरेकेण तदविरोधात् । इयांस्तु विशेषः । ब्रह्मणस्तदभिन्नानां तद्गुणानां विशेषोऽभ्युपगम्यते त्वया, मया त्वाविद्यकभेद इति । नन्वेवं ब्रह्मणः कर्तृत्वादिकमपि स्वभाव इति कुतो नोच्यत इति वाच्यम् । तदैक्षत तत्तेजोऽसृजतेत्यनित्यत्वादि श्रुतेरनित्यकर्तृतां विनाऽनुपपत्तेः । यत्तु भगवदभिन्नानामपि क्रियादीनामैक्षतेत्यादिना निर्देशो न विरुध्यते । सर्गाद्यकाले व्यक्तस्येदानीं शक्त्यात्मनाऽवस्थानाभ्युपगमात् । शक्तिव्यक्ती अखंडधर्मौ । तथाच तद्विशिष्टस्य संकल्पादेर्यत्किंचित्कालसंबंधित्वं कालांतरासंबंधित्वं नाभ्युपेयमतो न विरोध इति तन्न । एतन्न्यायस्याविद्यादावपि तुल्यतया तेषामपि नित्यत्वाभ्युपगमापत्तेः । स्वभावस्याव्याप्यवृत्तित्वविरोधाच्च । नहि कपिसंयोगादिकं वृक्षादेः स्वभाव इत्युच्यते । यथाकथंचित्स्वभावत्वोपपादनस्यातिप्रसक्तत्वात् । सत्कार्यवाद इतोऽन्यस्य भूतत्वस्याभावाच्च । अतः स्वाभाविकत्वेन श्रूयमाणाः स्वाभाविकाः अन्ये औपाधिका इति न कश्चिद्विरोधः । अनंताः गुणाः शुद्धसत्त्वादयो यस्यैवंभूते । गुणतो गुणवशादनंतविग्रह इत्यपि व्याचक्षत इति तन्न । 'इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ । एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत' इत्यादिना क्षराक्षरवैलक्षण्यस्य शास्त्रपरमतात्पर्यविषयताया

मयोक्तत्वात्तस्यैव मुक्तिकारणीभूतज्ञानविषयतायाः कथितत्वेन तेन तत्रैव शास्त्रपरमतात्पर्यसिद्धेरखंडब्रह्मवादिनस्तव विरोधापरिहारात् । कर्तृत्वादीनामपि स्वाभाविकत्वे श्रुत्युक्तेऽपि तेषामागंतुकत्वोक्तिर्भगवद्द्वेषातिरिक्तकारणाभावात् । शक्तेरेव कर्तृतारूपत्वात् । क्रियापदेन वा तस्य गृहीतत्वात् । क्रियायाः स्वाभाविकत्वे त्वदुक्तबाधकानां पूर्वमेवोद्धृतत्वात् । यदप्यानंदादीनां स्वमतेऽविद्याकल्पितभेदेन गुणगुणिभाव इति । आधाराधेयभावस्य धर्म्यसमानसत्ताकस्य गुणगुणिभावनिर्वाहकत्वे शून्यवाद्यारोपितासत्त्वेन ब्रह्मणो गुणित्वं स्यादविशेषात् । तथा क्षणिकवाद्यारोपितक्षणिकत्वेन च तथा देहतादात्म्येन चारोपितेन ब्रह्मणो गुणित्वापातात् अविशेषात् । यदप्यंबरादीनामपि व्यक्तिरेवांगीक्रियतां तथाप्यसत्कार्यवादापत्तिरिति तन्न। तवाप्यविद्यादिषट्काणामिवांबरादीनामपि प्रयोज्यप्रयोजकभावमात्रेण निर्वाहेऽप्यंबरादीनामप्यनादितापातात् । प्रमाणबलाद्व्यवस्था चेदत्रापि तथास्तु । नच त्वदभिमतव्यक्तेरपि ईशक्रियात्यंताभिन्नतया तस्या अपि सर्वदा सत्त्वात्पुनरव्यवस्थेति वाच्यम् । पूर्वोक्तार्थापत्त्या कालविशेषे जगदुत्पत्त्यादिनिर्वाहकविशेषात्मतयैव सिद्धेः । यद्धि युक्त्या विरुध्येत तदीशकृतमेव हीत्यादिनेशशक्त्यैव तद्घटनोक्तेः । अचिंत्याः खलु ये भावाः न तांस्तर्केण योजयेत् । नैषा तर्केण मतिरापनेयेत्यनेन ब्रह्मणः शुष्कतर्काविषयत्वोक्तेरुक्तयुक्त्या तन्निराकरणायोगाच्च । नच नैषेति श्रुतिर्निर्विशेषब्रह्मविषयेति वाच्यम् । निर्विशेषे तर्कप्रसक्तेरभावेन तत्र तर्कस्याकिंचित्करत्वप्रतिपादकश्रुतेर्वैयर्थ्यप्रसंगेन सगुणवस्तुपरत्वस्यैव न्याय्यत्वात् । तथाच व्यक्तेरव्याप्यवृत्तित्वानंगीकारात् तद्दूषणमनुक्तोपालंभ एव । अनंतगुण इत्यस्य व्याख्यानांतरमीश्वरस्य सत्त्वादिगुणसंसर्गवैधुर्यप्रतिपादकबह्वागमविरुद्धम् । तस्मादित्युपसंहारोऽप्ययुक्तः । क्रियाशक्त्योरपि स्वाभाविकत्वश्रवणेन तत्परित्यागायोगात् । किंच ज्ञानानंदादीनामपि त्वन्मते ब्रह्मस्वभावत्वं न घटते ब्रह्मण्येकव्यक्तौ ज्ञानत्वानंदत्वादिजात्यसंस्पर्शेन तस्य ज्ञानानंदादिरूपत्वायोगात् । नन्वर्थप्रकाशत्वं ज्ञानत्वं तत्त्वं चार्थेच्छाजनकतावच्छेदकवत्त्वम् । उक्तावच्छेदकं च ज्ञानत्वजातिः । सा च तत्तदर्थस्यासत्त्वापादकाज्ञानविरोधिचैतन्यवृत्तिश्चैतन्यस्य तद्विरोधित्वं च घटादावविद्यमानसुखादौ च तदाकारवृत्तिविशिष्टत्वेन विद्यमानसुखादौ च तद्विशिष्टत्वेन विद्यमानसुखादौ वृत्त्यंगीकारे तद्विशिष्टत्वेनैव । तथाच ज्ञाधातुवाच्यतावच्छेदकजातिविशिष्टचिन्निष्ठत्वेऽपि तत्पदलक्ष्यचिद्व्यक्तेस्तदभिन्नत्वान्मुक्तावप्यनपायेनात्मनो ज्ञानस्वभावत्वमव्याहतम् । एवमितरेच्छानधीनेच्छाविषयत्वमानंदत्वम् । तच्च विषयविशेषसंबंधजन्यवृत्तिविशेषावच्छिन्नचित्येव वर्तते । तत्समनियता वा काचिज्जातिः । नच दुःखाभावे उक्तेच्छाविषयत्वसत्त्वात्तस्यानंदत्वापत्तिरिति वाच्यम् । तस्य चिन्निष्ठस्याधिकरणस्वरूपस्य सुखरूपत्वांगीकारेणेष्टापादनात् । अधिकरणानात्मकत्वे दुःखाभावस्य सुखव्यंजकतया तदर्थमेवेच्छाविषयतयेतरेच्छानधीनेच्छाविषयत्वाभावादेवानतिप्रसंगात् । तथाच तादृशानंदत्वविशिष्टस्यानंदपदवाच्यत्वेऽपि तत्पदलक्ष्यायाः तदभिन्नशुद्धव्यक्तेर्मुक्तावपि सत्त्वात्तादृशानंदात्मकत्वं ब्रह्मणोऽव्याहतमिति चेन्न । उक्तविशिष्टचितोऽपि शुद्धस्वरूपे घटादिवदारोपितत्वेन मिथ्याभूतत्वेन तदैक्यस्य शुद्धचित्यसंगे वक्तुमशक्यत्वेन तस्यास्तज्ज्ञानानंदरूपत्वायोगात् । अन्यथा चिति जडदुःखादीनामप्यारोपितत्वेन तेन सह स्वरूपैक्यस्याप्यवर्जनीयत्वापत्त्या ब्रह्मणोऽनिर्वचनीयात्मकत्वजडात्मकत्वदुःखात्मकत्वा-

नित्यात्मकत्वस्यापि आपत्त्या तदात्मकत्वं स्यात् । तथाच सत्यज्ञानादिवाक्येन तद्व्यावृत्त्यनुपपत्तिः । तादृशब्रह्मभावस्यापुमर्थता च स्यात् । नच विशिष्टशुद्धयोस्तादात्म्यं विलक्षणमारोप्याधिष्ठानयोस्तादात्म्यं विलक्षणम् । तथाच विशिष्टशुद्धयोर्यत्तादात्म्यं तदनुयोगिन एव तत्स्वरूपत्वात् नैष दोष इति वाच्यम् । उक्ततादात्म्यवैलक्षण्ये मानाभावात् । तत्सत्त्वेऽपि यत्र विशिष्टस्य शुद्धसमसत्ताकत्वं तत्स्थल एव तथात्वम् । अन्यथा आरोपितनीलरूपविशिष्टगगनतादात्म्यस्य शुद्धगगने सत्त्वाच्छुद्धगगनस्य रूपित्वं शुक्तेः रजतरूपत्वं च स्यात् । तथाच त्वदुक्तविशिष्टचितो मिथ्यात्वात्कथं तत्तादात्म्यमादाय स्वरूपैक्यमादायानंदात्मकत्वं ब्रह्मणः । अन्यथोक्तविशिष्टचिनिष्ठजाड्यदुःखत्वादिधर्ममादाय ब्रह्मणो जडात्मकत्वादिकं दुर्वारं स्यात् । नच त्वन्मते दंडसंबंधानवच्छिन्नस्य दंडविशिष्टस्य चैत्रेण भिन्नाभिन्नस्य नाशेऽपि यथा न चैत्रस्य नाशप्रतियोगित्वं, तथात्वे चैत्रो नष्ट इति प्रतीत्यापत्तेः । केचिद्धर्माश्च स्वीक्रियंते च विशिष्टनिष्ठाश्चारहंतृत्वादयः । यथा चैत्रश्चोरहंतेति । नियामिका तु प्रतीतिरेवेति यथोच्यते तथा मयाऽप्युक्तविशिष्टधर्मेषु मध्ये आनंदात्मकत्वमेव ब्रह्मणि स्वीक्रियते नानृतात्मकत्वम् । विज्ञानमानंदं ब्रह्मेति ब्रह्मणो ज्ञानानंदात्मकत्वस्य प्रमितत्वादिति वाच्यम् । श्रुतिपदमुख्यार्थस्य परित्यागेन लक्षणामात्राभ्युपगमे तेन तदसिद्धेः । तथात्वेऽसदेवेदमग्र आसीदिति वाक्ये असत्पदं त्रैकालिकनिषेधप्रतियोगिमुख्यार्थकम् । तादृशासत्त्वाश्रयोक्तविशिष्टतादात्म्याश्रयीभूतचिल्लक्षकं सत् ब्रह्मणः आनंदात्मकत्वमिवासदात्मकत्वमपि प्रतिपादयेदविशेषात् । वस्तुतो विशिष्टस्य शुद्धकार्यत्वात्तन्मात्रधर्माः शुद्धे न संत्येव । प्रत्युच्चारयितृत्वादयश्चोरहन्तृत्वादयश्च चैत्रधर्मा एव तद्द्वारा विशिष्टरूपकार्ये संबध्यंते । कारणधर्माणां कार्येऽनुगमस्य सर्वसिद्धत्वात् । तथाच शुद्धाविद्यमानानंदत्वादेर्विशिष्टमात्रनिष्ठस्य तद्द्वारा शुद्धे सत्त्वांगीकरणमयुक्तमेव । नन्विदं सर्वमस्मदनभिमतदूषणमेव । ज्ञानत्वानंदत्वाश्रयविशिष्टनिरूपिततादात्म्योपलक्षितव्यक्तित्वमात्रेण श्रुतिज्ञानानंदादिपदव्यवहारविषयताया अंगीकारादानंदत्वादिधर्माणामनंगीकारादिति चेन्न । तथैव श्रुतावसदादिपदव्यवहारविषयत्वोक्तिसंभवेन ब्रह्मणः सद्रूपत्वानंदरूपत्वादिस्वीकारवदसद्रूपत्वास्वीकारबीजाभावस्यापाद्यमानत्वात् । अपि चानंदत्वविशिष्ट एव लोकानामिच्छोदयात्स एव पुरुषार्थो न पुनस्तदुपलक्षिता व्यक्तिः । तथात्वे स्रक्चंदनादिजनितवृत्तेर्नाशेऽपि तादृशवृत्तिविशिष्टचित्त्वोपलक्षितव्यक्तेः सत्त्वेन दुःखस्य सिद्धतया स्रक्चंदनजसुखेच्छाभावप्रसंगात् । नच वृत्त्यंतरविशिष्टचिद्रूपसुखांतर एवेच्छेति वाच्यम् । सामान्यतः स्रक्चंदनजसुखमद्य भवत्वित्याकारकेच्छाया एवानुभवसिद्धत्वात् । तथाच केवलचिद्व्यक्तेर्मुक्तावपुरुषार्थत्वेन तदर्थः प्रवृत्त्याद्ययोगः । आनंदत्वोपलक्षितव्यक्तिमात्रत्वेन पुरुषार्थत्वे बाध्यत्वाद्युपलक्षितव्यक्तिमात्रत्वेनापुरुषार्थतापि दुर्वारा । अपिच वृत्तिविशेषविशिष्टचितः सुखत्वाश्रयत्वे वृश्चिकादिदंशजनितवृत्तिविशेषविशिष्टचित्येव दुःखत्वजातिरप्यस्तु । तथाच तदाश्रयव्यक्तिस्वरूपत्वेन ब्रह्मणो दुःखरूपत्वेनापुरुषार्थता दुर्वारा । एवं शक्तिबलादीनामपि वृत्तिविशेषविशिष्टचिद्रूपतामंगीकृत्य तत्रैव शक्तित्वादिजातिस्वीकारे तादृशशक्तिस्वरूपकारणत्वादीनामपि आनंदादिवद्ब्रह्मस्वलक्षणत्वसंभवे तेषां तटस्थलक्षणत्वोपपादनमसंगतिश्च । नच सुखमहमस्वाप्समिति सौषुप्तिकानुभवादानंदश्रुत्या चात्मनः सुखरूपतासिद्धौ तत्रैव किंचिद्विशिष्टे सुखत्वजातिः ननु दुःखत्वादिस्तत्र माना-

भावादिति वाच्यम्। अत्रापि मूर्च्छानंतरमेतावंतं कालं सुदुःखं स्थितोऽस्मीत्यनुभवा-द्ब्रह्मैवेदं सर्वमित्यादिश्रुतिबलाच्च दुःखादीनां च ब्रह्मस्वरूपत्वसिद्धेः। अन्यथा श्रुति-संकोचापत्तेः। नच सर्वं खल्विदमिति श्रुतिर्बाधायां सामानाधिकरण्यपरेति वाच्यम्। विज्ञानमानंदं ब्रह्मेति श्रुतेरपि तथात्वस्यावारणीयत्वात्। ज्ञानवत् बलक्रियाशक्त्यादीनां च स्पष्टतया स्वाभाविकत्वापरपर्यायब्रह्मस्वरूपताबोधकश्रुतेरुदाहृतत्वाच्च। नच मूर्छोत्तर-काले दुःखत्वविशिष्टस्मृतेरेव सत्त्वान्न निरुपाधिकात्मनो दुःखात्मकत्वं सिध्यतीति तदा-वृत्त्यात्मकदुःखमेव मूर्च्छायां कल्प्यत इति वाच्यम्। उक्तन्यायस्य सुषुप्तिस्थलेऽपि साम्यात्। तस्माद्ब्रह्म ज्ञानानंदरूपस्वरूपलक्षणोपेतं, कारणत्वादिकं त्वागंतुकमित्येतदयुक्त-मेव। यदपि सुखार्थेच्छोःतदभिव्यक्त्यर्थं दुःखाभावेच्छेति। तदसत्। सुखी भूयासं न कदापि दुःखी भूयासमिति तुल्यतयेच्छाविषयत्वानुभवात्। यदपि दुःखाभावस्याधि-करणात्मनः सुखत्वमेवेति तदपि मंदम्। दुःखाभावस्य सुखरूपत्वे घटनिष्ठस्यापि तथा-त्वापातेन घटेऽपि सुखित्वापत्तेः। आत्मनः सुखरूपत्वात् आत्माधिकरणकस्यैव सुखत्व-मित्यंगीकारे आत्मनिष्ठघटाभावस्यापि तथात्वापत्त्या दुःखाभावत्वेनेव घटाभावत्वेनापि निरुपाधिकेष्टत्वापत्तेरित्यलम्। एवं परमते नित्यत्वं ब्रह्मणि ध्वंसाप्रतियोगित्वे सति प्रागभावाप्रतियोगित्वम्। अविद्यायामतिव्याप्तिपरिहाराय ध्वंसेति। भावाद्वैतपक्षे ध्वंसस्य ध्वंसाप्रतियोगित्वात्तत्रातिव्याप्तिपरिहाराय प्रागभावेति। तत्त्वज्ञानयुक्तावच्छेदकध्वंस-त्वस्य ब्रह्मण्येव तत्त्वज्ञानपूर्वक्षणे तदुत्पत्तिक्षणे वाऽधिष्ठानभूते स्वीकारेण ध्वंसत्वविशि-ष्टस्य ध्वंसत्वरूपानुयोगिताया वा पुनर्ध्वंसपरंपरयाऽनवस्थारूपदोषाप्रसक्त्या शुद्धा-द्वैतपक्षस्यैवादरणे आत्मान्यस्य सर्वस्य ध्वंसप्रतियोगित्वात् ध्वंसाप्रतियोगितामात्रं नित्यत्वमिति निरुक्तम्। तत्रेदमालोचनीयम्। इदं नित्यत्वं ज्ञानानंदादिवद्ब्रह्मस्वभावभूतं वा मायाशक्त्यारोपितेच्छादीवास्वाभाविकं वा। नाद्यः। ब्रह्मण्युक्तनित्यत्वाधिकरणतायास्त न्निर्वाहकसंबंधस्योक्तनित्यत्वनिष्ठधर्मिताया अभावत्वतदधिकरणत्वादीनां मोक्षेऽप्यवर्जनीय तया तेषां च भावरूपत्वेन भावाद्वैतपक्षनिर्वाहात्। शुद्धाद्वैतपक्षस्य तु सुतरामसंभवात्। न चैते मोक्षे न संत्येवेति वाच्यम्। तथात्वे ब्रह्मस्वभावत्वानुपपत्तेः। स्वभावस्यापि निवृत्तौ ब्रह्मणो निवृत्तिप्रसंगात्। नच शुद्धाद्वैतपक्षे एते सर्वे ब्रह्मस्वरूपभूता एवात एतेषां मोक्षे सत्त्वेऽपि न शुद्धाद्वैतहानिरिति वाच्यम्। मोक्षेऽपि धर्मधर्मिभावापन्नस्य सत्त्वावश्यकत्वे तन्निर्वाहकभेदस्य तेषां च सत्त्वेन ब्रह्मणोऽखंडत्वहानिप्रसंगात्। न द्वितीयः। तेषामस्वाभाविकत्वे आनंदज्ञानयोरिवानंतत्वस्य ब्रह्मस्वलक्षणत्वानुपपत्तिः। अवि नाशी वाऽरेऽयमात्माऽतोऽन्यदार्तमित्यादेर्नित्यानित्यवस्तुविवेचकागमस्य विरोधात्। अंब रादितुल्यत्वेन बाधस्यावर्जनीयतया सद्रूपत्वानुपपत्तेश्च। ननु ध्वंसप्रतियोगित्वाभावरूप नित्यत्वमप्यधिकरणीभूतब्रह्मस्वरूपभूत एव कल्पितभेदेन चाधाराधेयभावप्रतीतिः संसार-दशायां, मोक्षे तु नास्त्येव। अत आनंदादिवत्स्वभावलक्षणत्वोपपत्तिर्न वा ब्रह्मणः अखंड-त्वहानिर्नापि नित्यानित्यवस्तुविवेकोपदेशाविरोधः। नच ब्रह्मनिष्ठघटाभावस्यापि ब्रह्म-स्वरूपत्वात्तस्यापि स्वलक्षणत्वं कुतो नोच्यत इति वाच्यम्। घटाभावत्वावच्छिन्नस्य पटादावपि सत्त्वेनातिव्याप्तिस्तेन रूपेण तस्य लक्षणत्वायोगात्। ब्रह्मस्वरूपभूतस्य लक्ष-णत्वमिष्टमेवेति चेन्न। यत उक्ताभावरूपनित्यत्वं ब्रह्मस्वरूपं चेत् तत्र तादृशाभावत्वं वर्तत एवेति वाच्यम्। अन्यथा भावरूपत्वायोगात्। तच्चाकल्पितं चेत् ब्रह्मणः अखंडत्वहानिरत-स्तदुभयाकल्पितमेव वाच्यम्। तथाच स्वासमानसत्ताकतादृशाभावत्वोपलक्षित

ब्रह्मस्वरूपं नित्यत्वमिति पर्यवसन्नम् । तथाच शून्यवादिकल्पितशून्यत्वनैय्यायिककल्पितज्ञानानंदात्मकत्वक्षणिकत्वश्रुतिकल्पितसर्वात्मकत्वादिधर्मानुपादाय तत्स्वभावत्वापत्त्यादिपूर्वोक्तदूषणजातमपरिहार्यमेव । ब्रह्मणि ध्वंसाप्रतियोगित्वरूपनित्यत्वसत्त्वेऽप्यन्यस्य मतांतररीत्या ध्वंसप्रतियोगितयापि सत्यत्वसंभवेन ब्रह्मणोऽनंतत्वोक्तिः। परं जगन्मिथ्यात्वे प्रमाणमिति त्वदीयकौमुदीकारायुक्तेरसंगतिश्च । तत्त्वज्ञानपूर्वादिक्षणे ब्रह्मणि तत्प्रयुक्तनावच्छेदकद्वयध्वंसत्वकल्पनं चासंभावितम् । विवेचितं चेदं ज्ञाननिवर्त्यत्वनिरुक्तिनिरासप्रस्तावे । अपि चाभावरूपधर्माणां ब्रह्मस्वरूपत्वांगीकारे ब्रह्मणि विद्यमानजडानृतादिभेदस्य ब्रह्मधर्मतया सत्यतापत्त्या भेदमिथ्यात्वोक्तिरयुक्ता स्यात् । नच स्वरूपतः सत्यत्वेऽपि प्रपंचरूपमिथ्याभूतपदार्थप्रतियोगिकत्वविशिष्टरूपेण मिथ्यात्वमुच्यत इति वाच्यम् । नात्र काचन भिदाऽस्तीति प्रतियोग्यनालिंगिततया स्वरूपत एव निषेधश्रवणात् । नन्वत एव विनिगमकात् भेदस्य मिथ्यात्वमस्तु भिदा नास्तीत्यादिनाऽत्यंताभावसत्त्वावगाहनात्तस्याधिकरणस्वरूपतया सत्त्वमस्त्विति चेन्न । अस्थूलमनाण्वित्यादेः स एष नेति नेत्यादेर्भेदविधायकस्यापि सत्त्वात् । किंच विशिष्टरूपेण निषेधात् । भेदस्वरूपसत्त्वाभ्युपगमे नाना किंचनेत्यादिपदैर्बुद्धिविषयतावच्छेदकतत्तद्रूपविशिष्टस्य परामृश्य निषेधात् । घटादिस्वरूपाणां स्वरूपतो निर्धर्मिकतया ब्रह्मवत्सत्त्वं घटात्वादिविशिष्टरूपेण मिथ्यात्वमिति स्यादविशेषात् । किंच ब्रह्मणि तत्स्वरूपभूतसत्यभेदांगीकारे आनंदं ब्रह्मण इति व्यवहारनिर्वाहकसंबंधसिद्ध्ये कल्पितभेदांतरांगीकारापेक्षया विद्यमानभेदे आनंदप्रतियोगिकत्वं स्वीक्रियताम् । तथाच ब्रह्मानंदयोर्भेदाभेदेन सर्वव्यवहारनिर्वाहे गुणगुणिभावस्य वास्तवत्वापत्तिः । नन्वेकमेवेति स्वगतभेदस्य निषिद्धत्वात्कथमिदं युक्तमिति चेत् । आनंदो ब्रह्मेति सामानाधिकरण्यनिर्वाहकतादात्म्यलाभाय भेदाभेदयोरावश्यकत्वे श्रुतेरत्यंतभेदनिषेधार्थकत्वोपपत्तेः । एवमद्वितीयत्वमपि ब्रह्मणो नित्यत्वनिरासन्यायेन निरस्तम् । एवं द्वितीयाभावस्यावांतरतात्पर्यविषयतया देवताधिकरणन्यायेन सिद्धिरित्यादिकं तु पूर्वमेव निरस्तम् । एवं परमते दृग्रूपस्य ब्रह्मणः साक्षाद्द्रष्टृत्वरूपसाक्षित्वमपि अनुपपन्नम् । ननु कथमेतत् । अविद्याप्रतिबिंबितचित्साक्षी यद्वा विद्योपहितस्य न साक्षित्वं तस्य व्यवहारकाले नाशाभावेन तन्नाशरूपस्य संस्कारस्यासंभवात् । किंत्वविद्यावृत्तिनाशात्तदुपहितस्य नाशसंभवादविद्यावृत्तिप्रतिबिंबितचिदेव साक्षी । वृत्तिप्रतिबिंबितरूपेण द्रष्टृत्वपक्षे वृत्तिविषयावच्छिन्नचिद्रूपेण दर्शनत्वम् । परोक्षस्थलेऽपि वृत्तिद्वारा विषयसंबद्धचित एव प्रकाशकत्वात् । यद्यप्यविद्याप्रतिबिंबितचितो विद्याकार्याश्रयत्वेनाविद्याकार्यावच्छिन्नचिद्रूपदर्शनाश्रयत्वेऽप्यनादिविषयावच्छिन्नचिद्रूपदर्शनाश्रयत्वे मानाभावः । एवं वृत्तिप्रतिबिंबितचितोऽप्यविद्याप्रतिबिंबितचिदभेदात् । तथापि सर्वत्र वृत्तिप्रतिबिंबितनिष्ठं दर्शनसंबंधित्वमेव द्रष्टृत्वमव्याहतम् । मैवं । साक्षिणा विद्यासिद्धौ तत्प्रतिबिंबितस्य तदुपहितस्य वा चैतन्यस्य साक्षित्वं सिध्यति तत्सिद्धौ च तत्प्रतिभासमात्रशरीराविद्यासिद्धिरित्यन्योन्याश्रयात् । अविद्यावृत्तिघटितस्य साक्षित्वे तु साक्षिसिद्धावविद्यासिद्धिस्तत्सिद्धौ च तद्वृत्तिसिद्धिस्तत्सिद्धौ च साक्षिसिद्धिरिति चक्रकात् । ननु साक्षिणो विद्यया तद्वृत्त्या वोपहितरूपत्वात् तज्ज्ञाने तज्ज्ञानस्यापेक्षणेऽपि तयोर्ज्ञाने न साक्षिविषयकज्ञानापेक्षं साक्षिस्वरूपत्वात्तथापि साक्षिण उत्पत्तौ अविद्योत्पत्तौ वा साक्ष्यपेक्ष्यते । तयोरनादित्वात्तथाप्यविद्यावृत्तिसाक्षिणोरेकोत्पत्तावन्यापेक्षासमसमय-

त्वान्नाप्युपहितरूपः साक्षी उपाध्याश्रितो येन स्थितावपेक्षा स्यात् । उपाधेः स्वोपहितचिदाश्रितत्वेऽप्युपहितचितः शुद्धचित्येवाश्रितत्वादिति चेन्न । साक्षिणो विद्यायास्तदीयविषयविषयीभावस्य चानादित्वेऽविद्याविषयकत्वं साक्षिणः स्वभावभूतमेवेति बलादापतितमविद्यासंबंधाप्रयोज्यत्वात् । तथाच स्वभावस्यानपायाच्छुद्धचैतन्यस्य मोक्षेऽप्यभावप्रसंगः । अविद्याध्यासस्य दोषानधीनत्वप्राप्त्याऽप्रामाण्यपरतस्त्वभंगप्रसंगश्च । न चानादेरप्यविद्याप्रयोज्यत्वं स्वीक्रियत इति वाच्यम् । अस्मन्मते द्रव्यं कर्म च कालश्चेत्यादेः स्वभावस्यापि परमेश्वरायत्तत्वग्राहकमानस्येव त्वन्मतेऽनादेरपि अविद्याप्रयोज्यत्वे प्रमाणाभावात् । अन्यथात्मस्वभावभूतानंदादेरात्मनो विद्याप्रयोज्यत्वापातादविशेषात् । एवं वृत्तिघटितस्य साक्षित्वपक्षेऽपि वृत्त्युत्पत्तेः प्राक् साक्षिणो विद्याविषयकत्वाभावात्प्रतिभासानधीनसत्ताशून्यायास्तस्या अभावाद्वृत्त्ययोगः । वृत्त्युत्पत्त्यनंतरं चाविद्याविषयकत्वप्राप्त्याऽविद्याया वृत्तिस्तया चोपाधिभूतया साक्षी तेन चाविद्येति रीत्या चक्रकं दुर्वारम् । नच पूर्वपूर्वतरोत्पन्नवृत्तिसंबंधात्साक्षित्वं तद्वृत्तीनामप्यविद्यां विनाऽसिद्धेः । तत्तद्वृत्तीनां भेदात्तत्तद्वृत्त्युपहितसाक्षिणामपि भिन्नत्वेन तत्तत्प्रातिभासमात्रशरीराविद्यानामपि भेदापत्तेः । अविद्यैक्येऽपि तद्ग्राहकसाक्ष्युपधायकवृत्तीनां भेदे घटादिवत्स्थिरत्वप्राप्त्या ज्ञानस्यानारोपितत्वस्यैवात्मवत्प्राप्तेः अनंताविद्यातद्वृत्तिपरंपराकल्पने त्वनवस्था । नच बीजांकुरपरंपरावन्नानवस्था दोषायेति वाच्यम् । उक्तपरंपराया अप्रामामाणिकत्वेन अनवस्थाया दोषत्वस्य दुर्वारत्वात् । अन्यथाऽनवस्थाया दोषताया एवोच्छेदापत्तेः । अपिच सुषुप्तावप्यविद्यावभासार्थं वृत्त्युत्पत्तिधारांगीकारे वृत्तेरविद्यायाश्चोत्पत्तौ पूर्वपूर्वव्यक्तीनामेव सामग्रीत्वस्य वक्तव्यतया सौगतमते घटादीनामिव क्षणिकत्वप्राप्त्या अंतःकरणात्मना दुःखाद्यात्मना च परिणामाभावेन अंतःकरणावच्छिन्नचैतन्यरूपजीवतत्सुखदुःखादिप्रपंचस्यैवाभावप्रसंगः । अविद्योपाधिकस्य जीवत्वे प्रतिक्षणं अविद्याभेदेन जीवभेदापत्त्या कृतहानाकृताभ्यागमप्रसंगात् । क्षणिकजीवस्य पुण्यपापादिकर्तृत्वानुपपत्तेश्च । नचांतःकरणादिकं मायाकल्पितमिति वाच्यम् । तथात्वे तदुपादानकदुःखादिप्रपंचस्य घटादिवत्सर्वसाधारण्यापत्तेः । मायाया अपि चित्यारोपितत्वेनैव सिध्या तत्साक्षिताया अपि उक्तरीत्या चित्ययोगाच्च । एवं मायाचिद्योगरूपकालस्य क्षणिकत्वापत्त्या क्षणातिरिक्तमहाकालाभावापत्तिः । तथात्वे सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि कला काष्ठा इत्यादिना क्षणातिरिक्तकालांतराणां श्रुतावुक्त्यभावापातात् । क्षणोत्पत्त्यैव तत्कूटरूपाणां तेषामुत्पत्तिसिद्धेः । नच चेतनस्यासंगो ह्ययं पुरुष इति असंगत्वश्रवणादहमज्ञ इति तत्साक्षित्वप्रतीतेश्चान्यथानुपपत्त्यैव पूर्वोक्तपक्षाणां परिकल्पितत्वात्प्रमाणासिद्धेऽर्थे त्वदुक्तदोषाणामाभासत्वमेवेति वाच्यम् । संबन्धाभावसंबंधस्य स्वबोधितस्य निराकरणे श्रुतेर्व्याहतत्वापत्त्या परमात्मनः पापलेपाभावपरत्वात् । अहमज्ञ इत्यादिप्रतीतानां अविद्यानादित्वश्रुतीनां तत्सत्त्वेऽपि संभवात् । किंच साक्ष्युपाधिभूताविद्यावृत्तिः सविषयका निर्विषयका वा । आद्ये यद्ग्रहणे साक्षी सोपहिताचिद्भवति । तद्विषयिणी तदन्यविषयिणी वा । नाद्यः तथात्वे अविद्यायाः स्वाकारवृत्तितया परिणामानंतरमेव तदुपहितचिद्रूपसाक्षिसिद्धत्वांगीकारे चक्रकमेव । अविद्याभेदांगीकारेणोत्तराविद्याकारेण पूर्वाविद्यापरिणामो न घटते । समकालिकत्वेन वृत्तेर्विषयविधया तदजन्यतया तद्विषयकत्वे बीजाभावात् । अन्यथा तत्समकालिकपदार्थांतरविषयकत्वापत्तेः । नद्य-

नुभित्यादाविव काचन विशेषसामग्री नियामिकाऽस्ति येन तद्व्यवस्था स्यात्। अपि च वृत्तेः स्वविषयकत्वाभावेन वृत्तिग्रहणार्थं वृत्त्यंतरापेक्षायामनंतानां यौगपद्यमनुभवविरुद्ध-मापद्यते। वृत्तेः स्वविषयकत्वाभ्युपगमेऽपि सुखाद्युत्पत्तिकाले तद्विषयकवृत्त्यभावेन तदव च्छिन्नस्य तत्प्रतिबिंबितस्य वा चैतन्यस्य वा भावेन तत्प्रत्यक्षस्य प्रथमक्षणेऽभावेन ज्ञातै-कसत्त्वानुपपत्तेः। न द्वितीयः। तदन्यविषयकवृत्त्यवच्छिन्नस्य तं प्रति साक्षित्वे तत्संस्कारा-भावप्रसंगः। चैतन्यस्य नाशाभावात्। वृत्तिविनाशेऽपि वृत्ते सुखाद्यविषयकत्वेन तन्नाश-रूपसंस्कारस्य तद्विषयकत्वायोगात्। तत्समानकालिकपदार्थनाशत्वमात्रेण तद्विषयकत्वे सुखादिकालीनानंतवायुसंयोगादिव्यक्तिविशिष्टचितामपि साक्षित्वापत्तिः तादृशसंयो-गनाशेऽपि संस्कारत्वापगमसंभवात्। नच संयोगादेरस्वस्थत्वेन तत्र चित्प्रतिबिंबा-योगात्तदर्थं वृत्तिरपेक्ष्यत इति वाच्यम्। तदुपहितरूपेणैव साक्षित्वसंभवे चित्प्रतिबिं-बनस्याकिंचित्करत्वात्। न तृतीयः। अविद्यावृत्तेर्निर्विषयकत्वे तन्नाशस्य संस्काररू-पत्वानुपपत्तेर्वायुसंयोगादिकमादाय विनिगमनाविरहस्योक्तत्वाच्च। एतेन हि स्वविषय-कवृत्त्युपहितचैतन्यमेव साक्षी वृत्तौ तदसंभवात्। घटाद्यविषयकाविद्यावृत्त्युपहित चितो घटादिकं प्रति साक्षित्वात्। मनस्तत्संस्कारान्यतरस्योपाधिः जाग्रति घटादि-ज्ञानोत्तरं तदुपहितनाशानुत्पादेन साक्षिनाशरूपसंस्कारानुपपत्तेः। वस्तुतो विद्योपहि-तचिदेव साक्षी लाघवात्। वृत्तेः स्वविषयकत्वाभावेन तन्नाशस्य वृत्तिविषयकत्वा-भावेऽपि संस्कारसामान्यस्यैव वृत्तिस्मारकत्वसंभवादिति परास्तम्। स्वविषयकवृत्त्यु-पहितस्य साक्षित्वस्य वायुसंयोगादिकमादाय विनिगमकाभावेन दूषितत्वात्। वस्तुत-स्त्वंतिपक्षस्यापि दूषितत्वाच्च। एतत्कल्पे संस्कारसामान्यस्य वृत्तिस्मारकत्वोक्तावपि सुखादौ संस्कारनिर्वाहस्यानुक्तत्वात्। संस्कारस्य स्मर्यमाणविषयकत्वमनादृत्य तत्सामान्यस्य ज्ञानरूपवृत्तिस्मारकत्वे घटसंस्कारात्पटविषयवृत्तेः स्मरणापत्तेरिति दिक्। अनाद्यविद्यावृत्तिरेकाऽखंडा तदुपहितं तत्प्रतिफलितं वा चैतन्यं साक्षीति केचित्। तदसत्। तस्योक्तरीत्या संस्कारानिर्वाहकत्वात्। अनादेरविद्यापरिणतत्वरूपाविद्यावृ-त्तित्वे मानाभावात्तत्स्वरूपे मानाभावादनादिर्जीवब्रह्मविभागमादाय विनिगमनाविरहाच्च। किंच जीवचैतन्यस्य साक्षित्वे तस्य बुध्द्युपाधिकत्वेनाणुत्वेन शुक्त्याद्यव-च्छिन्नाविद्यया संबंधाभावेन तत्परिणामभूतरजतादिसाक्षित्वानुपपत्तिः। नचां-तःकरणवृत्तिद्वारा बहिर्निर्गमनेन विषयावच्छिन्नचिता सहाभेदाभिव्यक्त्या तत्साक्षित्वो-पपत्तिरिति वाच्यम्। अंतःकरणस्य बहिर्निर्गमने मानाभावेनोक्तरीत्ययोगात्। साक्षि-स्वरूपलाभे तत्साक्षिकतया विद्यासिद्धिस्तत्सिद्धौ तत्परिणामभूतबुद्धिरूपोपाधिसिद्धि-स्तत्सिद्धौ तदुपहितचैतन्यरूपसाक्षिसिद्धिरिति चक्रकात्। बुध्द्युपाध्यभावेन सुषुप्ति-साक्षिण्यव्याप्तेश्च। अविद्योपाधिकः सर्वगतो जीवः साक्षीति पक्षस्यापि अन्योन्याश्रय बलादविद्योपाधिकत्वासंभवेन दुष्टत्वात्। ब्रह्मचैतन्यस्य साक्षित्वे तस्यैव दुःखाद्यनुभवः स्यात्। न जीवस्य स्वरूपैक्यबलादेव तदज्ञाने जीवस्यानवच्छिन्नानंदप्रकाशोऽपि स्यात्। ननु ब्रह्मणः साक्षित्वेऽपि विषयावच्छिन्नब्रह्मचिता सह जीवस्य वृत्तिद्वार-काभेदसंपत्त्या जीवस्यापि साक्षितापत्तिरनवच्छिन्ना आनंदस्तु जीवं प्रत्यावृतत्वान्न भातीति चेन्न। अतीतविषयस्मरणाद्यधीनदुःखस्थले जीवस्य विषयावच्छिन्नब्रह्मचैतन्या भेदसंपादकवृत्त्यभावेन साक्षित्वानुपपत्तेः। ब्रह्मणा सहैकीभावसंपत्त्यनंतरमानंदस्य-जीवं प्रत्यावृतत्वमित्यस्यायोगाच्च। नच विषयपदेन सुखदुःखादिरूपः साक्षिभास्य-

विषय एव गृह्यते। तदवच्छेदेन ब्रह्मचैतन्येन सह जीवस्याभेदसंपत्तिर्घटत इति वाच्यम्। सुखादावंतःकरणवृत्त्यभावेनाभेदव्यक्तिसंपादकाभावादविद्यावृत्तेरावरणानिवर्तकत्वात्। ननु स्वत एवानावृतत्वात्तदवच्छेदेनाभेदाभिव्यक्तौ न वृत्त्यपेक्षा। तर्हि जीवस्यैव सुखादौ स्वत एव घटादौ वृत्तिद्वारा संबंधात्साक्षित्वसंभवाद्व्यर्थ एव ब्रह्मणः साक्षित्वाप्यभ्युपगमः। ब्रह्मणोऽप्यविद्याबिंबभूतस्य सिद्ध्ये विद्यासाक्षित्वस्य वक्तव्यतया पूर्वोक्तान्योन्याश्रयादेर्दुर्वारत्वात्। जीवस्य ब्रह्माभेदसंपत्त्या दुःखादिद्रष्टृत्वेन तदनुभवे ब्रह्मणः स्वत एव तत्साक्षित्वाद्दुःखाद्यनुभवापत्तिः। ननु यं प्रति दुःखादौ मिथ्यात्वमावृतं तत्त्वे सति दुःखादिसंबंधित्वं तदनुभवित्वं न च तदीश्वरेऽस्ति। तस्य दुःखाद्यसंबंधित्वात्। तं प्रति दुःखादिमिथ्यात्वस्यानावृतत्वाच्चेति चेन्न। दुःखादौ मिथ्यात्वग्रहतद्विषयकब्रह्मचैतन्यरूपसाक्ष्यभेदे जीवस्य प्राप्ते जीवस्यापि दुःखानुभवाभावापत्तेर्जीवं प्रति दुःखादिमिथ्यात्वस्यानावृतत्वात्। दुःखस्य जीवचैतन्यसंबंधित्वे तदभेदसंपत्त्या ब्रह्मणोऽपि दुःखसंबंधित्वानपायादावृततन्मिथ्यात्वकत्वप्राप्तेश्च ब्रह्मणो दुःखानुभवस्यावर्जनीयत्वात्। किंच ब्रह्मणो दुःखादौ मिथ्यात्वमनावृतमित्यस्य मिथ्यात्वप्रत्यक्षं तस्य वर्तत इत्येवार्थः। ज्ञानमात्रविवक्षायां शास्त्रादिजन्यपरोक्षज्ञानवतो जीवस्य दुःखानुभवो न स्यात्। तथाच दुःखादिमिथ्यात्वप्रत्यक्षं चाधिष्ठाने तदभावप्रत्यक्षमेव तत्काले च कथं दुःखाद्द्रष्टृत्वरूपसाक्षित्वं सोपाधिकभ्रमस्थलेऽपि तत्र भ्रांतिविषयदर्शनकालेन तत्रोक्तमिथ्यात्वप्रत्यक्षम्। अत्र पीताभावो न दृश्यते पीत एव दृश्यत इत्यनुभवात्। निश्चितप्रामाण्यकमिथ्यात्वग्रहस्य दृढतरस्य सद्भावादेव न तत्र प्रवृत्तिः। नचैवं प्रकृते शास्त्रजनितनिश्चितप्रामाण्यकदृढतरमिथ्यात्वग्रहवतामपि रोदनादिविक्रियादर्शनेन दुःखाद्यनुभवस्य सर्वसिद्धत्वात्। जीवन्मुक्ते आत्यंतिकदुःखानुभवाभावो यदि वर्तते तर्हि तस्य मिथ्यात्वप्रत्यक्षसद्भावादेव तदंगीकारो विषयमिथ्यात्वनिश्चयेन दुःखस्यानुत्पत्तिर्वा तस्येति न दोषः। सर्वजीवसाधारणशुद्धचिदेव साक्षीत्यप्येतेन निरस्तम्। उक्तरीत्या दुःखोपप्लुतत्वस्य अपरिहारात्। अविद्यासाक्षित्वस्य तत्रैव वक्तव्यतया पूर्वोक्तान्योन्याश्रयाद्यपरिहाराच्च। सुप्तमैत्रं प्रति तदीयाज्ञानस्य शुद्धचिद्रूपसाक्षिणा भानेनोत्तरकाले एतावंतं कालं किमपि नाविदिषं किमपि दुःखं नाविदिषमिति परामर्शो जायते। स न स्यात्। चैतन्यस्य सर्वानुगतत्वेन मैत्रस्वापकालेऽपि तेन जाग्रच्चैत्रीयदुःखग्रहणात्। यत्तु साक्षिणा ज्ञानग्रहणेऽपि मैत्रीयतया न गृह्यत इति तन्न। मैत्रीयतया ग्रहणाभावे तादृशाज्ञानस्य परामर्शेन मैत्रीयतया विषयीकरणानुपपत्तेः पूर्वमननुभूतत्वात्। जाग्रदाद्यक्षणादौ तदनुभित्यादेः कथंचिदंगीकारे अज्ञानादेरपि तथात्वसंभवेन सुषुप्तिवेद्यत्वासिद्धेः। तर्हि दुःखस्य मैत्रसंबंधित्वेनाग्रहणादेव नाविदिषमित्यस्योपपत्तिरिति चेन्न। किमपि दुःखं नावेदिषमिति सर्वथा दुःखाग्रहणप्रतीतेरनुपपत्तेः। एतेन स्वतो वृत्तिद्वारा वा तत्तज्जीवाभेदस्य तत्तद्दुःखादिरूपविषयावच्छेदेन संपत्त्या तदवच्छेदेनानावृतत्वं प्राप्तस्य शुद्धचैतन्यस्य तद्भासकत्वम्। तथाच चैत्रीयदुःखादेः चैत्रीयतया भासकत्वमिष्टमेव चैत्रं प्रति तत्सत्त्वात्। सुप्तं मैत्रं प्रति चैत्रीयतया भासकत्वं न संभवति। पुरुषांतरीयदुःखादेः पुरुषांतरं प्रत्यावृतत्वेन प्रमाणवृत्तिं विना तं प्रति साक्षिमात्रस्याभासकत्वात्। तं प्रति चैत्रदुःखादिभासकत्वमित्यस्य तं प्रत्यनावृतचैत्रदुःखादिसंसृष्टत्वमित्यर्थ इति निरस्तम्। एवमपि मैत्रीयाज्ञानचैत्रदुःखग्राहकचैतन्यरूपसाक्षिण एकत्वेन तन्मूलकपरामर्शे सामान्यतः दुःखाग्रहणस्य

( टीका ) एतेनाविद्याकल्पितविशेषैः सविशेषं स्वतस्त्वविशेषमेव ब्रह्मेत्यपि निरस्तम् । स्वाभाविकीति श्रवणात् । उपपत्तिविरुद्धं च श्रुतीनामखंडब्रह्मनिष्ठत्वम् । तथाहि । अखंडार्थनिष्ठत्वं नाम निर्भेदार्थनिष्ठत्वं निर्विशेषार्थनिष्ठत्वं वा । आद्ये सगुणत्वाविरोधः । भेदाभावेपि विशेषबलेनैव तदुपपत्तेः । नद्वितीयः । तथासत्ये कार्यत्वेन श्रौतपदजातस्य पर्यायतया सहप्रयोगाभावप्रसंगात् । अतः सगुणमेव ब्रह्म श्रुत्यभिप्रेतमवगम्यते ।

---

विषयीकर्तुमशक्यत्वात् । तत्तज्जीवचैतन्याभेदसंपत्तिविशिष्टस्य ग्राहकतया तादृशपरामर्शमूलत्वे जीवस्यैव साक्षित्वे पर्यवसानाच्चक्षुष्मतः साक्षित्वोक्तिरयुक्तैवेति दिक् । इत्थं च त्वन्मते नित्यत्वानंदरूपत्वसाक्षित्वादिधर्माणां कथामप्ययोगात् । स्वप्रकाशनिरतिशयानंदात्मकत्वादिना स्वाभिमतब्रह्मस्वरूपोत्कीर्तनमप्यलज्जकरमिति आधुनिकोक्तमयुक्तमेवेति स्थितम् । पूर्वोक्तसकलप्रमेयं संक्षिप्य सूचयति । एतेनेति । स्वाभाविकीति । अविद्याकल्पितत्वे स्वाभाविकत्वोक्तिरयुक्तत्वात् । ज्ञानबलक्रियाणां ब्रह्मणः स्वरूपभूतधर्मत्वासिद्धौ तन्न्यायेन श्रुतिसिद्धनिखिलकल्याणगुणानामपि स्वाभाविकतया सिद्धेर्बाधकाभाव इति भावः । उपपत्तीति । वक्ष्यमाणबाधकविरुद्धमित्यर्थः । निर्भेदार्थेति । स्वगतगुणक्रियादिप्रतियोगिकभेदरहितार्थत्वमित्यर्थः । परीत्या विकल्पकोटिं दर्शयति । निर्विशेषेति । निर्धर्मकेत्यर्थः । विशेषेति । तस्य भेदप्रतिनिधित्वादित्यर्थः । पर्यायतयेति । ब्रह्मातिरिक्तस्य सत्यज्ञानादिशब्दमुख्यार्थत्वाभावात् ब्रह्मण एव मुख्यार्थत्वे वक्तव्ये तत्र यदि शब्दानां शुद्धस्वरूपमात्रबोधकत्वं तदा शब्दानामन्यूनातिरिक्तविषयबोधजनकत्वप्राप्त्या पर्यायत्वं प्राप्तमेवेति हृदयम् । सहप्रयोगेति । एकवस्तुविषयकैकज्ञानेच्छया युगपत्प्रयोगानुपपत्तिरित्यर्थः । यद्यपि कलशो घट इति वाक्यमपि घटरूपैकार्थमात्रविषयकसंसर्गागोचरप्रमां जनयति संभेदनान्यतरवैयर्थ्यमिति न्यायेनैकवस्तुबोधकसामग्रीद्वयमेलनेन तद्वस्तुबोधे बाधकाभावात् । अन्यथा चैत्रोच्चारितं घटमानयेति वाक्यं मैत्रोच्चरितं च कलशमाहरेति वाक्यं युगपत् शृण्वतो देवदत्तस्य तद्बोधो न स्यात् । न स्याच्च धूमालोकपरामर्शाभ्यां वन्ह्यनुमितिः । अत एव प्रातिपदिकान्यनतिरिक्तविषयाणि प्राह भगवान् प्रथमाशब्दितविभक्त्या पाणिनिरतः सकलतर्कसमयज्ञो वाप्ट वचसोरनतिरिक्तविषयत्वमित्यनेनोच्चैरित्यादौ नामप्रथमाविभक्त्योरेकार्थानुभावकत्वमुक्तं संक्षेपशारीरके । वचसः उच्चैरिति प्रातिपदिकं तदुक्तं प्रथमा चेत्यनयोर्वाप्ट इच्छति । प्रातिपदिकार्थलिंगपरिमाणवचनमात्रे प्रथमेति सूत्रेण पाणिनिना प्रातिपदिकसमानार्थकत्वस्य प्रथमाया उक्तत्वात्प्रातिपदिकसमभिव्याहृतप्रथमयाऽप्येकमात्रवस्तुविषयकबोधो जायते । परंतु तत्तदुपस्थाप्ययोः संसर्गबोधनेराकांक्ष्यं घटः कलश इति वाक्यस्येति परैरुक्तम् । तथाच सत्यज्ञानादिवाक्यस्याबोधकत्वापादनं न घटते । तथापि उच्चैरित्यादौ शब्दसाधुत्वनिर्वाहकतया प्रथमायाः साधुत्वेऽपि घटः कलश इत्यत्राधिक्यरूपवाक्यदोषोऽस्त्येव तद्वत्प्रकृतेऽपि स्यात् । नचासौ निर्दोषवाक्ये वक्तुं शक्यत इति अभिप्रायः । ननूक्तार्थदृढीकरणाय पुनरुक्तिरस्त्विति चेत् न । निश्चितप्रामाण्यकतत्सत्वनिश्चयस्यैव दृढीकरणपदार्थतयोक्तपदानां तावत्पर्यंतं तात्पर्यसत्वे स्वरूपमात्रपरत्वोक्त्यनुपपत्तेः । 'अनंते स्वर्गे लोकेऽन्ये ये प्रतितिष्ठति प्रतितिष्ठति मेधारुवण्यो

( टीका ) अथ मतं द्विविधा वेदांतवाक्यप्रवृत्तिः । एका पदार्थपरा । अपरा तस्यात्मतादात्म्यरूपवाक्यार्थपरा । तत्र तावत्सत्यं ज्ञानमनंतं ब्रह्मेत्यादिपदार्थपरं वाक्यमखंडार्थनिष्ठं ।

---

मैत्रावरुणयः ' ' नच पुनरावर्तते न च पुनरावर्तते ' इत्यादाविवोक्तशब्दस्यैवोपस्थितस्य स्वार्थगृहीतशक्तितात्पर्यकस्यैव पुनः प्रयोगौचित्येन पर्यायशब्दांतरोपादानानौचित्याच्च । अत एवाभ्यासरूपतया तात्पर्यग्रहणार्थत्वान्नाधिक्यमित्यप्यसदेव । एकप्रकारासकृदुक्तिरूपत्वाभावात् । ज्ञानपदप्रयोगमात्रेण सत्यपदस्य स्वरूपमात्रे स्वार्थतात्पर्यनिश्चयाननुभवात् । अन्यथा लक्षणवाक्यत्वादिना स्वरूपमात्रपरत्वव्यवस्थापनप्रयासवैफल्यापत्तेः । वेदांतवाक्यप्रवृत्तिः । प्रवर्तमानं वेदांतवाक्यमित्यर्थः । कृदभिहितो भावो द्रव्यवत्प्रकाशत इति वचनमनुरुध्य निश्श्रेयसाधिगम इत्यस्याधिगम्यमानं निश्श्रेयसमिति गौरीकांतीये व्याख्या कृता तद्वत्प्रकृतेप्यनुसंधेयम् । यद्वा प्रवृत्तिः शक्तिः । पदार्थपरा वाक्यार्थपरेत्यस्य तद्बोधनिर्वाहकेत्यर्थः । वेदांतेति । प्रकृताभिप्रायकं लोकेऽपि तथाविधवाक्यद्वयस्य सत्त्वात्तस्यापि वक्ष्यमाणरीत्या अखंडार्थत्वाच्च । पदार्थेति । यन्महावाक्यीयपदार्थयोर्भेदबुद्ध्याऽविरोधित्वे सति तन्महावाक्यीयपदार्थरूपाखंडार्थकं यत् तत्तन्महावाक्यीयपदार्थनिष्ठं यन्महावाक्यार्थबोधोपयोगि पदार्थबोधपर्यवसायि यत् तत्तन्महावाक्यीयपदार्थपरमिति यावत् । तस्यात्मतादात्म्यरूपेति । पदार्थयोर्भेदाभावोपलक्षितस्वरूपेत्यर्थः । वाक्यार्थेति । यन्महावाक्यीयपदार्थयोर्भेदबुद्धिविरोधि तत्तन्महावाक्यार्थरूपाखंडार्थकं तन्महावाक्यार्थपरम् । अखंडार्थबोधांतराननुकूलाखंडार्थबोधतात्पर्यकमिति यावत् । तत्त्वमसीति महावाक्यं तद्घटकतत्पदार्थभूतब्रह्मस्वरूपपरं, सत्यं ज्ञानमनंतमित्यादिवाक्यं त्वंपदार्थभूतजीवस्वरूपपरं च । योऽयं विज्ञानमयः प्राणेषु हृद्यंतर्ज्योतिः पुरुष इत्यादिवाक्यं बोध्यम् । तावदिति महावाक्यस्याखंडार्थकत्वं पश्चात्साधयिष्यत इत्याशयेन तावदिति । अखंडार्थनिष्ठमिति । नन्वेतदयुक्तम् । अखंडार्थनिष्ठत्वस्वरूपस्यैव पूर्वं निरस्तत्वेन तत्स्वरूपासिद्धेः प्राक् तस्य किंचिद्धर्मवृत्तित्वेन संशयानुदयेनाजिज्ञासितत्वेन धर्मिविशेषनिष्ठत्वेन तत्साधनायोगात् । नच निर्विशेषार्थबोधकत्वरूपद्वितीयविकल्पे दूषिते तत्पक्षव्यवस्थापनार्थमेवोत्तरग्रंथस्य प्रवृत्तत्वान्नोक्तासंगतिरिति वाच्यम् । तथा सत्युत्तरत्रानुमाने प्रकृष्टप्रकाश वाक्यस्य दृष्टांतीकरणासंगतेः । ब्रह्मातिरिक्तस्य निर्धर्मिकत्वाभावेन निर्विशेषार्थबोधकत्वरूपसाध्यवैकल्यापत्तेरिति चेन्न । यतो निर्विशेषार्थकत्वं नाम वस्तुतो यन्निर्विशेषं तदर्थकत्वमिति न तथात्वे तत्स्वरूपस्यैवाद्वैतवाद्यतिरिक्तानामसिद्ध्या तद्दूषणं विहाय पर्यायत्वादिदूषणदानानौचित्यापत्तेः । किंतु निर्विकल्पकबोधजनकत्वस्य नैय्यायिकैरिंद्रियादिष्वभ्युपगतत्वेन संभवदुक्तिकत्वात् । विशेषविनिर्मोकेणार्थबोधकत्वं किंचिद्धर्माप्रकारकबोधजनकत्वमिति यावत् । इत्थं च सत्यज्ञानादिवैदिकपदानां अमुख्यवृत्त्याश्रयणस्य विना बलवद्बाधकमयोगान्मुख्यवृत्त्यैव बोधकत्वं सिद्धवत्कृत्य मुख्यवृत्तिपक्षे पर्यायत्वापादनं पूर्वं कृतम् । तत्पक्ष एव लक्षणाश्रयणादिना पूर्वोक्तदोषमुद्धर्तुमप्ययमतमित्यादिग्रंथ आरभ्यते । तत्र लक्षणाश्रयणे बीजाभावं पराभिप्रेतं निराकर्तुं ब्रह्मविदाप्नोति परमित्यादिना तदुपपाद्यत इति न संदर्भविरोधः । ननु सामान्यतो निष्प्रकारकधीजनकत्वं नाखंडार्थकत्वं वक्तुं युक्तं परा-

नभिप्रेतत्वात् । तथा हि अद्वैतसिद्धिपूर्वपक्षभागव्याख्यावसरे अपर्यायशब्दानां प्रातिपदिकार्थमात्रपर्यवसायित्वरूपलक्षणस्य शीतोष्णस्पर्शवंतौ पयःपावकाविति वाक्यस्य लक्ष्यत्वमभ्युपेत्याद्वैतचंद्रिकायां वस्तुतः समुदितवाक्येपि लक्ष्यत्वं लक्षणस्थमात्रपदस्य विशेषणीभूतपदार्थांतरव्यवच्छेदपरत्वेन पदार्थांतराविशेषणकतामात्रधीपर्यवसायित्वे लक्षणं च संभवतीति बोध्यमित्युक्तम् । तेन ज्ञायते पयःपावकाविति समासार्थभूतद्वित्वविशिष्टपयस्त्वपावकत्वाद्यवच्छिन्नमात्रविषयकः शीतोष्णस्पर्शवत्पदार्थप्रकारकबोधस्तादृशसमुदितवाक्याज्जायत इति । एवं सिद्धांतभागे श्यामो युवा लोहिताक्ष औपगव इत्यौपगवलक्षणवाक्ये एकदेशस्थावृक्षावनं चतुरंगिणी सेनेत्यादिलक्षणवाक्ये चाव्याप्तिः । औपगवपदस्य उपगुपुत्रत्वादिधर्मावच्छिन्नबोधकतया तदर्थबोधकत्वेऽपि नैकार्थमात्रपर्यवसायित्वम् । एवं वनसेनापदानामपि एकदेशस्थितवृक्षाश्वादिसमुदायपरत्वादित्याशंक्याव्याप्त्युद्धारार्थं प्रवृत्तस्य एकत्वं प्रातिपदिकार्थस्यैकधर्मावच्छेदेन वृत्तिविषयत्वमात्रं न त्वेकमात्रव्यक्तित्वमतो यौगिकार्थौपगवादिप्रश्नोत्तरे श्यामो दीर्घो लोहिताक्ष औपगव इत्यादेः अनेकार्थात्मकवनसेनाप्रश्नोत्तरे एकदेशस्थावृक्षावनमित्यादेः नाव्याप्तिरिति मूलस्य व्याख्यावसरे वृत्तिविषयत्वं शक्तिलक्षणाकृतान्द्वितसमासानामन्यतमज्ञानाधीनज्ञानविषयत्वम् । तथाच यादृशधर्मविशिष्टस्य शक्त्यादिज्ञानाधीनधीविषयत्वं तादृशयत्किंचिद्धर्मविशिष्टभिन्नाविषयकप्रमाजनकत्वं पर्यवसितमित्यभिधाय तद्भिन्तोन गोसमीपवृत्त्यपत्यत्वविशिष्टबोधनात्तन्मात्र पर्यवसायित्वेन श्यामादिवाक्ये नाव्याप्तिरित्यभिहितम् । तेनापि ज्ञायतेऽखंडार्थवाक्येन सप्रकारकबोधो जन्यते । परंतु स न समभिव्याहृतपदार्थांतराविषयक इति । तथाच निष्प्रकारकबोधजनकत्वस्याखंडार्थकवाक्यलक्षणत्वेऽसंभवोऽव्याप्तिर्वा स्यात् । प्रकृष्टप्रकाशादिवाक्यस्यापि चंद्रत्वप्रकारकबोधजनकत्वादिति चेन्मैवम् । यतो यद्यप्युक्तवाक्यपर्यालोचनया सप्रकारकबोधः परोभिमत इति प्रतीयते । तथापि नासौ तस्य परमसिद्धांतः । तथात्वे सत्यज्ञानादिवाक्येन तत्त्वमस्यादिवाक्येन च ब्रह्मत्वरूपैकधर्मावच्छिन्नमात्रविषयकबोधजननेऽपि तस्याखंडार्थकत्वानपायेन वेदांतानामखंडार्थकत्वानुरोधेन निर्विशेषब्रह्मसिद्ध्यभावप्रसंगात् । औपगवादिस्वरूपमात्रप्रश्नोत्तरीभूतौपगवादिलक्षणवाक्येन यद्यौपगवत्वादिप्रकारकबोधस्तदा किमपराद्धं श्यामत्वादिधर्मभानेन औपगवत्वादिधर्मभानेऽप्यजिज्ञासिताभिधायकत्वदोषतौल्यात् । अतस्तद्वाक्येनाप्यौपगवादिस्वरूपमात्रावगाही निष्प्रकारक एव बोधो जायते । एवं वनसेनादिलक्षणवाक्यादपि एकदेशस्थनानावृक्षस्वरूपमात्रविषयक एव बोधो जायत इति तत्सिद्धांतः । अत एवाद्वैतचंद्रिकायां वस्तुतः श्याम इत्यादेरौपगवादिस्वरूपमात्रप्रश्नोत्तरत्वेन तन्मात्रविषयकत्वसंभवात्तत्स्थितादिपदस्य तत्स्वरूपमात्रलाक्षणिकत्वान्न यौगिकार्थमात्रविषयकत्वमेकदेशेत्यादेरपि वनादिपदलक्षितनानावृक्षस्वरूपमात्रविषयकत्वमित्याद्यभिधाय तथाच शक्तिलक्षणान्यतररूपा या या एका नाम्नो वृत्तिस्तज्ज्ञानजन्यस्मृतिविषयान्याविषयकप्रमाजनकत्वं लक्षणं संभवतीति ग्रंथेनैकप्रातिपदिकार्थपर्यवसायित्व रूपलक्षणं परिष्कृत्य सप्रकारकबोधमुपादाय लक्षणं परिष्कुर्वतो मूलकारस्याभिप्रायविशेषमाचार्याणां श्यामेत्यादेरित्यादिग्रंथेनाभिधाय तदीयोत्तरग्रंथानुसारेण तस्यापि शुद्धस्वरूपमात्रबोधकत्वमखंडार्थवाक्यानामभिमतमित्यभिप्रेत्यात एवेत्यादिग्रंथेन तद्ग्रंथसम्मतिरुक्ता । उदाहृताद्वैतचंद्रिकापरिष्कृतलक्षणवाक्ये विशिष्टनिष्ठशक्त्यापि सहका-

रिवशाद्विशेष्यमात्रबोधो जायतेऽतश्चंद्रादिपदशक्त्यैव चंद्रादिस्वरूपमात्रबोध इत्याशयेन शक्तेर्ग्रहणम्। यत्र विशेष्यवाचकपदं निरूढलाक्षणिकं यथा पीलु स्वासाधारणधर्मयुक्तमिति वाक्यस्थपीलुपदं पीलुवृक्षजन्यत्वरूपशक्यसंबंधेन फलरूपार्थे तत्स्थलानुरोधेन लक्षणाया ग्रहणम्। विशिष्टशक्तिस्थले विशेष्यबोधो लक्षणयैवेति पक्षे लक्षणावेत्युक्तमिति ध्येयम्। उक्ताखंडार्थकत्वमभिप्रेत्यैवोक्तं कल्पतरौ 'अविशिष्टमपर्यायानेकशब्दप्रकाशितम्॥ एकं वेदांतनिष्णाता अखंडं प्रतिपेदिरे' इति। अत्र यद्यप्यखंडार्थस्वरूपमुक्तं तथापि तेन तत्प्रतिपादकत्वमेव लक्षणमभिप्रेतमिति सिद्धम्। अत्र प्रकारतात्वं नाखंडो धर्मः परेषां, किंतु भासमानवैशिष्ट्यप्रतियोगितात्वादिकम्। तथाच संसर्गघटितत्वात्प्रकारतायाः लाघवात्संसर्गाविषयकबोधजनकत्वमखंडार्थत्वमिति निष्कर्षस्तैः कृतः। तथाचोक्तं परकीयतत्त्वप्रदीपिकाख्यग्रंथे 'संसर्गासंगिसम्यग्धीहेतुताया गिरामियं॥ उक्ताखंडार्थता यद्वा तत्प्रातिपदिकार्थता' इति। कल्पतरावेकमित्यनेनैकप्रातिपदिकार्थत्वरूपम् यद्वीत्यंतरेणाखंडत्वं निरुक्तं तल्लब्धलक्षणबोधकं यद्वा प्रातिपदिकेत्यादि। अत्र संसर्गाविषयकप्रमाजनकत्वं लक्षणं चेदप्राप्तयोः प्राप्तिः। संयोग इति संयोगलक्षणवाक्येऽव्याप्तिः। नच पदस्मारितातिरिक्तसंसर्गागोचरप्रमाजनकत्वं तत् सर्वेषामपि संसर्गाणां पदस्मारितत्वेन पदस्मारितातिरिक्तसंसर्गाप्रसिद्धेः। नापि स्वघटकपदस्मारितातिरिक्तेत्यादिस्वत्वस्याननुगतत्वात् पक्षदृष्टांतयोरेकधर्मावच्छिन्नसाध्या निर्वाह इति तत्र तत्र वदतस्तवोक्तरीत्या साध्यपरिष्कारायोगात्। ननु नञ्व्यत्यासेन स्वघटकपदस्मारितारिक्तसंसर्गगोचरप्रमाजनकं यद्यत्तत्तद्भेदकूटवत्त्वं लक्षणमभिमतम्। घटमानय नीलोत्पलमित्यादिवाक्येषु स्वघटकपदानि यानि तत्स्मारितार्थो घटादयस्तदन्यसंसर्गः कर्मत्वानयनयोः संसर्गो नीलोत्पलयोरभेदसंसर्गश्च तद्विषयकप्रमाजनकत्वसत्वात्तानि प्रतियोगिकोटिप्रविष्टानि न प्रकृष्टप्रकाशादिवाक्यानि। तेषां चंद्रस्वरूपातिरिक्तानवगाहिबोधजनकताया अग्रे व्यवस्थापयिष्यमाणत्वात्। अतस्तेषु तत्तद्भेदकूटसत्वोपलक्षणत्वात् संगतिरिति मैवं। घटकर्मत्वमानयनमिति निराकांक्षवाक्येऽतिव्याप्तेः। शाब्दबोधजनकत्वाभावेन प्रतियोगिकोट्यनिविष्टत्वात्। नच ज्ञानजनकत्वमपि विशेष्यदलं विवक्षणीयमिति वाच्यम्। तस्यापि ज्ञायमानलिंगविधया स्वप्रयोक्तृपुरुषानुमितिजनकत्वात्। विषयविधया स्वप्रत्यक्षजनकत्वाच्च। नच शब्दजनकत्वं विवक्षणीयमिति वाच्यम्। तेनापि योग्यताभ्रमेणाभेदान्वयबोधजननात्। तस्य प्रमाजनकत्वाभावेन प्रतियोगिकोट्यप्रवेशाच्चातिव्याप्तेः। नच विशेष्यदले शाब्दपदं प्रमापरमस्त्विति वाच्यम्। प्रमापदस्य सर्वथा बाध्यत्वशून्यविषयार्थकत्वे प्रकृष्टप्रकाशादिवाक्येऽव्याप्त्यापत्तेः। व्यवहारकालाबाध्यार्थविषयकार्थकत्वे त्वविद्यातिरिक्तदोषप्रयुक्तभानकं प्रातिभासिकमिति प्रातिभासिकलक्षणवाक्येऽव्याप्तिः। तद्वाक्यजन्यप्रातिभासिकस्वरूपमात्रावगाह्यखंडार्थबोधस्योक्तप्रमात्वाभावात्। नच तदलक्ष्यमेवेति वक्तुं युक्तम्। स्वघटकपदार्थयोः परस्परभेदबुद्धेरनहार्थत्वेन तद्विरोध्यखंडार्थबोधजनकत्वात्। शुक्तिरजतादिकं नास्तीति वाक्यस्यैवैतस्यापि प्रमाणत्वेनैव लोकव्यवहारगोचरत्वेन घटःकलश इत्यादिवाक्यस्येव अलक्ष्यत्वे बीजाभावात्। ननु तर्हि त्यज्यतां प्रतियोगिकोटावनुयोगिकोटावपि प्रमात्वेन निवेशः। तावतापि घटकर्मत्वमिति वाक्येऽतिव्याप्तेः। प्रातिभासिकलक्षणवाक्येचाव्याप्तेश्च निरासो भवति। नच संसर्गासंगिसम्यग्धीत्युक्तिविरोधस्तेन प्रमात्वेन

निवेशप्रतिपादनादितिवाच्यम् । सम्यक्पदस्योक्तभेदधीविरोध्यर्थकतया घटः कलश इति वाक्यवारणार्थत्वात् । घटः कलश इति वाक्ये घटत्वमात्रनिर्विकल्पकशाब्दस्य जातिशक्तिवादिमते जननेऽपि घटत्वे घटत्वभेदबुद्धेराहार्यत्वेन तद्विरोधित्वाभावेन तस्याखंडार्थकवाक्यलक्षणलक्ष्यतायास्तांत्रिकैरनंगीकृतत्वात् । नच तर्ह्यपर्यायशब्दानां संसर्गगोचरप्रमाजनकत्वमिति भवदीयलक्षणे पर्यायशब्दानां इत्यस्य वैय्यर्थ्यापातः । तदुक्तप्रमात्वेन निवेशादेव तद्वारणादिति वाच्यम् । उक्तसम्यग्धीपदस्यैवोक्तक्रमेणापर्यायशब्दानामित्येतन्निवेशतात्पर्यग्राहकत्वाभ्युपगमादिति चेन्न । एवमप्युक्ताद्वैतसिद्धीयलक्षणवाक्ये प्रमापदापर्यायशब्दपदयोरन्यतरवैय्यर्थ्यस्य दुर्वारत्वात् । एतेन प्रमापदं स्वनिवर्त्याज्ञानविषयविषयकशाब्दपरं प्रातिभासिकलक्षणवाक्यजाखंडबोधेनापि निवर्तनीयं किंचिदज्ञानं स्वीक्रियत एवातस्तत्र नाव्याप्तिः । घटकर्मत्वमिति वाक्यजन्यशाब्दस्य विद्यावृत्तिरूपतयाऽविद्यानिवर्तकत्वाभावान्नातिव्याप्तिरित्यपि निरस्तम् । घटः कलश इति वाक्यजन्यबोधस्याज्ञानानिवर्तकतयास्तत्रापि सिद्धत्वेनापर्यायशब्दानामित्यस्य वैय्यर्थ्यापरिहारात् । किंच सत्वं प्रतियोगिकोटावनुयोगिकोटौ कामं निवेश्यताम् । तथापि संसर्गपदवैय्यर्थ्यं दुर्वारम् । पदस्मारितातिरिक्तस्य संसर्गस्यैव शाब्दबोधमानेन संसर्गत्वेन तन्निवेशानर्थक्यात् । नचास्तु । तथैव संसर्गपदेन प्राचीनैरुपात्तेनैतादृशार्थो लभ्यत इति च सूचनार्थत्वमात्रं तस्येति वाच्यम् । तथापि सांसर्गिकविषयतावान् संबंध इत्याकारे विशिष्टार्थतात्पर्यकवाक्येऽतिव्याप्तिः । तज्जन्यबोधविषयीभूतपदार्थद्वयसंसर्गाणामपि पदस्मारितातिरिक्तत्वाभावात् । नहीदं संसर्गलक्षणपरत्वेन कदाचिदुक्तमपि विशिष्टार्थबोधतात्पर्येण न प्रयोक्तव्यमिति राजाज्ञास्ति।आग्रहकरणेऽपि संबंधसामान्यं प्रमेयरूपं सर्वप्रमेयविषयज्ञानविषयीभूतमिति वाक्ये प्रतियोगिनि स्वत्वनिवेशपक्षेतिव्याप्तिः। स्वघटकपदस्मारितातिरिक्ताप्रसिध्या स्वपदेनोपादानासंभवात् । अनुयोगिनि स्वत्वपक्षेऽपि तादात्म्यसामान्यं संबंध इति वाक्येऽतिव्याप्तिरेव । संबंधत्वस्य संयोगादिसाधारणतया अलक्षणतयोक्तस्य लक्षणवाक्यत्वाभावेनप्राप्तेरयोगात् ।पदार्थोऽभिधेय इति पदार्थसामान्यलक्षणवाक्ये अनुयोगिनि स्वत्वनिवेशपक्षेऽव्याप्तिश्च । स्वघटकपदस्मारितातिरिक्ताप्रसिद्धेरिति ध्येयम् । यदप्यपर्यायशब्दानामेकप्रातिपदिकार्थमात्रपर्यवसायित्व लक्षणं पूर्वोदाहृतेनैका या नाम्नो वृत्तिरित्यद्वैतचंद्रिकावाक्येन निष्टंकितम् । तदप्यकिंचित्करम् । वृत्तिपदस्य शक्तिलक्षणान्यतरपरत्वपक्षे संबंधः तादात्म्यमित्यादिके विशिष्टपरवाक्येऽतिव्याप्तेः । असंबंधत्वेनापि तादात्म्यस्यैव प्रकारतया भानात्संसर्गतयापि तस्यैव भानात्संबंधत्वस्यापि किंचित्तादात्म्यरूपत्वेन तादात्म्यपदशक्तिस्मारितातिरिक्तागोचरप्रमाजनकत्वस्याव्याहतेः । न चोक्तरीत्या सर्वेषामपि किंचित्तादात्म्यरूपतया तदतिरिक्ताप्रसिद्धिरिति वाच्यम् । अवृत्तिगगनशशविषाणादीनामेव तथाभूतानां प्रसिद्धेः । संबंधत्वादेस्तादात्म्यरूपत्वानंगीकारेऽपि यत्रोद्देश्यबोधकं विधेयतत्संसर्गघटितधर्मावच्छिन्नलक्षणतात्पर्येणाभ्यारितं तादृशोद्देश्यविधेयं बोधरूपविशिष्टार्थबोधपरवाक्यसामान्येऽतिव्याप्तेः । तद्बोधस्योद्देश्यबोधकनामनिरूपितलक्षणारूपैकवृत्त्युपस्थापितातिरिक्ताविषयकत्वात् । नच स्वघटकनामपदनिरूपितैकवृत्तिग्रहाधीनैकस्मृतिप्रयोज्यबोधजनकवाक्यत्वमिति तस्य निष्कर्षः । अखंडार्थकवाक्यस्थले नामार्थद्वयस्य प्रकारविशेष्यविधया भानोत्तरं वक्ष्यमाणरीत्या बाधग्रहेण वा तात्पर्यानुपपत्त्या वा पुनर्यत्किंचित्पदलक्षणाग्रहाधीनैकस्मृत्यैकप्रातिपदिकार्थमात्रविषयक-

बोधो जन्यत इति तद्बोधमादायैव लक्षणसंगतिः । नच पदानां बहूनां सत्त्वादेकपदलक्षणाधीनैव स्मृतिः कारणमित्यत्र मानाभावः । समानाकारानेकस्मृतीनामेकमात्रवस्त्ववगाहिशाब्दसामग्रीनिवेशे गौरवादेकपदलक्षणाया आवश्यकत्वे विशेष्यबोधपदस्यैव प्राधान्याल्लक्षणांगीकारात् । उक्तविशिष्टार्थपरवाक्यस्थले वाक्यघटकपदद्वयाधीनस्मृतिद्वयघटितसामग्र्यैव शाब्दबोधोदयात्तत्र नातिव्याप्तिः। स्मृतावेवैकत्वाविवक्षणे नामपदद्वयाधीनैकसमूहालंबनस्मृत्या विशिष्टार्थबोधः तत्रातिव्याप्तिः स्यादतो वृत्तावेकत्वनिवेशः । उक्तसमूहालंबनस्मृतेर्वृत्तिद्वयग्रहाधीनत्वान्न दोषः । स्मृतावेकत्वनिवेशे प्रत्येकं पदद्वयेनैकैकवृत्त्या जातस्मृतिद्वयघटितसामग्र्या विशिष्टार्थकवाक्येऽतिव्याप्तिः स्यादिति तन्निवेश इति वाच्यम् । यत्र विषं भुंक्ष्वेति वाक्यजन्यबोधोत्तरं तत्र विरोधग्रहेण तद्वाक्यघटकैकपदमात्रलक्षणया द्विषदन्नं न भोक्तव्यमिति विशिष्टार्थावगाही जातस्तत्रातिव्याप्तेः । नहि तद्घटकैकपदवृत्तिमात्रग्रहाधीनैकविशिष्टविषयकस्मृतिसहकृतोक्तवाक्येन तद्वाक्यतात्पर्यविषयीभूतोक्तधीर्न जन्यते । अखंडार्थपरवाक्येन तु जन्यत इत्यत्र त्वद्वाक्यातिरिक्तं किंचिन्नियामकमस्ति येनोक्तातिव्याप्तिर्न स्यात् । नच विशिष्टविषयकस्मृतेरेकेनैव पदेन जनने शाब्दबोधस्यापूर्वार्थावगाहित्वाभावप्रसंगात् । तद्घटकपदद्वयस्य पृथगर्थद्वयलक्षणामंगीकृत्य तत्र शाब्दबोध उपपादनीय इति वाच्यम् । प्रकृष्टप्रकाशादिवाक्यस्थलेऽपि चंद्रमात्रविषयकस्मृतेः पूर्वमावश्यकत्वे तत्राप्यपूर्वार्थावबोधकत्वप्रसंगात् । तत्र चंद्रस्मृतिं पूर्वमनंगीकृत्याभिहितान्वयवादिमते वक्ष्यमाणरीत्या स्वरूपसत्या एवाज्ञाताया वाक्यलक्षणया बोधकत्वमभ्युपेत्य चंद्रादिस्वरूपमात्रावगाहिबोधांगीकारे त्वदीयलक्षणस्यासंभव एव स्यात् । स्मृत्यघटितसामग्र्या शाब्दबोधजनकत्वं चेद्विलक्षणं निरुच्यते । तदोक्तरीत्या विषं भुंक्ष्वेति वाक्येऽतिव्याप्तिरपरिहार्यैव । ननु वाक्यजन्यप्रमायां विषयतासंबंधेनाज्ञानं सामान्यसामग्री अत एवानुवादवाक्यात्स्मृतिरेव जायते न शाब्दधीस्तथाचाज्ञाननिवर्तकबोधजनकत्वमेव प्रमाणवाक्य आवश्यकं स्मृतेश्चाविद्यावृत्तित्वेनाज्ञानानिवर्तकतया चंद्रस्वरूपविषयकाज्ञाननिवृत्त्यर्थं चंद्रस्मृत्युत्तरमपि तच्छाब्द आवश्यक इति चेन्न । विषं भुंक्ष्वेति वाक्यस्थलेऽपि तथैव संभवेन पूर्वोक्तातिव्याप्तेर्दुर्वारत्वात् । तद्बोध्यार्थस्य विशिष्टरूपत्वेऽपि तद्बोध्यपदद्वयलक्षणाश्रयणस्य गौरवादेव परित्यागात् तस्माद्ब्रह्मानंदोक्तलक्षणमयुक्तमेवेति । यद्यपि स्वघटकयत्किंचिन्नामपदजन्यस्मृतिविशेष्यमात्रविषयकबोधजनकत्वमत्र सुवचम् । विषं भुक्ष्वेत्यादिविशिष्टपरवाक्यैर्विशेष्यस्वरूपमात्रावगाहिबोधानुदयान्नातिव्याप्तिः । नन्वभिधेयः पदार्थ इति पदार्थलक्षणवाक्ये अव्याप्तिः । पदार्थमात्रस्य स्मृतिविषयतया तदन्याप्रसिद्धेः । वस्तुतोऽभिधेयभेदाप्रसिद्धावपि निरूप्यनिरूपकभावापन्नविषयताशाल्यभिधेयभेदभ्रमस्यानाहार्यस्य प्रसिद्ध्या तद्विरोधिबोधजनकस्यास्याखंडार्थवाक्यलक्षणालक्ष्यत्वे बीजाभावात् । एवं ध्वंसादिरूपकिंचिद्वस्तुभिन्ननिखिलप्रमेयार्थकसर्वनामपदघटिते वा तादृशसांकेतिकनामघटिते वा स प्रमेय इति वाक्येऽतिव्याप्तिश्च । तद्वाक्यजन्यविशिष्टावगाहिबोधस्यापि तादृशविशेष्यवाचकपदस्मारितातिरिक्ततादृशध्वंसादिरूपवस्त्वनवगाहित्वात् । प्रमेयत्वेनापि प्रकारकोटौ विशेष्याभिन्नव्यक्तीनामेव स्फुरणादन्यथा तस्याप्रमात्वापत्तेरिति चेन्न । स्वघटकयत्किंचिन्नामपदानिरूपितवृत्तिमात्रग्रहाधीनैकस्मृतिघटितसामग्र्यधीनतादृशस्मृतिविशेषताव्याप्यस्व विषयतात्वावच्छिन्नकबोधजनकत्वमिति विवक्षणेनोक्तदोषवारणात् ।

( टीका ) ब्रह्मविदाप्नोति परमिति प्रस्तुत ब्रह्मस्वरूपमात्रजिज्ञासायां तल्लक्षणं हीदमुच्यते । यथाखल्वस्मिन् ज्योतिर्मंडले कश्चंद्र इति चंद्रस्वरूपमात्रप्रश्ने प्रकृष्टप्रकाशश्चंद्र इति तल्लक्षणाभिधायकं वचनं ।

---

विशिष्टार्थबोधकवाक्यजन्यबोधसामग्रीकोटौ पदद्वयवृत्तिग्रहाधीनभिन्नस्मृत्योः समूहालंबनैकस्मृतेर्वा घटकत्वेऽप्युक्तैकस्मृतिमात्रस्याघटकत्वान्नातिव्याप्तिः । विषं भुंक्ष्वेति वाक्यजन्यबोधस्थले उक्तरीत्यैकस्मृतेर्निवेशांगीकारेऽपि फलीभूतबोधीयविषयतायाः प्रकारतारूपायास्तत्प्रकारे सत्त्वेऽपि तादृशस्मृतिविशेष्यतायास्तत्राभावेनोक्तव्याप्यताभंगादेव नातिव्याप्तिः । व्याप्तिश्च स्वव्यापकसत्कत्वमेवेति न पदार्थलक्षणवाक्येऽव्याप्तिः । घटः कलशः इति वाक्यजन्यबोधसामग्री यदि स्मृतिघटिता तदा पदद्वयवृत्तिग्रहाधीनस्मृत्योरेकस्मृतेर्वा निविष्टत्वान्नातिव्याप्तिः । तत्रैकमात्रपदवृत्तिग्रहाधीनस्मृतेरेव तत्र सामग्रीशरीरानिवेशे पदद्वयघटितवाक्यस्य तत्र कारणताया निर्युक्तिकत्वापातात् । अखंडार्थकवाक्यस्थले तु द्वारीभूतबोधस्य स्वस्वार्थस्मृतिद्वारा समस्तपदैर्जननानंतरं तात्पर्यवशात्तद्घटकैकनामपदार्थीनस्मृतिसहकृततादृशवाक्येनैवाखंडार्थावगाहिबोधोत्पत्तेर्विशिष्टवाक्यस्य तत्र कारणत्वं युक्तमेव । अन्यथा मध्यवृत्तिबोधस्य द्वारत्वानुपपत्तेः । अतोऽत्रापर्यायशब्दानामिति न देयमेव । उक्तार्थतात्पर्यग्राहकतया तस्योपयोगः । एवं सांसर्गिकविषयताशून्यशाब्दधीजनकतावच्छेदकं यत्पदोत्तरयत्पदत्वं तत्त्वमखंडार्थत्वमिति संसर्गागोचरत्वघटितलक्षणमपि सुवचम् । घटः कलश इत्यादिरुच्चैर्नीचैरित्यादेश्च मिलित्वैकार्थबोधकत्वे त्वपर्यायशब्दघटितत्वं वक्तव्यम् । तथाप्युक्तैकस्मृतिघटितसामग्र्याः आद्यस्य तद्रीत्यैव वक्ष्यमाणरीत्या परमतेऽप्यभावात् । सांसर्गिकविषयताशून्यबोधस्य चाग्रे निराकरिष्यमाणतया लक्षणलक्ष्यस्वरूपाप्रसिद्धिरेव दोषोऽनुसंधेयः । 'न किंचिद्विदितं कृष्ण त्वयेत्थं येन मां प्रति ॥ त्वादृशा न मया ज्ञातेत्युच्यते सत्यवादिना ' इति श्लोकेऽतिव्याप्तिश्च । अत्र पांचाल्या कुरुराजापकृतया कृष्णं प्रति भ्रातृत्वसंबंधमनुस्मरंत्या सकोपमुच्यते । विपरीतलक्षणया तच्छ्लोकेन त्वया सर्वं ज्ञातमित्यर्थोऽवगम्यते । अतस्तज्जनकलक्षणाधीनस्मृतिविशेष्यताव्याप्यत्वस्योक्तशाब्दविषयतायाः सत्त्वात् । स्मृतौ सर्वस्यापि विशेष्यत्वादिति दिक् । तदनत्सर्वं शिष्यैर्बोध्यता मित्याशयेन ग्रंथगौरवभयाच्च नाखंडार्थलक्षणदूषणं विशेषतः प्रदर्शितमिति ध्येयम् । अत्र तत्त्वमस्यादिवाक्यसाधारणरूपेण पक्षत्वे वक्ष्यमाणहेतोर्भागासिद्धिः स्यादिति वेदांतवाक्यं विभज्य वाक्यविशेष एव पक्षत्वेनांगीकृतः । अखंडार्थनिष्ठं सांसर्गिकविषयताशून्यबोधजनकं एकप्रातिपदिकार्थपर्यवसायि वेत्यर्थः । ब्रह्मस्वरूपमात्रप्रश्नविषयीभूतार्थबोधेच्छाधीनवाक्यत्वरूपब्रह्मप्रश्नोत्तररूपवक्ष्यमाणहेतुमुपपादयति । ब्रह्मविदिति । प्रस्तुतब्रह्मस्वरूपेति । मोक्षहेतुज्ञानविषयत्वेन प्रस्तुतेत्यर्थः । ब्रह्मस्वरूपेतरज्ञानस्य मोक्षाहेतुत्वान्न स्वरूपातिरिक्ते जिज्ञासोचितेति भावः । लक्षणं हीति । लक्षणवाक्यत्वरूपवक्ष्यमाणहेत्वंतरोपपादनायेदमुक्तमित्यवधेयम् । प्रकृष्टप्रकाशश्चंद्र इति दृष्टांतवाक्ये हेतुसाध्ये सिद्धवत्कृत्योपपादयति । यथा खल्विति । पूर्वोक्तं प्रतिकूलतर्कपराहतौ पर्य-

( टीका ) यथा च तत्र प्रकृष्टप्रकाशपदयोश्चंद्रप्रातिपदिकार्थमात्रपरत्वेऽपि न पर्यायत्वम् प्रकर्षादिगुणयोगाभिधानमुखेन लक्षणया तत्परत्वात् । तथा सत्यादिपदानामखंडार्थनिष्ठत्वेऽपि परापरसामान्यवाचिनां शबले गृहीतसंगतीनां तेषां लक्षणया ब्रह्मस्वरूपमात्रपरत्वान्न पर्यायत्वम् ।

---

वासितं पर्यायत्वापत्तिदोषमुद्धर्तुमाह । यथा चेति । प्रकर्षादिगुणेति । प्रकृष्टप्रकाशादिगुणसंबंधाभिधानद्वारेत्यर्थः । लक्षणयेति । विशिष्टवाक्यस्य वा तद्घटकप्रत्येकपदयोर्वा तद्घटकैकनाम्नो वा यथामतं शुद्धस्वरूपमात्रलक्षणयेत्यर्थः । तत्परत्वात् । शुद्धस्वरूपमात्रबोधे परमतात्पर्यशालित्वात् । अयमभिप्रायः । अज्ञातचंद्रस्वरूपमात्रः पुरुषस्तत्स्वरूपमात्रजिज्ञासया कश्चंद्र इति पृच्छति । तं प्रति वक्त्रा अज्ञाननिवर्तकतत्स्वरूपमात्रबोधाय वाक्यं प्रयोक्तव्यम् । अधिकविषयबोधतात्पर्ये वाक्यस्य पुरुषस्य चाजिज्ञासिताभिधायकत्वाभिधातृत्वरूपौ दोषौ प्रसज्येयाताम् । तादृशफलीभूतबोधो यादृशवाक्यं विना न निर्वहति तावत्पदघटितमेव प्रयोक्तव्यम् । केवलं चंद्र इत्येतावन्मात्रे प्रयुक्ते चंद्रे प्रकृष्टप्रकाशाश्रयत्वाभावसंदेहाविपर्ययानिवृत्तिर्न जायते । स्वरूपविषयकाज्ञानस्यानिवृत्तत्वात् । अतः प्रकृष्टप्रकाशादिरूपलक्षणबोधकं वाक्यं प्रयोक्तव्यम् । तेन च चंद्रे प्रकृष्टप्रकाशादितादात्म्यबोधानंतरमस्य वाक्यस्य नैतावन्मात्रे तात्पर्यमाप्तस्य मदजिज्ञासिताभिधायकत्वापत्तेः । किंतु मज्जिज्ञासितस्वरूपमात्रबोधे तात्पर्यमिति प्रतिसंधानेन चंद्रादिपदलक्षणया स्वरूपमात्रशाब्दो जायते । तस्य स्वरूपविषयकाज्ञाननिवर्तकत्वं युज्यते । तादृशतादात्म्यधीद्वारकस्वरूपमात्रबोधत्वेनैवाज्ञाननिवर्तकत्वात् । तथाच तादृशवाक्यघटकपदयोर्न सहप्रयोगानर्हत्वरूपपर्यायत्वप्रसक्तिरिति । एतेन प्रकृष्टप्रकाशपदचन्द्रपदयोर्विभिन्नधर्मावच्छिन्नवाचित्वादेवापर्यायत्वशंकानुदयादेतावदुपपादनमकिंचित्करमिति शंकानवकाशः । एकमात्रबोधकत्वे एकवाक्ये तदर्थं सहप्रयोगानर्हत्वरूपपर्यायत्वापत्तेरेव निराकृतत्वात् । दार्ष्टांतिकेऽपि तद्दोषं परिहरति । तथेति । परापरेति । परजातिः सत्वं अपरजातिर्ज्ञानत्वानंदत्वे तद्वाचिनामित्यर्थः । भट्टमते जातौ शक्त्यंगीकारादेवमुक्तिः । शबले गृहीतसंगतीनामिति । शबले शक्तिग्रहविषयाणामित्यर्थः । अयं भावः । त्रिकालबाध्यत्वाभावः सत्वरूपनिष्ठस्तत्स्वरूपोऽतः स एव सत्ताजातिरित्युच्यते । तत्र सर्वपदार्थानां तादात्म्येनानारोपितया तस्याः सर्वानुस्यूतत्वेन जातित्वसाम्यात् जातित्वव्यवहारः । तस्य घटादौ वृत्तित्वाभावात् न जातित्वम् । सत्ता च कल्पितधर्मभावाद्ब्रह्मण्येव स्वोपहिते वर्तते । एवं प्रमाणज्यन्यांतःकरणवृत्त्युपहितचिद्व्यक्तिषु ज्ञानत्वजातिः । तादृशोपहितचिद्व्यक्तीनां परस्परं स्वसमानसत्ताकभेदवत्वेन बहुत्वात् तद्वृत्तिज्ञानत्वस्य जातित्वम् । एवमानंदत्वजातिरपि विषयसंसर्गजवृत्त्युपहितचित्स्वेव स्वीक्रियते । तथाच तत्तदुपहितचितामेव शबलपदार्थत्वात्तत्र तत्र तच्छब्दशक्तिग्रहो भवति । तदुक्तं कल्पतरौ । सत्यत्वादिविशिष्टशबलब्रह्मवाचिनां सत्यादिपदानां शुद्धे ब्रह्मणि लक्षणेति । अधिकं दूषणग्रंथव्याख्यावसरे विवेचयिष्यते । नच सत्यत्वादीनामुपहितवृत्तित्वात्कथं ब्रह्मलक्षणत्वमिति वाच्यम् । उपहितवृत्तेरपि शुद्धवृत्तित्वांगीकारेण सामंजस्यादित्याशयात् । लक्षणयेति । नच सत्यत्वादिधर्माणां शुद्धेंगीकारेऽन्वयानुपपत्यभावात्कुतो लक्षणेति वाच्यम् ।

(टीका) न चैवं सति प्रतिपिपादयिषितार्थस्यैकेनैव पदेन लक्षितत्वात्पदांतरवैयर्थ्यमिति वाच्यम् । लक्ष्यार्थभेदाभावेऽपि प्रतिपदमारोपितासत्यत्वाद्यनेकाकारव्यवच्छेदस्य प्रयोजनत्वात् । यथा नक्षत्रादिव्यवच्छेदप्रयोजनत्वेन न प्रकृष्टादिपदवैयर्थ्यम् ।

---

निष्प्रकारकबोधतात्पर्येणैवास्य वाक्यस्य प्रवृत्तत्वात्तन्निर्वाहायैव लक्षणा युक्तेति भावः । तथाच सत्यत्वादिविशिष्टबोधानंतरं वाक्यलक्षणया तद्घटकपदलक्षणया वाऽखंडार्थबोधोदयो भवतीति भावः । ननु तर्हि वाक्यलक्षणापक्षेऽपि वाक्यस्य सत्याद्येकतरपदघटितत्वेऽप्युद्देश्याखंडबोधनिर्वाहादितरपदोपादानवैयर्थ्यम् । पदलक्षणापक्षे तु सुतरामेकेनैवोद्देश्यसिद्धेः । नच प्रतिपत्तृपुरुषभेदेन तदुपादानमिति युक्तम् । अयं ज्ञानपदेन बोधनीयोऽयं सत्यपदेन बोधनीय इत्यत्र शाखाभेदेन कर्मानुष्ठानभेद इव मानाभावादित्याशङ्कते । न चैवमिति । लक्ष्यार्थभेदेति । लक्ष्यतावच्छेदकस्य वा लक्ष्यवस्तुनो वा भिन्नत्वाभावेऽपीत्यर्थः । तथात्वे फलीभूतबोधे तद्धानार्थमेव पदांतरमावश्यकं स्यादिति भावः । प्रतिपदमित्यस्य सत्त्वादित्यनेनान्वयः । आरोपितेति । शून्यवादिनैयायिकादिरीत्याऽनृतत्वाज्ञानत्वानानंदत्वादेर्ब्रह्मण्यारोपितस्याभावनिश्चयरूपस्य प्रयोजनस्येत्यर्थः । सत्यमेव कस्यचित्पदस्य तद्घटितवाक्यस्य वा लक्षणामात्रेण स्वरूपमात्रावगाहिबोधमुत्पत्तुमर्हति । तथाऽप्येकसत्यपदसत्त्वे सत्त्वरूपविशेषणस्य द्वारीभूतबोधे भानेनानृतव्यावृत्तिनिश्चयसंभवेऽपि नाज्ञानव्यावृत्तिर्निश्चेतुं शक्यते । एवं ज्ञानपदमात्रसत्त्वेनानृतव्यावृत्तिनिश्चयः स्यात्ततश्च नासंकीर्णब्रह्मस्वरूपसिद्धिः स्यादतस्तत्तद्व्यावृत्तिबोधनिर्वाहकतया द्वारीभूतबोधे तज्ज्ञानार्थं तेषां पदानां सार्थक्यमिति भावः । तादृशव्यावृत्तिधीद्वारकब्रह्मस्वरूपनिश्चयस्यैव ब्रह्मस्वरूपविषयकाज्ञानसंशयादिनिवर्तकत्वात्तत्तदावश्यकमिति भावः । यथा चेति । नक्षत्रादीति । प्रकाशाश्रयत्वमात्रस्य नक्षत्राद्यव्यावर्तकत्वात्तद्व्यावृत्तिधीद्वारकचंद्रस्वरूपमित्यर्थं चंद्रस्वरूपमात्रतात्पर्यकेऽपि वाक्ये यथा न प्रकृष्टादिपदवैयर्थ्यं तथेति भावः । इत्थं हि परेषां प्रक्रिया । सत्यं ज्ञानमिति वाक्येन ब्रह्मविशेष्यकसत्यत्वादिधर्मोपहिततादात्म्यावगाहिनी धीर्जायते । ततो लक्षणवाक्यस्य लक्ष्यस्वरूपमात्रतात्पर्यकत्वनिश्चयबलेन तद्वाक्यघटकसत्यादिपदलक्षणया वा स्वबोध्यसंबंधस्यैव लक्षणात्वांगीकाराद्वाक्यलक्षणया वा सत्यत्वज्ञानत्वाद्युपलक्षितस्वरूपमात्रावगाहिशाब्दबोधोंतरं जायते । नच काकेनोपलक्षणेन देवदत्तगृहवृत्त्युत्तृणत्वादिरूपोपलक्ष्यतावच्छेदकधर्मांतरोपस्थापनवदत्राप्युपलक्ष्यतावच्छेदकधर्मांतरोपस्थापनावश्यकत्वे कथं स बोधः शुद्धस्वरूपमात्रावगाहीति सांप्रतम् । धर्मोपलक्ष्यकस्य तथात्वेऽपि स्वरूपोपलक्ष्यकस्य स्वरूपमात्रबोधजनकत्वाभ्युपगमात् । प्रकृष्टप्रकाशादिवाक्ये तथा दृष्टत्वात् । तथाच ब्रह्मपदलक्षणाजन्यांतःकरणवृत्तिविषयीभूतं चिन्मात्रं तादृशवृत्त्युपहितं लक्ष्यम् । सत्यादिपदलक्षणाजन्यचिन्मात्रविषयिकांतःकरणवृत्त्युपहिता चित् स्वरूपलक्षणम् । लक्ष्यात्यंताभिन्नस्यैव स्वरूपलक्षणत्वं तद्भिन्नं सल्लक्ष्यव्यावर्तकं यत्तत्तटस्थलक्षणमित्यभ्युपगमात् । लक्ष्यलक्षणावगाह्यखंडस्वरूपविषयकबोधेऽप्येकस्यैव ज्ञातत्वेनोद्देश्यत्वं अज्ञाननिवर्तकवृत्तिविषयत्वेन विधेयतापि संगच्छतः । ब्रह्मत्वाद्यवच्छिन्नविशेष्यकसत्यत्वादिवैशिष्ट्यविषयकशाब्दधीद्वारा तादृशवा-

क्यजन्यस्वरूपमात्रविषयकशाब्दत्वावच्छिन्नस्यैव स्वरूपमात्रविषयकाज्ञाननिवृत्तिहेतुत्वात् । अखंडार्थबोधस्याज्ञाननिवर्तकत्वात् । उद्देश्यताविधेयत्वे च परस्परं निरूप्यनिरूपकभावापन्ने द्वे । एकस्या एव वा तस्याः रूपभेदेन निरूप्यनिरूपकभावः । सर्वथा सांसर्गिकविषयता परं नास्ति । अत्यंताभिन्नस्वरूपे संसर्गभानायोगात् । नच किंचिन्निरूपितविषयतात्वं सांसर्गिकविषयतानिरूपितत्वव्याप्यमिति नियमः। सांसर्गिकविषयतायामेव व्यभिचारात् । उक्तस्वरूपलक्षणेन लक्ष्यस्यानृतादीतरभेदानुमितिर्जायते अर्थापत्तिर्वा । तत्प्रकारश्च अनृतादिव्यापकाभावप्रतियोग्युक्तसत्यादिपदजन्यवृत्तिविषयवानयं ब्रह्मपदजन्योक्तवृत्तिविषय इति परामर्शेन ब्रह्मपदजन्यवृत्तिविषयोऽनृतादिभिन्न इत्यनुमितिः। अर्थापत्तिस्तु यद्ब्रह्मपदलक्षणाजन्यधीविषयत्वोपहितं तत्रानृतादिव्यावृत्तिं विना तन्निष्ठं सत्यादिपदजन्याखंडाकारधियोपहितमनुपपन्नमित्युनुपपत्तिज्ञानेनोक्तानुमितिसमानाकारा जायते । तादृशतादृशवृत्तिविषयत्वोपहितचिद्रूपहेतुपक्षज्ञानं च तादृशवृत्त्युत्पत्त्यनंतरं तद्ग्राहकसाक्षिणैव भवति । न चाखंडस्वरूपबोधोत्तरमुक्तरीत्या व्यावृत्तिधीः किमर्थमपेक्ष्यत इति वाच्यम् । इतरव्यावृत्ततत्त्वंपदार्थज्ञानोत्तरमेव महावाक्येन तयोरभेदबोधनेन भेदभ्रमनिरासार्थत्वात् । सर्वत्र लक्षणज्ञानस्य व्यावृत्तिफलकत्वेन क्लृप्तत्वात्प्रकृष्टप्रकाशादिवाक्येऽपि चंद्रस्वरूपमात्रबोधोत्तरं तादृशज्ञानविशेषविषयत्वोपहितचंद्रस्वरूपहेतुनैवेतरव्यावृत्तिधीजननात् । तज्ज्ञानस्य चासंकीर्णचंद्रादिव्यवहारफलकत्वादित्येकः पक्षः । अपरः सत्यादिवाक्यं अनृतादिव्यावृत्तिज्ञानद्वारा अखंडार्थबोधं जनयतीति अखंडार्थबोध एव फलं व्यावृत्तिज्ञानं द्वारमिति । उक्तं हि सत्ये ब्रह्मणि सत्यादिशब्दा व्यावृत्तिद्वारा पर्यवस्यंतीति । सत्यत्वादिविशिष्टस्य ब्रह्मणि बोधोत्तरमनृतादिव्यावृत्तिधीर्ब्रह्मणि जायते सत्यत्वादिहेतुभिरेव । ततस्तद्द्वाराखंडार्थधीर्जायते । नन्वेतदयुक्तम् । शाब्दबोधे हि पदतदर्थोपस्थित्यादीनामेव कारणत्वं न व्यावृत्तिधियं इति सार्वत्रिकी रीतिः । प्रकृते चासत्यादिव्यावृत्तिर्न पदार्थो नाप्यवांतरवाक्यार्थः । कथं तज्ज्ञानमखंडार्थबोधहेतुरिति चेन्न । आपाततः सत्यादिवाक्यात् ज्ञाने जातेऽपि तत्र तात्पर्यसंदेहाधीनाप्रामाण्यसंदेहादिना जायमानज्ञानं निश्चयात्मकमप्रामाण्यसंदेहानास्कंदितं च न भवतीति स्वरूपमात्रविषयाविद्यानिवृत्त्युपधायकं न भवतीत्यतो विचारनिर्णीततात्पर्यकसत्यादिवाक्येन सत्यत्वादिविशिष्टबोधोत्तरं सत्त्वादिलिंगकव्यावृत्तिज्ञानवशादनृतादितादात्म्यभानाच्छुद्धस्वरूपमात्रविषयनिश्चयात्मकमनावृतप्रामाण्यकं स्वरूपमात्रविषयकाज्ञाननिवृत्त्युपधायकं ज्ञानं जायत इत्यन्वयव्यतिरेकबलादेव व्यावृत्तिज्ञानस्य द्वारत्वाभ्युपगमात् । नन्वथापि पदांतराणां वैयर्थ्यम् । एकपदजन्यव्यावृत्तिज्ञानेनापि तादृशबोधसंभवात् । यदि सत्यपदेनानृतव्यावृत्तिसिद्ध्या अनृततादात्म्याभानेऽपि ज्ञानपदाभावेऽज्ञानव्यावृत्त्यसिद्ध्या जडतादात्म्याभानापत्त्योक्तफलीभूतबोधासिद्धिः स्यादतो ज्ञानपदसार्थक्यमित्युच्यते तर्ह्यनानंदादिव्यावृत्तिसिद्ध्यर्थमानंदमपि प्रयोक्तव्यं स्यादिति चेदिष्टापत्तिरेव । आनंदपदस्यात्राश्रयणेऽपि विज्ञानमानंदं ब्रह्मेति वाक्यांतरोक्तानंदादीनामुक्तव्यावृत्तिसिद्धये उपसंहारः कर्तव्यः । एवं स्थूलादिव्यावृत्तिसिद्धये अस्थूलमनण्वित्याद्युक्तास्थूलत्वादीनां नेति नेत्यादीनां नेह नानेत्यादीनां चोपसंहारः कर्तव्यस्तथा च सर्वैर्मिलित्वा तादृशफलीभूतबोधो जायते । अतो न कस्यापि वैयर्थ्यम् । परं त्वानंदा-

दादिभिरनानंदादिव्यावृत्तिरार्थिकी सिध्यति । अस्थूलमित्यादिभिस्तु साक्षादेव शब्द-मर्यादया । आनंदादीनामुपसंहारस्तु गुणोपसंहारपादे अभिहितः आनंदादयः प्रधानस्य, अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तमिति सूत्राभ्याम्। यत्र शाखायामानंदादिपदानामन्यतमं न श्रूयते तत्रापि तदुपसंहर्तव्यम् । यतस्तत्प्र-धानस्य ब्रह्मणोऽनृतादिव्यावृत्तस्वरूपस्य बोधोपायभूतमित्याद्यसूत्रार्थः । द्वितीयस्य तु बृहदारण्यके एतद्वै तदक्षरमित्युपक्रम्योक्तत्वेनाक्षरधियोऽस्थूलत्वादयः । अक्षरस्य धीये-भ्यस्त इति व्युत्पत्तेः । ते यत्र यत्तदद्रेश्यमित्यादौ न श्रूयंते तत्रापि तेषामुपसं-हारः । सामान्यात् प्रपंचमात्रप्रतिषेधेन ब्रह्मप्रतिपादनस्य सर्वत्र समानत्वात् । तद्भा-वात् । अथ परा यया तदक्षरमधिगम्यते । यत्तदद्रेश्यमिति वाक्येऽक्षरस्य प्रतिपाद्य-तया भावात् । यथा जामदग्न्येऽहीने पुरोडाशिनीषूपसत्सु चोदितासु पुरोडाशप्र-धानमंत्राणामग्निर्वै होत्रं वेरऽध्वरमित्यादीनामुद्गातृवेदोत्पन्नानामध्वर्युभिः संबंधो भवति। पुरोडाशप्रधानस्याध्वर्युकर्तृकत्वात् । अंगानां च प्रधानतंत्रत्वात् । तदुक्तं पूर्वमीमां-सायाम् । गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोग इत्यत्र । तथेहाप्यक्षररूप-प्रधानतंत्राणामस्थूलत्वादीनां यत्र क्वचिदुत्पन्नानां सर्वत्र विद्यमानेन प्रधानेनाक्षरेण संबंध इत्यर्थः । न च ज्ञानत्वानंदत्वसत्यत्वमात्राणामेकैकानामतिव्याप्त्यभावात् मिलितो-पादानं लक्षणे व्यर्थमिति वाच्यम् । अतिव्याप्त्यादिवारणमेव न लक्षणघटकपदप्रयोज-नमिति नियमः । किं त्वभिमतलक्ष्यस्वरूपप्रमितिः । प्रकृते च ज्ञानपदमात्रोपादाने शून्य-वादिनापि अनृतज्ञानस्वरूपांगीकारात्तन्मतव्यावृत्तब्रह्मस्वरूपसिद्धिर्न स्यात् । एवं सत्य-ज्ञानपदयोः सत्यानंदपदयोर्वोपादाने नैय्यायिकादिभिस्तादृशज्ञानानंदयोः परस्परं भिन्नयोः स्वीकृतत्वात् । तन्मतसिद्धापेक्षया व्यावृत्तस्वरूपं न सिध्येदिति मिलितोपादानम्। तथाच ज्ञानातिप्रसंगनिरास एव पदानां फलं बोध्यम्। नन्वेवमपि मिथ्यात्वाभावरूपसत्य-त्ववैशिष्ट्यज्ञानस्यैवानृतत्वादिसंशयनिवर्तकत्वात्तन्मात्रद्वारकाखंडज्ञानेनापि शून्यवादि-व्यावृत्तं ब्रह्म सिध्यतीत्यनृतादिव्यावृत्तिनिश्चयस्य द्वारत्वाभ्युपगमवैय्यर्थ्यम् । एवं ज्ञान-त्वादिवैशिष्ट्यनिश्चयस्यैव जडत्वादिसंशयविरोधित्वं संभवतीति ज्ञानपदस्थलेऽपि तदुत्तर-व्यावृत्तिधियो द्वारत्वं व्यर्थम । एवमनंतपदेनापरिच्छिन्नबोधवत्सत्यपदेनापि अनृतभि-न्नवाचिनाऽनृतव्यावृत्तेः साक्षादेव सिद्धस्तस्याः सत्यपदस्थले आर्थिकत्वो-क्तिरप्ययुक्तेति चेन्न । अनृतत्वस्य पूर्वं पंचधा निरुक्ततया तत्रैकानृतत्वाभावरूपस-त्यस्य सत्यपदेन बोधनेऽप्यन्यविधानृतत्वसंशयनिरासायैकविधसत्यत्वहेतुकनानावि-धानृतव्यावृत्तिग्रहस्य द्वारत्वाभ्युपगमस्याफलयात् । नच पूर्वमनृतत्वाद्यंतराभावव्याप्यत्व-विषयकोद्बुद्धसंस्कारसहितैकसत्यत्वशाब्दबोधस्तद्ग्रहप्रतिबंधका भवतीति वाच्यम् । नियमेन तादृशसंस्कारादिसत्त्वे मानाभावेन तदुत्तरकाले व्याप्तिग्रहाधीनानुमितेरावश्य-कत्वात् । किंच मिथ्यात्वाभावज्ञानज्ञानत्वज्ञानादीनां मिथ्यात्वव्याप्यत्वानयं ज्ञानत्वाभाव-व्याप्यत्वानयमित्यादिबुद्धिविरोधित्वात्तच्छंकानिवृत्तये शाब्दसत्यत्वज्ञानत्वादिलिंगकता-दृशव्याप्यवद्व्यावृत्तिधीर्द्वारतयाऽवश्यमभ्युपेयैवेत्युक्तमिति । तथा चोक्तरीतिद्वयेन प्रवृत्तपरप्रक्रियायां न कस्यापि वैय्यर्थ्यं पर्यायत्वं चेति पराभिमानः । यथोक्तमानं-दबोधेन । लक्ष्यार्थभेदाभावेऽपि व्यवच्छेद्यविभेदतः ॥ विज्ञानानंदपदयोः पर्यायव्यर्थते न हीति ।

(टीका) तदयं प्रयोगः । सत्यज्ञानादिवाक्यमखंडार्थनिष्ठम् । लक्षण वाक्यत्वात् । प्रकृष्टप्रकाशश्चंद्र इत्यादिवाक्यवत् । तथा सत्यज्ञानादिवाक्यं ब्रह्मस्वरूपमात्रपरम् । तत्प्रश्नोत्तरत्वात् । यद्यत्स्वरूपमात्रप्रश्नोत्तरं तत्तत्स्वरूपमात्रपरम् । यथोदाहृतं वाक्यम् । एवं तत्त्वमसीत्यादि ब्रह्मात्मतादात्म्यपरमपि वाक्यमखंडार्थनिष्ठम् । कोऽहमिति स्वरूपमात्रजिज्ञासायां ह्येतदुच्यते । किंच न तावदत्र देवदत्तस्य गौरितिवद्विशिष्टार्थता । समानाधिकरणत्वात् । नापि मृद्घटो नीलोत्पलमितिवत् । अकार्यकारणद्रव्यनिष्ठत्वात् । नाप्यभेदविशिष्ट बोध्यम् ।

---

तदयं प्रयोग इति । तत् तस्मात् । सत्यज्ञानादिवाक्यस्याखंडार्थकत्वे पर्यायत्वापत्तिरूपप्रतिकूलतर्कानुत्थितेरित्यर्थः । अयं प्रयोगः संभावित इति शेषः । लक्षणवाक्यत्वात् । इतरव्यावृत्तिधीपरवाक्यत्वात् । अखंडार्थनिष्ठं स्वघटकपदस्मारितान्याविषयकप्रमाजनकम् । यद्यन्निष्ठस्येतरभेदस्य ज्ञानपरं तत्तत्स्वरूपान्याविषयकप्रमाहेतुरिति सामान्यमुखव्याप्तेः पर्यवसानं स्मारितांतस्य साध्ये निवेशे प्रयोजनाभावात् । मन्मत इतरव्यावृत्तौ तात्पर्याभावस्य वक्ष्यमाणत्वेऽपि परमते तात्पर्यविषयकत्वान्न हेत्वासिद्धिः । यावंति लक्षणवाक्यानि तावन्मात्रमुख्यविशेष्यकधर्मिमुख्यविशेष्यत्वावच्छिन्नस्वमतसाधारणो हेतुरिति परैरेव व्याख्यातम् । तत्प्रश्नोत्तरत्वादिति । तन्मात्रविषयकबुभुत्सानिवर्तकधीमात्रपरवाक्यत्वादित्यर्थः । एवं योऽयं विज्ञानमयः प्राणेषु हृद्यंतर्ज्योतिः पुरुष इति त्वंपदार्थशोधकवाक्यं पक्षीकृत्य जीवस्वरूपमात्रपरत्वं तत्स्वरूपमात्रप्रश्नोत्तरत्वहेतुना साधनीयम् । एतन्न्यायेन सुज्ञानत्वादत्र न प्रदर्शितम् । महावाक्यपक्षकानुमाने उक्ताद्यहेत्वसंभवस्तस्य लक्षणवाक्यत्वाभावात् । अतो द्वितीयहेतुमेवाह । कोऽहमितीति । अत्र ब्रह्मविदाप्नोति परमित्यत्र च श्रूयमाणप्रश्नवाक्याभावेऽपि प्रश्नवाक्यमध्याहार्यमेव । अन्यथैतद्वाक्यस्याजिज्ञासिताभिधायकत्वापत्तेरतो नासिद्धिरिति द्रष्टव्यम् । महावाक्यस्याखंडार्थत्वे अकारणकार्यद्रव्यनिष्ठत्वे सति समानाधिकारणत्वादिति हेत्वंतरं विवक्षुस्तस्याप्रयोजकत्वव्यभिचारप्रतिकूलतर्कपराहत्यादिपरिहारं सूचयन् संभावितप्रकारान् प्रकृते प्रतिक्षिपति । किंचेत्यादिना । विशिष्टार्थतेति । अभेदातिरिक्तसंबंधेन प्रातिपदिकार्थप्रकारकबोधजनकत्वं विभक्त्यर्थः संसर्गतया भासत इति मतेनेदम् । समानाधिकरणत्वात् । स्वोत्तरविभक्तिविरुद्धविभक्तिरहितं वा स्वसमानविभक्तिकं वा यन्नामपदं तत्समभिव्याहृतनामपदत्वादित्यर्थः । नामार्थद्वयस्य विभक्त्यर्थद्वारा भेदेनान्वयस्याव्युत्पन्नत्वादित्यर्थः । नापीति । इतिवदिति । तादात्म्यसंसर्गेणैकस्मिन्नपरप्रकारकमिति शेषः । विशिष्टार्थतेत्यस्यैवोक्तार्थकतयाऽनुषंगो वा । अकार्यकारणद्रव्येति । उपादानोपादेयभावापन्नद्रव्यपरं यत्तदन्यत्वे सति द्रव्यमात्रबोधकपदद्वयघटितत्वादित्यर्थः। मृद्घट इत्यत्र सत्यंतदलेन नीलमुत्पलमित्यत्र विशेष्यदलेन न व्यभिचार इति भावः। नीलादिपदानां गुणवाचकत्वमेवेति हृदयम् । उक्तहेतुसत्त्वे तादात्म्यादिसंसर्गेण किंचित्प्रकारकत्वानुपपत्तावप्यैक्यसंबंधेनैकस्मिन्नपरप्रकारकत्वमस्त्वतोऽप्रयोजकोऽयं हेतुरित्याशंकापरिहारायाह । नापीति । अभेदविशिष्टम् ऐक्यसंबंधेन किंचिद्विशिष्टम् । तादात्म्यं भेदाभेदनियतं धर्मधर्मिभावनिर्वाहकमैक्यं तु तदनिर्वाहकमत्यंताभेदरूपं स्वस्मिन्स्वस्य संसर्गो भवतीत्यतोऽ

(टीका) स्वरूपाभेदस्य सिद्धत्वात्। तच्छब्दार्थेनाभेदस्य विरुद्धत्वेन बोधयितुमशक्यत्वात्। अतस्तत्र स्वार्थैकदेशत्यागलक्षणया भेदभ्रमव्युदासद्वारेण स्वरूपमात्रपर्यवसानमेव। अत एव न पर्यायत्वेन व्यर्थताप्रसंगः। यथा खलु कोऽयमित्यपेक्षायामुक्ते सोऽयं देवदत्त इति वाक्ये पदत्रयस्य देवदत्तस्वरूपमात्रपर्यवसानेऽपि विशिष्टाभिधानद्वारेण भागत्यागलक्षणया प्रवृत्तेर्न पर्यायत्वम्। भेदभ्रमव्युदासेन सार्थक्यं च।

---

नयोर्भेद इत्यभिमानः। वस्तुतः सर्वत्रैक्यमेव संसर्गः। स च क्वचिद्भेदसहितः क्वचिच्च विशेषसहितश्च धर्मधर्मिभावनिर्वाहको भवति। युक्तमेवैतद्वक्ष्यतेऽपि। सिद्धत्वादिति। स्वरूपमात्र स्वरूपमात्रभेदग्रहस्याहार्यतया जिज्ञासानुत्पादकत्वेन प्रश्नमूलभूतजिज्ञासाप्रत्यविषयत्वादित्यर्थः। तथाच तत्प्रतिपादने उत्तरवाक्यस्याजिज्ञासिताभिधायकत्वापत्तिरिति भावः। यद्वा सिद्धत्वात् मुख्यविषयरूपतयैव सिद्धत्वात्। तथाच भेदाभावरूपैक्यस्य विशेष्यात्यंताभिन्नत्वान्न तस्य संसर्गतया भानं स्वीक्रियते। ऐक्ये सामानाधिकरण्यमिति व्यवहारस्याखंडार्थबोधकत्वमित्येवार्थ इति भावः। तच्छब्दार्थेनेति। तच्छब्दार्थतावच्छेदकीभूताविद्याबिंबत्वादिरूपधर्मविशिष्टेनोपहितेन चेत्यर्थः। अभेदस्य तादात्म्यस्य त्वंपदार्थस्य स्वस्य श्वेतकेतुना ज्ञाततयोद्देश्यकत्वात्तत्पदार्थस्याज्ञातस्य विधेयत्वात् तत्पदस्य प्रथमतः सत्त्वेऽपि उत्तरत्र योजनया विधेयसमर्पकत्वमनुसृतम्। एकदेशत्यागेति। जहदजहल्लक्षणयेत्यर्थः। इदं च पदानां स्वशक्यतावच्छेदकविशिष्टविषयकधीजननानुकूलशक्तत्वमेव विशेष्यमात्र इतरपदार्थावगाहिबोधो गौरनित्य इत्यादौ लक्षणयैवेति जरन्नैयायिकैकदेशिमतमनुसृत्य। विशिष्टशक्तपदेनापि विशेष्यमात्रबोधो विशेषणांशे बाधग्रहादिसहकृतशक्त्यैवेति पक्षाश्रयणेन लक्षणेति परैरुक्तम्। भेदभ्रमेति। जीवत्वोपलक्षितेश्वरत्वोपलक्षितचेतनयोर्भेदभ्रमनिरासरूपप्रयोजनेन निमित्तेन स्वरूपमात्रबोधजनकत्वमित्यर्थः। अत एवेति। प्रत्येकं पदयोर्भिन्नधर्मावच्छिन्नबोधकत्वान्न पर्यायत्वम्। लक्षणयोक्तभ्रमनिवर्तकबोधजननार्थत्वान्न वैयर्थ्यमित्यर्थः। दृष्टांतोपपादनेनोक्तमर्थं संभावयति। यथेति। विशिष्टेति। विशिष्ट शक्त्या तदुपस्थितिद्वारेणेत्यर्थः। शक्योपस्थितेर्लक्षणाज्ञाने करणत्वाद्द्वारत्वोक्तिः। भेदभ्रमेति। तत्त्वेदंत्वोपलक्षितस्वरूपभेदभ्रमनिरासरूपप्रयोजनसत्त्वेनेत्यर्थः। सार्थकं चेति। पदत्रयमपीति शेषः। सार्थक्यमिति पाठो युक्ततरः। अखंडलार्थस्तु समानविभक्तिकपदद्वयसमभिव्याहारस्थले चतुर्धा बोधो जायते। पदार्थद्वयोर्विशेष्यविशेषणभावावगाही एकः यथा नीलो घट इत्यत्र नीलरूपघटयोः। विशेषणविशेष्यभावो नाम व्यावहारिकतादात्म्यम्। अपरस्त्वध्यासावगाही। अध्यासः प्रातिभासिकतादात्म्यम्। यथा शुक्तितात्पर्यकामिदं रजतमिति वाक्यात्। बाधावगाही यः पुरुषः स स्थाणुरिति वाक्याज्जायमानः पुरोवर्तिन्यध्यस्तपुरुषभेदावगाही। यः पुरुषत्वेन ज्ञातः स न पुरुषः किंतु स्थाणुरिति तद्वाक्यार्थः। क्वचित्स्वरूपैक्ये यथा सोऽयं देवदत्त इति वाक्याज्जायमानः। तद्वाक्येन हि तद्देशकालविशिष्टरूपतत्पदार्थैतद्देशकालविशिष्टैतत्पदार्थयोर्न तादात्म्यान्वयधीः।

विशिष्टयोः परस्परतादात्म्ये विशेषणयोः परस्परतादात्म्यापातेन लोके कयोरपि विशिष्टयोस्तादात्म्याभावेन युगपन्मिलनराहित्यरूपविरोधशालितद्देशकालरूपविशेषणविशिष्टयोः सुतरामभावेन वाक्याप्रामाण्यापत्तेः। तदुक्तं संक्षेपशारीरके । अविरुध्दविशेषणद्वयप्रभवत्वेऽपि विशिष्टयोर्द्वयोः । घटते न यदैकता तदा न तरां तद्विपरीतरूपयोरिति । नाप्युपहितयोस्तादात्म्यधीः । अविरुद्धोपाधिद्वयस्थले तदुपहितयोरभेदसंभवेऽपि प्रकृते विरुद्धोपाधिद्वयोपहितयोस्तादात्म्यासंभवात् । वस्तुतोऽविरुद्धोपाधिद्वयस्थलेऽप्युपहितयोर्भेद एव । ननु विशेष्यान्वय्यन्वयित्वरूपविशेषणत्ववतः स्वविशिष्टाभिन्नविशिष्टांतराभेदप्रसक्त्या विशेषणस्यापि विशेष्याभेदप्रसंगाद्विशेषणद्वयस्य परस्पराभेदप्रसंगात्तद्विशेष्याभेदप्रसंगाच्च बाधकाद्विशिष्टयोर्भेदोऽस्तु । पदार्थांतरान्वयस्य स्वविशेष्यनिष्ठस्य सत्ताकाले स्वयं विद्यमानत्वे सति स्वविशेष्यव्यावर्तको यः स तदन्वये उपाधिरित्युच्यते । अस्यान्वयेऽयमुपाधिर्विशेषणमुपलक्षणमिति किंचिदपेक्षयैव तद्व्यवहारात् । पदार्थांतरान्वयकाले स्वयमविद्यमानस्तदन्वयकाले विद्यमानतया तद्व्यावर्तकविद्यमानधर्मांतरं स्वरूपमात्रं वोपस्थापयित्वा फलीभूतबोधे भासमानत्वाभाववानुपलक्षणमित्युच्यते । एवं च विरुद्धोपाध्योरेककाले समानदेशत्वाभावेन परस्परोपहिततादात्म्यस्योपाधिद्वयकालीनत्वाभावात्तयोरभेदासंभवेऽप्यविरुद्धोपाध्युपहितयोः कुतस्तादात्म्याभाव इति चेदुच्यते । यथा तत्क्षणविशिष्टस्य वैशिष्ट्यमिति रीत्या जायमानात् तत्क्षणविशिष्टघटवानिति ज्ञानात् विशेष्ये विशेषणमिति रीत्या जायमानस्य तत्क्षणविशिष्टघटवानिति ज्ञानस्य वैलक्षण्यस्यावश्यकतया ज्ञानवैलक्षण्यस्य विषयवैलक्षण्याधीनत्वाद्यथा विशिष्टस्यातिरिक्तत्वमभ्युपेयते । तथा रक्तदंडवान् भुंक्त इत्यत्र विशिष्टस्योपाधित्वमिति न्यायेन जातात् उपधेये उपाधिस्तत्र चान्यो विशेषणमिति न्यायेन जाते उक्ताकार एव ज्ञाने वैलक्षण्यस्य तत्साधकत्वात् । आद्ये पुरुषस्य रक्तविशिष्टदंड उपाधिः प्रकारतया भासते । द्वितीये केवल इति । पूर्वन्यायसाम्यादिति ग्रंथेन परैरेवोपाधिभेदेनोपहितभेदस्योपपादितत्वात् । नचैतावता परोपपादनेन केवलोपहितयोर्भेदसिद्धावपि न धर्मद्वयोपहितयोर्भेदसिद्धिरिति वाच्यम्। तद्धर्मोपहितज्ञानात्तदविरुद्धधर्मोपहितज्ञानस्य वैलक्षण्यरूपन्यायसाम्येनैव सिद्धेः । अत एव सोऽयं देवदत्त इति वाक्यार्थविचारावसर एव सामान्यत उपाधिभेदादुपहितयोरत्यंतभेद इति परैरुक्तम् । नच तर्हि तत्तेदंतयोरन्यतरोपलक्षितेऽन्यतरेणोपहितस्य विशिष्टस्य भेदो भासतामिति वाच्यम् । विनिगमनाविरहेणोभयोरुपलक्षणत्वस्यैव परिशेषात्प्राप्तेः। तत्तेदंत्वयोरन्यतरविशिष्टेऽन्यतरवैशिष्ट्यस्यान्यतरोपलक्षितेऽन्यतरवैशिष्ट्यस्य च बोधनमप्युक्तन्यायेनैवापास्तम् । तथा चोपलक्षितं च पदद्वयेन स्वरूपमात्रमेवेति तस्यैव स्वरूपैक्यमुच्यते । ऐक्यं चात्यंताभेदस्तत्प्रतियोगिकभेदाभावस्तन्निष्ठस्तत्स्वरूपमेवात्यंताभेदे च प्रकारविशेष्यतयोरयोगात्स्वरूपमात्रं भासत इति तज्जन्यबोधस्य संसर्गाविषयकत्वम् । नच भेदाभावत्वरूपेण स्वरूपमेव स्वस्मिन्प्रकारः संसर्गो वा स्तामिति वाच्यम् । भेदाभावत्वविशिष्टस्य स्वरूपे कल्पितस्यायावद्द्रव्यभावित्वेन स्वरूपैक्यरूपत्वाभावेन तज्ज्ञानेऽपि ज्ञानस्यैक्यावगाहित्वायोगात् । नच स्वरूपमात्रबोधस्य प्रयोजनाभावः। तत्तेदंत्वोपलक्षितस्वरूपभेदसंशयविपर्ययहेत्वज्ञाननिवृत्तिद्वारा तन्निवृत्तेरेव फलत्वात्। नच लक्षणया शक्त्या वा जायमानाया अखंडशाब्दबोधहेतुभूतस्मृतेरपि स्वरूपमा-

त्रविषयकत्वात्तयैव तन्निवृत्तौ शाब्दबोधवैफल्यम् । तदनिवृत्तौ विषयावैलक्षण्यात्स्वरूपमात्रावगाहिशाब्देनापि कथं तन्निवृत्तिरिति वाच्यम् । शाब्दस्य शंखः श्वेत इति ज्ञानस्य शंखः पीतो न वेत्यादिसंशयविपर्ययानिवर्तकत्वेऽपि तत्समानविषयकप्रत्यक्षेण निवृत्तज्ञानस्वभाववैलक्षण्यानुसरणस्यावश्यकतया प्रकृते तदिदंपदलक्षणाग्रहाधीनस्वरूपमात्रोपस्थितिजन्यस्वरूपमात्रविषयकशाब्दत्वेनैव तन्निवर्तकत्वांगीकारात् । नच श्रोतृकवाक्यार्थस्यापि देवदत्तस्वरूपदर्शनोत्तरं सोऽयं न वेत्यादिसंशयोपलंभात्कथं तस्य तन्निवर्तकत्वमिति वाच्यम् । शाब्देन सत्यव्यवहारविरोधिनोऽसत्त्वावरणाज्ञानस्य निवृत्तावपि न भातीति व्यवहारापादकस्वरूपमात्रविषयकाज्ञानस्य तादृशतत्तेदंत्वोपस्थितिद्वारकस्य स्वरूपमात्रावगाहिप्रत्यक्षमात्रनिवर्त्यतया तादृशप्रत्यक्षानुत्पत्तौ तादृशाज्ञानसत्त्वेन तन्मूलकतादृशसंशयाद्युपपत्तेः । नच तात्पर्यज्ञानबलाच्छाब्दस्थले लक्षणादिना स्वरूपमात्रभानेऽपि प्रत्यक्षसामग्र्यां तदनिवेशात्कथं तद्भाननिर्वाह इति वाच्यम । तत्तावगाहिस्मृतीदंत्वावगाह्यनुभवाभ्यां धर्मद्वयविशिष्टोपहिताभेदबाधग्रहसहिताभ्यामेव तादृशप्रत्यक्षोत्पत्त्यंगीकारात् । शब्दप्रत्यक्षयोः प्रतिबंधकता त्वेकशक्त्याऽन्यथा वेत्यन्यदेतत् । सोऽयं देवदत्त इत्यभिलापोऽपि पूर्ववृत्तिज्ञानसहितस्वरूपमात्रावगाहिप्रत्यक्षादेव । तत्तेदंत्वाभ्यामिमं जानामीत्यनुव्यवसायोऽपि तत्तेदंत्वोपलक्षितस्वरूपविषयकज्ञानवानहमित्येव विषयीकरोति न तु तत्तेदंत्वप्रकारकत्वं ज्ञानेऽवगाहत इति न तद्विरोधोऽपि । ननु स्वरूपमात्रज्ञाननिवर्त्यः कीदृशः संशयादिः । विशिष्टयोरुपहितयोर्भेदधियस्तत्कालेऽप्यनुवृत्तेरिति चेन्न । तत्तेदंत्वोपलक्षितस्वरूपभेदभ्रमस्यैव तन्निवर्त्यत्वात् । तादृशभेदावगाहनं नाम प्रतियोग्यंशे प्रकारत्वेनाभासमानं यत्तत्त्वं तदवच्छिन्नत्वविशिष्टप्रतियोगितासंबंधेन वाऽवच्छिन्नत्वाविशेषिता वस्तुतस्तत्तोपलक्षितनिष्ठा या प्रतियोगिता तद्रूपसंबंधेन वा भेदांशे तत्तोपलक्षितस्वरूपमात्रभानम् । नच संशयस्य सधर्मितावच्छेदकत्वनियमादिदंत्वस्य धर्मितावच्छेदकतया भानमावश्यकम् । एवं भेदांशे प्रकारीभवत्प्रतियोगिन्यपि तत्ताभानमावश्यकं जातीतरस्य स्वरूपतः प्रकारत्वायोगात् । नच तथैव भानमस्त्विति वाच्यम् । तथा सत्युपहितप्रतियोगिकभेदधीवैलक्षण्यनिर्वाहायानुपदमुक्तं प्रकारस्यासंभवापत्तेरिति वाच्यम् । तद्देशकालसंबंधरूपतत्तायाः स्वरूपातिरिक्ताया दुर्वचतया ततोऽस्याः स्वरूपतःप्रकारताया आवश्यकत्वे जातीतरस्येति त्वदुक्तनियमस्याप्रामाणिकतया भेदांश एव व्यक्तेरुक्तप्रकारस्यौचित्यात् । संशयस्य सधर्मितावच्छेदकत्वनियमोऽप्यप्रामाणिकः । आपातब्रह्मज्ञानस्य स्वरूपे धर्मांतरावगाहिनोऽसंशयरूपत्वाभ्युपगमात् । अखंडव्यक्तिप्रकारकस्याखंडव्यक्तितद्विशेषितभेदोभयकोटिमुख्यविशेष्यकस्य भेदत्वरूपधर्मितावच्छेदकावगाहिनः संशयस्य वक्तुं शक्यत्वाच्च । स्वरूपे स्वरूपभेदज्ञानस्याहार्यतया कथमुक्तशाब्दादिज्ञाननिवर्त्यत्वमिति नाशंक्यम् । उक्तरीत्या ज्ञानविशेषानिवृत्तौ तन्मूलकोक्तसंशयादिनिवृत्तेरावश्यकतयाऽऽहार्यत्वादिपरिभाषाया अकिंचित्करत्वात् । एवं च तत्त्वमसीत्यत्र तत्पदवाच्यतावच्छेदकसर्गस्थितिलयकर्तृत्वत्वंपदवाच्यतावच्छेदकजागराद्यवस्थानुभवितृत्वाभ्यां वा तत्पदवाच्यतावच्छेदकाविद्याबिंबत्वत्वंपदवाच्यतावच्छेदकाविद्याप्रतिबिंबत्वाभ्यां वोपहितयोर्विशिष्टयोर्वा तादात्म्यस्य व्यवहारकाल एव बाधितत्वेन तद्बोधकत्वे तद्वाक्यस्य व्यावहारिकप्रामाण्यस्याप्यभावापत्त्या सोऽयं देवदत्त इति वाक्यरीत्यैवात्र बोधो निर्वाह्यः । तत्राभिहितान्वयवादिमते तत्त्वंपदाभ्यां चिन्मात्रविषयकशाब्दद्वयं जायते । ताभ्यामेव सुबंतप-

दाभ्यां चिन्मात्रविषयकाखंडबोधो जायते । तत्राज्ञातत्वाज्ञाननिवर्तकज्ञानविषयत्वाभ्यामेव निमित्ताभ्यामेकस्या एव चित उद्देश्यत्वविधेयत्वे । ननु कुत एतत् उच्यते । अभिहितान्वयमते वाक्याधिकरणीयभट्टकारिकोदाहरणपूर्वकमद्वैतचंद्रिकायां पक्षत्रयमुपपादितम् । तथाहि । घटमानयेत्यत्र घटपदेन घटत्वेऽभिधारूपशक्तिग्रहसहितेन प्रथमतो घटत्वमात्रविषयकनिर्विकल्पक एव शाब्दबोधः । एवमंप्रत्ययेन कर्मत्वत्वावच्छिन्नविषयकः शाब्दबोधः कर्मत्वत्वस्य जातित्वाभावेन तन्मात्रे शक्त्यभावात्तद्विशिष्टेत्यादिपदस्य शक्तेः । तादृशशाब्दबोधात्मकघटत्वज्ञानकर्मत्वज्ञानाभ्यामेव घटत्वीयकर्मतेति बोधः । घटत्वादिविषयकज्ञानस्य घटत्वकर्मत्वयोरन्वयबोधजनकत्वे तद्विषयीभूतघटत्वादेरपि शाब्दबोधजनकत्वप्राप्त्या ऽभिहितान्वय इति व्यवहारः। पदैरभिहितैः शक्त्यधीनशाब्दबोधविषयीभूतैः प्रकृतिप्रत्ययार्थैर्बोध्यमानः प्रकृतिप्रत्ययार्थयोरन्वयः संसर्ग इति तदर्थात् । एवमानयेत्यनेनापि धातुनाऽऽनयनस्याख्यातेन कृतेश्च प्रत्येकं शाब्दबोधानंतरं ताभ्यामेवानयनानुकूला कृतिरिति बोधो जन्यते । उक्ताभ्यां बोधाभ्यां घटकर्मकानयनानुकूला कृतिरिति क्रियाकारकबोधरूपमहावाक्यार्थबोधो जायते। आद्यबोधस्य साक्षाच्छब्दजन्यत्वात् शाब्दत्ववत् उत्तरयोरपि बोधयोः शब्दप्रयोज्यत्वादेव शाब्दत्वं स्वीक्रियते । ननु प्रत्येकशब्दैर्घटत्वकर्मत्वादिविषयकशाब्दानंतरमेव महावाक्यार्थबोधः कुतो न स्वीक्रियते । मध्ये घटीया कर्मतेत्येवमाकारकबोधः किमर्थमाश्रयणीय इति चेन्न । भट्टेन सर्वस्यापि महावाक्यार्थबोधस्य विशिष्टस्य वैशिष्ट्यमिति रीत्योत्पत्त्यंगीकारेण तत्कारणीभूतविशेषणतावच्छेदकनिर्णयमुद्रया तादृशबोधस्यावश्यकत्वात् । नच शाब्दबोधे घटत्वस्यैव भाने घटकर्मकानयनानुपपत्तिः । घटानयनस्याक्षेपलभ्यत्वांगीकारात् । अथवा घटत्वमात्रशाब्दबोधानंतरमुपस्थितघटत्वेनैव लक्षणया घट उपस्थाप्यते तस्य चावांतरवाक्यार्थबोधे महावाक्यार्थबोधे च भानोपपत्तिः । शक्यार्थनिष्ठा शक्योपस्थितिप्रयोजकसंबंधस्यैव लक्षणत्वांगीकाराद्घटत्वस्य लक्षकत्वमुपपन्नम् । पदनिष्ठस्य तीरसंयुक्तप्रवाहशक्तत्वस्य लक्षणात्वापेक्षया प्रवाहनिष्ठतीरसंयोगस्यैव लक्षणात्वे लाघवात् । घटप्रातिपदिकाज्जायमानघटत्वनिर्विकल्पकस्य शाब्दत्वानंगीकारे तस्य स्मृतित्वं वाच्यम् । तस्य संबंधज्ञानाधीनत्वाद्घटत्वघटपदयोः संबंधोऽपेक्षितः । स च संयोगादेरसंभवात्तज्ज्ञानाधीनस्मृतेः शाब्दबोधकारणत्वे समवायसंबंधेन स्मृताकाशादेः शाब्दबोधे भानप्रसंगेन संबंधांतराधीनस्मृतेरकिंचित्करत्वाच्च शक्तिरेव संबंधोऽवश्यमनुसरणीयः । शक्तिश्च पदनिष्ठतदर्थानुभवानुकूलसामर्थ्यम् । तथाच घटादिपदैर्घटत्वादिमात्रविषयकशाब्दबोधजनने तच्छक्तत्वस्य दुर्घटत्वापत्त्या तदुत्पत्तेरावश्यकत्वे तेनैवोक्तरीत्या महावाक्यार्थबोधनिर्वाहे स्मृतिजन्यत्वस्य शाब्दबोधे अंगीकारे मानाभावात् । नच महावाक्यार्थबोधस्यैव घटत्व विषयकतया तज्जनकत्वं घटे घटत्वशक्तिरास्तामिति वाच्यम् । महावाक्यार्थबोधे घटस्येवानयनस्यापि भानेन घटपदस्यानयनशक्तत्वमपि स्यादित्युक्तरीतिरेव युक्तेत्येकः पक्षः । घटपदोत्तरांप्रत्ययरूपानुपूर्वीज्ञानस्य ज्ञायमानानुपूर्व्याश्चाधेयतया घटत्वविशिष्टकर्मत्वविषयकशाब्दस्य जन्यत्वमेवं घटेन घटायेत्यादावपैव रीतिरानयतीत्यत्राप्येवमेव । तथाच तादृशबोधनिरूपितजनकता घटपदे वर्तते । विशेष्यतानिरूपितसांसर्गिकविषयतानिरूपितघटत्वप्रकारताशालिशाब्दत्वस्यैव घटत्वनिष्ठा करणतेत्यादिशाब्दसाधारणस्य जन्यतावच्छेदकत्वात् । सा च घटपदनिष्ठा घटत्वीयत्वेनैव ज्ञाता शाब्दबोधोपयोगिनी न

त्वन्वयनिरूपितत्वेन ज्ञाता तथा चान्वयांशे कुब्जेत्युच्यते। जनकतैव शक्तिस्तथा च न घटपदवाच्यत्वव्यवहारोऽन्वयादीनां शक्तिर्यन्निष्ठा यदीयत्वेन ज्ञाता शाब्दबोधोपयोगिनी तस्यैव तत्पदवाच्यत्वं नान्यस्येत्यभ्युपगमात्। इत्थं च घटपदे घटत्वानुभावकत्वरूप शक्तेरुक्तविशिष्टविषयकशाब्दबोधमादाय निर्वाहात्ताद्दशशक्तिरूपसंबंधज्ञानात्प्रथमतो घट त्वस्मृतिरेवांगीकर्तव्या। न निर्विकल्पकशाब्दबोध। प्रमाणजन्यानुभवस्याज्ञाननिवर्त कत्वेनैव प्रामाण्यात्केवलघटत्वादेः पूर्वसंबंधज्ञान एव भातत्वेनोक्तशाब्दस्य घटत्वादावज्ञाननिवर्तकतया प्रमात्वाभावेन भ्रमत्वाभावेन च स्मृत्यनुभवविल-क्षणज्ञानस्वीकारापत्तेः। तथाच घटमानयेत्यादिवाक्यस्थले घटादिपदैर्घटत्वकर्मत्वयोः स्मरणं तेन च घटत्वीयकर्मतेतिशाब्दबोधः स्मरणद्वारा घटमिति शब्देनैव जायते। आनयेतिपदेनाप्यानयनानुकूलकृतिशाब्दबोधः। ताभ्यां बोधाभ्यामेव घटकर्मत्वानयनरूपक्रिययोरन्वयरूपमहावाक्यार्थो बोध्यते। एताद्दशवाक्यार्थरूपे पूर्वे संसर्गे पूर्वबोधविषयीभूताभ्यां घटकर्मत्वानयनाभ्यां यः संबंधो निरूप्यनिरूपकभावा-दिः स एव लक्षणारूपो वाक्यार्थनिष्ठत्वेनाज्ञायमान एव हेतुः। वाक्यार्थनिष्ठत्वेन ज्ञातस्यैव हेतुत्वे वाक्यार्थस्यापि पूर्वमेव ज्ञातत्वप्राप्त्या वाक्यस्यापूर्वार्थगमकत्वाभावा-पत्तेरित्यपरो द्वितीयः पक्षः। घटमानयतीत्यत्र घटमित्यनेन कर्मत्वविशिष्टघटत्वमिति बोधः घटत्वादिस्मृतिद्वारा जायते। आनयतीत्यनेन कृतिविषयीभूतमानयनमिति बोधः कृत्यानयनादिस्मृतिद्वारा जायते, ताभ्यां बोधाभ्यां चोक्तमहावाक्यार्थबोधः। अन्यत्सर्वं द्वितीयपक्षरीत्यैव। घटपदकार्यतावच्छेदकाकिंचिन्निष्ठप्रकारतानिरूपितसांसर्गिकविषय-तानिरूपितघटत्वविशेष्यताशालिशाब्दत्वमिति विशेष इति तृतीयः पक्षः। अभिहितेन प्रकृत्यर्थविशिष्टप्रत्ययार्थेनान्वयस्य महावाक्यार्थरूपान्वयस्याभिधाने द्वितीयपक्षे। तृतीये च प्रत्ययार्थविशिष्टप्रकृत्यर्थेनेत्यादि बोध्यम्। अत्रोपपत्त्यादिकं सर्वमद्वैतचंद्रिकातोऽव-सेयम्। ग्रंथगौरवभयान्नेह प्रपंच्यते। कार्यान्विताभिधानपक्षे च शाब्दबोधसामा-न्यस्य कार्यताविषयकत्वनैयत्यात्। केवलघटपदेन वा घटमित्यादिप्रकृतिप्रत्ययाभ्यां वा घटमानयतीत्यादिनापि वा नावांतरवाक्यार्थधीर्जायते। कार्यवाचकपदाभावात्। किंतु घटादिस्मृतिरनंतरं कार्यवाचकपदसाहित्येनैकदैव विशेष्य विशेषणमिति रीत्या शाब्दबोधः। कश्चिद्घटादिस्मृत्यनंतरं घटादिविशिष्टकर्मतास्मृतिर्जाता चेद्विशिष्टवैशिष्ट्या-वगाह्यपि जायते। उक्तावांतरज्ञानस्य न शाब्दत्वम्। शब्दस्य तत्रैवोपक्षीणत्वेन कारणा-भावान्महावाक्यार्थबोधाभावप्रसंगात्। नच भट्टमत इव ताद्दशावांतरबोधाभ्यामेव महावाक्यार्थधीः संभवति। गुरोरर्थाध्याहारवादित्वेऽपि पदजन्यपदार्थोपस्थितिसहकारेणैव पदाजन्योपस्थितेः फलजनकत्वांगीकारात्। भट्टेन पुनरर्थमात्रोपस्थित्यापि शाब्दबोधां-गीकाराच्च तस्य शाब्दबोधशब्दवाच्यसामान्योत्पत्तौ शब्दापेक्षाऽतस्तन्मते ताद्दशरीतिः संभवति। उक्तं भट्टवार्तिके। पश्यतः श्वेतिमारूपं हेषाशब्दं च शृण्वतः॥ खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः॥ दृष्टा वाक्यविनिर्मुक्ता न पदार्थैर्विना क्वचित्॥ इति। एवं गुरुमते वन्ह्यनुकूलशक्तिर्न केवलतृणेनापि फूत्कारमात्रे एकैकेन फलाजननात्तृणफूत्कारसंयोगे नद्विशिष्ट एव यथा स्वीक्रियते तथा कारकपद-कार्यवाचिपदमिलने एव घटानयनं कार्यमित्यादिशाब्दानुकूला शक्तिः स्वीक्रियते। तस्याश्च घटपदनिष्ठत्वं शाब्दबोधनिष्ठघटत्वविषयकत्वावच्छिन्ननिरूपकताकशक्तित्वेनात स्तेन रूपेण घटपदेन तज्ज्ञाने घटत्वशाब्दकारणमिति घटत्वं घटपदवाच्यमित्युच्यते।

एतन्मतेऽप्याकृत्यधिकरणसिद्धांतेन जातावेव शक्त्यभ्युपगमात् । एवमन्यत्रापि । तथाचाभिहितान्वयमते प्रथमपक्षे प्रथमाविभक्तिसहिततत्त्वंपदाभ्यां शक्त्यैव चिन्मात्रविषयकशाब्दधीद्वयं जायते । विशिष्टशक्तेर्विशेष्येऽपि सत्त्वेन तात्पर्याबाधग्रहादिसहकारे विशेष्यमात्रानुभावकत्वसंभवात् । प्रथमाया अपि प्रातिपदिकार्थविहितत्वेऽपि तत्साहित्येऽप्येकसुबंतेनैक एव बोधः । संभेदे नान्यतरवैयर्थ्यमिति न्यायात् । प्रातिपदिकप्रथमाभ्यां चिन्मात्राविषयकबोधद्वयानंतरं ताभ्यां बोधाभ्यां चिन्मात्रविषयकैको बोधो घटीयकर्मतेत्यादिबोधस्थानीयस्तत्पदेन जायते । एवं त्वंपदेनेत्यंगीकारेऽपि नास्माकं क्षतिः । तथाच प्रत्येकं सुबंतजन्यबोधाभ्यामेकश्चिन्मात्रविषयको महावाक्यार्थबोधोऽखंडविषयकः । द्वितीयतृतीयपक्षयोस्तु प्रथमं तत्त्वंपदप्रातिपदिकसुब्भिरुक्तरीत्या शक्त्यैव चिन्मात्रस्मृत्यनंतरमवांतरबोधस्थानापन्नः सुप्सहिततत्पदेनैकस्तादृशत्वंपदेनैक इति शाब्दबोधद्वयं चिन्मात्रविषयकं जायते । तादृशबोधद्वयेनैव महावाक्यार्थभूतचिन्मात्रविषयकाखंडाकारधीर्जायते । असिपदमपि तात्पर्यग्राहकं वा तात्पर्यवशादेव चिन्मात्रलक्षकं वा सन्महावाक्यार्थबोध एव कथंचिदुपयुज्यत इति पक्षत्रयेऽपि समानम् । अन्विताभिधानमते तु सर्वं तत्त्वंपदाभ्यामुक्तरीत्या शक्त्यैव चिद्विषयकस्मृतिद्वयं जायते । तद्द्वारा ज्ञानविध्येकतापन्नेन तत्त्वमसीतिवाक्येन कार्यत्वविषयक एव सन् ज्ञानांशे चिन्मात्रावगाही बोधो जायते । अखंडार्थत्वमपि तदनुसारेणैव परिष्कर्तव्यम् । अभिहितान्वयमते चिन्मात्रविषयकावांतरवाक्यार्थबोधद्वयं शाब्दबोधात्मकमपि अज्ञानज्ञानरूपत्वाभावात् ज्ञातार्थमात्रविषयत्वाच्च स्मृतिसमं न तु स्मृतिरूपमन्विताभिधानमते तादृशबोधद्वयं स्मृत्यात्मकमेव । तच्चोक्तं पुरस्तात् । नन्वभिहितान्वयनये उक्तज्ञानस्याज्ञानानिवर्तकतया प्रमात्वायोगः । इष्टापत्तेः । तादृशबोधद्वयस्य प्रमात्वानंगीकारात् । अगत्या स्मृत्यनुभवविलक्षणस्यापि ज्ञानस्य प्रमाणजन्यत्वाभ्युपगमात् । अत एव घटोऽस्तीति वाक्यजन्येऽस्तित्वं घटत्वीयमिति बोधे घटत्वनिर्विकल्पकशाब्दधीः स्मृतिसमैवांगीक्रियते । अस्तित्वप्रकारकस्तु न बोधः घटत्वस्य स्वरूपतो भातत्वेन निर्धर्मितावच्छेदकशाब्दापत्तेः । उक्तमेतत्संक्षेपशारीरकृता । 'अभिहितघटना यदा तदानीं स्मृतिसमबोधयुगं पदे विधत्तः ॥ परदृशि पुनरन्विताभिधाने पदयुगलात्स्मृतियुग्ममेव पूर्वम्' इति । पदे तत्त्वंपदे । परदृशि ब्रह्मविषय इत्यर्थः । ननु तर्हि तत्पदार्थविशिष्टत्वंपदार्थविशिष्टयोरभेदबोधोऽपि अखंडार्थबोधं प्रति द्वारत्वेन संक्षेपशारीरकेऽभिहितः । 'सामानाधिकरण्यमत्र भवति प्राथम्यभागन्वयः पश्चादेव विशेषणेतरतया पश्चाद्विरोधोद्भवः । उत्पन्ने तु विरोध एकरसके वस्तुन्यखंडात्मधीः सर्वैरेव पदैरयं समुदितो ज्ञेयः क्रमः सूरिभिः ॥' इत्युक्तेः । सामानाधिकरण्यं समानविभक्तिकत्वनिश्चयः । प्राथम्यभागिति सामानाधिकरण्यविशेषणं । विशेषणेतरतयान्वयः पदार्थद्वयोस्तादात्म्येन विशेषणविशेष्यभावावगाही बोधः पश्चात्तदनन्तरं भवतीत्यर्थः । पश्चात्तदनंतरं विरोधोद्भवः बाधकप्रतिसंधानेनोक्तबुद्धावप्रमाधीर्जायते । ततश्चैकरसके वस्तुनि शुद्धचैतन्ये तद्विषय इति यावत् । अखंडात्मधीरखंडस्वरूपधीर्जायत इत्यर्थः । ज्ञानस्याखंडस्वरूपत्वं प्रकारताविशेष्यतानिरूपकत्वं । अत्र च चिद्द्वयमात्रबोधद्वयस्य द्वारत्वमात्रमुक्तम् । उक्तविशिष्टयोस्तादात्म्यधियो द्वारत्वं त्यक्तमिति तद्विरोध इति चेन्न । तादृशतादात्म्यावगाहिबुद्धिबाधकप्रतिसंधानयोस्तत्त्वंपदयोः शक्त्या लक्षणया वा विशेष्यमात्रोपस्थापकत्वमात्रे चरितार्थत्वेन लक्ष-

णाग्रहोत्तरं मध्ये तस्य द्वारत्वाभावात्। पूर्वं तस्य क्वचिदुत्पन्नत्वमात्रेण तस्य द्वारत्वोक्तिः। नियमेन तादृशबोधोत्पत्तौ मानाभावात्। उक्तपदयोर्विशिष्टबोधकत्वबाधकप्रतिसंधानेन लक्षणाग्रहार्थं नियमेन तादृशबोधस्याप्रयोजकत्वेन अनपेक्षणात्। अन्यथा गंगायां घोष इत्यादावपि नियमेन प्रवाहवृत्तिर्घोष इत्याकारकस्य बाधितार्थबोधस्यावश्यमनुसरणीयत्वापत्त्या पूर्वमेव विशेषदर्शिनां तद्वाक्याच्छाब्दानुभवाभावप्रसंगात्। न चान्यत्र तन्नियमाभावेऽपि प्रकृते तादृशबोधनियमोऽस्तु। नेह नानेतिवाक्ययोरखंडबोधपरत्वेऽपि द्वारीभूतमिथ्यात्वबोधे तात्पर्यसत्त्वेन तादृशबोधवदिति वाच्यम्। युक्तं मिथ्यात्वबोधेऽवांतरतात्पर्यं मिथ्यात्वस्य व्यावहारिकत्वेन तदंशे व्यावहारिकप्रामाण्याक्षतेः। प्रकृते च विशिष्टद्वयतादात्म्यस्य प्रातीतिकत्वेन तदंशे व्यावहारिकप्रामाण्यायोगेन शुक्तिरजतादिवाक्यतुल्यतापत्तेः॥ नन्वस्तु तदंशे प्रातीतिकमेव प्रामाण्यमिति वाच्यम्। तस्य विप्रतिषिद्धत्वात्। तथात्वे यजमानपाषाणत्वादिबोधेऽपि श्रुतेरवांतरतात्पर्यापत्तेः। तस्मादुक्तमेव युक्तम्। तत्त्वंपदशक्त्या विशेष्यमात्रस्य यो बोधः स एकैकांशत्यागेन शक्त्या जायमानत्वाज्जहदजहल्लक्षणया भवतीति प्राचां प्रवादः। तत्पदस्य चिदाभास (चिद्बिंब) विशिष्टमायावाचित्वं त्वंपदस्य तु चिदाभास विशिष्टाहंकारवाचित्वं तदा तत्त्वंपदयोर्जहल्लक्षणैव। तदप्युक्तं संक्षेपशारीरके। 'साभासाज्ञानवाची यदि भवति पुनर्ब्रह्मशब्दस्तथाहंशब्दोऽहंकारवाची भवति हि जहती लक्षणा तत्र पक्षे' इति। नच सर्वेषां पदानां लाक्षणिकत्वेऽनुभावकत्वाभावेन शाब्दानुभवाभावप्रसंगः। लाक्षणिकपदस्यापि शाब्दानुभवजनकत्वे तदर्थशाब्दानुभवानुकूलशक्तेरेव तद्वाचकत्वरूपतया लाक्षणिकपदस्य लक्ष्यार्थवाचकत्वापातादिति वाच्यम्। अन्विताभिधानपक्षे उक्तबाधकबलेन जहल्लक्षणापक्षानाश्रयणेऽप्यभिहितान्वयपक्षे दोषाभावात्। तन्मते प्रत्येकं पदानां स्वशक्त्याऽनुभावकत्वमेव। तदनुभूतार्थैरेव महावाक्यार्थबोधजनने शक्त्या बोध इत्युच्यते। तादृशार्थेन स्वसंबंधबलादुपस्थापितस्यार्थस्य बोधजनने लक्षणया बोध इत्युच्यते लक्षणाया अर्थधर्मत्वात्। एवंच वाक्यघटकनिखिलपदैः स्वशक्त्या शाब्दबोधजननोत्तरं तादृशैरखिलैरर्थैःस्वस्वपरित्यागेन लक्षणयाऽर्थांतरोपस्थिति द्वारैकमहाशाब्दबोधजननेऽपि शब्दस्य लाक्षणिकार्थवाचकत्वापत्तिदोषाप्रसरेण सर्वे लाक्षणिकस्थले शाब्दबोधे बाधकाभावात्। अन्विताभिधानवादे च महाशाब्दबोधस्यापि पदजन्यत्वांगीकारात्सर्वेषां पदानां लाक्षणिकत्वे उक्तबाधकबलेन कस्यापि पदस्य लक्ष्यार्थानुभावकत्वाभावेन शाब्दबोधानुदय एव स्यात्। गंगायां इत्यादौ तु घोषपदस्य मुख्यार्थकत्वेन तस्यैव स्वार्थोपस्थितिद्वारा तच्छाब्दकारणत्वं गंगापदस्य नास्त्येव। तीरविषयता लाक्षणिकतीरोपस्थितिकार्यतावच्छेदकतयैव बोधे वर्तते। पक्षद्वयसाधारण्यादभिहितान्वयवाद एव सिद्धांतानुकूलः। ननु तत्त्वमस्यादिवाक्यस्थतत्त्वंपदयोश्चिति लक्षणाग्रहाच्छाब्दबोधसंभवात्तत्त्वंपदार्थशोधकसत्यज्ञानादिवाक्यानां वैयर्थ्यं। नतु लक्षणाग्रहे धर्मितया चिद्ज्ञानाय तदुपस्थितेरावश्यकतया तदर्थं तद्वाक्यजातमिति वाच्यम्। तद्वाक्येन चिद्बोधोपयोगिलक्षणाग्रहार्थं वाक्यांतरापेक्षायामनवस्थापातात्। यदि च स्वप्रकाशचैतन्ये लक्षणाग्रहो यदि वा विशिष्टशक्त्यैव विशेष्यमात्रभानं स्वीक्रियते तर्हि तत्त्वंपदस्थलेऽपि तथैवास्त्विति चेन्न। यतो न वयं तत्त्वंपदलक्षणाग्रहार्थं सत्यज्ञानादिवाक्यमिति ब्रूमः। येन वैयर्थ्यं स्यात्। किंतु महावाक्यतात्पर्यविषयीभूतचित्स्वरूपनिरूपणार्थमिति ब्रूमः। अन्यथा चैतन्यैक्यमात्रस्य पुरुषार्थत्वग्रहाभावेन तदर्थं प्रवृत्त्य-

( टीका ) अत्रापि प्रयोगः। तत्त्वमसीत्यादिवाक्यमखंडार्थनिष्ठम्। अकार्यकारण-द्रव्यनिष्ठत्वे सति समानाधिकरणत्वात्। सोऽयं देवदत्त इत्यादिवाक्यवत्।

---

योगात्। तत्त्वंपदपरिशोधकवाक्यैस्तादृशचैतन्यस्य द्वितीयस्वप्रकाशनिरतिशयानंदात्मकत्वेऽभिहिते तदैक्यस्य पुरुषार्थत्वग्रहो भवतीति तदावश्यकता। जीवचैतन्यस्य स्वप्रकाशाद्वितीयानंदात्मकब्रह्मस्वरूपत्वासंभावनाशंकानिरासाय जीवशोधकवाक्यस्याप्युपयोगः। तत्पदार्थशोधकसत्यादिवाक्याभावे मंदाधिकारिभिरुपास्यस्य जीवनियामकत्वादिगुणविशिष्टेश्वरस्य सत्त्वे तन्नियम्यजीवस्वरूपानंदादेर्निरतिशयत्वाभावेनापुरुषार्थत्वापत्त्या तदर्थं प्रवृत्तिर्न स्यादतस्तस्यापि नियामकत्वादिधर्ममिथ्यात्वग्रहपूर्वकं निरतिशयानंदाद्वितीयत्वादिबोधकतत्पदार्थशोधकवाक्यसाफल्यम्। जीवत्वेशत्वोपलक्षितचैतन्येशत्वोपलक्षितचैतन्ययोर्भेदभ्रमनिरासकतत्त्वमसीत्यादिमहावाक्याभावे स्वस्वरूपस्य निरतिशयानंदात्मकत्वनिश्चयो न स्यात्। ईशत्वोपलक्षितचैतन्यस्यापि तथोक्तत्वेनोभयोर्मुख्याद्वितीयत्वनिरतिशयानंदात्मकत्वायोग इत्यनुपपत्तिज्ञानात्। यथा मांधाता महाराजोऽद्वितीय इत्युक्त्वा यौवनाश्वो महाराजोऽद्वितीय इत्युक्तावुभयोर्मुख्याद्वितीयत्वमहाराजत्वानुपपत्तिज्ञानाहितसंदेहेन क्वचिदपि तन्निश्चयो न जायते। महावाक्ये तु तयोर्भेदभ्रमनिरासे तु तन्निश्चयो जायते यो यौवनाश्वः स मांधातेत्युक्तौ यथा तथैव। तथा चावांतरमहावाक्यानां सर्वेषामुपकार्योपकारकभावसत्त्वात्सार्थक्यम्। अनृतत्वानानंदत्वादिभ्रमहेतुभूतयोर्जीवत्वेशत्वोपलक्षितचैतन्यस्वरूपमात्रविषयकाज्ञानयोर्निवर्तकेऽवांतरवाक्ये। तादृशे चैतन्ययोर्भेदभ्रमहेतुभूतचैतन्यमात्रविषयकाज्ञाननिवर्तकं महावाक्यमिति विवेकः। केचित्तु तत्त्वमसीतिमहावाक्यजन्यबोधीयचैतन्यविषयता स्वपूर्वतनज्ञानविषयीभूतजीवत्वेशत्ववृत्तिप्रकारतानिरूपिता भवति। तज्ज्ञानाविषयीभूतस्यापि तत्पूर्वतनज्ञानविषयीभूतस्य तन्निष्ठविषयतानिरूपितप्रकारतायाः प्राचीननैय्यायिकैरंगीकृतत्वात्। अत एव निर्विकल्पकोपस्थितघटत्वनिष्ठप्रकारतानिरूपितत्वमात्रं सविकल्पके न तु घटत्वस्यापि तत्र विषयत्वं तैरभ्युपगतम्। गुरुणापि भ्रमस्थले इदंज्ञानाविषयीभूतरजतत्वनिष्ठप्रकारतानिरूपिता विषयतेदंज्ञाने स्वीक्रियते। तथाच तादृशजीवत्वेशत्वोपलक्षितचैतन्यविषयकमहावाक्यार्थज्ञानादज्ञानं स्वाविषयीभूतेशत्वजीवत्वनिष्ठप्रकारतानिरूपितचैतन्यमात्रनिष्ठविषयताकं निवर्तते तादृशबोधजनकत्वमेवाखंडार्थकत्वमित्याहुरिति। एवं परप्रक्रियां प्रदर्श्यानुमानप्रयोगप्रकारमाह। अत्रापीत्यादिना। अकार्येति। स्वतात्पर्यविषयीभूतद्रव्यनिरूपितकारणत्वकार्यत्वाभावान्यतराभाववद्द्रव्यतात्पर्यकस्वसमानविभक्तिकपदसमभिव्याहृतं यत्पदं तदुभयघटितत्वं यत्र तत्रोक्ताखंडार्थनिष्ठत्वं तत्रेति व्याप्तिः। तत्ताविशिष्टदेवदत्तेदंताविशिष्टदेवदत्तयोः कार्यकारणभावानापन्नत्वात्तदुभयपदसमानविभक्तिकपदद्वयघटिते सोऽयं देवदत्त इति वाक्ये उक्ताखंडार्थनिष्ठत्वं वर्तते। प्रकृते च जीवत्वेशत्वविशिष्टयोरकार्यकारणाभावापन्नत्वात्तदुभयतात्पर्यकतत्त्वंपदघटितोक्तवाक्येऽपि हेतुसत्त्वात्साध्यसिद्धिः। कार्यकारणेत्यनुपादाने मृद्घट इत्यादौ व्यभिचारस्तस्योक्तरीत्या तदुभयतादात्म्यपरत्वादतस्तन्निवेशः। अन्यतरत्वेनानिवेशे एकैकस्य कार्यत्वस्य वा कारणत्वस्य वा निवेशे घटपदं मृत्पदं वा स्वपदेन यथासंभवमुपादायोक्तवाक्य एव व्यभिचारः स्यादतोऽन्यतरत्वेन कार्यत्वकारणत्वयोर्निवेशः। अंशांशिनोर्विशिष्टशुद्धयोः परस्परमवश्यं कार्यकारणभावापन्नत्वमंशस्यांशिकारणत्वाद्विशेष्यस्य विशिष्टं प्रति कार-

(टीका) स्वरूपप्रश्नोत्तरत्वाच्च पूर्ववत्प्रयोगः । अतः श्रुतीनामखंडार्थत्वस्य प्रमितत्वादनुपपत्त्यभावाच्च कथं सगुणं ब्रह्म श्रुत्यभिप्रेतमिति । तदेतदसत् । दृष्टांतस्य साध्यविकलत्वादित्याशयवानाद्यदृष्टांतं तावद्दूषयति ।

(मूलं) प्रकृष्टप्रकाशश्चंद्र इत्यादिषु प्रकृष्टत्वादिविशेषणानि संत्येवेति न तत्साम्यम् । १०७ ।

(टीका) इत्यादिषु लक्षणवाक्येषु स्थितानां पदानामभिधेयानीति शेषः । इति शब्दो हेतौ । न तत्साम्यं । सत्यज्ञानादिवाक्यानामिति शेषः । न तद्दृष्टांतेनैषामखंडार्थतासाधनं युक्तमिति यावत् ।

णत्वादतस्तद्बोधकपदघटिते दंडी चैत्र इत्यादौ हस्तो वितस्तिः पट इत्यादौ च न व्यभिचारः । नीलरूपस्यैकस्यैव जातिवन्नित्यस्यैव सर्वत्रांगीकारे नीलो घट इत्यादौ व्यभिचारः । नित्यस्यापि गुणस्य घटत्वादिजातिवद्व्यक्त्या तादात्म्यांगीकारात् । घटादिरूपस्यानित्यत्वे जलपरमाणुः शुक्ल इत्यादौ च व्यभिचारवारणायोभयत्र द्रव्यत्वेन निवेशः । अत्र शुक्लादिपदानि गुणोपस्थापकान्येव न तदवच्छिन्नद्रव्यपराणीति न व्यभिचार इति हृदयम् । विभक्त्यर्थस्य संसर्गतामते देवदत्तस्य गौरित्यादौ व्यभिचारवारणाय स्वसमानविभक्तिकेति । अधिष्ठानाध्यस्तयोरपि कार्यकारणभावापन्नत्वान्नेदं रजतमित्यादौ व्यभिचारः शंक्यः । यश्चोरः स स्थाणुरित्यादावपि न व्यभिचारः । तस्यापि बाधद्वारेण पुरोवर्तिस्वरूपमात्रबोधजनकत्वांगीकारात् । अत एवेदं सर्वं यदयमात्मेत्यादेरहं ब्रह्मास्मीत्यादेर्बाधायां सामानाधिकरण्यपक्षे तस्याखंडार्थकत्वं युज्यते । अहं ब्रह्मास्मीत्यादेर्बाधायां सामानाधिकरण्यमहमर्थस्य चिदाभासस्य जीवस्य नाशपक्षे सिद्धांतलेशे उपपादितम् । नैष्कर्म्यवचनं चोदाहृतम् । ' योऽयं स्थाणुः पुमानेष पुंधिया स्थाणुधीरिव । ब्रह्मास्मीति धिया शेषा ह्यहंबुद्धिर्निवर्तते ' इति । न चैवमपि दंडी कुंडलीति वाक्ये व्यभिचारः दंडोपहितकुंडलोपहितयोः कार्यकारणभावानापन्नद्रव्यानिष्ठत्वादिति शंक्यम् । उपहितयोस्तादात्म्याभावेन तस्याप्यखंडार्थत्वांगीकारेण व्यभिचाराभावात् । न चोक्तहेतोरप्रयोजकता । कार्यकारणाभावानात्मकद्रव्यत्वेन तादात्म्यायोगेन स्वरूपैक्यस्याप्यभावे तादृशसमानविभक्तिकपदद्वयघटितवाक्यत्वं न स्यादित्यनुकूलतर्कोत्थानात् । तत्प्रश्नोत्तरत्वरूपपूर्वसूचितहेतुं स्पष्टं दर्शयति । स्वरूपेति । कथं सगुणं ब्रह्मेति । श्रुतेर्गुणे तात्पर्याभावात्प्रत्युत तन्मिथ्यात्व एव तात्पर्यादिति भावः । तावद्दूषयतीति । यद्यप्यखंडार्थत्वमप्रसिद्धमित्यप्रसिद्धविशेषणतैव वक्तव्या । तथापि सत्यज्ञानादिवाक्यतात्पर्यविषयीभूतप्रमा स्वांसर्गिकविषयिताशून्येति प्रथमसाध्यनिष्कर्षेऽपि द्वितीयसाध्यस्य स्वघटितवाक्यजन्यत्वस्वनिरूपितवृत्तिग्रहाधीनोपस्थितिविषयभिन्नाविषयकत्वे तदुभयसंबंधेन प्रातिपदिकस्यैव साध्यतया निष्कर्षकरणे प्रकृष्टप्रकाशादिवाक्यजप्रमात्वेन दृष्टांतीकरणेऽप्रसिद्धविशेषणता न घटते । अतः साध्यवैकल्यमेव मूलेऽभिहितमिति ध्येयम् । यद्वा यद्यल्लक्षणवाक्यं तत्तत्स्वरूपमात्रपरम् । इदं च ब्रह्मलक्षणवाक्यमतो ब्रह्मस्वरूपमात्रपरमिति रीत्या सामान्यव्याप्तिमूलकानुमितेरुद्देश्या । ब्रह्मस्वरूपमात्रपरत्वरूपाखंडार्थ-

( टीका ) इदमुक्तं भवति । लक्षणा हि वाच्यार्थासंभवे समाश्रियमाणा गंगायां घोष इत्यादिवाक्येषु दृष्टा । एवमेवाश्रयणेऽतिप्रसंगात् । प्रकृते च प्रकृष्टादिपदाभिधेयानि प्रकृष्टत्वादिविशेषणानि चंद्रादौ प्रमाणसिद्धानि । अतोऽनुपपत्त्यभावान्नैषां लक्षणया चंद्रादिस्वरूपमात्रपरत्वं युक्तम् । लक्षणानाश्रयणे चोक्तपर्यायत्वादिदोषप्रसंगः । तथा च दृष्टांतस्य साध्यविकलत्वान्नानेन सत्यज्ञानादिवाक्यानां लक्षणया ब्रह्मस्वरूपमात्रपरत्वसिद्धिरिति । द्वितीयं दृष्टांतं दूषयति ।

**( मूलं ) अनित्यदेशकालसंबंधित्वस्य सत्त्वात् न सोऽयं देवदत्त इत्याद्युपमा च । १०८ ।**

( टीका ) इत्यादिवाक्यमुपमा । तत्त्वमस्यादिवाक्यस्याखंडार्थतायामिति शेषः । तदेतद्देशकालसंबंधित्वं हि स इत्यादिपदवाच्योऽर्थः। तच्चास्त्येव देवदत्तादौ प्रमितमिति वाच्यार्थसंभवान्न सोऽयं देवदत्त इत्यादिवाक्यं लक्षणया देवदत्तादिस्वरूपमात्रपरम् । अतो नैतद्दृष्टांतेन तत्त्वमस्यादिवाक्यानामखंडार्थतासिद्धिः । ननु कथमत्र लक्षणाश्रयणनिमित्तवाच्यार्थानुपपत्त्यभावः । तद्देशकालविशिष्टस्यैतद्देशकालवैशिष्ट्यं एतद्देशकालविशिष्टस्य तद्देशकालवैशिष्ट्यं वा विशिष्टद्वयैक्यं वाऽत्र मुख्यार्थो वाच्यः।

---

कत्वमेव प्रकृतसाध्यतयाऽभिमतम् । सामान्यव्याप्तिमूलकानुमितौ तु न साध्यसाधनयोर्व्याप्तिग्रहोऽपेक्षितः । किंतु प्रकृतसाधनसजातीयेषु तत्कालोपस्थितसाधनेषु यावत्सु प्रकृतसाध्यसजातीयसाध्यनिरूपितव्याप्तिज्ञानं प्रकृतसाधनस्य पक्षसत्त्वज्ञानं चाप्रसिद्धस्यैव साध्यस्यानुमापकसामग्रीति सैवापेक्षिता । तत्र प्रकृतसाध्याप्रसिद्धेर्दोषत्वायोगात्सामान्यव्याप्तिदूषणार्थमेवास्य ग्रंथस्य प्रवृत्तिरित्यदोषः । दृष्टांतस्य साध्य विकलत्वादित्यस्य सजातीयसाध्यहेतोर्व्याप्तिग्रहस्थलत्वेनाभिमतेषु सर्वस्थलेषु साध्याभावात्सामान्यव्याप्त्यभावादित्यर्थ इति न तद्विरोध इति ध्येयम् । एतेन प्रतिज्ञाविरोधरूपतया प्रथमप्राप्तसाध्याप्रसिद्धिं विहाय चरमप्राप्तदृष्टांतदोषोद्भावनमयुक्तमिति परास्तम् । वाच्यार्थानुपपत्त्या वा तात्पर्यानुपपत्त्या वा लक्षणा लोके दृष्टा । प्रकृते च न प्रथमकल्प इत्याशयेनाह । लक्षणा हीत्यादिना । लक्षणानाश्रयण इति । किंतु मुख्यवृत्त्यैव पदद्वयस्य चंद्रस्वरूपमात्रबोधकत्व इति शेषः । इत्याद्युपमा चेत्यत्र इत्यादि उपमा चेति छेदमभिप्रेत्य व्याचष्टे । इत्यादिवाक्यमिति । अस्त्येवेति । पूर्वकाल इति शेषः । तथा च तदाश्रयत्वं न देवदत्ते बाधितमिति भावः । तद्देशकालविशिष्टस्येति । इदं तद्देशकालोपहितैतद्देशकालोपहितयोरभेदेनान्वयेन लब्धार्थस्य कथनपरम् । तयोस्तादात्म्यरूपान्वयकाले सतोरेव द्वयोरुपाधित्वात् । विशिष्टेति । विशिष्टवैशिष्ट्यावगाही तादृशविशेषणे च स्वविशेष्यान्वय्यन्वयित्वरूपविशेषणत्वावगाही चोभयोस्तादात्म्यसंसर्गकनिश्चयो जायत इत्यर्थः । एतेन सोऽयमिति वाक्यस्याभेदान्वयबोधं प्रत्येव जनकत्वेन भेदसंसर्गकशाब्दधीजनने सामर्थ्याभावादेकविशिष्टेऽपरवैशिष्ट्यप्रकारकज्ञानरूपभेदसंसर्गकशाब्दबोधो जायते वा तादृशपदार्थयोरभेदसंसर्गकशाब्द-

(टीका) तत्र न तावदाद्यः। एतद्देशकालवैशिष्ट्यस्य प्रत्यक्षसिद्धत्वेनाबोध्यत्वात्। तद्देशकालवैशिष्ट्यस्यैतद्देशकालवैशिष्ट्यबोधने तद्देशकालयोरपीदानीं सत्त्वप्राप्तेश्च। न द्वितीयः। एतद्देशकालयोस्तदानीं सत्त्वप्रसंगात्। न तृतीयः। विशेषणभूतदेशकालैक्येन विना विशिष्टैक्यानुपपत्तेः। विशेषणैक्यस्य च प्रमाणबाधितत्वात्। अतो मुख्यार्थेऽनुपपत्तिदर्शनाद्विशिष्टद्वयोर्लक्षितमेव देवदत्तस्वरूपमनेन भेदभ्रमव्युदासेन प्रतिपाद्यमिति युक्तमाश्रयितुम्। मैवम्। नहि स इत्यस्य देशकालसंबंधमात्रमर्थः। किं नाम तस्यातीतत्वमपि। तथानुभवात्। एवंच स इत्यस्य तद्देशकालसंबंधोऽभूदित्यर्थः स्यात्। अयमित्यस्यापि न कालादिसंबंधमात्रमर्थः। किंतु तस्य वर्तमानता च। नचैवं सति पक्षत्रयेऽपि काचिदनुपपत्तिरस्ति। यद्वयाल्लक्षणाश्रयणं स्यात् तदिदमुक्तमनित्येति। उपलक्षणं चैतत्। वर्तमानेत्यपि ज्ञेयम्। नन्वत एवानुपपत्तिरित्युक्तम्। मैवम्। भावानवबोधात्। अविरुद्धविशेषणानामेव वाच्यतयाऽनेनोक्तत्वात्। न ह्यतीतदेशादिसंबंधस्येदानीं सत्त्वे विरोधोऽस्ति प्रध्वंसो हि तथोच्यते। तथाऽयमिति प्रागभावः।

बोधो जायते वेति विकल्प्य तद्दूषणादीनामसंगतिरिति परास्तम्। पदार्थद्वयाभेदसंसर्गकबुद्ध्यविव तद्दतद्देशकालयोर्विशेषणत्वोपाधित्वाविवक्षापूर्वकप्रमेयवैलक्षण्यस्यैव शंकितत्वात्। अबोध्यत्वादिति। तन्मात्रतात्पर्ये वाक्यस्य वैयर्थ्यं स्यादिति भावः। देशकालैक्येन विनेत्यादि। परमतोपन्यासप्रक्रियायामुपपादितमेतत्। यद्यप्युपहितद्वयतादात्म्यायोगस्यापि पूर्वमुक्तत्वात्तद्दतद्देशकालोपहितयोस्तादात्म्येऽपि धर्मद्वयैक्यापादनरूपदोषो वक्तुं शक्यत एव। तथापि परोक्तोऽप्युपहितयोर्भेदो निर्युक्तिकत्वादश्रद्धेय एवेत्यस्य निर्दलत्वान्न तत्पक्षाश्रयणेन दूषणमभिहितम्। व्युदासेनेति। निमित्ते तृतीया। स्वरूपमात्रप्रतिपादनेतिवाक्यस्य निष्प्रयोजनत्वमेव तस्य प्रत्यक्षेणैव सिद्धत्वादिति शंकानिरासायैतत्प्रयोजनकथनम्। सिद्धार्थान्वाख्यानपरस्यापि भ्रमविशेषनिवर्तकतया सार्थक्यं वर्तत एव। यथा प्रयोगसिद्धशब्दस्वरूपान्वाख्यानपरव्याकरणस्य शब्दसाधुत्वभ्रमव्युदासरूपप्रयोजनवत्तया न वैयर्थ्यं तथा प्रकृतेऽपीति भावः। व्याकरणस्य तथात्वमुक्तं कात्यायनेन सिद्धे तु निवर्तकत्वादिति। व्याकरणस्य सप्रयोजनत्वं सिद्धं तत्रासाधुत्वभ्रमनिवर्तकत्वादिति तदर्थ इति ज्ञेयम्। वर्तमानता चेति। अत्रापि तथैवानुभवादिति हेतुः स्फुट इति नोक्तः। वर्तमानेत्यपीति। मूले वर्तमानदेशकालसंबंधित्वमप्युपलक्षणया ग्राह्यमित्यर्थः। अन्यथाऽयमित्येतदंशान्वयानुपपत्तेरपरिहारान्मूलस्य न्यूनता स्यादिति भावः। नन्वत एवेति विशेषणीभूततद्दतद्देशकालयोरनित्यत्ववर्तमानत्वोक्त्या तादृशविशेषणयोरेकस्मिन्नेककालावच्छेदेनावर्तमानत्वरूपविरोधलाभाद्वेत्यर्थः। अनेन मूलेन। अतीतेति तादृशपदतात्पर्यविषयीभूतस्येत्यर्थः। उक्तं विवृणोति। प्रध्वंसो हीति। सर्वाभिः प्रतीतिभिः प्रायः स्वकालीनधर्मावगाहनस्यौत्सर्गिकत्वात् स इत्यस्य तद्देशकालसंबंधध्वंसवानित्यर्थ इति भावः। प्रागभाव इति। स इत्यनेन

( टीका ) एतेनान्यतरलक्षणाश्रयणं स्वयूथ्यानां निरस्तम् । विशिष्टैक्ये विशेषणैक्यं स्यादितिचेन्न । धूमवदग्निमतोरैक्येऽपि धूमाग्न्योर्भेददर्शनात् ।

---

पूर्वकालेऽतीतत्वविवक्षां विहाय पूर्वकालसंबंधमात्रबोधनपक्ष एतद्देशकालप्रागभावावच्छिन्नोऽयमित्यस्यार्थ इति भावः । अन्यतरलक्षणेति । पदद्वयमध्येऽन्यतरपदस्य स्वबोध्यदेशाकालाद्यघटितं पदार्थांतरान्वययोग्यतावच्छेदकं यद्रूपं तद्विशिष्टलक्षणयेत्यर्थः । सर्वनाम्नामपि बुद्धिस्थवाचित्वात्तादृशधर्मांतरस्येदमादिपदप्रयोगहेतुतया बुद्धिस्थत्वाभावात्तद्विशिष्टबोधो लक्षणयैवेति भावः। नन्विदंपदप्रयोगकाले तादृशधर्मांतरं वक्तृबुद्धिस्थं न वा । आद्ये तदवच्छिन्नस्येदमादिपदशक्त्यैव बोधनसंभवाल्लक्षणाश्रयणं व्यर्थम् । द्वितीये तदवच्छिन्ने वक्तृतात्पर्याभावेन तादृशधर्मघटिते वक्तृतात्पर्यविषयत्वानुपपत्तिरिति । मैवम् । वक्ता हि विवक्षितधर्मं विविच्य वक्तुमशक्तो भवति । तन्मात्रबोधकशब्दाभावात् । अतस्तदुपस्थितिप्रयोजकदेशकालादिसंबंधबोधं प्रथमत इच्छन् तद्घटितधर्मावच्छिन्नं बोधयितुं प्रयुंक्त इति तत्कालीनेदमादिपदानि तत्रैव शक्तानि । वृत्त्या पदादनुपस्थितौ शाब्दबोधे भानायोगात् तादृशधर्मावच्छिन्ने लक्षणायाः युक्तत्वात् । स्वयूथ्याना । रामानुजीयानां । निरस्तमिति । वक्ष्यमाणरीत्या देशकालघटितोक्तमुख्यार्थकत्वस्यैव पदद्वयेऽपि संभवादिति भावः । ननु तादृशध्वंसविशिष्टस्यैतत्कालादिविशिष्टेनोपहितयोरपि तादात्म्यं बोधयितुं न शक्यत इति तस्याखंडार्थत्वमेवेति शंकते । विशिष्टेति । विशिष्टपदेन विशिष्टोपहितयोर्द्वयोरपि परीत्या ग्रहणं कार्यमन्यथा न्यूनत्वापातात् । उपहितस्य विशेष्येण भिन्नाभिन्नस्य विशिष्टवदप्रामाणिकत्वमेव स्वमत इति सूचनाय न स्वशब्देन ग्रहणं कृतमिति ध्येयम् । धूमवदित्यादि । ननु सिद्धांते अनित्यविशेषणस्थले विशेषणसंबंधेन विशेष्यस्यैव विशिष्टशब्दवाच्यः परिणामविशेषो जायते । स च विशेष्येण भिन्नाभिन्नः । तथाच धूमविशिष्टो धूमतत्संबंधहेतुको वन्ह्यहेतुकः परिणामो वन्हिविशिष्टोऽपि धूमाहेतुको वन्हिहेतुकः परिणामस्तावदत्यंतभिन्नावेवातः कथं तयोरैक्यमुक्तमिति चेदत्र कश्चित् । यतो धूमवान् वन्हिमानिति पदाभ्यां धूमविशिष्टवन्हिविशिष्टाभिधाखंडपरिणामौ नोच्येते । तथात्वे खंडयोर्धूमवन्ह्याद्यघटितस्वरूपत्वेन शाब्दबोधे धूमवन्ह्योरस्फुरणप्रसंगात् । किन्तु वन्हिधूमसंबंधवान्विशेष्य एव । रूपद्वयेन तयोरैक्यं युज्यते । नच वन्हिसंबंधधूमा इति ज्ञानादस्य धूमवानिति ज्ञानस्य वैलक्षण्यानुपपत्तिर्विषयवैलक्षण्याभावादिति वाच्यम् । विषयतावैलक्षण्यादेव वैलक्षण्योपपत्तेः । धूमप्रकारकपर्वतादिविशेष्यकसंशयादेरपि तावतैव निवृत्तेः । बाह्यार्थभंगनिरासस्य तु रीत्यंतरेणैव कर्तव्यत्वात् । नन्वेवं मत्वर्थीयप्रत्ययांतेनाखंडविशिष्टस्याबोधने शिखी नष्टः स्वर्गी ध्वस्त इत्यादौ का गतिः । विशेष्ये नाशायोगात् विशेषण एव तत्संबंध एव वा ध्वंसप्रतियोगितादात्म्यं प्रतीयत इति न सत् । विशेष्यीभूतशिखिस्वर्गिणोरेव शिखिस्वर्गिपदेनोपस्थितत्वेन तद्विशेषणतयोपस्थिताशिखादावन्वये निराकांक्षत्वात् शिखादौ तत्प्रतीतिश्च शाब्दबोधोत्तरकालीना मानसी । अतः कथं विशिष्टस्य धूमवदादिपदेनाबोधनमिति चेत् । सत्यम् । न वयं धूमवदादिशब्दैः सर्वथा विशिष्टं न बोध्यत इति ब्रूमः ।

किंतु धूमतत्संबंधतदाश्रयसहितमेव प्रतीयत इति । तथाच शक्तिविशेषस्यैव विषयितारूपत्वस्य पूर्वमुक्तत्वाद्विशिष्टव्यवहारानुकूलैका शक्तिस्तदंशरूपा चान्या । तथाच धूमवद्रूपाश्रयस्वसमभिव्याहृतवन्ह्याश्रयस्य चाभेदो भासते । तत्पदप्रतिभासमानविशिष्टयोस्तु तादृशाश्रयतादात्म्यापन्नतयैव स्फुरणं न विशिष्टद्वयस्य तादात्म्यं भासते । यत्र क्वचिद्विशिष्ट एवेतरान्वयतात्पर्यं तत्र तादृशाश्रयतादात्म्यापन्नत्वेन भासमानविशिष्ट एवेतरान्वयः । धूमाश्रयवन्ह्याश्रययोरभेदभाने तत्पदोपस्थापितविशिष्टयोराश्रयांश एव तादात्म्यभानं विशिष्टस्येतरान्वयस्थले चाश्रयस्यैव विशिष्टे तादात्म्येन भानं फलव्यापारयोः पृथग्धात्वर्थत्वमते कर्तृकर्माख्यातसमभिव्याहार इव । यथा स्वर्गी ध्वस्त इत्यादौ । विशिष्टान्वयस्थले विशेषणस्यापि सत्ता तदन्वयकालेऽर्थात्प्रतीयते तां विहाय विशिष्टसत्त्वायोगात् तात्पर्यसत्त्वे स्वविशेष्यान्वयिन्यन्वयः । सोऽपि यथातात्पर्यं प्रतीयते । न तु विशिष्टान्वयस्थले स्वविशेष्यस्य यादृशोऽन्वयस्तादृश एवेति नियमः । नापि विशेषणस्य स्वविशेष्यान्वयिन्यन्वय एवेति नियमश्च बीजाभावात् । अतिप्रसंगस्य चोक्तरीतिमात्रेण वारणसंभवात् । दंडी प्रैषानन्वाहेत्यादौ दंडादौ प्रैषोच्चारणे चैत्रवत्कर्तृत्वेनान्वयायोगाच्च । अत एव स्वविशेष्यस्येतरस्मिन्यादृशोऽन्वयस्तादृशान्वयिन एव विशेषणत्वमिति वदंतः परास्ताः । दंडस्योक्तस्थले विशेषणत्वानुपपत्तेः । तस्य प्रैषोच्चारयितृत्वायोगात् । दंड उपाधिर्न विशेषणमिति चेन्न । उपाधिविशेषणयोरुपहितविशिष्टयोश्चातिरिक्तत्वे मानाभावात् । न चैवं सति धूमाश्रयवन्ह्याश्रययोरैक्यस्यैव भानांगीकारे विशिष्टैक्ये विशेषणयोरैक्यमिति परोक्तनियमस्य नेदं व्यभिचारस्थलोदाहरणं युक्तमिति वाच्यम् । सोऽयं देवदत्त इत्यत्रापि तत्कालध्वंसरूपविशेषणसंबंधेन जायमानविशिष्टस्य प्रागभावरूपविशेषणसंबंधपरिणतविशिष्टेन सहाभेदबोधकतया अस्माभिरंगीकारात्तदाश्रयमात्राभेदबोधकत्वस्यैवांगीकारात्तत्पक्ष एव तेन विशेषणैक्यमापादितं स्यात् तस्य चोक्तस्थले व्यभिचार इत्याशयेन तत्प्रदर्शनसंभवादित्याहुः । वस्तुतस्तु एकस्मिन्वस्तुनि चैकविशेषणसंबंधेनैकविशिष्टपरिणामवदनेकविशेषणसंबंधैरप्येकविशिष्टमेव परिणमते । अनेकद्रव्यैरेकग्रहादिरूपविशिष्टोत्पत्तिदर्शनात् । पूर्वमेकविशेषणसंबंधेनैकविशिष्टोत्पत्त्यनंतरं विशेषणांतरस्य संबंधे तु तादृशविशिष्ट एव विशेषणसंबंधप्राप्त्या पूर्वविशिष्टस्यैव विशिष्टांतरात्मना परिणामः । अत एव दंड्येवेदानीं कुंडली जातः दंडी सन् कुंडली जात इति दंडिरूपविशिष्टस्यैव कुंडलात्मना परिणामावगाहिप्रत्ययः संगच्छते । तर्हि चैत्री कुंडली जात इति शुद्धतादात्म्यावगाहिप्रत्ययः कथमिति न वाच्यम् । शुद्ध संबंधद्वारेणैव कुंडलरूपविशेषणस्य दंडिरूपविशिष्टसंबंधाच्छुद्धविशिष्टोभयतादात्म्यापन्नतयैव विशिष्टांतरपरिणामसंभवात् । तथाच तद्दशाकालसंबंधध्वंसतत्कालसंबंधाभ्यामेतत्कालप्रागभावतद्दशाकालप्रागभावाभ्यां तथा धूमाग्निभ्यां चैकविशिष्टोत्पत्तिसंभवात् एकस्यैव धूमविशिष्टत्ववन्हिविशिष्टत्वरूपाभ्यामैक्यस्यैतद्वाक्येन बोधनसंभवात् । तत्र परोक्तनियमस्य व्यभिचारप्रदर्शनं युक्तमेव । नच धूमविशिष्टे धूमानंगीकारात्कथं धूमवत्पदेन तादृशविशिष्टस्य धूमघटितरूपेण स्फुरणमिति वाच्यम् । प्रमितधर्माणां विशेष्यद्वारैव तत्रांगीकारावश्यकतायाः प्रागवोचदितत्स्यादिति । अत्र धूमवदग्निमदुदाहरणेन अकारणकार्यद्रव्येत्यादिहेतोर्व्यभिचारोऽपि सूचितः । युगपद्विशेषणद्वयाधीनविशिष्टरूपद्रव्यबोधकव्याप्तितात्पर्यकवाक्ये स्वयुक्तहेतोः सत्त्वात् व्याप्तिपरत्वेनाखंडार्थपरत्वाभावाद्व्यभिचार इति ।

(टीका ) तयोरैक्यमेव नास्तीति चेत्। तर्हि दृष्टांताभावात्सुतरां विशेषणैक्यापादनानुपपत्तिः।

---

आपादनानुपपत्तिरिति । ययोर्विशिष्टयोरैक्यं तद्घटकयोर्विशेषणयोरैक्यमित्यत्र दृष्टांताभावादिति भावः । ननु माऽस्तु तथा व्याप्तिः तथापि यादृशशब्दाभिलाप्यविशिष्टं यादृशशब्दाभिलाप्यविशिष्टाभिन्नं तादृशशब्दाभिलाप्यविशेषणं तादृशशब्दाभिलाप्यविशेषणाभिन्नमिति नियमः संभवति । वन्हिमान्पर्वतः अग्निमान्पर्वत इति वाक्यद्वयमुपादायोपपादनसंभवात् । तथाच तयैव व्याप्त्येदमापाद्यत इति चेन्न । अप्रयोजकत्वात् । किंच मृच्छब्दाभिलाप्यघटशब्दाभिलाप्ययोर्नीलशब्दाभिलाप्यघटशब्दाभिलाप्यविशिष्टयोरैक्येऽपि मृत्त्वघटत्वनीलत्वादीनामैक्याभावाद्व्यभिचारः । नच नीलत्वमृत्त्वोपहितानामेव तत्र तादात्म्यं स्वीक्रियत इति वाच्यम् । तद्धर्मविशिष्टपदतद्धर्मोपहिततद्धर्मावच्छिन्नपदानामेकार्थत्वेनोपहितयोः स्वीक्रियते विशिष्टयोर्न स्वीक्रियत इत्यस्य विप्रतिषिद्धत्वात् । कुत एतदिति चेत् । यत्र यत्रोपहितोऽयमिति व्यवहारस्तत्र तद्धर्मविशिष्टोऽयमिति यत्र विशिष्टनाशादिप्रत्यक्षं तत्रोपहितस्यापि नाशादिप्रत्यक्षम् । उपहितस्य या सामग्री विशेष्ये विशेषणसंबंधरूपा विशिष्टस्यापि सैवेति कारणभेदानिरूपणात्फलभेदानिरूपणात्परस्पराविषयकप्रतीतिविषयत्वादिभेदकधर्माभावाच्च विशिष्टातिरिक्तस्य विशेष्येण भिन्नाभिन्नस्य परिणामविशेषस्यांगीकारे मानाभावात् । नच दंडी प्रमेय इत्यत्र दंडविशिष्ट उद्देश्यः दंडी भुंक्त इत्यत्र दंडोपहित एवोद्देश्यो न दंडविशिष्ट इत्यादिप्रतीतिव्यवहारयोः प्रामाण्यनिर्वाहाय विशिष्टोपहितयोर्भेद आवश्यक इति वाच्यम् । तादृशप्रतीतिव्यवहारयोरेतदविरुद्धार्थविषयकत्वात् । तथाहि । प्रमेयत्वं विधेये दंडविशिष्ट उद्देश्य इत्यत्र विधेयभूतप्रमेयत्ववत्त्वेन भासमानदंडाश्रयः प्रमेयत्वं प्रत्युद्देश्य इति प्रतीयते । भोजने विधेये दंडोपहित उद्देश्य इत्यत्र भोजनाश्रयत्वेनाप्रतीयमानभोजनसमानकालीनत्वेन भासमानदंडाश्रय उद्देश्यो न तु भोजनाश्रयत्वेन भासमानदंडाश्रय इति । तथाच तत्तत्प्रतीतिनिरूपिताविधेयताश्रयधर्मवत्त्वेन भासमानत्वाभासमानत्वयोरेव दंडांशे विषयीकरणादेतत्प्रतीतिभ्यां कथमुपहितविशिष्टयोर्भेदसिद्धिः । अन्यथा सोऽस्तीत्यत्र तत्तोपलक्षितश्चैत्रो विषयो नेदंत्वोपलक्षितः, अयं कांच्यामभूदित्यत्रेदंत्वोपलक्षितचैत्रो विषयः चैत्रोऽस्तीत्यत्र शुद्धश्चैत्र उद्देश्यो नेदंत्वोपलक्षितो नापि तत्तोपलक्षित इत्यादिप्रतीतिव्यवहाराभ्यां तत्तेदंत्वोपलक्षितयोः परस्परं शुद्धेन च भेदस्य प्रसक्त्या सोऽयं देवदत्त इत्यादौ तत्त्वमसीत्यादौ च तत्तेदंत्वोपलक्षितयोस्तत्त्वंपदोपलक्षितयोस्तत्त्वंपदोपलक्षितजीवत्वेशत्वोपलक्षितचेतनयोश्चाभेदस्य प्रातीतिकत्वप्राप्त्या तद्बोधकत्वेन वाक्यप्रामाण्योपपदनासंभवापत्तेः । उक्तयोर्भेदेऽपि स्वरूपमात्रबाधो जायते तेन प्रामाण्योपपत्तिरित्यंगीकारे तत्त्वंपदादीनां विशिष्टोपहितार्थकत्वेऽपि तथैव वक्तुं शक्यत्वेन तत्पक्षपरित्यागस्योन्मत्तचेष्टितत्वापातात् । यदि चेदंत्वोपलक्षित उद्देश्य इत्यत्र विधेयभूतकांचीसत्त्वाधिकरणत्वेन तत्समानकालत्वेन चाभासमानेदंत्वाश्रयत्वेन भासमानचैत्र उद्देश्यो नत्वेतादृशेदंत्वेन भासमानश्चैत्रः तत्त्वेन भासमानश्चैत्रो वेति तादृशप्रतीतिव्यवहाराभ्यां विषयीक्रियते तेनोक्तरीत्योपलक्षितयोर्भेदसिद्धिरिति ब्रूषे तर्हि तथैव विशिष्टोपहितयोर्भेदासिद्धिरुक्तैव । नचोक्तव्यवहारादिना तदसिद्धावपि दंडविशिष्टोद्देशकदंडोपहितोद्देश्यकदंडोपलक्षितोद्देश्यकानां दंडी द्रव्यवानिति ज्ञानानां विषयवै-

लक्षण्यं विना परस्परवैलक्षण्यायोगात् विशिष्टोपहितोपलक्षितानां परस्परं वैलक्षण्यसिद्धिरप्रत्यूहैवेति वाच्यम् । उद्देश्यतावच्छेदकीभूतदंडे विधेयीभूतद्रव्याश्रयत्वभानतद्भानसहिततत्समानकालीनत्वादिसंबंधांतरभानैतदुभयासाहित्यविशिष्टधर्मितावच्छेदकत्वमात्रेणैव वैलक्षण्यस्य संभवात् । त्वद्रीत्यापि तादृशविधेयाश्रयत्वादिभानस्य तादृशोद्देश्यतावच्छेदकीभूतदंडादावावश्यकत्वात् । अन्यथा दंडिनं द्रव्यवत्त्वेन जानामीत्येवानुव्यवसायस्य प्रतीतित्रयस्थलेऽप्यंगीकारापत्त्या प्रतीतित्रयाणां वैलक्षण्यस्यैवासिद्धिप्रसंगात् । दंडविशिष्टविशेष्यकद्रव्यवत्त्वग्रहोत्तरं दंडो द्रव्यवान्न वेति संशयानुत्पत्तिः दंडोपहितधर्मिकतादृशग्रहोत्तरं च दंडे द्रव्यवत्त्वसंशयोत्पत्तिरिति वैलक्षण्याभावापत्तेः । दंडांशे विधेयाभानस्योभयत्रापि तौल्यात् । एतेन परमतोपन्यासप्रस्तावे प्रदर्शिता विशिष्टोपहितभेदसाधिका युक्तिरप्यपास्ता उक्तरीत्यैव तत्रापि निर्वाहात् । यत्तूपलक्षणतयोपात्तस्य शाब्दबोधे भानं नास्ति किंतु तदुपस्थापितधर्मांतरस्य वा तदुपस्थापितस्वरूपमात्रस्य वेति । तदसत् । पदवृत्त्याऽनुपस्थापितस्य शाब्दबोधे भाने पटशब्देन समवायेनोपस्थितगगनादीनामपि तात्पर्यवशाच्छाब्दबोधे भानप्रसंगात् । तदवगाहिशाब्दोत्तरं मानस एव सः । वस्तुतस्तु तावद्बोधपर्यंतमिच्छासत्त्वेऽपि न तस्य शाब्दत्वम् । अन्यथा धूमोऽस्तीति वाक्यप्रयोक्तृतात्पर्यविषयीभूतवन्ह्यनुमितेरपि शाब्दत्वापत्तेः । स्वरूपमात्रोपलक्षकत्वं त्वश्रद्धेयमेव । स्वरूपमात्रावगाहिबोधस्योपलक्षणया धर्मांतरोपादानस्थलेऽनुभवविरुद्धत्वात् । विवेचयिष्यते चेदमुपरिष्टात् । तद्विधेयकबोधे तत्समकालिकत्वतत्प्रयोजकत्वमात्रेणाभासमानेष्वपि उद्देश्यतावच्छेदकेषु विशेषणत्वव्यवहारो यथा तिलकीकर्म कुर्वीत धनवान्सुखीत्यादौ तिलकधनादीनां तदभिप्रायेण तिलकादिविशिष्टोद्देश्यकस्थलमिति व्यवह्रियते । कदाचित्तिलकादौ कर्मकरणरूपविधेयाश्रयत्वाभानं तत्समानकालीनत्वभानमात्रमभिप्रेत्य न तिलकविशिष्ट उद्देश्यः किंतूपहितोद्देश्यक इति व्यवह्रियते । विशिष्टादिव्यवहाराणां तात्पर्यानुसारेण नानार्थबोधने सामर्थ्यात् । क्वचित्तत्पदशक्यकोटावप्रविष्टस्तच्छक्तेरितरव्यावृत्तिनिर्वाहकोऽप्युपाधिरुच्यते । यथा धेनुपदप्रयोगे गोत्वं, पंकजपदसमुदायशक्तेरनंगीकारे पंकजपदप्रयोगे पद्मत्वम् । क्वचिन्नीलाविषयकत्वतात्पर्येण नीलोपलक्षितस्य ज्ञानमिति नीलस्य ज्ञानसमकालिकत्वतात्पर्येण नीलविशिष्टस्येदं ज्ञानं नीलोपहितस्येदं ज्ञानं न नीलोपलक्षितस्य ज्ञानमिति । तथाच विशिष्टादिव्यवहाराणां तात्पर्यानुसारेणैकवस्तुनो बोधकत्वाच्च तदन्यथानुपपत्त्या तयोर्भेदसिद्धिः । अन्यथा पूर्वोक्तव्यवहारबलात्तिलकीकर्म कुर्वीतेत्यादिवाक्यानां विशिष्टोद्देश्यकत्वतदभावौ स्यातामिति दिक् । तस्माद्दंडपुरुषसंयोगो इति ज्ञानात् दंडीति प्रत्ययवैलक्षण्यार्थमंगीक्रियमाणविशिष्टविषयकस्य तत्प्रत्ययविलक्षणोपहितविषयकप्रत्ययरूपसाधकस्याभावात्तयोर्भेदानंगीकारे बाधकाभावाच्चोपहितविशिष्टभेदांगीकारो निर्युक्तिक एवेति त्वदुक्तनियमस्य नीलो घट इत्यादौ व्यभिचारो दुर्वार एव । अत्रेदमपि बोध्यम् । मृत्त्वघटत्वोपहितयोस्तादात्म्यधीरिहापि ध्वंसरूपतत्तदंतोपहितयोः प्रागभावरूपदंतातत्तोपहितयोस्तादात्म्यमेव बुध्यताम् । अविरुद्धोपाधिद्वयोपहितयोस्तादात्म्याभावे मृत्त्वघटत्वोपहितत्वादीनामपि तथात्वापातेन तादात्म्यसंसर्गकबोधस्थलस्यैवाप्रसिद्धिप्रसंगः । तत्रापि मृत्त्वघटत्वोपलक्षितैक्यबोधने सोऽयमित्यादेरिवाखंडार्थकत्वप्राप्त्या हेतावकारणकार्यद्रव्येत्यादेर्वैयर्थ्यम् । उपाधिभेदादुपहितभेदे तुल्यन्यायेनोपलक्षकभेदेनोपलक्षितभेदस्यापि

( टीका ) तथापि किमत्र तत्त्वम् । श्रोतृबुभुत्सानुसारेणत्रयमपीति ब्रूमः ।

प्राप्त्या तयोरैक्यस्यापि बोधनायोगः । कार्यकारणादीनामुपहितानामप्यभेदः स्वीक्रियतेऽन्यत्र नेत्यत्र मानाभावः । समानाधिकरणव्यवहृतिगोचरत्वस्य दंडी कुंडलीत्यादावपि सत्त्वात् । अविरुद्धोपाधिद्वयोपाहितयोस्तादात्म्यांगीकारे सोऽयं देवदत्त इत्यत्राप्यस्मदुक्तत्तेदंत्वयोराविरुद्धत्वात्तदुपहितयोस्तादात्म्यसंभवादखंडार्थत्वायोगः।जीवत्वेशत्वयोरेककाले एकस्मिन्नेव चेतनेऽगीकृतत्वाद्भवता विरोधो वक्तुं न शक्य इति तत्राप्युपहिताभेद एव बोध्यताम् । किंच कार्योपाधिरयं जीवः कारणोपाधिरीश्वर इति श्रुतिबलादाविद्यांतःकरणरूपकारणकार्योपाध्युपहितयोर्विशिष्टयोर्वा जीवेश्वरत्वप्राप्त्या कारणोपहितस्य कार्योपहितं प्रति कारणत्वसंभवादीशजीवयोस्तादात्म्यस्यैव संभवादखंडार्थकत्वायोगः । अन्यथाऽविद्यावृत्तिप्रतिबिंबितचिद्रूपसाक्षिणोऽविद्योपहितजीवतादात्म्याज्जीवस्य द्रष्टृत्वोक्त्यसंगत्यापत्तेः । अत एव जीवेश्वरयोः कार्यकारणभावापन्नत्वादकारणकार्येत्याद्युक्तहेतोरसिद्धिः । एवं तदेतद्रूपमित्यद्रव्यपरवाक्येनाप्यखंडार्थबोधोदयादखंडार्थकबोधकत्वे नोक्तहेतुः प्रयोजकः किंत्वसंभवतादात्म्यकत्वे सति समानाधिकृतत्वमात्रमिति तदेव वक्तव्यम् । एवं सामानाधिकरण्यस्य चतुर्धा विभागोऽप्ययुक्तः । इदं रजतमित्यादावपि तादात्म्यबोधस्यैवांगीकृतत्वात् । यश्चोरः स स्थाणुरित्यत्रापि चोरपदस्य चोरत्वेन ज्ञानविषय इत्यर्थस्यांगीकृतत्वेन तत्रापि तादात्म्यस्यैव बोधितत्वात् । अवांतरभेदविवक्षायां प्रयोजनविशेषानुपलंभादिति । तटस्थः शंकते । तथापीति । त्रयमपीति । एतद्देशकालवैशिष्ट्यस्य पुरोवर्तिपिंडे प्रत्यक्षसिद्धत्वेऽपि तद्देशकालध्वंसविशिष्टे एतद्देशकालवैशिष्ट्यप्रकारकसंदेहेन तद्बुभुत्सायामाद्यपक्षः प्रवर्तते । एतत्कालादिप्रागभावविशिष्टे तद्देशकालादिवैशिष्ट्यसंदेहाहितबुभुत्सायां द्वितीयपक्षः प्रवर्तते । प्रथमकल्पे स देवदत्तोऽयमित्युद्देश्यविधेयभावः । द्वितीयपक्षेऽयं देवदत्तः स इत्युद्देश्यविधेयभावस्तात्पर्यानुसारेण योजनाग्रहसंभवात्।शाब्दबोधः सर्वपक्षेऽप्यभेदान्वयावगाही परंतु प्रथमद्वितीयपक्षयोस्तदनंतरमेकविशिष्टेऽपरवैशिष्ट्यावगाहिमानसबोधः श्रोतुरिष्टो जायते।तन्निर्वाहकतयैव वाक्यसार्थक्यम् । तृतीयपक्षे वक्ष्यमाणे शाब्द एव श्रोत्रभिमतो भवतीति ज्ञेयम् । पक्षत्रयेऽपि विशिष्टवैशिष्ट्यावगाही बोधो विशेषणयोः समकालिकत्वमवगाहतेऽत एकविशिष्टेऽपरवैशिष्ट्यस्य विशिष्टद्वयैक्यस्य च सिद्धिः । नन्वाद्यपक्षो न युक्तः । तद्देशकालसंबंधध्वंसस्य पुरोवर्तिपिंडे निश्चयाभावे धर्मितावच्छेदकविशिष्टधर्मिनिर्णयाभावेन तदवच्छिन्नधर्मिकैतद्देशकालवैशिष्ट्यप्रकारकसंदेहायोगेन बुभुत्सानुपपत्तिः । तस्य निश्चितत्वे तदवच्छिन्ने एतद्देशकालसंबंधस्यापि निश्चितत्वेन बुभुत्सायोगः । पुरोवर्तिनः सन्निकृष्टत्वादन्यथा तं प्रत्युपदेशकस्यायमिति निर्देशायोगः । नच पुरोवर्तिपिंडत्वं धर्मितावच्छेदकत्वेनानवगाह्य जायमानो यस्तद्देशकालसंबंधध्वंसवत्त्वमात्रधर्मितावच्छेदककसंशयस्तद्बलादेव बुभुत्साऽस्त्विवति वाच्यम् । तस्य धर्मितावच्छेदकसामानाधिकरण्यमात्रेणैतद्देशकालसंबंधाभावावगाहित्वे सोऽयं देवदत्त इति पिंडविशेषबोधकवाक्यस्य तदनिवर्तकता । अवच्छेदकावच्छेदेन तदभावावगाही संशयस्तु न घटते । स्वस्मिन्नेवैतद्देशकालसंबंधस्य निश्चितत्वादिति चेन्न । यत्र श्रोत्रा स्वासन्निकृष्टदेवदत्तः पूर्वानुभूतस्तद्देशकालध्वंसवत्तया ज्ञातः पृच्छयते स देवदत्तः क्वास्तीति । तं प्रति स्वसन्निहितं देवदत्तं बोधयति स देवदत्तोऽयमिति । तत्रोक्तप्रथमकल्पसंभवात् ।

(टीका) कुत एतदिति चेत्। अनित्यदेशकालसंबंधित्वस्येति तद्देशकालादिविशिष्ट इति वचनात्पक्षद्वयांगीकारो ज्ञायते। अनुस्मृतेश्चेत्यादिना तृतीयांगीकारोऽपि। तर्हि देशकालसंबंधित्वस्येति कथम्। उपलक्षणमित्यदोषः।

तृतीयपक्षे चायंपदस्योक्तप्रागभावावच्छिन्नार्थकत्वे तस्मिन् स इति पदार्थभूततद्देशकालसंबंधविशिष्टाभेदः प्रतीयते। तत्पदस्योक्तध्वंसावच्छिन्नार्थकत्वे त्वयंपदार्थभूतैतद्देशकालविशिष्टाभेदः प्रतीयते। विशेषणयोगविरुद्धत्वादुक्तविशिष्टद्वयैक्योपपत्तिः। ननु तत्पदस्योक्तध्वंसावच्छिन्नार्थकत्व इदंपदस्यैतद्देशकालविशिष्टार्थकत्वपक्षे यथा तत्तावच्छिन्नोद्देश्यकेदंपदार्थविधेयकबोधः श्रोतृबुभुत्सानुसारेण स्वीक्रियते तथेदंत्वावच्छिन्नोद्देश्यकतत्पदार्थविधेयकबोधोऽपि संभवति। श्रोतृबुभुत्सायास्तथैव संभवात्। एवमयमित्यस्य प्रागभावघटितार्थकत्वे तत्पदस्य यथाश्रुतार्थकत्वपक्षेऽप्यनयैव दिशा बोधद्वयम्। एवं विशिष्टैक्यबुभुत्सापि एवं क्रमेण द्विधा संभवति। तत्पक्षेऽप्युक्तोद्देश्यविधेयभावव्यत्यासात्पक्षपट्कमिति वक्तव्यं त्रयमिति कथमुक्तमिति चेन्न। तद्देशकालध्वंसे तद्देशकालसंबंधेतदुभयवैशिष्ट्यविषयकत्वेन तथैतद्देशकालप्रागभावतद्देशकालसंबंधेतदुभयवैशिष्ट्यविषयकत्वेन बोधद्वयम्। द्वयमेकीकृत्याद्यद्वितीयपक्षयोरुक्तिः। पदद्वयस्य निषेधप्रधानत्वे उद्देश्यविधेयभावव्यत्यासेन बोधद्वयम्। तथैव श्रोतृबुभुत्सानुसारेण संभवति चेत्। अन्यतरपदस्य निषेधप्राधान्यविवक्षायां चोद्देश्यविधेयभावव्यत्यासेन श्रोतृबुभुत्सानुसारेण चत्वारो बोधाः संभवंति। एवं चैतत्पट्कमपि तत्पदार्थेदंपदार्थविशिष्टद्वयैक्यविषयकत्वेनैकीकृत्य त्रयमपीति पक्षत्रयत्वेनोक्तिः। प्रमेयवैलक्षण्याभावादुक्तावांतरवैलक्षण्यं नादृतमित्यवधेयम्। इदमाचार्याभिप्रेतं नवेति शंकां परिहरति। अनित्येति। देशकालयोरनित्यत्वकथनेन तद्ध्वंसमादायेदंत्वसमानकालिकत्वं संपाद्यैकविशिष्टेऽपरवैशिष्ट्यं संपाद्यमित्युक्तं भवति। तद्देशकालादिविशिष्ट इति तत्पदस्य देशकालसंबंधप्राधान्यनार्थमभिप्रेत्य तद्विशिष्ट इतीदंपदार्थे तद्वैशिष्ट्यकथनात्तदनुसारेणायमित्यस्य प्रागभावघटितार्थकत्वमभ्युपेत्यैकविशिष्टेऽपरवैशिष्ट्यमुपपाद्यमित्युक्तं भवतीति द्वितीयपक्षलाभः। अनुस्मृतेरितिसूत्रेण पूर्वापरकालसंबंधविशिष्टयोरैक्ये प्रत्यभिज्ञायाः प्रमाणीकृतत्वात्। तस्य तत्तेदंताविशिष्टयोरैक्यावगाहितासिद्धौ तदभिलापकवाक्यस्यापि तद्बोधकत्वमवश्यांगीकरणीयमभिज्ञाभिलपनयोः समानविषयकत्वात्। तथाच तत्सूत्रेण तृतीयपक्षो लभ्यत इति भावः। आदिपदेन तत्सूत्रसंबंधिभाष्यादिग्रहणम्। तेन परैः पूर्वानुभूतस्य स्मृत्यनुपपत्त्यात्मनः क्षणिकत्वं नास्तीति तत्सूत्रस्य व्याख्यातत्वात्कथमेतत्तृतीयपक्षज्ञापकतयोदाह्रियत इति शंकाऽपास्ता। प्रत्यभिज्ञापरत्वेनाचार्यैर्भाष्ये व्याख्यातत्वात्तस्यैवादरणीयत्वात्। परोक्तस्यापव्याख्यानत्वात्। उत्तरोत्तरविज्ञानरूपात्मनि पूर्वपूर्वविज्ञानवृत्तिवासनासंक्रमेण तैः स्मृतेरुपपादितत्वात्तदन्यथानुपपत्त्याऽऽत्मनः स्थिरत्वासिद्धेः। स्मृतेरिव सौगतमते प्रत्यक्षकार्यप्रवृत्त्यादीनां परामर्शादिकार्यानुमित्यादीनामप्यनुपपत्तेरात्मनः क्षणिकत्वपक्षे सत्त्वेन स्मृतिमात्रग्रहणे न्यूनत्वापत्तेश्च। सोऽहं तदेवेदमिति प्रत्यभिज्ञायाः साक्षात्स्वविषयस्थिरत्वग्राहिकाया आत्मनि घटादौ च स्थिरत्वसाधकतया तत्परत्वेन सूत्रव्याख्यानं विहायात्ममात्रक्षणिकत्वनिरासकतयोक्तस्मृत्यन्यथानुपपत्तिरूपहेतुपरत्वेन व्याख्यानस्यासंगतत्वाच्च। देशकालेति। तद्देशकालेत्याद्यप्यत्र ग्राह्यम्। कथमिति। आभ्यां पक्षद्वयस्यैवाभिमतत्वलाभात्तृतीयपक्षस्यांगीकारो न युक्त इत्याशयः। उपलक्षणमिति। अन्यत्रोक्तत्वाच्छिष्यैरेव ज्ञातुं

शक्यमित्याशयेन कंठतोऽनुक्तं तदप्युलक्षणया ग्राह्यमेवेति भावः । ननु सोऽयमित्यत्राभेदान्वयबोधस्यैवावश्यवक्तव्यत्वात्तृतीयपक्षः स्वत एव सिद्धः। तद्देशकालादिविशिष्ट इति। प्रथमांतनिर्देशेन मूलेनेतरपक्षद्वयवज्ज्ञापितोऽपि किं ज्ञापकांतरान्वेषणेनोपलक्षणत्वोक्त्या च । सत्यं । वाक्येन साक्षाज्जायमानबोध एव परमतात्पर्यमित्यस्यैव तृतीयपक्षत्वेन तत्र ज्ञापकांतरान्वेषणौचित्यात् । कैर्विशेषणैर्विशिष्ट इति प्रश्न इत्युक्त्या विशेषणसंबंधबोधमात्रतात्पर्यावगमात् । उद्देश्यांशं विहायैतद्देशकालादिविशिष्ट इत्येतावन्मात्रेणैक्यपक्षस्य स्फुटमज्ञापितत्वाच्च स्फुटज्ञापकांतरमुपलक्षणया गृहीतमित्यदोषः । वस्तुतस्तु तद्देशकालध्वंसैतद्देशकालसंबंधयोरेककालावच्छिन्नसामानाधिकरण्यमित्याद्यः पक्षः । एतद्देशकालसंबंधप्रागभावतद्देशकालसंबंधयोरेककालावच्छिन्नसामानाधिकरण्यं वाक्यार्थ इति द्वितीयपक्षः । तद्देशकालसंबंधैतद्देशकालसंबंधाश्रयव्यक्त्यैक्यमिति तृतीयपक्षः । प्रथमद्वितीयपक्षयोरुक्तार्थलाभाय तदिदंपदयोरन्यतरस्य निषेधप्राधान्यमभ्युपेत्यैकविशिष्टेऽपरवैशिष्ट्यावगाही बोधो वाक्याज्जायते । तत्पक्षद्वये च क्रमादनित्यदेशकालेति तद्देशकालादिविशिष्ट इति च ज्ञापके भवतः । प्रथमानिर्देशेन विशिष्टद्वयाभेदान्वयबोधद्वारैवाऽयमर्थः पर्यवस्यतीति सूचितम् । तृतीयपक्षे तु तद्देशकालैतद्देशकालसंबंधाश्रययोरभेदबोधस्तद्देशकालयोर्धर्मिविशेषणतापन्नयोः परस्परं समानकालिकत्वानवगाही केवलं धर्म्यंशे तत्प्रकारकोऽभिलषितः । तेनैव कालद्वयसंबध्येकवस्तुरूपस्थिरपदार्थसिद्धिः । पूर्वोक्तपक्षद्वये कालद्वयसंबधस्यैकत्राविषयीकृतत्वेन वस्तुस्थिरत्वासाधकत्वात् तृतीयपक्षाभ्युपगम आवश्यकः । ध्वंसप्रागभावयोःप्रतियोगिसामानाधिकरण्यं विनाऽनुपपत्तिरित्यनुसंधानेनानंतरं तत्सित्ध्यंगीकारे चानुमांतरत्वापत्त्या प्रत्यभिज्ञाप्रत्यक्षस्य क्षणिकत्वानुमानबाधनायोपन्यासायोगप्रसंगाच्च । इत्थंचात्र नोक्तमूलयोर्ज्ञापकत्वं संबंधित्वस्येति संबंधस्यैव प्राधान्येन ग्रहणात् । तद्देशकालादिविशिष्ट इति विशिष्टपदस्वारस्येन विशिष्टैक्यबोधस्योक्तत्वात् । तस्य च तृतीयपक्षे बाधितत्वात् । अत उक्तसूत्रभाष्यरूपज्ञापकांतरमनुसृतं मूलस्योपलक्षकत्वं चोक्तमिति । नचैवंरीत्या ग्रंथाशयवर्णनमयुक्तम् । पूर्वशंकितपक्षत्रयस्यैवात्राभ्युपगतत्वप्रतीतेः । पूर्वत्र च विशिष्टैक्यपक्षस्यैव शंकितत्वादिति वाच्यम् । तत्ताविशिष्ट इदंतावैशिष्ट्यावगाहित्वमिदंताविशिष्टे तत्तावैशिष्ट्यावगाहित्वं तदिदंपदार्थैक्यावगाहित्वमित्येतावदंशमात्रमुपादायात्र पक्षत्रयांगीकारोक्तिः संगतः । अन्यथा तद्देशकालविशिष्ट एतद्देशकालवैशिष्ट्यादेरेव पूर्वं शंकाग्रंथ उक्तत्वेन पूर्वकल्पद्वये च ध्वंसादिकमादाय तदुपपादनस्याप्यसंगतत्वापत्तेः । विशिष्टैक्ये विशेषणैक्यमित्यादिग्रंथस्तु पूर्वकल्पद्वये विशिष्टद्वयैक्यस्यैव साक्षाद्वाक्येन बाधितत्वात्तदभिप्रायकोऽतो न तद्विरोधोऽपि । नन्वथापि तृतीयपक्षो न युक्तः । तद्देशकालसंबंधवान् देवदत्त एतद्देशकालसंबंधवानित्याकारस्य धर्मितावच्छेदकीभूतप्रकारतावच्छेदकीभूतदेशकालसंबंधयोः समानकालीनत्वानवगाहिनोऽपि बोधस्यांगीकर्तुमयोगात्। विरुद्धविशेषणयोरेकधर्मिण्यवगाहिनोऽनाहार्यबोधस्यानुदयात् । अन्यथा भाविपाकाधीनरागतात्पर्येण श्यामघटो रक्त इति प्रतीतिप्रयोगयोः प्रामाण्यापत्तेरिति चेन्न। भावाभावादिरूपाणां सामान्यत एकाधिकरणावृत्तित्वरूपविरोधवत्त्वेन गृह्यमाणानां परस्परसामानाधिकरण्यावगाह्यनाहार्यबोधानुदयेऽपि एककालावच्छिन्नैकाधिकरणवृत्तित्वाभावरूपविरुद्धत्वेन गृह्यमाणानां तादृशैककालीनत्वमविषयीकृत्य सामानाधिकरण्यावगाही बोधो जायत एव । श्यामत्वरक्तत्वयोः समानकालिकत्वानवगाहि-

प्रतीतिप्रयोगाविरुद्धैव । अन्यथा स्नातानुलिप्ताः पीतप्रतिवद्धवत्सामित्यादेरप्यप्रामाण्यप्रसंगात्तादृशक्रियाद्वयतदनुकूलकृत्योः समकालिकत्वाभावात् । यत्तु सर्वत्र विशिष्टवैशिष्ट्यावगाहिबोधजनने पदानां शक्तरुक्तरीत्योपलक्षणविधया बोधजनकत्वांगीकारे मुख्यार्थत्याग एवेति । तदसत् । घटो द्रव्यं शुक्लो नित्यश्च भूतलं घटवादित्यादीनां घटत्वभूतलत्वादीनामुपलक्षणया बोधजनकवाक्यानां शतशो विद्यमानत्वेन सर्वत्रामुख्यार्थकत्वमंगीकृत्य त्वदभ्युपगतरीत्यंगीकारे मानाभावात् । विशिष्टवैशिष्ट्यावगाहिबोधादेस्तात्पर्याधीनत्वात् । अन्यथा वैपरीत्यस्यैव प्राप्तेर्विनिगमकाभावात् । प्रायो विशिष्टवैशिष्ट्यबोधतात्पर्येण लौकिकानां व्यवहारात्तदनुसारेण चेद्ऽप्युत्सर्गतस्तथात्वकल्पनं नतु पदशक्तिबलादिति । यत्तूक्तरीत्या तत्तापाध्वंसरूपत्वांगीकारेऽनुभवविरोधस्तावतापि तद्देशकालसंबंधवानयमित्यत्रागतिरिति । तदसत् । पूर्वकालध्वंसादिविशिष्टे इतरवैशिष्ट्यबुभुत्सानिवृत्त्यर्थं तद्वाक्यप्रवृत्तिकाले वक्तृतात्पर्यानुसारात्तादृशबोधस्यैवानुभवसिद्धतया तत्रानुभवविरोधोक्त्यसंगतेः । तद्देशकालसंबंधवानिति वाक्यस्य च तृतीयपक्षरीत्या बोधकत्वसंभवात तत्रोक्तरीतिरनाश्रयणात् । तद्वाक्यस्योक्तरीत्या विशिष्टवैशिष्ट्यावगाहिधीपरत्वे त्वन्मतेऽपि तद्वाक्यमप्रमाणमेव । प्रत्युत तवैवानुभवविरोधः। सोऽयं देवदत्त इति वाक्यश्रवणानंतरं शुद्धस्वरूपमात्रं जानामीत्यननुभवात् । तं देवदत्तमिमं जानामीत्येव सर्वानुभवात् । किंच प्रत्यभिज्ञाभिलापरूपस्य सोऽयमिति वाक्यस्य स्वरूपमात्रबोधकत्वे स एवायं गकार इति प्रत्यभिज्ञाभिलापकवाक्यस्यापि तथात्वे तदभिलाप्यप्रत्यभिज्ञाया अपि गकारस्वरूपमात्रविषयकत्वप्राप्त्या पूर्वापरप्रतीतिविषयगकाराभेदासिद्ध्या वर्णनित्यत्वासिद्धिप्रसंगः। व्यवहारे भट्टमतानुयायिनस्तवप्राप्तेः कर्तुमशक्यत्वात । नच सोऽयं देवदत्त इत्यत्रोक्तरीत्या पूर्वापरत्वोपलक्षितगकारयोर्भेदभ्रमव्युदासद्वारा तदैक्यं सिध्यतीति वाच्यम । उक्तनिश्चयस्य कथंचिद्भेदग्रहप्रतिबंधकत्वांगीकारेऽपि तत्प्रमायां स्वरूपैक्यस्य विषयत्वेन तादृशप्रमाबलात्तत्सिध्युक्तेरयोगात । अन्यथा शुक्तौ रंगभ्रमवंतं प्रति केनचिद्भ्रांतेन पुरुषांतरेण तदिदं रजतमित्युक्तौ तत्राप्तत्वभ्रमवतो रजतत्वस्य रंगभेदव्याप्यत्वग्रहादुद्बुद्धसंस्कारादन्यतरवतः पुरुषस्य रंगभ्रमनिवृत्तिरनुभवसिद्धा । त्वन्मते च तस्य बोधस्य स्वरूपमात्रावगाहित्वात्तस्य चोक्तरीत्या रजतभेदग्रहरंगत्वादिभ्रमनिवर्तकत्वाच्च रजतस्य शुक्तिस्वरूपत्वस्य तद्बलात्सिध्यापत्तेः । नच तज्ज्ञानं न प्रमेति वाच्यम् । शुक्तिस्वरूपस्यैव तत्र विषयतया तदप्रामाण्ये बीजाभावात् । नच तत्र प्रातिभासिकरजतस्वरूपमेव विषय इति वाच्यम् । तथात्वे रजतस्य प्रातिभासिकत्वेन रंगभ्रमहेत्वज्ञानविषयतानवच्छेदकत्वेनाधिष्ठानत्वेन तज्ज्ञानस्योक्ताविद्यानिवर्तकत्वाभावेन शुक्तौ रंगतादात्म्यभ्रमानिवृत्तिप्रसंगात् । रजतस्वरूपमात्रज्ञानेन शुक्तौ रंगभ्रमनिवृत्त्यंगीकारे शुक्तिरजतस्वरूपैक्यमपि सिध्येत् । अन्यथा पूर्वापरगकारैक्यमपि न सिध्येदविशेषात् । ननु न भेदभ्रमनिवर्तकत्वमात्रमुक्तप्रत्यभिज्ञायाः स्वीक्रियते किंतु पूर्वापरवर्णस्वरूपैक्यमपि तस्याविषयः । नच तथात्वे स्वरूपमात्रावगाहित्वानुपपत्तिः । ऐक्यस्य स्वरूपमात्रत्वेन तदनुपपत्त्यभावात् इति चेन्न । गकारस्वरूपमात्रस्य नैय्यायिकैरभ्युगतत्वेन तैः सह मीमांसकानां विवादाभावप्रसंगात् । एतेन 'भेदो भिन्नश्चातिरेकोऽतिरिक्तो भेदो भिन्नः संविदः स्वप्रकाशाः । इत्यादीनां विद्यते नार्थभेदः श्रुत्यंतानामप्यखंडस्तथार्थः ' इति संक्षिप्तशारीरकोक्तिरप्यपास्ता । भेद इत्यनेन तन्मात्रस्य भिन्न इत्यनेन तदाश्रयस्य च प्रतीत्याऽर्थे-

(टीका) ननु प्रकृष्टप्रकाशश्चंद्र इत्यनेनैव ग्रंथेनायमपि दृष्टांतो दूषितो भविष्यति। न्यायसाम्यात्। तत्किमनेन ग्रंथेन। मैवम्। एतदनुपपत्तिपरिहारेण सार्थक्यादिति। ननु मा भूद्वाच्यार्थानुपपत्तिर्लक्षणाक्षेपिका, वक्तुर्विशिष्टार्थविविक्षाभावस्तु गरलमभ्यवहरेत्यादाविव भविष्यति। सच स्वरूमात्रप्रश्नोत्तरत्वात् सिध्यति। अस्मिन् ज्योतिर्मंडले कश्चंद्र इति कोऽयमिति च चंद्रदेवदत्तस्वरूपमात्रं ह्यनेन पृष्टम्। वक्ता च विशिष्टार्थं वदन् आम्रान्पृष्टः केविदारानाचक्षाण इवानवधेयवचनः प्रसज्येतेति चेत्। स्यादेवम्। यदि स्वरूपमात्रे प्रश्नःस्यात्। न चैवम्। स्वरूपमात्रस्य सिद्धत्वान्नहि कश्चित्सिद्धं पृच्छतीत्याह।

**(मूलं) देवदत्तादिस्वरूपमात्रस्य सिद्धत्वान्न स्वरूपमात्रे प्रश्नः ॥१०९॥**

(टीका) ननु प्राक्प्रकृष्टप्रकाशश्चंद्र इत्येतदुदाहरणं प्रथमं निराकृत्य पश्चात्सोऽयं देवदत्त इत्येतन्निराकृतम्। अतश्चंद्रादिस्वरूपमात्रस्येति वक्तव्यम्। किमर्थं क्रमभंगः उच्यते। परेण स्वग्रंथे प्रकृष्टादिवाक्यविषय एव प्रश्नानुपपत्तिर्व्युत्पादिता। सोऽयमित्यत्र तु वाच्यार्थानुपपत्तिरेव। अतः चंद्रादिस्वरूपमात्रस्येत्युच्यमाने प्रकृष्टादिवाक्य विषयानुपपत्तिपरिहार एवायमिति विज्ञायेत। तदुभयाविषयतां तु ज्ञापयितुं क्रमभंगः। एवमपि सोऽयामित्येतद्विषयतैव ज्ञास्यत इति चेन्न। प्रकृष्टादिवाक्यविषयत्वस्य परसिद्धत्वेन सुज्ञानत्वात्। परानुक्तं कस्माच्छंकनीयमिति चेन्न। न्यायप्राप्तस्यापि परिहार्यत्वात्। ननु चंद्रदेवदत्तादिस्वरूपं सिद्धमपि संकीर्णतयैव नतु व्यावृत्तत्वादिना। अतस्स्वरूप एव प्रश्नो युज्यते। अत एव प्रकाश इत्येवोक्ते नक्षत्रादौ प्रसंगात् प्रकृष्ट इत्येव चाभिहिते संतमसेऽपि प्रसंगात्।

---

वैलक्षण्यस्यानुभवासिद्धत्वात्। भेदावृत्तित्वग्रहप्रतिबंधकत्वाप्रतिबंधकत्वादिवैलक्षण्यस्य चानुभवसिद्धत्वाच्च भेदाभिन्नपदयोः समानार्थकत्वे क्तप्रत्ययस्य स्वार्थिकत्वापत्तेश्चेति। न्यायसाम्यादिति। वाच्यार्थानुपपत्त्यभावरूपन्यायसाम्यादित्यर्थः। एतदनुपपत्तीति। पूर्वशंकाग्रंथोक्तानुपपत्तीत्यर्थः। विशिष्टार्थेति। प्रकृतवाक्येन स्वरसतः प्रतीयमानो योऽर्थस्तन्मात्रपरमतात्पर्याभाव इत्यर्थः। गरलमभ्यवहरेत्यादाविति। तत्र वाक्येन स्वरसतो बोध्ये गरलभोजनमिष्टसाधनत्वे बोधमात्रे तात्पर्याभावः। किंतु तद्द्वारा द्विषदन्नं न भोक्तव्यमिति बोधांतरे तदुपपत्तये लक्षणादिकं यथा प्रकृते तथैवेत्यर्थः। ननु पुत्रहितेच्छोः पितुः पुत्रमरण साधनोपदेशायोगाद्यथाश्रुतार्थे तात्पर्याभावोऽवसीयते। प्रकृते तज्ज्ञापकं किमित्यत आह। स चेति कोऽयमितीति। देवदत्तस्वरूपमात्रप्रश्नपरवाक्यमिदम्। आम्रान् चूतवृक्षान् कोविदारान्

(टीका) नक्षत्रादिव्यावृत्त्या चंद्रस्वलक्षणप्रतिपादनाय प्रकृष्टप्रकाशश्चंद्र इत्याह । एवं स इति वाऽयमिति वा वचने भेदभ्रमानिरासात्तन्निरासेन देवदत्तस्वरूपमात्रप्रतिपादनाय सोऽयं देवदत्त इत्याहेति गम्यत इति चेन्न । विकल्पानुपपत्तेः । तथाहि । किं व्यावृत्त्यादिमत्स्वरूपं प्रश्नप्रतिवचनविषय इत्यभिप्रायः । उत स्वतंत्रमेव नक्षत्रादिव्यावृत्त्यादिकम् । आद्ये विशिष्टार्थताऽनिस्तारः । अर्थाक्षिप्तमेव व्यावृत्त्यादि न शब्दार्थ इति चेन्न । विशेषणार्पणेन विनाऽर्थाक्षेपासिद्धेः । द्वितीयं निराकरोति ।

(मूलं) नक्षत्रादिव्यतिरेकमात्रस्यापि सिद्धत्वान्न व्यतिरेकमात्रं ॥ ११० ॥

---

निवृक्षान् । चंद्रस्वलक्षणमिति । चंद्रस्वरूपभूतं चंद्रलक्षणमित्यर्थः । तन्निरासेन अत्रापि अध्ययनेन वसतीत्यत्रेव पूर्ववत्फलरूपनिमित्ते तृतीया । देवदत्तस्वरूपमात्रप्रतिपादनायेति । उपपादितमेतत्सर्वं पूर्वपक्षविवरणावसरे । विकल्पानुपपत्तेरिति । विकल्पे सत्यनुपपत्तेरित्यर्थः । किमित्यादि । व्यावृत्त्यादीत्यनेन भेदाभावग्रहः । ननु सर्वव्यावृत्तत्वादिनेति तृतीयायाः वैशिष्ट्यार्थकत्वम् । तथाच स्वांशे तद्वैशिष्ट्यमित्याभिप्रेत्याद्यकोटिप्रसक्तिः तत्साहित्यमात्ररूपमित्याशयेन स्वतंत्रमिति द्वितीयकोटिप्रसक्तिः। आद्ये इति । अनिस्तार इति । विशिष्टार्थविषयकप्रश्ने तस्यैव वक्तव्यत्वादित्यर्थः । तन्निर्वाहश्च प्रकृष्टत्यादेरन्यदस्मिन् लक्षणया वा सर्वत्र समानविभक्तिकस्थले अतद्व्यावृत्तिविशिष्टस्यैव वाक्यार्थत्वमतावलंबनेन वा कर्तव्य इत्यर्थः । एवं सोऽयमित्यादौ तद्देशकालीनभेदाभावविशिष्टदेवदत्तस्वरूपबोधोऽपि विशेषणविभक्तेरभेदार्थकत्वमतेन वा तद्भेदाभावस्यैवातदन्यत्वरूपत्वांगीकारेण वोपपाद्यः । ननु संकीर्णचंद्रदेवदत्तस्वरूपमात्रं सिद्धमित्यस्मदुक्तोऽयमभिप्रायः । संकीर्णचंद्रदेवदत्तस्वरूपबोधादितरव्यावृत्तचंद्रस्वरूपतद्देशकालीनभेदाभाववद्देवदत्तनिश्चयो न जायते । स चासंकीर्णव्यवहारार्थमपेक्षितोऽसंकीर्णस्वरूपज्ञानमपेक्षितं तज्ज्ञानेनेतरव्यावृत्त्यादिविशिष्टचंद्रादिविषयकानुमितिरुत्पद्यतेऽतस्तदर्थमसंकीर्णचंद्रस्वरूपमात्रविषये प्रश्नस्तन्मात्रप्रतिपादनं च संगच्छते । तथाचासंकीर्णचंद्रदेवदत्तादिस्वरूपमात्रस्य शाब्दविषयत्वाच्चाखंडार्थत्वहानिर्व्यावृत्तिज्ञानस्य तदधीनानुमितिरूपस्य संभवात् । व्यावृत्तिविशिष्टज्ञायत इत्यस्यापि नानुपपत्तिरित्याशयेन शंकते । अर्थेति । विशेषणार्पणेन विनेति । फलीभूतशाब्दबोधे प्रकृष्टप्रकाशतद्देशकालादिसंबंधरूपधर्माणां चंद्रदेवदत्तादौ भानं विनेत्यर्थः । अर्थाक्षेपेति । चंद्रदेवदत्तादौ व्यावृत्तिभेदाभावयोरित्यादिः । अर्थाक्षेपोऽनुमितिरर्थापत्तिर्वा । अयं भावः । शुद्धस्वरूपमात्रस्य संकीर्णासंकीर्णप्रभेदायोगात् संकीर्णस्वरूपं ज्ञातमित्यस्येतरव्यावर्तकधर्ममुक्तभेदाभावानुमापकधर्मं च विहाय चंद्रदेवदत्तादिपदप्रतिपाद्यत्वादिरूपसामान्यधर्मवत्त्वमात्रेण ज्ञातमित्यर्थः । असंकीर्णस्वरूप-

( टीका ) अत्रापि प्रश्न इत्यनुवर्तते । व्यतिरेक इत्युपलक्षणम् । भेदाभावोऽपि ग्राह्यः । मात्रशब्देन व्यतिरेकादेः स्वातंत्र्यं सूचयति । सिद्धत्वाद्घटादाविति शेषः । नहि प्रष्टा घटादौ नक्षत्रादिव्यतिरेकं भेदाभावं वा न जानातीति युज्यते । स्वरूपमात्रस्य सिद्धत्वादित्युक्तम् । तत्कुत इत्यत आह ।

**( मूलं ) अन्यथा प्रश्नस्यैवासंभवात् ॥ १११ ॥**

( टीका ) यदि प्रष्टा चंद्रादिस्वरूपमात्रं न जानीयात्तदा चंद्र इति अयमिति चानूद्य क इति कथं पृच्छेत् । नह्यविदितं वस्त्वनुवदितुं शक्यते तेन ज्ञायते चंद्रादिस्वरूपं तस्य सिद्धमिति । यदि तर्हि प्रश्नपरिहारयोर्न स्वरूपमात्रं विषयः । किंविषयौ तावित्यत आह ॥

**( मूलं ) अतः कैर्विशेषणैर्विशिष्ट इति प्रश्ने प्रकृष्टप्रकाशतद्देशकालादिविशिष्ट एव वाक्यार्थः ॥ ११२ ॥**

( टीका ) उपपद्यत इति वाक्यशेषः । तेन प्रश्न इति सप्तम्युपपत्तिः । प्रकृष्टप्रकाश इति भावप्रधानो निर्देशः ।

---

ज्ञानमित्यस्य तादृशव्यावर्तकधर्मादिमत्त्वेन ज्ञानमित्येवार्थः । तथाच तादृशज्ञानस्य शब्दफलत्वेऽखंडार्थताहानिर्दुर्वारैवेति । स्वातंत्र्यमिति । मुख्यविशेष्यतयाऽऽधेयतया चंद्राद्यनालिंगिततया च प्रश्नविषयत्वमित्यर्थः । उक्तमिति । देवदत्तादिस्वरूपमात्रस्य सिध्दत्वादिति मूलेनेत्यर्थः । न जानीयादिति । केनापि रूपेण न जानीयादित्यर्थः । कथं पृच्छेदिति । कश्चंद्र इति कोऽयमिति च चंद्रं देवदत्तं च कथं पृच्छेत् । प्रश्नं प्रति तद्विषयकसंशयस्य कारणत्वात्तं प्रति च धर्मिज्ञानस्य कारणत्वात्तदभावे संशयाभावे संशयद्वारा प्रश्नानुपपत्तिः स्यादितिभावः । वाक्यशेष इति । नन्वस्त्यादिक्रियापदानामुत्सर्गतः प्राप्तत्वात्तद्विहाय किमुपपद्यत इति क्रियापदाध्याहार इत्यत आह । तेनेति । उपोपपदपद्लृधातोरुत्तरवाक्यतात्पर्यप्रमाधीनबोधाविषयत्वरूपव्यापारोऽर्थः । तं प्रति अर्थरूपकर्तृद्वारा प्रश्नस्य वैषयिकाधिकरणत्वात् सप्तम्युपपत्तिः । विषयितया प्रश्नवृत्तित्ववत एवार्थस्य सदुत्तरवाक्यतात्पर्यप्रमाधीनबोधाविषयत्वात् । अन्यथा प्रश्नोत्तरवैयधिकरण्यापत्तेः । प्रश्नविषयतापरं सामान्यरूपेणेत्यन्यदेतत् । गृहवृत्तित्वविशिष्टचैत्रस्य पाककर्तृत्वेन गेहे पचतीतिवत् । अस्तीतिक्रियायोगांगीकारे तु अर्थनिष्ठकालसंबंधात्मकसत्तारूपक्रियां प्रति प्रश्नस्याधिकरणविधया प्रयोजकत्वाभावात्प्रश्नाविषयत्वं विनाऽप्यर्थसत्तोपपत्तेर्न कारकत्वगर्भितमधिकरणत्वं संभवत्यतः सप्तम्यनुपपत्तिः स्यादित्युपष्टंभसंगतिः । प्रश्ने विशिष्टविषये सतीत्युत्तरटीका तु उक्तस्य पर्यवसितार्थकथनपरेत्यविरोधः । उक्तवाक्यानुसारात्प्रश्न इत्येतत्सति सप्तम्यंतामिति उपपद्यत इति क्रियायोगाल्लभ्यत इति टिप्पण्यामुक्तम् । तत्पक्षे विशिष्टविषये सतीत्यस्याप्यध्याहारः कर्तव्य इति ज्ञेयम् । भावप्रधान इति ।

( टीका ) आदिपदं पूर्वोक्तपक्षद्वयसंग्रहार्थम् । तदयमर्थः । यत एवं चंद्रादिस्वरूपमात्रे प्रश्नो न युज्यते । अतः कश्चंद्रः कोऽयमित्यनया वाचोभंग्या कैर्विशेषणैर्विशिष्ट इति विशिष्टविषय एव प्रश्नोऽङ्गीकार्यः । प्रश्ने च विशिष्टविषये सति परिहारवाक्यस्यापि विशिष्ट एवार्थो युज्यते । तत्र प्रकृष्टप्रकाशश्चंद्र इत्यादि वाक्यं प्रकृष्टप्रकाशत्वादिविशिष्टं चंद्रादिकं प्रतिपादयति । नक्षत्रादिव्यावृत्तिस्त्वर्थलभ्या । सोऽयं देवदत्त इत्यादिवाक्यं कदाचित्तद्देशकालविशिष्टस्यैतद्देशकालवैशिष्ट्यं प्रतिपादयति । एतद्देशकालवैशिष्ट्यस्य सिद्धत्वेऽपि तद्देशकालविशिष्टस्येति विशेषणात् । कदाचिदेतद्देशकालविशिष्टस्य तद्देशकालवैशिष्ट्यम् । ऐक्यं त्वर्थलभ्यम् । कदाचिद्विशिष्टद्वयैक्यं चेति ।

---

प्रकृष्टप्रकाशपदयोः कर्मधारयाश्रयणेनैवोपपत्तौ प्रकृष्टप्रकाशपदस्य बहुव्रीहित्वमाश्रित्य भावप्रधानत्वोक्तिर्यद्यपि न युक्ता तथापि प्रकृष्टप्रकाशश्चंद्र इत्यादौ प्रकृष्टप्रकाशपदस्य बहुव्रीहिसमासरूपस्यैव बुद्धौ परिवर्तितत्वात्तस्यैव भावप्रधानत्वस्य सर्वत्राप्येतादृशस्थलांतरेष्वभियुक्तैरंगीकृतस्यादरेणैव निर्वाहे किमपूर्वसमासांतरोपस्थितिकल्पनयेत्याशयेनेत्थमभिहितम् । बहुव्रीहिसमासे पूर्ववाक्यस्थे यो भावतया प्राप्तः प्रकृष्टप्रकाशस्तत्प्रधानक एव नान्यपदार्थभूताश्रयविशेषणत्वेन बोधकोऽयं निर्देश इत्यर्थः । तथाच कर्मधारयाश्रणमेव कर्तव्यमिति भावः । एतावदुक्तिस्तु प्रकृष्टप्रकाशकस्याप्रस्तुतत्वशंकानिरासायेत्यप्याहुः । तद्देशेत्यादि । पूर्वोक्तरीत्या ध्वंसप्रागभावौ अनुसंधेयौ । अर्थलभ्यमिति । अनुषंगप्राप्तं न मुख्यतात्पर्यविषयीभूतमित्यर्थः । यथाश्रुतं त्वसंगतम् । ऐक्यस्य साक्षाच्छब्दवेद्यत्वस्यैव सत्त्वात् । विशिष्टद्वयैक्यमिति । वस्तुतस्त्वित्यादिना पूर्वप्रदर्शितपक्षे विशिष्टपदमाश्रयमात्रपरम् । तद्देशकालसंबंधैतद्देशकालसंबंधाश्रयैक्यमित्यर्थः । अथ कश्चंद्र इति प्रश्नः स्वरूपमात्रविषयक एवेति उत्तरवाक्यस्यापि तन्मात्रपरत्वमेव युक्तम् । नच स्वरूपमात्रस्य सिद्धत्वात्तत्र प्रश्नानुपपत्तिः । असंकीर्णस्वरूपस्यासिद्धत्वात्तज्जिज्ञासया प्रश्नोपपत्तेः । नच स्वरूपद्वैविध्यायोगः । ज्ञातेऽपि चंद्रस्वरूपे अयं चंद्र इति घटादिभ्यो निष्कृष्य व्यवहारं प्रति विरोधिसंशयविपर्ययहेतुभूताज्ञानस्यानुभवासिद्धत्वेन तादृशाज्ञानविषयत्वाभावोपहितचंद्रस्वरूपस्यैवासंकीर्णचंद्रस्वरूपपदार्थत्वात् । तथाच चंद्रस्वरूपविषयकसंशयविपर्ययहेत्वज्ञानविरोधिचंद्रस्वरूपज्ञानं भवत्विति जिज्ञासामूलकं प्रश्नवाक्यमिति पर्यवसितम् । प्रश्नवाक्यस्थकिंशब्दस्यापि तादृशाज्ञानाविषयत्वप्रकारकेच्छाविषय इत्येवार्थः । अवश्यमित्थमेव वक्तव्यम् । अन्यथा चंद्रस्वरूपस्य सामान्यतो ज्ञातत्वेन पुनस्तज्ज्ञानसामान्ये इच्छानुदयात् । विषयासिद्धेरिच्छाविरोधित्वात् । नच सामान्यरूपेण ज्ञानस्य सिद्धत्वेऽपि विशेषरूपेण ज्ञानस्यासिद्धत्वात्तत्रेच्छासंभव इति वाच्यम् । चंद्रः कश्चन वर्तते । स च सर्वस्मात् व्यावृत्तस्तत्प्रयोजकसाधारणधर्मवानित्येतत् सर्वं जानामि तत्स्वरूपं विविच्य न जानामीति सर्वानुभवबलात् चंद्रासाधारणधर्मतन्निष्ठव्यावृत्त्यादीनां सर्वेषां ज्ञानस्य सिद्धत्वावगमेन तत्रापीच्छायोगात् । उक्तानुभवबलादेवास्मदुक्ताज्ञानसिद्ध्याऽस्मदभिमतरीत्याश्रयणस्यैवोपपन्न-

त्वात् । नचासाधारणधर्मस्य सामान्यतो ज्ञातत्वेऽपि विशेषरूपेण तत्र जिज्ञासा युक्तेति युक्तम् । असाधारणधर्मोऽपि कश्चन विशेषरूपेण विशिष्टो भवतीति जाना-मीत्यनुभवेन तादृशज्ञानस्यापि सिद्धत्वावगमात् । नच चंद्रनिष्ठविशेष्यतानिरूपितचं-द्रासाधारणधर्मनिष्ठानवच्छिन्नविषयताकज्ञानं भवत्विति जिज्ञासा संभवति । तादृश-ज्ञानस्यासिद्धत्वात् । तथाच किंशब्दस्यापि तादृशज्ञानविषयत्वप्रकारकेच्छाविषय एवा-र्थोऽस्त्विति वाच्यम् । तथात्वे प्रकृष्टप्रकाश इत्युत्तरवाक्यस्य प्रश्नवैय्यधिकरण्यापत्तेः । तज्जन्यबोधे प्रकृष्टप्रकाशादिरूपचंद्रासाधारणधर्माणां प्रकृष्टत्वादिरूपेणैव भानेन तन्नि-ष्ठप्रकारताया अनवच्छिन्नत्वायोगात् । तथाच प्रश्नस्य स्वरूपमात्रविषयकत्वे उत्त-रवाक्यस्यापि तदावश्यकत्वे तादृशबोधस्य साक्षाज्जनयितुमशक्यतया द्वारतया प्रकृ-ष्टप्रकाशादिकं बोधयित्वा तादृशबोध उत्तरवाक्येन संपादनीय इति तत्रैव परमता-त्पर्यं युक्तम् । एवैव रीतिः सकललक्षणवाक्यस्थलेष्वावश्यकीति सर्वलक्षणवाक्याना-मखंडार्थकत्वमेव । नच संशयहेत्वज्ञाननिवर्तकज्ञानत्वेनैवेच्छाविषयत्वात्तादृशज्ञानमेवो-त्तरवाक्येन संपाद्यम् । तच्च सप्रकारकमपि भवतीति किं स्वरूपमात्रविषयकबोधा-ग्रहेणेति वाच्यम् । अज्ञानस्य स्वरूपमात्रविषयकत्वस्य पूर्वानुभवबलेन सिद्धत्वेन तन्निवर्तकज्ञानस्यापि स्वरूपमात्रविषयकस्यैव निवर्तकत्वात् । ज्ञानाज्ञानयोः समानविषयकत्वे नैव निवर्त्यनिवर्तकभावात् । अन्यथा घटज्ञानात् पटाज्ञाननिवृत्तिप्रसंगात् । नच समा-नविषयकत्वेन निवर्तकत्वे घटत्वेन घटज्ञानात् द्रव्यत्वेन घटाज्ञाननिवृत्तिप्रसंगात्समान-प्रकारकत्वस्यापि निवेशनीयतया कथं स्वरूपमात्रविषयकज्ञानेनाज्ञाननिवृत्तिरिति वाच्यम् । सप्रकारकाज्ञानस्य सप्रकारकज्ञानेनैव निवृत्तेर्निष्प्रकारकाज्ञानस्य स्वरूपमात्रविषयनि-ष्प्रकारकज्ञानेनैव निवृत्त्यंगीकारात् । अथवा सर्वत्र समानविषयकत्वेनैव ज्ञानाज्ञान-योर्निवर्तकता । घटज्ञानं तु घटत्वविशिष्टविषयकं नतु द्रव्यत्वविशिष्टविषयकमतो न द्रव्यत्वविशिष्टविषयकाज्ञानस्य तेन निवृत्तिः । एतेन समानप्रकारकत्वेन निवर्तकत्वे जातिमानिति ज्ञानेनापि घटत्वप्रकारकाज्ञाननिवृत्तिप्रसंगः । अनवच्छिन्नघटत्वनि-ष्ठप्रकारताशालिज्ञानस्य निवर्तकत्वे घटत्ववानिति घटत्वमात्रप्रकारिका या धीस्तत्प्रका-रवानिति ज्ञानस्य निवर्तकत्वानुपपत्तिरिति परास्तम् । नच तथापि स्वरूपमात्रबोधश्च-रमस्तत्कारणीभूतश्चैको बोध इति बोधद्वयांगीकारे गौरवम् । लक्षणवाक्याल्लक्षणम-वगत्य चंद्रस्वरूपमवसितवानस्मीति सर्वानुभवबलेन बोधद्वयस्य प्रामाणिकत्वेन गौरवानवकाशात् । तस्मात्प्रथमानुमाने दृष्टांते साध्यवैकल्याभावः । एवं कोऽय-मिति प्रश्नस्यापि स्वरूपमात्रविषयकत्वात् तदुत्तररूपस्य सोऽयमिति वाक्यस्यापि स्वरूपमात्रपरत्वमिति न द्वितीयानुमानस्यापि दृष्टांते साध्यवैकल्यमिति । अत्रोच्यते । स्वरूपमात्रविषयकज्ञानस्यैकेन रूपेणेच्छाविषयत्वं किं चंद्रस्वरूपविषयकसंशयहेत्वज्ञा-ननिवर्तकज्ञानत्वेनोत चंद्रस्वरूपमात्रविषयकाज्ञाननिवर्तकज्ञानत्वेनोत चंद्रव्यवहारहेतु-ज्ञानत्वेन । नाद्यः । चंद्रस्वरूपविषयकास्तित्वादिप्रकारकसंशयहेत्वज्ञाननिवर्तकतदस्तित्व-प्रकारकज्ञानस्य सिद्धत्वेन तत्साधारणरूपावच्छिन्नस्येच्छाविषयत्वानुपपत्तेः । नच तत्तत्कालावच्छिन्नस्वनिष्ठसंशयहेत्वज्ञाननिवर्तकज्ञानत्वमिच्छाविषयतावच्छेदकं भवत्विति वाच्यम् । तत्काले चंद्रपदवाच्यः किं द्रव्यं गुणो वा देवता वा जडो वेत्यादिसंशया-नामपि सत्त्वेन तन्निवर्तकज्ञानस्यापीच्छाविषयत्वप्राप्त्या तन्मूलके कश्चंद्र इति प्रश्नं प्रति देवता चंद्रो द्रव्यं चंद्र इति वाक्यस्याप्युत्तररूपत्वापत्तेः । तत्कालीनचंद्रस्वरूप-

विषयकसंशयसामान्यनिवर्तकं तु न लक्षणवाक्यजन्यज्ञानमपीति तदप्यनुत्तरं स्यात् । न द्वितीयः । चंद्रस्वरूपमात्रविषयकाज्ञानस्यैवाप्रसिद्ध्या तन्निवर्तकज्ञानत्वेन भानायोगात् । नच चंद्रस्वरूपमात्रं न जानामीति सर्वलोकानुभवात्कथं तस्याप्रसिद्धिरिति वाच्यम् । सामान्यतश्चंद्रस्वरूपादिकमस्तीत्यवगच्छामि विशेषतस्तत्स्वरूपं तदसाधारणधर्मांश्च न जानामीत्येव लोकानुभवात् । नभोमंडलस्थज्योतिष्ट्वादिरूपसामान्यरूपविशेषरूपादिभिश्चाधिगच्छामि धर्माद्यनालिंगितं शुद्धस्वरूपं नाधिगच्छामीत्यनुभवाभावात् । तादृशाज्ञानस्वरूपांगीकाराग्रहेऽपि द्रव्यं चंद्र इति वाक्यस्यापि तदुत्तररूपत्वापत्तेरपरिहारात् । प्रकृष्टप्रकाशादिवाक्येनेव तद्वाक्येनापि तात्पर्यानुपपत्तिज्ञानसहकृतेन शक्त्येकदेशेन जहदजहल्लक्षणया वा तत्सहकृतया चंद्रस्वरूपमात्रबोधसंभवात् । तात्पर्यानुपपत्तिसहकारवशाच्छब्देनाभिमतस्वरूपबोधे जननीये तत्पदार्थतावच्छेदकातिप्रसक्तेरविरोधित्वात् । अन्यथा चैत्रोच्चारितेन घटमानयेति वाक्येन घटत्वेन चैत्रीयघटव्यक्तिबोधाभावप्रसंगात् । चंद्रवृत्त्यसाधारणधर्मभूतचंद्रत्वचंद्रपदवाच्यत्वाद्यवच्छिन्नबोधकचंद्रादिपदसमभिव्याहारेणापि विशेषव्यक्तिपर्यवसानसंभवाच्च । नच तद्वाक्यस्य तादृशबोधजननशक्तिर्न स्वीक्रियते तदुत्तरं चंद्रस्वरूपाज्ञानं नष्टं द्रव्यत्वमवगत्य चंद्रस्वरूपमवसितवानस्मीत्यनुभवाभावेन तादृशफलासिद्धेरिति वाच्यम् । द्रव्यत्वं तन्मात्रधर्म इति तद्वाक्यादिनैव भ्राम्यतस्तादृशानुभवस्यापि सत्त्वात् । प्रकृष्टप्रकाशकत्वादिकमन्यवृत्तीति भ्राम्यतस्तद्वाक्योत्तरमपि तादृशानुभवाभावाभावेनोक्तवाक्ययोस्तदुक्तवैषम्यायोगात् । नन्वस्तु द्रव्यं चंद्र इत्येतदपि तदुत्तरं तादृशानुभवस्य त्वयैवांगीकृतत्वेनेष्टापत्तिसंभवादिति वाच्यम् । तथात्वे कश्चंद्र इति पृच्छकं प्रत्युक्तस्य द्रव्यं चंद्र इति वाक्यस्याप्रमाणत्वं प्रकृष्टप्रकाशश्चंद्र इति वाक्यस्य प्रमाणत्वमिति व्यवस्थायास्तत्तद्वक्त्रोराप्तत्वानाप्तत्वव्यवस्थायाश्चासिद्धिप्रसंगस्यैवापादनीयत्वात् । द्वारीभूतबोधे फलीभूतबोधे चाबाधितार्थकतायास्त्वन्मतरीत्या वाक्यद्वयेऽपि साम्यात् । नच लक्षणवाक्येन लक्ष्यतावच्छेदकधर्मसमनियतत्वेन तादृशधर्मावगाहिबोधो जायते । स एव च स्वरूपमात्रावगाहिज्ञानांतरं प्रति द्वारीभूतः । स च द्रव्यं चंद्र इति वाक्याधीनो भ्रमः प्रकृष्टप्रकाश इति वाक्याधीनस्तु प्रमात्मक इति तन्मूलकत्वमेवोक्तव्यवस्थानामिति वाच्यम् । वाक्यजन्यबोधे पदजन्यपदार्थोपस्थितितात्पर्यज्ञानादेरिव सर्वत्र कारणत्वेन क्लृप्ततया तेनैव बोधसंभवे उक्तबोधस्य कारणत्वे मानाभावात् । लक्षणवाक्यस्थल एव तत्कल्पने लक्षणस्यैकविधत्वाभावात्तादृशतादृशनानाविधलक्षणवाक्याधीनबोधानामेकैकलक्ष्यस्वरूपावगाहिबोधे द्वारत्वेन कारणताकल्पनेन तदुत्तरक्षणे स्वरूपमात्रावगाह्यप्रामाणिकबोधांतरकल्पने च महागौरवम् । नच स्वरूपमात्रावगाहिबोधः सर्वानुभवसिद्धस्तथात्वे घटादिसविकल्पक एवावशेषोऽस्तु तत्र विवादाभावप्रसंगात् । स्वरूपमात्रविषयकाज्ञाननिवृत्त्यन्यथानुपपत्त्या तत्कल्प्यत इति न युक्तम् । अवश्यं द्वारत्वेनांगीकरणीयबोध एव स्वरूपमात्रविषयकाज्ञानं प्रत्यपि निवर्तकत्वस्यैव लाघवेन तदुत्तरं तादृशाज्ञाननिवृत्त्यनुभवादेव कल्पयितुमुचितत्वादननुभूतज्ञानांतरस्य कल्पने कल्पनागौरवात् । अन्यथोद्बुद्धव्याप्तिसंस्कारसहितधूमवत्ताज्ञानमात्रेणानुमित्यंगीकारोऽपि भवता न सिध्येत् । नच स्वरूपांशेऽधिकावगाहित्वात्कथं तादृशज्ञानेन स्वरूपमात्रविषयकाज्ञानं निवर्तेत समानविषयकत्वाभावादिति वाच्यम् । घटपटाविति समूहालंबनेन घटाज्ञाननिवृत्तेर्दर्शनेन निवर्तकज्ञाने स्वनिवृ-

त्योऽज्ञानानधिकविषयकत्वस्य सामान्यत एवातंत्रत्वाभ्युपगमेनानुभवानुसाराच्छक्तिविशेषेणैव निवर्तकत्वस्यावश्यकत्वेन सप्रकारकचंद्रज्ञान एवोक्तलाघवानुसारेण शक्तिस्वीकारौचित्यात् । शक्तिविशेषादरणं तु त्वयाऽवश्यं वक्तव्यमेवोक्तमपि । अन्यथा स्वरूपमात्रावगाहिशाब्दबोधानुकूलपदार्थोपस्थित्यादेरपि स्वरूपमात्रविषयकत्वेन तेनाज्ञाननिवृत्त्यापत्तेः । चंद्रपदार्थं विविच्याजानतस्तत्सत्तामात्रं जानतोऽपि स चंद्र एवैतत्काल वृत्तिरिति वाक्यं श्रुतवतः सोऽयं देवदत्त इति वाक्येनेव तेन चंद्रस्वरूपमात्रावगाहिबोधस्योत्पन्नत्वात्तेन कश्चंद्र इति प्रश्नहेतुभूताज्ञाननिवृत्त्यापत्तेश्च । लक्षणवाक्यजन्यस्वरूपमात्रबोधस्य च स चंद्रोऽयमित्यादिवाक्यनिवर्त्याज्ञाननिवर्तकत्वापत्तेश्च । उक्ताज्ञानयोः स्वरूपमात्रविषयकत्वात् । नच अप्रकृष्टप्रकाशादिव्यावृत्त्युपलक्षितस्वरूपविषयकमज्ञानं लक्षणवाक्यनिवर्त्यपूर्वकालवृत्तित्वोपलक्षितस्वरूपप्रतियोगिकभेदाभावोपलक्षितस्वरूपविषयकमज्ञानं च सोऽयमित्यादिवाक्यनिवर्त्यमित्यज्ञानयोर्वैलक्षण्यान्नैकवाक्यजन्यबोधसमानविषयकत्वमपराज्ञानस्येति नोक्तातिप्रसंग इति वाच्यम् । तदाश्रयव्यक्तिमात्रविषयकत्वस्यैव तदुपलक्षितव्यक्तिविषयकत्वस्यैतन्मतसिद्धतया तत्रोक्तापत्तेर्युक्तत्वात् । सिद्धांतलेशकारपक्षे तु दूषणमुत्तरत्र वक्ष्यामः । किंच लक्षणवाक्यानां स्वरूपमात्रबोधस्य परमफलत्वांगीकारे जात्यखंडोपाधिलक्षणवाक्येनानवच्छिन्नप्रकारतावंतो जात्यखंडोपाधय इत्यनेन समस्तजात्यखंडोपाधीनां घटत्वतत्तद्व्यक्तित्वादीनां स्वरूपत उपस्थितौ सत्यां तया तदधीनस्मरणेन च प्रमेयत्वसामान्यलक्षणाधीनसर्वबोधे तेषां स्वाश्रये स्वरूपतः प्रकारत्वप्राप्त्या विशेषरूपेणैव सर्वव्यक्तिज्ञानवत्त्वप्राप्त्या तादृशलक्षणज्ञानिनः सर्वज्ञतापत्तेः । कथंचित्तद्वारणं च तादृशबोधस्य लक्षणवाक्यजन्यत्वनिश्चयोत्तरमेवेत्यन्योन्याश्रयापत्तेः । एवं कश्चंद्र इति प्रश्नवाक्यप्रयोजकबुभुत्सायाश्चंद्रस्वरूपेतराविषयकतन्मात्रविषयकबोधेनैव निवृत्तौ तादृशप्रश्नं श्रुत्वांऽगुल्यैव चंद्रं प्रदर्शयति तदापि बुभुत्सा निवर्तते इत्यनुभवसिद्धम् । तत्र प्रत्यक्षस्यैव चंद्रस्वरूपबोधकत्वात्तेन च चंद्रेतरस्वरूपादेर्विषयीकरणात्तादृशबुभुत्साया निवृत्तिर्न स्यात् । नच प्रत्यक्षेणापि स्वरूपमात्रबोधो जायत इति युक्तम् । चक्षुरादेः स्वव्यवस्थापक गुणपुरस्कारेणैव भासकत्वस्य सर्वसिद्धत्वात् । नचाद्वैतसिद्ध्यादौ प्रत्यक्षेणापि तत्तेदंत्वयोर्वैशिष्ट्यबाधग्रहसहितेन देवदत्तस्वरूपमात्रावगाहिबोधो जायत इत्युक्तिरपि युक्ता प्रमाणाभावात् । स्वाभ्युपगतनिर्वाहार्थमेव सर्वकल्पने चातिप्रसंगात् । तादृशप्रतीत्युत्तरं च सोऽयं देवदत्त इत्यभिलापस्य तत्तेदंत्वाभ्यां देवदत्तमभिजानामीत्यनुव्यवसायस्य च विरोधात् । अत्रापि प्रकृष्टप्रकाशवंतं वर्तुलं चंद्रं पश्यामीत्यभिलपनानुव्यवसायविरोधात् । नच स्वरूप मात्रावगाहिज्ञानपूर्वकाले तादृशधर्माणामुपस्थितत्वात्तादृशानुव्यवसायाभिलपनयोरुपपत्तिरिति वाच्यम् । तृतीयया प्रकारकत्वबोधनात्तादृशप्रकारकत्वावच्छिन्नदेवदत्तविषयकत्ववत्त्वेन तादृशप्रकाशविशिष्टचंद्रविषयकत्ववत्त्वेनैवानुव्यवसायेन विषयीकरणानुभवात् । तस्य पूर्वज्ञानविषयत्वमात्रेण तथाऽनुव्यवसायांगीकारे पूर्वं घटत्वाद्युपस्थित्यनंतरपटज्ञानोत्तरं घटं पटत्वेन जानामीत्यनुव्यवसायस्य घटः पट इति व्यवहारस्य चापत्तेः । नच तत्रासंसर्गग्रहसत्त्वान्न तथा ज्ञानादिकं प्रकृते तथाऽस्त्विति । द्रव्यत्वं घटश्चेति समूहालंबनोत्तरमपि द्रव्यत्वेन घटं जानामीत्यनुव्यवसायापत्तेः। पूर्वज्ञानविषयत्वमात्रेण तथांऽगीकारवादिन एकज्ञानविषयत्वे सुतरां तदाकारौचित्यात् । गुरुमतरीत्यादरे तु सर्वत्र तथात्वौचित्येन भ्रमविलोपप्रसंगेनानिर्वचनीयस्यैवासिद्धिप्रसंगात् । अयं न स इति बाधग्रहसहि-

तेनैव चक्षुषा देवदत्तस्वरूपमात्रावगाहिबोधस्य जातत्वात्तत्रासंसर्गग्रहस्यावश्यकतया तत्र तत्तदंत्वाभ्यां देवदत्तं जानामीत्यनुव्यवसायस्य सोऽयमित्यभिलापस्य चानुपपत्ते-र्जागरूकत्वाच्च। विशिष्टे विशिष्टभेदग्रहसत्त्वेऽप्युपलक्षितयोर्भेदग्रहाभावात्तदुपपत्तिरिति न वाच्यम्। तथात्वे तत्तदंत्वयोरेकस्मिन्नुपलक्षणविधयाऽवगाहिनो विशिष्टप्रत्यक्षस्योपपत्तौ किं सर्वानुभवविरुद्धस्वरूपमात्रावगाहिज्ञानमंगीकृत्योक्तकुसृष्ट्यादरेण। प्रकृष्टप्रकाशादे-श्चंद्रे बाधग्रहस्य कथमप्यसत्त्वेन तत्र प्रत्यक्षेण स्वरूपमात्रावगाहिबोधोत्पादनायोगः। न च स्वरूपमात्रविषयकबोधेच्छाया स्वस्य सत्त्वादेव प्रत्यक्षेण तादृशबोधोत्पत्तिरिति वाच्यम्। विशिष्टप्रत्यक्षजनकसामग्रीसत्त्वेऽपीच्छामात्रबलेनान्यादृशज्ञानोत्पत्तावनिष्ट-रूपस्पर्शगंधादिविषयाणां तत्प्रत्यक्षजन्यदुःखादीनां च प्रत्यक्षाभावप्रसंगात्। सर्वेषामपि तदविषयकप्रत्यक्ष एवेच्छासत्त्वात्। प्रत्यक्षस्थले तथात्वांगीकारेऽनुमितिस्थले तथात्वं नास्तीत्यत्र विनिगमकाभावात्। वन्ह्यविषयकपर्वतमात्रविषयकानुमिताविच्छाबलाद्बाध-बलाद्वा वन्हिव्याप्यधूमवत्तापरामर्शात्पर्वतस्वरूपमात्रावगाह्यनुमित्यापत्तिः। नचांऽगुल्या निर्देशस्थले अयं चंद्र इत्याकारकं वक्त्रभिप्रेतं वाक्यमनुमिमीते। श्रोता तेन चंद्रस्वरूप-मात्रविषयकबोधवान् भवति। तन च बुभुत्सा निवर्तत इति न प्रत्यक्षस्य तत्र बुभुत्सानिवर्तकत्वप्रसक्तिरिति वाच्यम्। प्रत्यक्षस्य तद्बोधजननद्वारा बुभुत्सा निवर्तकत्वसंभवे वाक्यकल्पने मानाभावाद्गौरवाच्च। सामान्यतो मदभि-प्रेतबोधानुकूलवाक्याभिप्रायवानिति कथंचिदनुमितिसंभवेऽप्यानुपूर्वीविशेषावच्छिन्न वाक्याभिप्रायकत्वं प्रत्यंगुलीनिर्देशादेर्व्यभिचारादप्रयोजकत्वाच्चानुपूर्वीविशेषनिर्णया-भावेन तत्र शाब्दबोधोत्पत्तेरसंभवदुक्तिकत्वाच्च। न च शाब्दबोधानुत्पत्तौ प्रत्यक्षमात्रेण कथं तदिच्छा निवर्तत इति वाच्यम्। तस्य स्वाज्ञान-निवर्तकबोधमात्र एवेच्छासंभवेन शाब्दबोध एवेत्यत्र बीजाभावात्। एवं स्वरूप-मात्रबोधस्यैव कश्चंद्र इति प्रश्नमूलबुभुत्सानिवर्तकत्वे येन पूर्वं चैत्रत्वव्याप्यलिंगमिदं मैत्रत्वव्याप्यलिंगं चेदमित्यन्यप्रसंगे कस्यचिन्मुखाच्छ्रुतं कालांतरे च प्रयोजनवशात्त-द्ग्रामं गत्वा कश्चैत्र इति कांश्चित्पृच्छत्यपि। तैस्तदुत्तरानुक्तौ स्वयमेव चैत्रं दृष्ट्वा पूर्व-श्रुतलिंगस्मरणेन चैत्रस्वरूपं निश्चिनोति। अनंतरं च मैत्रोक्तलिंगेन चैत्रस्वरूपमवगत-वानस्मीति व्यवहरति च। तत्रागतिरेव। त्वयाऽपि अनुमितेः स्वरूपमात्रविषयकत्वानंगी-कारात्। तथाचोक्तस्थलेषु विशिष्टविषयकबोधेनैव क इत्यादिवाक्यप्रयोजकबुभुत्सानि वृत्त्यंगीकारावश्यकत्वेन तादृशवाक्यप्रयोजकबुभुत्सावांश्च विशिष्टविषयकबोधविषय-कत्वस्वरूपमवसितवानस्मीति वाक्यस्थस्वरूपपदस्य विशिष्टस्वरूपपरत्वं चावश्यकमिति सर्वत्र तथैव संभवे किमप्रामाणिकबोधांतरकल्पनादिकुसृष्ट्या।! ननु न स्वरूपमात्राव-गाहिबोधोऽप्रामाणिकः। चंद्रादावप्रकृष्टप्रकाशत्वादिबुद्धिं प्रति प्रकृष्टप्रकाशाश्रयत्वादि-धर्मज्ञानस्य प्रतिबंधकत्वे तत्राप्रामाण्यग्रहकाले तस्य प्रतिबंधकत्वापत्तिवारणायाप्रामाण्य ग्रहानास्कंदितत्वं निवेश्यम्। एवं तद्व्याप्यवत्ताज्ञानतदवच्छेदकधर्मदर्शनादीनामपि तन्नि वेश्यप्रतिबंधकत्वांतराणि कल्पनीयानीति गौरवम्। प्रकृष्टप्रकाशाश्रयत्वादिज्ञानद्वार-कस्वरूपमात्रज्ञानस्य प्रतिबंधकत्वे तु एकैव प्रतिबंधकता भवति। तेषु अप्रामाण्य-ग्रहकाले स्वरूपमात्रावगाहिबोधो न जायते। अप्रामाण्यज्ञानानास्कंदितानामेव तेषां स्वरूपमात्रावगाहिबोधे द्वारत्वांगीकारेण तादृशस्थले स्वरूपमात्रावगाहिबोधरूपप्रति-बंधकस्यैवाभावेन प्रतिबध्यज्ञानोत्पत्तौ बाधकाभावात्। नच तेषामेव स्वरूपबोधं

प्रति कारणतायामप्रामाण्यज्ञानानास्कंदितत्वादिनिवेशांशे साम्यं स्वरूपबोधस्याधिकस्य कल्पनाद्गौरवं चेति वाच्यम् । तेषां बोधानां स्वार्थविशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नं प्रति कारणत्वेऽवश्यं कल्पनीये तादृशज्ञानादिजन्यसुखादिसाधारण्यानुरोधेन तद्व्यवहितोत्तरत्वस्यैव कार्यतावच्छेदकत्वांगीकारात्स्वरूपमात्रबोधस्यापि तत्कार्यतावच्छेदकाक्रांततयैवोपपत्तावतिरिक्तकारणत्वाकल्पनादिति चेन्न । प्रकृष्टप्रकाशाश्रयत्वादिधर्मप्रकारकज्ञानानां सुखदुःखादौ नियमेन परिनिष्ठितकारणत्वांगीकारे तैः केषांचित्सुखस्य केषांचिद् दुःखस्य चोत्पत्त्यसंभवापत्तेस्तेषामननुगतरूपेणैव कारणत्वस्यावश्यकतया विशिष्टवैशिष्ट्यबोधनिष्ठकार्यतायास्तत्साधारण्ये बीजाभावेन कारणाव्यवहितोत्तरत्वस्य गुरोरननुगतस्य च कार्यतावच्छेदककोटौ निवेशायोगेन तद्धर्मविशिष्टवैशिष्ट्यावगाहित्वस्यैव कार्यतावच्छेदकतया तस्य त्वदभिमतस्वरूपमात्रबोधेऽसंभवेन गौरवस्य दुष्परिहरत्वात् । किंच स्वरूपमात्रविषयकबोधत्वेन प्रकृष्टप्रकाशाभावादिज्ञानं प्रति प्रतिबंधकत्वं वा चंद्रः प्रकृष्टप्रकाश इति ज्ञानद्वारकत्वविशिष्टस्वरूपबोधत्वं वा । नाद्यः । चंद्रः कलंकीत्यादिलक्षणवाक्याधीनस्वरूपबोधस्यापि प्रकृष्टप्रकाशाश्रयत्वाभावादिग्रहं प्रति प्रतिबंधकत्वापत्तेः । न द्वितीयः । तद्द्वारकत्वस्य तादृशज्ञानाव्यवहितोत्तरत्वमात्रत्वे प्रकृष्टप्रकाशाश्रयत्वे ज्ञानकालीनेन तज्ज्ञानाप्रामाण्यावगाहिलक्षणांतरज्ञानेन यत्र स्वरूपमात्रबोधो जातस्तस्योक्तप्रकृष्टप्रकाशाश्रयत्वाभावज्ञानप्रतिबंधकत्वापत्तेः । अप्रामाण्यज्ञानानास्कंदिततादृशज्ञानाव्यवहितोत्तरस्वरूपबोधत्वेनैव प्रतिबंधकत्वस्य प्रकाशाश्रयत्वव्याप्यवत्ताज्ञानोत्तरस्वरूपबोधे अभावेन तादृशज्ञानाव्यवहितोत्तरत्वविशिष्टस्वरूपबोधत्वेन पृथक्प्रतिबंधकताया आवश्यकत्वे अप्रामाण्यज्ञानानास्कंदिततादृशज्ञानत्वेनैव प्रतिबंधकताया एव युक्तत्वेन तदव्यवहितोत्तरस्वरूपबोधत्वेन प्रतिबंधकत्वस्यातिगुरुत्वेनासिद्धेः । नच प्रकृष्टप्रकाशादिधर्मज्ञानजन्यस्वरूपज्ञानत्वादिनैव प्रतिबंधकत्वं तत्राप्रामाण्याज्ञानानास्कंदितत्वेन निवेश्यते । तावताऽपि लाघवमक्षुण्णमवानुगताननुगतानेकप्रामाण्यज्ञानाभावकूटघटितधर्मापेक्षयोक्तरूपस्य लघुत्वे विवादाभावात् । तादृशप्रकाशाश्रयत्वादिज्ञाननिष्ठविशिष्टवैशिष्ट्यबोधादिसाधारणस्वरूपबोधनिष्ठकार्यताकारणतावच्छेदककोटौ तादृशधर्मज्ञाने एव तत्तदप्रामाण्यज्ञानाभावकूटं निवेश्यतेऽतो नोक्तस्थले दोष इति वाच्यम् । तादृशकार्यकारणभाव एव नास्तीत्युक्तत्वात् । तथात्वे स्वरूपबोधत्वावच्छिन्नस्याकस्मिकत्वापत्तेः । तस्यासिद्धत्वेन किंचित्कार्यत्वेन पूर्वमसिद्धत्वात् । पदार्थोपस्थित्यादेरपि स्वरूपमात्रविषयकस्यास्मितया तत्कार्यत्वे तां प्रति स्वरूपबोधत्वस्यावच्छेदकत्वायोगात् । तस्या अपि स्वजन्यसुखदुःखादिसंस्कारादिसाधारण्यानुरोधेन स्वाव्यवहितोत्तरत्वस्यैव कार्यतावच्छेदकत्वौचित्याच्च । वाक्यस्यापि स्वाव्यवहितोत्तरत्वावच्छिन्नं प्रत्येव हेतुत्वात् । स्वासाधारणकारणं विना तादृशबोधांगीकारे स्वरूपमात्रविषयकेच्छाकृत्यादिकमप्युक्तलाघवानुसारात् सिध्येत । प्रकृष्टप्रकाशादिज्ञानजन्यस्वरूपमात्रविषयकेच्छात्वेन तादृशकृतित्वेन प्रतिबंधकत्वं तादृशेच्छादिकं प्रत्युक्तज्ञानस्य विशिष्टवैशिष्ट्यधीसाधारणस्वाव्यवहितोत्तरत्वावच्छिन्नं प्रति जनकत्वमित्यस्यापि वक्तुं शक्यत्वात् । अनयैव दिशा निर्विषयकबोधोऽपि सिध्येदविशेषात् । किंच यत्र प्रकृष्टप्रकाशाश्रयत्वप्रकारकप्रत्यक्षरूपमनुमितिरूपं च तदुत्तरं स्वरूपबोधाभावेन तत्र प्रकृष्टप्रकाशत्वाभावादिज्ञानप्रतिबंधानुरोधेन तादृशविशिष्टविषयकबोधत्वेनैव प्रतिबंधकत्वावश्यकत्वे त्वदुक्तप्रतिबंधकत्वासिद्ध्या स्वरूपमात्र

विषयकबोधो न सिध्यत्येवेति दिक् । स्वरूपमात्रबोधस्य शक्तिविशेषेण प्रतिबंधककत्वमभ्युपेत्य स्वरूपमात्रविषयकपदार्थोपस्थितौ सा शक्तिर्न स्वीक्रियते । वाक्यजन्यबोध एव सा स्वीक्रियत इत्यंगीकारे तस्य वादिनः कारणवैलक्षण्यस्यैव ज्ञानवैलक्षण्यनिर्वाहकत्वप्राप्त्या वाह्यार्थभंगनिरासाशैव दूरीकृता स्यादित्यादिकमपि ज्ञेयम् । लक्षणवाक्यस्य स्वरूपमात्रबोधकत्वांगीकारे किमसदिति प्रश्नोत्तरभूतस्य सत्तादात्म्यशून्यमसदिति वाक्यस्य फलीभूतबोधानिष्पादकतया संशयानिवर्तकत्वमेव स्यादसत्स्वरूपाप्रसिद्धेः । तथाचानुभवविरोधः । तादृशवाक्येन प्रश्नमूलभूतसंशयादिनिवृत्तेरनुभवसिद्धत्वात् । फलीभूतबोधानिष्पादने चासत्स्वरूपाप्रसित्थ्या तद्विषयकत्वायोगादितरपदार्थानां च तत्र भानानंगीकाराच्च तत्र बलान्निर्विषयक एव स बोधः स्यादित्यपि दोषं केचिदुद्भावयंति । एवं द्रव्यं चंद्र इति लक्षणवाक्यस्य फलीभूतस्वरूपमात्रबोधस्य प्रमाणत्वेऽपि द्वारीभूतबोधाप्रामाण्यादेवाप्रमाणत्वे अर्थवादवाक्यानां सोऽरोदीत्, तदश्रुणि व्यशीर्यंत तद्रजतमभवदित्यादीनां रजतनिंदाद्वारा सुवर्णदक्षिणाप्राशस्त्यपराणां प्रजापतिवपोत्खननप्रतिपादनद्वारा तूपरपशुप्राशस्त्यपराणां चाप्रामाण्यापत्तेः । द्वारीभूतबोधस्य रुद्ररोदनप्रजापतिवपोत्खननादिविषयकस्य बाधितत्वेनाप्रमात्वात् । नच तात्पर्यविषयीभूतद्वारीभूतबोधस्याप्रामाण्यमेव वाक्यस्याप्रामाण्यनियामकम् । उक्तबोधस्तु न तात्पर्यविषय इति वाच्यम् । तस्य श्रुतितात्पर्याविषयत्वे श्रोतृव्युत्पत्तिवशमात्रेण प्रतिभासे रजतनिंदादेरसिद्ध्या सुवर्णप्राशस्त्याद्यसिद्धिप्रसंगात् । अन्यथा तद्वाक्यस्य रजतादिप्राशस्त्यादावपि लक्षणा स्यात् । अग्निमीळे इत्यादीनामपि सुवर्णप्राशस्त्यपरत्वं स्यादविशेषात् । इहापि चंद्रस्वरूपमात्रबोधफलकस्य द्रव्यत्वादौ चंद्रत्वसमनैयत्यादिबोधस्य तात्पर्याविषयत्वेन द्वारत्वमपि वक्तुं शक्यत्वाच्च । द्वारीभूततात्पर्यविषयबोधस्याप्रामाण्यस्य वाक्यप्रामाण्यविघातकत्वे नेह नानेति श्रुतीनां ब्रह्मस्वरूपमात्रपरत्वेन पारमार्थिकप्रामाण्यं यदभिमतं तस्याप्यभावप्रसंगः । मिथ्यात्वे श्रुतेरवांतरतात्पर्यांगीकारात्तन्मिथ्यात्वांशे पारमार्थिकप्रामाण्यायोगात् । तदंशे व्यावहारिकप्रामाण्यं वर्तत इति चेत्किं तावता । फलीभूतबोधांशे यादृशं प्रामाण्यं तादृशप्रामाण्याभावस्यांगीकारात् । प्रकृतेऽपि फलीभूतव्यावहारिकचंद्रस्वरूपविषयकबोधजनकत्वात् द्वारीभूतबोधस्य प्रातिभासिकप्रामाण्यवत्त्वात् उक्तवाक्यस्य प्रकृष्टप्रकाशादिवाक्यवद्व्यावहारिकप्रामाण्यापादनसंभवाच्च । प्रातिभासिकविषयकस्य प्रामाण्यं विप्रतिषिद्धमिति चेत्तर्हि व्यावहारिकविषयकस्यापि कुतो न विप्रतिषिद्धं विषयीभूतयत्किंचित्कालाबाध्यत्वस्यांततो बाध्यत्वस्य च साम्यात् । किंच प्रतिभासिकविषयकत्वे चेदप्रामाण्यं शुक्तौ प्रतीयमानं रजतं दोषजन्यप्रतीतिविषयीभूतमिति वाक्यस्याप्रामाण्यं स्यात् । नच प्रातिभासिकविधेयकत्वमप्रामाण्यमिति वाच्यम् । प्रत्यक्षे विधेयत्वाभावेनेदं रजतमित्यस्याप्रामाण्यानुपपत्तेः । नच मुख्यप्रकारतैव विधेयतेति वाच्यम् । तथात्वे शुक्तौ भासमानरजतं दोषजन्यप्रतीतिविषयत्वमिति ज्ञानस्याप्यप्रामाण्यापातात् । प्रकारतायामाधेयतासंबंधानवच्छिन्नत्वोपादाने ह्रदे वन्हिरित्यादिज्ञानानां भ्रमत्वानुपपत्तिः । ज्ञानं विषयितया प्रातिभासिकवदिति ज्ञानस्य भ्रमत्वापत्तिश्च । ननु माऽस्त्वप्रामाण्यभयाद्द्रव्यं चंद्र इत्यनुत्तरमिति पक्षस्तथापि लक्षणज्ञानेनेतरव्यावृत्तिधीर्जायते । प्रकृते च द्रव्यत्वस्य व्यभिचारित्वेनेतरव्यावृत्तिधीर्न जायत इति नोत्तरं तथा प्रयुज्यते । प्रकृष्टप्रकाशत्वं तु तथा भवतीति तल्लक्ष-

णत्वेनोच्यत इति चेन्न। स्वरूपमात्रविषयकाज्ञाननिवृत्तिजनकबोधस्यैव वक्तुरिष्टत्वेन लक्षणवाक्यजन्यस्वरूपबोधस्यैव वक्तुरिष्टत्वेन लक्षणवाक्यजन्यस्वरूपमात्रबोधस्यैव तन्निवर्तकतायास्त्वदभ्युपगतत्वेन व्यावृत्तिबोधस्याकिंचित्करत्वेन तदनिर्वाहकत्वस्योक्तबीजत्वाभावात्। नच स्वरूपमात्रबोधे व्यावृत्तिबोधो द्वारतयोपयुज्यत इति वाच्यम्। लक्षणवाक्यजन्यशाब्दबोधे स्वसामग्रीबलाज्जायमाने लक्षणज्ञानाधीनव्यावृत्त्यनुमितेः कारणत्वे बीजाभावात्। तथापि तस्य कारणत्वाग्रहेऽनुमितिजनकव्याप्तिस्मरणपरामर्शादिभिरनुमित्युत्पत्तिपर्यंतं पदज्ञानपदार्थोपस्थित्यादीनां नष्टतया शाब्दायोगः। नचानुमित्यनंतरं पुनस्तदनुसंधानाच्छाब्दोत्पत्तिरिति वाच्यम्। तर्हि प्रथमं तद्वाक्याच्छाब्दाजनने लक्षणग्रहस्याप्यभावेनेतरभेदानुमित्युत्पत्त्ययोगात्। प्रथमतो लक्षणमात्रविषयकशाब्दबोधजननांगीकारे प्रथमतो लक्षणवाक्याल्लक्ष्ये लक्षणप्रकारकबोधस्तदनंतरं सजातीयविजातीयव्यावृत्तिग्रह इत्यंशे आवयोः संप्रतिपत्तिस्तदनंतरं च पुनर्लक्षणवाक्यानुसंधानस्वरूपमात्रविषयकपदार्थोपस्थित्यादिभिः पुनः स्वरूपमात्रविषयकशाब्दबोध इत्यंशस्त्वदभ्युपगतस्त्वप्रामाणिकः। तादृशशाब्दबोधादिसत्त्वे पुनस्तादृशवाक्यमनुसंधाय चंद्रस्वरूपं शाब्दयामीति सर्वेषामनुभवप्रसंगात्। नच तथा कस्यचिदनुभवः। तथात्वे प्रथमशाब्द इवोक्तपदार्थोपस्थितिशाब्दबोधादाववविवादप्रसंगात्। नचाननुभूतस्य शाब्दस्य कल्पकं किमप्यस्ति। ज्ञानादीनां ज्ञातैकसत्त्वनियमेन तव नैय्यायिकादिवत्तस्यातींद्रियत्वानंगीकारात्तादृशज्ञानमुत्पद्यते चेत्तथाऽनुभूयेतेति तर्कपराहतिप्रसंगेन कल्पनाया एवानुत्थानात्। नच स्वरूपमात्र जिज्ञासानिवृत्त्यन्यथानुपपत्तिरेव तत्कल्पिकेति वाच्यम्। तादृशजिज्ञासाभावस्यैव पूर्वमुपपादितत्वात्। नच किंशब्दस्य स्वरूपमात्रविषयकबोध एव शक्तत्वात्तादृशजिज्ञासैव किंशब्दवाच्येति वाच्यम्। तत्रैव मानाभावत्। नच किंचिद्धर्मप्रकारकजिज्ञासात्वापेक्षया स्वरूपजिज्ञासात्वस्य लघुत्वात्तदवच्छिन्ने शक्तिरिति वाच्यम्। मात्रार्थानंतर्भावे धर्मप्रकारकजिज्ञासाया वाच्यकोटिबहिर्भावस्तान्निवेशे च तवैव गौरवम्। किंच प्राथमिकबोधेन सा जिज्ञासा निवर्तते न वा। नेतिपक्षेऽनुभवविरोधः। तद्वाक्यश्रवणोत्तरमुक्तविमर्शात्पूर्वमेव चैत्रवाक्येन मत्पृष्टार्थो ज्ञातो न पुनस्तज्जिज्ञासेति सर्वानुभवात्। यत्र पुनः श्रुतेऽप्यर्थे पुनः श्रवणेच्छा तत्र पूर्वज्ञानाप्रामाण्यसंशयादिना श्रुतार्थदार्ढ्यार्थम् त्वयाऽपि तथैव वाच्यत्वात्। अन्यथा तादृशवाक्यश्रवणजन्यबोधाद्द्वितीयादिक्षण एव व्यासंगादिना व्याप्तिस्मरणाभावादुक्तव्यावृत्त्यनुमितिर्नोत्पन्ना तत्र चैत्रेण मत्पृष्टार्थो नोक्त इति प्रत्ययापत्तेः। जिज्ञासा निवर्तते चेत्सप्रकारकबोधेन निवृत्तत्वात्सा सप्रकारकबोधविषयिण्येव। अपिच केनचित् कश्चंद्र इति केनाचित्कीदृशश्चंद्र इति पृष्टे वक्ता द्वावपि प्रत्येकदेवोत्तरं वदति प्रकृष्टप्रकाशश्चंद्र इति, तदा तज्जिज्ञासे निवर्तेते। तदन्यथानुपपत्त्या जिज्ञासाद्वयस्य समानविषयकत्वसिद्धौ कीदृश इति वाक्यस्य प्रकारविशिष्टवस्तुजिज्ञासाबोधकत्वे विवादाभावात्किंशब्दबोध्यजिज्ञासाऽपि तादृश्येवेति। तथाचोक्तानुभवयुक्तिसिद्धार्थे शक्यतावच्छेदकलाघवादियुक्तिरकिंचित्करी। एकस्यैव वाक्यस्य तात्पर्यभेदादिकल्पनायाः स्वरूपमात्रबोधकतासिद्ध्युत्तरकालिकत्वेनान्योन्याश्रयात्। अप्यप्रकृष्टप्रकाशादिवाक्येन लक्षणज्ञानद्वारकस्वरूपबोध एव जायते न तत्र व्यावृत्त्यादिज्ञानापेक्षा। परंतु तस्या जिज्ञासानिवर्तकत्वेऽप्यनवधारणत्वेनाज्ञानानिवर्तकतया तन्निव-

तेनायावधारणात्मकज्ञानमपेक्ष्यते । तादृशज्ञाने पुनर्लक्षणवाक्यानुसंधानेन जननीये लक्षणजन्यव्यावृत्तिबोधः सहकारी भवति । तं विनाऽवधारणात्मकत्वानुपपत्तेरिति वाच्यम् । प्रथमज्ञानस्याज्ञाननिवर्तकत्वे तस्यैव जिज्ञासाविषयत्वस्य त्वयोक्तत्वेन तेन जिज्ञासानिवृत्त्युक्त्ययोगात् । नच तत्स्वरूपयोग्यत्वाज्जिज्ञासानिवर्तकत्वमनवधारणत्वेनानुपधायकत्वात्तादृशज्ञानान्तरमपेक्ष्यत इति वाच्यम् । अनवधारणस्य कदाऽपि फलानुपधायकत्वेन स्वरूपयोग्यत्वस्यैवाकल्पनात् । उपधायकज्ञानस्यैवेच्छाविषयत्वाच्च तेन जिज्ञासानिवृत्त्यनुपपत्तेः । किंच किमवधारणत्वं नाम यद्भावाभावाभ्यां प्रथमद्वितीयज्ञानयोर्विशेषः । जातिश्चेत्तादृशजातिसद्भावे मानाभावः । प्रत्यक्षत्वादिना संकरात् । तथात्वे प्रथमज्ञाने तादृशजातिसद्भावे बाधकाभावाच्च । निश्चयत्वं चेत् । प्रथमज्ञाने तत्सत्त्वमावश्यकमेव । स्वरूपमात्रावगाहिज्ञाने विरुद्धकोटिद्वयावगाहित्वरूपसंशयत्वप्रसक्त्यभावात् । स्वरूपमात्रज्ञानेऽपि संशयत्वमंगीक्रियत इत्युक्तेरुन्मत्तभाषणाविशेषात् । निश्चितप्रामाण्यकत्वं चेत्प्रथमज्ञानग्राहकेण साक्षिणा तन्निष्ठप्रामाण्यग्रहणस्यावश्यकत्वेन तत्राप्युक्तावधारणत्वाक्षतेः । नचाप्रामाण्योपस्थितिघटितग्राहकसामग्री न प्रामाण्यं ग्रहीतुमीष्ट इति वाच्यम् । स्वरूपमात्रविषयकत्वेन गृह्यमाणे ज्ञाने प्रकारकत्वघटिताप्रामाण्यग्रहणस्यायोगात् । घटज्ञाने पटत्वघटिताप्रामाण्यबुद्धेरिव तस्यानुत्तेजकत्वाच्च । नच तादृशस्वरूपमात्रावगाहिबोधेऽपि स्वस्मिन्नेवोद्देश्यत्वविधेयत्वयोरंगीकारात् तादृशविधेयाभाववन्निष्ठोद्देश्यतानिरूपिततन्निष्ठविधेयतानिरूपकत्वरूपमप्रामाण्यं तत्र संभवतीति तत्संदेहो युज्यत इति वाच्यम् । एकस्यैव वस्तुनो रूपभेदं विनोद्देश्यत्वविधेयत्वांगीकारे मानाभावात् । सामान्यतः विधेयाभावस्याप्रामाण्यशरीरनिवेशे संबंधभेदमादाय दोषप्रसक्त्या संसर्गस्यापि तच्छरीरनिवेशे संसर्गानवगाहिन्युक्तज्ञाने तस्यानुत्तेजकत्वात् । नच तद्भिन्ननिष्ठोद्देश्यतानिरूपिततन्निष्ठविधेयताकत्वरूपमप्रामाण्यमस्त्विति वाच्यम् । तस्यापि तादात्म्यसंबंधावच्छिन्नत्वस्य विधेयतायां निवेशं विनाऽप्रामाण्यरूपत्वायोगात् । अन्यथा घटवद्भूतलमित्यादिज्ञानानामप्यप्रामाण्यापत्तेः । ननु नीलो घट इत्यत्र नीलादिनिष्ठविशेषणतानां संबंधानवच्छिन्नत्वमते तद्भिन्ननिष्ठोद्देश्यतानिरूपिततन्निष्ठसंसर्गानवच्छिन्नविधेयत्वनिरूपकत्वमप्रामाण्यम् । तथाच प्रकृतबोधेऽपि तादृशाप्रामाण्यग्रह एवोत्तेजको भवतु अत्रापि तादृशोद्देश्यताविधेयतांगीकारादिति चेन्न । तादृशविधेयताया अत्रांगीकारे तत्साम्यादखंडार्थकत्वहान्यापत्तेस्तथापि घटो घट इति वाक्यस्य बोधकत्वांगीकारेण रूपभेदावश्यकतया स्वरूपमात्रस्योद्देश्यविधेयभावायोगात् । तन्मतादरे गुणगुण्यभेदस्य सामानाधिकरण्यप्रत्ययानुरोधादस्मिन्बोधश्च तादात्म्यविषयकत्वात् । स्वरूपमात्रविषयकज्ञाने उक्तोद्देश्यत्वविधेयत्वयोः सत्त्वे मानाभावेनोक्तज्ञानस्य तत्समानविषयकत्वाभावान्मूलाज्ञानस्य च निर्विकल्पनिवर्त्यताया एव सिद्धान्तसिद्धत्वेन शाब्दे विधेयत्वाद्यंगीकारे तथात्वायोगेन च सर्वत्र स्वरूपाज्ञाननिवृत्तिप्रसंगाच्च । ननु बाधितार्थकत्वमेवाप्रामाण्यं तच्च स्वरूपमात्रविषयकज्ञानेऽपि संभवतीति तच्छंका युक्तेति चेन्न । स्वरूपे सत्त्वग्रहं विना तज्जिज्ञासानुदयेन प्रश्नायोगात्तदन्यथानुपपत्त्या तत्र सत्त्वरूपाबाधितत्वस्य निश्चितत्वेन तादृशस्वरूपमात्रविषयकत्वेन गृह्यमाणे ज्ञाने बाधितविषयकत्वशंकाया अयोगात् । योगे वा स्वरूपरूपपक्षस्यैव तत्र लक्षणरूपहेतोश्च ग्रहासंभवेन चेतरव्यावृत्त्यनुमितेरप्यनुत्पत्तिप्रसंगाच्च । शशविषाणशुक्तिरजतादेरपि स्वेतरव्यावृत्तत्वे-

नोक्तलक्षणरूपलिंगेन सामान्यतः स्वेतरव्यावृत्त्यनुमित्युत्पत्तावपि बाधितत्वशंकोच्छेदा-भावेन द्वितीयज्ञानस्यापि तादृशाप्रामाण्यज्ञानानास्कंदितत्वेनोत्पत्तेरयोगाच्च । नन्व लक्षणेन सामान्यतः स्वेतरभिन्नत्वेनानुमितिर्जायत इति न स्वीक्रियते । स्वेतरत्वेन-तरपदार्थज्ञानवेलायामेव स्वस्यापि तदितरत्वस्य समानसंविद्वेद्यतयैव सिद्धेरनुमिति वैयर्थ्यापत्तेरपि तूपस्थिततत्तद्रूपावच्छिन्नभेदकूटावगाहिन्येव । एवं चोक्तलक्षणज्ञा-नाधीनबाध्यव्यावृत्त्यनुमित्या बाध्यत्वशंकोच्छेदात् । निश्चितप्रामाण्यकत्वरूपानावृतप्रमा-त्वकं द्वितीयज्ञानं जायत इति वाच्यम् । तर्हि बाध्यभेदानुमितेरेकस्या एव प्रकृते उपयुक्तत्वेन भेदांतरानुमितीनामप्रयोजकत्वेन लक्षणस्य तद्व्यभिचारित्वेऽपि बाधकाभा-वात् द्रव्यत्वादेर्बाध्यभेदाव्यभिचारित्वात्तस्य लक्षणत्वेनोक्तापत्तिर्दुर्वारैव । तत्काल सर्वप्रतियोग्युपस्थित्यभावात्कूटानुमितेरसंभवात्कालविशेषघटितकार्यकारणभावांगीकारे च तत्कालीनतादृशस्वरूपबोधे तत्कालोपस्थितनिखिलभेदज्ञानत्वेन कारणत्वेऽननुगमापत्त्या लाघवात्तत्कालव्यक्त्यादेरेव कारणत्वौचित्येन व्यावृत्तिज्ञानस्य कारणत्वासिद्धेश्च । तथात्वेऽपि वा यदा गुणादीनामेवोपस्थितिस्तत्काले गुणादिभेदग्रहद्वारा द्रव्यत्वज्ञानेन चंद्रस्वरूपमात्रबोधसंभवेन लक्षणत्वेनोक्तौ बाधकाभावाच्च । प्रकृष्टप्रकाशत्वस्य कदा-चित्सूर्यादिभेदव्यभिचारित्वेन ग्रहवद्द्रव्यत्वस्यापि घटादिभेदव्यभिचारित्वग्रहे बाध-काभावात् । व्यभिचारग्रहप्रामाण्याप्रामाण्यरूपवैषम्यस्य प्रकृतेऽकिंचित्करत्वात् । किंच व्यावृत्तिबोधस्य द्वारत्वमपि त्वया वक्तुं न शक्यते प्रश्नकरणलक्षणकथनमपि तवा-युक्तम् । चंद्रो नाम कश्चिदस्ति स चेतरव्यावृत्तोऽसाधारणधर्मवांश्चेति जानामि प-रंतु चंद्रमेवाहं विजिज्ञास इत्यनुभवबलेन व्यावृत्त्यादीनां सर्वेषां ज्ञानत्वं व्यवस्थाप्य सिद्धेऽपि स्वरूपमात्रे ज्ञानात्तन्मात्रजिज्ञासा व्यवस्थापिता त्वया । तथाच लक्षणा-दीनां सर्वेषां स्वयमेव तेन ज्ञातत्वात् । वक्त्रा तं प्रति तत्कथनस्य तेन व्यावृत्त्याद्य-नुमितिसंपादनस्य चानुपयोगात् । पूर्वं स्वतः सिद्धेन लक्षणज्ञानादिना तस्य व्यावृत्तिज्ञानाभावे वक्त्रा लक्षणकथनेऽपि व्यावृत्त्यादिज्ञाने बीजाभावः । शाब्दबोध-स्यैव तथात्वमसंभावितम् । वृद्धव्यवहारादिना बालस्येतरव्यावृत्तघटादिस्वरूपसिद्ध्या-दिमूलकतत्पदवाच्यत्वग्रहाद्यसिद्धिप्रसंगात् । ननु स्वत एव विद्यमानं तत्प्रष्टुश्चंद्रा-साधारणधर्मादिज्ञानं साक्षिरूपमेव न प्रमाणजन्यं तच्च न तद्विषयकाज्ञाननिवर्तकं तद्विषयकाज्ञानानिवृत्तौ च व्यवहाराद्यनिष्पत्तेस्तदर्थं लक्षणकथनादियुक्तमत एव कदा-चित् कश्चंद्रासाधारणधर्म इत्यपि पृच्छतीति चेन्न । साक्षिज्ञानस्यानुवादादिकं प्रत्य-हेतुत्वेन कश्चंद्रःकोऽसाधारणधर्म इत्यनुवादस्याप्ययोगेन प्रमाणजन्यसामान्याकारवृत्तेस्त-त्रावश्यकत्वात् । अन्यथा सर्वस्याप्यज्ञानावच्छेदकतया साक्षिवेद्यत्वाविशेषात् केना-पि प्रकारेणादृष्टाश्रुतवस्त्वप्यनूद्य कथं न पृच्छेत । तथाच चंद्रादिस्वरूपस्यैव सा-मान्याकारेण ज्ञातत्वावश्यकत्वात्तद्विशेषधर्मस्यापि विशेषरूपेणाज्ञातत्वाद्विशेषरूपवत्तादृश-धर्मविशिष्टचंद्रस्वरूपज्ञानार्थमेव प्रश्नप्रतिवचनयोरुपपत्तिः । नच चंद्रस्य सामान्याका-रेण ज्ञानेऽपि किंचिन्निष्ठप्रकारत्वानिरूपितचंद्रनिष्ठविषयताशाली बोधो भवत्वितीच्छा जायते । किंशब्दस्यापि तादृशज्ञानविषयकेच्छाबोधकत्वात्प्रश्नवाक्यस्यातदर्थकत्वस्य सिद्धत्वात्प्रतिवचनस्यापि तादृशबोधतात्पर्यकत्वं युक्तमिति वाच्यम् । तादृशबोध-स्याननुभूतत्वेन तज्जातीयस्थलांतरेऽपि स्वरूपमात्रज्ञानत्वेनाननुभूतत्वेन सर्वस्यापि शब्दस्य सप्रकारबुद्धावेव हेतुतायाः सर्वानुभवसिद्धत्वेन स्वरूपमात्रव्यवहाराभावात् ।

स्वरूपमात्रबोधस्य स्वपरव्यवहारानुपयोगेन च तत्रेष्टसाधनताबुद्ध्यभावेन तादृशेच्छां गीकारायोगात् । पूर्वोक्तबाधकबलेन प्रश्नप्रयोजकबुभुत्सायाश्च सप्रकारकज्ञानविषयत्वस्यैव सिद्धत्वस्य किंशब्दशक्तिलाघवाकिंचित्करत्वस्योक्तत्वाच्च । अपिच कीदृश इति प्रश्नानुसाराद्धर्मविशिष्टधर्मिबोधेच्छोभयसंमता। तस्या एव किंशब्दबोध्यतासंभवे अप्रसिद्धेच्छां विना प्रमाणेन परिकल्प्य तत्र किंशब्दशक्यत्वकल्पनमयुक्तम्। अन्यथा निर्विषयकबोधमप्येकं तद्विषयकेच्छां परिकल्प्य किंशब्दस्य तत्र शक्तिं परिकल्प्य तादृशकिंशब्दघटितप्रश्नानुसारादुत्तरवाक्यस्यापि निर्विषयकबोधजनकत्वमित्यादिकमपि सिध्येदविशेषात् । तर्हि कीदृश इति क इति वाक्ययोरविशेषेण बोधकत्वप्रसंग इति चेदिष्टमेवान्यथाऽयं कः अयं किंस्वरूप इति स्वरूपप्रश्नेऽपि तव वैलक्षण्यापातात् । परंतु कीदृशशब्दात धर्मप्रकारकजिज्ञासैव प्रतीयेत किंशब्देन तु यथातात्पर्यं संबंधादिप्रकारकजिज्ञासाऽपि प्रतीयेत इत्यनयोः कश्चिद्विशेषः । इत्थंच व्यावृत्त्यादिज्ञानस्य स्वरूपबोधे द्वारत्वमिति पक्षोऽपि न समंजसः । यत्तु कदाचिदसत्यत्वादिसंशये सत्यत्वलक्षणज्ञानाधीनं व्यावृत्तिज्ञानं तत्संशयविघटकं भवतीति व्यावृत्तिज्ञानं द्वारमित्युपचर्यते नतु स्वरूपमात्रावगाहिनि ज्ञाननियमेन व्यावृत्तिज्ञानापेक्षेत्य द्वैतचंद्रिकाकारेण पक्षांतरमुक्तम् । तत्र पक्षे द्रव्यं चंद्र इत्युत्तरवाक्यप्रयोगेन काचिद्बाधकशंका । यदपि तेनैव स्वसिद्धांततयाऽभिहितम् । लक्षणवाक्यजन्यलक्ष्यस्वरूपमात्रप्रतीत्युत्तरं तत्प्रतीतिविषयत्वोपहितस्वरूपेण लिंगविधयाऽर्थापत्तिविधया वेतरव्यावृत्तिधीर्जायते इत्यादिपूर्वपक्षग्रंथव्याख्यावसरेऽस्मत्प्रदर्शितप्रमेयं तत्पक्षे द्रव्यं चंद्र इत्यादेर्लक्षणवाक्यत्वापत्तिः सुलभैव । लक्षणवाक्यजन्यचंद्रस्वरूपमात्रविषयिणी या वृत्तिस्तद्विषयत्वोपहितचंद्रस्वरूपेण चंद्रादिपदजन्यवृत्तिविषयत्वोपहिते चंद्रेतरभेदसिद्धेरप्रत्यूहत्वात् । शुद्धस्वरूपस्य पक्षत्वानुपपत्त्या तादृशवृत्तिविषयत्वोपहितस्य पक्षत्वे हेतुत्वे च सति शुद्धस्वरूपे भेदासिद्ध्या तदुत्तरमवधारणात्मकस्वरूपमात्रविषयकज्ञानोत्पत्त्ययोग । प्रश्नविषये भेदानुमित्यजननात्तस्य लक्षणफलत्वायोगः। लक्ष्यत्वेनाभिमते एवेतरभेदानुमितेस्तत्फलत्वात । एवं प्रकृष्टप्रकाशाद्युपलक्षितस्वरूपस्यैव लक्ष्यात्यंताभिन्नस्य स्वरूपलक्षणत्वेन भवदभिमतस्य स्वरूपलक्षणस्य स्वस्मिन वृत्तित्वायोगेन हेतुत्वाभावाद् ज्ञानविशेषविषयत्वोपहितस्य स्वरूपेण भिन्नाभिन्नत्वात्स्वरूपत्वाभावात्स्वरूपेणेतरभेदासिद्ध्या प्रकृष्टप्रकाशसत्यज्ञानादीनां स्वरूपलक्षणत्वोक्त्ययोगः । अन्यथोक्तोपहितवत् ब्रह्मण्यारोपितजन्कारणत्वादिभिस्तादात्म्यापन्नैरितरभेदानुमित्या तेषामपि स्वरूपलक्षणत्वापत्तिः । अपिचैतन्मते काकवद्देवदत्तगृहमित्यस्यापि स्वरूपलक्षणत्वं स्यात । किमित्यादिप्रश्नसामान्यस्य स्वरूपमात्रविषयकत्वनियमस्य भवदभ्युपगतत्वात्तादृशप्रश्नानुरोधेन तादृशवाक्येनापि लक्षणया स्वरूपमात्रबोध उत्पाद्योऽन्यथा प्रश्नोत्तरयोर्वैय्यधिकरण्यापत्तेस्तथाच तादृशबुद्धिविषयत्वोपहितगृहस्यैवेतरव्यावर्तकत्वप्राप्तेः । नच तद्वाक्यस्य स्वरूपलक्षणपरत्वमिष्टमेव । समानविभक्तिकपदघटितलक्षणवाक्यसामान्यस्य स्वरूपलक्षणपरत्वाभ्युपगमादिति वाच्यम् । काकेन देवदत्तगृहमवसितवानस्मीति सर्वानुभवविरोधेनोक्तकल्पनाया असंगतत्वात । अत एव लक्षणांशगतपदशक्तिविशेष्यस्यैव यत्र लक्ष्यत्वं तत्स्वरूपलक्षणमन्यत्र तटस्थलक्षणत्वमित्यपास्तम् । लक्षणबोधकभागस्थमतुपः संबंध्यर्थकत्वेन तद्विशेष्यताया अपि ब्रह्मेऽनपायात । जन्माद्यस्य यत इत्यत्र तत्पदाध्याहारस्यावश्यक-

त्वेन यतो जन्मादि तत् ब्रह्मेति लक्षणवाक्यपर्यवसानात् । तत्पदस्य जन्मादिकारण-परामर्शकतया तत्पदार्थविशेष्यरूपब्रह्मण एव लक्ष्यत्वादुक्तवाक्यस्य समानविभक्ति-कत्वाच्चास्य स्वरूपलक्षणत्वप्राप्त्याऽस्य सूत्रस्य तटस्थलक्षणपरत्वोक्तिविरोधाच्च । नच लक्ष-णत्वेनाभिमतधर्मबोधकपदजन्यबोधे विशेष्यांशस्य लक्षणत्वे चेत स्वरूपलक्षणत्वव्यवहारः। प्रकृते च नैवं जन्मादि यतः इत्यंशस्यैव जन्मादिकारणत्वरूप लक्षणबोधकत्वात्तत्र च ब्रह्मणो विशेष्यत्वेनाभानादिति वाच्यम् । तर्हि लक्षणत्वेनाभिमतज्ञानत्वानंदत्वादिधर्मबोधक-ज्ञानत्वादिपदजन्यबोधे ब्रह्मणो विशेष्यत्वाभावात्सत्यज्ञानादिवाक्यमपि स्वरूपलक्षण-परं न स्यात् । नच ज्ञानत्वादिकं न लक्षणत्वेनाभिमतं किंतु ज्ञानादिकमेव तद्बो-धकपदे च विशेष्यमेव ब्रह्मेति वाच्यम् । तर्ह्यत्रापि कारणमेव लक्षणं न कारणत्वं तत्परं च तदित्यध्याहृतपदं ब्रह्म विशेष्यमेवेति सूत्रस्य तटस्थलक्षणत्वपरत्वोक्तिरयुक्तैव । तस्माद्‍द्वैतचंद्रिकाकारोत्प्रेक्षितपक्षोऽप्ययुक्तः । नापिचंद्रव्यवहारहेतुज्ञानत्वेन-च्छाविषयत्वमिति प्राग्विकल्पितस्तृतीयः पक्षः । चंद्रमात्रव्यवहारविवक्षणे तस्या-प्रसिद्ध्या पूर्वोक्तरीत्या तत्रेच्छोत्पादायोगात् । चंद्रव्यवहारविवक्षणे प्रश्नहेतुज्ञानस्या-पि तथात्वेन सिद्धत्वात्तत्रेच्छायोगात् । उत्तरवाक्यस्य विशिष्टविषयकत्वेऽपि प्रश्नो-त्तरयोर्वैय्यधिकरण्यायोगाच्च । किंच सर्वत्र किंशब्दघटितमेव प्रश्नवाक्यं प्रवर्तत इति न नियमः । इह ज्योतिर्मंडले चंद्रस्वरूपं ज्ञातुमिच्छामि तं वदेत्याकारस्यापि दर्शनात् । स्वरूपमात्रबोधस्येच्छाविषयत्वे तत्र स्वरूपपदस्य चन्द्रस्वरूपमात्र लक्षणाकल्पनाप्रसंगः । मन्मते च स्वरूपपदस्यैवेतरव्यावृत्तस्वरूपवाचित्वान्न लक्षणा । नच तत्र ज्ञापकाभावः । सर्वव्यावृत्तये यस्मात्स्वशब्दोऽयं प्रयुज्यत इत्यनेन विष्णु-तत्त्वनिर्णये आचार्यैः स्वरूपशब्दघटकस्वशब्दस्य सर्वव्यावृत्तिबोधकताया व्यवस्थापि-तत्वात् । नच चंद्रस्वरूपमेव ज्ञातुमिच्छामीत्यपि वाक्यं प्रयुंक्ते तदनुरोधा-दितरत्रापि स्वरूपपदं तन्मात्रलाक्षणिकमस्त्विति वाच्यम् । स्वरूपशब्दस्य व्यावृत्तिविशिष्टस्वरूपपरत्वेन तद्बोधानुपयुक्तपदार्थस्यैवैवकारेण व्यवच्छेद्यत्वात् । त्वद्रीत्या स्वरूपेतरसामान्यव्यवच्छेदपरत्वे द्वारतयाऽपि प्रकृष्टप्रकाशबोधकत्वेऽपि अनभिमतबोधकत्वापत्त्योत्तरस्य प्रश्नवैयधिकरण्यापत्तेरित्यलम् । अज्ञान एव किंशब्दश क्तिस्तादृशाज्ञाननिवृत्तिश्च स्वरूपज्ञानादेवेति कश्चित् । तदसत् । किंशब्देनाज्ञानमात्रे प्रतिपादितेऽपि श्रोत्रेच्छाया वक्त्रा ज्ञानत्वादिनिच्छुं प्रति तद्बोधनायोगादज्ञानमात्रज्ञाने तन्निवृत्तये विशिष्टार्थतात्पर्येण वाक्यप्रयोगे बाधकाभावात्स्वरूपमात्रज्ञानस्यैवाज्ञाननिवर्त कत्वेमानाभावाच्चेति । तस्मात्स्वरूपमात्रजिज्ञासाभावाद्विशिष्टविषयकजिज्ञासयैव प्रश्न इति स्थिते उत्तरवाक्यस्यापि तथात्वेनाखंडार्थपरत्वाभावाद्दृष्टांतस्य साध्यविकलतोक्तिः सुस्थि रैव । सोऽयमित्यादिस्थले प्रतियोग्यंशेऽभासमानधर्मस्थलेऽस्य प्रतियोगितावच्छेदक-त्वादिभानपरिकल्पनादिकमाहार्यस्यापि ज्ञानस्य प्रतिबध्यत्वादिकल्पनं चाप्रामाणिकमेव। यत्तु स्वरूपमात्रबोधेन स्वरूपमात्रविषयकाज्ञाननिवृत्त्या संशयनिवृत्तेस्त्वदीयाहार्यपरि-भाषाया अनादरणीयत्वमिति । तदसत् । उक्तरीत्या तमर्थं ज्ञात्वाऽपि तस्यापह्ना-सादिना कोपाद्यभिवृद्धये आहार्यसंशयेनैव पुनः पुनः प्रश्नदर्शनेनाहार्यसंशयहेत्वज्ञा-ज्ञादिनिवृत्तेर्वक्तुमशक्यत्वात् । कश्चिदित्युक्तमतेऽपि प्रकृष्टप्रकाशत्वतत्तद्व्यादीनां ज्ञानांतरविषयीभूतानामेव चंद्रदेवदत्तादिविषयतानिरूपितप्रकारताशालित्वमित्यत्रैव स्वीक्रियते किमन्यत्राऽपि प्रयोजनांतरानुरोधात्स्वीकारः । नाद्यः । वाक्यविशेष

एवानुव्याकल्पनस्यांगीकारे मानाभावात् । नच समानविभक्तिकपदसमभिव्याहृतकिंशब्दस्य स्वसमभिव्याहृतपदार्थतावच्छेदकतद्व्याप्यरूपोभयप्रकारतानिरूपितविषयताशालिबोधेच्छाविषयोऽर्थः । तादृशेच्छायाः प्रष्टुर्विद्यमानत्वात्तद्वचनेन तां ज्ञात्वा वक्ता तादृशबोधतात्पर्येण वाक्यं प्रयुक्त इति तादृशबोध आवश्यक इति वाच्यम् । प्रकृतबोधे प्रकारीभूतधर्मयोर्मानेऽपि बाधकाभावेन बोधस्य तदविषयकत्वे बीजाभावात् । नच स्वाविषयीभूततादृशधर्मद्वयप्रकारतानिरूपितविषयताशालिबोधेच्छाविषयीभूतः किंशब्दवाच्यशरीरेऽपि स एव निविष्टोऽतः परिहारवाक्यजन्यबोधस्य तादृशत्वमपेक्षितमिति वाच्यम् । एतादृशबोधस्यैवेच्छाविषयत्वमित्यत्रापि कल्पकानुपलंभात् । नचाज्ञानमपि तादृशमिति तस्य निवृत्तये तादृशमेव ज्ञानमपेक्ष्यत इति वाच्यम् । अज्ञानस्यापि स्वाविषयीभूतचंद्रत्वप्रकाशाश्रयत्वादिनिष्ठप्रकारतानिरूपितचंद्रनिष्ठविषयताकत्वे मानाभावात् । चंद्रं न जानामीत्याकारज्ञानविषयकप्रतीत्या ज्ञाननिष्ठोक्तविषयकत्वानवगाहनात् प्रतीत्यंतरस्य चाभावात् । विना मानं तादृशाज्ञानं परिकल्प्येच्छादिकं परिकल्प्य तादृशबोधांगीकारे शून्यविषयकाज्ञानं निर्विषयकाज्ञानं च स्वीकृत्य तन्निवृत्तये तादृशबोधविषयकेच्छां परिकल्प्य तन्मूलकप्रश्नानंतरं तदुत्तरवाक्येन निर्विषयकशून्यविषयकबोधापत्तेः । तस्येच्छादिसत्त्वेऽपि वाक्यस्य तादृशबोधोत्पादने सामर्थ्याभावात्तादृशबोधो नोत्पद्यते चेत् । प्रकृतेऽपि तुल्यम् । त्वदभिमतबोधकस्यापि कुत्राप्यक्लृप्तत्वेन तादृशबोधजनकत्वस्याखंडार्थकत्वेनाभिमतवाक्येऽपि सत्त्वे मानाभावात् । न द्वितीयः । अन्यत्र तादृशबोधकल्पनेऽपि मानाभावात् । नच बोधो द्विविधः । तद्विशिष्टवैशिष्ट्यावगाही तदुपलक्षितवैशिष्ट्यावगाही च । आद्ये ज्ञाने तस्मिन् प्रकारीभूतधर्मोऽपि भासते । तद्भिन्ने स्वविशेष्यान्वयित्वान्वयित्वरूपविशेषणत्वासिद्धेः । द्वितीये च तत्राभासमानस्यैव धर्मस्य तन्निष्ठविषयतानिरूपितप्रकारतामात्रं स्वीक्रियत इति अन्यत्रापि तादृशबोधस्य सिद्धत्वात्तत्सामग्र्यादिकं कल्पनीयमित्यखंडार्थबोधकत्वं तादृशबोधजनकत्वरूपमेव निरुच्यत इति वाच्यम् । उक्तरीत्यंगीकारेऽपि लक्षणवाक्यानां सोऽयं देवदत्त इति वाक्यानां च तादृशबोधजनकत्वनिर्बंधकारणाभावात् विशिष्टवैशिष्ट्यावगाहिबोधपरलक्षणवाक्ये लक्षणवाक्यत्वरूपहेतोर्व्यभिचारस्य दुर्वारत्वात् । अप्रमुक्तादृशार्थबोध एवेच्छत्यत्राज्ञानस्योक्तोपलक्षितवस्तुविषयकत्वेऽन्यत्र च नियामकाभावाद्विशिष्टविषयकाज्ञाननिवर्तकविशिष्टबोधेच्छामूलकप्रश्नोत्तरीभूतलक्षणवाक्यसंभवात् । नच प्रकृष्टप्रकाशश्चंद्र इति वाक्येन चंद्रस्य मुख्यविशेष्यतयैव भानेन लक्षणविशेष्यान्यत्र वैशिष्ट्याभानादुक्तविशिष्टवैशिष्ट्यबोधत्वाभावादुपलक्षितविषयत्वमित्यथा तत्रोक्तविषयता आवश्यकीति वाच्यम् । एवं सति चंद्रत्वाद्युपलक्षितस्याप्यन्यत्र वैशिष्ट्यानवगाहनादुपलक्षितवैशिष्ट्यावगाहित्वाभावात्त्वदुक्तविषयताऽप्रामाणिकी । नच तद्रूपेण मुख्यतया तदवगाहिज्ञानीयविषयतापि भवतीति वाच्यम् । तथात्वे घट इत्याकारज्ञानस्यापि घटत्वोपलक्षितविषयतापत्तेरिष्टापत्तौ च पूर्वज्ञाने मुख्यतया भासमानघटत्व उक्तज्ञानीयविशेष्यतानिरूपितप्रकारतामात्रांगीकारेऽपि घटघटत्वयोः संसर्गाभाने धर्मधर्मिभावभानायोगाद्घटत्वे अवृत्तित्वसंशयोच्छेदो घटत्वाश्रयव्यक्तावस्तित्वसंशयोच्छेदः चंद्रत्वप्रकाशाश्रयत्वयोस्तत्त्वंद्रत्वयोः सामानाधिकरण्यसंशयोच्छेदो न स्यात् । न स्याच्च घटत्वाश्रयवस्तुतादृशसामानाधिकरण्यादीनां च सिद्धिः । विरोध्यविषयकस्यापि ज्ञानस्य प्रतिबंधकत्वे तदविषयकस्याऽपि तत्त्सा-

धकत्वे सर्वप्रतीतिभिः शून्यस्यैव सिद्ध्यापत्त्याऽतिप्रसंगात् । सत्यज्ञानादिवाक्यसाध्यप्रतीतिस्तत्त्वमसीतिवाक्यसाध्यप्रतीतेश्च घट इत्यादिप्रतीत्यविशेषात् विशिष्टवस्तुन एव तद्बलात्सिद्ध्याऽखंडवस्त्वसिध्या प्रयासवैफल्याच्च । अपिच सोऽयमित्यत्र तत्तेदंत्वोभयप्रकारतानिरूपितविषयतामात्रशालिबोधमात्रमंगीकृत्यैक्यस्य संसर्गतानंगीकारे नीलो घट इत्यत्रापि तथैव स्यात् । नीलत्वघटत्वविशिष्टयोरैक्ये नीलत्वघटत्वयोरप्यैक्यापातेन विशिष्टद्वयैक्यायोगात्तथा चैक्यसंसर्गकप्रमाया विलोप एव स्यात् । तत्रोपहितयोस्तादात्म्यं संसर्गो नैक्यं तस्य कुत्रापि संसर्गत्वं नास्त्येवेति चेन्न । अत्राप्युपलक्षितयोस्तादात्म्यमेव संसर्गतया भासताम् । नच तादात्म्यस्य भिन्नाभेदनियतत्वात्प्रकृते चोपलक्षितयोः शुद्धाभेदस्यैव सत्त्वेन भिन्नाभावान्न संसर्गतेति चेन्न । उपहितभेदस्योपाधिभेदरूपत्ववदुपलक्षितभेदस्याप्युपलक्षणभेदरूपत्वमाश्रित्य वा अभेदस्य वास्तवत्वं भेदस्य प्रातिभासिकत्वं संसर्गशरीर इत्युक्तरीतिमाश्रित्य वोपपादनसंभवात् । अन्यथा तादात्म्येन तत्तोपलक्षितव्याप्यवानयमित्यादिशाब्दादिपरामर्शादुक्ताखंडार्थावगाह्यनुमितिस्वीकारो वा तादृशस्थलेऽनुमितेरपलापो वा स्यात् । किंच विशिष्टस्य वैशिष्ट्यमिति रीत्या जायमानज्ञानस्यापि तद्धर्मविषयकत्वं किमर्थमंगीकार्यं तद्धर्मविशिष्टवैशिष्ट्यावगाहिज्ञानस्थले तत्राभासमानेऽपि धर्मे तन्निष्ठाविषयतानिरूपितावच्छेदकताख्यविषयतोपलक्षितस्थले तद्धर्मेऽवच्छेदकतानात्मकप्रकारतैत्येतावतैव वैलक्षण्यस्य संभवात् । गंधवत्त्वरूपलक्षणोपलक्षितपृथिवीस्वरूपमात्रज्ञानान्नीलरूपवत्त्वरूपलक्षणोपलक्षितपृथिवीस्वरूपमात्रावगाहिज्ञानस्य विषयावैलक्षण्येऽपि विषयताकृतवैलक्षण्येनैव वैलक्षण्यस्य त्वयाऽवश्यमादरणीयतया प्रकृतविषयावैलक्षण्यस्याप्रयोजकत्वात् । एवं चान्यथाख्यातिबलादनिर्वचनीयसिद्धिरप्यपास्ता स्यात् । रजतमिदं साक्षात्करोमीति प्रत्यये विलक्षणविषयतास्वीकारसंभवात् बाह्यार्थासिद्धिश्च । नच विशिष्टवैशिष्ट्यावगाहिप्रत्यये तद्धर्मस्य धर्म्यंशे भानाभावे स्वविशेष्यान्वय्यन्वयित्वरूपविशेषणत्वहानिः स्यादिति वाच्यम् । तज्ज्ञानेऽभासमानस्यैव तन्निरूपितप्रकारताया इव तदन्वयिनिरूपितप्रकारताया अपि संभवेन तथात्वोपपत्तेः । अवच्छेदकताख्यविषयतावत्त्वमात्रेणैव वा विशेषणत्वव्यवहारस्योपलक्षणत्वव्यवहारवदुपपत्तेश्च । रक्तत्वविशिष्टदंडवंतं जानामीत्यनुव्यवसायेन व्यवसाये रक्तत्वविषयकत्वावगाहनात्तदवश्यं स्वीकार्यमिति चेदिहापि रक्तत्वाश्रयदंडवंतं पुरुषं जानामि तदभिन्नमिमं जानामि प्रकृष्टप्रकाशवंतं चंद्रं जानामीत्यनुभवात्तथात्वं केन वारयितुं शक्यम् । विशिष्टोपलक्षितप्रतीत्योर्वैलक्षण्यं तु प्रागुक्तमेवेति न काऽप्यनुपपत्तिः । अपि चैतन्मतेऽखंडार्थकस्थलीयबोधस्य स्वरूपमात्रावगाहित्वं प्राचीनैरिवांगीकृतमेव । परं तन्निष्ठविषयतायां ज्ञानांतरीयविषयतानिरूपितत्वद्वयमप्याधिकं कल्प्यं तस्य प्रयोजनं तु न दृश्यते । प्रकृष्टप्रकाशश्चंद्र इति लक्षणवाक्यजन्यबोधस्य कलंकी चंद्र इति लक्षणवाक्यजन्यबोधावैलक्षण्ये तन्निवर्तनीयसंशयनिवर्तकत्वापत्तिरत एतदंगीकार्यमिति न युक्तम् । तत्तल्लक्षणज्ञानद्वारकबोधे शक्तिविशेषस्यैव कल्पनयोपपत्तेः । त्वया च बोधे च शक्तिरेका विषयतायां च निरूपितत्वद्वयमपि कल्पनीयमिति महागौरवम् । नच ज्ञानस्य शक्तिमत्त्वेन प्रतिबंधकत्वं न कल्प्यते किंतु तादृशविषयताश्रयत्वेनैव । तथाच ज्ञाने शक्त्यकल्पनान्न गौरवावकाश इति वाच्यम् । तथापि ज्ञाने एकशक्तिकल्पनेनैवोपपत्तौ विषयतायां निरूपितत्वद्वयकल्पनाधिक्याद्गौरवमेव । किंचोक्तविषयतावत्त्वेन प्रतिबंधकत्वे

विषयतात्रयस्य विनिगमनाविरहान्मुखपदार्थतया निवेशे तदाश्रयज्ञानव्यक्तित्रयस्यैव पृथक् प्रतिबंधकत्वापत्तिरिति महागौरवम् । ज्ञानत्रयमेलनायोगात्पूर्वज्ञान एव धर्मद्वयभानांगीकारे अन्यतरस्यैव धर्मितावच्छेदकत्वे विनिगमकाभावात्कस्यापि धर्मितावच्छेदकत्वाभावे घट इति ज्ञाने क्लृप्तत्वात्पूर्वज्ञानविषयत्वबलात्प्रकारतामात्रस्य प्राप्त्या निर्धर्मितावच्छेदकत्वात्प्रतिबंधानुपपत्तिश्च । ज्ञानद्वयस्यैव रूपभेदात्प्रतिबंधकत्वद्वयं तु दुर्वारमेव । द्वितीयज्ञानाद्वितीयक्षणे प्रथमज्ञाननाशे तृतीयक्षणे प्रतिबध्योत्पत्तिर्ज्ञानद्वयप्रतिबंधकतापक्षे अवश्यमंगीकर्तव्येत्याद्यनुसंधेयम् । त्वदुक्तरीतौ संबंधभेदनिबंधनदोषवारणाय संबंधविषयकत्वस्याप्यवश्यवक्तव्यतयाऽखंडार्थताहानिश्चेत्यादिदूषणानि बहुतरमूहनीयानि इति न किंचिदेतत् । एवमेतानि सर्वाणि दूषणानि सत्यज्ञानादिवाक्यस्थले तत्त्वमसीत्यादिस्थलेऽप्यविशिष्टानि । एवमक्षरधियामित्याद्युदाहरणपूर्वकं ब्रह्मणि सर्वव्यावृत्तिबोधनाय गुणोपसंहारकथनमप्यशुद्धम् । सर्वव्यावृत्तीनां केनाप्यसर्वज्ञेन ज्ञातुमशक्यतया द्वाराभावेन कस्यापि ब्रह्मज्ञानानुदयप्रसंगात् । सर्वज्ञस्य तु योगबलादेव सर्वज्ञानवत् ब्रह्मज्ञानसंभवेन तदीयशाब्दबोधस्य व्यावृत्तिद्वारकत्वे बीजाभावात् । बाध्यभेदज्ञानस्यैकस्यैवाप्रामाण्यशंकानिवृत्त्युपयुक्तत्वेनापेक्षितत्वस्येतरव्यावृत्तिज्ञानस्यानुपयुक्तत्वस्याप्युक्तत्वाच्च । नेति नेतीत्येतद्वाक्यं विना सर्वव्यावृत्तिबोधकस्येतरस्याभावेन तदेकोपसंहारेणैव सर्वसिद्धौ सत्यज्ञानादिवाक्यानां सर्वेषां वैयर्थ्याच्च । एवं व्यावृत्तीनां सत्यत्वे तद्वत्त्वेनैव ब्रह्मणोऽखंडत्वभंगः । तेषां ब्रह्मस्वरूपत्वेऽप्याधाराधेयभावाभ्युपगमादन्यथा ब्रह्मणि व्यावृत्तिर्जीवभेदाभाव इत्यादेर्वाङ्मात्रत्वापातात् । मिथ्यात्वे त्वागमस्याप्रामाण्यं व्यावहारिकप्रामाण्यमित्यादिप्रलापस्त्वपाकृत एव पूर्वम् । न च सफलत्वाद्व्याकरणवत् भ्रमजनकत्वेऽपि प्रामाण्यम् । सिद्धांते मंत्राणामिव ब्रह्मबुद्धौ व्यक्तिक्रममादायैव सर्वस्योपपादनेन तस्य भ्रमं प्रत्यजनकत्वात् । मतांतररीत्यापि अनुसंधानविशेषविषयत्वस्य साधुत्वव्याप्यतया एव व्याकरणप्रतिपाद्यतया तदंशे तस्य भ्रमहेतुत्वाभावात् । नच भ्रमात्मकानुसंधानविधानादप्रामाण्यमिति युक्तम् । निरर्थकवर्णावलीरूपमंत्रविशेषस्येष्टसाधनतया जपादिविधायकवाक्यवत् विग्रहवद्देवतानंगीकारपक्षे इंद्रायेति चतुर्थ्यंतमंत्रस्यैव वज्रहस्तत्वादिनानुसंधानविधायकशास्त्रस्य च तत्प्रामाण्योपपत्तेः। नच तर्हि रुद्ररोदनाद्यर्थवादवाक्यवत् विषं भुंक्ष्वेति वाक्यवच्च भ्रमजनकत्वेऽपि फलीभूतबोधस्य प्रामाण्यात्प्रामाण्यमिति वाच्यम् । पूर्वमितरमोहनादिकारणाद्यनुसारिणाचिंत्यशक्तिमद्भिर्देवैः कृतस्यैव रोदनवपोत्खननादेरेवार्थवादवाक्यप्रतिपादितत्वेन भ्रमजनकत्वाभावात् । तदंशे भ्रमत्वे रजतप्राशस्त्यादौ हेत्वसिद्ध्या तदसिद्ध्यापत्तेः। 'नाविद्यमानं ब्रुवते वेदाः ध्यातुं न वैदिकाः ॥ अविद्यमानं ध्यायंतो सर्वे यांत्यधरं तमः ॥ तस्मात्सत्यार्थतां ब्रूयाद्वेदानामपि सर्वशः ॥' इत्यादिना वेदस्य सर्वत्र सत्यार्थकताया एवोक्तत्वाच्च । विषं भुंक्ष्वेति वाक्यस्थले तु वक्तुर्न प्रथमतो विषभोजनमिष्टसाधनमित्याकारबोधे तात्पर्यं प्रयोजनाभावात् । अपितु द्विषदन्नं न भोक्तव्यमिति बोध एव विषादिपदलक्षणया यथासंभवं भवत्वित्यत्र । गंगायां घोष इत्यत्र तीरपदप्रयोगं विहाय गंगापदप्रयोगेण घोषे पावनत्वादिबोध इव विषपदप्रयोगमहिम्ना तत्सादृश्यादिना द्विषदन्नस्य महानिष्टत्वविषयकबोधः पाश्चात्यो भवत्विति तात्पर्येण लाक्षणिकप्रयोगः। कस्यचित् व्युत्पन्नस्य प्रथमतो विषभोजने इष्टसाधनत्व-

बोधोदयेऽपि वक्तृतात्पर्यविषयत्वाभावादेव न वाक्यस्य तज्जनकत्वप्रसक्तिः । अन्यथा लक्षणास्थले सर्वत्रानुपपन्नार्थबोधस्य द्वारत्वापातेन सर्वत्रापि बोधद्वयतात्पर्यस्याप्रामाणिकस्य कल्पनापातः । क्वचिदेतादृशवाक्यं शब्दविधया प्रामाण्यरहितं सत् कोपानुमानादिद्वारा फलीभूतबोधोपयोगीति लिंगविधयैव प्रमाणम् । उक्तमेतत्कर्मनिर्णये आचार्यैः पक्षद्वयमपि । तस्मात्सत्यत्वज्ञानाद्यवांतरबोधे व्यावृत्तिबोधे च श्रुतेस्तात्पर्येऽप्रामाण्यं दुर्वारमेव । यदपि सत्यत्वोक्त्याऽसत्यव्यावृत्तिः सिध्यतीति तदप्यशुद्धम् । सत्यताया उपहितब्रह्मण्यपि सत्त्वेन तस्यानृततया तद्व्यावर्तकत्वायोगात् । नच तदुपलक्षितस्वरूपस्यैव लक्षणत्वं तस्य निर्विशेषे स्वस्मिन् वृत्तित्वायोगात्स्वस्वेतरव्यावृत्तत्वेन ज्ञानं विना पक्षे साध्यव्याप्यत्वेन निश्चयायोगाच्च । तन्नियामकत्वायोगात्तदर्थं स्वस्वेतरव्यावृत्तत्वस्य निर्विशेषे ग्रहापेक्षायामात्माश्रयापातेन च किंचिदुपहितरूपेणैव तथात्वस्य वाच्यतया स्वरूपलक्षणत्वायोगस्योक्तत्वात् । व्यावर्तकसंसर्गस्य स्वासमानसत्ताकत्वे स्वस्मिन् व्यावृत्तेरपि स्वसमानसत्ताकाया असिद्ध्यापत्तेः । अन्यथा शुक्त्यसमसत्ताकरजतत्वसंसर्गेण सेत्स्यमानाया अरजतव्यावृत्तेरपि शुक्तिसमसत्ताकायाः सिद्ध्यापातात् । न चारोपितेन वर्णदैर्घ्येण तदधिकसत्ताकार्थसिद्धिर्दृष्टेति वाच्यम् । दैर्घ्यादीनां ध्वनिविशेषव्यंग्यानां वर्णेष्वनारोपितत्वात् । स्वप्नस्थले कामिनीज्ञानजन्यधातूत्सर्गाधीनसुखनिष्ठतरव्यावृत्तिं प्रत्यपि जन्यतासंबंधेन धातूत्सर्गस्यैव साधकत्वेन तत्राप्युक्तनियमाक्षतेः । क्वचित्तथात्वमपि वर्तत इत्याग्रहकरणेऽपि उक्तव्यावृत्तेरसत्यधर्ममूलकत्वादसत्त्वं क्वाचित्कस्थलवत्सत्त्वमिति संदेहनिरासाभावापत्तेः । न चेष्टापत्तिः । बाध्यव्यावृत्तिसंदेहस्य बाध्यसंदेह एव पर्यवसन्नत्वाद्ब्रह्मण्यबाध्यत्वनिर्णयाभावात्स्वरूपमात्रविषयकानावृतप्रामाण्यकज्ञानानुदयप्रसंगेनोक्तलक्षणवाक्यवैयर्थ्यात् । एतेन ब्रह्मणि प्रतीयमाना व्यावृत्तिर्मिथ्यैवाऽस्त्विति पक्षोऽपि परास्तः । मिथ्यात्वग्रहे बाध्यत्वनिश्चयस्योक्तरीत्या संदेहस्य वाऽनपायात् । अधिकं मिथ्यात्वखंडनावसरे निरस्तम् । ब्रह्मसंसृष्टव्यावृत्तीनां ब्रह्मरूपत्वाभ्युपगमेन सत्यत्वेऽप्याधाराधेयभावसत्यत्वेऽखंडार्थहानिरसत्यत्वे व्यावृत्तिमिथ्यात्वपक्षाविशेष एव । एवं लक्ष्यासमानधर्मोपदेशेनासमानसत्ताकव्यावृत्तिबोधनद्वारा स्वरूपबोधजननेनोपदेशकवाक्यप्रामाण्यं चेत्स्वकल्पितमेव किंचिद्धर्ममुक्त्वा षोडशकलपुरुषबोधनेऽपि वाक्यप्रामाण्याहानेस्तस्मान्नार्हाम्यनृतं वक्तुमित्यादिना भारद्वाजस्यानृतभयेन हिरण्यनाभप्रत्याख्यानानुपपत्तिश्चेति । एवमेव ज्ञानादिस्थलेऽप्यूह्यम् । एवं नैय्यायिकैरीश्वरज्ञानस्य सत्यज्ञानानंतरूपत्वस्यांगीकृतत्वाद्विशेषणत्रयोपादानेऽपि स्वाभिमतब्रह्मासिद्धिः । तद्व्यावर्तकविशेषणोपादानेऽपि अन्येन केनचित्तथैव कस्यचिज्जडस्योत्प्रेक्षायां तद्व्यावृत्तब्रह्मसिद्धये पुनर्विशेषणांतरोपादानपरंपरापत्तेः । वस्तुतः सत्यत्वादीनां ब्रह्मण्येव विद्यमानत्वापत्तेर्न वस्तुतो ब्रह्मस्वरूपमात्रविषयकज्ञानमेव जायत इति अंगीकारे तावन्मात्रेण स्वरूपमात्रविषयकाज्ञाननिवृत्तिसंभवादन्योपादानवैयर्थ्यमेव । किंच सत्यपदशक्तिग्रहो लोकानां यत्र जायते स एव सत्यपदार्थः । सच सत्तादात्म्यवत्येव जायते । यथोक्तं संक्षेपशारीरके । 'आकाशादौ सत्यता काचिदेका प्रत्यङ्मात्रे सत्यता काचिदन्या ॥ तत्संपर्कात्सत्यता तत्र चान्या व्युत्पन्नोऽयं सत्यशब्दश्च तत्र' इति ॥ अंबरादौ काचिदेका स्वकालाबाध्यत्वरूपा सत्यता । प्रत्यङ्मात्रे ब्रह्ममात्रे । काचिदन्या त्रिकालाबाध्यत्वरूपा । तत्संपर्कात्त्रिकालाबाध्यवस्तुतादात्म्यात् । तत्र आकाशादौ । अन्या तादृशसत्तादात्म्यवत्त्वरूपा । तत्र तादृशसत्तादात्म्यवत्त्वा-

वच्छिन्ने । घटः सन्नित्यादिव्यवहारेण लोकानां त्रिकालाबाध्यतादात्म्यवत्त्वेनैव घटादीनां प्रतीतिः । प्रथमाद्वितीयसत्यपदार्थादरणं तु 'सत्यस्य सत्यं सत्यं चानृतं च तत्सत्यमभवत' इति श्रौतप्रयोगमात्रनिर्वाहाय । तच्च लक्षणैव संभवत्यनेकशक्तिकल्पने गौरवात् । तथाच सत्यपदस्य ब्रह्मणि शक्तिर्न घटते सत्तादात्म्यस्य ब्रह्मण्यभावात्तत्र सत्यपदस्य विशिष्टबाधग्रहसहितशक्त्यैवेत्येतदयुक्तम् । किंच विशिष्टशक्तपदस्य विशिष्टबाधग्रहसहकृतविशिष्टशक्त्यैवैकदेशबोधकत्वे घटो जातिमानिति वाक्यं विशिष्टधर्मावच्छिन्नबाधग्रहमात्रसहकारवशाच्छक्तिभ्रमं लक्षणाग्रहं च विनाऽनवच्छिन्नद्रव्यत्वप्रकारकबोधं जनयेदिष्टापत्तौ च प्रश्नोत्तरवैयधिकरण्यादिरूपत्वदीयदूषणादावपीष्टापत्तिसंभवेन न काऽपि व्यवस्था सिद्ध्येत् । अधिकं शास्त्रारंभसमर्थनाख्यग्रंथखंडनावसरे प्रपंचयिष्यामः ॥ किंच कश्चंद्र इत्यत्र स्वरूपप्रश्नस्य कंठोक्तत्वात्तत्रोत्तरवाक्यमपि स्वरूपपरमस्तु । सत्यज्ञानादिवाक्यस्थले उत्तरस्यानाकांक्षितत्वेनानुपादेयत्वपरिहाराय कस्मिंश्चित्प्रश्नवाक्येऽध्याहर्तव्ये कीदृशं ब्रह्मेत्येव प्रश्नवाक्यमेवाध्याह्रियतां उत्तरवाक्यस्य तु मुख्यार्थकत्वमेव सिध्यतु किं भागत्यागलक्षणया । न चैवमेकधैवानुद्रष्टव्यमिति श्रुत्याऽखंडस्वरूपविषयकज्ञानस्यैव मोक्षसाधनत्वावगमात् । तादृशमेव प्रश्नादिकमध्याहृत्योत्तरं वाक्यं नेयमिति वाच्यम् । एकधैवेति धाल्प्रत्ययबलेन सप्रकारकज्ञानस्यैवावगमात् । नचानेकगुणप्रकारकज्ञानस्य मोक्षकारणत्वमते एकप्रकारेणैव ज्ञानस्य मोक्षकारणत्वोक्तिविरोधापत्तिर्दुर्वारैव । मन्मते च वैशिष्ट्यं तृतीयार्थभूतं दर्शन एवान्वेति । प्रकारश्च धर्मः ज्ञानवृत्तिधर्मश्च विषयतासंबंधेन विषय एवेति एकमात्रविषयावच्छिन्नत्वं ज्ञाने लभ्यत इति स्वरूपमात्रविषयकत्वमेव पर्यवस्यतीति वाच्यम् । ज्ञाने ज्ञानत्वरूपधर्मस्यावर्जनीयतया त्वदुक्तार्थस्याऽप्यसंभावितत्वापत्तेः । विषयितासंबंधेन धर्म एवात्र विवक्षित इत्यत्र नियामकाभावात् । एकमेव द्रष्टव्यमित्युक्त्यैव सामंजस्ये धाल्प्रत्ययानर्थक्यं च तस्याभिमतार्थविरोधित्वात् । अतः चैत्रः पूर्वस्मिन् वत्सरे इदानीमप्येकप्रकारापन्न एव वर्तत इत्यादीनां प्रचुरव्यवहाराणां विद्यमानत्वात्तद्रीत्या पूर्वापरकालेष्वविरुद्धप्रकारापन्नमेव द्रष्टव्यम् । नत्विदानीं सगुणं मायापगमे निर्गुणमितीत्यादिरूपेणेति तदर्थोपपत्त्या तद्वाक्यस्य सावकाशत्वादस्मदुक्तार्थस्यैव बहुप्रयोगानुसारेण स्वरसत्वाच्च । त्वदुक्तार्थस्य त्वन्यत्राक्लृप्तस्यैव कल्प्यतया हेयत्वादुक्ताभिप्रायकव्यवहारस्य कुत्राप्यदर्शनात् । ब्रह्मविदाप्नोति परं इत्युपक्रमवाक्यस्यासंजातविरोधित्वेन मुख्यार्थकत्वे बाधकाभावाद्विशिष्टे बोध एव पदानां शक्तेरभ्युपगमाच्च । ब्रह्मत्वविशिष्टविषयकज्ञानस्यैव मोक्षसाधनत्वावगमात्तदनुसारेण पूर्णत्वरूपब्रह्मत्वप्रयोजकधर्मविशिष्ट एव प्रश्नस्य उचितत्वेन मन्मतरीत्या सत्यादिपदैः जगत्स्रष्टृत्वादिप्रतिपादनेन तस्योत्तररूपताया एव युक्तत्वाच्च । सगुणज्ञानस्यैव मोक्षसाधनत्वं तु प्रागेव व्यवस्थापितम् । किंच सर्ववेदांतेषु सगुणमेव प्रतिपादितमित्यप्रसिद्धनिर्गुणवस्तुपरत्वं प्रश्नोत्तरादीनामयुक्तम् । ननु कथमेतत् । 'केवलो निर्गुणश्च' । 'ततो यदुत्तरतरं तदरूपमनामयं य एतद्विदुरमृतास्ते भवंति' । 'यत्तदद्रेश्यमगोत्रमग्राह्यमित्या'दि । 'एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ॥ ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः' ॥ इत्यादिगीतावाक्यं च । 'प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् ॥ वचसामात्मसंवेद्यं तत् ज्ञानं ब्रह्म संज्ञितमित्या'दि ॥ 'न तद्योगयुजा शक्यं नृपाचिंतयितुं यतः ॥ अतः स्थूलं हरे रूपं चिंत्य'मिति च ॥ 'द्वे विद्ये वेदितव्ये' इति चाथर्वणी श्रुतिः । 'परया त्वक्षरप्राप्तिःऋग्वेदा-

दिमया परा। एतदव्यक्तमजरमचिंत्यमजमव्ययम् ।अनिर्देश्यमरूपं च पाणिपादाद्यसंयुतम्॥ विभुं सर्वगतं नित्यं भूतयोनिमकारणम् ॥ व्याप्याव्याप्यमतः सर्वं तद्वै पश्यंति सूरयः' ॥ इति च विष्णुपुराणम् । 'संचिंतयेद्भगवतश्चरणारविंदमि'ति सगुणभजनमुक्त्वा 'भक्त्या-ह्यमंगः सदसत्यनात्मनि स्यान्निर्गुणे ब्रह्मणि चांजसा रति' रित्यादिभागवतमित्येवमादीनि निर्गुणं स्पष्टमवगमयंतीति चेन्न । निर्गुणत्वाद्युक्तेरपाणिपादत्वाद्युक्तेश्च । सत्त्वादिगुणराहि-त्यप्राकृतपाणिपादादिराहित्यपरत्वस्य पूर्वमुपपादितत्वात् । स्वर्गे मणिखचितभूप्रदेशोद्याना-दिसत्त्वस्य पुराणादिसिद्धत्वात्तत्रत्यानामपि देवानामस्मदादिवदध्यक्षसिद्धभूसंबंधाभावेन भूसंबंधराहित्यस्य पुराणेषूक्तेरिवैतदुक्तेरपि युक्तत्वाच्च । अन्यथाऽरूपमनामयमिति ब्रह्मणोऽरूपशब्दितस्वरूपाभावोक्त्या ब्रह्मणो निःस्वरूपत्वापत्तेः । त्वदुक्तविष्णुपुराण एवाका-रणत्वभूतकारणत्वयोर्व्याप्यत्वाव्याप्यत्वयोश्चैकस्मिन्नेवोक्त्या स्वव्याहतिप्रसंगात् । एतैरपि वाक्यैः किंचिद्धर्मपुरस्कारेणैव निर्दिष्टत्वेन त्वदभिमतनिर्गुणवार्ताया अप्ययो-गाच्च । न तद्योगेत्यत्र तु स्थूलसूक्ष्मरूपयोर्भेदो नोच्यते परमात्मात्यंताभिन्नानामपि रूपाणां विशेषशक्त्याऽधिकारिविशेषैर्ज्ञेयत्वाज्ञेयत्वादिकमुच्यते । स्थूलपदं तु मनुष्यदृष्टिगो-चररामकृष्णाद्यवताररूपपरम् । अत एव प्रत्यस्तमितभेदमित्यादिना स्वगतभेदराहित्यं विष्णुपुराणस्थभागांतरे प्रतिपादितम् । अन्यथा 'स्थूलसूक्ष्मविशेषोऽत्र न क्वचित्प-रमेश्वर ॥ सर्वत्रैकप्रकारोऽसौ सर्वरूपेष्वजो यतः' ॥ इति गारुडवाक्यस्य 'कृष्णरामादि-रूपाणि परिपूर्णानि सर्वदा ॥ नचाणुमात्रं भिन्नानि तथाऽप्यस्मान्विमोहयसि'इत्यादि-वाक्यांतराणां च विरोधापत्तेः । गीतावाक्योदाहरणं त्वशुद्धम् । तत्रत्याक्षरपदस्य प्रकृतिपरत्वेन त्वदभिमतनिर्गुणपरत्वाभावात् । तथात्वे उत्तरसंदर्भे तदुपासनानिंदा-पूर्वकं स्वोपासनाप्राशस्त्यपरत्वप्रतीतिविरोधात् । अधिकं सगुणत्वविचार एव प्रपं-चितम् । एवं "योऽयंविज्ञानमय" इत्यादिजीवस्वरूपप्रतिपादकवाक्यस्याखंडार्थत्वमपि न संगच्छते । 'कतमः स आत्मेति' बृहदारण्यके "कतरः स आत्मा" इत्यै-तरेयके प्रश्नवाक्योपलंभात् । तस्य च धर्मपरत्वस्यैव वक्तव्यत्वात् । अन्यथा बहूनां जातिपरिप्रश्ने डतमच् द्वयोरेकतरनिर्धारणे डतराजिति सूत्राभ्यां जातिनिर्धारक-प्रश्नविषय एव डतमडतरयोर्विधानात् तस्यासाधुत्वापत्तेः । तथाचोत्तरवाक्यस्य स्वरूपमात्रपरत्वे प्रश्नोत्तरयोर्वैयधिकरण्यापत्तेर्विशिष्टपरत्वस्यैव वक्तव्यत्वात् । ननु कतरः स आत्मेत्यैतरेयकवाक्यपूर्वभागस्थवाक्ये कोऽयमात्मेति स्वरूपमात्रप्रश्न सत्त्वात्कतर इत्यस्य जघन्यस्य स्वरूपबोधद्वारीभूतार्थे अवांतरतात्पर्यस्य सत्त्वेऽपि परमतात्पर्यं न स्वीक्रियते । अत एवोत्तरवाक्ये 'येन वा पश्यति येन वा शृणोति' इत्यादिना दर्शनादिकं येन चिन्मात्ररूपेण घटितं तत् आत्मरूपमिति निर्णीतम् । नहि दर्शनादिकं किंचित्धर्मविशिष्टात्मघटितं येन तत्प्रतिपाद्यत इति युक्तं स्यात् । एवं कतमः स आत्मेति वाक्यस्य "आत्मैवास्य ज्योतिर्भवत्यात्मनैवाऽयं ज्योतिषास्ते" इत्या-दिपूर्ववाक्योक्तस्वप्न ज्योतिःशब्देन व्यवहारप्रयोजकत्वेन चिन्मात्ररूपस्योक्तत्वेन मन-आदावात्मस्वरूपत्वविप्रतिपत्तितत्संशयनिरासायोक्तस्य कतम आत्मेत्यादेर्व्यवहारप्रयो-जकचिन्मात्रविषयत्वं नहि जातिविशिष्टात्मचिद्व्यवहारप्रयोजिका किंत्वसत्त्वापादकाज्ञाना-भावोपहिता । अत एव "स एष नेति नेत्यात्मा" स यत्तत्र किंचित्पश्यत्यनन्वा गतस्तेन भवत्यसंगो ह्ययं पुरुष आनंदोऽजर इति शुद्धात्मानमुक्त्वाऽभयं वै ब्रह्म भवति य एवं वेद" इत्युक्तम् । एवं "केनेषितं पतति प्रेषितं मनः चक्षुः श्रोत्रं क उ देवो

युनक्ति " इत्यादीनामात्मस्वरूपपरत्वात्तदनुरोधेनात्र प्रत्यययोरविवक्षितार्थकत्वमेवेति चेन्न । किंशब्दप्रयोजकबुभुत्साया अपि स्वरूपमात्रविषयकत्वस्य निराकृतत्वेन तदनुरोधादेतेषामविवक्षितार्थकत्वकल्पनानौचित्यात् । अविवक्षितार्थकत्वे तत्प्रयोगस्यैवानर्थक्यप्रसंगात् । शुद्धस्वरूपस्य त्वदभिमतस्य दर्शनादिघटकत्वस्य व्यवहारप्रयोजकत्वस्याप्यसंभवेनाविद्याद्युपहितरूपेणैव वक्तव्यतया मनोजीवयोरन्यतरनिर्धारकजीवत्वधर्मपुरस्कारेण प्रथमवाक्ये प्रश्नविषयत्वसंभवेन प्रत्ययानर्थक्योक्त्यसंगतेः । तादृशाज्ञानाभावोपहितचित्येव वृत्त्युपहितचिति ज्ञानत्वादिजातेरिव कस्याश्चिज्जातेः संभवेन जातिपरिप्रश्नत्वसंभवेन तत्रापि प्रत्ययानर्थक्यादरणमयुक्तमेव । उत्तरवाक्येऽप्यसंगत्वादिधर्माणामुक्तत्वात्पुरुषत्वादिधर्माणामप्युक्तत्वेनोपष्टंभोऽप्ययुक्तः । एतद्वाक्ययोः पररीत्या जीवपरत्वमभ्युपगम्यदमुदितम् । वस्तुतः अनयोः सिद्धांते ईश्वरपरत्वमेवोपवर्णितम् । तदुपवर्णनं चेदानीमत्यंतमनाकांक्षितत्वाद्विस्तरभयाच्च न क्रियते। एवं सर्वत्र किंशब्दस्य स्वरूपप्रश्नमात्रबोधकत्वे कर्मकांडसगुणवाक्यस्वर्गदेवतादिप्रतिपादकवेदवाक्यानामौषधादिप्रतिपादकोपवेदवाक्यानां च श्रोतृबुभुत्सां विना प्रवृत्त्ययोगाच्छ्रोतुश्च तत्स्वरूपज्ञानसत्त्वेन तन्मूलकप्रश्नस्यैव प्रसक्त्या तदनुसारेणाखंडकर्माखंडौषधाखंडस्वर्गादीनामेव बोधः स्यात् । विशिष्टार्थपरवाक्यस्यैव विलोपप्रसंगः । नच तत्र बाधकाभावात्प्रकृष्टप्रकाशादिवद्विशेषणानां मानांतराप्राप्तत्वाच्च वाक्यस्य विशिष्टार्थपरत्वसंभवात्तदनुगुणमेव प्रश्नवाक्यं कल्पनीयमिति वाच्यम् । इहापि सत्यज्ञानादीनां प्रमाणांतराप्राप्तत्वाद्बाधकाभावाच्च तत्र तात्पर्यसंभवेन तादृशप्रश्नवाक्यस्यैव कल्पयितुमुचितत्वात् । नच "एकधैवानुद्रष्टव्यम्' इति " शुद्धज्ञानस्य मोक्षहेतुत्वश्रवणेन विशिष्टज्ञानस्य निष्फलत्वेन तत्र तात्पर्ययोगादेकमेवाद्वितीयमित्यादिधर्मनिषेधकश्रुतिबाधाच्च न तत्र तात्पर्यमिति वाच्यम् । श्रुतीनां त्वदुक्तार्थस्य निरस्तत्वात् । ब्रह्मस्वरूपमोक्षसाधनज्ञानब्रह्मप्राप्तिस्वरूपफलानां पूर्ववाक्योक्तानां स्वरूपजिज्ञासायां निरूपणार्थं प्रवृत्तमंत्रवर्णे गुहायामित्यादिना गुहावृत्तित्वादिधर्मोपादानेन तज्ज्ञानस्यैव मोक्षहेतुत्वोक्त्याऽखंडविषयकज्ञानस्य मोक्षसाधनत्वपरतया तच्छ्रुतेर्वक्तुमशक्यत्वाच्च । अन्यथा परिच्छेदराहित्यस्यानंतपदावांतरतात्पर्यबलेन सिद्धौ जीवाभेदस्य ब्रह्मणि सिद्ध्या तज्ज्ञापनरूपप्रयोजनाभावेन व्यावर्त्यब्रह्मांतराभावेन च तद्विशेषणोपादानानर्थस्यैव प्राप्तेः । अपिचाजिज्ञासितत्वे ज्ञाननिरूपणस्यानाकांक्षिताभिधानत्वप्राप्त्या तत्स्वरूपजिज्ञासाया आवश्यकत्वेन ज्ञानस्वरूपनिरूपणपरेणैतद्वाक्येनाखंडस्यैव ज्ञानस्य मोक्षसाधनत्वावगमात् । ब्रह्मविषयकत्वादिमत्त्वे तस्याखंडत्वहानिप्राप्त्या तदन्यथानुपपत्त्या निर्विषयकमेव ज्ञानं मोक्षसाधनं सिध्यतु । तथाचैकधेति श्रुतिः तद्बलान्न स्वार्थपरा स्यात् । एतत्सन्निधौ मोक्षरूपफलाश्रवणेन विधिप्रत्ययस्य च तदतिरिक्तेष्टसाधनताबोधकत्वेन दुर्बलत्वात् । नच ब्रह्मविषयकज्ञानस्यैव पूर्वं प्रसक्ततया तस्य निर्विषयकत्वं व्याहतमिति वाच्यम् । तर्हि ब्रह्मपदेन ब्रह्मत्वादिधर्मपुरस्कारेणैव प्रसक्ततया तस्यापि निर्धर्मकत्वादिकथनमपि कुतो न व्याहतम् । नच समस्तवस्तुसंसर्गाभावोपलक्षितस्वरूपत्वमेवोत्कर्ष एव ब्रह्मत्वमिति वाच्यम् । तर्हि ज्ञानेन सह ब्रह्मणः विषयविषयीभावसंसर्गस्याप्ययोगेन ज्ञाने तद्विषयकत्वस्यापि वक्तुमशक्यतया ब्रह्मेतराविषयकत्वमेव ज्ञाने ब्रह्मज्ञानत्वं स्यात् । तन्निर्वाहाय ब्रह्मवित्पदस्यापि तादृशज्ञान एव लक्षणापत्त्या ब्रह्मणि तात्पर्याभावादुत्तरवाक्यानामपि तत्र तात्पर्याभाव-

प्राप्त्या निर्विषयकज्ञानेन तादृशमेवाज्ञानं निवर्तत इति प्राप्त्या ज्ञानविषयतया ब्रह्मणोऽंगीकारेऽपि प्रयोजनाभावेन शून्यवाद एव पर्यवसानापत्तेः । तस्माज्ज्ञानमोक्षस्वरूपजिज्ञासायामप्यधिकोक्तिवत् ब्रह्मस्वरूपजिज्ञासायामप्यधिकोक्तिसंभवादधिकार्थबोधनाभावे प्रश्नप्रतिवचनयोः साम्यापातेनाज्ञाननिवर्तकत्वायोगाच्छक्तिविशेषस्योत्तरज्ञानेऽंगीकारे वायुसंयोगादिकमादाय विनिगमकाभावात् मानाभावाच्च तदसंभवाच्च विशिष्टपरत्वमेव सत्यज्ञानादिवाक्यानां युक्तम् । यदप्युक्तं विशिष्टार्थपरवाक्याभावापादनं न युक्तम् । लौकिकफलसाधनांगादीनां वाक्यतात्पर्याविषयत्वेऽपि प्रमाणांतरेण सिद्धिसंभवेऽपि सोमसवनाश्वत्थरमणीयसरोरण्यार्णवादिनानाविशेषणविशिष्टसत्यलोकादेस्त्रैलोक्यशरीरविशिष्टसगुणसायुज्यादेश्च फलस्य तन्निरूपितसाधनताविशिष्टध्यानादेश्च तद्विषयसगुणब्रह्मणो मनोमयत्वादिनानागुणविशिष्टस्य यन्न दुःखेन संभिन्नमित्याद्युक्तलक्षणस्वर्गस्य तन्निरूपितसाधनतया विशिष्टयागादेश्चागमैकसमधिगम्यतया मानांतरावेद्यतया तत्सिद्ध्यर्थं विशिष्टार्थतात्पर्यस्यावश्यकत्वादिति । तन्न । तादृशवाक्यानामनाकांक्षायामेव प्रवृत्त्या विशिष्टार्थतात्पर्यकत्वे ब्रह्मवाक्यस्यापि तथैव संभवापत्तेराकांक्षाया आवश्यकत्वे स्वरूपज्ञानं विना तन्निष्ठधर्मजिज्ञासायोगात्स्वरूपमात्रजिज्ञासायामवश्यवक्तव्यायां तदर्थबोधनार्थं प्रवृत्तैतद्वाक्यैः स्वरूपमात्रस्यावश्यं बोधनीयत्वप्राप्त्या तत्र तात्पर्ये आवश्यके द्वारीभूतार्थेऽपि तात्पर्यकल्पने मानाभावेन विशिष्टार्थासिद्धेस्त्वन्मते आपादनीयत्वादित्यलम् । अभिहितान्वयवादिनिराकरणं सुधादौ कृतम् । त्वन्मते ज्ञानासंभवोऽपि वक्ष्यते । कार्यान्वितशक्तिपक्षे ज्ञानविधिशेषत्वमेव ब्रह्मवाक्यानामंगीकृत्याखंडार्थकत्वस्य कथंचिदभ्युपगमोऽप्यसंगतः । उपासनाविधिशेषतया सगुणासिद्धिवत् ज्ञानविधिशेषत्वेन निर्गुणासिद्धिप्रसंगात् । उपासनाया अयाथार्थ्यवत् ज्ञानस्याप्ययथार्थत्वेऽपि तत्रेवात्रापि विधिसंभवात् । नचायथार्थत्वे अज्ञाननिवर्तकत्वरूपफलजनकत्वायोगः । स्वाप्नशुक्तिसाक्षात्कारेण स्वप्ने तदारोपितरजताज्ञानहेत्वविद्यानिवृत्तिदर्शनात् । नच तत्र तिरोधानमेव नाज्ञाननिवृत्तिर्जागरप्रबोधेनैव सर्वस्यापि निवृत्तिरिति वाच्यम् । तर्हि जाग्रद्रजतहेत्वज्ञानस्यापि शुक्तिज्ञानेन तिरोधानमात्रांगीकारे ज्ञानस्याज्ञाननिवर्तकत्वे समानविषयकत्वेनैव निवर्तकत्वमित्यादेरसिद्ध्या तद्बाधकाभावे श्रौतज्ञानस्यायथार्थस्यापि श्रुतिबलादेवाज्ञाननिवर्तकत्वसिद्धौ प्रमात्वस्यानुपयोगात् । अस्तु वा ब्रह्मणो ज्ञेयत्वाभावादिश्रुत्यनुग्रहाय विधेर्ज्ञाने सविषयकत्वांशेऽपि तात्पर्याभावस्तथाच निर्विषयकज्ञानस्य प्रमात्वमपि घटते । बाधितार्थविषयकत्वाभावस्यैव प्रामाण्यरूपत्वाभ्युपगमौचित्यात् । अनुभवविरोधस्य निर्विकल्पकज्ञानांगीकारेऽपि साम्यादित्यादीनि बहुतरदूषणान्यूहनीयानि । परमतस्यानंतदोषदुष्टतायाः आचार्यैरन्यत्र बहुश उक्तत्वात् । पूर्वोक्तरीत्या प्रश्नोत्तरयोर्वैय्यधिकरण्यापत्तिरूपप्रतिकूलतर्के निरस्ते न्यायामृतोक्तान्यखंडार्थकत्वाभावसाधकान्यपि सुस्थिराण्येवेत्यखंडार्थत्वसाधकानुमानानां तद्बाधोऽपि सुस्थिर एवेति । यदपि केनचिदर्वाचीनेनोक्तं ॥ नन्वखंडार्थत्वं वेदान्तानामनुपपन्नम् । तद्धि संसर्गगोचर प्रमाजनकत्वं तच्च न वाक्यस्य युक्तम् । तस्यैकपदार्थेऽपरपदार्थसंसर्गावगाहित्वात् । अन्यथा पदद्वयवैय्यर्थ्यापत्तेरिति चेदत्राहुः । प्रतीतिस्तावद्विशिष्टवैशिष्ट्यावगाहिनी उपलक्षितवैशिष्ट्यावगाहिनी चेति द्विविधा । तत्राद्या विशेषणं विशेष्यं तत्संसर्गं चावगाहते । अन्यथा विशेष्यान्वय्यन्वयित्वरूपाविशेषणत्व

स्यासंभवप्रसंगात् । द्वितीया तूपलक्षिणीभूतधर्मं नावगाहते । न चैवमिदं द्रव्यमिति ज्ञानस्य द्रव्यत्वोपलक्षितावगाहिनो घटत्वाद्युपलक्षितावगाहित्वस्याप्यनपायादयं घटो न वेति संशयविरोधित्वापत्तिरिति वाच्यम् । तटस्थस्यापि घटत्वादेर्द्रव्यनिष्ठविषयितानिरूपकत्वांगीकारेणातिप्रसंगवारणसंभवात् । एवं च भेदसंसर्गकप्रत्ययस्थले विशेष्ये विशेषणवैशिष्ट्यभानस्यावश्यकत्वेऽपि सोऽयमित्याद्यत्यंताभेदस्थले धर्मिमात्रस्वरूपस्यैक्यस्य संसर्गतया भानकल्पने मानाभावात्तत्तेदंतोभयनिरूपिततदाश्रयनिष्ठविषयिताशालित्वमात्रमभ्युपेयते । तावन्मात्रेण चेदंत्वोपलक्षिते तत्तोपलक्षितभेदग्रहविरोधित्वमप्रत्यूहम् । तथाचोक्तवाक्यमेवाखंडार्थं प्रसिद्धम् । एतादृशशाब्दबोधे च विशिष्टपरत्वाभावनिश्चयसहकृतात्तदिदमादिपदजन्या तत्तादिप्रकारिका तदुपलक्षितोपस्थितिर्वा शाब्दबोधप्रयोजकसामान्यकारणजातसमवहिता प्रयोजिकेत्यादिकं शास्त्रारंभसमर्थने प्रपंचितम् । विशिष्टपरत्वाभावनिश्चयः क्वचिदन्वयानुपपत्त्या क्वचिदन्यथा च । आद्यो यथा सोऽयमित्यत्र । तत्र हि तत्तद्देशकालविशिष्टयोस्तदिदंत्वाभ्यां परामर्शाद्विशिष्टबोधस्तावन्न संभवति । इतरसंबंधाभावात् । विशिष्टातिरेकेण भिन्नकालीनविशेषणावच्छिन्नयोर्यौगपद्याभावेनाभेदस्य दूरोत्सारितत्वात् । तत्तेदंत्वयोरेकस्योपलक्षणत्वमन्यस्य विशेषणमित्यत्र विनिगमकाभावात् । द्वितीयेन यथा। यथा प्रकृष्टप्रकाशश्चंद्र इत्यत्र । तत्र हि चंद्रस्वरूपमात्रस्य पृष्टत्वात् तस्यैव प्रतिवक्तव्यतया विशेषणांशे तात्पर्याभावात् । यत्तु सोऽयमित्यादौ नोक्तानुपपत्तिस्तच्छब्देन तद्देशकालसंबंधध्वंसवतः परामर्श इति । तदसत् । उक्तध्वंसपरतच्छब्दादिघटितस्थले उक्तानुपपत्तिविरहेऽपि तद्देशकालसंबंधविशिष्टपरामर्शकतद्घटितोक्तवाक्ये विशिष्टप्रमापकत्वायोगात् । तावन्मात्रेणैवास्मदिष्टसिद्धेः । यत्तु प्रकाशश्चंद्र इत्यादौ न स्वरूपमात्रविषयकः प्रश्नः प्रागेवावगतत्वात् किंतु विशिष्टवैशिष्ट्यविषयक इति । तन्मंदम् । चंद्रश्चंद्रत्वजातिमांश्चंद्रपदवाच्यश्चंद्रत्वाविशिष्टस्येतरव्यावर्तकप्रयोजकधर्मवांश्चेति विशिष्टविषयकनिश्चयवतोऽपि तादृशप्रश्नदर्शनेन त्वन्मतेऽप्यनिस्तारात् । अथ किंशब्दस्य जिज्ञासिते शक्तिः । जिज्ञासितत्वं चोद्देशवाचकपदसमभिव्याहृतकिंशब्दस्थले स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकरूपावच्छिन्नोद्देश्यतानिरूपिततादृशधर्मव्याप्यधर्मावच्छिन्नविधेयताशालिबोधविषयकेच्छाविषयत्वम् । एवं चोक्तविधज्ञानानां सिद्धत्वेऽपि प्रकृष्टप्रकाशश्चंद्र इति ज्ञानविशेषस्यासिद्धत्वान्न प्रश्नादिविरोध इति चेन्न । ममापि समानविभक्तिकपदांतरसमभिव्याहृतकिंशब्दस्य स्वसमभिव्याहृतपदार्थतावच्छेदकतद्व्याप्यधर्मतदुभयनिरूपिततदाश्रय ( तादृश ) विषयताशालिबोधविषयकेच्छाविषये शक्तत्वात् । उक्तविधबोधांतरस्य सिद्धत्वेऽपि प्रकृष्टप्रकाशत्वादिनिरूपितचंद्रनिष्ठविषयताशालिबोधस्य प्रागसिद्धत्वेन प्रश्नाद्यनुपपत्तेरभावात् । नचैतादृशविषयताशालिबोधो न भवदाचार्यसंमत इति वाच्यम् । सिद्धांतसंग्रहे तृतीयपरिच्छेदे अन्ये त्वित्यादिनैतन्मतस्य दीक्षितश्रीचरणैरेव दर्शितत्वादिति । परंतु अज्ञाते किंपदस्य शक्तिरुत्तरं चाज्ञाननिवर्तकबोधजनकशब्दः । एवं चाज्ञाननिवर्तकशक्तेः पूर्वज्ञानेष्वसत्त्वान्न प्रश्नानुपपत्तिः । प्रकृष्टप्रकाशश्चंद्र इति वाक्यजन्यबोधे तादृशशक्तेः सत्त्वान्न प्रतिवचनानुपपत्तिरिति वदंति । तदपि उक्तैकदेशिमतनिरासेनैव निरस्तम् । अत्रोक्तस्य तटस्थघटत्वनिरूपितत्वस्यापि घटत्वनिष्ठप्रकारतानिरूपितत्वरूपत्वात् । यदि प्रकारतायाः भासमानवैशिष्ट्यप्रतियोगित्वान्यस्याभावात्तद्रूपत्वे च घटे घटत्ववैशिष्ट्यभानावश्यकत्व

( टीका ) एवमेव ब्रह्मविदाप्नोति परमित्युक्त्या सामान्यतोऽवगतं ब्रह्म कैर्विशेषणैर्विशिष्टमिति विशेषणविवित्सया पृष्टे सत्यं ज्ञानमनंतमिति सत्यत्वादिविशिष्टमेव बोध्यते। जीवात्मा च प्रत्यक्षेण सामान्यतो ऽवगतो विशेषापेक्षया पृष्टः सिंहो देवदत्त इतिवत् तत्त्वमसीतिवाक्येन परमात्मसादृश्यविशिष्टः प्रतिपाद्यते । अभेदस्य प्रमाणबाधितत्वात । ननु वक्त्रायत्ते शब्दप्रयोगे कस्माद्गौणप्रयोगः । अस्त्यत्र प्रयोजनम् । इह हि महत्त्वादिगुणवंतं स्वातंत्र्येणात्मानं मत्वा स्तब्धं श्वेतकेतुं निमित्तीकृत्य स्वातंत्र्याभिमानिनो जीवजातस्याहंकारशांतये तत्त्वमसीत्युच्यते । तत्र यदि विज्ञानानंदघनस्त्वमसीति ब्रूयान्नास्याहंकारशांतिस्स्यात् । अभेदोक्तौ तु प्रतिपत्तुर्मीमांसा जायते । न तावदत्र मुख्यार्थः संभवति । प्रमाणविरोधात् । अतः स इव त्वमसीत्यस्यार्थः । नचायमपि संभवति ।

---

प्राप्तौ तज्जातीयबोधजनकत्वेऽप्यखंडार्थत्वहानिभयात्साक्षात्तटस्थघटत्वादिनिरूपितत्वमेव ज्ञानांतरीयघटादिविषयतायां स्वीक्रियते । तदापि पूर्वोक्तसर्वदोषाणां साम्यमेव । परंतु घटज्ञाने भासमानस्यैव घटत्वादेस्तन्निष्ठविषयतानिरूपकत्वांगीकारेऽपि त्वदभिमतसंसर्गागोचरप्रमाजनकत्वरूपाखंडार्थत्वहानेस्तत्र ज्ञानद्वयांगीकारोऽनुचितः । उक्तक्रमेणांगीकारेऽपि बाधकाभावाद्विनिगमकाभावेन सर्वत्र मानाभावेन च न कस्यापि सिद्धिरिति सुधीभिश्चिंत्यामिति न किंचिदेतत् । येषां वाक्यकुठारेणाखंडोऽखंडि मयाऽधुना । तान् श्रीमध्वजयव्यासराजान् वंदे निरंतरम् ॥

एवं नवीनोत्प्रेक्षितपक्षाणामतिनिर्दलतां मन्यमानाः सर्वज्ञकल्पाष्टीकाकाराः शिष्या एव तद्दूषणं स्वोक्तमार्गेण कुर्वंत्विति बुद्ध्या स्वयं कंठत उद्घाट्य तद्दूषणमकुर्वाणाः सत्यज्ञानादिवाक्यानां परोक्ताभिप्रायाभावे कोऽभिप्रायस्तेषामिति शिष्याकांक्षायां तदभिप्रायमुपवर्णयंति । एवमित्यादिना । सत्यत्वादिविशिष्टमिति । सत्यत्वादिकं च जगत्स्रष्टृत्वादिरूपमित्यानंदमयाधिकरणानुव्याख्यानसुधादौ व्यक्तमिति नातिव्याप्तिप्रसक्तिः । तत्त्वमसीत्यादिस्थल उपपादयति । जीवात्मा चेति सामान्यतोऽवगत इति । चेतनत्वादिरूपसामान्यधर्ममात्रेणेत्यर्थः । विशेषणापेक्षयेति । स्वस्मिन्प्रतीयमानगुणेषु मध्ये स्वाभाविकगुणविशेषवत्त्वादिनेत्यर्थः । मुख्यार्थ एव कुतो न स्वीक्रियत इत्यत आह । अभेदस्येति । प्रमाणेति । नाहमिति प्रत्यक्षादिबाधितत्वादित्यर्थः । वक्त्रायत्त इति । अपौरुषेयस्यापि वेदस्य पुरुषाभिप्रायनिवेशेनैव प्रवृत्तत्वादुक्तपर्यनुयोगसंगतिः । इह हीति । महत्त्वेति । लोकोत्कृष्टत्वादिगुणवंतमित्यर्थः । श्वेतकेतुर्हारुणेय आस तं ह पितोवाच, श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबंधुरिव भवतीति । स ह द्वादशवर्षमुपेत्य चतुर्विंशतिवर्षः सर्वान्वेदानधीत्य महामना अनूचानमानी स्तब्ध एयायेत्यादिना छंदोगोपनिषदि षष्ठप्रपाठकेऽभिहितमेतदिति भावः । विज्ञानघनेति । उपलक्षणमेतत् । आनंदनिर्दुःखादिस्वभावत्वादिकमपि ग्राह्यम् । नेति । तादृशस्वभावत्वोक्तौ तत्र परायत्तत्वाननुसंधाने विशेषत एवाहंकारः स्यादिति भावः । न चायमपीति । सामान्यतः सादृश्यघटितोऽर्थ इत्यर्थः । संभवतीति ।

(टीका)अप्रसिद्धप्रतिपत्तये खलु प्रसिद्धमुपमानमुपादीयते। यथा गौस्तथा गवय इत्यादौ दृष्टत्वात्। नचैवं प्रकृते उभयोरप्यप्रसिद्धत्वात्। अतो नास्योपमानमात्रे तात्पर्यमिति पश्यन् सूर्यसूर्यकयोरिवेश्वरस्य मम चास्ति सादृश्यविशेष इति प्रतिपद्यते। स च नियम्यनियामकभावोपेत इति पश्यन्नहंकारं जहाति। प्रतिबिंबे चात्मनि बिंबसमानधर्मानतिप्रसिद्धान्संभावयतीत्यतो लाघवेन बहोरर्थस्य प्रतिपत्तये तत्त्वमसीत्युच्यते। पारतंत्र्यमात्रोक्तौ च राजपुरुषादिवदेव प्रतिपत्तिस्स्यादिति। एवं सत्यज्ञानादिवाक्यानामखंडार्थतां निराकृत्य विशिष्टार्थता समर्थिता। हेत्वंतरेण तामुपपादयति॥

(मूलं)–अंगीक्रियमाणत्वाद्विशिष्टादेरनिर्वचनीयाभावाच्च सत्यत्वं च सिद्धम्।

(टीका)--आदिपदेन विशेषणभेदादेर्विशिष्टापेक्षितस्य ग्रहणम्। सत्यज्ञानादिवाक्यानि लक्षणया ब्रह्मस्वरूपमात्रपराणीति वदताऽवश्यं वाच्यार्थोऽङ्गीकार्यः। वाच्यार्थद्वारेण लक्षणाया दृष्टत्वात्।

तात्पर्यविषयीभूत इत्यर्थः। उभयोरपीति। ईश्वरस्य स्वस्य चेत्यर्थः। अप्रसिद्धत्वादिति। अप्रत्यक्षत्वादित्यर्थः। यद्यपि जीवात्मा प्रत्यक्षसिद्धस्तथापि निरूपणीयविज्ञानस्वभावत्वप्रयोजकधर्मादिनेदानीं न प्रत्यक्षविषय इत्यर्थः। अयं भावः। गवयपदवाच्यत्वादिप्रतिपत्त्यर्थं तत्प्रतिपत्तिप्रयोजकप्रहादिपर्याभूतगोसादृश्यस्य लिंगतया प्रतिपत्त्यर्थं गोसदृशो गवयपदवाच्य इत्युपदिशति। तमुक्तसादृश्यवत्तया पश्यन गवयपदवाच्यत्वादिना निश्चिनोति। तथा जीवस्वभावभूतविज्ञानघनत्वादिप्रतिपत्त्यर्थं परमात्मनिरूपितं जीवनिष्ठसादृश्यमुपदेष्टुमयुक्तम्। अनेयत्वादिना तत्सादृश्यस्याव्यावर्तकत्वात्। आकारविशेषेण सादृश्यस्य तु न प्रतिपत्तिसंभवः। परमात्मनः सर्वथा प्रत्यक्षत्वाभावाज्जीवस्य त्वाकारविशेषादिना प्रत्यक्षत्वाभावात् लिंगविधया सादृश्यबोधनमात्रे न तात्पर्यं किंतु प्रतिबिंबताघटकसादृश्यविशेषे तात्पर्यमवगच्छतीति। स चेति। सादृश्यविशेष इति। नियम्यनियामकभावोपेत इति। तद्विशेषितप्रतियोगिनिरूपित इत्यर्थः। तदधीनत्वे सति तत्सादृश्यरूपप्रतिबिंबत्वं पश्यन्निति यावत्। राजपुरुषादिवदेवेति। अनियतनियम्यनियामकभावस्य राजपुरुषादौ दृष्टत्वात्तथैव प्रकृतेऽपि कदाचिदेव जीवस्य परमात्मनियम्यत्वं कदाचिदनियम्यत्वं कदाचिददृष्टवशात्स्वस्यैव नियामकत्वमित्यादिप्रतिपत्तिः स्यादित्यर्थः। विशेषणेति। विशेषणं च तस्य विशेष्येण भेदश्चेत्यर्थः। आदिपदेन तत्संबंधादिग्रहणम्। लक्षणयेति। स्वघटकपदानां लक्षणयेत्यर्थः। यद्वा लक्षणयेति सामान्यशब्देन वाक्यलक्षणापदलक्षणापक्षयोः सामान्येन ग्रहणम्। वाच्यार्थोऽङ्गीकार्य इत्यादेरपि स्वघटकपदवाच्यार्थ इति वाक्यलक्षणापक्षेऽर्थः।

**[टीका]-नच गंगायां घोष इतिवदन्यदेव वाच्यम् । अन्यत्रानंतत्वादीनामसंभवात् । अतो ब्रह्मण्येव सत्यत्वादिविशेषणानि तदुपयुक्तं भेदादिकं विशिष्टाकारश्चांगीकर्तव्यः । तथाच मुख्यार्थस्य ब्रह्मण्यंगीक्रियमाणत्वात् अनुपपत्त्यभावेन किंस्वरूपमात्रलक्षणाश्रयणेन । अथोच्येतांगीक्रियमाणोऽपि ब्रह्मणि विशिष्टादिर्न सत्य इति न परमार्थब्रह्मतया प्रतिपादयितुं युक्त इत्येवानुपपत्तिरिति । मैवम् । अंगीक्रियमाणोऽपि विशिष्टाकारो न तावदसन्नेव। तथा सत्युपलक्षणत्वानुपपत्तेः। नच नीलं नभ इतिवदुपपत्तिः । तत्रापि प्रतिपत्तेरुपलक्षणत्वात् । न चानिर्वचनीयः । तत्र प्रमाणाभावात् । विशिष्टाकारादिरनिर्वाच्यो विशिष्टाकारादित्वात् । नीलं नभ इतिवदिति चेन्न । तत्रानिर्वचनीयाभावेनाप्रसिद्धविशेषणत्वात् । तदेवमसत्त्वानिर्वचनीयत्वाभावेन विशिष्टादेः सत्यत्वं च सिद्धमित्यनुपपत्त्यभावाद्विशिष्ट एव सत्यज्ञानादिवाक्यार्थः ॥**

**ननु विशिष्टं विशेषणविशेष्यतत्संबंधेभ्यो भिन्नमभिन्नं भिन्नाभिन्नं वा । नाद्यः । दंडपुरुषसंबंधमंतरेण दंडिनोऽन्यस्याप्रतीतेः । दंडिनमानयेत्युक्तेऽन्यस्यैवानयनप्रसंगाच । द्वितीये तु प्रत्येकं दंडिव्यवहारप्रसंगो विशेषाभावात् । तृतीये तु दोषद्वयम् । व्याघातश्चाधिकः । तथा भेदो भेदिभ्यां भिन्नश्चेदनवस्था । अभिन्नश्चेद्भेदिनोरन्यतरमात्रावशेषः । एवं विशेषणमपि विशेष्याद्भिन्नत्वादिना विकल्प्य दूषणीयम् । तदेवं तर्केण भिन्नत्वादिना दुर्घटत्वाद्विशिष्टादयोऽनिर्वचनीयाः सिद्धा इति कथं नानुपपत्तिरित्यत आह ॥**

अन्यदेवेति । ब्रह्मान्यदित्यर्थः । जहल्लक्षणापक्षे तथैव वाच्यत्वादिति भावः । अनंतत्वादीनामिति । सत्यत्वादेर्घटादौ कथंचिद्वक्तुं शक्यत्वात्त्रिविधपरिच्छेदराहित्यरूपानंतत्वस्यैव ग्रहणं कृतम् । किं स्वरूपमात्रलक्षणेति । विशिष्टशबलादिबोधकपदानां तत्तादात्म्यानुयोगिस्वरूपमात्रबोधकत्वं लक्षणयैव । नीलपदस्य घटबोधकत्वं यथेति भावः । विशिष्टशक्त्यैव तदेकदेशबोधकत्वं तु प्रागेव दूषितं । उपलक्षणत्वेति । स्वरूपाऽनंतर्गतत्वेपि स्वतादात्म्येन निमित्तेनेतरव्यावृत्तिसंपादकत्वेत्यर्थः । तत्रापीति । नीलप्रकारकप्रतिपत्तेरेव विषयतया व्यावर्तकत्वादित्यर्थः । न च प्रकृतेऽपि तथैवास्तु । तावताऽप्युपलक्षणीभूतप्रतीतिविषयेऽप्युपलक्षण इव वाक्यस्य तात्पर्यानभ्युपगमस्याव्याहतेरिति वाच्यम् । ब्रह्मातिरिक्तसर्वस्यासत्त्वपक्षे प्रतीतेरप्यसत्त्वेन तस्या अप्युपलक्षणत्वस्य वक्तुमशक्यत्वादिति भावः । एवं विशेषणमपीति । विशेष्यादित्यादि । विशेषणस्य विशेष्याद्भेदस्यैवापेक्षितत्वे विशेषणं भिन्नमिति व्यवहारे भेदस्य विशेषणं प्रति विशेषणत्वात्तत्रापि तद्भेद आवश्यकस्तत्राप्येवं तत्राप्येवमित्यनवस्था । अभेदे स्वविशेषणत्वस्य स्वस्मिन्नयोगः । भेदाभेदांगीकारे पूर्वोक्तानवस्थादेरपरिहारो व्याहतिश्चाधिकेति भावः ।

अनिर्वचनीयाः सिद्धा इति । भिन्नत्वेन चाभिन्नत्वेन च निर्वक्तुमशक्यत्वस्यैव तत्त्वादिति

[मूलं]—दृष्टस्य वस्तुनो बलवद्दृष्टिं विना नान्यद्बाधकमिति दुर्घटत्वे सुघटत्वे वा नानिर्वचनीयसिद्धिः।

[टीका]—इतिशब्दो हेतौ। दुर्घटत्वे सुघटत्वे वेति तर्केणेति शेषः। तर्केऽनादरं सूचयितुं सुघटत्वे वेत्युक्तम्। अनिर्वचनीयेति भावप्रधानो निर्देशः। विशिष्टादेरित्यनुवर्तते। इदमत्र वक्तव्यम्। भिन्नत्वादिना दुर्घटत्वेन विशिष्टादिकमनिर्वचनीयमभिलषता तत्प्रतीतिरंगीक्रियते नवा। नेति वदन्ननुभवापलापित्वेनोपेक्षणीयः। आद्येन विशिष्टादेर्दुर्घटत्वेऽप्यनिर्वचनीयत्वासिद्धिः। दृष्टविरुद्धार्थे तर्कस्य विपर्ययापर्यवसानेनाभासस्यानादरणीयत्वात्। नच दृष्टमपि विशिष्टादिकं तर्केण बाधिष्यत इति वाच्यम्। दृष्टार्थं प्रति तर्कस्य बाधकत्वासामर्थ्यात्। नच वक्तव्यं शुक्तिरजतादिकं देहात्मादिकं वा दृष्टमपि तर्केण बाध्यं दृष्टमिति। तत्रापि बलवद्भिरधिष्ठानस्यैव बाधांगीकारादिति।

भावः। तत्रेति। शुक्तिरूप्ये देहात्मैक्ये चेत्यर्थो न संगच्छते। देहात्मैक्याविषयकप्रत्यक्षप्रतीतेः सिद्धान्तेऽनंगीकारेण तद्बाधप्रसक्तेरभावात्। शंकामात्रं परशील्या कृतम्। किंतु शुक्तिरूप्य इत्येवार्थः। देहात्मैक्यारोपस्तु नास्त्येवेति बहिरेवानुसंधेयम्। अभ्युपगमवादेन चायं प्रथः। योगप्रभावादिना लब्धदेहात्मभेदापरोक्षस्यैव तद्बाधकत्वम्। शास्त्रादिना भेदज्ञानेऽपि शरीरहिताहितादौ प्रवृत्त्यादिदर्शनादिदानीमपरोक्षतो देहात्मैक्यदर्शनस्य तत्कालेऽनुत्पत्तिरूपबाधो नास्त्येवाप्रामाण्यज्ञानास्कंदितत्वरूपबाधस्तु प्रकृतेऽकिंचित्कर इति व्याख्यानमसत्। प्रकृते तर्कस्य प्रत्यक्षबाधकत्वस्याप्रामाण्यग्रहसंपादकत्वरूपस्यैव पराभिप्रेततया शंकितत्वात्। नहि तर्कस्य प्रत्यक्षोच्छेदकत्वं पराभिमतं तर्कसहस्रेणापि प्रत्यक्षोत्पत्त्यविघटनात्। नचेदानीं देहात्मैक्याप्रामाण्यग्रहहेतुभेदप्रत्यक्षदर्शनमस्ति। देहात्मैक्यापरोक्षभ्रमस्य मिथ्याज्ञानजनितवासनारूपदोषविशेषाधीनभ्रमत्वेन बीजाभावेन चंद्रप्रादेशपरिमितत्वादिप्रत्यक्षस्येवापटुत्वेनोत्पत्त्यभावेन चेदानीं तदनुच्छेदेन भेदप्रत्यक्षस्योत्पत्त्यनर्हत्वादिति ज्ञेयम्। यदि च पूर्वपुण्यपरिपाकबलेन सत्यपि देहात्मैक्यापरोक्षभ्रमे तत्प्रतिबध्यभेदास्फुटतया देहात्मापरोक्षधीर्भवति। तदनंतरमेव तद्दशायामपटुतयोत्पद्यमाने देहात्मैक्यप्रत्यक्षे शास्त्रेणाप्रामाण्यावगाही दृढतरनिश्चयो जायते। नो चेच्छास्त्रदर्शनेनाप्यप्रामाण्यधीर्न जायत एवेत्युच्यते तदाऽभ्युपगमवादेनोक्तव्याख्याऽपि युक्तैवेति ज्ञेयम्॥ छ॥

अत्र वदंति। देहात्मैक्यारोपो नास्तीत्येतदयुक्तम्। अहं ब्राह्मणोऽहं काण इति व्यवहारबलेन तादृशानुभवसिद्धेः। नच त्वन्मतेऽहमर्थस्यानात्मत्वेन तत्तादात्म्याध्याससिद्धावपि न भवदभिमतदेहात्मैक्याध्याससिद्धिरिति वाच्यम्। अज्ञानोपहितचिति कर्तृत्वादिविशिष्टांतःकरणाध्यासवत् तादृशांतःकरणोपहितचिति काणत्वब्राह्मणत्वादिविशिष्टदेहैक्याध्यासेनाहं काण इत्यादिसामानाधिकरण्यव्यवहारात् अहमर्थस्य शुद्धात्मत्वाभावेऽप्यंतःकरणतादात्म्योपहितत्वेन

ध्यशत्वात् देहात्मैक्याध्यासासिद्धिसंभवात् । नचैवं अन्यतरसमर्थस्य साहितात्मस्वरूपत्वे तस्यात्मस्वरूपत्वाभावव्यवहारस्य अन्याय्यत्वाज्ज्ञानानुपपत्तिः । शुद्धात्मस्वरूपत्वाभावाभिप्रायकत्वेन तादृशव्यवहारोपपत्तेः। जहल्लक्षणापक्षे चिदवच्छिन्नांतःकरणस्यैवाहंपदार्थत्वेन तदभिप्रायेण वा तादृशव्यवहार संभवात् । "साभासा ज्ञानवाची यदि भवति पुनर्ब्रह्मशब्दस्तथाऽहंशब्दोऽहंकारवाची भवति च जहती लक्षणा तत्र पक्षे" इत्युक्तेः । ननु तथापि शुद्धात्मैक्याध्यासो न सिध्यतीति चेन्न। उक्तोपहितात्मन्यैवयाध्यासादुपहिते शुद्धस्यानुस्यूतत्वेन भानादुपहितनिष्ठशुद्धतादात्म्यस्य देहादावारोपांगीकारात् । नच ब्राह्मणोऽहं काणोऽहमित्यभेदावगाहिप्रत्ययो न घटते । ब्राह्मणस्याक्षि काणं काणं चक्षुर्न ब्राह्मण इत्यादिप्रतीत्या ब्राह्मणसंबंधित्वेन भासमानचक्षुष्येव काणाभेदप्रतीतेर्ब्राह्मणे काणभेदस्यैव प्रतीतेः । एवं नाहं देहो ममायं देह इत्येव सर्वेषामबाधितप्रतीतेः सत्त्वाच्च कथं देहात्मैक्यारोपसंभवस्तस्यास्तत्र विरोधित्वात । तथाच ब्राह्मणोऽहं काणोऽहं गौरोऽहं इत्यादिव्यवहाराः भ्रमामूलिका एव कर्दमलिप्तवस्त्रे कृष्णः पट इति व्यवहारवदौपचारिका एव वाच्या इति वाच्यम् । यतो ब्राह्मणस्याक्षि काणमित्यत्र ब्राह्मणसंबंधित्वेन भासमानमक्ष्येव न काणत्वविशिष्टं ब्राह्मणस्य काणमित्येतावन्मात्रावगाहिप्रत्ययाभावात्। इत्थं चाक्षित्वावच्छिन्न भेदग्रहस्याक्षित्वावच्छिन्ने ब्राह्मणाभेदग्रहं प्रति प्रतिबंधकत्वेऽपि अहं काण इत्याकाराध्यासे न किंचिद्बाधकम् । काणं चक्षुर्न ब्राह्मण इति प्रतीत्यापि काणाभिन्नचक्षुष्ट्वावच्छिन्ने ब्राह्मणभेदो विषयीक्रियते न ब्राह्मणत्वावच्छिन्ने काणभेदः ब्राह्मणो न काण इत्येतावन्मात्राकारप्रत्ययाभावात् । तथाच तस्याः प्रतिबंधकत्वाभावाद्ब्राह्मणः काणोऽहं काण इत्यध्यासे बाधकाभावः । एवं नाहं देहः किंतु देहवानहं मम देह इत्यादिप्रतीतिभिरहंत्वावच्छिन्ने देहत्वावच्छिन्नभेदस्यैव विषयीकरणात् गौरत्वब्राह्मणत्वादिरूपेण देहतादात्म्यावगाहिनि ब्राह्मणोऽहं गौरोऽहमित्यध्यासे न बाधकत्वम् । इत्थं च व्यवहारस्यौपचारिकत्वकल्पनमप्ययुक्तमेव । नच ब्राह्मणोऽहमितिप्रतीतिः प्रमैव शरीरविशेषविशिष्टात्मन्येव ब्राह्मणत्वमनुष्यत्वादिजात्यंगीकारादिति वाच्यम् । मनुष्यत्वादेर्देहविशिष्टात्मवृत्तित्वेऽतींद्रियत्वापत्तेः । त्वन्मते आत्मनः अणुत्वेनातींद्रियत्वेन देहादिविशिष्टरूपेणापि तस्यातींद्रियत्वात् । अन्यथा घटसंयोगविशिष्टपरमाणोः प्रत्यक्षापत्तेः । नच विजातीयचक्षुस्संयोगस्यैव प्रत्यक्षहेतुत्वाभ्युपगमात्परमाणुचक्षुस्संयोगस्य न तथात्वं किंत्वात्मचक्षुस्संयोगस्यैवेति तत्प्रत्यक्षोपपत्तिरिति वाच्यम्। अनंतचक्षुस्संयोगेषु वैजात्यकल्पने मानाभावात । नचैवमणावप्यात्मनि जातिः साक्षिगम्या स्यात्परकीयात्मनि तु लिंगादिगम्या स्यादिति वाच्यम्। गोत्वादेरपि तथात्वापत्तेः । नच शरीरात्मनोर्मिलित्वैवैका ब्राह्मणत्वादिजातिरस्त्विति वाच्यम् तस्याः व्यासज्यवृत्तित्वे वायुवनस्पतिद्वित्ववदप्रत्यक्षापत्तिः । व्यासज्यवृत्तिजात्यनंगीकाराच्च । अव्यासज्यवृत्तित्वेऽपि परमाणौ पृथिवीत्वस्यैवात्मनि तत्प्रत्यक्षानुपपत्तिरेव । यत्तु अंतःकरणवृत्तिकर्तृत्वाद्यतिरिक्तस्यैव कर्तृत्वादेरात्मन्यध्यस्तत्वमिति पक्षे कर्तृत्वद्वयस्येव शरीरवृत्तिब्राम्हणत्वजात्यतिरिक्तस्यैव ब्राम्हणत्वजातेरात्मन्यंगीकारसंभवेन तत्प्रत्यक्षार्थं चक्षुस्संयोगे वैजात्यस्य वा साक्षिणैव वा तत्प्रत्यक्षस्याभ्युपगम आवश्यक इति तन्न । मन्मते सद्रूपस्यात्मनश्चक्षुर्गम्यत्वांगीकारेण तच्चक्षुस्संयोगे वैजात्यस्य क्लृप्तत्वात् । वक्ष्यमाणरीत्या देहात्मनोः संबंधांतरस्य निरूपयितुमशक्यत्वेन तादात्म्याध्यासस्यावश्यकत्वे देहवृत्तिमनुष्यत्वब्राह्मणत्वादिधर्माणामध्यासेनैव सर्वनिर्वाहे आत्मनि स्वाभाविकब्राह्मणत्वादेरनंगीकाराद्देह एव तदंगीकारात् । नच जपातादि

त्म्याभानं विनाऽपि तन्निष्ठलौहित्यस्य स्फटिकशाणाविव शरीरतादात्म्याध्यासं विनाऽपि तदीय-ब्राह्मणत्वादिधर्माध्यासस्यात्मन्यस्तीति शंक्यम् । तादात्म्याध्यासं विना शरीरात्मनोः संबंधांतरानिरूपणादित्युक्तत्वात्। प्रतिबिंबाध्यासातिरिक्तस्थले धर्माध्यासस्य तद्धर्माश्रयधर्मितादात्म्याध्यास नियतत्वाच्च। लौहित्यस्य तु प्रतिबिंबस्यैव अध्यास इति न तत्र धर्मितादात्म्याध्यासः। कर्तृत्वद्व्यांगीकारमतवादे तु तत्र वक्ष्यते । नच ब्राह्मणत्वादेर्देहवृत्तित्वे देहो ब्राह्मण इति प्रतीतिः स्यादिति वाच्यमानत्वेन देह इत्याकारकेणाहंत्वावच्छेदेन देहभेदभ्रमेण सहितस्यैवाहंत्वस्य ब्राह्मणत्वावच्छिन्नग्रहस्यैव तद्बुद्धिप्रतिबंधकत्वेन कल्पनया तत्सामग्र्यादिना वासनारूपदोषस्यापि तद्बुद्धिं प्रति प्रतिबंधकत्वाभ्युपगमात्। नच देहो ब्राह्मण इति धिया देहत्वावच्छिन्नधर्मिकस्य कथं देहभेदावच्छेदकत्वेन गृहीताहंत्वावच्छिन्नस्य ब्राह्मणत्वावच्छिन्नग्रहणं प्रतिबंध इति वाच्यम् । सर्वस्यापि भ्रमस्य आकारतानियमेन देहो ब्राह्मण इति ग्रहस्य ब्राह्मणो देह इत्याकारतानियमेन व्यापक सामग्रीविघटनद्वारोक्तग्रहानुत्पत्तिनिर्वाहकत्वात् । नच विनिगमकाभावाद्देहो ब्राह्मण इति धीसामग्र्यैवाहं ब्राह्मण इति धीः प्रतिबध्यतामिति वाच्यम् । उक्तवासनायाः दोषविधया सामग्रीकोटिप्रविष्टत्वात् दोषघटितसामग्र्याः प्राबल्यात् । नच देहाभेदावच्छेदकत्वेन गृह्यमाणाहंत्वप्रकारकपरोक्षविपर्ययकग्रहस्य तत्सामग्र्याश्चाभावेन प्रतिबंधकाभावात्परदेहो ब्राह्मण इति प्रत्ययापत्तिरिति वाच्यम् । इष्टापत्तेः । चक्षुषा दृश्यमानोऽयमवयवी ब्राह्मण इतिवदयं देहो ब्राह्मण इति प्रत्ययोत्पत्तौ बाधकाभावात् । यदप्युक्तं गौरोऽहं ब्राह्मणोऽहमित्यादिव्यवहारो गौण इति न तद्बलाद्गौरत्वाद्यवच्छिन्नस्य तादात्म्याध्याससिद्धिरिति तदसत् । तथात्वे इदं रजतमिति व्यवहारमूलभूतरजताध्यासस्याप्युक्तरीत्या प्रत्याख्यानसंभवेन अन्यथाख्यातेरेव विलयप्रसंगात् । मम देहो गौर इति संबंधित्वेन व्यवहारान्यथानुपपत्त्योक्तस्थले औपचारिकत्वांगीकारेऽपि सर्वत्र तथाभावाभावेन नान्यथाख्यातिविलय इति चेत् अहं गौर इत्यादिव्यवहारान्यथानुपपत्त्या मम देहो गौर इति व्यवहारस्यैव घटस्य स्वरूपमितिवद्गौणत्वं कुतो न स्यात्। तथापि भवदभिमतार्थस्यैवांगीकारे किं नियामकमिति चेन्न। देहादिभिन्नत्वेनात्मप्रतीतेरिदानीं सत्त्वे अस्तीत्येवोपलब्धव्य इत्यादिरूपायाः देहभिन्नात्मास्तित्वप्रतिपादिकाया अनुवादकतापत्तेः । देहात्मतादात्म्यनिषेधकश्रुतिस्मृत्यादीनामप्रसक्तप्रतिषेधकत्वापत्तेश्च । नच कुसमयप्राप्तिनिषेधकत्वं तद्वाक्यानामिति वाच्यम् । भेदस्य प्रत्यक्षसिद्धत्वे कुसमयेनापि तदभेदग्रहोत्पत्त्ययोगात् । नच देहात्मैक्यस्य प्रात्यक्षिकाध्यासगोचरत्वे आगमादिनापि तद्बाधो न स्यात्प्रत्यक्षस्य प्राबल्यादिति वाच्यम् । चंद्रप्रादेशकत्वादिप्रत्यक्षबाधकताया आगमानुमानयोरुपपादितत्वेनागमानुमानयोरेव प्रत्यक्षापेक्षया बलवत्त्वात् । अत एवानभिसंहितप्रबलानुमानागमादिश्चार्वाकस्य देह एवात्मेति धीः । भेदस्य प्रत्यक्षसिद्धत्वाभावे प्रत्यक्षैक प्रामाण्यवादिनस्तस्य तादृशबुद्धेर्वानदयप्रसंगः । नच जातमात्रस्य पश्वादेः स्तन्यपानादिप्रवृत्तेरिष्टसाधनताज्ञानस्य पूर्वदेहज्ञानं तदोरेणायोगादिदानीमविद्यमानपूर्वदेहसंबंधं स्वस्मिन् जानतः पूर्वकालसंबद्धतद्देहभेदग्रहोऽवर्जनीय इति भेदग्रहस्यैव सिद्धौ गौरोऽहमित्यादिव्यवहाराणामौपचारिकत्वं कल्प्यत इति चेन्न । इदानींतनस्तन्यपाने इष्टसाधनत्वानुमितिनिर्वाहायेष्टसाधनत्वस्तन्यपानत्वयोर्व्याप्तिग्रहस्यापेक्षितत्वेऽपि तस्य जन्मांतरानुभवाधीनस्मरणरूपस्यैव संभवेन तत्र दृष्टांतसिध्यर्थं देहांतरस्मरणानपेक्षणात् ।

व्याप्तिप्रत्यक्षानुभावार्थमेव तदपेक्षणात्। ननु योऽहं बाल्ये पितरमन्वभूवं सोऽहमिदानीं नप्तृननु-
भवामि योऽहं पूर्वमल्पशरीरः कृष्णशरीरश्चाभवं सोऽहमिदानीं गौरशरीरः स्थूलशरीरश्चाभवामीत्या
दिप्रतीतिभिः पूर्वापरकालवृत्तिबालस्थविरशरीराभिन्नस्य आत्मनो भेदस्य गृह्यमाणत्वात् देहात्मै-
क्यभ्रमो न युज्यत एवेति चेन्न। अहं तच्छरीरभिन्नः तदनधिकरणतत्कालवृत्तित्वादित्यनुमानेनैव
तादृशभेदग्रहस्य जायमानत्वेन तस्य प्रात्यक्षिके शरीराभेदभ्रमे विरोधित्वाभावात् । अन्यथा
पीतभेदव्याप्यशंखत्ववानिति ज्ञानवतोऽपि शंखः पीत इति प्रात्यक्षिकभ्रमो न स्यात् । ननु
प्रत्यक्षे धर्मिणि तत्प्रतियोगिकभेदव्याप्यत्वेन गृह्यमाणधर्मसाक्षात्कारे तस्मिन् तत्प्रतियोगिक-
भेदसाक्षात्कार आवश्यकः। अन्यथा दहनपाटनाद्ययोग्यत्वादिलिंगसाक्षात्कारेऽपि शुक्तौ
रजतभेदसाक्षात्कारानुत्पत्त्याविदं रजतमिति प्रात्यक्षिकभ्रमानिवृत्तिरेव स्यात् । शंखः पीतः
नीला बलाकेत्यादिभ्रमस्थलेषु पित्तरात्रिकालादिरूपदोषाणां सत्त्वात् शंखे पीतभेदसाक्षा-
त्कारसामग्री बकपंक्तौ नीलभेदसाक्षात्कारसामग्री च विघट्यत इति चेन्न । इहापि
पूर्वं पूर्वं विभ्रमजनितवासनारूपदोषस्य प्राबल्यात् । एवं ब्राह्मणो यजेतेत्यादिश्रुतिरपि शरीरात्मैक्या
ध्यासं विना न घटते ब्राह्मणपदस्य ब्राह्मणत्वजात्याक्रान्तशरीरतादात्म्यवदात्मपरत्वस्यावश्यक-
त्वात् । अन्यथा ब्राह्मणत्वजातिविशिष्टशरीरस्याचेतनत्वेन स्वर्गादिफलभोगितया तदर्थं
तस्याप्रवर्तनीयतया च श्रुतेस्तच्छरीरसाधकत्वस्य प्रवृत्तावप्रामाण्यप्रसंगात् । नच श्रौत-
ब्राह्मणपदप्रयोगान्यथानुपपत्त्या ब्राह्मणत्वजातिरेवात्मनि स्वीक्रियतामिति वाच्यम् । पूर्वो-
क्तातींद्रियत्वापत्तिरूपबाधकबलेन तस्य शरीरवृत्तित्वस्यैव वाच्यत्वात् । नहि ब्राह्मणपदम्
ब्राह्मणत्वजात्याक्रान्तशरीरसंबंध्यात्मपरमस्त्विति चेन्न । अनतिप्रसक्तसंबंधानिरूपणात् ।
तथाहि न तावत्संयोगः । आत्मनो विभुत्वेन सर्वदेहसाधारण्याच्छूद्रस्यापि ब्राह्मण्यं ब्राह्म-
णस्यापि शूद्रत्वं स्यात् । नच स्वस्वामिसंबंधस्तस्य पशुभृत्यादिसाधारणत्वेन ब्राह्मणस्वा-
मिनि शूद्रे ब्राह्मणत्वस्य शूद्रस्वामिब्राह्मणे शूद्रत्वस्य चापत्तेः । नच साक्षात्स्वस्वामिभावः
संबंधः । पशुभृत्यादिव्यावृत्तस्य तस्य निर्वक्तुमशक्यत्वात् । नापि स्वोत्पत्त्यनुकूलकर्माश्र-
यत्वम् । भृत्यादिशरीरस्यापि स्वामिकर्मनिर्मितत्वेन पूर्वोक्तदोषानिस्तारात् । नच स्वकर्मणा
भृत्यदेहादौ स्वत्वमेव जायते न तच्छरीरमपीति वाच्यम् । स्वदेहेऽप्येवमेव वक्तुं शक्य-
त्वेनोक्तसंबंधासंभवापत्तेः । नापि स्वनिष्ठक्रियां प्रति साक्षात्कारणीभूतेच्छाप्रयत्नादिमत्त्वम् ।
आमवातजडीकृतशरीरस्य ब्राह्मणस्याब्राह्मणत्वापत्तेः । नापि स्वाश्रितेंद्रियसंबंधवत्त्वम् ।
शूद्रशरीरस्थात्मनोऽपि विभुत्वेन ब्राह्मणशरीरस्थेंद्रियसंयोगित्वादविभुत्वेऽपि परंपरासंबंधस्य
कस्यचित्संभवाच्च । नापि स्वाश्रितेंद्रियजन्यज्ञानाश्रयत्वं स्वरूपज्ञानविवक्षायामसंभवा-
त्तस्याजन्यत्वादंतःकरणवृत्तिविवक्षायां चात्मनस्तादृशज्ञानेन सह संबंधस्याप्यध्यासातिरिक्तस्य
निरूपयितुमशक्यत्वे तदपेक्षया अध्यस्यमानशरीरतादात्म्यस्यैव संबंधत्वौचित्यात् । नच
ब्राह्मणपदस्य देहपरस्य तत्तादात्म्यवदात्मपरत्वे ब्राह्मणादिपदघटितविधिवाक्ये लक्षणाप्रसंगः ।
सुषुप्तौ देहतादात्म्याध्यासाभावेन सुप्तब्राह्मणस्य ब्राह्मणो न हंतव्य इति निषेधाविषयत्वेन
तद्धनने दोषाभावप्रसंगः । कादाचित्कतादृशाध्यासविषयस्यैव श्रौतविधिनिषेधवाक्यस्थ-
ब्राह्मणपदार्थत्वे महापातकेन नष्टब्राह्मणस्याप्यधिकारप्रसंगः । तथा पुत्रमित्रादिषु सकलेषु
विकलेषु अहमेव सकलो विकल इति तादात्म्याध्यासस्वीकारेण शूद्रमित्रब्राह्मणस्य

वेदानधिकारो ब्राह्मणमिवशूद्रस्य वेदाधिकारो वोभयोः कर्मद्वयेऽध्ययनाधिकारो वा स्यादिति वाच्यम् । गोभिः श्रीणीत मत्सरमिति विध्यर्थप्रकाशवाक्यशेषरूपमंत्रबलात् पयसा श्रीणातीति विधिवाक्यस्थसामान्यवाचिपयःपदस्य गोपयसि लक्षणायास्तथा अग्नेर्वा व ऋग्वेदो वायोर्वा यजुर्वेदो आदित्यात्सामवेद इत्यादिरूपार्थवादभूतोपक्रमस्थवाक्यानुसारेणोच्चैः ऋचा क्रियत इति विधिवाक्यस्थमंत्रवाचिऋक्पदस्य ऋग्वेदे लक्षणायाश्चांगीकृतत्वेन सति साधके विधिवाक्यस्थपदलक्षणाया अदोषत्वात् । वस्तुतो ब्राह्मणत्वादिविशिष्टे ब्राह्मणादिपदस्य शक्तिः । ब्राह्मणत्वादिवैशिष्ट्यं च देह इवात्मन्यपि व्यावहारिकत्वाच्छक्यशरीरप्रविष्टमाजानिकव्यवहारस्य शक्तिग्राहकस्योभयत्र तुल्यत्वात् । उभयोरेकत्वेन व्यवहारकाले निश्चयाच्च । तथाच क लक्षणादोषप्रसक्तिः । गोभिर्गोक्षीरैर्मत्सरं मदकारिणं सोमं श्रीणीत श्रपयेदिति श्रुत्यथा बोध्यः । महापातकस्यैव कर्माधिकारविरोधितया तादृशपुरुषे ब्राह्मण्याभावस्यैवाभावेन द्वितीयदोषाभावात् । अत एव तत्र पतितो ब्राह्मण इति ब्राह्मणत्वव्यवहारः । यद्वाऽस्तु महापातकेन ब्राह्मण्यनाशस्तत एवानधिकारः । ब्राह्मण्याभावस्य तत्काले विद्यमानस्य निषेधशास्त्राविषयत्वप्रयोजकता तद्धननसुप्तहननादेरपि शिष्टविगीतत्वादिति ध्येयम् । कदाचिदब्राह्मणतादात्म्याध्यासविषयस्यैव ब्राह्मणो न हंतव्य इत्यादेः सुप्तजीवन्मुक्तब्राह्मणविषयकत्वादिसंभवेनोक्ततृतीयबाधकाभावात् । नचोक्तदोषः । स्वीयत्वबुद्ध्यप्रयुक्तत्वयोग्याध्यासविषयब्राह्मणतादात्म्योदेव कादाचित्कस्योक्तविधिनिषेधशास्त्रविषयत्वप्रयोजकत्वांगीकारात् । अध्यस्यमानस्वदेहतादात्म्यस्यैव तथात्वात् । पुत्रमित्रादौ स्वकीयत्वबुद्ध्या तन्निष्ठसकलत्वविकलत्वादेः स्वस्मिन्नध्यासकाले प्रतिबिंबान्यधर्माध्यासस्य धर्मितादात्म्याध्यासनियमानुसारेण पुत्रमित्रादितादात्म्याध्यासांगीकारेण वैषम्यात् । जीवन्मुक्तेऽपि पूर्णानंदो नास्ति न भातीत्यादिरूपावरणशक्तिप्रयुक्तदेहादितादात्म्याध्यासाभावेऽपि विक्षेपशक्तिबलात् प्रारब्धकर्माधीनब्राह्मणादिदेहतादात्म्याध्यासो वर्तत एव । न शूद्रयाजिनः श्राद्धे भोजनीया इत्यादौ कदाचित्कस्यापि शूद्रयाजित्वादिधर्मस्य श्राद्धभोजननिषेधप्रयोजकताया दृष्टत्वात् । प्रकृते तथांगीकारे बाधकाभावः । ब्राह्मणो न हंतव्य इतिवाक्यस्थब्राह्मणपदस्य ब्राह्मणदेहतादात्म्यविशिष्टात्मपरत्वे सुप्तस्य तादृशविशिष्टत्वाभावान्निषेधशास्त्रविषयत्वानुपपत्त्या तादृशतादात्म्योपलक्षितपरमित्याशंक्येनेदं समाधानमभिहितम् । वस्तुतो ब्राह्मणपदं ब्राह्मणदेहपरमेव । तद्धननं च तस्य प्राणवियोगानुकूलव्यापारः । स एव ब्राह्मणो न हंतव्य इति वाक्येन निषिध्यते । सुप्तजीवन्मुक्तशरीरप्राणवियोगानुकूलव्यापारस्याप्युक्तरूपेण निषेधगोचरत्वम् । अथवाऽस्तु ब्राह्मणपदं तादृशतादात्म्यविशिष्टात्मपरं । तथाऽपि न क्षतिः । सुषुप्तिकालीनतद्धननस्यापि तदीयप्रबुद्धतादशाकालीनप्राणवियोगानुकूलत्वेनोक्तहननरूपत्वात् । एवं देहेंद्रियादितादात्म्याध्यासाभावे आत्मनस्तैः सह संबंधांतराभावात् प्रमातृत्वाद्यनुपपत्त्या तदर्थमपि तस्यांगीकार्यता । नच सुषुप्तौ घटादिप्रमोत्पत्तिकाले च तदभावात् सुषुप्तावज्ञानज्ञातृत्वानुपपत्तिः घटादिप्रमातृत्वानुपपत्तिश्च जागर इति वाच्यम् । कादाचित्काध्यासस्यैव प्रयोजकताया उक्तत्वात् । अनाद्यविद्याध्यासस्य सुषुप्तावपि सत्त्वेन तन्मूलकाविद्यावृत्तिरूपज्ञातृत्वे देहेंद्रियाध्यासानपेक्षणाच्च । घटादिप्रमाकालेऽपि देहेंद्रियादितादात्म्याध्यासांगीकारे बाधकाभावेन जाग्रत्कालीनदोषस्याप्यभावाच्च । नच ज्ञानद्वययौगपद्यानुपपत्तिः । जीवनयोनि-

यत्नतुल्यतया बाधकाभावात् । एतत्सर्वमभिप्रेत्यात्मानात्मनोरितरेतराध्यासो भाष्यादावात्मानात्मनोरितरेतराध्यासं पुरस्कृत्येत्यादिना निरूपितस्तस्माद्देहात्मैक्याध्यासो नेत्ययुक्तमिति । अत्रोच्यते । अहं देहो नेति प्रमा तावत्परस्यापि सम्मता, एवं चक्षुर्न कर्णौ नेत्यादिकाऽपि । एवं सत्यपि स्वदेहे ममायं देहः ममेमौ कर्णौ ममेदं चक्षुरित्यादिधीः स्वदेहादौ जायते । पुत्रादिदेहेषु च नायं मम देहः किंतु पुत्रमित्रादिदेह इत्येव धीर्जायते । तत्र षष्ठ्यर्थतया भासमानः कश्चनानतिप्रसक्तः संबंधो वर्तते न वा । नेति पक्षेऽयं देहो मम, न पुत्रस्येति प्रतीतिव्यवहारयोरनुपपत्तिरेव । द्वितीये स एव संबंधो ब्राह्मणत्वादिजातिविशिष्टगौरत्वादिवर्णविशिष्टदेहेन सहात्मनः प्रमातृत्वादिनियामकः श्रुत्यादिस्थब्राह्मणादिपदप्रवृत्तिनियामको गौरोऽहं ब्राह्मणोऽहं मनुष्योऽहं काणोऽहमित्यादिप्रतीतिव्यवहारयोर्नियामको भवतु । ब्राह्मणपदस्य ब्राह्मणत्वजातिमद्वाचकत्वे स्वाश्रयदेहनिरूपिततादृशसंबंधविशिष्टात्मन्यपि प्रचुरानादिव्यवहारान्निरूढलक्षणाऽस्तु । पील्वादिपदानां पील्वादिवृक्षवृत्तिजात्यवच्छिन्नवाचिनामपि तज्जन्यत्वनिमित्तेन फलेऽपि प्रचुरानादिव्यवहारोपलंभेन यथा शक्तिः परं न कल्प्यते । उक्तरीत्यैव निर्वाहे गुरुरूपावच्छिन्ने शक्त्यंतरांगीकारे मानाभावात् । तथाचोक्तरीत्यैव सर्वनिर्वाहे किमध्यासांगीकारव्यसनेन । नानाविधाध्यासानां तत्कारणीभूतदोषाणां तद्विषयीभूतप्रातिभासिकदेहात्मतादात्म्यादेश्च कल्पने गौरवात् । अस्मदुक्तपरंपरासंबंधस्य त्वदुक्ताध्यासकल्पेऽप्यवर्जनीयत्वेन त्वयाऽवश्यमंगीकार्यत्वेन तत्प्रतीतेरवश्यमभ्युपेयत्वात् । ब्राह्मणोऽहं गौरोऽहमितिव्यवहारवत् अहं ब्राह्मणदेहवान् गौरदेहवान् कृशदेहवानित्यादिव्यवहाराणां तादृशप्रतीतिं विनाऽयोगात् । नच देहात्मनोरुक्तानतिप्रसक्तव्यवहारनियामकसंबंधस्तादात्म्यमेवाध्यासिकमन्यस्यानिरूपणात् इति वाच्यम् । देहत्वावच्छिन्नेन नाहं देह इति भेदस्यैवात्यंतिकस्य प्रमितत्वांगीकारेण तदवच्छिन्ने देहतादात्म्यभानायोगात् । नञुल्लेखिप्रतीतेरात्यंतिकभेदस्यैव विषयत्वेन वाच्यत्वात् । अन्यथा नीलघटयोस्तादात्म्येन भेदाभेदयोः सत्त्वान्न नीलो घट इति व्यवहारापत्तेः । त्वयाऽपीत्थमेव स्वीकृतत्वाच्च । नच रूपं न घट इति प्रतीत्यनुपपत्तिरिष्टापत्तेः । लौकिकैस्तथा व्यवहृतत्वाभावेन प्रत्युत रूपाद्यात्मक एव घटः प्रतीयते न पृथगित्येव प्रतीतत्वेन तादृशलौकिकप्रत्यक्षाभावात् । अन्यथा रूपघटयोर्घटपटयोरिव तादात्म्याभावस्यैव प्रसंगात् । पाकरक्ते घटे इदानीमयं न नील इति व्यवहारस्तु एतत्कालविशिष्टे घटे नीलभेदमवगाहते । विशिष्टस्य शुद्धघटेन सह भिन्नाभिन्नत्वात्तस्य नीलेन सहात्यंतभिन्नत्वे बाधकाभावात् । अन्यदाधिकमवच्छेदकत्वखंडनरीत्याऽनुसंधेयम् । नच देहत्वावच्छिन्ने भेदग्रहसत्त्वेऽपि तदुपलक्षिततादात्म्यस्यैव मम देह इत्यादौ संबंधतया भानमस्त्विति वाच्यम् । देहत्वोपलक्षिततादात्म्यस्य सत्त्वे न देहत्वविशिष्टोऽहं किंतु देहोऽहमित्यादिप्रतीतिव्यवहारापत्तेस्तदंगीकारे तु देहोऽहमिति प्रमाया अवश्यमवर्जनीयतया तस्या एव देहत्वावच्छिन्नतादात्म्यावगाहिताया वक्तुमशक्यत्वेन तत्परित्यागपूर्वकं गौरोऽहमित्यादिप्रतीत्या गौरत्वावच्छिन्नतादात्म्याद्यभ्युपगमस्यापि तवासंगतत्वापत्तेः । न देहत्वविशिष्टोऽहमिति प्रतीत्यभ्युपगमवच्च गौरत्वविशिष्टोऽहमिति प्रतीतेरभ्युपगमसंभवेन तत्कृतवैषम्यस्य वक्तुमशक्यत्वात् । एतेन मम देह इति प्रतीतिर्घटस्य स्वरूपमिति प्रतीतिवदभेदविषयिणी भवत्विति परास्तम् ।

अहं देहीति प्रतीतेः सर्वथाऽनुपपत्तेश्च। नह्येकघटावगाहिनी अयमेतद्वानिति प्रतीतिर्व्यवहारो वा केनाचिदभ्युपगतः। ननु तर्हि मम जीवः इदानीमहं जीवीत्यादिप्रतीतिबलाज्जीवस्यापि जीवभेदः स्यात्। न स्यात्। जीवधातोः प्राणधारणार्थत्वेन जीवितपदवज्जीवीतिपदस्यापि कृदंतस्य प्राणधारणाश्रयार्थकत्वात्। तद्धितांतजीविपदस्य तत्र प्रामाणिकप्रयोगागोचरत्वात्। क्वचित्सत्त्वे तद्घटकजीवपदस्य भावप्रत्ययांतत्वाभ्युपगमेन प्राणधारणपरत्वात्। मम जीव इत्यादिकं तु घटस्य स्वरूपमितिवदौपचारिकम्। नाहं देह इतिवन्नाहं जीव इति कस्यापि प्रमाभावेनास्यौपचारिकत्वे बाधकाभावात्। ममेति प्रकृते देहेंद्रियादिसंघातविशिष्टचेतनतात्पर्यकत्वाभ्युपगमेन तदुत्तरषष्ठ्या घटकत्वाद्यर्थकत्वस्याभ्युपगमसंभवाच्च। किंच न देहोऽहमिति प्रतीतिरपरोक्षरूपैव वाच्या। गौरोऽहमित्याद्यध्याससामग्र्या इवातत्सामग्र्या अपि निरूपयितुं शक्यत्वात्। अन्यथा त्वदभिमताध्याससामग्र्या अपि निरूपणाभावेन तस्य परोक्षरूपतापत्त्या शाब्दानुमानिकादिप्रतीतिकाले तदुत्पत्त्यभावापत्त्या तद्धिताहितादौ प्रवृत्तिनिवृत्त्यभावापत्तेः। तथाच गौरत्वमनुष्यत्वाद्याश्रयव्यक्त्यात्मनोरपरोक्षीभूतभेदनिश्चयकाले कथं तयोर्गौरत्वादिरूपरूपांतरपुरस्कारेणापि तादृशव्यक्तिद्वयैक्यावगाह्यपरोक्षाध्यासो भवेत्। व्यक्तिद्वयं प्रत्यक्षेणैव भिन्नत्वेन पश्यतस्तयोरेव तदिंद्रियेणैवैक्यग्रहस्य कुत्राप्यदृष्टत्वात्। देवदत्तयज्ञदत्तव्यक्त्योरपि पुरतो भेददर्शनकाले रूपांतरेणापि तयोरैक्यधीरपरोक्षरूपा नास्त्येव। पुत्रमित्रादिषु भिन्नत्वेन प्रत्यक्षसिद्धेष्वपि तेषां साकल्यादावहं सकलो विकलोऽहमिति धीस्तु सकलत्वादिना न तदैक्यमवगाहते। तत्साकल्यादिप्रयुक्तं साकल्याद्यंतरं वा परंपरया साकल्यादिकमवगाहते। अत एवाहं सकलविकलप्राय इति व्यवहरति। आहार्याध्यासो वा स न विपरीतधीनिवर्त्यः। एवमप्याग्रहे यदि गौरत्वादिरूपेणाभेदापरोक्षभ्रमांगीकारे तर्हि वक्तव्यं तादृशभ्रमः किमात्मनः शरीरहिताहितादौ प्रवृत्त्याद्युपयोगितया स्वीक्रियते किं वाऽनुपयोगेऽपि प्रमाणबलायातस्यापरिहार्यत्वेन। नाद्यः। ममदेहस्येदमहितकारि गौरस्य हितकारीति ज्ञानात् अनिष्टे प्रवृत्तेर्मद्देहस्येदं हितकारि गौरस्याहितकारीति ज्ञानादिष्टनिवृत्तेश्चापातात्। न द्वितीयः। प्रवृत्त्याद्यन्यथानुपपत्त्यादिव्यतिरिक्तप्रबलप्रमाणानुपलंभात्। स्मृत्यादीनां च निराकरिष्यमाणत्वात्। किंच तादात्म्यं पुरस्कृत्य ब्राह्मणो यजेतेत्यादिवाक्यप्रवृत्त्यंगीकारे पूर्वोक्तः ब्राह्मणमित्रशूद्रे ब्राह्मणेन स्वतादात्म्येनाध्यस्यमाने वेदविहितयागाद्यधिकारः कथं परिहरणीयः। नन्वत्र समाधानमुक्तं स्वीयत्वबुद्धिप्रयुक्तत्वायोग्यब्राह्मणादितादात्म्याध्यास एव प्रयोजक इति। सत्यमुक्तं दुरुक्तं तत्। स्वशरीरस्यापि स्वीयत्वग्रहणेव तादात्म्यस्य स्वस्मिन्नध्यासात्। यस्मादयं मम मित्रं तस्मात्स एवाहमस्मीति व्यवहारवत् यस्मादहं गौरदेहवान् तस्माद्गौरोऽस्मीति सर्वसाक्षिकप्रतीतिबलेन शरीरनिष्ठात्मतादात्म्यस्यापि स्वीयत्वबुद्धिप्रयुक्तत्वयोग्यत्वेन ब्राह्मणस्यापि ब्राह्मणो यजेतेत्यादिश्रुत्युक्तकर्माभावप्रसंगात्। नच ब्राह्मणत्वाद्यवच्छिन्नप्रतियोगिकाध्यस्यमानतादात्म्यमेवाधिकारादौ प्रयोजकमिदं तु तद्व्यक्तित्वावच्छिन्नप्रतियोगिकमिति वाच्यम्। स शूद्रोऽहमस्मीत्यध्यासस्य संभवात्। ब्राह्मणपक्षपातिनः शूद्रस्याहमेव ब्राह्मण इत्यध्याससंभवाच्च। नच ब्रह्मज्ञानेतराबाध्यब्राह्मणदेहतादात्म्यमेव तादृशमिदं तद्बाध्यमेवेति नाधिकारोपयोगीति वाच्यम्। तथात्वे स्वीयत्वबुद्ध्यप्रयुक्तत्वादिविशेषणदानासंगतेः। यावज्जीव

पक्षपातिशूद्रनिष्ठोक्ततादात्म्यस्यापि ब्रह्मज्ञानेतराबाध्यत्वात् तस्य ब्रह्मज्ञानेतरेण बाध्यत्वाग्रहे शरीरतादात्म्यस्यापि जातिस्मरस्य गर्भस्थशिशोश्च पूर्वजन्मस्मृतिमतः स्वस्मिन् तत्तादात्म्याभावग्रहाद्बालशरीरतादात्म्याभावग्रहस्य यौवने विद्यमानत्वेनास्यापि ब्रह्मज्ञानेतरबाध्यत्वात्। नच पूर्वं शूद्रोऽहमिदानीं ब्राह्मणोऽस्मि पूर्वं बालोऽहमिदानीं तरुणोऽस्मि इत्येव धीर्जायते स च निषेधे त्रैकालिकत्वानवगाहनान्न बाधरूप इति वाच्यम्। अत्रापि ब्राह्मणपक्षपातिशूद्रस्यापि पूर्वतनजन्मांतरानिर्णयेन नाहं कदाऽपि ब्राह्मण इति बाधानुदयेनैतत्तादात्म्यस्यापि ब्रह्मज्ञानेतराबाध्यत्वाक्षतेः। त्वन्मते आत्मनो विभुत्वेन शूद्रदेहतादात्म्यवत एव शुद्धात्मनो ब्राह्मणदेहादितादात्म्यादिमत्त्वात्तस्यैव सर्वत्राधिकारानाधिकारादिकं प्रसज्येत। नचांतःकरणोपहितात्मन्येव देहादितादात्म्याध्यासः उपहितस्तु तत्तदंतःकरणभेदाद्भिन्नः परिच्छिन्नः स एव तत्तज्जातीयदेहादितादात्म्याध्यासात्तत्तत्कर्मण्यधिक्रियत इति वाच्यम्। अविद्यावच्छिन्नो जीवः सर्वगत इति पक्ष एवोक्तदोषस्यापादनीयत्वात्। किंच अंतःकरणोपहितनिष्ठतादात्म्यस्यैवाधिकारादिप्रयोजकत्वे शरीरे शुद्धात्मतादात्म्याभावमाशंक्योपहितनिष्ठशुद्धात्मतादात्म्यमुपाहिताध्यस्ते देहेऽप्यध्यस्यत इति समाधानोक्तिरसंगता स्यात्। नहि यत्र यदध्यस्यते तन्निष्ठसर्वधर्मा अपि तत्राध्यस्यंत इति नियमः येनेदं वस्तुस्थितिकथनमिति समाधानोद्यमोऽपि स्यात्। तथात्वे शुक्तिकाध्यस्तरजते शुक्तित्वाध्यासस्याप्यापत्तेः। एवं स्वमते सद्रूपात्मनश्चाक्षुषत्वादात्मन्येव ब्राह्मणत्वादिजातिस्वीकारेऽपि देहाद्याशिष्टरूपेणापि तस्य चाक्षुषत्वात्तत्र ब्राह्मणत्वादिजातिचाक्षुषं संगच्छते। परैस्तु जीवस्याणुत्वेनाभ्युपगतत्वात्तत्र ब्राह्मणत्वादिचाक्षुषं न घटत इति यत्त्वयाभिहितं तदप्ययुक्तमिव स्यात्। अंतःकरणस्याचाक्षुषत्वेन तदवच्छिन्नस्याप्यचाक्षुषत्वेन तन्निष्ठजातिप्रत्यक्षानुपपत्तेः। अंतःकरणोपहितस्यांतःकरणस्याचाक्षुषत्वेऽपि चाक्षुषं स्यादिति न शंक्यम्। तदुपहितस्य परिच्छिन्नस्य शरीरहृदयांतर्वर्तिनः स्वचक्षुषा परचक्षुषा च संनिकर्षासंभवात्। शुद्धात्मनस्तथात्वात्तद्द्वारोपहितस्य प्रत्यक्षत्वांगीकारे देशांतरपिंडांतर्गतात्मस्वपि एतद्देशस्थस्य ब्राह्मणत्वादिप्रत्यक्षापत्तेः। शूद्रेष्वपि शुद्धात्मद्वारा ब्राह्मणदेहतादात्म्यस्य सत्वेन वेदाधिकारप्रसंगश्च। सन् ब्राह्मण इति सद्रूपशुद्धात्मनि ब्राह्मणादितादात्म्याध्यासात्। अपिच ब्राह्मणदेहादिभिः सहात्मनः संबंधांतरानिरूपणादगत्या तादात्म्याध्यासोऽङ्गीकर्तव्य इति त्वयाभिहितम्। तदपि न युक्तम्। उक्तांतःकरणपरिच्छिन्नस्य "हृदि ह्येष आत्मा" इति श्रुत्युक्तस्य हृदयांतर्भागसंयुक्तत्वतत्पूर्वकतच्छरीरसंयुक्तेंद्रियप्रेरकत्वादिसंबंधस्यैवानतिप्रसक्तस्य संभवात्। नच ब्राह्मणोऽहमित्यादिप्रतीतिसिद्धतादात्म्यं विलक्षणमेव स्वीक्रियते तदेवाधिकारप्रयोजकमुक्ततादात्म्यं तु न तथाविधमिति न शूद्रादेर्ब्राह्मणमित्रस्याधिकारादिकमिति वाच्यम्। तादात्म्यवैलक्षण्ये मानाभावात्। प्रत्युत पुत्रदेहादौ स्वदेहादावपि स्वस्वत्वसाम्येऽपि अयं मम देहः अयं तु न मम देहः किंतु पुत्रदेह इति प्रतीतिसाक्षिकः स्वस्वामिभावसंबंध एव विलक्षणोऽङ्गीकार्य इति तेनैव सर्वनिर्वाहः। किं तद्वैलक्षण्यमिति चेत्तादात्म्येऽपि किं तदिति पर्यनुयोगस्योत्तरस्य च साम्यात्। सौहार्दे तु धनादिनिरूपितं स्वाम्यं चैत्रस्य तच्छरीरानिरूपितस्वाम्यप्रयुक्तमेव तस्य तच्छरीरपरित्यागेन शरीरांतरप्राप्तौ जातिस्मरत्वेऽपि पूर्वभवीयधनवनितादिस्वामित्वापगमात्। तथाच तच्छरीरान्यनिरूपितस्वाम्याप्रयुक्तत्वस्यैव वैल-

क्षण्यरूपत्वं वक्तुं शक्यम् । यदप्युक्तं जन्मांतरानुभूतस्तनपानेष्टसाधनत्वयोर्व्याप्तिस्मरणमात्रेण स्तनपानादिप्रवृत्तिनिर्वाहेण पूर्वशरीरस्मरणापेक्षेति । तन्न । यतो व्याप्तिस्मरणं हि पूर्वभवीयस्तन्यपानादिकं न तद्व्यक्तित्वेन विषयीकरोति । तथात्वे एतज्जन्मीयस्तन्यपाने हेतुज्ञानाभावेनेष्टसाधनत्वानुमित्यभावापत्तेः । भविष्यत एतद्भवीयस्तनपानरूपपक्षस्योपस्थित्युपायाभावापाताच्च । किंतु स्तनपानत्वेनैव रूपेण । स्तनपानत्वं तु भविष्यति स्तनपानेऽपि वर्तेत इति तद्रूपसामान्यप्रत्यासत्त्या तदभिव्यंग्यसादृश्यबलेन वा यथामतं पक्षोपस्थितिस्तत्र स्तनपानत्वरूपहेत्वनुसंधानं च जायत इत्यवश्यमभ्युपेयमेव । स्तनपानत्वं तु नाखंडः कश्चित्धर्मः किंतु स्तनवृत्तिक्षीरग्रहणानुकूलताल्वोष्ठपुटाजिव्हादिकरणकशरीरव्यापारत्वरूप एवेति तादृशविशिष्टधर्मस्मरणं कथं शरीरांतरस्मरणं विना स्यात् । नच तादृशव्यापारेषु किंचिद्वैजात्यमेवाखंडं स्वीकृत्य तेन रूपेणैव स्मरणादिकं स्वीक्रियतामिति वाच्यम् । तादृशवैजात्ये मानाभावात् । तस्य स्वीकारेऽपि तदवच्छिन्नस्य जिव्होष्ठादाद्युत्पत्तये जिव्हाद्युपादानकोक्तव्यापारविधेयककृत्यादिनिष्पत्तये जिव्होष्टादीनां तादृशव्यापारकारणत्वस्मरणस्यावश्यकत्वे जिव्हादिसंघातात्मकशरीरस्मरणस्यावश्यकत्वात् । नच प्रवृत्तावुपादानप्रत्यक्षस्यैवापेक्षितत्वेन तत्रोक्तकारणत्वस्मरणं नापेक्षितमिति वाच्यम् । तदुपादानप्रत्यक्षमात्रस्य तत्र तद्विधेयकप्रवृत्तिहेतुत्वे कपालस्य घटहेतुत्वमजानतोऽन्यस्य तंत्वादेरेव तज्जानतः कपाले घटविधेयकप्रवृतिः स्यात्तंतौ च तद्विधेयिका न स्यात् । भवति च तंतौ तादृशी प्रवृत्तिस्तंतौ घटं करोमीति व्यवहारात् । अन्यैरप्ययं तंतौ घटं निष्पादयितुं यतत इत्यपहासकरणाच्च । अतस्तदुपादनत्वादिना गृह्यमाणविषयकप्रत्यक्षस्यैव कारणत्वादिना वाच्यतया तादृशकारणताग्रहस्यावश्यकत्वात् । नन्वेवं तर्हि पिपीलिकादिजन्म परित्यज्य मनुष्यदेहं भजतां स्तनपानप्रवृत्तिर्न स्यात्पूर्वदेहे स्तनपानाभावेन तत्स्मरणायोगात् । जीवनादृष्टबलादाकस्मिकप्रवृत्त्यंगीकारे सर्वत्रापि तथात्वसंभवात् शरीरांतरस्मरणकल्पनं व्यर्थमिति चेन्न । संसारस्यानादित्वेन सर्वेषां सर्वयोनिप्राप्तिसंभवेन तत्पूर्वतननरादिजन्मस्मरणेनैव तादृशप्रवृत्तिसंभवात् । नच प्रपूर्वजन्मादीनां स्मरणे मानाभावः । उक्तान्यथानुपपत्तेरेव मानत्वात् । गर्भस्वरूपप्रतिपादकनिरुक्तखंडे "मातरो बहवो दृष्टाः पितरश्च" इत्यादिना पुराणादौ च गर्भस्थस्य नानाजन्मस्मृतितत्कृतक्लेशयोः प्रसूतिसमये तत्स्मरणनाशस्य स्पष्टं प्रतिपादितत्वाच्च । यदत्रोक्तं स्वस्य नानाशरीरानुसंधानसत्वेऽपि शरीरात्मभेदज्ञानं परोक्षरूपमेव प्रतियोगिस्मरणात्मरूपधर्मिप्रत्यक्षादिरूपभेदप्रत्यक्षसामग्रीसत्त्वेऽप्यभेदप्रत्यक्षजनकवासनारूपदोषप्राबल्यादभेदप्रत्यक्षमेव न तु भेदापरोक्षमिति । तदप्यसत् । भेदप्रत्यक्षस्यैव पूर्वोक्तयुक्त्या सिद्धतया तज्जनकदोषप्राबल्योक्तेः कफोणिगुडायितत्वात् । नच गौरत्वादिरूपेणाप्यात्मनि देहतादात्म्याध्यासाभावे अहं न गौर इत्यादिप्रतीत्यापत्तिरिति वाच्यम् । साक्षाद्गौरत्वाश्रयप्रतियोगिकभेदप्रतीतेरापाद्यते अथवाऽहं न गौर इत्यादिशब्दाभिलाप्या प्रतीतिः । नाद्यः । मम शरीरे गौररूपमिति गौरवर्णाश्रयशरीरस्य स्वस्य संबंधावगाहिप्रतीत्या भेदविषयीकरणेनेष्टापत्तेः । न द्वितीयः । परंपरासंबंधेन गौरवर्णवत्तात्पर्येणैव तादृशप्रयोगबाहुल्यात्साक्षात्तादृशवर्णाश्रयभेदावगाहिप्रतीत्यभिलापाय तथा व्यवहाराभावात् । मंजूषाद्वारा मणिमालावतो मंदिरस्य साक्षात्तदाश्रयीभूतमंजूषाभेदग्रहसत्वेऽपि नेदं मंदिरं

मणिमालावदिति धनस्वामिनि चैत्रे हस्ते धनधारकमैत्रभेदग्रहोऽपि चैत्रो न धनीति च व्यवहाराभावेनोक्तरीतेः सर्वसम्मतत्वात् । नन्वेवं तर्हि शरीरात्मनोर्भेदापरोक्षांगीकारे अयं घटोऽयं पट इति विविच्य निर्देशवदयमात्माऽयं देह इति विविच्य निर्देशादिप्रसंगः । घटपटयोरिव देहात्माभेदप्रत्यक्षादेरुत्पत्तुमनर्हत्वेन चार्वाकादीनां देहभिन्नात्मनि विवादानुपपत्तिः । देहात्मैक्यनिषेधकपुराणादिवाक्यानामप्रसक्तप्रतिषेधकत्वापत्तिः । देहभिन्नात्मप्रतिपादकानां "अस्तीत्येवोपलब्धव्यः" इत्यादीनां देहभिन्नात्मप्रतिपादकश्रुतीनामनुवादकत्वापत्तिश्चेति चेन्न । भेदापरोक्षसत्वेऽपि तस्यास्फुटत्वेन विविच्य तद्व्यवहारानिर्वाहकत्वात् । अत एवानुमानाभासादिप्राप्ताभेदबुध्यावरोधित्वेन चार्वाकादीनां तद्भ्रमसंभवात् । तत एव कुसमयप्राप्ततया तन्निषेधकश्रुतीनां भेदबोधकश्रुतीनां च सार्थक्यमस्तीत्येवेति श्रुतिस्त्वीश्वरपरतयैव काठकभाष्ये व्याख्याता । देहत्वावच्छिन्नभेदस्यात्मनि ग्रहे तेनैव प्रबललिंगेनात्मनि गौरादिभेदानुमितेरवर्जनीयतया त्वन्मतेऽपि तस्या अनुवादकत्वापरिहाराच्च । अस्फुटतद्ग्रहस्याविरोधित्वाद्यनंगीकारे शुक्लो घटो दंडी पुरुष इति प्रात्यक्षिकप्रतीतिबलादेव शुक्लघटयोर्भेदाभेदस्य दंड्यादिरूपविशिष्टवस्त्वादीनां व्यवस्थापनस्य सर्वसम्मततया तत्राप्युक्तक्रमेण भेदाभेदस्य प्रत्यक्षसिद्धत्वे सर्वैरपि घटोऽयं शुक्लेन सह भेदाभेदवान् विशिष्टमुत्पन्नं तच्च भिन्नाभिन्नमिति विविच्य कथनप्रसंगः । नैयायिकादीनां शुक्लरूपेण घटस्यात्यंतभेदांगीकारेण विशिष्टस्वरूपस्यानंगीकारेण च विवादानुपपत्तिस्तद्व्यवस्थापनाय भवदादिप्रयासानुपपत्तिरित्यादिदूषणानामपरिहार्यतापत्तेः । न चास्फुटत्वं किमिति वाच्यम् । स्वविषयविपरीतकोटिनिवर्तकव्यावर्तकधर्मदर्शनाभावसाहित्यरूपस्य वा वैजात्यादिरूपस्य वा तस्य सर्वैर्वक्तव्यत्वात् । नचैवं सत्युक्तास्फुटप्रत्यक्षस्याभेदावगाहिपरोक्षधीविरोधित्वाभाववत्तदपरोक्षधियं प्रत्यप्रतिबंधकत्वाद्देहात्मतादात्म्याध्याससंभवात्तत्परित्यागायोग इति वाच्यम् । पूर्वोक्तरीत्या तं विनाऽपि स्वस्वामिभावसंबंधेन सर्वनिर्वाहस्योपपादित्वेन प्रयोजनाभावात्तत्र स्पष्टप्रमाणाभावात्पूर्वोक्तगौरवाच्च तस्य परित्यागात् । देहात्म्यैक्याध्यासांगीकारे पूर्वं समसत्ताकयोर्भावाभावयोरविरोधस्य निराकृतत्वेन तन्मिथ्यात्वनिरुक्तौ तदधिकसत्ताकाभावस्यैव निवेशनीयतया तादृशाभावरूपस्य देहात्मभेदस्य पारमार्थिकत्वापत्तेश्च देहात्म्यैक्यस्य ब्रह्मज्ञानेतराबाध्यत्वेन व्यावहारिकत्वात् । नचैवं "यः स्वात्मबुद्धिः कुणपे त्रिधातुके" इत्यत्र 'नैषां ममाहमिति धीः श्वशृगालभक्ष्ये' इत्यादौ देहात्म्यैक्यबुद्धेरनूदितत्वेन सिद्धतया तत्र प्रमाणाभावोक्तिरयुक्तेति वाच्यम् । अनुमानाभासादिप्राप्तानुवादकत्वसंभवेन प्रात्यक्षिकतदध्यासे प्रमाणत्वाभावात् । आजानसिद्धदेहात्म्यैक्यापरोक्षावभासानुवादकत्वे तस्य विक्षेपशक्त्या जीवन्मुक्तेश्वरादावपि त्वन्मते सत्त्वेन सर्वेषामपि विदेहकैवल्यरहितानामपि निंदागोचरत्वापत्त्या यः स्वात्मबुद्धिरित्यादिना विशेषग्रहणाभावापातात् मुक्तभिन्न इत्येव वक्तव्यतापातात् । यदपि शरीरविशिष्टात्मनि मनुष्यत्वादिजात्यंगीकारेण तत्र साक्षिणा तत्प्रत्यक्षाभ्युपगमपक्षे गोत्वादेरपि तथात्वापत्तेरिति दूषणमभिहितं तद्विवेक्तव्यम् । किं गोरपि स्ववृत्तिगोत्वजातेः प्रत्यक्षापत्तिरिति उत गोत्वादेरपि साक्षिमात्रग्राह्यत्वात्परेषां तत्प्रत्यक्षानुपपत्तिरिति । नाद्यः । तस्या अपि स्वास्मिन् गोत्वग्रहणे बाधकाभावेनेष्टापत्तेः । न द्वितीयः । शरीरेऽपि तस्या एव जातेर्वृत्तित्वाभ्युपगमे

बाधकाभावेन चाक्षुषत्वोपपत्तेः । ब्राह्मणत्वादिजातेः प्रत्यक्षसिद्धत्वकथनं त्वत्यंताशुद्धम् । ब्राह्मणचिन्हधारकशूद्रादौ अयं ब्राह्मण इति ग्रहाभावप्रसंगात् शूद्र इत्येव प्रत्यक्षप्रसंगात् । नच ब्राह्मणचिन्हधारणरूपदोषवशाद्ब्राह्मणत्वादिजातिभ्रमः शूद्रत्वादिजातिग्रहप्रतिबंधश्चेति वाच्यम् । तस्यैव कदाचित्तत्परित्यागवेलायां पूर्वपरिचितस्याय ब्राह्मण इति ग्रहाभावप्रसंगाच्छूद्रत्वजातिप्रत्यक्षापत्तेश्च । ब्राह्मणत्वादिजातिवत्तदवांतरजातीनां वाणसत्वाभीरत्वपुलिंदत्वादिजातीनामपि प्रत्यक्षेणैव निश्चयापत्तेः । तस्मान्मनुष्यत्वादिजातय एव प्रत्यक्षगम्याः चूतत्वादिवत् तदवांतरब्राह्मणत्वादिजातयस्तु चूतत्वावांतरजातय इव यथायथं शब्दानुमानगम्या इति ब्राह्मणत्वावच्छिन्नस्यापरोक्षाध्यासादिकथनेन कर्मविशेषाधिकारादिनिरूपणमशुद्धमेव । मन्मते वस्तुतो ब्राह्मणत्वाश्रयदेहसंबंध एवाधिकारप्रयोजकस्तज्ज्ञानं च शब्दादिनेति न काचित् क्षतिः । यदपि देहो ब्राह्मण इति धीः परदेहविषयिणी इष्टैव, स्वदेहविषयिणी त्वयं ब्राह्मण इतिधीरिष्यते देहत्वेन स्वदेहविषयकधीस्तु नेष्यते । तदुपपादनं तु देहभेदावच्छेदकत्वेन गृहीताहंत्वादेर्ब्राह्मणत्वावच्छिन्ने ग्रहस्य प्रतिबंधकत्वादिनेत्याद्युक्तम् । तदप्यशुद्धम् । परदेहो ब्राह्मण इति प्रतीतेरिष्टत्वं स्वदेहो ब्राह्मण इति प्रतीतावनिष्टत्वमित्यत्र त्वदिच्छातिरिक्तनियामकानुपलंभात् । नाहं देह इति प्रत्यायहंत्वस्य धर्मितावच्छेदकत्वसत्वेऽपि अनुयोगितावच्छेदकतया भानसत्वेऽपि तस्यानतिरिक्तवृत्तित्वरूपावच्छेदकत्वभाने बीजाभावात् । कथंचिदंगीकारेऽप्युक्तप्रतिबंधकशून्यकाले स्वदेहो ब्राह्मण इति प्रमोत्पत्तौ बाधकाभावात् । एव कर्तृत्वद्वयांगीकारपक्ष उक्तदोषस्योद्धरणं तादात्म्याध्यासस्यावश्यकत्वाभिप्रायेणेनेत्यादिना स्वग्रंथे कृतम् । तदपि तादात्म्याध्यासस्याप्रामाणिकत्वोक्त्यैव निरस्तम् । तस्माद्देहात्मतादात्म्याध्यास सिद्धांते नास्तीत्येतद्युक्तमेव । उपरोक्तं चैतद्भक्तिपादीयानुव्याख्यानसुधादौ निपुणतरमिति सर्वमनवद्यम् ॥ छ ॥

यदप्यहंपदोल्लिख्यमानस्यांतःकरणरूपाचित्तादात्म्यापन्नाविद्योपहिताचिद्रूपजीवत्वं न शुद्धात्मत्वमिति । तदप्यसत् । विकल्पासहत्वात् । तथाहि । शुद्धात्मपदेन किं सर्वधर्मविनिर्मुक्तात्मोत ज्ञानादिधर्मवान् जडतादात्म्यानापन्न आत्मा । नाद्यः । तस्यैव गगनकुसुमत्वेनाहंपदवाच्यस्य तथात्वाभावस्येष्टत्वात् । न द्वितीयः । अंतःकरणरूपजडचितोस्तादात्म्याध्यास एव मानाभावात्तस्याऽहंपदवाच्यतावच्छेदककोटौ निवेशायोगादाग्रहेण तन्निवेशे शक्यतावच्छेदकगौरवाच्च केवलात्मन एव तत्पदवाच्यांगीकारौचित्यात् उक्तचित्तादात्म्यानापन्नाहंकारेऽहंकारतादात्म्यापन्नोक्तचिति वा शक्तिः कल्प्यत इत्यत्र विनिगमकाभावेन शक्तिद्वयकल्पनापाताच्चाहंपदस्यापि जडतादात्म्यानापन्नात्मबोधकत्वेन तद्बोध्यस्यात्मत्वाभावोक्त्यसंगतेः । नच तत्पदेन यद्विशेष्यतयैवानुभूयते तत्रैव शक्तिरन्यत्र तदवच्छेदकत्वमेवान्यथा सर्वविशिष्टवाचकपदेष्वेव दोषः स्यादिति वाच्यम् । वैषम्यात् । कीचकादिपदानि मारुतपूर्णरंध्रविशिष्टवेणुमेव नियमेन शक्त्या बोधयंति नतु तत्संबद्धं मारुतपूर्णरंध्रमिति लोकानुभवाद्युक्तं तत्पदानामेकत्रैव शक्तिकल्पनम् । प्रकृते चाहंपदेन चिद्रूपत्वेन कदाचित्कर्तृत्वादिधर्मवत्त्वेन च कदाचित् भानाच्चिदचितोस्तुल्यतया विशेष्यत्वेन भानात् कस्य शक्यत्वमित्यत्र विनिगमकाभावात् । अन्यथाऽहमनुभवामीत्यात्मानुबंध्यनुभवस्य अहं कर्तेत्यचिदनुबंधिकर्तृत्वादेश्चाश्रयश्चिदचित्संवलनात्मकत्वादध्यस्त इत्यादिना चिद्रूपत्वकर्तृत्वादिधर्मद्वयवत्त्वेन प्रतिभासबलादहंकारपदार्थस्य चिदचिद्ग्रंथिरूपत्वोप-

पादनमसंगतं स्यात्। नचांतःकरणतादात्म्यापन्नाविद्योपहितचिद्रूपे जीवे तदीयकर्तृत्वाध्यासेनाहं कर्त्रेति प्रतीतेरपि जीवचैतन्यविशेष्यकत्वमेवातो न शक्तिद्वयकल्पनमंतःकरणतादात्म्यं विना तन्निष्ठकर्तृत्वाध्यासायोगादहंपदार्थस्य चिदचित्संवलनात्मकत्वे तादृशानुभवस्य गमकत्वेनोत्कीर्तनमपि संगच्छते। अत एव नांतःकरणतादात्म्ये प्रमाणाभावोऽपि तद्विना कर्तृत्वादेरात्मनि प्रतिभासानुपपत्तेरिति वाच्यम्। अंतःकरणतादात्म्यं विनाऽप्यात्मनि कर्तृत्वादेरग्र उपपादयिष्यमाणत्वेनोक्तस्यासंभावितत्वात्। आग्रहेणैवमप्यंतःकरणतादात्म्यस्य कर्तृत्वादेरात्मनि भानार्थमंगीकारेऽपि तस्याहंपदशक्यतावच्छेदककोटौ निवेशे मानाभावेनाहंपदशक्यतापर्याप्त्यधिकरणस्य त्वदुक्तचिदचित्संवलनात्मकत्वासिद्धेः। अन्यथा सन् घटः स्फुरति घट इत्यादिप्रतीतिनिर्वाहाय घटे सत्वादिधर्मसिध्यर्थं घटादौ सत्तादात्म्यस्य परस्पराध्यासानुरोधात्सति घटतादात्म्यादश्चावश्यकत्वापत्त्याघटादिपदार्थसत्पदार्थात्मपदार्थानामप्यहंपदार्थवाच्चेदाचिद्रांशेरूपत्वापत्तेः। न चेष्टापत्तिः। तथात्वे विशिष्याहंपदार्थस्यैव चिदचित्संवलनात्मकत्वव्यवस्थापनप्रयासानुपपत्तिः। सुषुप्तावात्मनो भानमहंकारस्याभानमित्यस्यासंगतिश्च तत्पदार्थभूताचिदंशभानस्याचिदंशाभानस्य चोभयपदार्थेपि तुल्यत्वात्। एतेनाहंपदार्थतावच्छेदकांतःकरणाभानात्सुषुप्तावहंपदार्थो न न भासते इत्यपि निरस्तम्। सदात्मादिपदार्थतावच्छेदकात्मत्वसत्वादिधर्माणामपि सुषुप्तावभानादात्मा सच्च न स भासत इत्यपि प्रसंगात्। तद्भाने सुषुप्तावपि सप्रकारकवृत्त्यापत्तेः। नचाहंपदार्थस्त्वन्मतेऽप्युच्चारयितृशरीरावच्छिन्न आत्मैव, केवलात्मवाचित्वे तस्यात्मशब्दपर्यायत्वापत्तेः। तथाच त्वयाऽपि तत्र विनिगमकाभावादात्मावच्छिन्नशरीरे शरीरावच्छिन्नात्मनि चेति शक्तिद्वयं कल्पनीयमिति मां प्रत्युक्तदूषणाभिधानमनुचितमिति वाच्यम्। सामान्यतः अंतःकरणोपहितात्मन्यहंपदशक्त्यंगीकारे चैत्रोच्चारिताहंपदेन मैत्रांतःकरणोपहितचितोऽपि बोधापत्त्या त्वयाऽप्युपलक्षणविधया शक्यतावच्छेदककोटौ उच्चारयितृशरीरस्य निवेशनीयतया तदंशे साम्यात्। नन्वहंकारो नाम चिदचिदुभयसंवलनाधीनमतिरिक्तमेकमेव वस्तु, तत्रैकैव शक्ति अहंः कर्ताऽहमनुभवामीति प्रतीतिद्वयेऽपि तदेव विशेष्यमिति तस्य चिदचित्संवलनात्मकत्वम्। सुषुप्तौ जडांतःकरणलयेन तस्य नाशात्सुषुप्तौ तदभानोक्तिः सुसंगतैवेति चेन्न। तस्य चिदचिदुभयाधीनत्वमित्यस्योभयोपादानकत्वमित्यर्थो वा किं वोभयजन्यत्वमिति। आद्येऽपि किमुभयपरिणामभूतमुतैकपरिणामरूपमपरविवर्तमिति। नाद्यः। चितो निर्विकारत्वेन परिणामित्वायोगात्। अविद्योपहितचितः परिणामे न विरोधस्तस्या मिथ्यात्वादित्यपि न। मिथ्याभूतस्य जडत्वनियमेन तदुपादानकस्याहंकारस्य सुतरां जडत्वेन तस्य चिद्रूपत्वेन स्फुरणोक्त्यसंगतेः। नच चितः परिणामरूपविकाराभावेऽपि पाषाणदार्वादिरचितगृहमिवैकं तादृशचिदचित्संवलनात्मकं विशिष्टं संभवतीति वाच्यम्। तथात्वे तस्य चिदचिदवयवकत्वादतिरिक्तमेव तदचेतनमभ्युपेयम्। जन्यत्वात्तत्र चिद्रूपत्वेन भानोक्तिरयुक्तैव अवयवस्य चित्त्वादेव तस्य चित्त्वांगीकारेऽतःकरणरूपाचिदवयवकत्वादंतःकरणत्वाचित्त्वयोरपि तत्र स्वीकारापत्त्या चेतनाचेतनोभयस्वरूपैकवस्तुस्वीकारापत्तेः। सत्स्वरूपघटाभ्यामप्येवमेव वस्त्वंतरस्वीकारापत्तेः। गृहे पाषाणमय इति दारुमय इति च व्यवहारबलेन प्रचुरपाषाणदार्वादिविकारत्वादिधर्मसिद्धावपीदं पाषाणदार्विति च व्यवहाराद्यभावेन तत्र पाषाणत्वाद्यभावस्यैव सर्वसिद्धत्वेन प्रकृतेऽपि त्वदभिमताहमर्थस्य,

शुद्धजडरूपस्यातिरिक्तत्वेन चिद्रूपाभावस्यैव प्राप्तेः। तादृशस्यैवाहमर्थत्वाग्रहे तद्विशेष्यकमोक्षेच्छायां केवलात्मस्वरूपस्य कथमप्यविशेष्यत्वेन मोक्षस्यात्मानं प्रत्यनिष्टत्वापत्तिः। अहमर्थस्य नाशित्वेन मोक्षानन्वयितया मोक्षेच्छायाः शशविषाणेच्छातुल्यतापत्तिश्च। न द्वितीयः-चित एव विवर्तोपादानत्वस्यांतःकरणस्यैव परिणाम्युपादानतायाः वक्तव्यतया शुद्धजडपरिणाम भूतघटादिवच्छुद्धजडत्वप्राप्त्या पूर्वकल्पोक्तसर्वदोषसाम्यात्। न तृतीयः। निमित्तीभूयोभयजन्यस्यापि जडत्वानपायात्। एतेन प्राचां रीत्याऽऽत्मतादात्म्यापन्नमंतःकरणरूपद्रव्यमेवाहंपदार्थ इत्यपि निरस्तम्। पूर्वोक्तानां चिद्रूपत्वेन भानायोगमोक्षानन्वयित्वादिदोषाणामपरिहारात्। तत्रैव शक्तिरंतःकरणोपहिते न शक्तिरित्यत्र विनिगमकस्य दुर्लभत्वाच्च। अहं कर्त्रित्यादिव्यवहारवदहमात्मानमनुभवामीति व्यवहारस्याविशिष्टत्वात्। किंचोक्तविनिगमकाभावेनोक्तगुरुधर्मावच्छिन्नशक्तिद्वयापत्त्या दर्शितोभयव्यवहारानुसारेणांतःकरणे आत्मनि च पृथगेव शक्तिद्वयमंगीक्रियतां, गवादिपदवन्नानाव्यवहारानुसारेण नानार्थत्वांगीकारे बाधकाभावात्। तथाचांतःकरणरूपाहमर्थस्य सुषुप्तौ भानाभावोऽस्तु,सामान्यतोऽहमर्थस्यासुषुप्तौ भानाभावोक्तिश्चिद्धैव। वस्तुतः अहं कार्त्रत्यादिप्रतीतेरप्यात्मविषयकत्वेनास्मच्छब्दादेशभूताहंपदस्यांतःकरणाख्यद्रव्ये शक्त्यभाव एव। किंतु मांतमहमित्यव्ययमेवाहंकाराख्यद्रव्यविशेषशक्तताद्दशाहंकाराख्यद्रव्यं त्वंतःकरणशब्दवाच्यमनोरूपद्रव्यस्य कारणमिति नांतःकरणस्याहंशब्दवाच्यता। नच मांतदांतत्वाभ्यामविवेचिताहंशब्दस्योभयत्र प्रयोगादुभयस्याप्युभयत्र शक्तिरस्त्विति वाच्यम्। कथितो त्वहमः सर्ग इत्यत्र भागवते मांताहंशब्दस्याहंकारे प्रयोगात् आत्मन्यप्रयोगाच्चोभयोरुभयत्र प्रयोगस्यैवाभावात्। अन्यथाऽहमः सर्ग इति वाक्येन मम सर्ग इति प्रतीतिः स्यात्। नचैतद्युक्तं पूर्वमहंकारसृष्टेरेवोक्तत्वेन भागवतकृता स्वसर्गस्याकथितत्वात्। एवमत्रातोऽहंकारादेश इतिवाक्योपसंहारेऽहमेवाधस्तादहमेवोपरिष्टादिति वाक्यस्थाहंपदं मांतमहंकारे प्रयुज्यते। नचास्य दांतत्वं वक्तुमपि युक्तम्। तथात्वे नाहं तथा ब्रवीमीति वाक्यस्थाहंपदस्येव स्वोच्चारयितृसनत्कुमारपरत्वापत्त्याऽहंमनुरभवं सूर्यश्चेत्यादिवत्स्वोपदेशकत्वप्राप्त्या ऽथातो मदादेश इत्यापत्तेः। अस्मदादेशभूताहंपदमांताव्ययरूपशब्दाहंकारशब्दानामेकार्थबोधकत्वेन पर्यायत्वांगीकारे प्रकृतिरूपास्मच्छब्दस्य तद्वाचकत्वावश्यकत्वप्राप्त्याऽहंताहंभावपदाभ्यां मांतशब्दनिष्पन्नाभ्यामिव मद्भावपदेनाप्यहंमतेर्बोधापत्तेः। अहं जानेऽहं सुखीति व्यवहारवद् अहंकारः सुखी-अहंकारो वदति जानातीत्यादीनां स्वतात्पर्येण प्रयोगप्रसंगश्च। केषामपि लौकिकवैदिकानां तथा प्रयोगादर्शनेन तस्याप्रामाणिकतया तत्रेष्टापत्तेः कर्तुमशक्यत्वात्। न चाहम इत्यव्ययांतरमेव तस्यास्मच्छब्दपर्यायत्वाभावेऽप्यहमित्यव्ययस्य तत्पर्यायत्वमावश्यकमन्यथा ममाहंतेति न स्यात्। मांताव्ययप्रकृतिकतल्प्रत्ययेन तदर्थभूतवस्त्वंतरवृत्तिधर्मस्यैव बोधनेन तस्यास्मच्छब्दार्थावृत्तित्वादिति वक्तव्यम्। यतो नाहं नाहंभावशब्दप्रकृत्यर्थनिष्ठाहंत्वाख्यधर्मो बोध्यते। तथात्वे तस्य घटनिष्ठघटत्वस्येवास्मच्छब्दार्थप्रवृत्तिनिमित्तभूततदसाधारणधर्मरूपतापत्त्या तस्य यावन्मुक्ति विद्यमानस्य पुरुषेण त्यक्तुमशक्यतया मुक्त्यर्थमहंभावावेत्यागविधायकशास्त्रस्य 'अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम्। विमुच्य निर्ममः शांतो ब्रह्मभूयाय कल्पते' इत्यादेरानर्थक्यप्रसंगात्। किंत्वाभिजन्यादिमूलकाहंकारकार्यभूता काचन मनोवृत्तिः,सा च पुण्यपापादिवत्

कृतीच्छादिरूपमनोवृत्तिवच्चात्मस्वामिकत्वादस्मच्छब्दार्थभूतात्मसंबंधित्वेन व्यवाह्रियत इत्येतावदेव। तन्मात्रेण मांताव्ययस्यास्मच्छब्दसमानार्थकत्वस्यासिद्धेः। मांताव्ययस्याहंकारकार्यवल्लक्षकत्वेनोक्तार्थलाभसंभवात्। वस्तुतोऽहंताशब्दोऽस्मच्छब्दादेशभूताहंपदप्रकृतिक एव। ममता कथंता तारतम्यादिशब्दस्थल एव प्रकृतिभूताहंशब्दस्याहमाढ्य इत्यादिस्वघटितवाक्यप्रयोगप्रयोजकगर्वेवल्लक्षकत्वात्। तथाचोक्तशब्दान्यथानुपपत्त्याऽस्मच्छब्दपर्यायत्वप्रतिपादनमयुक्तमेवेत्यनुसंधेयम्। भागवतस्थंतु न शब्दांतरं तदंगीकारे मानाभावात्। अव्ययादाप्सुप इति सूत्रविहितङस्लोपस्याप्राप्तिमात्रं छांदसम्। एतेन मांतदांताहंशब्दयोः पर्यायत्वमेव तथैव प्रयोगदर्शनादिति अद्वैतसिध्युक्तं अहं ब्रह्मास्मीत्यादिरूपप्रयोगदर्शनादित्यादिरूपतद्व्याख्यानमद्वैतचंद्रिकोक्तं चाज्ञानाविजृंभितमेवेति स्फुटमेव। भिन्नार्थकत्वेनैव प्रयोगस्य समानार्थकत्वेन चाप्रयोगस्यैव प्रदर्शितत्वात्। एवमहंपदेनांतःकरणावच्छिन्नशुद्धात्मबोधो लक्षणयैव। "तदात्मानमेवावेदहं ब्रह्मास्मि" इति 'अहं सर्वस्य परमः प्रभवःप्रलयस्तथा' सेयं देवतैक्षत हंताहमिमास्तिस्रो देवता अनेनइत्यादावेष्टव्याहंकारात्मकोचरश्चिद्रथावेव मांतदांतत्वाभ्यामनिर्धारिताहंशब्दस्याहंकारपदस्य च पर्यायतयैव लौकिकवैदिकभूरिप्रयोगदर्शनादित्युक्तं यदद्वैतसिद्धिलट्टीकाभ्यां तदपि सुतरामुपहासास्पदम्। एकमपि तथा प्रयोगमप्रदर्श्य तथोक्तेरौद्धत्यमात्रमूलकत्वात्। "अ इति" ब्रह्म तत्रागत महमिति तस्योपनिषदहमिति' 'स यो हैतं महद्यक्षं प्रथमजं वेद सत्यंब्रह्मेत्यादि तत्सत्यमसौ स आदित्यो य एतस्मिन्मंडले यश्चायं दक्षिणेऽक्षन्पुरुषस्तस्योपनिषदहमिति तस्योपनिषदहमित्याद्यैतरेयकबृहदारण्यकश्रुत्यादावहंशब्दस्य ब्रह्मनामत्वस्यैवोक्तत्वेन लक्षणायां तद्विरोधप्रसंगाच्च। नच लाक्षणिकस्य नामत्वमुक्तिसहम्। लक्षणायाः अर्थांतरेऽपि संभवात्। अहंपदस्येव पदांतरस्यापि ब्रह्मणि लाक्षणिकत्वेन चाहंपदस्य विशिष्य कथनासंगतेश्च। तत्र ब्रह्मणि अहमितिपदं आगतं वाचकत्वेन प्राप्तमित्यर्थः। उपनिषद्रहस्यं नाम। यत्त्वद्वैतचंद्रिकायामाशंक्य समाहितम्। नन्वहंकाराहंपदयोरुक्तग्रंथिवाचित्वे परकीयग्रंथावपि परस्य प्रयोगापत्तिरिति चेन्न। त्वन्मतेऽप्यहंकारमांताहंपदयोः परकीयक्षेत्रे प्रयोगापत्तेः। "महाभूतान्यहंकारो बुद्धिरव्यक्तमेवच" इत्यारभ्यैतत्क्षेत्रमित्युक्तत्वात्। अथ जातिविशेषविशिष्टे परकीयक्षेत्रे प्रयोगमिच्छसि वयमपीच्छामः। एतावांस्तु भेदस्तव शक्त्या मम लक्षणया। ममोच्चारयितृतावच्छेदकवत्त्वेनाहंकारमांतदांताहंपदानां स्वोच्चारयितरि शक्तता तव दांताहंपदस्यैव। एवंच शुद्धात्मनोऽनुच्चारयितृत्वेन लक्ष्यत्वम्। 'महत्तत्त्वाद्विकुर्वाणात् भगवद्वीर्यचोदितात्। क्रियाशक्तिरहंकारस्त्रिविधः समपद्यत' इत्यादिस्मृतौ महत्तत्त्वं भगवतो वीक्षणं तस्माद्विकुर्वाणात्तदवस्थमायापरिणामरूपसूक्ष्मावस्थारूपात् त्रिगुणात्मिकमायापरिणामित्वात्सात्विकादिरूपेण त्रिविधोऽहंकारः भगवच्चिकीर्षारूपः समजायत। पूर्वपूर्वपरिमाणावस्थमायाया एवोत्तरोत्तरपरिणामोपादानत्वात्। चिकीर्षादिरूपाहंकारावस्थमायाया एव सात्विकांशेन मनआदिसात्विककार्यहेतुत्वात्त्रिविधाहंकारस्य मनआदिहेतुत्वोक्तिर्युक्ता। तादृशाहंकारस्य च "तदात्मानं स्वयमकुरुतेति" श्रुत्युक्तकृतिरूपतया परिणामितया तज्जनकत्वात् अहंकारपदवाच्योच्चारयितृजीवरूपचिदचिद्ग्रंथेरपि कृतिजनकत्वात्तयोः साम्यात्जीवगताहंकारपदं भगवच्चिकीर्षायां गौणमिति बोधनाय क्रियाशक्तिरित्युक्तम्।